(दुर्गाव्याख्या)

वयवाः बोधकावयवत्वेनोपलब्धिविषयत्वाभावात् । अनुबन्धा बोधकावयवत्वेनोपलब्धि-विषयत्वाभाववन्तः, तदर्थभूते विधेये कदाप्यदर्शनात् । यो ह्यवयवः स कदाचित् विधेये उपलभ्यते यथा तिपि इकारः सुपि चोकारः 'भवति,' रमासु, इत्यादौ उपलभ्येते । एषोऽनुबन्धस्तु न तथा, तिप्सुबादौ पकारस्य क्वाप्यनुपलब्धेः । पक्षे हेतुरस्ति नवेति सन्देहाभावार्थं हेतोः साधकमत्र हेत्वन्तरमुपन्यस्तम् । गुणघटके गकारे हेतोः सत्त्वाद् व्यभिचारस्तु न शङ्क्यः, स्वघटितपदघटक-यावद्-वृत्तिश्रावण-प्रत्यक्ष विषयतावच्छेदक-धर्मावच्छिन्नविधेयताप्रयोजकपदानवयवत्वस्य साध्यत्वेनाव्यभिचारात् ।

श् इत् यस्य स शित् क् इत् यस्य स कित् इत्यादौ समासो न स्यात् शकार-स्यानवयवत्वेन यस्येत्यत्र षष्ठ्यभावादिति तु न वाच्यम्, शित्त्वादिकार्यसम्पादनाय समीपेऽवयवत्वारोपेण समासादिसम्भवात् । तेन यस्य समीपे शकार इत् स औशादिः शित्पदग्राह्यः । न चैवं वुञ्छण्कठ (४.२.८०) इत्यत्र श्रुतणित्त्वप्रयुक्तं कार्यं छप्रत्यय इव कप्रत्यये कृतेऽपि प्राप्नोति णकारस्योभयोः समीपवर्तित्वात् तथाच कार्शश्वीय-मित्यत्रेव ऋश्यकमित्यत्रापि तद्धितेष्वचामादेः ७.२.१७१ इति वृद्ध्यापत्तिरिति वाच्यम् प्रमाणे द्वयसज्दघ्नज्मात्रचः ५.२.३७ इत्यत्र कृतेन दघ्नचश्चकारेण तदनुबन्ध-कृतं कार्यं तत्पूर्वस्यैव न तत्परस्येति ज्ञापनात् । अन्यथा द्वयसचश्चकारेणैव दघ्नचोऽपि चित्त्वसिद्धौ दघ्नचश्चकारकरणं व्यर्थं स्यात् । न चैवं शपोऽकारः शिन्न स्यात् शकारानुबन्धादकारस्य पूर्ववर्तित्वाभावादिति वाच्यम् सर्वेषामनुबन्धानामनुबन्ध-घटिताद् बोधकाद् पश्चाद्भावित्वात् । अर्थात् भवतीत्यादिसिद्ध्यर्थमकारः प्रथममाचार्येण कल्पितः ततस्तस्य सार्वधातुकवसम्पादनार्थं तत्र शकारानुबन्धः पश्चा-न्निबद्धः, तत्रापि पित्सार्वधातुकत्वसम्पादनाय पकारो निबद्धः । इत्थं सर्वे बोधका अनुबन्धात् पूर्वकालिका एवेति तात्पर्यम् । अतएवानुबन्धेत्यत्रानूपसर्गः पश्चादर्थद्यो-तकस्तत्र सार्थकः ।

न च हलन्त्यम् १.३.३ इत्यनेन सुपः पकारेस्येत्संज्ञा न स्यात् अन्त्यशब्दस्य चरमावयवबोधकत्वात् पकारस्य, चावयवत्वास्वीकारात् इति वाच्यम् तत्रान्त्यशब्द-स्य परसमीपबोधकत्वात् ।

---

आ खड़ा होता है; क्योंकि अन्त्य, आदि और मध्य शब्द अवयवी के अवयव विशेषों के लिए प्रयुक्त हुआ करते हैं । सन् का न यदि अवयव नहीं है तो किस आधार पर पर 'सन्' को अवयवी मानेगे, यदि वह अवयवी नहीं है; तो 'नकार' उसका अन्त्या-वयव कैसे हो सकता है ? इस दोष के समाधान के लिए 'हलन्त्यम्' सूत्र के 'अन्त्य' का अर्थ लक्षणा या अप्रसिद्धा शक्ति के द्वारा 'पर समीप' मान लेना चाहिए । अब 'हलन्त्यम्' पर समीप हल् की इत्संज्ञा करेगा "सन्"का नकार, सकार का पर समीप है ही ।

वस्तुतस्तु—

एकान्ताः ॥५॥

इत्येव न्याय्यम् । शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च ।

अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूलभ्यते । नैवमयम् । एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः । अन्त्यशब्दे लक्षणा च न । किंचानवयवत्वे णशक-प्रत्ययादौ णादेरित्वानापत्तिः । प्रत्ययादित्वाभावात् दध्नचश्चकारस्य वैयर्थ्यापत्तेश्च । इदं च 'तस्य लोप' इत्यत्र भाष्ये स्पष्टम् । तत्र ह्युक्तमेकान्ता अनुबन्धा इत्येव न्याय्यमिति दिक् ॥५॥

---

अथ एकान्ता अनुबन्धाः ॥५॥

वस्तुतस्तु अनुबन्धा एकान्ता एव । शित्किदित्यादौ बहुव्रीहिसमाससिद्धये समीपेऽवयवत्वारोपस्वीकारेऽनुबन्धघटितात् सौत्रविभक्तिकल्पने आदिर्ञिटुडवः' १.३.५ हलन्त्यम् १.३.३ इत्यादावाद्यन्तशब्दयोर्लक्षणास्वीकारे गौरवात् वुञछणकठेत्यादौ दोषवारणाय ज्ञापकानुसरणक्लेशाच्च आनङ्बोध्ये नकारस्य गणधातुबोध्येऽकारस्य सर्वत्र लोपात् कदाचिदप्यदर्शनेन "योह्यवयवः स कदाचिदुपलभ्यते" इति कथने

---

अथ एकान्ता अनुबन्धाः ॥५॥

वस्तुतस्तु "एकान्ताः" यही पक्ष मानना उचित और न्यायसंगत है, क्योंकि शास्त्र (बोधक सनादि) में उसकी (अनुबन्ध की) उपलब्धि होती है। इसलिए वह बोधक का अवयव है और अन्यत्र बोधक से भिन्न में उसकी उपलब्धि नहीं होती है। इससे सिद्ध हुआ कि अनुबन्ध बोधक का ही अवयव है; बोध्य का नहीं। यदि नकार उसका (सन् का) अवयव नहीं होता अर्थात् अनवयव होता तो वह सन् से इतर साथ भी दिखाई पड़ता। जैसे 'कौआ' वृक्ष का अवयव नहीं है; इस लिए वह एक जातीय सम्बन्ध से कभी वृक्ष पर और कभी छप्पर पर दिखाई पड़ता है। अनुबन्ध 'नकारादि' ऐसा नहीं होता। इसलिए व्यतिरेक दृष्टान्त से सिद्ध होता है कि अनुबन्ध बोधक का अवयव ही है। अनुबन्ध को अवयव मान लेने तर "शित् कित्" इत्यादि शब्दों में षष्ठ्यर्थ में बहुव्रीहि स्वतः सिद्ध हो गयी। अनवयव मानने पर 'श् इत् यस्य" इस विग्रह में समीप अर्थ में बहुव्रीहि मानने में बाधा उपस्थित होती थी; क्योंकि सामीप्य षष्ठ्यर्थ नहीं है। इस दोष से निवारण के लिए' 'समीप" अर्थ में अवयवत्व का आरोप करके समास मानने में व्यर्थ का क्लेश होता था। "हलन्त्यम्" में अब अन्त्य पद की पर समीप में लक्षणा मानने की आवश्यकता नहीं हुई; क्योंकि जब 'अनुबन्ध' अवयव है तो उसे अन्त्यावयव कह सकते हैं। अवयव नहीं मानने पर चरमावयव में रूढ़ अन्त शब्द का प्रयोग अनुबन्ध के लिए नहीं किया जा सकता था।

(दुर्गाव्याख्या)

व्यभिचारदर्शनादनुबन्धा अनवयवा इति पक्षस्यायुक्तत्वात् । तथाचानुबन्धाः स्वघटित-पदाघटित-पदघटकबोधकावयवाः शास्त्रघटकबोधकघटकत्वेनोपलब्धिविषयत्वे सति लक्ष्यघटकत्वेनोपलब्धिविषयताशून्यत्वात् । शास्त्रे तत्रेति बोधके इत्यर्थः । **अन्यत्र** बोध्ये इत्यर्थः । तथाचानुबन्धाः स्वघटितघटकबोधकावयवाः बोधके उपलम्भादन्यत्रानुपलम्भाच्चेति शब्दार्थः । अनवयवो हि वृक्षादेः काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूलभ्यते । अयन्त्वनुबन्धो न तथा । अतोऽनुबन्धो बोधकावयवः । यतो ह्ययं बोधके एकजातीयसम्बन्धेनोपलभ्यते अन्यत्र च नोपलभ्यते । अतः शित् किदित्यादौ बहुव्रीहिसमासः समीपेऽवयवत्वारोपं विनैव सम्पद्यते । अन्त्यादिशब्दे लक्षणा च न कर्तव्या भवति । दघ्नचश्चस्य न वैयर्थ्यम् । पक्षेऽत्र "नानुबन्धकृतमनेकाल्त्वम्" "नानुबन्धकृतमनेजन्तत्वम्" "नानुबन्धकृतमसारुप्यम्" इति तिस्रः परिभाषाः स्वीकार्या भवन्तीति गौरवमिति न वाच्यम् यतो हि अनेकाल् शित्सर्वस्य १.१.५५ इति सूत्रस्थशिद्ग्रहणेन अनुबन्धा अल्पदबोध्या न भवन्तीति सामान्येन ज्ञाप्यते अतो नात्र

---

अनुबन्ध को अवयव नहीं मानने पर सब से बड़ा दोष यह था कि ण, श, क आदि प्रत्ययों में ण् श् और क् की इत्संज्ञा नहीं कर सकते थे । 'चुटू १.३.७ 'लशक्वतद्धिते' १.३.८ इन सूत्रों से प्रत्यय के आदि में वर्तमानच वर्ग, टवर्ग ल, श और कवर्ग की इत्संज्ञा होती है; क्योंकि दोनों सूत्रों में "आदिर्ञिटुडवः (१.३.५) सूत्र से आदि की अनुवृत्ति आती है । यदि अनुबन्ध अवयव नहीं है; तो प्रथमावयव में रूढ़ आदि शब्द से उस 'ण' का ग्रहण कैसे होगा, जो 'अ' से अलग-थलग पड़ा हुआ है ।

अनवयव पक्ष में जैसा माना गया है; वैसा यदि मानें और 'चित्' का अर्थ यह करें कि चकार जिसके समीप में इत् हो वह 'चित्' है तो 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५.२.३७ सूत्र में दघ्नच् के साथ चकार अनुबन्ध लगाना व्यर्थ हो जायगा, क्योंकि 'द्वयसच्' के इत्संज्ञक चकार के कारण ही 'दघ्नच्' में चित्त्व प्रयुक्त कार्य हो सकता था। यदि यह कहें कि 'वुञ्छण्कठ' सूत्र 'कठ' में णित्व प्रयुक्त कार्य के निवारण के लिए व्याख्यान विशेष का आश्रय लिया गया है और यह माना गया है कि जिसके पर समीप में 'ण्' इत् रहेगा उसी के परे रहते णित्व प्रयुक्त कार्य होगा । इस आधार पर 'द्वयसच्' के चकार से 'दघ्न' चित् नहीं होगा, क्योंकि द्वयसच् का 'च्' द्वयस के पर समीप में इत् है; इसलिए वह उसे चित् प्रयुक्त कार्य का हकदार प्रमाणित करेगा । उस पूर्व समीपवर्ती 'चित्' को लेकर 'दघ्न' चित् प्रयुक्त कार्य का अधिकारी वैसे ही नहीं होगा जैसे कि 'कठ'

(दुर्गाव्याख्या)

गौरवम्। अतएव "अथ यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विद-नेकान्त" इत्युपक्रम्य एकान्तस्तत्रो[1] पलब्धेः। ६। एकान्त इत्याह। कुतः तत्रोप लब्धेः। तत्रस्थो ह्यसावुपलभ्यते। तद्यथाः—वृक्षस्था शाखा वृक्षैकान्त उपलभ्यते। **"तत्रासरूपसर्वादेशदाप्प्रतिषेधेषु पृथक्त्वनिर्देशोऽनाकारन्तत्वात्** ॥१०॥ तत्रासरूप-विधौ दोषो भवति कर्मण्यण् (३.२.१) आतोऽनुपसर्गे कः (३.२.२) इति कविषयेऽणपि प्राप्नोति। सर्वादेशे च दोषो भवति। दिव औत् (७.१.८४) सर्वादिशः प्राप्नोति दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः अदाब्दैपाविति वक्तव्यम् किं पुनः कारणं न सिद्धयति, अनाकारान्तत्वात्। ननु चात्त्वे कृते भविष्यति। तद्धयात्वं न प्राप्नोति। किं कारणम्? अनेजन्तत्वात्॥

अस्तु तर्ह्यनेकान्तः। **अनेकान्ते[2] वृत्तिविशेषः** ॥११॥ यद्यनेकान्तो वृत्ति-विशेषो न सिद्धयति। किति णितीति कार्याणि न सिद्धयन्ति। किं हि स तस्ये-द्भवति येनेत्कृतं स्यात्॥ एवं तर्ह्यनन्तरः[3]। **अनन्तर इति चेत्पूर्वोत्तरयोरित्कृत-प्रसङ्गः** ॥१२॥ अनन्तर इति चेत्पूर्वोत्तरयोरित्कृतं प्राप्नोति। वुञ्छण्। **सिद्धं तु व्यवसितपाठात्** ॥१३॥ सिद्धमेतत्। कथम्? व्य[4]वसितपाठः कर्तव्यः। वुञ् छण्। सचावश्यं व्यवसितपाठः कर्तव्यः।

---

णित् प्रयुक्त कार्य का अधिकारी नहीं होता है। इस तरह 'दघ्नच्' के चकार की सार्थकता जो सिद्ध की गयी है: वह नहीं सिद्ध की जा सकती है; क्योंकि 'मात्रच् के चित् से 'दघ्नच्' तक और यदि दूर तक, हाथ मारें तो द्वयसच् भी चित् प्रयुक्त कार्य का हकदार हो जायगा। इसलिए 'अनवयव' पक्ष में 'दघ्नच्' के चकार की सार्थकता सिद्ध नहीं होती।

इस सब को स्पष्ट करते हुए 'तस्य लोपः' १.३.९ इस सूत्र के भाष्य में भाष्य कार ने साफ शब्दों में कहा कि "एकान्ता अनुलन्धाः" अनुबन्ध को स्वघटितबोध-कावयवी के अवयव के रूप में मानना चाहिए अर्थात् अनुबन्ध बोधक (सन्) का अवयव ही होता है। वह पिपासति' में 'सन्' बोध्य 'स' का अवयव नहीं होता।

---

१. अवयवस्तत्रोपलभ्यतेऽनवयवस्तु तत्र चान्यत्र। ननु वकारस्य वनव्रणवृक्षादिषू-पलब्धिर्नसावनवयवः। नैष दोषः, भिन्नसमुदायविषयं वर्णान्तरमेव तदिति शकुनिभाष्ये (पस्पशाह्निके) प्रतिपादितम्।

२. वृत्तिविशषो बहुव्रीहिः। अनेकान्तत्वे क इद्यस्येति सम्बन्धाभावाद् बहुव्रीहि-र्न सिद्धयतीति भावः।

३. यद्यप्यनन्तरादिषु बहुव्रीहिर्न भवति तथापीह वचनसामर्थ्याद् भवतीति भावः।

४. व्यवसितपाठः विच्छिन्नपाठः।

(दुर्गाव्याख्या)

इतरथा ह्येकान्तेऽपि सन्देहः ॥१४॥ इतरथा ह्येकान्तेऽपि सन्देहः स्यात् । तत्र न ज्ञायते किमयं पूर्वस्य भवत्याहोस्वित् परस्येति । संदेहमात्रमेतद्भवति सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति पूर्वस्येति व्याख्यास्यामः । वृत्ताद्वा[5] ॥१५॥ वृत्ताद्वा पुनः सिद्धमेव वृद्धमन्तमाद्युदात्तं दृष्ट्वा ञिदिति व्यवसेयम् । अन्तोदात्तं दृष्ट्वा किदिति । युक्तं पुनर्यद्वृत्तनिमित्तको नामानुबन्धः स्यान्नानुबन्धनिमित्तकेन नाम वृत्तेन भवितव्यम् । वृत्तनिमित्तक एवानुबन्धः । वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति ॥

उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति । किमत्र न्याय्यम् । एकान्ता इत्येव न्याय्यम् । कुत एतत् ? अत्र हि हेतुर्व्यपदिष्टो यच्च नाम सहेतुकं तन्न्याय्यम् । ननु चोक्तं तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वादिति । असरूपविधौ तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमसारूप्यं भवतीति । यदयं 'ददातिदधात्योर्विभाषा' (३.१.१३९) इति विभाषा शं शास्ति ॥ यदप्युक्तं सर्वादेश इति । अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—नानुबन्धकृतमनेकाल्त्वं भवतीति यदयं शित्सर्वस्य' (१.१.५५) इत्याह । यदप्युक्तं दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्य इति न कर्तव्यः आचार्यप्रवृत्तिर्ज्ञापयति—नानुबन्धकृतमनेजन्तत्वं भवतीति यदयम् उदीचां माङो व्यतीहारे' (३.४.१९) इति मेङः सानुबन्धकस्यात्त्वभूतस्य ग्रहणं करोतीति तस्य लोपः (१.३.९) इति सूत्रभाष्येऽपि अनुबन्धा एकान्ता इति पक्ष एव सिद्धान्तितः ॥

॥ इति ५ ॥

——:०:——

५. वृत्तं प्रयोग इत्यर्थः ।

नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसिद्ध्याऽनेकाल्सूत्रे शिद्ग्रहणं व्यर्थमत आह—

**नानुबन्धकृतमनेकाल्त्वम् ॥६॥**

शिद्ग्रहणमेवैतज्ज्ञापकम् । तेनार्वणस्तृ इत्यादेर्न सर्वादेशत्वम् डादिविषये तु सर्वादिशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्व्यात्सिद्धम् ॥६॥

---

**अथ नानुबन्धकृतमनेकाल्त्वम् ॥६॥**

अनुबन्धानां बोधकावयवत्वेऽष्टाभ्य औश् (७.१.२१) इत्यादिसूत्रविहितानामौशादीनामनेकाल्त्वादेव अष्टावित्यादौ 'अनेकालशित् सर्वस्येति सर्वादिशत्वसिद्धौ शिद् ग्रहणं व्यर्थमिति चेन्न नानुबन्धकृतमनेकाल्त्वमिति परिभाषाज्ञापनेन तस्य चारितार्थ्यात् । नच व्याघ्रपादित्यादौ विहितो लोपः सर्वादिशो माभूदिति हेतोः बोध्यवृत्यनेकाल्त्वमेव सर्वादिशताप्रयोजकं न बोधकवृत्तीति स्वीकार आवश्यकः । तथाचानुबन्ध विनिर्मुक्तपदार्थोपस्थित्या अष्टाभ्य औश् (७.१.२१) इत्यादौ बोध्यस्य औकारस्यानेकाल्त्वाभावेन सर्वादिशाय शिद्ग्रहणस्य चारितार्थ्याज्ज्ञापकत्वासम्भव इति वाच्यम् आनुमानिकस्थान्यादेश-भावकल्पनेनानेकाल्त्वात्सर्वादिशसिद्धेः । एवञ्च शिद्ग्रहणस्य ज्ञापकत्वं निर्बाधम् अतएवार्वन्तौ अर्वन्त इत्यादौ अर्वणस्त्रसावनञः (६.४.१२७) इति त्रादेशो न सर्वस्य स्थाने । नचैवं डादेशः णलादेशश्च सर्वस्य

---

**अथ नानुबन्धकृतमनेकाल्त्वम् ॥६॥**

यदि अनुबन्ध (बोधक का) अवयव है तो अष्टाभ्य औश् ७.१.२१ इत्यादि सूत्र से विहित "औश्" को अनेकाल् मानकर ही "अष्टौ" में सम्पूर्ण जस् और शस् के स्थान में 'औश्' आदेश हो जायगा; फिर 'अनेकाल् शित् सर्वस्य १.१.५५ इस सूत्र में 'शित्' ग्रहण व्यर्थ हो जायगा

(इसलिए अनुबन्ध को अनेकाल् नहीं मानना चाहिए) इस प्रश्न का समाधान देते हुए लिखते हैं—

**"नानुबन्धकृतमनेकाल्त्वम्"**

अनुबन्ध को गिन कर किसी को अनेकाल् नहीं बनाया जा सकता । इसलिए 'श्' अनुबन्ध को एक अल् मानकर 'औश्' को 'अनेकाल्' नहीं माना जा सकता । इस लिए 'अनेकाल्शित् सर्वस्य' इस सूत्र में 'शिद्' ग्रहण सार्थक हुआ ।

यही शिद्ग्रहण इस परिभाषा का ज्ञापक है । इस परिभाषा के स्वीकार करने के कारण ही "अर्वन्तौ' यहा अर्वन् (घोड़ा) शब्द से 'औ' विभक्ति आने पर अर्वन्+औ ऐसी स्थिति में "अर्वणस्त्रसावनञः" ६.४.१२७ यहाँ 'तृ' आदेश सम्पूर्ण 'अर्वन्' शब्द को नहीं हुआ किन्तु "अलोऽन्त्यस्य" (१.१.५२) सूत्र से अन्त्य अल् (न्)

(दुर्गाव्याख्या)

स्थाने न स्यात्, तथा च 'भविता'बभूवे'' त्याद्यसिद्धिरिति वाच्यम्, सर्वादेशत्वं विना प्रत्ययादित्वाभावेन चुटू (१.३.७) इत्यादेरप्रवृत्या डादीनामनुबन्धत्वाभावेन परिभाषाया अप्रवृत्या आनुपूर्व्यात्सर्वादेशसिद्धेः । एतन्मतेन इत्संज्ञावत्त्वमनुबन्धत्वमिति स्वीक्रियते । यदि सर्वादिगणोक्तशेखरग्रन्थमनुसृत्येत्संज्ञायोग्यत्वमनुबन्धत्वमित्युच्यते तदा डादिविषये डा+आ, ण+अल् इतिप्रश्लेषेण सर्वादेशत्वं संसाधनीयम् । अत्र मते सर्वादेशत्वमित्यस्य सिद्धमित्नेनान्वयः । अभावेनेत्यस्य च विना शब्देन । एव-शब्दश्चाप्यर्थकः तस्य च विनाशब्दादनन्तरमन्वयः । तथाचानुबन्धत्वस्याभावेन विनापि अर्थादित्संज्ञायोग्यतयानुबन्धत्वेन परिभाषाप्रवृत्यापि आ आ इत्यानुपूर्व्यात् सर्वादेशत्वं सिद्धम् इति शिवम् ।

---

को हुआ । अन्यथा ''तृ'' में ऋ की भी यदि गिनती एक अल् के रूप में होती; तो त् और ऋ दोनों को मिलाकर 'तृ' अनेकाल् माना जाता और 'तृ' आदेश सम्पूर्ण 'अर्वन्' शब्द के स्थान में हो जाता । इस परिभाषा के स्वीकार कर लेने पर तो ''ऋ'' अनुबन्ध की गिनती से ''तृ'' अनेकाल् नहीं बन सका । इसलिए ''अर्वन्तौ'' इत्यादि में दोष नहीं हुआ ।

यद्यपि ऐसा मानने पर ''लुटः प्रथमस्य डारौरसः'' (२.४.८५) परस्मैपदानां णलतुसुस्थलथुसणल्वमाः'' (३.४.८२) इत्यादि सूत्रों से विहित 'डा' और 'णल्' आदि भी 'अनेकाल्' नहीं माने जायेंगे; फिर सम्पूर्ण तिप् के स्थान में 'डा' आदेश और णल् आदेश नहीं होगा; ऐसा प्रश्न उठता है तथापि यहाँ जब तक सर्वादेश (सम्पूर्ण स्थान में आदेश) नहीं हो जायगा तब तक प्रत्ययत्व नहीं आयेगा, ऐसी स्थिति में प्रत्यय के आदि न होने के कारण ''चुटू'' १.३.७ सूत्र की प्राप्ति नहीं होगी; इसलिए इत्संज्ञावान् (इत्संज्ञक) नहीं होने के कारण ये अनुबन्ध ही नहीं माने जायेगे । अतः 'नानुबन्धकृतमनेकाल्त्वम्' की प्राप्ति नहीं होगी । यही कारण है कि 'डा' और 'णल्' को उनके 'ड्' और 'ण्' के कारण अनेकाल् माना जा सकता है । इसलिए भविता और बभूव इत्यादि स्थान में कोई दोष नहीं हुआ ।

न चैवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्वे कृतेऽदाप् इति घुसंज्ञाप्रतिषेधो न स्यात् । दैपः पकारसत्त्वेऽनेजन्तत्वादात्वाप्राप्त्या पलोपोत्तरं पकाराभावेनास्य दाप्त्वाभावादत आह—

**नानुबन्धकृतमनेजन्तत्वम् ।।७।।**

'उदीचां माङः' इति निर्देशोऽस्या ज्ञापकः । 'आदेश उपदेश' इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते । ङकारसत्त्र एजन्तत्वाभावादात्वाप्राप्तेस्तस्यासङ्गतिः ।। न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्वमिति वाच्यम् । तत्र 'धातो' रित्यस्य निवृत्तेरित्यन्यत्र विस्तरः । स्पष्टं चेदं दाधा घ्वदाबिति सूत्रे भाष्ये ।।७।।

---

**अथ नानुबन्धकृतमनेजन्तत्वम्**

नन्वनुबन्धा एकान्ता इति स्वीकारे अवदातं मुखम् इत्यादौ अवपूर्वकाद् दैप्-धातोः पलोपादनन्तरम् 'आदेच उपदेशेऽशिति' ६.१.४५ इत्यात्वे कृतेऽदाप्त्वाद् दाधा घ्वदाप् (१.१२०) इति घुसंज्ञाप्रतिषेधो न स्यात्, दैपः पकारसत्वे ऽनेजन्तत्वेन आत्वाप्राप्तेर्दैप्त्वेऽपि दाप्त्वाभावात् । पलोपोत्तरञ्च पकाराभावेन दाप्त्वाभावादिति चेत् सत्यम्, किन्तु नानुबन्ध**कृतमनेजन्तत्वमिति परिभाषा** स्वीक्रियते । अनुबन्धहेतुक-एजन्तत्वाभावोऽत्र शास्त्रे न स्वीक्रियते । तेन दैपः पकारोऽत्र एजन्तत्वे बाधकः न स्यात् । तत्सत्वेऽपि दैपः एजन्तत्वादादेच इत्यात्वे दाप्त्वं सूपपन्नमिति तात्पर्यम् । इत्थं घुत्वाभावाद् दो दद्घोः ७.४.४६ इति न दथादेशापत्तिः । अत्र ज्ञापकः उदीचां माङो व्यतिहारे ३.४,१९ इत्यत्र माङ इति मेङः कृतात्त्वनिर्देशः । आदेच उपदेश इति उपदिश्यमानस्यैजन्तत्वस्यात्वविधानादिह मेङि ङकारसत्वे एजन्तत्वाभावादात्वाप्राप्तेर्निर्देशस्यासंगतिः स्पष्टैव । परिभाषास्वीकारे तु ङकारस्यानुबन्धत्वात्तत्कृतस्यानेजन्तत्वस्यास्वीकारादेजन्तत्वेन निर्देशः संगतः ।

---

**अथ नानुबन्धकृतमनेजन्तत्वम् ।।७।।**

अव पूर्वक "दैप्" धातु से निष्ठा (क्त) प्रत्यय करने पर "अवदातम्" बनता यहाँ अवत्तम् और "अवदत्तम्" (अव उपसर्गपूर्वक दा धातु के रूप) की तरह 'अच उपसर्गात्तः' ७.४.४७ सूत्र से 'दा' को 'त' आदेश या 'दो दद्घोः' ७.४.४६ से दा को दथ् आदेश नहीं हुआ; क्योंकि "दाधा घ्वदाप्" १.१.२० से "दाप्" भिन्न को घुसंज्ञा होती है यह 'दा' तो दैप का बना हुआ होने से 'दाप्' है, 'दाप्' भिन्न नहीं । यहाँ यह प्रश्न उठता है कि यदि 'प्' अनुबन्ध को अवयव मानें तो उसके (प के) लोप के बिना या प के लोप के पहले दैप् को एजन्त (ऐकारान्त) नहीं होने के

(दुर्गाव्याख्या)

नचोपदेश एवानुबन्धलोपस्ततो धातुसंज्ञेति सिद्धान्तानुसारेण मेङ् इत्यवस्थायां धातुत्वाभावात् कथमात्त्वमिति वाच्यम्, तत्र धातोः (६.१.८) इत्यस्य निवृत्यङ्गीकारात्। इयं परिभाषा दाधाघ्वदाबित्यत्र भाष्ये स्पष्टा। तथाहि 'दाधा घ्वदाप्' (१.१.२०) इत्यत्र भाष्ये प्रोक्तम् **"दाप्प्रतिषेधे न दैप्यनेजन्तत्वात्"** ।।७।। दाप्प्रतिषेधे दैपि प्रतिषेधो न प्राप्नोति। अवदात मुखम्। ननु चात्त्वे कृते भविष्यति। तद्धचात्त्वं न प्राप्नोति। किं कारणम्। अनेजन्तत्वात्।।

**सिद्धमनुबन्धस्यानेकान्तत्वात्** ।।८।। सिद्धमेतत्। कथम् अनुबन्धस्यानेकान्तत्वात्।। अनेकान्ता अनुबन्धाः। **पित्प्रतिषेधाद्वा** ।।९।। अथवा दाधा घ्वपिदिति वक्ष्यामि। तच्चावश्यं वक्तव्यम्। अदाबित्युच्यमाने इहापि प्रसज्येत। प्रणिदापयतीति। शक्यं तावदनेनादाबिति ब्रुवता बान्तस्य प्रतिषेधो विज्ञातुम्। सूत्रं तर्हि भिद्यते यथान्यासमेवास्तु। ननु चोक्तं दाप्प्रतिषेधे न दैपीति। परिहृतमेतत्, सिद्धमनुबन्धस्यानेकान्तत्वादिति। अथैकान्तेषु दोष एव। एकान्तेषु च न दोषः। आत्त्वे कृते भविष्यति। ननु चोक्तं तद्धचात्त्वं न प्राप्नोति। किं कारणम्? अनेजन्तत्वादिति। पकारलोपे कृते भविष्यति। नह्ययं तदा दाब्भवति। भूतपूर्वगत्या भविष्यति। एतच्चात्र युक्तं यत्सर्वेष्वेव सानुबन्धकग्रहणेषु भूतपूर्वगतिर्विज्ञायते। अनैमित्तिको ह्यनुबन्धलोपस्तावत्येव भवति।। अथवाचार्यप्रवृत्तिर्ज्ञापयति 'नानुबन्धकृतमनेजन्तत्वमिति। यदयम् "उदीचां माङो व्यतीहारे "(३.४.१९) इति मेङः सानुबन्धकस्यात्त्वभूतस्य ग्रहणं करोति। अथवा दाबेवायं न दैबस्ति। कथमवदायतीति। श्यन्विकरणो भविष्यति। दिवादिषु दैप् शोधने इति पठिष्यते इत्यर्थः (प्रदीपे)।

——:०:——

---

कारण वहाँ आत्व नहीं होगा। इसलिए यह 'दैप्' होगा, दाप् रूप नहीं। ऐसी स्थिति में "अदाप्" शब्द से जिस दाप् को घुसंज्ञा का विषय नहीं माना गया हैं; वह इस 'दैप्' को नहीं कहा जा सकता यदि प का लोप करके आत्व करते हैं; तो 'आत्व' द्वारा बना हुआ यह 'दा' 'दाप्' नहीं माना जा सकता। दोनों ही स्थिति में यहाँ घुसंज्ञा प्राप्त होती है और घुसंज्ञा होने पर 'त्' तथा 'दथ्' आदेश होने से अनिष्ट रूप बनने का डर रहता है इसलिए परिभाषा मानते हैं—

**"नानुबन्धकृतमनेजन्तत्वम्"** अर्थात् अनुबन्ध के कारण एजन्तत्व की हानि नहीं होती। अनुबन्ध (अन्त में) लगे रहने के कारण किसी को अनेजन्त नहीं मानना चाहिए।

'उदीचां माङो व्यतीहारे' ३.४.१९ इस सूत्र में निर्दिष्ट "माङ" यह निर्देश इस परिभाषा का ज्ञापक है। यहाँ "माङ" "मेङ्" का कृतात्त्वनिर्देश

(हिन्दीभाष्यम्)

(आत्व करके दिखाया गया निर्देश) है। यदि अनुबन्ध "ङ्" एजन्तत्व का बाधक होता, तो यहाँ आदि उच्चारण काल में एजन्त को या उपदिश्यमान एजन्त को "आत्व" करने वाले आदेच उपदेशे ऽशिति" ६.१.४५ सूत्र की प्रवृत्ति नहीं होने से उक्त निर्देश नहीं बन पाता। इसलिए मानना चाहिए कि "मेङ" की जगह "माङ" लिखने वाले पाणिनि अनुबन्ध को आदेच उपदेशेऽशिति" सूत्र की प्रवृत्ति में अपेक्षित 'एजन्तत्व" का बाधक नहीं मानते थे। यदि यह कहें कि "दैप् या मेङ्" इस अवस्था में जब कि उसके साथ अनुबन्ध लगा हुआ हैं वह क्रिया वाचक नहीं होने से धातु ही नहीं है, फिर 'आदेच' उपदेशेऽशिति सूत्र से एजन्त धातु को किया जाने वाला आत्व कैसे होगा? तो इसका समाधान यह हैं कि उक्त सूत्र में "धातोः" की अनुवृत्ति नहीं मानी जाती है। इस पर मैंने (नागेश ने) 'उद्योत' में विस्तृत विचार प्रगट किया है। "आदेच उपदेशेऽशिति" ६.१४५ सूत्र के भाष्य के उद्योत में उन्होंने लिखा है कि सूत्र में अशिति को प्रसज्य प्रतिषेध ही मानना उचित है। एजन्त के रूप में उपदिश्यमान को अर्थात् जिसका उपदेश पाणिन्यादि ऋषिओं ने एजन्त के रूप में किया हो (जिसे पाणिन्यादि ऋषियों ने एजन्त के रूप में उच्चारण किया हो) उसे आत्व हो ऐसा अर्थ करने पर "गोभ्याम्" ढौकिता" आदि में आत्त्व की प्राप्ति नहीं होगी। इसलिए "धातु" पद की अनुवृत्ति "लिटि धातोरनभ्यासस्य" ६.१.८ से यहाँ नहीं करनी चाहिए। धातुग्रहण की अनुवृत्ति करने पर तो "उदीचां माङः" इत्यादि में ('मेङ्'धातु के रूप-'माङः' में आत्त्व नहीं होगा; क्योंकि ङकारविशिष्ट ("मेङ्") में धातुत्व नहीं है। यह बात "उपदेश एवानुबन्धलोपस्ततो धातुसंज्ञा" पहले उपदेश काल में ही अनुबन्ध का लोप होता है फिर धातुसंज्ञा होती हैं, इन शब्दों के द्वारा "न धातुलोप आर्धधातुके" १.१.४ सूत्र के भाष्य में कही गयी है। "प्रसज्यप्रतिषेध एव युक्तः, पर्युदासपक्षे बहुप्रतिविधेयत्वात्। उपदिश्यमानस्य एजन्तस्येत्याद्यर्थाच्च 'गोम्याम्' 'ढौकिता' इत्यादौ न दोषः। धातुग्रहणावृत्तौ तु उदीचांमाङः—इत्यादावात्वा नुपपत्तिः, ङकारविशिष्टे धातुत्वाभावात्। अनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव धातुतायाः "न धातुलोप—"इतिसूत्रे भाष्ये स्पष्टमुक्तत्वात् (उद्योत ६.१.४५)

(हिन्दीभाष्यम्)

'नानुबन्ध कृतमनेजन्तत्वम्'' इसका स्पष्ट उल्लेख ''दाधा घ्वदाप्'' १.१.२० सूत्र के भाष्य में पाया जाता। वहाँ भाष्यकार ने यह प्रश्न उठाया कि ''दाप्प्रतिषेधे न दैप्यनेजन्तत्वात्'' अर्थात् दाप् भिन्न को जो घुसंज्ञा की गयी है उससे दाप् लवने को ही घुसंज्ञा नहीं होगी ''दैप्'' को हो ही जायगी। इस तरह ''दाप्'' का प्रतिषेध करने पर दैप् में वह प्रतिषेध नहीं होगा; क्योंकि एजन्त नहीं होने से आत्व नहीं होने के कारण 'दैप्' को दाप् नहीं माना जा सकता। पहले इसका समाधान करते हुए उन्होंने कहा ''सिद्धमनुबन्धस्यानेकान्तत्वात्'' अर्थात् अनुबन्ध अवयव नहीं होता। इसलिए 'प्' एजन्तत्व होने में बाधक नहीं होगा। फिर दूसरा समाधान इसका यह दिया कि ''पित् प्रतिषेधाद्वा'' अर्थात् दाधा घ्वपित्'' यह सूत्र करके पित् रहित 'दा' 'धा' को घुसंज्ञा करने से दैप् का प्रतिषेध हो जायगा। अन्त में उन्होंने कहा—अथवाचार्यप्रवृत्तिर्ज्ञापयति—नानुबन्धकृतमनेजन्तत्वम्—यदयमुदीचां माङो व्यतीहारे (३.४.१९) इति मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं करोति ॥ अर्थात् अनुबन्ध सहित मेङ में आत्व करके ''माङ'' बनाकर उसका निर्देश करना यह सूचित करता है कि अनुबन्ध एजन्तत्व का बाधक नहीं होता।

इसलिए भाष्यकार ने अन्त में सिद्धान्त के रूप में यह परिभाषा स्वीकार करके उक्त दोष का निवारण किया है।

———:o:———

नन्वेवमपि 'वाऽसरूप' सूत्रेण कविषयेऽणोऽप्यापत्तिरत आह—

नानुबन्धकृतमसारूप्यम् ॥८॥

---

नानुबन्धकृतमारूप्यम् ॥८॥

नन्वनुबन्धानामवयवत्वस्वीकारेऽनुबन्धघटितस्यैव बोधकत्वेन काणोरसरूपत्वाद् 'वाऽसरूपोऽस्त्रियाम्' ३.१.९४ इति विकल्पेन बाधात् गोद इत्यत्र कविषयेऽण्प्यापद्येत । अनवयवत्वे तु न दोषः; तदा कस्याणश्चोभयोः समानरूपत्वेन केनाणो-नित्यबाधात् । तथाचैकान्तपक्षो दुष्ट इति चेच्छ्रूयताम् "**नानुबन्धकृतमसारूप्यम्**" इति परिभाषास्वीकारात् । अनुबन्धप्रयुक्ता असमानरूपता नेह गृह्यत इति भावः । अनु-बन्धोऽत्रासरूपाधायको न भवति । तेन ककारं णकारं वाऽऽदाय काणोरसारूप्यं न सम्पादयितुं शक्यते । अनुबन्धमनधिकृत्य दृश्यते चेदत्र अप्रत्यये सारूप्यमेव दृश्यते ।

---

अथ नानुबन्धकृतमसारूप्यम् ॥८॥

अनुबन्ध को अवयव मानने पर आये हुए दो दोषों का निवारण पूर्वोक्त दो परिभाषाओं से करने पर भी एक प्रकार का दोष शेष रह ही गया है। वह है 'क' के विषयों में अण् की प्राप्ति । "आतोऽनुपसर्गे कः [३.२.४) से जो 'क' प्रत्यय होता है; उसे कर्मण्यण् ३.२.१ से विहित अण् प्रत्यय का अपवाद माना गया है । "धातो" ३.१.९१ इस अधिकार में आये हुए सूत्रों से विहित उत्सर्ग और अपवाद प्रत्ययों में एक सरूप (समान रूप वाला) 'अपवादप्रत्यय' (समान रूप वाले) 'उत्सर्ग' प्रत्यय का नित्य बाधक माना गया है। परन्तु यदि उत्सर्ग और अपवाद दोनों प्रत्ययों का रूप असमान हो तो बाध्य बाधक भाव विकल्प से होता है। "स्त्रियां क्तिन्" ३.१.९१इस अधिकार में विहित प्रत्ययों को छोड़ कर कृदन्त में सर्वत्र यही नियम माना गया है । सूत्र है—"वाऽसरूपोऽस्त्रियाम् (३.१.९४)। यदि अनुबन्ध ककार को 'क' प्रत्यय का अवयव नहीं मानें और अण् प्रत्यय में 'णकार' रूप अनुबन्ध को अण् प्रत्यय का अवयव नहीं मानें, तो दोनों जगह 'अ' ही शेष रह जाता है। इस लिए 'सरूप' प्रत्यय होने के कारण अपवाद 'क' प्रत्यय से उत्सर्ग अण् प्रत्यय का नित्य बाध हो जाता है और 'गोदः' एक ही रूप बनता है जो कि इष्ट है। परन्तु यदि अनुबन्ध को अवयव मानते हैं तो 'क' और 'अण्' प्रत्ययों में रूप भेद होने के कारण असरूप अपवाद 'क' प्रत्यय से अण् रूप असरूप उत्सर्ग का विकल्प से बाध होगा। ऐसी स्थिति में 'गोदः' के साथ साथ 'गोदायः' जैसे अनिष्ट रूप की भी सिद्धि होने लगेगी। इसलिए "अनुबन्धाः" "एकान्ताः" यह पक्ष नहीं माना चाहिए इस शङ्का के समाधान के लिए परिभाषा मानते हैं—

**ददातिदधात्योर्विभाषेति णबाधकशस्य विकल्पविधायकमस्या ज्ञापकम् । तेन गोद इत्यादौ नाणिति वाऽसरूपसूत्रे भाष्ये स्पष्टम् ॥८॥**

---

अत्र ज्ञापकं "ददातिदधात्योर्विभाषा" ३.१.१३९ इत्यत्र णबाधकस्य शस्य विकल्पेन-विधानम् अन्यथा करणयोरसारूप्यात्स्वत एव विकल्पेन बाधे सिद्धे विकल्पविधानं व्यर्थं स्यात् । तेन 'गोद' इत्यादौ 'आतोऽनुपसर्गे कः' ३.१.३ इति केन 'कर्मण्यण्' ३.२.१ इति अणो नित्यं बाधो जायते । 'वाऽसरूपोऽस्त्रियाम् [३.१.९४] इति सूत्रे भाष्ये परिभाषेयमुपलभ्यते । तथाहि अथैकान्ते दोष एव ? एकान्ते च न दोषः । आचार्य-प्रवृत्तिर्ज्ञापयति 'नानुबन्धकृतमसारूप्यं भवतीति' यदयं 'ददातिदधात्योर्विभाषा शं शास्ति । अथवासरूपो बाधको वा बाधको भवतीत्युच्यते । अपवादो नामानुबन्ध-भिन्नो वा भवति रूपान्यत्वेन वा । तेनानेनावश्यं किञ्चित् त्याज्यं किञ्चित्तु संग्रही-तव्यम् । तद्यदनुबन्धकृतमसारूप्यं तन्नाश्रयिष्यामो यत्तु रूपान्यत्वेनासारूप्यं तदा-श्रयिष्यामः ॥ अथवासरूपो बाधको भवतीत्युच्यते । सर्वश्चासरूपस्तत्र प्रकर्षगतिर्विज्ञा-स्यते । साधीयो योऽसरूप इति । कश्च साधीयः । यः प्रयोगे च प्राक् च प्रयोगात् । अथवासरूपो बाधको वा बाधको भवतीत्युच्यते, नचैवं कश्चिदपि सरूपः । तत एवं विज्ञास्यामः क्वचिद्येऽसरूपा, इति । अनुबन्धभिन्नाश्च प्रयोगे स्वरूपाः ॥

इत्थमत्र नानुबन्धकृतमसारूप्यमिति प्रोक्तमेव विविधया भङ्ग्या ।

—:०:—

---

**"नानुबन्धकृतमसारूप्यम्" ॥८॥**

"वासरूपोऽस्त्रियाम्" इस सूत्र में असमानरूपता के निर्णय में अनुबन्ध सहायक नहीं बनेगा । अनुबन्ध के आधार पर प्रत्ययों को असरूप नहीं बताया जा सकेगा ।

"ददाति—दधात्योर्विभाषा" ३.१.१३९ यह सूत्र जो कि ण का 'श' से वैकल्पिक बाध हो इस इच्छा से 'श' का विभाषा' विधान करता है, इस परिभाषा का ज्ञापक है ।

तात्पर्य यह है कि यदि अनुबन्ध के कारण प्रत्ययों में असरूपता की व्यवस्था स्वीकार करें तो 'ण' और 'श' में स्पष्टतः स्वरूप भेद होने के कारण "वासरूपो-ऽस्त्रियाम्" ३.१.९४ से ण का बाध 'श' प्रत्यय के द्वारा विकल्प से होता ही था । ऐसी स्थिति में 'ददातिदधात्योर्विभाषा" इस सूत्र में विभाषा ग्रहण व्यर्थ हो जायगा वही ज्ञापन करेगा कि **नानुबन्ध-कृतमसारूप्यम्"** । अनुबन्ध को जब असारूप्य व्यवस्था में कारण नहीं माना गया तब तो 'श' प्रत्यय के विभाषा विधान की आवश्यकता हो गयी; क्योंकि अनुबन्ध विनिर्युक्त ण और श दोनों का रूप 'अ' ही रहता है जो कि सरूप है । इसलिए यहाँ नित्य बाध्य-बाधक भाव हो जाता और चाहते हैं कि विकल्प से हो और "दायः" तथा ददः, धायः तथा 'दधः" ये दोनों रूप बनें ।

ननु संङ्ख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्। प्रकरणस्याभिधानियामकत्वसिद्धात्—

**कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः ॥९॥**

इति न्यायात्। अस्ति च प्रकृते बह्वादीनां संङ्ख्या संज्ञा कृतेति ज्ञानरूपं प्रकरणम् ॥९॥

---

**अथ कृत्रिमाकृत्रिमयोः कृत्रिमे ॥९॥**

**अथ उभयगतिरिह भवति ॥१०॥**

ननु संयोगविप्रयोगसाहचर्यादिवत् प्रकरणमपि शब्दस्यानेकार्थकस्यार्थविशेषे तात्पर्यग्राहकमङ्गीकृतम्। तथाच बहुगणवतुडति संख्या १.१.२३ इति बह्वादीनां संख्या संज्ञा कृतेति ज्ञानरूपस्य प्रकरणस्येह विद्यमानत्वात् संख्यापदेन बह्वादीनामेव ग्रहणं स्यान्नतु एकद्वयादीनाम्, प्रकरणस्यार्थविशेषे तात्पर्यग्राहकत्वनियमजन्यः कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति न्यायोऽप्यत्रानुकूल इति चेन्न "**उभयगतिरिह भवति**" इति परिभाषास्वीकारात्। इह शास्त्रे यथावसरं यथा कार्यं व्याख्यानात् कृत्रिमाकृत्रिमयोरुभयो र्ग्रहणं भवति। एषा परिभाषा लौकिकालौकिकोभयतात्पर्यं शास्त्रेऽस्तीति बोधयति। तेन संख्या—पदेन एकद्वित्रिप्रभृतीनां लौकिकसंख्यावाचकपदानां बहुगणादीनाञ्च शास्त्रीयसंख्यावाचकपदानां ग्रहणं सिद्धयति।

---

वह बिना विशेष यत्न के सिद्ध नहीं हो सकता था। इसलिए विशेष यत्न के रूप में "ददातिदधात्योर्विभाषा" जैसे विकल्प विधायक सूत्र सी आवश्यकता सिद्ध हुई। परिभाषा मानने का फल यह हुआ कि "गोदः" में अनुबन्ध ककार से विनिर्युक्त 'क' और अनुबन्ध ण कार से विनिर्युक्त "अण्" में भेद नहीं होने के कारण अपवाद अ (क) से उत्सर्ग अ (अण्) का नित्यबाध हुआ। इसलिए "गोदः" ही बना। अण् होकर "गोदायः" जैसे अनिष्ट रूप नहीं बन पाया।

ऊपर जो कुछ कहा गया है; उसका स्पष्ट उल्लेख "वाऽसरूपोऽस्त्रियाम्" ३.१.९४ सूत्र के भाष्य में पाया जाता है। वहाँ कहा गया है कि "अनुबन्धा एकान्ताः" इस पक्ष में 'क' प्रत्यय और 'अण् प्रत्यय में असमान रूप के कारण 'क' से 'अण्' का वैकल्पिक बाध रूप दोष नहीं होगा; क्योंकि "ददाति दधात्यो विभाषा" ३.१.१३९ सूत्र के द्वारा वैकल्पिक 'श' प्रत्यय का विधान करके आचार्य ने यह सूचित कर दिया है कि "अनुबन्ध कृत असमानरूपता नहीं मानी जाती है। पूरा भाष्य दुर्गा व्याख्या में पृ० ५७ पर उद्धृत है। इति शिवम्।

—:o:—

**अथ कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः ॥९॥**

**अथ उभयगतिरिह भवति ॥१०॥**

पाणिनि ने "बहुगणवतुडति संख्या "(१.१.२३) सूत्र निर्माण के द्वारा

न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह—

**उभयगतिरिह भवति ॥१०॥**

इह शास्त्रे । 'संख्याया अतिशदन्तायाः' इति निषेधोऽस्या ज्ञापकः न हि कृत्रिमा सङ्ख्या त्यन्ता शदन्ता चास्ति । तेन 'कर्त्तरि कर्मव्यतिहारे', 'कण्वमेघेभ्यः करणे', 'विप्रतिषिद्धं चानधिकरणे' इत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः । तत्र क्वोभय गतिः क्वाकृत्रिमस्यैवेत्यत्र लक्ष्यानुसारिव्याख्यानमेव शरणम् । अत्र एवा म्रेडित-शब्देन कृत्रिमस्यैव ग्रहणं न तु द्विस्त्रिर्वुष्टमात्रस्य । स्पष्टं चेदं संख्यासञ्ज्ञासूत्रे भाष्ये ।

---

पाणिनीय व्याकरण के अध्येता को बताया है कि इस व्याकरण तन्त्र में बहु-शब्द, गणशब्द, वतु प्रत्ययान्त शब्द (जैसे तावत् यावत् इत्यादि शब्द) और डति प्रत्ययान्त शब्द (जैसे कति आदि शब्द) को संख्या कहते हैं । इस तरह जैसे 'वृद्धि' कहने से इस व्याकरण में वृद्धि का लौकिक अर्थ (तरक्की) नहीं लिया जाता है; किन्तु आत् ऐच् ही लिया जाता है; उसी तरह 'संख्या' शब्द से इस व्याकरण में लोक प्रसिद्ध एक, द्वि त्रि आदि का ग्रहण नहीं होना चाहिए; किन्तु "बहुगण-वतु" सूत्र प्रतिपाद्य शब्दों का ही ग्रहण होना चाहिए । प्रकरण अभिधा का नियामक होता है; जैसे भोजन प्रकरण में सैन्धवमानय" कहने पर 'लवण' का ही आनयन होता है, अश्व का नहीं; युद्ध या यात्रा प्रकरण में पूर्वोक्त वाक्य का तात्पर्य 'अश्व' ही लिया जाता है, 'नमक' नहीं; इसी तरह पाणिनीय व्याकरण के इस प्रकरण में पाणिनि के द्वारा परिभाषित शब्दावली से वही तात्पर्य लिया जाना चाहिए; जिस के लिए पाणिनि ने संज्ञासूत्रों के निर्माण द्वारा संकेत किया है । इसी आधार पर एक परिभाषा या न्याय भी प्रचलित है "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः" कृत्रिम और अकृत्रिम दोनों में यदि कार्य की संभावना हो तो कृत्रिम में ही कार्य करना चाहिए' । अर्थात् किसी सूत्र में यदि कोई ऐसा पद है; जिससे पाणिनि संकेतित अर्थ लिया जा सकता है और लौकिक अर्थ भी लिया जा सकता हैं; तो वहाँ उस शब्द से (कृत्रिम) पाणिनि संकेतित अर्थ ही लेना चाहिए । जैसे यहाँ "अम्बार्थनद्योर्ह्रस्वः "७.३.१०७ इस सूत्र में । यहाँ नदी पद से सरिता आदि लौकिक अर्थ नहीं लिया जाता है किन्तु 'नदी' संज्ञक शब्द ही लिये जाते हैं ।

पाणिनि ने "बहु गण" आदि को संख्या संज्ञा की है; यह ज्ञान रूप प्रकरण है इसलिए प्रकरण से 'संख्या' शब्द की अभिधा या तात्पर्य का बहुगणादि अर्थ में नियमन हो जायगा । फिर संख्या पद से 'द्वि' 'अष्टन्' आदि शब्दों का ग्रहण न होने से द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ६.३.४७ इत्यादि सूत्रों के उदाहरण 'द्वादश' 'अष्टादश' आदि की सिद्धि नहीं हो पायेगी । लोकप्रसिद्ध संख्या (एक द्वि) का भी ग्रहण संख्या पद से हो, इसलिए परिभाषा बताते है :—

**उभयगतिरिह भवति ॥१०॥**

(दुर्गाव्याख्या)

अतः संख्याया विधार्थे धा" (५.३.४२) इत्यादिना उभयविधेभ्यो धाप्रत्यये एकधा द्विधा त्रिधा बहुधेत्यादि सिद्धम् । अत्र ज्ञापकः 'संख्याया अतिशदन्तायाः कन्' (५.१.२२) इतिसूत्रे तिशदन्तपर्युदासः । अन्यथा कृत्रिमायाः संख्यायाः त्यन्तशदन्तत्वाभावात्पर्युदासो व्यर्थः स्यात् । परिभाषायां स्वीकृतायां सप्ततिचत्वारिंशदित्यादेरपि संख्यापदेन ग्रहणात् साप्ततिकः चात्वारिंशत्क इत्यादौ पञ्चकः बहुकः इत्यादाविव प्राप्तस्य कनो वारणाय पर्युदासः सार्थकः । तेन 'कर्तरि कर्मव्यतिहारे' (१.३.१४) इत्यत्र कर्मपदेन क्रियाया ग्रहणम् नतु कृत्रिमस्य 'कर्तुरीप्सिततमं कर्म' १.४.७६ इति विहितस्य; परन्तु कर्मणि द्वितीया २.३.२ इत्यादौ च कृत्रिमायाः कर्मसंज्ञाया ग्रहणम् । "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" (३.१.१७) इत्यत्र करणपदेनक्रियागृह्यते 'कर्तृकरणयोस्तृतीया' (२.३.१८) इत्यत्र तु साधकतमस्य ग्रहणम्; 'विप्रतिषिद्धं चानधिकरणवाचि' (२.४.१३) इत्यत्राधिकरणपदं द्रव्यार्थकम् 'सप्तम्यधिकरणे च' (२.३.३७) इत्यत्र तु कृत्रिमस्याधिकरणस्याधारोऽधिकरणम् १.४.४५ इति विहितस्य ग्रहणम् । "पूरणगुण २.२.११ इत्यत्र गुणपदेन "सत्वे[1] निविशतेऽपैति" इति लक्षणलक्षितोऽकृत्रिमो गुणो गृह्यते अथवा "उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि, वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ।। (महाभाष्यम् ४.१.४४) इति गुणलक्षणलक्षितोऽकृत्रिमो गुणो गृह्यते । नत्वदेङ्गुणः इति कृत्रिमः, अर्थग्रहणात्, नापि संख्या, "क्रोशशतयोजनशतयोरुपसंख्यानम्" (५.१.७४ वा० १) इति वार्तिके क्रोशशतेत्यादिनिर्देशात् । "नदीभिश्च" (२.१.२०) इत्यत्र नदीपदेन स्वरूपस्य न ग्रहणम् शब्दसंज्ञात्वात्, नदीसंज्ञकानां गौर्यादिशब्दनाञ्च न ग्रहणम्, बहुवचननिर्देशात् । किन्त्वर्थस्य ग्रहणम् । नचार्थस्य समासः सम्भवति । अतस्तद्वाचिनामयं समासः । तत्रापि न केवलं नदीविशेषवाचका गोदावर्यादिशब्दा एव गृह्यन्ते किन्तु नदीसामान्यवाचका अपि, तेन सप्तगोदावरम् पञ्चनदं सप्तसरितमित्यादि सिद्धम् । "नदीपौर्णमास्याग्रहायणीभ्यः" (५.४.११०) इत्यत्र स्वरूपस्यैव ग्रहणं न संज्ञायाः,पौर्णमास्यादीनां पृथग्ग्रहणात् । "मिदेर्गुणः" ७.३.८२) इत्यादौ

---

अर्थात् इस शास्त्र में दोनों प्रकार के अर्थों का ग्रहण होता है । संख्या शब्द से लौकिक (एक द्वि त्रि आदि) संख्या और अलौकिक (बहुगणादि) संख्या दोनों का तात्पर्य ग्रहण किया जाता है । अर्थात् जहाँ दोनों में तात्पर्य ग्रहण करना हो वहाँ आवृत्ति माननी चाहिए । "संख्याया अतिशदन्तायाः कन्" ५.१.२२ इस सूत्र में "अतिशदन्तायाः" के द्वारा त्यन्त और शदन्त से भिन्न संख्या वाचक शब्दों से 'कन्' प्रत्यय का विधान किया गया है । इसलिए पञ्चभिः क्रीतः पञ्चकः

---

१. सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रिया यत्र सोऽसत्त्वप्रकृति र्गुणः ।। (महाभाष्यम् ४.१.४४)

(हिन्दीभाष्यम्)

में कन् प्रत्यय होता है किन्तु सप्तत्या क्रीतः साप्ततिकः चत्वारिंशता क्रीतः चात्वारिंशत्कः में 'कन्' प्रत्यय नहीं होता। किन्तु 'ठञ्' प्रत्यय होता है। भला, यदि लौकिक संख्या का ग्रहण यहाँ नहीं होता," बहुगणवतुडति संख्या" इस सूत्र से विहित कृत्रिम (शास्त्रीय) संख्याओं में कोई संख्या ऐसी नहीं हैं; जो त्यन्त या शदन्त हो, फिर ऐसी संख्याओं के निषेध से क्या लाभ ? वह निषेध व्यर्थ होकर सामान्य रूप में ज्ञापन करता है कि पाणिनीय तन्त्र में आवश्यकतानुसार कृत्रिम और अकृत्रिम दोनों का ग्रहण हुआ करता है।

इसलिए "कर्तरि कर्मव्यतिहारे" (१.३.१४) में कर्म पद से "क्रिया" "कण्वमेघेभ्यः करणे (३.१.१७) में करण पद से भी क्रिया और "विप्रतिषिद्धं चानधिकरणवाचि" २.४.१३ में अधिकरण पद से 'द्रव्य' अर्थ लिया गया। 'कर्मण्यण् ३.२.१ और 'करणाधिकरणयोश्च, (३.३.११७) आदि सूत्रों में कर्म करण और अधिकरण पदों से पाणिनीय संकेतित अर्थ लिया जाता है। इस तरह इस शास्त्र में उभय गति देखी गयी है।

कहाँ दोनों अर्थ लिये जायें, कहाँ अकृत्रिम ही लिया जाय और कहाँ कृत्रिम ही लिया जाय, इसका निर्णय लक्ष्य सिद्धि को ध्यान में रखकर आचार्य के द्वारा की गयी सूत्र की विशेष व्याख्या से ही होगा। इसलिए नदी शब्द से इस शब्द शास्त्र में कृत्रिम नदी संज्ञक 'गौरी' और 'नारी' आदि शब्दों का ग्रहण होता है जैसे- 'ह्रस्वनद्यापोनुट् (७.१.५४) में। अकृत्रिम गङ्गा, यमुना आदि शब्द भी लिये जाते हैं— जैसे "नदीभिश्च" २.१.२० इस सूत्र में। इसलिए पञ्चगङ्गम्' और 'द्वियमुनम्' इत्यादि प्रयोग सिद्ध होते हैं। कहीं 'नदी' शब्द भी लिया जाता है जैसे 'नदीपौर्णमास्याग्रहायणीभ्यः ५.४.११० इस सूत्र में। इस लिए 'उपनदम्' और 'उपनदि' जैसे प्रयोग सिद्ध होते हैं। "वोतो गुणवचनात्" ४.१.४४ पूरण गुण सुहितार्थ" २.२.११ आदि सूत्रों में गुण पद से अकृत्रिम शुक्ल नील पीतादि का ही ग्रहण होता है। "कानाम्रेडिते" ८.३.१२ इत्यादि सूत्रों में "आम्रेडिते" शब्द से कृत्रिम आम्रेडित "तस्य परमाम्रेडितम् ८ १.२ सूत्र से विहित आम्रेडित ही लिया जायगा; आम्रेडितं द्विस्त्रिर्घुष्टम् (अमर कोशः १.६.१२) अर्थात् दो तीन बार प्रयुक्त लौकिक आम्रेडित नहीं लिया जायगा। यह सब कुछ संख्या संज्ञा सूत्र के भाष्य में स्पष्ट है। वहाँ 'कृत्रिमा कृत्रिम' न्याय और प्रकरण के कारण संख्या पद से लौकिक संख्याओं के ग्रहण न होने की आपत्ति उठाकर "उभयगतिरिह भवति" का समर्थन किया गया है। "संख्याया अतिशदन्तायाः" की ज्ञापकता भी स्पष्ट है और लक्ष्यानुरोध तथा व्याख्यान विशेष के कारण कृत्रिम या अकृत्रिम अथवा दोनों के ग्रहण की व्यवस्था भी दी गयी है।

**यत्तु संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनैत एवेति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजमिति तन्न । तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति नियमत्वायोगात् । सर्वे सर्वार्थवाचका' इत्यभ्युपगमोऽपि योगिदृष्ट्या न त्वस्मद्दृष्ट्या । विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात्सामान्यज्ञानं तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥१०॥**

---

च कृत्रिमस्यैव ग्रहणम् कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमिति न्यायात् । इत्थं कुत्रोभयगतिः, कुत्र चाकृत्रिमस्य ग्रहणं क्व च कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम् । अत एवाम्रेडितशब्देन कृत्रिमस्य "तस्य परमाम्रेडितम्" ७.१.२ इतिविहितस्यैव ग्रहणम्, न तु आम्रेडितं द्विस्त्रिर्घुष्टमि'ति कोशोक्तस्य लौकिकस्याकृत्रिमस्य ।

"बहुगणवतुडति १.१.२३ इति संख्यासंज्ञासूत्रस्य भाष्ये परिभाषेयं स्पष्टा—तथाहि—"अक्रियमाणे हि संख्याग्रहणे एकादिकायाः संख्यायाः संख्येत्येष संप्रत्ययो न स्यात् । किं कारणम्, कृत्रिमत्वात् बह्वादीनां कृत्रिमा संज्ञा । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति ···यथैव तद्ध्यर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवत्येवमिहापि प्राप्नोति । जानात्यसौ बह्वादीनामियं संज्ञा कृतेति । न यथा लोके तथा व्याकरणे । उभयगतिः पुनरिह भवति । अन्यत्रापि नावश्यमिहैव । कर्तुरीप्सिततमं कर्मेति कृत्रिमा कर्मसंज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति 'कर्मणि द्वितीया' इति कृत्रिमस्य ग्रहणम् कर्तरि कर्मव्यतिहारे इत्यकृत्रिमस्य ।

अथवाचार्यप्रवृत्तिर्ज्ञापयति भवत्येकादिकायाः संख्यायाः संख्याप्रदेशेषु संख्यासंप्रत्यय इति यदयं संख्याया 'अतिशदन्तायाः कन्' (५.१.२२) इति तिशदन्तायाः प्रतिषेधं शास्ति ।···अथवा महतीयं संज्ञा क्रियते । संज्ञा नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम् । अन्वर्थसंज्ञा यथा विज्ञायेत । संख्यायतेऽनया संख्येति । एकादिकया चापि संख्यायते" ॥ इति भाष्ये एतस्याः परिभाषायाः स्पष्टमुल्लेखः प्राप्यते ।

---

मैंने "कृत्रिमाकृत्रिम" न्याय में बीज अभिधा नियामक प्रकरण को माना है । परन्तु किसी ने (कैयट ने) बताया कि संज्ञा शास्त्रों के नियमार्थक होने के कारण यह न्याय निकलता है । उनका कहना है कि पाणिनि ने संज्ञा शास्त्रों के निर्माण के द्वारा यह बताया है कि मेरे शास्त्र में इन संज्ञा शब्दों से (वृद्धि आदि शब्दों से) यही अर्थ (आद् ऐच् ही) लिया जायगा । इस लिए लौकिक (अकृत्रिम) अर्थों की निवृत्ति हो जाती है । इसी कृत्रिम के ग्रहण और अकृत्रिम के अग्रहण रूप नियम से यह फलितार्थ निकलता है कि कृत्रिम और अकृत्रिम में कृत्रिम का ही ग्रहण हो; परन्तु उनका यह कथन ठीक नहीं है; क्योंकि संज्ञा सूत्र हमें वृद्धि आदि पदों के उन अज्ञात अर्थों को बताते हैं जो हमें लोक से ज्ञात नहीं थे । इसलिए वे अगृहीत (अज्ञात) शक्ति के ग्राहक (ज्ञापक) हैं । इसलिए अपूर्व बोधक होने के कारण उनको विधि मानना ही संभव है, वे नियम नहीं हो सकते । यदि वृद्धि आदि पदों की शक्ति

(दुर्गाव्याख्या)

यत्त्वाहुः कैयटपादाः, "बहुगणवतुडति संख्या" १.१.२३ इति सूत्रस्य महाभाष्य—प्रदीपे "न्यायोऽयम् (अयं कृत्रिमाकृत्रिमन्यायः) इत्थं सिद्धः—सर्वथाभिधानयुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते तदा तत्रैव प्रतीतिं जनयति नान्यत्र" तस्यायं भावः—सर्वे सर्वार्थवाचका इति सिद्धान्तानुसारेण गुणादिपदस्यादेङ्वाचकत्वस्यापि सम्भवात् वृद्धिरादैच् १.१.१ अदेङ्गुण इत्यादिसंज्ञाशास्त्राणि नियमार्थानि, मच्छास्त्रे गुणादिशब्देन अदेङादय एव बोधनीयाः, न रूपरसादय इति एतन्नियमफलितार्थकथनमेव कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति न्याय इति तन्न संज्ञाशास्त्राणामगृहीतशक्तिज्ञापकत्वेन नियमार्थत्वासम्भवात् । न च सर्वे सर्वार्थवाचका इति न्यायेन तेषामदेङादिवाचकत्वस्य सिद्धतया अगृहीतज्ञापकत्वं नास्तीति वाच्यम् सर्वार्थवाचकसिद्धान्तस्य स्वीकारो योगिभिरेव कर्तुं शक्यते नास्माभिश्चर्मचक्षुर्भिरिति अस्मदृष्टया अगृहीतज्ञापकत्वे बाधकाभावात् । विशिष्य सर्वशब्दार्थज्ञानं नास्माभिः कर्तुं शक्यते । सामान्यज्ञानं तु न बोधाय कल्पत इति दिक् ।

---

आत् और ऐच् में हमें पहले से ज्ञात होती और फिर "वृद्धिरादैच्" सूत्र के द्वारा पाणिनि उस ज्ञात अर्थ का ज्ञापन करते तो वह नियमार्थक होता । इसी लिए कहा गया है "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति" । ऐसी स्थिति में संज्ञा शास्त्र न नियमार्थक हो सकते हैं और न उनसे "कृत्रिमाकृत्रिम" न्याय निकल सकता है ।

"सर्वे सवार्थवाचकाः" सभी शब्द सभी अर्थों के वाचक होते हैं । यदि यह सिद्धान्त है; तब तो 'वृद्धि शब्द' आत् ऐच् का वाचक बिना "वृद्धिरादैच्" सूत्र के ही हो सकता था फिर उस ज्ञात अर्थ के ज्ञापक 'वृद्धिरादैच्' आदि सूत्रों को नियमार्थक मानना ठीक ही है; इस प्रकार की दलील उचित नहीं है; क्योंकि "सर्वे सर्वार्थवाचकाः" इस प्रकार की स्वीकृति योगियों को दृष्टि से भले ही ठीक हो; हम—जैसा साधारण व्यक्ति यह कभी नहीं मान सकता है कि तात्पर्य रहने पर भी सभी शब्द सभी अर्थों के वाचक हो सकते हैं; क्योंकि हमने आज तक किसी अप्रमत्त व्यक्ति को 'पानी' अर्थ के लिए आग शब्द का प्रयोग करते हुए नहीं देखा है । दूसरी बात यह है कि सामान्य रूप से यह जान लेने पर भी कि सभी शब्द सभी अर्थों के वाचक है, कुछ बनता नहीं है । जब तक कि विशेष रूप से यह न जाना जाय कि इस शब्द-विशेष से यह अर्थ-विशेष लिया जाता है । विशेष रूप में अज्ञात शब्दार्थ न शब्द-प्रयोग के लिए उपयोगी हो सकते हैं और न शाब्द-बोध के लिए । इसलिए "सर्वे सर्वार्थ वाचकाः" के आधार पर संज्ञा शास्त्रों को गृहीतशक्तिज्ञापक मान कर नियमार्थक नहीं सिद्ध किया जा सकता और जब तक उनकी नियमार्थकता सिद्ध न हो जाती; तब तक उन्हें 'कृत्रिमाकृत्रिम' न्याय का बीज नहीं माना जा सकता । सामान्य ज्ञान तो बोधोपयोगी नहीं हो सकता । इस विषय पर (हमने=नागेश ने) मञ्जूषा के लक्षणा प्रकरण में विचार किया है ।

नन्वध्येता शयितेत्यादाविङ्शीङोर्ङित्त्वाद् गुणनिषेधः स्यादत आह—
**कार्यमनुभवन् हि कार्यो निमित्ततया नाश्रीयते ।।११।।**

---

**कार्यमनुभवन् हि कार्यो निमित्ततया नाश्रीयते ।।१०।।**

छिन्नः, छिन्नवान्, भिन्नः भिन्नवानित्यादौ 'पुगन्त' ७.३.८६ इति गुणनिषेधाय प्रवृत्यर्थं रोरवीत्यादौ गुणाय तदप्रवृत्यर्थञ्च क्ङिति च १.१.५ इत्यत्र निमित्तग्रहणं कर्तव्यम्, अथवा तत्र निमित्तार्थकसप्तमी स्वीकर्तव्या । तच्च निमित्तं सकल-

---

उभयगतिरिह भवति "यह स्वीकार करने के कारण ही "ष्णान्ताः षट् (१.१.२४) यह सूत्र चरितार्थ हुआ । अन्यथा 'विप्रुषः' पामानः आदि शब्दों में षट् संज्ञा के निवारण के लिए 'ष्णान्ताः षट्' सूत्र में संख्या की अनुवृत्ति आवश्यक होने के कारण सूत्र का अर्थ होगा षान्त और नान्त संख्या को षट् संज्ञा हो । कृत्रिम संख्या शब्दों (बहुगण डत्यन्त वत्वन्तों) में कोई शब्द ऐसा नहीं है जो षकारान्त हो या नकारान्त । ऐसी स्थिति में इस सूत्र से किसी शब्द को षट् संज्ञा नहीं हो पायेगी । '**उभयगतिरिह भवति**' मानने पर इस सूत्र में अकृत्रिम संख्या के ग्रहण के कारण षट् पञ्च, सप्त आदि में षट् संज्ञा और षड्भ्यो लुक् ७.१.२२ से . जस् और शस् का लुक होता है ।

इति शिवम् ।

—:०:—

**अथ कार्यमनुभवन् हि कार्यो ।।११।।**

'अधि' पूर्वक 'इङ् अध्ययने धातु से तृच् प्रत्यय होने पर 'अध्येता' में इ को "सार्वधातुकार्धधातुकयोः ७.४.५ से गुण का निषेध हो जायगा क्योंकि 'इङ्' में 'ङकार' की इत्संज्ञा होने से यहाँ ङित् है ही । यही हाल शयिता में होगा क्योंकि यह रूप भी शीङ् धातु से तृच् प्रत्यय इट् और शी को "सार्वधातुकार्धधातुकयोः से गुण करने पर ही बनता है । यहाँ भी ङकार की इत्संज्ञा होने 'क्ङिति च' से निषेध प्राप्त है ही ।

यदि यह कहें कि इस शास्त्र में निमित्त पद से सप्तम्यन्त पद बोध्य (जैसे "इन्द्रे च" में इन्द्र शब्द) और पञ्चम्यन्त पद बोध्य (जैसे उदः स्थास्तभ्योः पूर्वस्य में उद् शब्द) लेने की ही प्रथा है । यहाँ शीङ् के ङित् को सप्तम्यन्त पद बोध्यता नहीं है, फिर निषेध क्यों होगा ? इसके उत्तर में समझना चाहिए कि इस शास्त्र में निमित्त पद से नैयायिकों का निमित्त कारण ही नहीं लिया जाता; किन्तु कारण मात्र । समवायि असमवायि निमित्त सभी) लिये जाते हैं । इसी लिए "उर्णुनविषति" यहाँ उर्णु इष ऐसी अवस्था में "सन्यङोः" ६.१.९ इस सूत्र में षष्ठी निर्देश के द्वारा निर्दिष्ट होने पर भी 'सन्' को अर्थात् इष को निमित्त मानकर "द्विर्वचनेऽचि १.१.५९ सूत्र से गुण का निषेध हुआ और नु शब्द को द्वित्व हुआ ।

(दुर्गाव्याख्या)

कारणबोधकं न तु निमित्तकारणमात्रबोधकं विनिगमनाभावात्। तथा च अध्येता शयिता इत्यादौ अधि+इ+ता, शी+ता इत्यवस्थायाम् इङ् अध्ययने शीङ् स्वप्ने इति धात्वो ङित्त्वात् "सार्वधातुकार्धधातुकयोः" ७.३.८४ इति प्राप्तस्य गुणस्य निषेधे प्राप्ते परिभाषामवतारयति नागेशः—कार्यमनु...इति। न च 'त्रसिगृधिक्षिपेः क्नुः" ३.२.१४० इत्यत्र गुणनिषेधार्थकृतक्नुप्रत्ययनिष्ठकित्त्वसामर्थ्येन 'येन नाव्यवधानं तेन व्यवहितेऽपीति' ज्ञापनात् गुणवृद्धिनिमित्तकप्रत्ययेतरहलेकवर्ण-व्यवधानेऽपि निषेध-स्य प्रवृत्तिस्वीकारेण छिन्न इत्यादौ निषेधसंभवादिष्टसिद्धेः रोरवीत्यादौ चान्तरङ्ग-प्रतिषेधदृष्ट्या बहिरङ्गगुणस्या 'सिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयाऽसिद्धत्वेन निषेधाप्राप्त्या गुणस्य बाधायोगान्निशङ्कं प्रवृत्तेश्चेति क्ङिति च १.१.५ इत्यत्र पर-सप्तम्याश्रयणेऽपि न कोऽपि दोष इति अध्येता इत्यादौ च दोषाभावेन परिभाषाया-नावश्यकतेति वाच्यम् ऋधातोः सनि स्मिपूङ्रञ्ज्वशां सनि (७.२.७४) इतीटि ऋ इस इति स्थितौ 'द्विर्वचनेऽचि' १.१.५९ इति निषेधात् पूर्वं गुणाभावे ऋ शब्दस्य द्वित्वे ऋ ऋ इस इत्यत्र पूर्वभागस्याभ्यासत्वे उरत् ७.४.६६ इति अत्वे रपरे हलादिशेषे दीर्घे अ ऋ इस इत्यवस्थायामुत्तरखण्डे ऋकारस्य गुणे रपरे सवर्णदीर्घे षत्वे आरिष् इत्यस्य धातुत्वे लटि तिपि शपि पूर्वरूपे आरिषतीत्यनिष्टरूपापत्तिवारणाय परिभाषायाः आवश्यकत्वात्। परिभाषायामङ्गीकृतायान्तु 'ऋ इ स' इत्यवस्थायां सन्यङोः इत्यस्य षष्ठीत्वात् 'ऋ इस" इति समुदायस्यैव द्वित्वकार्यित्वात्तदन्तर्गतस्य 'इस' इत्यस्योक्तपरिभाषया निमित्तत्वाभावात् 'द्विर्वचनेऽचि' १.१.५९ इत्यस्याप्रवृत्या द्वित्वात् पूर्वं सार्धधातुकार्धधातुकयोः ७.३.८४ इति गुणे 'अरिस' इत्यत्र 'अजादे-द्वितीयस्य" ६.१.२ इति। रिस् इत्यस्य द्वित्वे ऽभ्यासादिकार्ये अरिरिषतीति सिद्धचति।

यद्यपि "कार्यी निमित्ततया नाश्रीयते" इत्येतन्मात्रकथनेनैवारिरिषती-त्यादि सिद्धचति तथापि उर्णुनविषतीत्यादिसिद्धये कार्यमनुभवन्नित्यंशः परिभाषायां निवेश्यते। अन्यथा "सन्यङोः ६.१.९ इत्यत्र षष्ठीनिर्देशात् सन्नन्तस्य द्वित्वकार्यित्वेन इस् इत्यस्य द्वित्वनिमित्तस्यानया निषेधात् 'द्विर्वचनेऽचि' १.१.५९ इति निषेधाप्राप्त्या द्वित्वात् प्राक् गुणेऽवादेशे च कृते नवशब्दस्य द्वित्वेऽभ्यासे उकार-घटितेष्टरूपानुपपत्तिः। "कार्यमनुभवन्नित्यंश" निवेशे कृते तु न दोषः, इह 'नु' शब्द-स्यैव द्वितीयैकाच्त्वात् द्वित्वविषयतया कार्यित्वेन इस् इत्यस्य द्वित्वाविषयत्वेन निमित्तत्वनिषेधाभावात् द्विर्वचनेऽचि १.१.५९ इति निषेधस्य सुस्थत्वात्। परिभा-षेयं कार्यमनुभवत एव कार्यिणो निमित्तत्वाभावं शास्ति। उर्णुनविषतीत्यत्र तु सन् द्वित्वं नानुभवति। अतस्तादृशः सन् 'सन्यङो' रिति षष्ठी निर्देशान्नाममात्रेण कार्यी भवन्नपि निमित्ततयाश्रितो भविष्यत्येव।

**'स्थण्डिलाच्छयितरि व्रते' इति निर्देशश्चास्या ज्ञापकः । ऊर्णुनविषतीत्यादि-सिद्धये कार्यमनुभवन्निति । अत्र हि 'द्विर्वचनेऽचि' इति नुशब्दस्य द्वित्वम् । अन्यथा 'सन्यङोरि' त्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेन इसो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात् ।**

---

'स्थण्डिलाच्छयितरि व्रते' (४.२.१५) इत्यत्र 'शयितरि, इति निर्देशोऽस्या ज्ञापकः : अन्यथा शीङ् धातोस्तृच्प्रत्यये शीःङ कार्यित्वेऽपि निमित्तत्वेनाश्रयणात् ङिन्निमित्तके 'क्ङिति च १.१.५ इति गुणनिषेधे 'शयितरि, इति गुणायादेशविधिरनुपन्नः स्यात् ।

---

यदि यह मानें कि 'क्ङिति च' १.१.५ सूत्र में 'गित्' के साहचर्य से 'ङित्' प्रत्यय ही लिया जायगा; ऐसी स्थिति में अस्य स्त्री ई, अ शब्द से'' पुंयोगादा-ख्यायाम्'' १.४.४८ इस सूत्र से ङीष् यस्येति लोप होने पर ''ई'' शब्द से सैवा चरति इस विग्रह में 'सर्वप्रातिपादिकेभ्यः क्विब्वा वक्तव्यः (नाम धा० प्र०) इस वार्तिक से क्विप् प्रत्यय और उसका सर्वापहार लोप करने पर ई को धातु संज्ञा लट् लकार, तिप् और मध्य में शप् प्रत्यय होकर गुण तथा अयादेश करने से ''अयति'' रूप बना करता है । यहाँ प्रत्यय ङित् है, उस को गुण का निषेध हो जायगा इसलिए परिभाषा बताते हैं—

''**कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते**'' जो कार्यी कार्य का अनुभव करता है उसे निमित्त नहीं माना जाता है । ''स्थण्डिलाच्छयितरि'' ४.२.१५ इस सूत्र में निर्दिष्ट 'शयितरि' यह निर्देश इस परिभाषा का ज्ञापक है। यदि यह परिभाषा नहीं रहती तो 'शयितरि यह निर्देश शयितृ शब्द का सप्तमी एकवचन में शी को गुण निषेध हो जाने पर नहीं बन पाता । पाणिनि ने शयितरि'' इस प्रयोग में गुण किया है । इससे मालूम होता है कि उन्हें 'कार्यी को 'निमित्त' मानना अभीष्ट नहीं था ।

यदि परिभाषा का शरीर इतना ही मानें कि ''कार्यी निमित्ततया नाश्रीयते' और अर्थ करें कि कार्यी को निमित्त नहीं मानना चाहिए तो ऊर्णु नविषति में 'द्विर्वचनेऽचि' से द्वित्व कर्तव्य में गुण-निषेध नहीं होगा । बात यह है कि ऊर्णु धातु से सन् प्रत्यय ''सनीवन्तर्धभ्रस्ज' ७.२.४९ से इडागम 'ऊर्णु इष' ऐसी स्थिति में यहाँ 'सन्यङो ६.१.९ से 'नु' शब्द को द्वित्व और 'सार्वधातुकार्धधातुकयोः ७.३.८४ से गुण प्राप्त होने पर ''द्विर्वचनेऽचि ''१.१.५९ सूत्र से द्वित्व कर्तव्य में गुण का निषेध होता है । इसलिए 'नु' शब्द को द्वित्व होने पर 'ऊर्णुनविषति' यहाँ अभ्यास में उकार का श्रवण होता है । यदि ''कार्यी को निमित्त नहीं माना जाय'' इतना ही परिभाषा का शरीर स्वीकार करें तो ''सन्यङो'' सूत्र से सन्नन्त और यङन्त को द्वित्व विधान करने के

**वस्तुतः समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या। अत एव हिः प्रयुक्तः। स हिस्तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्वम्। 'द्विर्वचनेऽचि' इत्यत्र भाष्ये ध्वनितैषा ।।११।।**

---

वस्तुतस्तु नास्याः परिभाषायाः कृते ज्ञापकान्वेषणव्यग्रता दर्शनीया। समवायिकारणनिमित्तकारणयोर्मिथोभेदस्य सकललोकशास्त्रप्रसिद्धतया परिभाषाया अस्या न्यायसिद्धत्वात्। कारणं त्रिविधम् समवाय्यसमवायिनिमित्तभेदात् इत्थं

---

कारण सन्नन्त के कार्यी होने से 'सन्' कार्यी हो गया; उसे निमित्त नहीं माना और ऐसी स्थिति में द्वित्व के निमित्तीभूत 'अच्' के परे रहते द्वित्व निषेध करने वाले सूत्र "द्विर्वचनेऽचि" की प्रवृत्ति नहीं होने से गुण का निषेध नहीं होगा। इस लिए परिभाषा के शरीर में विशेषण के रूप में "कार्यमनुभवन् हि" का निवेश करना चाहिए। अब कोई दोष नहीं हुआ; क्योंकि "ऊर्णुनविषति" यहाँ 'सन्' द्वित्व का अनुभव नहीं करता है। इसलिए वह 'निमित्त' माना जा सकता है और इसको निमित्त बनाकर "द्विर्वचनेऽचि" सूत्र से निषेध हो जायगा।

'अरिरिषति' में ऋ धातु से सन् प्रत्यय 'स्मिपूङ्—"७.२.७४ से इट् का आगम होने 'ऋ इस्' ऐसी स्थिति में द्वितीय एकाच् 'इस्' को यहाँ द्वित्व प्राप्त होता है। इस तरह यहाँ सन् का अवयव (अरहित सकार) कार्यभागी बनता है। इसलिए यहां 'सन्यङोः' सूत्र द्वारा निर्दिष्ट 'सन्' रूप कार्यी कार्य का अनुभव करने के कारण निमित्त नहीं हो सकता। इसलिए 'द्विर्वचनेऽचि' की प्रवृत्ति नहीं होने के कारण पहले गुण हुआ और फ़िर रिस् शब्द को द्वित्व होने से' अरिरिषति' ऐसा इष्ट प्रयोग बनता है।

वस्तुतः यह आवश्यक नहीं है कि इस परिभाषा को ज्ञापक के द्वारा ही सिद्ध करें यह तो स्वयं सिद्ध है। सभी शास्त्रों और समस्त लोक में यह प्रसिद्ध है कि जो समवायि कारण होता है, वह निमित्त कारण नहीं होता। इसी लिए न्यायशास्त्र में निमित्त कारण की परिभाषा करते हुए लिखते हैं कि "एतदुभयभिन्नं कारणं निमित्तकारणम्" अर्थात् इन दोनों कारणों (समवायि और असमवायि कारणों) से भिन्न कारण को 'निमित्त' कारण कहते हैं। सारा संसार जानता है कि घट का समवायि कारण होने के कारण मिट्टी उसका निमित्त कारण नही है। कुम्भकार निमित्त कारण है तो वह घट का समवायि कारण नहीं है। इस तरह लोक और न्याय तन्त्र आदि के आधार पर ही 'कार्यी' को 'निमित्त' नहीं माना जाना सिद्ध होने के कारण लोक प्रसिद्ध और सकल तन्त्र प्रसिद्ध इस परिभाषा को 'ज्ञापक सिद्धा' मानने में कोई तुक नहीं है। इसी 'प्रसिद्धि' के द्योतन के लिए परिभाषा में "हि" शब्द का प्रयोग किया गया है। वह या यह "हि" कार्यी को 'निमित्ततया' अनाश्रयण में जो कारण है, वह प्रसिद्ध है, यह प्रगट करता है।

निर्दिश्यमानस्यैव स्थाननिरूपितसम्बन्धेन योगः अर्थात् आदेश इति द्वितीयेन षष्ठीस्थाने १.१.४१ इत्यनेन प्रतिपादनात् परिभाषेयं फलति । षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वम् निर्दिश्यमानत्वम् । 'उदः स्थास्तम्भोः' इत्यत्र या षष्ठी, तस्याः प्रकृतिः स्थास्तम्भोरिति तज्जन्यप्राथमिकोस्थितिविषयः स्था भवतीति तस्यैवादेशः सम्पद्यते; नतु अडागमविशिष्टस्य 'यदागम' परिभाषाबोधितस्यास्थेत्यस्य । तस्य षष्ठीप्रकृत्या प्रथममुपस्थितिर्न भवतीति ।

प्राथमिकत्वञ्चात्र 'स्थानिवद्भावसूत्रम्, सवर्णग्राहकतासूत्रम्, तन्मध्यपतितस्तदग्रहणेन गृह्यते; प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इत्यादि शास्त्रतोतिरिक्तशास्त्रसहकाराप्रतीयमानत्वम् । तेन परमा चासौ जरा परमजरा ततः औविभक्तौ परमजरा औ इत्यत्र जराया जरसन्यतरस्याम् ७.२.१०१ इत्यनेन परमरहितस्यैव जरा शब्दस्य जरसादेशः, षष्ठी जराया इत्यत्र वर्तते तस्याः प्रकृतिः जरा तज्जन्यप्राथमिकोपस्थितिविषयः जरा शब्दस्येति तस्यैवादेशप्रवृत्तेः, परमजरा इत्यस्योपस्थितिस्तु येन विधिस्तदन्तस्य १.१.७२ पदाङ्गाधिकारे तस्य च तदन्तस्य च (प० सं० ३०) इति सहकारेण जायतेऽतो न तत्र प्राथमिकत्वम् । निर्जरसौ इत्यत्र निर्जर+औ इतिस्थिते स्थानिवद्भावेन (जर) शब्दस्यापि जरावन्निर्दिश्यमानत्वं तस्य स्थानिवद्भावशास्त्रेणोपस्थितत्वात् तदितरशास्त्रसहकारोपस्थितस्यैव प्राथमिकोपस्थितिविषयत्वव्याघातकत्त्वस्वीकारात् । एवमतिसा इत्यादौ स्त्रीलिङ्गस्यापि तच्छब्दस्य निर्दिश्यमानत्वम् लिङ्गविशिष्टपरिभाषया सिद्ध्यति लिङ्गविशिष्टन्यायेनोपस्थितस्यापि प्राथमिकत्वस्वीकारात् ।

---

'पिब' आदेश होगा, 'प्रतीयमान 'अपा' के स्थान में नहीं। "षष्ठी प्रकृति" सूत्र में स्थित है; उसका स्थान के साथ योग नहीं अभीष्ट है; किन्तु उसके बोध्य का स्थान के साथ योग अभीष्ट हैं; इसीलिए उच्चार्यमाण सजातीय कहा गया है। वृक्षस्तत्र में पदाधिकार के कारण तदन्त विधि होने पर विसर्जनीयान्त को स हो ऐसा अर्थ करने पर सम्पूर्ण "वृक्षः" को सकारादेश प्राप्त हो जाता है; उसके निवारण के लिए भाष्यकार ने 'निर्दिश्यमान' परिभाषा का सहारा लिया है। परन्तु "वृक्षः" में दोबिन्दू के रूप में विद्यमान जो वस्तु हैं; उसे सूत्र में निर्दिष्ट, षष्ठी-प्रकृति "विसर्जनीयस्य" का सजातीय कैसे माना जा सकता, अतः नागेश ने निर्दिश्यमानावयवरूप" कहा है। "निर्दिश्यमानावयवरूप" का तात्पर्य है षष्ठी की प्रकृति से जिसकी सर्वप्रथम उपस्थिति होती है, उसका जो विषय है उसका अवयव। "विसर्जनीयस्य सः" में षष्ठी-प्रकृति से सर्वप्रथम जिस विसर्जनीय की उपस्थिति होती हैं; उसका विषय बिन्दुद्वय रूप है ही।

मूल में **षष्ठ्यन्तम्** लिखा गया है। "**प्रत्ययग्रहणे तदन्तग्रहणम्**" इस परिभाषा (२४) के कारण 'षष्ठी स्थानेयोगा' सूत्र में षष्ठी का अर्थ 'षष्ठ्यन्त' किया जा सकता है। यद्यपि जराया जसन्यतरस्याम् ७.२.१०१ इत्यादि सूत्र में '**जराया**' यह

**न च 'अस्य च्वा' वित्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्। जातिपक्षे दोषाभावात्। किञ्च 'न भूसुधियोः' इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः ॥**

---

अमाला माला भवतीति मालीभवति इत्यादौ अभूततद्भावेऽर्थे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५.४.५० इति च्विप्रत्यये तस्य सर्वापहारलोपे अस्य च्वौ ७.४.३२ इतीत्वं न स्यात्, दीर्घाकारस्य षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वाभावादिति वाच्यम् जातिपक्षाश्रयणेन षष्ठीप्रकृत्या अकारजातेरुपस्थितेरदोषात्। न च व्यक्तिपक्षे दोष इति वाच्यम् तस्मिन् पक्षे दीर्घोकारेकारान्तभूसुधीशब्दयोः एरनेकाचोऽसंयोगपूर्वस्य ६.४.८२ इति प्राप्तस्य यणः न भूसुधियोः ६.४.४५ इति निषेधेन ग्रहणकशास्त्रगृहीतानां ग्रहणकशास्त्रग्राह्यसदृशानाञ्च निर्दिश्यमानतास्वीकारात्।

---

समुदाय षष्ठ्यन्त है, उसका स्थान के साथ योग असंभव है; तथापि षष्ठ्यन्त में अतद्गुणसंविज्ञान बहुव्रीहि मानने से षष्ठी अन्तः परसमीपो यस्य तत् प्रकृतिरूपम् षष्ठ्यन्तम् ऐसा मानने से षष्ठ्यन्त का अर्थ षष्ठी-प्रकृति कर सकने में कोई दोष नहीं होगा। (अतद्गुण संविज्ञान बहुव्रीहि का स्पष्ट विश्लेषण इसी टीका में परिभाषा ७८ के अनुवाद में किया गया है)

'षष्ठी स्थानेयोगा १.१.४९ की पूर्वोक्त व्याख्या क्लिष्ट है। षष्ठी का अर्थ षष्ठ्यन्त करना, फिर उसमें अतद्गुण-संविज्ञान बहुव्रीहि मानना गौरवपूर्ण है इसलिए 'यतः' 'सा' का अध्याहार करना चाहिए। इसतरह 'यतः षष्ठी सा स्थानेयोगा'' जहाँ से (जिस प्रकृति से) षष्ठी की गयी हो, उस षष्ठी-प्रकृति के स्थान के साथ योग (अन्वय) मानना चाहिए, इस तरह के सूत्रार्थ से यह परिभाषा फलित होती है।

तात्पर्य यह है कि द्वितीय '**षष्ठी स्थानेयोगा**'' सूत्र के सामर्थ्य से यह अर्थ होगा कि षष्ठी की प्रकृति के द्वारा जिसकी प्रथम उपस्थिति है; उसके स्थान में आदेश होगा, यदागमा आदि न्याय से जिसकी उपस्थिति होती है; उसकी तो द्वितीयोपस्थिति है। मूल में कथित '**षष्ठ्यन्तम्**' में अन्त पद समीपबोधक है षष्ठी जिसके पर समीप में है; उसे षष्ठ्यन्त कहेंगे। इस तरह षष्ठ्यन्त का तात्पर्य निकलता है षष्ठी प्रकृति।

यदि यह मानें कि षष्ठीप्रकृति के द्वारा जिसकी प्रथम उपस्थिति है; उसे ही आदेश हो तो।'**अस्य च्वौ**'' ७.४.३२ सूत्र में षष्ठी के प्रकृति-भूत 'अ' के द्वारा प्राथमिक उपस्थिति केवल ह्रस्व अकार की है, इसलिए शुक्लीभवति में ईत्व होगा किन्तु शालीभवति और मालीभवति इत्यादि प्रयोगों में जहाँ दीर्घ आकार को ईत्व हुआ करता था; वहाँ ईत्व नहीं होगा; क्योंकि दीर्घ आकारादि की उपस्थिति '**अणुदित् सूत्र**' के बल पर होने के कारण, प्रथमोपस्थिति नहीं है; ऐसा प्रश्न

इयङुवङोर्ङित्वं त्विवर्णोवर्णान्तिश्नुधातुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय ॥ रीङ्‌रिङोर्ङित्वं तु स्पष्टार्थमेव। एतेनेदं ङित्वं वर्ण-ग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तम् ॥

---

नचैवम् "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" ६.४.७७ इति सूत्रे इयङुवङोर्ङित्वं व्यर्थम् इवर्णोवर्णान्तधातुश्नुभ्रुवामियङुवङौ स्त इति सामानाधिकरण्येन व्याख्याने

---

उठता है; परन्तु इसका उत्तर यह है कि अणुदित् सूत्र के अण् ग्रहण का भाष्य-कार ने प्रत्याख्यान कर दिया है और बताया है कि जातिपक्ष के आश्रयण से सकल 'अ' का ग्रहण हो जायगा। इस तरह 'अस्य च्वौ' के अका अर्थ 'अ' जाति होने से अत्वावच्छिन्न की उपस्थिति होगी और 'आ' की भी बिना किसी अन्य शास्त्र की सहायता के उपस्थिति हो जाने के कारण प्रथमोपस्थिति होने से कोई दोष नहीं होगा।

'भुवौ' 'भुवः' 'सुधियौ' 'सुधियः' इत्यादि में "ओः सुपि" ६.४.८३ "एरने-काचः" ६.४.८२ सूत्र से प्राप्त यणादेश का निषेध "न भूसुधियोः ६.४.८५ सूत्र से किया गया हैं, यदि षष्ठी-प्रकृति-जन्य-प्राथमिको-पस्थिति-विषयताश्रय को ही आदेश हो तो "ओः" और 'एः' में षष्ठी प्रकृति 'उ' और 'इ' के द्वारा प्रथमोपस्थित ह्रस्व इकार और ह्रस्व उकार को ही इन दोनों सूत्रो से यण् प्राप्त होगा, भू और सुधी में तो दीर्घ उकार और ईकार हैं, उनकी तो अणुदित् सूत्र के बल से उपस्थिति होगी; अत द्वितीयोपस्थिति वाले ईकार और ऊकार को तो स्वतः ही यण् की अप्राप्ति है। अतः निषेध सूत्र "न भूसुधियोः" व्यर्थ हो जायगा। वह बतायेगा कि ग्रहणक शास्त्र के बल से जिसकी उपस्थिति होती है; उसे भी निर्दिश्य-मान मानना चाहिए। इस तरह व्यक्ति-पक्ष में ज्ञापक के द्वारा दोषाभाव दिखाया गया है।

यद्यपि निर्दिश्यमान-परिभाषा मानने पर 'अचिश्नु" ६.४.७७ सूत्र में "य्वोः" में इकार और उकार ही निर्दिश्यमान हैं; उन्हें ही आदेश होगा; फिर इयङ् और उवङ् में अन्त्यादेश के लिए किया गया ङित्त्व व्यर्थ होजायगा, ऐसा सन्देह होता है; परन्तु वहाँ ङित्व की आवश्यकता इस लिए है कि उसके अर्थ में इवर्णोवर्णान्तश्नुधातु और भ्रू का भी समावेश है। उस समावेश में धातु और भ्रू भी निर्दिश्यमान हैं; उनको सम्पूर्ण स्थान में इय, उव आदेश न होजाय; इस लिए 'ङित्व' करना आवश्यक है।

रीङ् ऋतः ७.४.२७ रिङ् शयग्लिङ्क्षु" ७.४.२८ इत्यादि में तो ङित्त्व के बिना भी निर्दिश्यमान ऋ को आदेश होकर 'पित्रीयति' क्रियात् आदि की सिद्धि हो ही जायगी; इन दोनों में ङित्त्व स्पष्टार्थ किया गया है।

इस प्रकार स्पष्टार्थ किये गये ङित्व को वर्णग्रहण में निर्दिश्यमान परिभाषा की अप्रवृत्ति के लिए ज्ञापक मानना असंगत ही है।

**हयवरट्सूत्रस्थेनायोगवाहानामट्सूपदेशेऽलोऽन्त्यविधिः प्रयोजनम्। वृक्षस्तत्र-नैतदस्ति प्रयोजनं निर्दिश्यमानस्येत्येव सिद्धमिति भाष्येण विरोधात्॥**

---

धातुश्नुभ्रुवामपि निर्दिश्यमानतया प्राप्तस्यादेशस्य निवारणपुरस्सरं ङिच्च १.१.५३ इत्यन्त्यादेशार्थं तस्य साफल्यात्। श्नुधातुभ्रुवामिवर्णोवर्णयोरिति वैयधिकरण्येन व्याख्याने यद्यपि ङित्त्वं व्यर्थमेव तथापि सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम् इति न्यायेन वैयधिकरण्यं न स्वीक्रियते। रीङ् ऋतः'' ७.४.२७ इत्यत्र ''रिङ्शयग्लिङ्क्षु'' ७.४.२८ इत्यत्र च कृतरीङ्रिङो ङित्त्वं स्पष्टार्थम् ऋत एव निर्दिष्टत्वेन तस्यैवादेशसिद्धेः। यत्तु रीङ्रिङोर्ङित्त्वं निर्दिश्यमानपरिभाषाया वर्णग्रहणेऽप्रवृत्तिज्ञापकमित्याहुस्तन्न हयवरट् सूत्रभाष्ये वर्णग्रहणे निर्दिश्यमानपरिभाषाप्रवृत्तिपरकभाष्यविरोधात्। तत्र ह्युक्तम्—''अयोगवाहानामट्सूपदेशेऽलोन्त्यविधिः प्रयोजनम्—वृक्षस्तत्र॥ नैतदस्ति प्रयोजनम्, निर्दिश्यमानस्यादेशा भवन्तीत्येव सिद्धेः''॥ विसर्गस्यापि वर्णत्वेन तत्र निर्दिश्यमानपरिभाषाया अप्रवृत्तौ भाष्ये कृतः तस्याः परिभाषायाः संचारः तयेष्टसिद्धिकथनञ्च विरुद्धे स्याताम्। यदि च विसर्गस्य वर्णत्वाभाव उच्यते अथवा ङिद्ग्रहणेन 'अल्ग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्ति'' रिति ज्ञाप्यते तदा विसर्गस्य वर्णत्वाभावादल्त्वाभावाच्च तद्विषये निर्दिश्यमानपरिभाषाप्रवर्तकेन भाष्येण न कोऽपि विरोध इत्युच्यते चेत्तदा फलाभावादेवोक्तज्ञापनं न स्वीक्रियते। भिद् धातो र्लोटो मध्यमपुरुषैकवचने सिपि ''रुधादिभ्यः श्नम्'' ३.१.७८ इति श्नमि भिनद् सि इति स्थिते'' 'सेर्ह्यपिच्च ३.४.८७ इति सेर्ह्यादेशे 'श्नसोरल्लोपः' ६.४.१११ इति

---

वर्ण ग्रहण में इस परिभाषा की प्रवृत्ति भाष्यकार ने ''वृत्रस्तत्र'' में करायी है 'हयवरट्' सूत्र में भाष्यकार ने कहा—**अयोगवाहों** का-अनुस्वार-विसर्ग, जिह्वामूलीय, उपध्मानीय, यम इनका—अट् प्रत्याहार में उपदेश करने का फल ''वृक्षस्तत्र'' में वृक्षः+तत्र ऐसी स्थिति में ''विसर्जनीयस्य सः'' ८.३.३४ सूत्र से सम्पूर्ण विसर्जनीयान्त पद ''वृक्षः'' के स्थान में प्राप्त 'स'' आदेश ''अलोन्त्यस्य'' १.१.५२ सूत्र से अन्त्य अल् (विसर्ग) को होता है। इस तरह 'अयोगवाह' का अट् में उपदेश करने का फल बताकर भाष्यकार ने कहा कि यह प्रयोजन नहीं माना जा सकता; क्योंकि विसर्ग को 'स' आदेश तो निर्दिश्यमान परिभाषा से सिद्ध है। यदि पूर्वोक्त ङित्व को ज्ञापक मानकर निर्दिश्यमान परिभाषा की वर्णग्रहण में अप्रवृत्ति मानें तो विसर्ग भी वर्ण है; उसके विषय में भाष्यकार का निर्दिश्यमान परिभाषा की प्रवृत्ति दिखाना असंगत हो जायगा। यदि यह कहें कि विसर्ग वर्ण नहीं है, तब भाष्यविरोध तो नहीं आता फिर भी वर्ण ग्रहण में निर्दिश्यमान परिभाषा की अप्रवृत्ति मानने का कोई फल नहीं रहने के कारण ङित्व को ज्ञापक नहीं मानना चाहिए।

**अनया परिभाषया 'येन विधि' रितिसूत्रबोधिततदन्तस्य स्थानित्वाभाव-बोधनं 'यदागमाः' इनि लब्धस्य च। तेन सुपद उदस्थादित्यादिसिद्धिः॥**

---

श्नस्यातो लोपे भिन्द् हि इति स्थिते 'अव्ययसर्वनाम्नामकच् प्राक्टेः' ५.३.६१ इत्यनेन तिङश्चेत्यनुवर्तनात् अकचि भिन्द् हकि इत्ययस्थायां 'हुझल्भ्यो हेर्धिः' ६.४.८७ इति धित्वं न स्यात् 'हकि' शब्दस्य निदिश्यमानत्वाभावात्, 'हे'—रेव षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वादिति शङ्का तु न कार्या "अनाप्यकः" ७.२.११२ इत्यत्र अक इति पर्युदासेन तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति (प०सं० ६०) न्यायग्राहितस्यापि निर्दिश्यमान त्व सूचनात्। अन्यथा अकज्विशिष्टस्य 'इदकम्' इत्यस्ये-दम्पदीयनिर्दिश्यमानत्वाभावात् इदंपदीयनिर्दिश्यमानावयवो य इद् तस्य अनादेश-इत्यर्थकस्य 'अनापि—७.२.११२ इति सूत्रस्याप्राप्त्या 'अक' इत्यस्य वैयर्थ्यं स्यात्। तन्मध्यपतितन्यायग्राहितस्य निर्दिश्यमानत्वस्वीकारे तु साकच्कस्यापीदंपदस्य निर्दिश्यमानत्वेन तद्व्यावृत्तयेऽकग्रहणं चरितार्थम्। न च तत्र 'इदम' इत्यवयवषष्ठी, अतः स्थानषष्ठीविषयिकाया निर्दिश्यमानपरिभाषायाः कथं प्रवृत्तिरिति वाच्यम् 'अवयव' षष्ठीविषयेऽपि तत्प्रवृत्तेः स्वीकृतत्वात्। अतएव साकच्कस्य किमशब्दस्य किमः कः ७.२.१०३ इति कादेशः सिद्ध्यति निर्दिश्यमानत्वाभावादकज्विशिष्टस्य कादेशो न स्यादित्याशङ्क्य किमः क इत्यस्यावृत्या कादेश इत्याकारकः स्वशब्देन्दु-

---

"येन विधिस्तदन्तस्य" सूत्र से जहाँ तदन्त को आदेश प्राप्त होता है—जैसे "निर्जर" सम्पूर्ण को "जराया जरसन्यतरस्याम्" ७.२.१०१ से जराशब्दान्त मानकर जो जरस् आदेश प्राप्त था; यह परिभाषा सम्पूर्ण को (जरा शब्दान्त को) स्थानित्व का अभाव बताती है अर्थात् सम्पूर्ण 'निर्जर' को 'जरस्' आदेश न होकर निर्दिश्यमान को (जरा को) होता है। इसी तरह "यदागमाः" इस परिभाषा के बल से आगम विशिष्ट को जहाँ आदेश प्राप्त होता है, वहाँ भी यह परिभाषा केवल षष्ठी प्रकृति को स्थानी रहने देती है। इसी लिए "अपा" के स्थान में पिब आदेश न होकर केवल 'पा' को होता है, इसलिए "लावस्थायामट्" इस सिद्धान्त के अनुसार लावस्था में अट् करने पर भी 'अपिबत्' बनता है। इसीलिए "सुपदः" और 'उदस्थात्' इत्यादि की सिद्धि हुई। "सुपाद्" शब्द से शस् विभक्ति, भसंज्ञा करने पर "पादः पत्" ६.४.१३० सूत्र से "येन विधिस्तदन्तस्य" के द्वारा तदन्त की उपस्थिति होने के कारण पाद्शब्दान्त भसंज्ञक अंग (सम्पूर्ण सुपाद्) के स्थान में प्राप्त पदादेश को यही परिभाषा सम्पूर्ण के स्थान में नहीं होने देती है; इसलिए केवल निर्दिश्यमान पाद् के स्थान पद् आदेश होने से "सुपदः" बनता है।

'उदस्थात्' में यदागमपरिभाषा के बल से "अस्था" में स्थाशब्दत्व लाकर प्राप्त पूर्वसवर्ण भी नहीं होता है। क्योंकि यह परिभाषा पूर्वसवर्ण का स्थानी 'अस्था' को नहीं बनने देती है, किन्तु स्था मात्र को ही स्थानी स्वीकार करती है। ऐसी स्थिति में 'अ' के व्यवधान से पूर्वसवर्ण की प्राप्ति नहीं होती है।

**अनया च स्वस्वनिमित्तसन्निधापितानाम 'लोऽन्त्यस्य' इत्यादीनां समावेश एव न बाध्यबाधकभावो विरोधाभावात् । नाप्येतयोरङ्गाङ्गिभावः । उभयोरपि परार्थत्वेन तदयोगात् । 'अनेकाल् शित्' इति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते ।।**

---

शेखरग्रन्थविरोधस्तु न शङ्क्यः एतादृशग्रन्थस्य कैयटमतोल्लेखपरत्वात् । अत एव तन्त्रावृत्याश्रयणाददोष इति कैयट इत्यत्र कैयटस्य नाम गृहीतम् । निर्दिश्यमानलक्षणे च स्थानिवत्सूत्रतन्मध्यपतितन्यायातिरिक्तशास्त्रसहकाराग्राह्यस्यैव षष्ठीप्रकृतिजन्य-प्राथमिकोपस्थितिविषयत्वमुक्तम् । येन विधिस्तदन्तस्य १.१.७१ इति सूत्रबोधित-

---

न यह परिभाषा" अलोन्त्यस्य, १.१.५२ आदेः परस्य" १.१.५४ इत्यादि सूत्रों की बाधिका है और न ये सूत्र ही इस परिभाषा के बाधक हैं; क्योंकि इनमें कोई विरोध नहीं है । विरोध रहने पर भी बलवान् दुर्बल का बाधक होता है, यही सिद्धान्त है । इनमें तो मेल है, क्योंकि इनमें एक दूसरे के पूरक हैं । इसलिए अपने अपने निमित्त को देखकर यथासम्भव ये सूत्र और यह परिभाषा दोनों एक जगह समाविष्ट होकर अपना अपना काम परस्पर सहयोग के साथ करते हैं—जैसे "समः सुटि ८.३.५ में निर्दिश्यमान परिभाषा से सम् को प्राप्य 'रु' "अलोन्त्यस्य" के सहयोग से 'म्' को होता है । इसी तरह 'उत्थानम्' में परिभाषा से 'स्था' को प्राप्त पूर्वसवर्ण 'आदेः परस्य' के सहयोग से केवल सकार को होता है । इस सहयोग को देखकर यह भी नहीं मान बैठना चाहिए कि इनमें हमेशा अङ्गाङ्गिभाव (विशेषण विशेष्यभाव) ही रहता है । ऐसा मानने पर यह परिभाषा वहीं प्रवृत्त होगी जहाँ 'अलोऽन्त्यस्य' और आदेः परस्य की प्रवृत्ति की संभावना होगी । ऐसा मानने पर इस परिभाषा की "अनेकाल् शित्सर्वस्य" १.१.५५ इस सूत्र के विषय में प्रवृत्ति नहीं होगी । फिर तो "निजरसौ" में परिभाषा की प्रवृत्ति नहीं होने से दोष हो जायगा । दूसरी बात यह भी है कि ये दोनों परिभाषाएँ हैं, ये विधि के उपकारक माने गये हैं, इनमें परस्पर सम्बन्ध नहीं माना गया है । "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्,' इस न्याय से परार्थ और सम होने के कारण जैसे सेवकों में आपस में सेव्यसेवकभाव नहीं होता; इसी तरह विधिसूत्र के उपकार के लिए दत्तजीवन और समान स्तरवाली इन परिभाषाओं में भी अङ्गाङ्गिभाव नहीं होना ही उचित है । इसी लिए यह परिभाषा 'अलोऽन्त्यस्य' और 'आदेः परस्य' इत्यादि सूत्रों की जहाँ प्राप्ति नहीं है, और 'अनेकाल् शित् सर्वस्य' की प्राप्ति है, वहाँ भी प्रवृत्त होती है । 'निर्जरसौ' में 'निर्जर+औ' ऐसी स्थिति में इस परिभाषा के द्वारा बोधित 'जर' को ही सर्वादेश होता है । अर्थात् यह परिभाषा जिसे 'निर्दिश्यमान' मान कर स्थानी सिद्ध करती है 'अनेकाल् शित् सर्वस्य" सूत्र भी उसी (सम्पूर्ण को) स्थानी घोषित करता है । देखा, दोनों में कितना सामञ्जस्य और कितनी एक वाक्यता है ।

यत्तु 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येतावेव एतद्बाधकाविति तन्न। उदः स्थादिति सूत्रविषयेऽस्याः 'पादः पत्' इति सूत्रे भाष्ये सञ्चारितत्वात्। नाप्येतयोरियं बाधिका। एतयोर्निर्विषयत्वप्रसङ्गादिति"ति विंशते'रिति सूत्रे कैयटः॥

---

तदन्तस्यानया परिभाषया स्थानित्वाभावं बोधयति। तेन सुपदः इत्यादौ पाच्छब्दान्तस्य न पदादेशः; किन्तु सुपाद्घटकपाच्छब्दस्यैव। 'यदागमा' इति परिभाषालब्धस्य चानया स्थानित्वं निवार्यते। तेन उदस्थादित्यत्र न पूर्वसवर्णः, न वा 'अपिबदि'त्यत्र अपाशब्दस्य पाघ्रेति पिबादेशः; किन्तु पाशब्दस्यैव। तत्तत्स्वनिमित्तमाश्रित्य प्रवृत्तानाम् 'अलोऽन्त्यस्य १.१.५२ इत्यादीनां समावेश एव न बाध्यबाधकभावः, विरोधाभावात्, विरोधे हि बलीयसा दुर्बलं बाध्यते इति सिद्धान्तात्। अलोन्त्यस्येत्यस्य निर्दिश्यमानस्यादेशाः भवन्तीत्यनयोः परिभाषयोरङ्गाङ्गिभावोऽपि न स्वीक्रियते विध्युपकाराय जातयोरुभयोरपि परार्थत्वात्, गुणानाञ्च परार्थत्वादसम्बन्धः समत्वादिति सिद्धान्तात्। अङ्गाङ्गिभावस्वीकारे निर्दिश्यमानान्त्यस्याल आदेश इत्यर्थापत्तौ 'अनेकाल्' सूत्रविषये निर्दिश्यमानपरिभाषाया अप्रवृत्तिरापद्येत। परमजरसात्यत्र 'अनेकाल्शित् सर्वस्य' १.१.५५ इत्यनेन सर्वस्य जराशब्दान्तस्याङ्गस्यादेशः प्राप्नोति; निर्दिश्यमानपरिभाषया जरा शब्दस्येति परिभाषयोरनयोर्विरोधाद् बाध्यबाधकभावः स्यादिति न वाच्यम् अनेकाल्शित् १.१.५५ इत्यनेन निर्दिश्यमानस्यैव सर्वस्यादेशः क्रियते। अतः सूत्रेण सर्वस्य यत्स्थानित्वं बोध्यते; तदेतत्परिभाषासमर्पितमेवेत्युभयोः समावेश एवेति विरोधाभावेन बाध्यबाधकाभावात्। यत्तु केचित् 'आदेः परस्य' १.१.५४ 'अलोन्त्यस्य' १.१.५२ इत्येतावेव निर्दिश्यमानपरिभाषाया बाधका-

---

"अनेकाल्शित् सर्वस्य" १.१.५५ के साथ इसका पूर्ण सामञ्जस्य और 'आदेः परस्य' १.१.५४ 'अलोऽन्त्यस्य' १.१.५२ आदि सूत्रों के साथ आंशिक असामञ्जस्य देखकर किसी ने यह सारांश निकाला कि 'आदेः परस्य' और 'अलोऽन्त्स्य' ये दोनों सूत्र ही इस परिभाषा के बाधक हैं; परन्तु उनका यह कथन ठीक नहीं है; क्योंकि ":उदस्थात्" इत्यादि प्रयोग तो 'आदेः परस्य' इस सूत्र के विषय हैं, वहाँ भी इस परिभाषा की प्रवृत्ति 'पादः पत्' इस सूत्र के भाष्य में दिखायी गयी है। 'आदेः परस्य' यदि इस परिभाषा का बाधक होता; तो बाधक के विषय में बाध्य-स्वरूपा इस यरिभाषा का संचार अयुक्त ही होता।

यह परिभाषा भी उन दोनों सूत्रों की बाधिका नहीं है। यदि बाधिका मानें तो दोनों सूत्रों का कोई उदाहरण ही शेष नहीं रह जायगा और वे दोनों सूत्र निर्विषय हो जायेंगे। यह बात "ति विंशतेः ६.४.१४२ इस सूत्र में कैयट ने लिखी है।

**अकज्विषये तु नायं न्यायः स्थानिवद्भावेनैव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात् ॥**

---

वित्याहुस्तन्न आदेः परस्येति सूत्रविषये उदस्थादित्यत्र 'पादः पत्' ६.४.१३० इति सूत्रस्य भाष्ये अस्या निर्दिश्यमानपरिभाषायाः संचारदर्शनात् । तत् सूत्रं यद्यस्या बाधकं स्यात्तदा बाधकसूत्रविषये बाध्यभूतायाः परिभाषायाः संचारोऽयुक्त एव स्यात् नापि तयोःसूत्रयोरियं बाधिका, तथासति तयोर्निर्विषयवं स्यादिति । अतएव तिविंशतेर्डिति ६.४.१४२ इति सूत्रस्य "अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति । निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति ॥ भाष्यस्थं निर्दिश्यमानस्यादेशा भवन्तीति प्रतीकमादाय कैयटः प्राह—नानेन परिभाषाव्यापारः कथ्यते, नहि निर्दिश्यमानपरिभाषालोन्त्यस्यादेः परस्येतयोर्बाधिकैतयो र्निर्विषयत्वप्रसङ्गादिति" ।

इयं परिभाषावयवषष्ठीविषयेऽपि प्रवर्तते तत् फलमतिस्य इत्यत्र त्यदस्तकारस्य निर्दिश्यमानत्वेन 'तदोः स सावनन्त्ययोः' ६.२.१०६ इतिसत्वमुक्तमेव ! 'अतित्वम्' 'अतियूयम्' इत्यादौ निर्दिश्यमानयुष्मदवयवमपर्यन्तस्यैव त्वयूयादयो नतु सोपसर्गावयवमपर्यन्तस्य, तस्य निर्दिश्यमानत्वाभावेनानया वारणात् । परिभाषेयं पादः पत् ६.४.१३० इत्यत्र, षष्ठीस्थानेयोगा १.१.४९ इत्यत्र च सूत्रे महाभाष्ये स्पष्टा ।

तथाहि—पादः ६.४,१३० इति सूत्रस्थं भाष्यमित्थमस्तिः—

"पाद उपधाह्रस्वत्वम् (वा० १) पाद उपधाह्रस्वत्वं वक्तव्यम् ॥ द्विपदः पश्य आदेशे हि सर्वादेशप्रसंगः वा० आदेशे हि सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत 'येन विधिस्तदन्तस्येति । तर्हि वक्तव्यम् ? न वा वक्तव्यम् । किं कारणम् । निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा कर्तव्या । कः पुनरत्र विशेषः' एषा वा परिभाषा क्रियेत । उपधा

---

यह न्याय अकच् के विषय में प्रवृत्त नहीं होता अर्थात् इस परिभाषा के बल से अकच् विशिष्ट को स्थानित्व की व्यावृत्ति नहीं होती। इस तरह निर्दिश्यमानत्व के लक्षण में जैसे 'अणुदित् सवर्णस्य' सूत्रातिरिक्तत्व का निवेश करते हैं; उसी तरह तन्मध्य-पतितन्यायातिरिक्तत्व का भी निवेश करना चाहिए। बात यह है कि जैसे 'स्थानिवद् भाव' होने पर आदेश में स्थानित्व की बुद्धि उत्पन्न हो जाती है, और आदेश को स्थानी समझकर ही कार्य हो जाता है, वैसे ही **तन्मध्यपतितस्तद्ग्रहणेन गृह्यते**" अर्थात् शब्द विशेष के बीच में आये हुए का भी उस शब्द के ग्रहण से ग्रहण होता है, इस न्याय से अकज् विशिष्ट "सर्वक" में सर्व शब्द की बुद्धि उत्पन्न होने से सर्व-शब्द के लिए प्रयुक्त कार्य सर्वक से होकर 'सर्वकस्मै' इत्यादि रूप सिद्ध हो जायगा। इसी लिए अकच्विशिष्ट किम् (ककिम्) शब्द को "किमः कः" से कादेश होकर "कः" 'कौ' 'के' इत्यादि रूप बनते हैं।

इयञ्चावयवषष्ठीविषयेऽपि । अत एव 'तदोः सः सौ' इति सत्वम् अतिस्य इत्यत्रोपसर्गतकारस्य न । निर्दिश्यमानयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयो न त्वतियूयमित्यादौ सोपसर्गादिघटमपर्यन्तस्येति बोध्यम् ॥

'पादः पदि'तिसूत्रे षष्ठी स्थाने' इति सूत्रे च भाष्ये स्पष्टैषा ॥१३॥

---

ह्रस्वत्वं वोच्येत । अवश्यमेषा परिभाषा कर्त्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि ॥ ......उदःपूर्वत्वे प्रयोजनम् उदस्थाताम् । अटि कृते साट्कस्य पूर्वसवर्णः प्राप्नोति । उदः स्थास्तम्भोरिति । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति । अटा व्यवहितत्वात् । सा तर्ह्येषा परिभाषा कर्तव्या । न कर्त्तव्या । उक्तं षष्ठी स्थाने योगस्य वचने प्रयोजनं षष्ठ्यन्तं स्थानेन यथा युज्येत, यंतः षष्ठ्युच्चारितेति ।

एवमेवास्या उल्लेखः—षष्ठी स्थानेयोगा १.१.४९ इतिसूत्रस्य भाष्येपि दृश्यते तथाहि—न तर्हीदानीमयं योगो वक्तव्यः । किं प्रयोजनम् षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता । किं कृतं भवति । निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा न कर्तव्या भवतीति । अत्र कैयटः—षष्ठीति षष्ठ्यन्तं गृह्यते । तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते । न तु प्रतीयमानमित्यर्थः इत्यादि...आह

॥इति शिवम्॥

---

यह परिभाषा केवल स्थान षष्ठी के प्रदेश (विषय) में ही प्रवृत्त नहीं होती; किन्तु अवयव षष्ठी के विषय में भी प्रवृत्त होती है। इस लिए 'तदोः सः सावनन्त्ययोः ७.२.१०६ इस सूत्र के विषय में भी परिभाषा की प्रवृत्ति हुई । त्यदादि में पठित शब्दों के या त्यदाद्यन्त शब्दों के अवयवी-भूत जो तकार और दकार हैं वे यदि अन्त्यभिन्न हों तो उन्हें सकारादेश होता है, सुविभक्ति के परे रहते। यहाँ षष्ठी के अवयवावयविभावसम्बन्ध के द्योतक होने पर भी 'त' और 'द' को—निर्दिश्यमान को—षष्ठी प्रकृति को—सकारादेश की स्थानिता इसी परिभाषा की कृपा से प्राप्त हुई । 'अतित्यत्' शब्द से पुंलिङ्ग सु में अत्व और पररूप करने पर निष्पन्न 'अतित्य' यहाँ 'त्य' के त को सकारादेश होता है, उसी तरह त्यदादिशब्दान्त 'अतित्यत्'' के अवयवीभूत अति के 'त' को सकारादेश नहीं होता; क्योंकि वह त्यदादि का अवयवीभूत 'त' कार नहीं है ।

अवयव षष्ठी जहाँ है; वहाँ भी इस परिभाषा की प्रवृत्ति होने का दूसरा फल यह हुआ कि "यूयवयौ जसि" ७.२.९३ इत्यादि सूत्रों से निर्दिश्यमान युष्मदस्मद के अवयवीभूत 'मपर्यन्त' को ही 'यूय' 'वय' आदि आदेश हुआ; अतियूयम् इत्यादि में सोपसर्ग युष्मद के मपर्यन्त को यूय आदेश नहीं हुआ ।

यह परिभाषा 'पादः पत्' ६.४.१३० और षष्ठी स्थाने योगा" १.१.४९ सूत्र के भाष्य में स्पष्ट रूप से प्रतिपादित है ।

**ननु चेतेत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारोऽपि स्यादत आह—**

**यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥१४॥**

---

यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः—१४

चिधातोस्तृच्प्रत्यये चि+तृ इति स्थितौ 'सार्वधातुकार्धधातुकयोः' ७.४.८४ इति गुणे चेतृ इत्यस्य कृदन्ततया प्रातिपदिकत्त्वेन सौ अनङि चेतन् स् इति स्थिते उपधायाः "सर्वनामस्थाने चासम्बुद्धौ' ६.४.८ इति दीर्घे हल्ङ्यादिलोपे चेतेति सिद्धयति । अत्र प्रमाणत आन्तर्यान्मात्राद्वयन्यूनकालिकस्य ह्रस्वेकारस्याकारः गुणः कथं नेति चेन्न "यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीय इति परिभाषा-

---

पादः पत् ६.४.१३० सूत्र के भाष्य में वार्तिककार ने कहा कि इस सूत्र से उपधा को ह्रस्व करके "द्विपदः" पश्य में द्विपदः की सिद्धि करनी चाहिए । आदेश मानने पर सम्पूर्ण द्विपात् को पदादेश हो जायगा; क्योंकि 'पदादेश' 'अनेकाल्' आदेश है । इस पर भाष्यकार ने बताया कि 'उदस्थात्' इत्यादि की सिद्धि के लिए की गयी निर्दिश्यमान परिभाषा से ही दोष का निवारण हो जायगा । इसलिए पदादेश ही मानना चाहिए ।

षष्ठी स्थाने १.१.४९ सूत्र में भाष्यकार ने कहा कि यह योग (सूत्र) अवश्य करना चाहिए; क्योंकि इसको नियमार्थक मानने से यह अर्थ होगा कि जिस से षष्ठी की गयी हैं; उससे बोध्य के स्थान में ही आदेश हो । इस तरह निर्दिश्यमान परिभाषा वचन के रूप में नहीं माननी पड़ती है । किन्तु वह इसी से फलितार्थ के रूप में निकल पड़ती है ।

कैयट ने भी कहा कि इस सूत्र के नियमार्थ होने के कारण षष्ठयन्त ही निर्दिश्यमान होकर स्थान के साथ योग प्राप्त करेगा, षष्ठयन्त-द्वारा प्रथम बोध्य को आदेश होगा, प्रतीयमान को नहीं ।

॥ इति शिवम् ॥

**यत्रानेकविधम्—बलीय इति ॥१४॥**

चेता में 'चि' धातु से 'तृच्' प्रत्यय करने पर "सार्वधातुकार्धधातुकयोः" ७.३.८४ से इकार के स्थान में जैसे स्थान साम्य के कारण एकार गुण होता हैं; वैसे ही मात्रासाम्य के कारण अकार भी गुण होने लगेगा । किसी एक की साधक या बाधक युक्तियों के अभाव में दोनों पर्याय रूप में होने लगेंगे; इस दोष के निवारण के लिए कहते हैं—

"यत्रानेकविधिमान्तर्य्यं तत्र स्थानत आन्तर्यं बलीयः"

जहाँ आदेश के नियामक के रूप में अनेक सादृश्य की प्रसक्ति हो; वहाँ स्थानतः आन्तर्य (सादृश्य) को बलवान् मानना चाहिए ।

**अनेकविधं स्थानार्थगुणप्रमाणकृतम् ।।**

आन्तर्य (सादृश्य) अनेक प्रकार के होते हैं—(१) स्थानकृत आन्तर्य (२) अर्थकृत आन्तर्य (३) गुण कृत आन्तर्य और (४) प्रमाण कृत आन्तर्य ।

(१) **स्थान कृत-आन्तर्य** जैसे "सुध्युपास्यः" में तालु स्थान वाले इकार के स्थान में तालुस्थान वाला यकार (यण्) हुआ ।

(२) "तृज्वत् क्रोष्टुः" ७.१.९५ सूत्र केवल इतना ही कहता है कि क्रोष्टु शब्द के स्थान में तृज्वत् रूप हो । तृच् प्रत्ययवाले अनेक रूप 'दातृ' 'श्रोतृ' आदि कोई भी आदेश हो सकता था । परन्तु गीदड़ अर्थ-वाची 'क्रोष्टु शब्द के स्थान में गीदड़ अर्थ वाची तृज्वद्रूप क्रोष्टृ ही होता है । यह **अर्थ-कृत आन्तर्य** की देन है ।

(३) **गुण-कृत आन्तर्य** का उदाहरण है "वाग्घरिः" । गुण का यहाँ तात्पर्य है—बाह्य-प्रयत्न । वाक्+हरिः में 'ह' के स्थान में पूर्व सवर्ण के रूप में क, ख, ग, घ चारों की प्राप्ति हुई । क और ग यद्यपि ह की तरह संवार, नाद और घोष प्रयत्न वाले हैं, तथापि ये अल्पप्राण हैं और ह महाप्राण । इसलिए पूर्वसवर्ण के रूप में 'क' और 'ग' नहीं होंगे । 'ख' यद्यपि 'ह' की तरह महाप्राण है; परन्तु उसके विवार, श्वास और अघोष 'प्रयत्न' 'ह' के प्रयत्नों के विपरीत हैं; क्योंकि हकार के प्रयत्न सम्वार, नाद और घोष हैं । इस तरह विचार करने पर हकार का घकारादि वर्ग-चतुर्थ के साथ जैसा गुण (बाह्य प्रयत्न) कृत साम्य है; वैसा अन्य अक्षरों के साथ नहीं है; क्योंकि घ और ह दोनों के बाह्य प्रयत्न संवाद, नाद, घोष और महाप्राण समान हैं । इसलिए वाग्+हरिः में पूर्वसवर्ण घकार हुआ । तत्+हितम्=में तवर्ग का चतुर्थ धकार और अज्झीन में चवर्ग का चतुर्थ झकार ।

(४) **प्रमाण कृत सादृश्य का तात्पर्य** है काल-कृत सादृश्य जैसे 'अदसोऽसे-र्दादु दोमः' ८.२.८० इस सूत्र से अदस् शब्द से पुल्लिङ्ग में औ विभक्ति में अत्वादि करने तथा वृद्धि करने पर 'अदौ' यहाँ द्विमात्राकालिक स्थानी औ को दीर्घ ऊ होने से और दकार को मकार होने पर "अमू" यह रूप बनता हैं; किन्तु "अमुया" में "अदया" ऐसी स्थिति में ह्रस्व-अकार रूप स्थानी के स्थान में ह्रस्व उकार ही होता है । इस तरह "अदसोऽसेः" इससे मात्राद्वयन्यूनकालिक होने के कारण ह्रस्व के स्थान में ह्रस्व उकार की और द्विमात्रिक होने के कारण दीर्घ के स्थान में दीर्घ ऊकार की व्यवस्था की जाती है ।

इस प्रकार व्याकरण में किसी के स्थान में आदेश करते समय पूर्वनिर्दिष्ट आन्तर्य देखे जाते हैं ।

"चेता" में प्रमाण-कृत आन्तर्य से 'अकार' गुण प्राप्त हुआ और स्थान कृत आन्तर्य से एकार गुण प्राप्त हुआ; वहाँ इस परिभाषा ने स्थान-कृत सादृश्य को प्रमाण कृत आन्तर्य से बलवान् बताया । इस लिए स्थानकृत आन्तर्य देख कर एकार गुण हुआ ।

अत्र मानं षष्ठी स्थाने इत्यत एकदेशानुवृत्त्या स्थाने ग्रहणेऽनुवर्तमाने पुनः 'स्थानेऽन्तरतमः' इमि सूत्रे स्थानेग्रहणमेव। तद्धि तृतीयया विपरिणमय्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम्। तमब्-ग्रहणमेवानेकविधान्तर्यसत्तागमकम्। स्थानत आन्तर्यम् 'इको यणची'त्यादौ प्रसिद्ध-मेव॥ अर्थतः 'पद्दन्न' इत्यादौ। स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्ताद्यद-र्थाऽभिधानसमर्थो यः स तस्या देश इति तत्समानार्थतत्समानवर्णपादादीनां ते। 'तृज्वत्क्रोष्टुरि'ति च॥ गुणतो वाग्घरिरित्यादौ॥ प्रमाणतः 'अदसोऽसेरि' त्यादौ॥ 'स्थानेऽन्तरम'सूत्रे भाष्ये स्पष्टैषा॥१५॥

---

ङ्गीकारात्। अत्र प्रमाणं षष्ठी स्थानेयोगा १.१:४९ इत्यत एकदेशानुवृत्तेः स्थाने इत्यनुवर्तमाने पुनः स्थानेऽन्तरतमः १.१.५० इत्यत्र स्थानेग्रहणमेव। तद्धि स्थाने-नेति तृतीयया विपरिणमय्य वाक्यभेदेन सम्बद्ध्यते। तथाहि—स्थानेऽन्तरतम इत्यत्र अन्तरतम इत्येकं वाक्यं तच्च पूर्वं पठनीयम्। स्थाने इति परं पाठ्यम्। तत्र पूर्व-स्मिन् वाक्ये स्थाने इत्यनुवर्त्य प्रसङ्गे इति तदर्थं मत्वा प्रसङ्गे सति सदृशतम आदेशो भवतीत्यर्थः कार्यः। द्वितीये च स्थाने इति वाक्ये स्थाने इत्यनुवृत्तिसहितमन्तरतम इति पदमनुवर्तनीयम् निर्दिष्टं स्थाने इति च तृतीयया विपरिणमनीयम्। ततः प्रसंगे सति स्थानेन स्थानघटितधर्मेण सदृशतम इत्यर्थः। तथाच पूर्ववाक्येनैव सिद्धे उत्तरवाक्यं व्यर्थं सञ्ज्ञापयति सति सम्भवे स्थानेनैव सदृशतम इति अर्थादनेक-विधेषु सादृश्येषु स्थानकृतं सादृश्यं बलवद् भवतीति तेनेयं परिभाषा फलिता। आन्तर्यं ह्यनेकविधम् स्थानार्थगुणप्रमाणकृतत्वात्। एषु स्थानकृतार्थकृतगुणकृत-प्रमाणकृतेषु चतुर्विधेषु आन्तर्येषु स्थानकृतमान्तर्यं सर्वेभ्यो बलवद् भवति। अतः चेता इत्यादौ प्रमाणकृतेनान्तर्येण प्राप्तमकार गुणं बाधित्वा स्थानत आन्तर्यादेकार एव गुणो भवति। इकारैकारयोस्तालुस्थानकृतसादृश्यस्य सत्त्वात् इचुयशानां तालु एदैतोः कण्ठतालु इति स्मरणात्।

---

इस परिभाषा में 'स्थानेऽन्तरतमः' १.१.५० सूत्र का स्थाने ग्रहण प्रमाण है। 'षष्ठी स्थानेयोगा' १.१.४९ इस सूत्र से 'स्थाने' इस एक देश में स्वरितत्व प्रतिज्ञा मानने से स्थाने की अनुवृत्ति हो जाती; पुनः 'स्थानेऽन्तरतमः' में जो स्थाने ग्रहण किया है, वही इस परिभाषा में प्रमाण है। तात्पर्य यह है कि 'स्थानेऽन्तरतम' इस सूत्र में वाक्यभेद करके 'अन्तरतमः' इस वाक्य को पहले पढ़ेंगे और "स्थाने" को बाद में द्वितीय-वाक्य के रूप में पढ़ेंगे। पूर्ववाक्य में 'षष्ठी स्थाने' से 'स्थाने' की अनुवृत्ति करेंगे; "प्रसंगे" उसका अर्थ मानेंगे। पूर्व वाक्य का इस तरह अर्थ होगा; प्रसङ्ग रहने से सदृशतम आदेश हो। इस तरह 'इ' के स्थान में यकार और 'उ' के स्थान में वकार के रूप में यण् की सिद्धि हो जायगी। द्वितीय वाक्य 'स्थाने' में पूर्व वाक्य से 'स्थाने' और अन्तरतमः इन दोनों पदों की अनुवृत्ति की जायगी। सूत्र में विद्यमान 'स्थाने' को 'स्थानेन' का

'अन्तरतम' इत्यत्र तमब्ग्रहणमेव वाक्यभेदज्ञापनमुखेनानेकविधान्तर्यसत्ताऽऽदेशनियामिकेत्यत्र गमकम्। यद्येकमेव वाक्यं मत्वा स्थाने इत्यवृत्तस्य स्थानेनेत्यर्थं कृत्वा प्रसंगे सति स्थानघटितधर्म्मेणान्तरतमो भवतीत्येवार्थः क्रियेत; तर्हि 'तमब् ग्रहणं' व्यर्थं स्यात्। न च तमब्ग्रहणमान्तर्य्येऽतिशयत्वद्योतनायास्ताम्, अतिशायने तमबिष्ठनौ ५.३.५५ इति सूत्रेण तस्यातिशयने विधानात् तेन लाकृतिरित्यादौ लृ-तु-लसानां दन्ताः, वकारस्य दन्तोष्टम् इति लृकारवकारयोर्दन्त्यतया साहश्ये सत्यपि लृकारस्य स्थाने वकारो यण् न भवति किन्तु दन्त्यमात्रतयातिशये न तुल्यो लकार एवेति वाच्यम् एवं सति समानं स्थानं यस्येत्यर्थकं सस्थानमित्येव सिद्धेऽन्तरग्रहणसामर्थ्यादतिशयस्य तादृशस्य लाभसम्भवात्। वाक्यभेदे स्वीकृते तु पूर्ववाक्यस्य प्रसंगे सति सदृशतमो भवतीत्यर्थेनार्थगुणप्रमाणकृतसदृशानां विधानायान्तरग्रहणस्य चारितार्थ्येन अन्तरग्रहणसामर्थ्यादतिशयार्थस्य लाभासंभवात्तल्लाभार्थं तमब्ग्रहणं चरितार्थम्। इत्थं वाक्यभेदज्ञापनमावश्यकम्। वाक्यभेदज्ञापने जातेऽर्थत एवानेकविधान्तर्यस्यादेशनियामकत्वलाभः। तच्चान्तर्यं चतुर्विधमेव यद्गृह्यते अर्थकृतं गुणकृतं प्रमाणकृतं स्थानकृतञ्चेत्यत्र भाष्यग्रन्थ एव साक्षी; स्थानकृतं तु सूत्रप्रामाण्येनापि शक्यते ग्रहीतुम्। स्थानकृतमान्तर्यम्—इकोयणचि ६.१.७७ इत्यत्र। दध्यत्रेत्यत्र तालुस्थानिन इकारस्य तालुस्थानी यकारः। अर्थत आन्तर्यस्योदाहरणं पद्दन्नोमास् ६.१.६३ इति। अत्र हि पद् दत् नस् मास् इति केवलमादेशा एव पठिताः शसादौ विभक्तौ परे विधीयमानाः पद् नस् मासादयः आदेशाः केषामित्यनियमेऽर्थत आन्तर्यात् स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्ताच्च तत्समानार्थक-तत्समानाक्षरकाणां पाद-दन्त-नासिका-मासादीनामेव त आदेशाः तेषामेव सदृशतमत्वात्। चरणरदनघोणादीनान्तु न स्थानिता तेष्वर्थसाम्यलाभेऽपि ध्वनिसाम्याभावेनातिशयसाम्याभावात्। तेनार्थत इत्यस्यार्थविशिष्टशब्दस्वरूपत इति तात्पर्यम्। एवञ्चाङ्घ्रिवाचकत्वे सति पकारदकारघटितत्वाद् पदादेशस्य सदृशतमः स्थानी पादशब्दः; रदनत्वे सति दकारनकारघटितत्वाद्दादेशस्य सदृशतमः स्थानी दन्तः, मासवाचकत्वे सति मकारसकारघटितत्वान्मासादेशस्य सदृशतमः स्थानी मासशब्दः, घोणावाचकत्वे सति नकारसकारघटितत्वं नसादेशनासिकास्थानिनोः साहश्यम्; मानसवाचकत्वे सति हकारदकारघटितत्वाद् हृदादेशस्य स्थानी हृदयशब्दः, इत्थं निशा-

---

समानार्थक मानेंगे। इस तरह अर्थ होगा प्रसङ्ग रहने पर स्थान घटित धर्म के साथ जो सदृशतम होगा; वही आदेश होगा। पूर्ववाक्य से ही अन्य सादृश्य का भी ग्रहण संभव था ही; उत्तर वाक्य व्यर्थ होकर नियमार्थक बनेगा कि स्थान कृत सादृश्य ही लिया जायगा; अन्य नहीं। अन्तरतम में 'तमप्' ग्रहण किया गया है; वह अनेक में एक को अतिशय बताने के लिए आता है। इस तरह सिद्ध हुआ कि जहाँ अनेक विध आन्तर्य (सादृश्य) हो वहाँ स्थानकृत आन्तर्य अतिशय याने बलवान्

शब्दादन्यत्र सर्वत्र तत्तदर्थवाचकत्वे सति तत्तदादेशनिष्ठादिमव्यञ्जनद्वयघटित्वमेव तत्तदादेशस्य सादृश्यसम्पादकम्। यद्यपि निशानिशोः स्थान्यादेशयोरपि रात्रिवाचकत्वे सति नकारघटितत्वमस्त्येव तथाचात्रापि पूर्वोक्तं सादृश्यसम्पादकं दृश्यते; तथापि तादृशसादृश्यस्य निशीथिनीशब्देऽपि सत्वात् तादृशस्य पूर्वोक्तस्य धर्मस्यात्र सादृश्यसम्पादकत्वं स्वीकर्तुं न शक्यते। अतः रात्रिवाचकत्वे सति थकाराघटितत्वे सति नकारशकारघटितत्वादिह निशादेशस्य सदृशतमः स्थानी निशाशब्द इति स्वीक्रियते। इत्थमत्र तत्तदर्थवाचकत्वे सति तत्तदादेशघटकादिमव्यञ्जनद्वयघटितत्वे सति थकाराघटितत्वस्य सादृश्यसम्पादकत्वं स्वीकार्यम्॥ अथ पदन्नोमासित्युदाहरणं स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठे एव सम्भवति, तत्रैव पाठे आदेशस्यान्तरतमे स्थाने आदेशो भवतीत्यर्थस्वीकारसम्भवात्। किन्तु सप्तम्यन्तपाठस्वीकारे सुध्युपास्य इत्यादौ दीर्घेकारस्य यकारादेशो न स्यात् मात्राद्वयन्यूनकालिकह्रस्वेकारघटिते दध्यत्रेत्यादौ सूत्रस्य चरितार्थात् मात्राद्वयन्यूनकालिकस्य यकारादेशस्यान्तरतमः स्थानी ह्रस्वेकार एवेकि, न तु दीर्घेकारो मात्राद्वयकालिकः। अतएव तत्र प्रथमान्तपाठः 'स्थानेऽन्तरतम' इत्येव स्वीकृतः; तथाच स्थानस्यान्तरतम आदेशो भवतीति तात्पर्ये दीर्घेकारस्य यण्यन्तरतम यकारोस्त्येवेति न दोषः। नचात्र पक्षे चतुर्मुख इत्यस्य स्थानिनो रेफस्यान्तरतमो ञमि णकारादेशः प्राप्नोति, सप्तम्यन्तपाठे तु आदेशस्यान्तरतमे स्थानिनि सत्यादेशो भवतीत्यर्थे आदेशस्य णकारस्यान्तरतमः स्थानी मूर्धस्थानस्पर्शप्रयत्नवान् टवर्गः न तु केवलं मूर्धस्थानी रेफ इति प्रथमान्तपाठः कथं सिद्धान्तपक्ष इति वाच्यम् 'यरोऽनुनासिकेऽनुनासिको वा' ८.४.४५ इत्यत्र "अनुस्वारस्य ययि परसवर्णः ८.४.५८ इति सूत्रस्थसवर्णपदमपकृष्य सवर्णस्यानुनासिकस्य विधानेन रेफस्य केनापि वर्णेन सह सावर्ण्याभावेनादोषात् प्रथमान्तपाठस्य निर्दुष्टत्वात्। अतएवोक्तम् 'हयवरट्' इतिसूत्रस्य भाष्ये रेफोष्मणां सवर्णा न सन्तीति। इत्थं प्रथमान्तपाठ—पक्षे पद्न्नोमासित्युदाहरणमर्थंत आन्तर्यस्य न संभवतीति किमुदाहरणमिति चेच्छ्रूयताम्—तृज्वत् क्रोष्टुः ७.१.९५ इत्येवोदाहरणम्। अत्र क्रोष्टुशब्दस्तृजन्तशब्दरूपं लभत इत्यर्थे शृगालवाचकत्वेन वर्णतुल्यत्वेन च सदृशतमः क्रोष्टृशब्द एव क्रोष्टुशब्दस्याने आदेशो जायते। नचात्र स्थानषष्ठ्यभावात् स्थान्यादेशभाव एव नास्तीति कथं स्थानेऽन्तरतम इत्यस्य प्रवृत्तिरितिवाच्यम् रूपातिदेशस्थले सर्वत्रागत्या स्थानषष्ठीस्वीकारात्। अन्यथा क्रोष्टुक्रोष्टृ इत्युभयोः श्रवणापत्तिः।

---

होता है। इस तरह यह परिभाषा सिद्ध हो गयी। परिभाषा में "**स्थानतः**" में तसि प्रत्यय तृतीयार्थ में है। इसलिए उसका अर्थ है "स्थानेन"। स्थानकृत आन्तर्य देखकर जहाँ आदेश होता है उनमें 'इकोयणचि' का उदाहरण बहुत प्रसिद्ध हैं। वहाँ इक् इ, उ, ऋ, लृ चारों के स्थान में यण् (य, व, र, ल,) चारों प्राप्त होने पर तालु आदि स्थान कृत सादृश्य के कारण इ को य और उ को व ऋ को र तथा लृ को ल आदेश होता है।

**गुणकृतम्** अर्थात् बाह्यप्रयत्नकृतमान्तर्यं यथा वाग्घरिः इत्यादौ । अत्र हि घोषवतो नादवतो महाप्राणस्य संवृतकण्ठयस्य च तादृशो वर्गचतुर्थो धकार एवादेशः झयो होऽन्यतरस्याम् ८.४.६२ इत्यनेन । **प्रमाणं** मात्राकालः तत्प्रयुक्तमान्तर्यम् "अदसोऽसेर्दादुदोमः' ८.२.८० इत्यत्र । अतएव अमू इत्यत्र अदौ इतिस्थितौ दात्पर-स्यौकारस्य दीर्घत्वाद् द्विमात्रिकत्वेन द्विमात्रिक दीर्घ एव ऊकारः । अमुया इत्यत्र च अदया इति स्थिते दात् परस्य मात्राद्वयन्यूनकालिकस्य ह्रस्वस्याकारस्य तथाभूतः ह्रस्व एवोकारः ।

एषा परिभाषा स्थानेऽन्तरम १.१.५० इति सूत्रस्य महाभाष्ये प्राप्यते स्पष्टतया तथाहि—"अथ स्थान इति वर्तमाने पुनः स्थानग्रहणं किमर्थम्? यत्रानेकविध-मान्तर्यं तत्र स्थानत आन्तर्यं बलीयो यथा स्यात्॥ किं पुनस्तत् चेता स्तोता। प्रमाणतोऽकारो गुणः प्राप्नोति, स्थानत एकारौकारौ। पुनः स्थानग्रहणादेका-रौकारौ भवतः॥ अथ तमब्ग्रहणं किमर्थम्?॥ झयो होन्यतरस्याम् (८.४.६२) इत्यत्र 'सोष्मणः सोष्माणः' इति द्वितीया प्रसक्ता, 'नादवतो नादवन्त' इति तृतीयाः प्रसक्ताः तमब्ग्रहणाद्ये सोष्माणः नादवन्तश्च ते भवन्ति चतुर्थाः । वाग्घसति त्रिष्टुब्भसति ॥

अत्र कैयटः यत्रानेकमिति स्थानग्रहणेऽनुवर्तमाने वाक्यभेदः क्रियते, स्थानेऽन्तरतमो भवति। यत्र चानेकविधमान्तर्यमस्ति; तत्र स्थानकृतमेवान्तर्यमाश्रीयते। वाक्यभेदस्य च तमब्ग्रहणमेव लिङ्गम् इत्यादि—॥आह॥

---

(२) अर्थकृत आन्तर्य का उदाहरण "पद्न्न" सूत्र है। इस सूत्र में केवल आदेश गिनाये गये हैं, स्थानी नहीं। किसको क्या आदेश हो; इसके लिए अर्थगत सादृश्य देखना पड़ता है। "पद" का अर्थ चरण है उस अर्थ से और ध्वनि में मिलते जुलते चरणार्थक शब्द "पाद" हैं; उसी को 'पद' आदेश की स्थानिता कल्पित की गयी; क्योंकि जिस स्थानी के अर्थ को कहने में जो समर्थ हो, वही उसके स्थान में आदेश हो इस सिद्धान्त के अनुसार पद-समानार्थक, पद समान वर्णक पाद को ही स्थानिता मानी गयी।

"तृज्वत् क्रोष्टुः" भी अर्थकृत आन्तर्य का ही उदाहरण है, यह दिखाया गया है।

गुण कृत आन्तर्य का उदाहरण 'वाग्घरिः' है और प्रमाण कृत आन्तर्य का उदाहरण "अदसोऽसेः" से निष्पन्न अमू अमुया आदि हैं; यह ऊपर बताया गया है।

यह परिभाषा "स्थानेन्तरतमः" १.१.५० सूत्र के भाष्य में स्पष्ट है। वहाँ कहा गया है कि "षष्ठी स्थाने" सूत्र से 'स्थाने' की अनुवृत्ति होने पर भी पुनः "स्थानेऽन्तरतमः" में जो स्थाने ग्रहण किया गया हैं उससे सिद्ध होता है कि यहाँ अनेक प्रकार के आन्तर्य हों वहाँ स्थान कृत आन्तर्य बलवान् होता है। इसलिए चेता स्तोता में प्रमाण कृत आन्तर्य से प्राप्त अकार गुण नहीं हुआ; किन्तु स्थानकृत आन्तर्य के कारण एकार और ओकार ही गुण हुआ।

॥इति शिवम्॥

ननु प्रोढवानित्यत्र 'प्रादूहोढ' इति वृद्धिः स्यादत आह—

**अर्थवद्ग्रहणे नानर्थकस्य ॥१५॥**

**अर्थवद्ग्रहणे नानर्थकस्य—१५**

प्र+पूर्वकाद् वह् धातोः क्तप्रत्ययेऽनुबन्धलोपे वचिस्वपियजादीनां किति ६.१.१५ इत्यनेन यजादित्वात् सम्प्रसारणे सम्प्रसारणाच्च ६.१.१०८ इति पूर्वरूपे होढः ८.३.३१ इति ढत्वे, झषस्तथोर्धोऽधः ८.४.२० इति धत्वे, ष्टुत्वे, ढो ढे लोपः ८.३,१३ इति ढलोपे ढ्रलोपे पूर्वस्य दीर्घोऽणः ६.३.१११ इति दीर्घे प्र+ऊढ इत्यत्र यथा प्रादूहोढोढ्येषैष्येषु (सि० कौ० अच् सन्धि०) इतिवार्तिकेनोढेत्यनुपूर्वीपरत्वाद् गुणं बाधित्वा वृद्धिर्भवति तथा प्र+पूर्वकाद् वह् धातोः क्तवतुप्रत्ययेन पूर्वोक्त-रीत्या निष्पन्ने प्र+ऊढवान् इत्यत्र गुणं बाधित्वा वृद्धिः कथं नेति चेन्न अर्थ-वद्ग्रहणे नानर्थकस्य" इति परिभाषावतरणात्। अर्थवद्ग्रहणे सम्भवति सत्यनर्थ-कस्य ग्रहणं न भवतीति परिभाषार्थः। अतः 'प्रौढ' इत्यत्र सार्थके ऊढशब्दे परे वृद्धि-र्भवति, 'प्रोढवान्' इत्यत्र क्तवतुप्रत्ययान्तस्यैव सार्थकत्वात्तदेकदेशस्योढशब्दस्य निरर्थकत्वादनया परिभाषयाऽग्रहणान्न वृद्धिः।

**'अर्थवद्ग्रहण' परिभाषा ॥१५॥**

प्र उपसर्ग पूर्वक वह धातु से क्तवतु प्रत्यय, अनुबन्ध लोप' सम्प्रसारण, 'सम्प्रसारणाच्च' ६.१.१०८ से पूर्वरूप, करने पर प्र उह्+वत् ऐसी स्थिति में हकार को ढकार, तको ध, ष्टुत्व, उढ ढवत्, ढो ढे लोपः से लोप, और 'ढ्रलोपे ६.३.१११ से दीर्घ करने पर पर प्र+ऊढवान् में गुण करने से प्रोढवान् बनता है। यहाँ "प्रौढः" की तरह "प्रादूहोढोढ्येषैष्येषु" ६.१.८९/३ से वृद्धि क्यों नहीं हुई। इस प्रश्न के समाधान के लिए जो परिभाषा मानी गयी है वह है "अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्" अर्थात् अर्थवान् का ग्रहण यदि संभव हो तो अनर्थक का ग्रहण नहीं करना चाहिए। "प्रादूहोढो" इस वार्तिक में 'ऊढ' पद का उपादान है, सार्थक ऊढ के परे वृद्धि विधान करना "प्र+ऊढः" में सम्भव है इसलिए 'ऊढवान्' के अवयवी-भूत "ऊढ" का जो कि अपने आप में कोई अर्थ नहीं रखता, वृद्धि के लिए ग्रहण नहीं होगा। यही कारण है कि सार्थक 'ऊढ' शब्द के परे रहते 'प्रौढः' में वृद्धि हुई; किन्तु जहाँ 'ऊढ' में कोई अर्थ नहीं है उस "ऊढवान्" के एकदेश 'ऊढ' के परे रहते वृद्धि नहीं हुई।

तात्पर्य यह है कि 'घटमानय' घड़ा लाओ' यहाँ 'घट' वस्तु का आनयन होता है; किन्तु घटमुच्चारय "घट बोलो" में शब्द का ही उच्चारण किया जाता इसलिए यह नहीं कह सकते कि घट शब्द की शक्ति केवल घड़ा 'वस्तु' में है और यह भी नहीं कह सकते कि घट शब्द की शक्ति केवल घट शब्द में है; किन्तु शब्द विशिष्ट वाच्य में और वाच्यविशिष्ट शब्द में शक्ति माननी चाहिए। इसीलिए भर्तृहरि कहता है कि संसार या लोक में कोई ऐसा बोध नहीं है; जिसमें शब्द का

विशिष्टरूपोपदान उपस्थितार्थस्य विशेषणतयान्वयसम्भवे त्यागे मानाभावो-

गामानय, गामुच्चारयेत्यादौ अर्थस्य शब्दस्य च क्रमशः प्रतीत्या शब्दानाम् अर्थे शब्दे च खण्डशः शक्तिः स्वीकार्या। 'गामानये'त्यादौ गोशब्दवाच्यसास्नादिमन्त-मानयेति बोधः गामुच्चारयेत्यादौ सास्नादिमदर्थबोधकं गोशब्दमुच्चारयेति बोधो जायते। तत्र शब्दविशिष्टेऽर्थेऽर्थविशिष्टे शब्दे च शब्दानां शक्तिकल्पने शक्यतावच्छेदके गौरवाल्लाघवाच्छब्दानां खण्डशः शक्तिः कल्प्यते। लोके आनयनादिकार्यं शब्दस्य कर्त्तु न शक्यते। तेन च व्यवहारासिद्धेः अर्थस्य विशेष्यतया शब्दस्य च विशेषणाया बोधः। शास्त्रे अग्ने ढक् ४.३.३३ इत्यादौ ज्वालमालादिकलितादग्निरूपादर्थात् ढक्-प्रत्ययासम्भवात्, तादृशार्थस्य च प्रतिपादिकादिकादित्यनेनान्वयासम्भवात् प्रत्ययपरकत्वासंभवाच्च शब्दस्य विशेष्यतयाऽर्थस्य च विशेषणतया बोधोऽङ्गीक्रियते तथाच ज्वालमालादिकलितार्थविशिष्टाद् अग्निरूपात् प्रातिपदिकात् परः ढक् प्रत्ययो भवतीत्यर्थेऽर्थवत एवाग्निशब्दस्य ग्रहणं नतु अनर्थकस्येति परिभाषेयं फलिता। इत्थं विशिष्टरूपोपादाने (तद्वर्णोत्तरतद्वर्णरूपानुपूर्वीग्रहणे) उपस्थितस्यार्थस्य शब्दे विशेषणतयाऽन्वयसम्भवे तत्यागे मानाभावोऽस्या मूलम्।

अनुगम अर्थात् अन्तर्निवेश या अन्तःप्रविष्टि न हो। कहीं शब्द विशेषण रूप में बोध में प्रविष्ट रहेगा और कहीं विशेष्य रूप में। 'घटमानय' कहने पर घट शब्द के वाच्य—अर्थ (वस्तु) का आनयन होता है। इसलिए इस बोध में शब्द विशेषण और अर्थ विशेष्य है। घटमुच्चारय में घड़ा (वस्तु) का उच्चारण संभव नहीं है। उच्चारण तो शब्द का ही सम्भव है; इस लिए इस वाक्य से जो बोध होता है उस बोध में अर्थ विशेषण और शब्द विशेष्य होगा; अर्थात् यह माना जायगा कि वह घटरूपार्थबोधक घट शब्द का उच्चारण करे। इस तरह सिद्ध हो गया कि विशिष्ट रूप के उपादान में—अर्थात् शब्द के विशिष्ट रूप (तद्वर्णोत्तर तद्वर्ण जैसे अग्नि ऊढ इत्यादि के उपादान में) अग्ने ढक् ४.३.३३ इत्यादि में अर्थ को विशेष्य नहीं मान सकते है, क्योंकि अग्नि (वस्तु) से ढक् प्रत्यय नहीं हो सकता है। इसलिए व्याकरण शास्त्र में अर्थविशिष्ट शब्द ही लिया जा सकता है अर्थात् अर्थविशिष्ट अग्नि-शब्द से ढक् प्रत्यय का विधान किया जायगा। इस तरह विशिष्ट रूप के उपादान में विशेषण बन कर अन्वय प्राप्त करने के योग्य अर्थ के त्याग में किसी प्रमाण का नहीं होना ही इस परिभाषा में मूल है। अग्ने ढक्'' सूत्र में अग्नि शब्द के विशिष्ट रूप का उपादान है। इसलिए अर्थविशिष्ट अग्नि प्रातिपदिक से ढक् विधान करके जब यह सूत्र चरितार्थ हो गया, तब निरर्थक अग्नि शब्द में क्यों लगेगा? इस तरह सिद्ध हो गया कि इस शास्त्र में यदि सार्थक शब्द मिलता हो, तो शास्त्र में उच्चरित शब्दों से सार्थक ही लिया जाय निरर्थक नहीं। प्रौढः में "प्र+ऊढ" यहाँ सार्थक 'ऊढ' के परे रहते वृद्धि करके जब वार्तिक चरितार्थ हो गया; तो वह प्र+ऊढवान् के निरर्थक 'ऊढ' के परे रहते क्यों प्रवृत्त होगा?

**ऽस्या मूलम्। अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यत इति 'सङ्ख्याया' इति सूत्रे भाष्ये स्पष्टम् ॥**

---

लोके प्रौढ इति समुदायस्यैवार्थबोधकत्वं प्रौढघटकोढशब्दस्यार्थबोधकत्वं नास्ति, तथापि शास्त्रीयप्रक्रिया-निर्वाहार्थं शास्त्रप्रामाण्येनात्र शास्त्रीयस्यापि कल्पिताभ्यामन्वयव्यतिरेकाभ्यां कल्पितस्य प्रकृत्यर्थस्य प्रत्ययार्थस्य च ग्रहणादूढशब्दः वहन-कर्मादिरूपार्थेनार्थवानस्ति। ऊढवान् इत्यत्र च स शास्त्रीयोऽप्यर्थः क्तवत्वन्ते वर्तते, नतु ऊढेत्यत्र। अतो न वृद्धिः यत्र च कल्पितावपि प्रकृतिप्रत्ययार्थौ न स्तः यथा यावक इत्यत्र कप्रत्यये कृतेऽकृते च समानार्थप्रत्ययात् तत्रापि प्रतीयते येनेति-व्युत्पत्तिसिद्धप्रत्यय इति महासंज्ञाबलात्कप्रत्ययस्य प्रकृत्यर्थेनैवार्थवत्त्वं शास्त्रीय-विधिसम्पादनाय स्वीक्रियते।

शास्त्रकल्पितस्याप्यर्थस्यात्र ग्रहणे **संख्याया अतिशदन्तायाः कन्** ५.१.२२ इति सूत्रस्थं भाष्यं प्रमाणम्। तथाहि—"संख्याया अति"··· इति सूत्रे डतेश्चेति-वक्तव्यम्। इहापि यथा स्यात्। कतिभिः क्रीतम् कतिकम्। किं पुनः कारणं न सिद्धचति? त्यन्ताया नेति प्रतिषेधः प्राप्नोति। तिप्रतिषेधाड्डतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम्। अर्थवतस्तिशब्दस्य ग्रहणं न च डतेस्तिशब्दोऽर्थवान्। नैषा परिभाषेह शक्या विज्ञातुम्। नहि केवलेन प्रत्ययेनार्थो गम्यते। केन तर्हि? सप्रकृतिकेन। क्व तर्ह्येषा परिभाषा भवति? यान्येतानि शब्दसंघातग्रहणानि॥ तर्त्हि वक्तव्यम्? अर्थवद् ग्रहणात् सिद्धम्। ननु चोक्तं नैषा परिभाषेह शक्या विज्ञातुम्, नहि केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेनेति। केवलेनापि प्रत्ययेनार्थो गम्यते। उक्तमन्वय-व्यतिरेकाभ्याम्। अत्रैव कैयटः—शास्त्रव्यवस्थाहेतुरन्वयव्यतिरेकगम्यार्थवत्ताश्रीयत इत्यर्थः। अतएव शेऽर्थवद्ग्रहणात् काशे कुशे इत्यादौ ग्रहणाभावः (शे १.१.२३ इति प्रगृह्यत्वाभावः) उपसर्गाणामपि केवलानां प्रयोगाभावाल्लौकिक्या अर्थवत्ताया अभा-वादन्वयव्यतिरेकव्यवस्थाप्ये वासावाश्रीयते इति।

---

यद्यपि अर्थ बोधकता 'प्रौढ' इस समुदाय में है; क्योंकि लोक में 'प्रौढः' का
प्रयोग होता है। इस तरह "प्रौढः" का ऊढ भी लौकिक दृष्टि से निरर्थक ही है,
तथापि जिन्हें शास्त्र अर्थवान् कहता है और अन्वय व्यतिरक के द्वारा जिनकी
सार्थकता सिद्ध होती है। उन्हें भी शास्त्रीय प्रक्रिया निर्वाह के लिए अर्थवान् माना
गया है। "तत्सत्त्वे तत्सत्ता" और 'तदभावे तदभावः" इन्हें क्रमशः 'अन्वय' और
व्यतिरेक कहते हैं। "प्रौढः" यहाँ 'ऊढ' शब्द के रहने पर वहनकर्मता रूप अर्थ की
प्रतीति होती है और उसके अभाव में अर्थात् 'पठित' इत्यादि शब्द के उपादान में उस
अर्थ की प्रतीति नहीं होती। इसलिए "उठाया हुआ" यह अर्थ 'ऊढ" का माना
जायगा। इस तरह 'ऊढ' भी सार्थक है। शास्त्रीय अर्थ से अर्थवान् है। वही 'ऊढ'
कहने पर लिया जायगा। इस तरह सिद्ध है कि इस परिभाषा में न केवल लौकिक
अर्थ से अर्थवान् माने गये शब्दों का ग्रहण होता है; किन्तु शास्त्र कल्पित—अन्वय

**इयं वर्णग्रहणेषु नेति 'लस्ये' त्यत्र भाष्ये स्पष्टम् । अत एवैषा विशिष्टरूपो-इयं वर्णग्रहणे न प्रवर्तते ।**

इयं च विशिष्टरूपोपादाने एव प्रवर्तते । तादृशतद्वर्णोत्तरतद्वर्णात्मकानुपूर्वीरूपविशिष्टरूपोपादानस्थले एवार्थस्य विशेषणतया शब्दस्य च विशेष्यतयोपस्थितेः सम्भवात्, विशिष्टरूपोपादानस्यैव परिभाषाया मूलत्वात् । अतएव वर्णग्रहणेऽल्ग्रहणे च नेयं प्रवर्तते । एतल्लस्य ३.४.७७ इति सूत्रे भाष्ये स्पष्टम् । तथाहि—"लादेशे सर्वप्रसंगोऽविशेषात् (वा० १) लादेशे सर्वप्रसंगः । सर्वस्य लकारस्यादेशः प्राप्नोति—लुनाति; लभते । किं कारणम्, अविशेषात् । नहि कश्चिद्विशेष उपादीयते एवं जातीयकस्य लकारस्यादेशो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसंगः ॥ अर्थवद् ग्रहणात् सिद्धम् । अर्थवतो लकारस्य ग्रहणम्, न चैषोऽर्थवान् । "अर्थवद्ग्रहणात् सिद्धमिति चेन्न वर्णग्रहणेषु (वा० २) अर्थवद्ग्रहणात् सिद्धमिति चेन्न । किं कारणम् । वर्णग्रहणमिदम् न चैतद्वर्णग्रहणेषु भवत्यर्थवद्ग्रहणे नानर्थकस्येति ॥ "तस्माद्विशिष्टग्रहणम्" (वा० ३) तस्माद्विशिष्टस्य लकारस्य ग्रहणं कर्तव्यम् । न कर्तव्यम् धातोः ३.१.९१ इति वर्तते इति ।

---

और व्यतिरेक से कल्पित-शास्त्रीय अर्थ भी लिया जाता है। यह बात "संख्याया" ५.१.२२ सूत्र के भाष्य में स्पष्ट है । कतिभिः क्रीतं "कतिकम्" यहाँ संख्याया अतिशदन्तायाः कन् ५.१.२२ सूत्र से कन् नहीं होगा, क्योंकि 'कति' शब्द के अन्त में 'ति' है । इस पर भाष्यकार ने कहा कि यहाँ 'ति' अर्थवान् लिया जाता है, जैसे विंशति का 'ति' । कति में तो डति प्रत्यय हुआ है; इसलिए यहाँ का 'ति' निरर्थक है । इस पर यह कहा गया कि प्रत्यय सहित प्रकृति से ही अर्थ बोध होता है, केवल प्रत्यय या प्रकृति से नहीं । ऐसी स्थिति में 'विंशति का 'ति' भी निरर्थक ही है । फिर 'ति' का पर्युदास कहाँ होगा ? सभी 'ति' निरर्थक ही है। इस पर भाष्यकार ने कहा कि अन्वय व्यतिरेक से यह जानते हैं कि केवल प्रत्यय भी अर्थवान् हैं; क्योंकि पाचक में "ण्वुल्" आने पर कर्ता अर्थ प्रतीत होता है और उसके अभावमें नहीं। यही हालत विंशति में ति और कति में डति की है। इससे सिद्ध है कि इस परिभाषा में कल्पित शास्त्रीय अर्थ भी गृहीत है । कैयट ने कहा है कि शास्त्रीय व्यवस्था के लिए अन्वय-व्यतिरेक से गम्य अर्थवत्ता भी लेते हैं। इस लिए 'काशे' 'कुशे' में 'शे' १.१.१३ से प्रगृह्य-संज्ञा नहीं हुई । यहाँ का 'शे' निरर्थक है । "अस्मे इन्द्रा बृहस्पती" का अर्थवान् ।

वर्ण ग्रहण में इस परिभाषा की प्रवृत्ति नहीं होती है । यह 'लस्य' ३.४.७७ सूत्र के भाष्य में स्पष्ट है। इसीलिए यह परिभाषा विशिष्टरूपोपादान में ही प्रवृत्त होगी, यह वृद्ध वैयाकरणों का मत है 'ओत्' १.१.१५ सूत्र के शब्द कौस्तुभ में भट्टोजिदीक्षित ने लिखा है कि "इयं च (परिभाषा) विशिष्टरूपोपादन एवं प्रवर्तते । इसलिए 'वृद्धाः' का तात्पर्य **"भट्टोजिदीक्षिताः" है** । इसी लिए 'येन विधिस्तदन्तस्य'

**पादानविषयेति वृद्धाः। एतन्मूलकमेव 'येन विधिरि'त्यत्र भाष्ये पठ्यतेऽलैवानर्थ-केन तदन्तविधिरिति॥**

---

अनेन भाष्येणास्या विशिष्टरूपोपादानविषयत्वं सिद्धम्। वर्णग्रहणेऽल्ग्रहणे वेयं न प्रवर्तते इत्यपि च सिद्धम्। एतन्मूलकमेव येन विधिस्तदन्तस्य ३.१.७२ इति सूत्रे भाष्येऽलैवानर्थकेन तदन्तविधिर्नान्येनानर्थकेनेति वक्तव्यम् किं प्रयोजनम् 'हन्' ग्रहणे 'प्लीहन्' ग्रहणं माभूदित्याद्युक्तम्।

---

१.१.७२ इस सूत्र के भाष्य में पढते है कि "अलैवानर्थकेन तदन्तविधिः" अनर्थक अल् से तदन्त विधि होती है। अनर्थक अल् से ही तदन्त विधि मानने में मूल कारण यह है कि "अर्थवद् ग्रहणे नानार्थकस्य ग्रहणम्" इस परिभाषा की प्रवृत्ति वर्ण-ग्रहण में (अल् ग्रहण में) नहीं होती है। क्योंकि वर्णग्रहण में विशिष्ट रूप का उपादान नहीं रहता।

'लस्य' सूत्र के भाष्य में एक वार्तिक आता है। (१) "अर्थवद् ग्रहणात् सिद्धमिति चेन्न वर्णग्रहणेषु" इस से सिद्ध है कि वर्ण ग्रहण में 'अर्थवद् ग्रहण' परिभाषा की प्रवृत्ति नहीं होती हैं।

ऐसा मानने पर कुछ दोष आता है। जैसे "गोतो णित्" ७.१.९० सूत्र में यदि यह अर्थ मानें कि अर्थ विशिष्ट गो शब्द से पर जो असम्बुद्धि सर्वनाम स्थान उसे णिद्वद् भाव हो, तो प्रश्न होगा कि यहां 'गो' शब्द से पशु, (गाय) पृथ्वी, किरण, इन्द्रिय आदि अर्थों में कौन सा अर्थ विवक्षित है ? यदि कहें कि गाय रूप अर्थ विवक्षित है तो 'पृथ्वी वर्तते' इस तात्पर्य से प्रयुक्त 'गौर्वर्तते' में सूत्र की प्रवृत्ति नहीं होगी "किरण आपतति" अर्थ में 'गौरापतति' नहीं बनेगा। इसलिए गोतो णित् सूत्र की आवृत्ति करनी पड़ेगी, इस में गौरव होगा। अतः 'स्वं रूपं शब्दस्याशब्दसंज्ञा १.१.६८ यह सूत्र मानना आवश्यक है। इसके प्रत्याख्यान में पूर्वनिर्दिष्ट गौरव की संभावना है। "स्वं रूपम्" सूत्र रहने पर "गोतो णित्" ७.१.९० आदि अनेकार्थक शब्दस्थल में आवृत्ति की आवश्यकता नहीं होगी। क्योंकि यह सूत्र बताता है कि इस शास्त्र में "गोतो णित्" अग्नेर्ढक् आदि सूत्रों में प्रयुक्त शब्दों में अपूर्व संकेत है। इसलिए आवृत्ति के बिना ही एक ही "गोतो णित्" सूत्र का यह अर्थ होगा कि अर्थविशिष्ट गो शब्द से पर सर्वनाम स्थान को णिद्वद् भाव हो इस तरह सभी (गाय, पृथ्वी, किरणादि) अर्थों में प्रयुज्यमान गो शब्द का ग्रहण हो जायगा। इसलिए आवृत्ति की आवश्यकता नहीं रहेगी और न गौरव होगा। इसी बात को ध्यान में रखकर कहते हैं कि यह परिभाषा 'स्वं रूपं' सूत्र की देन है। यह उस सूत्र के अर्थ का निचोड़ है। "स्वं रूपं में "स्वम्" का अर्थ है आत्मीय। इस लिए शब्द का आत्मीय (अर्थ) यहाँ 'स्व' शब्दार्थ हुआ। रूप शब्द से "स्वरूप" 'तद्वर्णोत्तर तद्वर्ण' लिया गया। इस तरह सूत्र ने बताया कि इस शास्त्र में उच्चरित अग्नि

**किंच 'स्वं रूपमि'ति शास्त्रे स्वशब्देनात्मीयवाचिनाऽर्थो गृह्यते। रूपशब्देन स्वरूपम्। एवं च तदुभयं शब्दस्य संज्ञीति तदर्थः। तत्रार्थो न विशेष्यः। तत्र शास्त्रीयकार्यासम्भवात्। किन्तु शब्दविशेषणम्। एवं चार्थविशिष्टः शब्दः संज्ञीति फलितम्। तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥१५॥**

---

अस्या युक्तिमूलत्वं संस्थाप्य सूत्रसम्मतत्वं प्रदर्शयितुं नागेशः "किञ्च स्वरूपमित्यादिग्रन्थम् प्रारभते। स्वं रूपम् १.१.६८ इति सूत्रे स्वशब्द आत्मीयवाचकः। तेन चार्थो गृह्यते रूपशब्देन च स्वरूपमर्थात् शब्दस्वरूपं गृह्यते। तत्रार्थस्य न विशेष्यत्वं, तत्र ढगादिशास्त्रीयविधिबाधात्। एवञ्चार्थविशिष्टः शब्दः सञ्ज्ञी शब्द-शास्त्रीयसंज्ञां विनेति सूत्राक्षरफलितत्वादेषा सूत्ररूपैव। **स्वरूपमिति** सूत्रेऽस्या उल्लेख एवं दृश्यते—रूपग्रहणं किमर्थम्? न स्वं शब्दस्याशब्दसंज्ञा भवतीत्येव रूपं शब्दस्य संज्ञा भविष्यति। नह्यन्यत्स्वं शब्दस्यास्त्यन्यदतो रूपात्। एवं तर्हि सिद्धे यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः—अस्त्यन्यद् रूपात्स्वं शब्दस्येति। किं पुनस्तत्। अर्थः। किमेतस्य ज्ञापने प्रयोजनम्। अर्थवद्ग्रहणे नानर्थकस्येत्येषा परिभाषा न कर्तव्या भवतीति॥

पूर्वोक्तयुक्तिमूलकत्वस्वीकराद् वरमस्याः सूत्ररूपत्वप्रतिपादनम्। गोतो णित् ७.१.९० इत्यादौ गोशब्देनानेकार्थकेनानेकेषामर्थानामुपस्थितौ "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती'ति न्यायेन सर्वाधिकप्रसिद्धया सास्नालाङ्गूलककुदाद्यर्थवाचके सूत्रस्य प्रवृत्या चारितार्थ्येन भूकिरणाद्यर्थवाचिनि गोशब्दे प्रवृतये सूत्रस्यावृत्तिकल्पना कर्तव्येति गौरवमत्र सूत्ररूपत्वमस्या स्वीकारे न भवतीति।

॥ इति शिवम् ॥

---

आदि शब्द, अर्थ और शब्द दोनों के बोधक होंगे। अर्थ और शब्द दोनों शब्द के संज्ञी होंगे। उन में अर्थ को विशेष्य नहीं मान सकते; क्योंकि 'अग्ने ढक्' सूत्र से आग (वस्तु) से ढक् प्रत्यय का विधान नहीं किया जा सकता। इसलिए अर्थ-से शास्त्रीय कार्य की असंभावना देखकर अर्थ को शब्द का विशेषण ही मानना पड़ेगा; तब "स्वं रूपम्" सूत्र का अर्थ होगा कि अर्थविशिष्ट शब्द संज्ञी होता है। इस तरह "प्रादूहोढो'—इत्यादि में "ऊढ" शब्द अर्थ विशिष्ट रूप का बोधक होगा। "ऊढवान्" के ऊढ" में अर्थ नहीं होने के कारण "प्रादूहोढो···" वार्तिक के 'ऊढ' पद से उसका ग्रहण नहीं होगा। इस तरह सिद्ध हो गया कि अर्थवान् के ग्रहण में अनर्थक का ग्रहण नहीं हो। इससे यह परिभाषा सिद्ध हो गयी।

सीरदेव ने अपनी परिभाषा वृत्ति में "व्रश्चभ्रस्ज" ८.२.३६ सूत्र में राज से पृथक् किये गये भ्राजि ग्रहण को इस परिभाषा का ज्ञापक माना है। तात्पर्य यह है कि "भ्राट् में "भ्राज्" प्रकृति को षत्व करने के लिए वहाँ 'भ्राज्' ग्रहण किया है। अगर यह परिभाषा न हो तो राज् मानकर ही 'भ्राज्' को भी षत्व हो

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्र 'आन्महत' इत्यात्त्वापत्तिरत आह—

**गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥१६॥**

---

**गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥१६॥**

ननु अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषास्वीकारेऽपि न दोषनिस्तारः कलङ्किन्यपि चन्द्रे महत्त्वारोपाद् 'अमहान् महान् भूत' इत्यत्र 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः'' ५.४.५० इति च्विप्रत्यये तस्य सर्वापहारलोपे 'महद्भूतश्चन्द्रमा इत्यत्रारोपितमहत्वविशिष्ट इत्यर्थके ''आन्महतः समानाधिकरणजातीययोः'' ६.३.४६ इत्यात्वापत्तिः, अर्थवत्त्वस्य तत्रापि सत्वादिति चेन्न गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः (परिभा० १६) इति परिभाषायाः स्वीकारात्। गौणमुख्ययोरर्थयोर्मुख्ये एवार्थे कार्यसम्प्रत्ययः

---

ही जायगा 'भ्राज्' ग्रहण करने की क्या आवश्यकता थी ? परन्तु पाणिनि तो देखते हैं कि राज् कहने पर अर्थवान् 'राज्' धातु ही लिया जायगा 'भ्राज्' का 'राज्' निरर्थक होने के कारण ''राज'' पद से गृहीत नही हो सकता । इसलिए वह राज् से पृथक् भ्राज् ग्रहण करते हैं ।

षत्व विधायक सूत्र में राजि के साहचर्य से फणादि भ्राज् का ही ग्रहण हो भ्राज़ दीप्तौ का नहीं । इसलिए भ्राजि ग्रहण के सार्थक होने से भट्टोजिदीक्षित ने प्रौढ मनोरमा में (''प्रादूहोढो—वार्तिक—अच्सन्धि) भ्राज् ग्रहण को ज्ञापक नहीं माना है ।

यदि फणादि में 'टुभ्राज़' पढें, 'एज़' 'भ्राज़' यहाँ 'ऋभ्राज' पाठ करें और 'व्रश्च' सूत्र में 'राज़' पढ़ा जाय तो स्वतः ऋभ्राज का षत्वशास्त्र में अग्रहण हो ही जायगा । इस तरह राज् से पृथक् 'भ्राज्' ग्रहण की ज्ञापकता संभव है ही ।

अथवा ''ऋभ्राज'' पाठ करने की भी आवश्यकता नहीं है । आत्मनेपद के लिए 'भ्राज' में 'अ' को 'अनुदात्त' मानकर पढ़ना ही पर्याप्त है ।

'भ्राज' धातु के लुङ् के रूप 'अबीभ्रजत्' अबिभ्राजत् में 'भ्राजभ्राश— ३.१.१७७ सूत्र से विकल्प से उपधा ह्रस्व होता है । इस लिए यहाँ ऋदित्करण का फल ह्रस्व निषेध तो है ही नहीं; इसलिए अनुदात्तेत् 'अकार' लगाने से काम चल जायगा । इस तरह पृथक् भ्राज़ ग्रहण को ज्ञापक माना ही जा सकता है ।

सीरदेव ने भी 'स्वंरूपं' सूत्र से परिभाषा के फलित होने की बात तो कही ही है ।

॥ इति शिवम् ॥

**गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥१६॥**

'अर्थवत्' परिभाषा स्वीकार करने पर भी अमहान् महान् भूतः इति महद् भूतः चन्द्रमाः यहां पर महत् शब्द को ''आन्महतः समानाधिकरणजातीययोः'' ६.३.४६

**गुणादागतो गौणः। यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः।**

---

कार्यप्रवृत्तिर्भवति न गौणेऽर्थे इति परिभाषार्थः। गुणादागतो गौणः। गुणशब्दात् 'तत आगतः' ४.३.४७ इत्यण् प्रत्ययः। आङ्पूर्वकस्य गम्धातोरिह ज्ञानमर्थः। तेन गुणयोगाद् योऽर्थः ज्ञायते स गौणार्थः। यथा गौर्जल्पति इत्यादौ जाड्यमान्द्यादिगुणयोगादिह प्रतीयमानो वाहीकार्थो गोशब्दस्य गौणार्थः। अभिधया प्रतीयमानोऽर्थः मुख्यः लक्षणया च प्रतीयमानः गौणः। अत्र कलङ्की चन्द्रो न वस्तुतो महान् किन्तु विलक्षणशिरोवहनकर्मत्वस्य चन्द्रे दर्शनात् तद्गुणयोगात्सोऽपि महद्भूत उच्यते- यथा पित्तलमयमाभूषणमपि राज्ञा धृतं स्वर्णमयं महामूल्यकं प्रतीयते।

अतस्तादृशचन्द्रतात्पर्यको महच्छब्दोऽत्र गौणार्थकः अतो नात्रात्वमित्यर्थः।

---

सूत्र से आकारान्त आदेश हो जायगा। तात्पर्य यह है महत्+भूतः में च्वि प्रत्यय हुआ है और उसका सर्वापहार लोप हो गया है च्विप्रत्यय अभूत-तद्भाव अर्थ में होता है। इसलिए यहाँ महद्भूतः में महत् शब्द में आरोपितमहत्व विशिष्ट अर्थ है ही। इसलिए अर्थवान् होने के कारण "आन्महतः" सूत्र में पठित 'महत्' शब्द से इसका ग्रहण हो ही जायगा और फिर "आकारान्त" आदेश हो जायगा। इस तरह सम्भावित अतिव्याप्ति दोष के निवारण के लिए कहते हैं—"गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः"। गौण और मुख्य अर्थों में मुख्य ही अर्थ में कार्य होता है गौण में नहीं। अर्थात् मुख्यार्थबोधक शब्द में कार्य की प्रवृत्ति होती है इसलिए "आन्महतः" सूत्र से आकारान्त आदेश का कार्य उस महत् शब्द को होगा जो सचमुच 'महत्' अर्थ का वाचक होगा जैसे "महाराजः" यहाँ महान् चासौ राजा' इस विग्रह में महत् शब्द जिस महत्त्व विशिष्टार्थ का बोधक है; वह आरोपित नहीं है किन्तु वास्तविक है। "महद्भूतश्चन्द्रमाः" में तो अमहत् को महत् मान लिया गया है। इसलिए गौण है। अतः आन्महतः' सूत्र इस महत् शब्द को "आकारान्त" आदेश नहीं करेगा।

"गुणादागतः गौणः" यह गौण शब्द की व्युत्पत्ति है। यह शब्द गुण शब्द से "तत आगतः" ४.३.७४ से अण् प्रत्यय और आदि अच् को वृद्धि होने से बना हैं। गुण के कारण जो अर्थ आयेगा अर्थात् आरोपित किया जायगा वह 'गौण' अर्थ माना जायगा। जैसे कोई मूर्ख वाहीक जब बेसिर—पैर की बातें बोलता है, तो कहते हैं "गौर्जल्पति" यहाँ गो शब्द का वाहीक के लिए प्रयोग हुआ है। वह इसलिए कि वाहीक में भी उसी तरह के जाड्यमान्द्यादि (मूर्खत्वादि) गुण हैं; जो कि 'गो' में पाये जाते हैं। इस तरह गो शब्द का मुख्य अर्थ है गाय या बैल और गौण अर्थ हैं वाहीक। इसलिए "वाहीको जल्पति" की जगह गौ जल्पति" कहते हैं। गोपद का अर्थ गोत्व है। बैल में उसके अर्थ गोत्व के साथ साथ जाड्यमान्द्यादि गुण भी हैं

**अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते । मुखमिव प्रधानत्वान्मुख्यः प्रथम इत्यर्थः । गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते । एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम् ॥**

---

अप्रसिद्धश्च संज्ञादिरपि गौणार्थप्रतिपादक एव । पित्रादिना यदा पुत्रादे रामकृष्णेति नाम क्रियते तदा रामगतपितृभक्तिशौर्यादिकगुणास्तेन तद्गुणादिदृक्षुणा तत्रारोप्यन्ते । अतो रामादिसंज्ञादिरपि गुणप्रतिसंधानयोगादेवार्थबोधकत्वाद्गौणार्थप्रतिपादकः । 'गौर्जल्पति' 'रामोऽसौ भाषते इत्यादावुभयत्र गौणार्थप्रत्यायकतासाम्येऽपि पूर्वत्र गुणप्रतिसंधानं प्रमात्मकमपरत्र चारोपात्मकम् इत्येव विशेषः । मुखमिव प्रधानत्वादभिधाबोध्योऽर्थो मुख्यः प्रथमः गौणश्चारोपितः अतएव मुख्येतरः लक्षणाबोध्यः । गौणस्यार्थस्य प्रतीतेः पूर्वं मुख्यार्थस्य प्रतीतिरावश्यकी । अन्वयानुपपत्तिप्रतिसंधानस्य तात्पर्यानुपपत्तिप्रतिसंधानस्य वा लक्षणाहेत्वन्यतमत्वात् । तत्प्रतिपत्तये च मुख्यार्थबाधज्ञानाय तत्कुक्षिप्रविष्टस्य मुख्यार्थस्य प्रतीतेरावश्यकत्वात् । अतएवोच्यते मूले—गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते इति । इत्थं सिद्धम् —यत् योऽप्रसिद्धोऽर्थः सोऽत्र गौणः यश्च गुणप्रयोज्यलक्षणाविषयः सोऽपि चार्थो

---

वह गोत्व समानाधिकरण जाड्यमांद्यादि गुण, संस्कार हीन वाहीक में भी दिखाई पड़ता है । इसलिए गोपद शक्यतावच्छेदक गोत्व का आरोप वाहीक में भी करते हैं । अतः 'वाहीक' गोपद का गौण अर्थ हुआ । गोपद का जाड्यादि गुण निमित्तक वाहीक अर्थ गौण है । अकलङ्की चन्द्रमा में महत्व है, वह महान् है; क्योंकि उसे भगवान् शंकर अपने सिर पर धारण करते हैं । कलंकी चन्द्रमा में तो वह महत्त्व आरोपित है; और गौण है; क्योंकि अकलङ्की चन्द्रमा में जो चन्द्रत्व है; वह चन्द्रत्व; कलङ्की में भी पाया जाता है । इस तरह महद्भूतश्चन्द्रमाः में गौण महत्वार्थ प्रतिपादक महत् शब्द में आकारान्त आदेश नहीं हुआ ।

अप्रसिद्ध संज्ञादि भी अपने आप में उन संज्ञा-गत-गुणों के आरोप से ही बोध कराते हैं; जिन प्रसिद्ध संज्ञाओं के आधार पर वह रखी गयी होती है । जो कोई अपने पुत्र का नाम राम या कृष्ण रखता है, वह राम और कृष्ण में वर्तमान पिता की आज्ञा के पालन करने की प्रवृत्ति आदि गुणों को अपने पुत्रादि में आरोप करके ही वैसा नाम रखता है । इसी लिए राम कृष्ण आदि संज्ञा शब्द रामत्वादि के आरोप के द्वारा ही बोध कराते हैं ।

यहाँ यह प्रश्न उठता है कि संज्ञा तो शब्द है और गौण अर्थ है । इस तरह नागेश ने जो लिखा है कि "संज्ञादिरपि तद्गुणारोपादेव बुध्यते" यह असंगत जान पड़ता है; क्योंकि बोध तो अर्थ का होता है । इसलिए ऐसा कहना चाहिए था कि अप्रसिद्धः संज्ञार्थोऽपि तद्गुणारोपादेव बुध्यते" प्रश्न ठीक है । इसका उत्तर

तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव। तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात्॥

किं चायं न्यायो न प्रातिपदिककार्ये किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव। परिनिष्ठतस्य पदान्तरसम्बन्धे हि गौर्वाहीक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम्। श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादावत

---

गौण इति। तेन प्रियास्त्रयो येषाम् ते प्रियत्रयस्तेषां प्रियत्रयाणामित्यत्र बहुव्रीहावन्यपदार्थप्रधानतया त्रिशब्दार्थस्यामुख्यत्वेऽपि निरुक्तगौणत्वाभावादस्याः परिभाषाया अप्रवृत्त्या त्रेस्त्रय इति त्रयादेशः प्रियत्रयाणामित्यत्र भवत्येव। मुख्येतरार्थत्वं गौणत्वमिति स्वीकारे तु त्रयादेशो न स्यादनया निषेधात्। अमहाब्राह्मण इत्यत्र नञस्तत्सादृश्यार्थकस्यारोपार्थकतया अरोपितमहत्वस्य महच्छब्देन प्रतीताविहात्वं न स्यादिति न वाच्यम् आरोपस्य गुणनिमित्तकत्वाभावेन पूर्वोक्तगौणत्वाभावात्। सूत्रे उपात्तम् उच्चार्यमाणमर्थविशेषस्योपस्थापकं तद्वर्णोत्तरतद्वर्णरूपानुपूर्वीरूपविशिष्टरूपं यत्र तादृशपदकार्ये एवेयं परिभाषा प्रवर्तते। यथा 'आन्महतः'—६.३.४६ इत्यत्र। अत्र हि म्+अ+ह+अ+त् इत्येवं रूपेण महच्छब्दस्योपादमस्ति। अत इञ् ४.१.९५ इत्यत्र तु अत्पदस्य प्रातिपदिकपदस्य वोपादनं न विशिष्टरूपोपादनम्। अत्पदे प्रातिपदिक पदे वा न कस्यापि शब्दस्यानुपूर्वीरूप-

---

है कि यहाँ संज्ञादि शब्द में बहुव्रीहि मानना चाहिए। इस तरह संज्ञादि का विग्रह होगा संज्ञा आदिः प्रथमो बोधको यस्य। इस तरह संज्ञादि शब्द अर्थ का ही बोधक ठहरता है। अथवा (सम्यग् ज्ञायते बोध्यते) इस व्युत्पत्ति से संज्ञा शब्द अर्थ का ही बोधक है।

मुख्य शब्द की व्युत्पत्ति है मुखमिव। जो मुख की तरह प्रधान हो; उसे मुख्य कहते हैं। जो अर्थ प्रथम होगा वही मुख्य अर्थ कहलायेगा। "नेहरू चाणक्य थे" इस वाक्य में चाणक्य शब्द का मुख्य अर्थ कौटिल्य है; वह अर्थ प्रधान है क्योंकि- उस अर्थ का आभास गौण अर्थ में और मुख्य अर्थ में दोनों में होता है।

गौण अर्थ में जब शब्द का प्रयोग होता है; तब भी मुख्यार्थ के आरोप से ही वह गौण अर्थ में प्रयुक्त होता है। इस तरह अप्रसिद्धत्व या गौणलाक्षणिकत्व ही यहाँ गौणत्व माना जायगा। जो अर्थ अप्रसिद्ध होगा या सादृश्य सम्बन्ध के कारण मानी गयी लक्षणा वृत्ति से प्रतीत होगा; उसे गौण अर्थ कहेंगे। इसलिए "प्रियत्रयाणाम्" में "त्रेस्त्रयः" ६.३.४८ से त्रयादेश हो ही जायगा। यद्यपि 'प्रियाः त्रयो यस्य' इस विग्रह में बहुव्रीहि-समास होने के कारण अन्य पदार्थ के प्रधान होने से त्रि शब्द का अर्थ यहाँ प्रधान नहीं है, तौभी गौण के पूर्वोक्त लक्षणों का विषय न होने के कारण यहाँ त्रिशब्दार्थ को गौण नहीं माना गया। इसलिए उक्त

**इञः सिद्धये उपात्तमित्यादि । न च प्रातिपदिकपदं तादृशमिति वाच्यम् । तेन हि प्रातिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके 'ओत्' इत्यादावेतत्प्रवृत्त्या गोऽभवदित्यादौ दोषो न ॥**

---

मुपादीयते । अतएवेञ् प्रत्ययस्तेन दाक्षिः श्वासुरिरित्यत्र यथा भवति तथा साद्दशाद्दक्षनामभाजो दक्षशब्दादपि जायत एव । अतएव श्वसुरसदृशस्यापित्यमिति विग्रहे श्वासुरिरिति भवत्येव । अदन्तप्रातिपदिक पदस्य आनुपूर्व्या कस्याप्यर्थस्योपस्थापकत्वाभावात् । पदकार्यत्वञ्च विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वम् । 'त्रेस्त्रयः' औतोम्शसोः, गोतो णित् इत्यादीनां विभक्तिनिमित्तकत्वेन पदकार्यत्वाभावान्न तेष्वस्याः प्रवृत्तिः जानपद ४.१.४२ इति ङीषः स्त्रीत्वनिमित्तकत्वेन पदकार्यत्वाभावाद् गौणेऽपि तत्प्रवर्तते । नचैवं गाम्पाठय इत्यादौ औतोऽम्शसोः ६.१.९३ इत्यात्वं न स्यादत्र गोशब्दस्य गौणार्थकत्वादिति वाच्यम् अस्याः प्रातिपदिककार्ये प्रवृत्त्यभावात् । प्रातिपदिकसंस्कारसमये गौणत्वाप्रतीतेः । "अपदं न प्रयुञ्जीत" इति सिद्धान्तानुसारेण केवलस्य सुब्रहितस्य प्रयोगासम्भवात् प्रयोगार्थं प्रातिपदिक संस्कारस्य पदत्वाधायकस्यावश्यकत्वात् गोतो णित् ७.१.९० औतोऽम्शसोः ६.१.९३ इत्यादिप्रवृत्त्या 'गौर्वाहीकः' गाम्पाठयेत्यादौ परिनिष्ठितस्य गौः गामित्यत्यादेः पदान्तरेण वाहीकः, पाठयेत्यादिना सम्बन्धयोजनकालेऽन्वयानुपपत्तिप्रतिसन्धानेन गौणत्वप्रतीतावपि प्रातिपदिकसंस्कारसमयेऽन्तरङ्गत्वाज्जातस्य संस्कारस्य 'भुक्तवन्तं प्रति मा भुक्था इति ब्रूयात् किं तेन कृतं स्यादिति न्यायेन बाधायोग एवास्याः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । नचैवं च्विप्रत्ययान्ते गोऽभवदित्यत्र च्विप्रत्ययान्तत्वेन निपातत्वादोत् १.१.१५ इति प्रगृह्यसंज्ञामाशङ्क्यानया परिभाषया तद्वारणपरकभाष्यासङ्गतिः, प्रातिपदिकपदवन्निपातपदस्यापि तद्वर्णोत्तरतद्वर्णरूपयानुपूर्व्या विशिष्यार्थोपस्थापकत्वाभावादिति वाच्यम् चादिगणं निर्माय चादयोऽसत्त्वे १.४.५७ इति सूत्रकरणाच्चादीनानुपूर्वीरूपत्वान्निपातशब्दोच्चारणे ओत् १.१.१५ इत्यादौ विशिष्टरूपोपादानसत्वात् । प्रातिपदिकानि न तथा गणविशेषं निर्माय पठितानि यथा निपातानीति वर्तते तत्र

---

परिभाषा की प्रवृत्ति नहीं हुई और त्रयादेश हुआ । "अमहाब्राह्मणः" में आरोप तो है, पर वह आरोप गुण-प्रयोज्य या सादृश्यमूलक नहीं है । इसलिए यहाँ महत् शब्दार्थ को गौण नहीं माना गया; क्योंकि नञ् आरोपार्थक है । इसलिए महत्वारोप की प्रतीति तो यहाँ होती है; पर वह आरोप गुण के कारण नहीं है । इसलिए उसे गौण नहीं कह सकते ।

दूसरी बात यह है कि यह न्याय प्रातिपदिक के कार्य में नहीं लगता है; किन्तु उस तरह के पदकार्य में लगता है, जहाँ सूत्र में अर्थ विशेष को उपस्थित करने की क्षमता रखने वाले विशिष्ट रूप का उपादान (उच्चारण) रहता है । प्रातिपदिक कार्य में इस परिभाषा की अप्रवृत्ति का कारण यह है कि प्रातिपदिक संस्कार के

समय गौणत्व की प्रतीति ही नहीं होती। गौणत्व की प्रतीति तो तब होती है, जब एक परिनिष्ठत (साधु) पद का दूसरे साधु पद के साथ सम्बन्ध करते हैं जैसे "गौर्वाहिकः में प्रातिपदिक कार्य होने के बाद निष्पन्न पद 'गौः' का दूसरे पद वाहीक के साथ सम्बन्ध करते हैं। इसलिए प्रातिपदिक संस्कार के समय अन्तरङ्गत्वात् जो णिद्वद्भाव, औत्व (वृद्धि) आदि कार्य प्राप्त हैं; उन्हें रोकने का कोई आधार ही नहीं है। इसलिए यह सिद्धान्त बन गया कि प्रातिपदिक कार्य में गौण मुख्य न्याय की प्रवृत्ति नहीं होती है।

'श्वसुर' के सदृश को भी श्वसुर' कहते हैं। उस श्वसुर सदृश श्वसुर का अपत्य "श्वासुरिः" कहलाता है। यहाँ "अतः इञ्" से इञ् प्रत्यय होता है। इञ् कार्य यद्यपि "पदकार्य है" क्योंकि षष्ठ्यन्त प्रातिपदिक से इञ् प्रत्यय का विधान है तथापि यहाँ उक्त परिभाषा की प्रवृत्ति नहीं हुई; "क्योंकि "सूत्र" में श्वसुर शब्द के विशिष्ट रूप (श्वसुर, इस तद्वर्णोत्तर तद्वर्ण) का उपादान नहीं है। इसलिए नागेश ने "**उपात्तम्**" कहा है और उस पर जोर दिया है। यदि यह कहें कि "अत इञ् "४.१.९५ सूत्र में प्रातिपदिकात् की अनुवृत्ति है। इस तरह "प्रातिपदिकात्" तो उपात्त है ही; वह तो सूत्र में श्रूयमाण है ही; फिर परिभाषा की प्रवृत्ति होनी चाहिए तो आपके इस प्रश्न के निराकरण के लिए **विशिष्यार्थोपस्थापकं विशिष्टरूपम्**" कहा गया है। अर्थात् पहले कहा गया है कि यह परिभाषा उस पद कार्य में लगेगी, जहाँ अर्थ विशेष की उपस्थिति की क्षमता रखने वाले विशिष्टरूप का उपादान रहेगा। "प्रादिपदिकात्" से तो सकल प्रातिपदिक की उपस्थित होती है, किसी अर्थविशेष की उपस्थिति करने वाले "अग्नेर्ढक्" सूत्र में विद्यमान "अग्नि" शब्द की तरह प्रातिपदिक शब्द किसी अर्थ विशेष की उपस्थिति कराने की क्षमता नहीं रखता। वह तो एक सामान्य अर्थ की उपस्थित कर देता है प्रातिपदिक कहने से किसी प्रातिपदिक विशेष का चित्र सामने नहीं आता है। इसलिए "अत इञ्" में यह परिभाषा नहीं लगेगी।

जिस सूत्र में "निपात पद" का उपादान है; वहाँ यह परिभाषा प्रवृत्त होगी; क्योंकि निपातपद "चादयोऽसत्त्वे" १.४.५७ सूत्र के अनुसार चादि में शक्त है। इसलिए निपातपद के उपादान में चादि अर्थ की उपस्थिति होती है चादि गण होने कारण सारे चादि उपस्थित हो जाते हैं। इस तरह निपात पद अर्थ विशेष के उपादान में समर्थ है। इसलिए "अगौः गौरभवदिति गोऽभवत्" यहाँ च्वि का सर्वाहार लोप होने पर जब च्वि अन्त वाले को निपात संज्ञा हुई; तब "ओत्" १.१.१५ सूत्र से प्रगृह्य-संज्ञा और (प्लुतः प्रगृह्या) ६.१.२२५ से प्रकृतिभाव नहीं हुआ; क्योंकि इस परिभाषा की प्रवृत्ति होने से गौण में "ओत्" की प्रवृत्ति रुक गई।

अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृश-परत्वेऽन्तरङ्गत्वादीत्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च नेत्वषत्वे। आद्ये गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात्। अत एवाग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेनेत्वषत्ववारणपरं 'अग्नेः स्तुत्स्तोमसोमाः' इति सूत्रस्थं भाष्यं सङ्गच्छते॥

---

भेदः। 'अग्निर्माणवक' इत्यत्र यथा गौणार्थप्रतीतिस्तथा अग्नेः स्तुत्स्तोमसोमाः ८.३.८२ इत्यनयोश्चाग्निसोमयोर्विशिष्टरूपोपादानमप्यस्तीति परिभाषायाः प्रवृत्या कथमीत्वषत्वे भवत इति न वाच्यम् प्रसिद्धदेवतावाचिनोरग्निपदस्य सोम पदस्य च द्वन्द्वे द्वन्द्वावस्थायां गौणत्वप्रतीतेरभावादन्तरङ्गत्वादीत्वषत्वयोर्जातयोः पश्चान्माणवकावित्यनेन सहान्वयकालेऽन्वयानुपपत्तिमूलकगौणलक्षणया तत्सदृशपरत्वे गौणत्वप्रतीतावपि भुक्तवन्तं प्रतीतिन्यायेन निवृत्तेरभावात्। यत्र च द्वन्द्वात् पूर्वमेव गुणयोगादग्निपदस्य सोमपदस्य च तत्सदृशे लक्षणा क्रियते ततश्च द्वन्द्वसमासस्तत्रेत्वषत्वे न भवतः गौणलाक्षणिकत्वात्, गुणप्रयोज्य-लक्षणाविषयत्वात्। एवमेव अग्निनामकस्य सोमनामकस्य च माणवकस्य बोधकयोः अग्निशब्दस्य सोमशब्दस्य च द्वन्द्वे द्वन्द्वसमासकाले एव गौणत्वप्रतीत्या नेत्वषत्वे। तेन चोभयत्राग्निसोमाविति रूपम्। अतएवाग्निसोमौ माणवकावित्यत्र गौणमुख्यपरिभाषया ईत्वषत्ववारण-

---

"अग्नीषोमौ माणवकौ" यहाँ "अग्निश्च सोमश्च इस विग्रह में देवता-द्वन्द्व करने पर "ईदग्नेः सोमवरुणयोः" ६ ३.२७ से इत् "अग्नेः स्तुत्स्तोमसोमाः"-७,३.८२ सूत्र के षत्व करके अग्नीषोम बनाकर प्रसिद्ध देवतावाची 'अग्नीषोम' पद में सादृश्यमूलक लक्षणा करके "अग्नीषोमौ माणवकौ" ऐसा प्रयोग किया गया है। इसलिए प्रसिद्ध देवतावाची अर्थ में ही ईत्व और षत्व हुआ है; वह ईत्व षत्व लक्षणा करने के बाद भी रह ही गया। किन्तु यदि पहले ही अग्नि को अग्निसदृश में गौण-लक्षणा करके लाक्षणिक अग्नि और सोम पदों में द्वन्द्व करें तब तो यह द्वन्द्व, प्रसिद्ध देवतावाची 'अग्नि सोम' पदों में न होकर 'तत्सदृश तन्नामक माणवकौ' इस अर्थ में होगा। इसलिए यहाँ न ईत्व होगा और न षत्व। क्योंकि यहाँ अग्नि और सोम शब्द द्वन्द्व करते समय गौण लाक्षणिक हैं और समास के बाद अप्रसिद्धार्थक हैं।

इसीलिए "अग्निसोमौ माणवकौ" यहाँ गौणमुख्यन्याय के द्वारा ईत्व और षत्व के निवारण का प्रतिपादक "अग्नेः स्तुत्स्तोमसोमाः" ८.३.८२ इस सूत्र का भाष्य संगत होता है:

गाम्पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासम्भवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेण।त्वं, त्वं सम्पद्यते, अमहान् महान् भूतस्त्वद्भवतीत्यादिभाष्य-प्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ॥

---

परम् अग्नेः स्तुत्स्तोमसोमाः ८.३.८२ इति सूत्रस्थं भाष्यं संगच्छते। इत्थमस्ति तत्रत्यं भाष्यम्:—अग्नेर्दीर्घात्सोमस्य १ । अग्नेर्दीर्घात्सोमस्येति वक्तव्यम् । अग्नीषोमौ। इतरथा ह्यनिष्टप्रसङ्गः—१। इतरथा ह्यनिष्टं प्रसज्येत अग्निसोमौ माणवकाविति ॥ तर्त्हि वक्तव्यम्। न वक्तव्यम् । गौणमुख्ययोर्मुख्ये सम्प्रतिपत्तिः । तद्यथा गौरनुबन्ध्योऽजोग्नीषोमीय इति न वाहीकोऽनुबध्यते। कथं तर्हि वाहीके वृद्धचा-त्वे भवतः—गौस्तिष्ठति गामानयेति ॥ अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्धचात्त्वे ।

अत्र कैयटः लौकिक एवायं न्यायः शास्त्र आश्रीयते। स्वं रूपं शब्दस्येति रूपग्रहणादर्थवद्रूपमाश्रीयते। स चार्थो मुख्य एव गृह्यते न तु गौणः। तत्र प्रसिद्धच-प्रसिद्धिभ्यां मुख्यगौणव्यवस्थेति माणवके संज्ञात्वेन विनिर्मुक्तावग्निसोमशब्दौ गौणार्थाविति षत्वाभावः।

---

यद्यपि "गाम्पाठय" यहाँ कर्म संज्ञा करने के लिए गो शब्द का विभक्ति की उत्पत्ति के काल में ही पाठन क्रिया के साथ अन्वय करना आवश्यक है, किन्तु मुख्य गो पदार्थ का पाठन क्रिया के साथ अन्वय होना असम्भव हैं; इसलिए विभक्ति की उत्पत्ति काल में ही यहाँ गो शब्द का गौणार्थ मानना अनिवार्य है; फिर गौणा-र्थक गो शब्द को 'औतोमृशसोः" ६.१.९३ से आत्व की समस्या आ खड़ी होती है तथापि यहाँ विभक्ति के समय गौणार्थकता की प्रतीति प्रयोक्ता (वक्ता) को होने पर भी "अपदं न प्रयुञ्जीत" इस भाष्य के अनुसार अपद का प्रयोग हो नहीं सकता था। इसलिए बोद्धा (श्रोता) को सब जगह पद में ही गौणार्थकता का ज्ञान होगा। इसलिए "गाम्पाठय" में श्रोता के गौणार्थकता के ज्ञान से पहले ही आत्वादि कार्य हो जायगा। अतः आत्व होने में कोई बाधा नहीं दिखाई पड़ती। तात्पर्य यह है कि जब और जहाँ श्रोता को यह ज्ञान हो कि यह शब्द गौणार्थक है; तब और वहीं गौणमुख्य न्याय की प्रवृत्ति होती है जैसे "अग्निसौमौ माणवकौ" में द्वन्द्व समास के पहले यदि श्रोता को यह ज्ञान है कि ये अग्नि और सोम शब्द सदृश लाक्षणिक है; तो यहाँ परिभाषा की प्रवृत्ति होने से ईत्व और षत्व नहीं होंगे। प्रसिद्ध देवता वाची को द्वन्द्व करने के कारण जहाँ पर श्रोता को प्रथम श्रवण के क्षण में उनके सदृश लाक्षणिक होने का बोध नहीं है; वहाँ ईत्व षत्व बेखटके होंगे।

यद्यपि गां पाठयेत्यादौ सास्नादिमद्रूपस्य गवार्थस्य मुख्यस्याध्यापनासम्भवाद्-विभक्त्युत्पत्तिकालेऽपि वक्तुर्गौणार्थज्ञानात् 'किञ्चायं न्यायो न प्रातिपदिककार्ये प्रवर्तते प्रातिपदिकसंस्कार-वेलायां गौणत्वाप्रतीतेः किन्तु पदकार्ये एवेति कथन-मसङ्गतं प्रतिभाति तथापि अपदं न प्रयुञ्जीतेति सिद्धान्तेन बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकस्य प्रतीत्या अत्वं त्वं सम्पद्यते, अमहान् महान् भूतः त्वद्भवतीत्यादिभाष्य-प्रयोगेषु त्वम्त्वदित्याद्यादेशस्य महतो दीर्घस्य च दर्शनादियं पदकार्ये एव प्रवर्तते न प्रातिपदिकानां प्रयोगार्हत्वसम्पादकतत्संस्कारकार्ये इति निर्णयात् । विभक्तिनिमित्त-ककार्येऽपि परिभाषाप्रवृत्तौ वाक्यसंस्कारपक्षे दीर्घादिकार्याणि न स्युः ।

---

वस्तुतस्तु प्रयोक्ता को ही प्रयोग के निमित्त का ज्ञान होना आवश्यक है। जो शब्द का प्रयोग करता है; उसे ही प्रयोग के साधुत्व या असाधुत्व का, कहाँ किस सूत्र की प्रवृत्ति की गुंजाइश है और कहाँ नहीं है:इस का ज्ञान होना आवश्यक है। यदि प्रयोक्ता को यह ज्ञान है कि 'गाम्पाठय' में गो शब्द का मुख्य अर्थ विवक्षित नहीं है, यहाँ तो गौण अर्थ की ही विवक्षा है; तो गौण अर्थ में इस परिभाषा के कारण औतोऽम्शसोः की प्रवृत्ति नहीं करानी चाहिए। प्रयोक्ता को ही यह अधिकार देना होगा कि वह मुख्यार्थ में तात्पर्य रहने पर शास्त्र की प्रवृत्ति होने दे। और गौणार्थ में तात्पर्य होने पर शास्त्र की प्रवृत्ति न होने दे। अग्नीषोमौ और 'अग्निसोमौ माणवकौ' में पूर्वोक्त तात्पर्यग्रह का समय भेद होने के कारण क्रमशः कार्य और कार्याभाव सिद्ध हो सकते हैं। इसलिए प्रयोक्ता को स्वज्ञानानुसार शास्त्र प्रवृत्ति और अप्रवृत्ति का अधिकार सौंपने पर भी किसी तरह का भाष्य विरोध नहीं होता; ऐसी स्थिति में पूर्वोक्त भाष्य से यह सिद्ध नहीं किया जा सकता कि विभक्ति कार्य में परिभाषा की प्रवृत्ति नहीं हो; फिर 'गाम्पाटय' में आत्व' का सम्पादन कैसे होगा ? यह प्रश्न रह जाता है। इसका समाधान यह हैं "अत्वं त्वं सम्पद्यते" अमहान् महान् भूतः' अत्वं त्वं भवति इति त्वद्भवति इत्यादि भाष्यप्रयोगों में भाष्यकार ने 'त्वं' में 'त्वाहौ सौ' से त्व आदेश, "महान्भूतः" में सान्तमहतः से दीर्घ और त्वद्भवति में प्रत्ययोत्तरपदयोश्च से 'त्व' आदेश गौणार्थक होने पर किया है। इससे ज्ञात होता है कि यह परिभाषा पद कार्य ही प्रवृत्त होती है। विभक्तिनिमित्तक कार्य (प्रातिपदिककार्य) में भी यदि इस परिभाषा की प्रवृत्ति हो तो वाक्यसंकारपक्ष में पूर्वोक्तप्रयोगों में त्वादि आदेश विधायक सूत्रों की प्रवृत्ति नहीं होगा।

पूर्वोक्त प्रयोग की सिद्धि अगर पदसंस्कार पक्ष से करें तो कोई दोष नहीं होगा; क्योंकि पद संस्कार पक्ष वह है; जहाँ "पदानि संस्कृत्य प्रयुज्यन्ते" अर्थात् पदों का पृथक् पृथक् संस्कार करके वाक्य में प्रयोग किया जाता है। इस तरह अभूत-तद्भावविवक्षा में जो त्वादेशादि हो चुके हैं उनका बाध नहीं होने से कोई दोष नहीं दिखाई देता। वाक्यसंस्कारपक्ष में दोष की संभावना होने पर भी "एकतरपक्षेण

किंच शुक्लामित्युक्ते कर्म निर्दिष्टं कर्तृक्रिये चानिर्दिष्टे इत्याद्युक्त्वेहेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म, देवदत्त एव कर्ता, अभ्याजैव क्रियेत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रय-

---

ननु त्वाद्यादेशकरणेन पूर्वोक्तप्रयोगेषु पदसंस्कारपक्षो भाष्यकारेणाश्रित इति कल्प्यताम् पदं संस्कृत्याभूततद्भावविवक्षा पश्चात्तत्र कृता। अतस्तत्र जात-संस्कारस्य बाधायोगात् त्वाद्यादेशा दृश्यन्ते। एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तर-मवलम्ब्य दोषदानमयुक्तमिति सिद्धान्तेन तत्र वाक्यसंस्कारपक्षो नोपादेय इति चेत्तर्हि श्रूयताम् न केवलं बोद्धा; अपितु प्रयोक्ताऽपि गौणार्थं—गुणयोगादागतं द्वितीय-मर्थं तदैव जानाति यदा शब्दः परिनिष्ठितरूपतां भजते। अयमर्थः अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १.२.४५ इति सूत्रभाष्यादपि ध्वन्यते। इदं हि तत्रत्यं भाष्यम्—पदार्था-भिसम्बन्धस्योपलब्धिः (वा०) पदार्थादन्यस्यानुलब्धिरिति चेद्। इदमुच्यते—पदार्था-दन्यस्यानुपलब्धिरिति चेत्। पदार्थाभिसम्बन्धस्योपलब्धिर्भवति वाक्ये। इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः कर्म क्रियागुणौ चानिदिष्टौ। गामित्युक्ते कर्म निर्दिष्टम् कर्ता क्रियागुणौ चानिर्दिष्टौ। अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी गुणश्चानिर्दिष्टः। इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टम्—देवदत्त एव कर्ता नान्यः, गामेव कर्म नान्यत्। अभ्याजैव क्रिया नान्या। शुक्लामेव न कृष्णाम्" इत्यादि•••"। अनेन भाष्येण सामान्यतः क्रियाकर्मत्वादिविवक्षया द्वितीयादिविभक्तेः साधुता ज्ञायते। तथाच गौणस्थलेऽपि मुख्यार्थे एव पदं साधयित्वा पश्चाद् गौणार्थविवक्षा प्रयोगकर्तुरपि

---

लक्ष्यसिद्धौ पक्षान्तरेण दोषदानमन्याय्यम्" अर्थात् दो पक्षों में से किसी एक के अवलम्बन से यदि इष्ट कार्य सिद्ध हो जाय; तो पक्षान्तर का सहारा लेकर दोष देना उचित नही होगा, इस लिए 'गाम् पाठय' में आत्व की सिद्धि हो जायगी परन्तु पद कार्य में ही यह परिभाषा लगती है, इस बात की सिद्धि नहीं हुई इस प्रश्न का उत्तर देते हुए लिखते हैं "**किञ्च शुक्लाम्**" इत्यादि। अर्थवत् सूत्र के भाष्य में कहा गया है कि "शुक्लाम्', इतना कहने पर केवल कर्म का निर्देश किया जाता है वहां कर्ता औरक्रिया अनिर्दिष्ट हैं इतना कहकर वहाँ भाष्य कार ने आगे कहा कि गामभ्याज कृष्णां देवदत्त ! इत्यादि स्थलों में 'गाम्' ही कर्म है, 'देवदत्त' ही कर्ता और 'अभ्याज' ही क्रिया है। इससे सिद्ध होता है कि कर्म कारकादि-मात्र के प्रयोग में कर्म संज्ञादि सम्पादन में योग्य सभी क्रिया का अध्याहार प्राप्त होने पर क्रियावाचक शब्दादि का प्रयोग नियमार्थ होता हैं। इस भाष्य से यह संकेत मिलता है कि सामान्यतः क्रियाजन्यफलाश्रयत्व मात्र की विवक्षा में द्वितीयादि-

**त्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि । एवमेतन्मूलकः "अभिव्यक्तपदार्था ये" इति श्लोकोऽपि पदकार्यविषयकः ॥**

---

भवतीति फलति पूर्वोक्तात् भाष्यात् । एवञ्च पदकार्येऽसौ प्रवर्तते न्यायो न तु प्रातिपदिकार्ये इति स्पष्टमेव । 'अग्नीषोमौ' 'अग्निसोमौ' इत्युभयविधप्रयोगदर्शनात् क्वचिद् द्वन्द्वं कृत्वा गौणार्थविवक्षा, कुत्रचिच्च गौणार्थविवक्षानन्तरं द्वन्द्व इति कल्पनीयम् शास्त्रस्यास्य स्थितस्य गतिदर्शकत्वात् ।

"**अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।**
**शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥** इति

प्रसिद्धस्य श्लोकस्य मूलं गौणमुख्यन्याय एव । अतो यथा गौणमुख्यन्यायः पदकार्यविषयकस्तथायं श्लोकोऽपि । ये शब्दाः स्वतन्त्राः गुणयोगादिकारणमूलकलक्षणादिव्यापारमनपेक्षमाणा लोकव्यवहारादिना प्रसिद्धिं प्राप्ता अतएवाभिव्यक्तपदार्थाः (प्रसिद्धार्थाः) सन्ति तेषु शब्देषु मुख्यार्थाभिधानाय प्रयुक्तेषु शास्त्राणां सूत्राणाम् अर्थः प्रवृत्तिरूपः कर्तव्यः ततो मुख्यार्थादन्येऽर्था उच्यन्ते यैस्तेषु तदुक्तिषु शास्त्रार्थः-सूत्रप्रवृत्तिरूपः न कर्तव्य इति श्लोकार्थः । गौणमुख्यन्यायस्य पदकार्यविषयकत्वं पाणिनिकात्यायनपतञ्जलीनां त्रयाणामप्याचार्याणां सम्मतम् । अतएव "पूर्वपरावर"—१.१.३४ इति सूत्रे पाणिनिनाऽसंज्ञायामिति संज्ञापर्युदासः कृतः, कात्यायनेन च संज्ञोपसर्जनप्रतिषेध इति वार्तिकं कृतम्: पतञ्जलिना च सर्वनामेति महासंज्ञाकरणसामार्थ्यादन्वर्थतामाश्रित्य सर्वेषां नामानीति चातः सर्वनामानि इति व्याख्यानात्मकं प्रयासं विधाय तद्वार्तिकं प्रत्याख्यातम् । अन्यथानया परिभाषयैव संज्ञायां संज्ञावारणसम्भवे तत्कृते कृता आचार्याणां ते ते प्रयासा विफलाः स्युः ।

---

विभक्ति हो जाया करती है । इस तरह गौण स्थलों में भी मुख्यार्थवाचक शब्द की तरह क्रिया-कर्मत्वादि की विवक्षा के द्वारा पद बनाकर प्रयोगकर्ता भी बाद में गौणादि की विवक्षा करता है । इस तरह पद बनने के पहले गौणार्थ की विवक्षा का अभाव होने के कारण इस परिभाषा की प्रवृत्ति नहीं होती है । इस तरह स्पष्ट है कि पदकार्य में ही यह न्याय लगता है, प्रातिपदिक कार्य में नहीं । "अग्नीषोमौ" अग्निसोमौ इन दोनों प्रकार के प्रयोगों के उपलब्ध होने के कारण लक्ष्य देखकर कहीं द्वन्द्व करके गौणार्थ की विवक्षा की जायगी और कहीं पद में द्वन्द्व करने के पहले ही गौणार्थ की विवक्षा की जायगी । "चानिर्दिष्टे" यह प्रयोग असाधु है; क्योंकि कर्तृक्रिये चानिर्दिष्टे यहां "पुमान् स्त्रिया" से एकशेष होकर पुंल्लिङ्ग का ही शेष रहने के कारण "अनिर्दिष्टौ" कहना चाहिए । इसी प्रकार गामेव कर्म" यह अनन्वित है, इस लिए (गाम्) का अर्थ "इस पद का वाच्य करना चाहिए ।

"**अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।**
**शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥**

**ध्वनितं चेदं 'सर्वादीनी'ति सूत्रे संज्ञाभूतानां प्रतिषेधमारभता वर्तिककृता पूर्वापरेति सूत्रेऽसंज्ञायामिति वदता सूत्रकृताऽन्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च ॥**

---

**सर्वादीनि सर्वनामानि** १.१.२७ सूत्रस्थं भाष्यम् यथा—संज्ञापसर्जनप्रतिषेधः (वा० २) संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिसर्वाय देहि। स कथं कर्तव्यः। पाठात् पर्युदासः। पठितानां संज्ञाकरणम् (वा० ३) पाठादेव पर्युदासः कर्तव्यः। शुद्धानां पठितानां संज्ञा कर्तव्या। सर्वादीनि सर्वनामसंज्ञानि भवन्ति।···संज्ञा प्रतिषेधस्तावन्न वक्तव्यः। उपरिष्टात् योगविभागः करिष्यते। पूर्वपराव···व्यवस्थायाम् ततोऽसंज्ञायामिति।··· महतीयंसंज्ञा क्रियते संज्ञा नाम यतो न लघीयः······तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम्। अन्वर्थसंज्ञा यथा विज्ञायेत। सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां नामानीति चातः सर्वनामानि संज्ञोपसर्जने च विशेषे अवतिष्ठेते ॥

---

इस श्लोक का, जिसका मूल गौणमुख्य न्याय है, विषय भी पद कार्य ही मानना चाहिए। तात्पर्य यह है अग्नेर्ढक् इत्यादि शास्त्रों की प्रवृत्ति (शास्त्रार्थः) ऐसे शब्दों में माननी चाहिए; जिनके अर्थ अभिव्यक्त हों, स्वतन्त्र हो लोकविश्रुत हों। उन शब्दों में नहीं करनी गाहिए, जहाँ केवल उन शब्दों की उक्ति हो; परन्तु उनका अर्थ (स्वतन्त्र) प्रधान न हो। इस कथन के मूल में भी यही न्याय है। इस लिए जब उस न्याय के लिए यह स्थिर हो गया कि वह न्याय प्रातिपदिक कार्य में नहीं लगता, तो उसीके आधार पर स्वीकृत उक्त श्लोक का विषय भी पद कार्य को ही मानना चाहिए।

गौण मुख्य न्याय का विषय पदकार्य मात्र है यह बात, वार्तिककार के (संज्ञाभूतानां सर्वनाम संज्ञा-प्रतिषेधो वक्तव्यः' इस वार्तिक से, पाणिनि के पूर्वापराधरोत्तर" इस सूत्र में "असंज्ञायाम्" इस प्रतिषेध से, सर्वनाम को अन्वर्थ मान कर पूर्वोक्त वार्तिक और असंज्ञायाम् इस सूत्रांश के प्रत्याख्याता भाष्यकार के प्रत्याख्यान से भी ध्वनित होती है। तात्पर्य यह है कि व्यक्तिवाचक संज्ञा के रूप प्रयुक्त सर्व आदि को "सर्वायदेहि" इत्यादि स्थलों में कहीं सर्वनाम संज्ञा न हो जाय; इसलिए वार्तिककार ने वार्तिक बनाया कि संज्ञा के रूप में प्रयुक्त सर्वादि शब्दों को सर्वनामसंज्ञा का प्रतिषेध करना चाहिए। इसलिए "सर्वाय" देहि में सर्वनाम संज्ञा नहीं होगी। वार्तिककार ने ही, क्यों, सूत्रकार ने भी "पूर्वापरा" सूत्र में "असंज्ञायाम्" का निवेश कर अपनी यह इच्छा जाहिर की कि संज्ञावाची पूर्वादि को सर्वनाम संज्ञा न हो। भाष्यकार ने कहा न वार्तिक बनाने की आवश्यकता है और न "असंज्ञायाम्" इस निषेध की, क्योंकि सर्वनाम यह महती संज्ञा करने के कारण यह व्युत्पत्ति करेंगे कि सभी नामों के लिए जो प्रयुक्त होता हो वही शब्द सर्वनाम कहलाने का अधिकारी है।

अर्थाश्रय एतदेवं भवति शब्दाश्रये च वृद्धयात्वे इति 'ओत्' सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायः। तद्रहितशब्दाश्रये च ते इत्यर्थः। 'गोत' इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥१६॥

---

'ओत्' १.१.१५ इति सूत्रे भाष्ये 'गौर्वाहीकः' गां पाठयेत्यादौ गौणमुख्यन्यायप्रवृत्त्या णित्वप्रयुक्तवृद्धेरात्त्वस्य चाभावमाशङ्क्य "अर्थाश्रये एतदेवं भवति शब्दाश्रये च वृद्धयात्वे" इति समाधानं कृतम्। तथाच प्रातिपदिककार्यत्वेन परिभाषाप्रवृत्तिवारणमसङ्गतमिति न वाच्यम् लौकिकार्थवत्त्वस्य पदे एव सत्त्वेन अर्थाश्रय इत्यस्य पदाश्रय इति तात्पर्यावधारणात् शब्दाश्रय इत्यस्य च प्रातिपदिकाश्रय इति तात्पर्यनिश्चयात्। 'गोतो णित्' ७.१.९० इति सूत्रशरीरे विशिष्टरूपोपादानसत्त्वादर्थोपस्थित्या वृद्धयात्वयोरप्यर्थाश्रयत्वेन परिभाषाप्रवृत्तेरशक्यवारणत्वेन भाष्यग्रन्थस्य प्रतीयमानाया असंगतेर्निरासाय पूर्वोक्तरीत्यैव व्याख्यानमावश्यकम् ॥

॥इति शिवम्॥

---

संज्ञावाचक और उपसर्जन 'सर्व' शब्द सभी नामों के बदले नहीं आ सकते हैं, और न वे प्रधान प्रसिद्ध स्वार्थ वाचक हैं, इसलिए वे सर्वनाम नहीं माने जायेंगे। उनका समावेश सर्वादिगण में नही माना जा सकता। इससे स्पष्ट है कि गौणमुख्य न्याय की प्रवृत्ति प्रातिपादिक कार्य में नहीं होती है, किन्तु केवल पदकार्य में होती है। यदि प्रातिपदिक कार्य में उक्त न्याय की प्रवृत्ति होती तो सर्वाय (सर्वनामकाय कस्मैचित् नराय) देहि, यहाँ 'गौण मुख्य' न्याय से ही सर्वनाम संज्ञा और तत्प्रयुक्त 'स्मै' आदि आदेश का निवारण हो ही जाता, वार्तिककार को पूर्वनिर्दिष्ट वार्तिक बनाने की क्या आवश्यकता थी? इसी तरह उक्तन्याय से ही "उत्तराः कुरवः" संज्ञावाची 'उत्तर' शब्द को सर्वनामसंज्ञा और तत्प्रयुक्त 'जसः शी' सूत्र का वारण हो ही जाता सूत्रकार "सूत्र में असंज्ञायाम् क्यों कहते? भाष्यकार भी इस न्याय से संज्ञा और उपसर्जन में सर्वनाम संज्ञा और तत्कार्य के निवारण में समर्थ हो जाते; उन्हें भी अन्वर्थसंज्ञा के आश्रयण तक दौड़ने की क्या आवश्यकता थी। आचार्यों ने इस न्याय का सहारा नहीं लिया है। इससे सिद्ध हैं कि उन्हें प्रातिपदिक कार्य में इस न्याय की प्रवृत्ति अभीष्ट नहीं थी।

यद्यपि भाष्यकार ने गौर्वाहीकः "गां पाठय" इत्यादि में पहले गौणमुख्य न्याय की प्रवृत्ति दिखाकर वृद्धि और आत्व की क्रमशः अप्राप्ति दिखायी और बाद में समाधान देते हुए लिखा कि अर्थाश्रय में यह परिभाषा लगती है और शब्दाश्रय में वृद्धि और आत्व होते हैं। ऐसी स्थिति में प्रातिपदिक कार्य होने के कारण परिभाषा की पूर्वोक्त अप्रवृत्ति दिखाना भाप्यविरुद्ध प्रतीत होता है तथापि "अर्थाश्रये परिभाषा प्रवृत्तिः" में अर्थाश्रये का तात्पर्य यह मानना चाहिए "लौकिकार्थाश्रये" पदे, क्योंकि लौकिकअर्थवत्ता पद में ही रहती है इसलिए 'अर्थाश्रये' का तात्पर्य

अर्थवद्ग्रहणे इत्यस्यापवादमाह—

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।।१७।।**

'येन विधिरि'त्यत्र भाष्ये वचनरूपेण पठितैषा । तेन राज्ञा साम्नेत्यादाव-

---

अनिनस्मन्ग्रह......प्रयोजयन्ति ।।१७।।

परिभाषेयं येनविधिस्तदन्तस्य १.१.७२ इति सूत्रस्य भाष्ये वचनरूपेण पठिता विलोक्यते । तथाहि—अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । अन् । राज्ञेत्यर्थवता साम्नेत्यनर्थकेन । इन् । दण्डीत्यर्थवता वाग्मीत्यनर्थकेन । अस् सुपया इत्यर्थवता सुस्रोता इत्यनर्थकेन । मन् सुशर्मेत्यर्थवता, सुप्रथिमेत्यनर्थकेन ।

इयमर्थवद्ग्रहणपरिभाषाया बाधिका, अपवादत्वात् । यद्यपि वचनरूपेण पठिता तथाप्यत्र "कार्मस्ताच्छील्ये', ६.४.१७२ इति कार्म्मनिपातनमस्या एकदेशानुमत्या ज्ञापकमन्वेष्यम् । तच्च निपातनम् 'अन्' ६.४.१६७ इति प्राप्तप्रकृतिभावबाधनार्थं क्रियते । अदि चेयं परिभाषा न स्यात्तदात्रानो निरर्थकत्वाद् ग्रहणाभावादन् इति प्रकृतिभावाप्राप्त्या 'नस्तद्धिते' ६.४.१४४ इति टिलोपेनैव सिद्धे तन्निपातनाय रचितं सूत्रं व्यर्थं स्यात् ।

---

पद रूप आश्रय ही ठहरता है । इसलिए भाष्य के साथ कोई विरोध नहीं आता । 'शब्दाश्रये का तात्पर्य लौकिकार्थरहित अर्थात् प्रातिपदिक" है क्योंकि अपद का प्रयोग नहीं होने के कारण प्रातिपदिक में "लोकेऽर्थबोधजनकता" नहीं है ।

ऐसी व्याख्या करना आवश्यक भी है अन्यथा यदि 'अर्थाश्रय' का अर्थ, अर्थ का आश्रय मानें तो "गोतो णित्" में "गो" इस विशिष्ट रूप के उपादान होने के कारण परिभाषा की प्रवृत्ति माननी पड़ेगी और गौर्वाहीकः की सिद्धि नहीं होगी । उक्त व्याख्यान के अतिरिक्त किसी और युक्ति से "गोतो णित्" इत्यादि में परिभाषा का वारण नहीं कर सकते । इस लिए उस भाष्य की व्याख्या उसी रूप में करना अनिवार्य है । ।।इति शिवम्।।

**अर्थवद् ग्रहणे** इस परिभाषा की अपवाद (बाधिका) परिभाषा बताते हैं;

**अनिनस्मन्ग्रहणानि...प्रयोजयन्ति**

अन्, इन् अस्, मन् आदि के ग्रहण में अर्थवद्ग्रहणपरिभाषा की प्रवृत्ति नहीं होती है । अर्थात् अन् इन् अस् मन् के ग्रहण वाले सूत्रों की प्रवृत्ति उन शब्दों में भी होती है; जहाँ अन्त में ये सार्थक बन कर आते हैं, साथ साथ जहाँ ये निरर्थक बनकर भी अन्त में हैं, वहाँ भी उन सूत्रों की प्रवृत्ति होती है । अन्, इन्, अस्, मन् इनके ग्रहण अन् इन् अस् मन् अन्त वाले विधियों की प्रवृत्ति इनके सार्थक या निरर्थक रहन पर कराते हैं अर्थात् सार्थक 'अन्' जिनके अन्त में हैं, वे, और जिनके अन्त में निरर्थक अन् है वे दोनों अन्नन्त माने जाते हैं ।

'येन विधिः" सूत्र के भाष्य में यह परिभाषा वचनरूप से पढ़ी गयी है । इसी लिए राज्ञा यहाँ जैसे अर्थवान् अन् की उपधा का लोप अन्नन्त मान कर

**ल्लोपो दण्डी वाग्मीत्यादौ 'इन् हन्नि'ति नियमः सुपयाः सुश्रोता इत्यादौ 'अत्व-सन्तस्ये'ति दीर्घः सुशर्म्मा सुप्रथिमेत्यादौ 'मन' इति ङीब्निषेधश्च सिद्धः ॥**

---

अर्थवता अनर्थकेनेत्युभयत्र प्रकृत्यादिभ्य उपसंख्यानम् (सि० कौ० करण का० प्रक०) इत्यभेदे तृतीया। तेन प्रकृत्या चारुरित्यत्र यथा प्रकृतिश्चारुरिति शक्यते वक्तुम् तथा अनिनस्मन्ग्रहणानि सार्थवन्ति चानर्थकानीति। तदन्तविधिमित्यस्य ते (प्रत्यया) अन्ता येषां तानि तदन्तानि तेषु विधिस्तमिति विग्रहः। अनिनस्मन्ग्रहणानि सार्थकानि अर्थरहितानि वा भवन्तु उभयविधान्यपि अन्नन्तेन्नन्तासन्तमन्नन्तानि मन्यन्ते तत्प्रयुक्तानि कार्याणि च लभन्ते इति परिभाषार्थः। सार्थकानर्थकोभयविधानि अनिनस्मन्ग्रहणानि अनिनस्मन्नन्तविधिप्रयोजकानि भवन्तीत्यक्षरानुगुणार्थः। इह शब्दशास्त्रेऽनिनस्मन्नन्तपदघटका अनिनस्मनः सार्थका अनर्थकाश्चोभयविधा ग्राह्याः एतद्विषयेऽर्थवद्ग्रहणपरिभाषा न प्रवर्तत इति तात्पर्यम्। यद्यपि अन्नादयः सर्वे लोके निरर्थका एव तथाप्येषामर्थवत्ता व्याकरणशास्त्रसम्मतास्त्येव।

राजते इति विग्रहे राज्-धातोः "कनिन् युवृषितक्षिराजि—(१.१५८) इत्युणादिसूत्रेण कनिन् प्रत्ययेन निष्पन्ने राजन् शब्देऽन्प्रत्ययः अर्थवान्, सोधातो "सर्वधातुभ्यो मनिन्" (४.३४७) इत्युणादिसूत्रेण मनिन् प्रत्ययेन निष्पन्ने सामशब्देऽन् अनर्थकः। अनया परिभाषया उभयोरल्लोपोऽनः ६.४.१३४ इत्यत्रत्येनान्नन्तपदेन ग्रहणाद् राज्ञा साम्ना इत्युभयत्रानोऽकारस्य लोपो जायते। दण्डोऽस्यास्तीति दण्डीत्यत्र

---

'अल्लोपोऽनः' ६.४.१३४ से होता है; उसी तरह साम्ना में "सामन्" के निरर्थक अन् की उपधा का भी लोप होता है। 'दण्डी' में 'इन् हन् पूषार्यम्णां शौ' ६.४.१२ सौ च ६.४.१३ से जैसे सार्थक इन् की उपधा को दीर्घ होता है उसी तरह 'वाग्मी' में अनर्थक इन् की उपधा को भी दीर्घ होता है। "सुपयाः" में सार्थक अस् की उपधा की तरह 'सुस्रोताः' में निरर्थक 'अस्' की उपधा को भी "अत्वसन्तस्य चाधातोः" ६.४.१४ से दीर्घ होता है। सुशर्मा ब्राह्मणी में सार्थक मन् होने के कारण जैसे "मनः" ४.१.११ से मन्नन्त मानकर ङीप् का निषेध होता है; उसी तरह "सुप्रथिमा ब्राह्मणी में भी निरर्थक मन् होते हुए भी मन्नन्त प्राति-पदिक मानकर ङीप् का निषेध हुआ है। यहाँ इमनिच् प्रत्यय का मन निरर्थक है।

राजा में "कनिन् युवृषि—१.१५४ इस उणादिसूत्र से कनिन् हुआ है यहाँ इसलिए वह शास्त्रीय अर्थ से अर्थवान् है। उसका अर्थ है कर्ता। सामन् में सर्व-धातुभ्यः मनिन् प्रत्यय हुआ है। वहाँ मन् अर्थवान् है। किन्तु मन् का अन् निरर्थक। दण्डी में इन् प्रत्यय का अर्थ हाथ में रखने वाला है। क्योंकि वह मतुबर्थ में हुआ है। वाग्मी में तो 'ग्मिन्' प्रत्यय हुआ है। वह सार्थक है; किन्तु इसका एकदेश

"अत इनिठनौ" ५.२.११५ इति विहित इन् प्रत्ययो मतुप इव सार्थकः, वाग्मीत्यत्र च वाचोग्मिनिः ५.२.१२४ इति ग्मिन् प्रत्ययैकदेश इन् निरर्थकः उभयोश्चानया इन् हन् पूषार्यम्णां शौ ६.४.१२ सौ च ६.४.१३ इत्यत्र ग्रहणादिन्नन्तत्वाङ्गीकारादुपधादीर्घः ।

पय्गतौ इत्यस्मात् सर्वधातुभ्योऽसुन्" इत्यसुनि पयस् इति अथवा पीङ् पाने इत्यस्म,त् असुनि गुणेऽयादेशे पयस् इति सिद्धयति । सुन्दरं पयो यस्य स सुपयाः कूप इत्यादौ अस् सार्थकः स्रु—धातोस्तसि प्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे सुन्दरं स्रोतो यस्य स सुस्रोता निर्झर इत्यत्र तस्घटकास् निरर्थकः अनया चासन्तपदेन अत्वसन्तस्य चाधातोः ६.४.१४ इत्यत्रोभयोर्ग्रहणं साध्यते । तेन तयोर्दीर्घः सिद्धयति ।

सुष्ठु शृणोतीति विग्रहे सुपूर्वकात् शृधातोः अन्यभ्योऽपि दृश्यन्ते ३.२.७५ इति मनिन्प्रत्यये 'नेड्वशि कृति' ७.२.८ इतीट्प्रतिषेधे गुणे च कृते निष्पन्ने ब्राह्मणी सुशर्मेत्यत्र मन्प्रत्ययः कर्तरि जातत्वात्सार्थकः, पृथोर्भाव इति विग्रहे 'पृथ्वादिभ्य इमनिज्वा' ५.१.१२२ इति इमनिच् प्रत्यये 'र ऋतो हलादेर्लघोः' ६.४.१६१ इति ऋकारस्य रादेशे' 'टेः' ६.४.१५५ इति टिलोपनिष्पन्नस्य प्रथिमा इत्यस्य सुन्दरः प्रथिमा यस्या इति विग्रहे समासे सुप्रथिमेत्यत्र मन् निरर्थकः तथापि 'मनः ४.१.११ इत्यत्रानया परिभाषया ग्रहणान्मन इत्युभयत्र डीब्निषेधः सिद्धः ।

---

इन् निरर्थक। 'पयस्' पयगतौ से असुन् प्रत्यय से बना है इसलिए वह सार्थक है। स्रोतस् में तसि प्रत्यय है। इसलिए उसका अस् निरर्थक है। शर्मा में शृ धातु से मनिन् सार्थक प्रत्यय हुआ है। प्रथिमा में इमनिच् प्रत्यय है। इसके एक देश मन् में कोई अर्थ नहीं है।

इस परिभाषा का ज्ञापक "कार्म्मस्ताच्छील्ये" ६.४.१७२ इस सूत्र को मान सकते हैं। यह सूत्र ताच्छील्य अर्थ में "कार्म्मः" का निपातन करता है। 'कर्मन्' शब्द से अण् प्रत्यय, आदि अच् को वृद्धि और निपातनात् टिका (अन् का) लोप करने पर कार्म्मः बनता है। यदि यह परिभाषा न रहे तो 'कर्मन्' +अ' ऐसी स्थिति में 'अन्' के निरर्थक होने के कारण यहाँ 'अन्' ६.४.१६७ सूत्र से प्रकृति भाव की तो प्राप्ति थी ही नहीं, फिर "नस्तद्धिते" ६.४.१४४ से अन् का लोप होकर 'कार्मः' बन ही जाता, निपातन सूत्र की क्या आवश्यकता थी। परन्तु सूत्रकार तो जानते हैं कि अन् के ग्रहण में सार्थक और अनर्थक का विचार नहीं होता है ऐसी स्थिति में यहाँ 'अन्' सूत्र से प्रकृतिभाव अनिवार्य था। अतः 'नस्तद्धिते' से टिलोप हो नहीं सकता था। इसलिए निपातन करना आवश्यक था।

यद्यपि उक्त सूत्र केवल "अन्" अंश में ही ज्ञापक हो सकता है; तथापि एकदेशानुमत्या इस सूत्र को सम्पूर्णपरिभाषा का ज्ञापक माना जा सकता है।

'एकदेशानुमति" का तात्पर्य होता है कि जब एकदेश में प्रमाण मिल गया है तो उसके अन्यभाग में कुछ न कुछ प्रमाण होगा इस प्रकार की स्वीकृति।

**अन्ये तु परिवेविषीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणादि'णः षीध्वमि'त्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या तन्मूलकमिदमित्याहुः ॥**

---

अन्ये तु अर्थवत्परिभाषाऽनित्यमूलिकेयम् । अर्थवत्परिभाषा च 'इणः षीध्वम्लुङ्लिटां ढोऽङ्गात्' ८.३.७८ इत्यत्र कृतादङ्गग्रहणादनित्या । अङ्गग्रहणं हि परिपूर्वकाद् विष्धातो विधिलिङि ध्वमि कृतस्य शपो 'जुहोत्यादिभ्यः श्लुः' २.४.७५ इति श्लौ 'श्लौ' ६.१.१० इति द्वित्वेऽभ्याससंज्ञायाम् हलादिशेषे अभ्यासस्य :'निजां त्रयाणां गुणः श्लौ'' ७.४.७५ इति गुणे सीयुडागमे ''लिङः सलोपः'' ७.२.७९ इति सलोपे ''लोपो व्योर्वलि'' १.१६६ इति यलोपे कृते निष्पन्ने 'परिवेविषीध्वम्' इत्यत्र ढत्ववारणाय क्रियते । अन्यथा इणः परस्य 'षी' सम्बन्धिनो धस्य ढत्वापत्तिः । कृते त्वङ्गग्रहणे न दोषः षान्तस्येहाङ्गत्वेन इणन्तस्याङ्गत्वाभावात् । यदि अर्थवद्ग्रहणपरिभाषा नित्या स्यात्तदा तद्बलेनार्थवतः षीध्वमित्यस्य ग्रहणे न परिवेविषीध्वमित्यत्रानर्थक 'षी' शब्दे ढत्वाप्राप्त्या तद्वारणार्थं कृतमङ्गग्रहणं व्यर्थं स्यात् । अतस्तेनार्थवद्परिभाषाया अनित्यत्वादनिनस्मन्ग्रहणेषु तस्या अप्रवृत्या अनर्थकानामपि तेषां ग्रहणमत्र शास्त्रे सिद्धचतीतीयं परिभाषा तदनित्यमूलेति ।

न च व्यतिपूर्वकादस्धातोर्विधिलिङि 'कर्तरि कर्मव्यतिहारे' १.३.१४ इत्यात्मनेपदे ध्वमि, सीयुटि ''लिङः सलोप'' ७.२.७९ इति सलोपे श्नसोरल्लोपः ६.१.१११ इत्याकारलोपे यलोपे उपसर्गप्रादुर्भ्यास्तिर्यच्परः ८.३.८७ इति धातु-सकारस्य षत्वे व्यतिषीध्वमित्यत्रार्थवतः षीध्वमः सत्वात्तत्र ढत्व वारणायाङ्गग्रहणस्य

---

अन्य विद्वान् इस परिभाषा का मूल अर्थवत् परिभाषा' की अनित्यता को मानते हैं। उनका कहना है कि ''इणः षीध्वम्'' ८.३.७८ इस सूत्र में अङ्गग्रहण इस लिए किया गया है कि ''परिवेविषीध्वम्'' में ढत्व न हो जाय। परिपूर्वक विष् धातु जो कि जुहोत्यादि का है, से विधिलिङ् में ध्वम् में शप् को श्लु और ''श्लौ'' ६.१.१० से द्वित्व, अभ्याससंज्ञा हलादिशेष, 'निजां त्रयाणां गुणः श्लौ' ७.४.७५ से अभ्यास को गुण सीयुट के सकार का लोप, परिवेविषीध्वम् में षी सम्बन्धी ध्वम् के होने पर भी इणन्त अङ्ग के आगे 'षी' के विद्यमान न होने के कारण ढत्व नहीं होता यदि 'अर्थवत्' परिभाषा अनित्य न हो तो सार्थक ''षी'' सम्बन्धी 'ध्वम्' को ही ढत्व होगा। यहां धातु 'ष' और सीयुट के 'ई' के मेल से बना हुआ ''षी'' निरर्थक है इसलिए स्वतः 'ढत्व' की अप्राप्ति हो जाती, अतः अङ्ग ग्रहण व्यर्थ होकर ज्ञापन करता है कि उक्त परिभाषा अनित्य है। जब अर्थ-वद्ग्रहण परिभाषा अनित्य हुई, तो अन् इन् आदि में उसकी प्रवृत्ति नहीं होने के कारण और अन् इन् के ग्रहण में सार्थक और अनर्थक दोनों के ग्रहण होने से यह परिभाषा सिद्ध हो गयी।

**'विभाषेट' इत्यत्रानर्थकस्यैव षीध्वमः सम्भवादत्रापि तस्यैव ग्रहणमिति भ्रमवारणायाङ्गादिति परे ।।१७।।**

---

साफल्येन तस्य ज्ञापकत्वस्वीकारो न युज्यत इति वाच्यम् तत्रोपसर्गप्रादुर्भ्यामिति विहितषत्वस्यासिद्धत्वेन षीध्वमोऽभावेनाङ्गग्रहणस्यासाफल्यात् परिभाषाया अनित्य-त्वज्ञापकत्वसम्भवात् ।

परे तु 'व्यतिषीध्वम्' इत्यत्र षीध्वमः सार्थकत्वादर्थवत्परिभाषया ढत्ववारणा-याङ्गग्रहणस्यावश्यकत्वेनार्थवत् परिभाषाया अनित्यत्वज्ञापनासम्भवः । अथ च 'विभाषेटः' ८.६.७९ इत्यत्रोत्तरसूत्रेऽनर्थकस्यैव षीध्वमः सम्भवात् प्रकृतसूत्रेऽप्यन-र्थकस्य ग्रहणसम्भवः । अतः परिवेविषीध्वमित्यादौ ढत्ववारणायाङ्गग्रहणं सार्थकम् । अतो नेयं परिभाषार्थवत् परिभाषाऽनित्यमूला किन्तु वाचनिक्येवेति ।

विजयाकारस्तु "उपसर्गप्रादुर्भ्याम्" इति विहितषस्यासिद्धत्वेन षीध्वमो-ऽभावेन 'व्यतिषीध्वम्' इत्यत्र स्वत एव ढत्वाप्राप्त्या अङ्गग्रहणं न तद्वारणाय कर्तव्यम् । अतस्तदर्थवत्परिभाषाया अनित्यत्वज्ञापनाथमेवेति प्राह ।

।।इति शिवम्।।

——:०:——

---

पर विद्वान् इस बात को नहीं स्वीकार करते हैं उनका कहना है कि सूत्र में "अङ्गात्" सार्थक है, क्योंकि "विभाषेटः ८.३.७९ सूत्र से जहाँ ढत्व होता है; वहाँ 'षी' और 'ध्वम्' दोनों निरर्थक ही मिलते हैं जैसे "अयिषीढ्वम्" और आयिढ्वम् में । अय् धातु से आशीर्लिङि, मध्यमपुरुष के बहुवचन में 'सीयुट्' आदि करने पर 'सीयुट्' को इट् हुआ है यहाँ इड्विशिष्ट षीध्वम्" सार्थक है उसका एकदेश 'षीध्वम्' निरर्थक है इसी तरह "आयिढ्वम्" लुङ् में इट् करने पर इड् विशिष्ट ध्वम् सार्थक है । इट् के आगे विद्यमान ध्वम् तो निरर्थक ही है । इस तरह किसी को यह भ्रम हो सकता था कि जैसे अयिषीढवम् में निरर्थक "षीध्वम्" को ढत्व हो जाता हैं; उसी तरह 'इणः षीध्वम्लुङ्लिटाम्,' सूत्र में भी निरर्थक लिया जा सकता है । इसभ्रम के निराकरण के लिए ही "अङ्गात्" यह कहा गया हैं ।

विजयाकार ने अङ्गग्रहण को अर्थवत् परिभाषा के अनित्य में ज्ञापक माना ही है । व्यतिषीध्वम् में वि+अति पूर्वक 'अस्' धातु से विधिलिङ् में कर्मव्यति-हारमें आत्मनेपद ध्वम् विभक्ति में सीयुट् करने पर व्यति+अस्+ई ध्वम्' इस स्थिति में 'श्नसोरल्लोपः' ६.१.१११ से अकार का लोप, "उपसर्गप्रादुर्भ्यामस्ति-र्यच्परः" ८.३.८७ से सकार को 'ष' करने पर अर्थवान्" मिलने के कारण प्राप्त ढत्व के निवारण के लिए अङ्गग्रहण चरितार्थ है; ऐसा नहीं मानना चाहिए; क्योंकि 'उपसर्गप्रादुर्भ्याम्' से विहितषत्व की ढत्व के प्रति असिद्धता होने पर वहाँ

ननु 'उश्चे' त्यत्र लिङ्सिचावि'त्यत आत्मनेपदेष्वित्येव सम्बध्येतानन्तरत्वादत आह—

**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥१८॥**

वा शब्द एवार्थे । परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इत्यर्थः । एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः ॥

---

**एकयोगनिर्दिष्टानाम्—निवृत्तिः ॥१८॥**

'उश्च' १.२.१२ इत्यत्र सूत्रे 'लिङ्सिचावात्मनेपदेषु १.२.११ इत्यतः अतिसन्निहितत्वादात्मनेपदेष्वित्येव सम्बन्ध्येत इति चेन्न एकयोग निर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरितिपरिभाषास्वीकारात् । एकत्र योगः सम्बन्धस्तेन निर्दिष्टानाम् एकान्वितानामित्यर्थः । वाशब्दश्च एवार्थकः, व्याख्यानात् । एकत्रान्वितानां सहैवानुवृत्तिनिवृत्ती भवत इति परिभाषाया अक्षरानुगुणार्थः । तेन कित्त्वेऽन्वितानां लिङसिजात्मनेपदानां सहैवानुवृत्तिर्भवति । परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इति परिभाषायाः फलितार्थः । लोके एककार्यनियुक्ताः कर्मचारिणः यथा सहैव कार्ये प्रवर्तन्ते निवर्तन्ते च तथैव शास्त्रेऽपीति युक्तिरस्यां परिभाषायां मूलम् ॥

---

'षीध्वम्' का मिलना संभव नहीं है । इसलिए सूत्र के चरितार्थ की कथा निर्मूल है । आगम होने पर आगमविशिष्ट आगमी अर्थवान् होता है । इसलिए "अयिषीढ्वम् में "विभाषेटः" की प्रवृत्ति जैसे अनर्थक "षीध्वम्" में होती है वैसे इणः षीध्वम्" भी अनर्थक सीध्वम् में प्रवृत्त हो, यह कल्पना नहीं की जो सकती इस तरह अङ्गग्रहण की ज्ञापकता निर्वाध सिद्ध होती है ।

॥इति शिवम्॥

**एकयोगनिर्दिष्टानां—निवृत्तिः ॥१८॥**

"लिङ्सिचावात्मनेपदेषु" सूत्र १.२.११ अङ्क का है और इस के बाद का सूत्र है उश्च १.२.१२ । उश्च सूत्र में लिङसिचौ इसकी और 'आत्मनेपदेषु' इस की अनुवृत्ति होती है; तब सूत्र का अर्थ होता हैं ऋवर्ण से पर झलादि लिङ् और तङ् परक जो झलादि सिच् दोनों कित् होते हैं । परन्तु ऐसा अर्थ नहीं होना चाहिए, क्योंकि उत्तरसूत्र "उश्च" में पूर्वसूत्र के निकटवर्ती पद "आत्मनेपदेषु" की ही अनुवृत्ति होगी "लिङ् और सिचौ" की नहीं, इस प्रश्न के निवारण के लिए परिभाषा मानते हैं—"एक योगनिर्निष्टानां सह वा प्रकृतिः सह वा निवृत्तिः" परिभाषा में 'वा' शब्द का अर्थ 'एव' 'ही' है । "योग का यहाँ अर्थ है सम्बन्ध। "एकस्मिन् योगः सम्बन्धस्तेन निर्दिष्टानाम्" इस विग्रह के अनुसार एकत्र परस्पर संबन्ध पूर्वक निर्दिष्ट पदों की प्रवृत्ति और निवृत्ति दोनों साथ साथ ही होगी । इसी का फलितार्थ लिखते हुए कहते हैं कि परस्पर अन्वितार्थ पदों की

यत्त्वत्र ज्ञापकं 'नेड्वशि' इत्यत इडित्यनुवर्त्तमान 'आर्द्धधातुकस्येट्' इत्यत्र पुनरिड्ग्रहणं तद्धि नेत्यस्यासम्बन्धार्थमिति तन्न। 'दीधीवेवीटामि'ति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड् ग्रहणेऽनुवर्त्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकारा-भावार्थकत्वस्योक्तत्वेन तद्विरोधात्। नञो निवृत्तिस्तु क्वचिदेकदेशोऽप्यनुवर्त्तत इति न्यायेन सिद्धा॥

---

केचित्तु (नीलकण्ठदीक्षितास्तु) स्वपरिभाषावृत्तौ (परिभाषा सं० १९) 'नेड्वशि कृति' ७.२.८ इतिसूत्रादिडित्यस्यानुवृत्त्यैव सिद्धे 'आर्धधातुकस्येड्वलादेः ७.२.३५ इत्यत्र पुनः कृतमिड्ग्रहणमस्याः परिभाषाया ज्ञापकम्। ज्ञापितायान्त्व-स्यां 'नेड्वशीत्यतः इडनुवृत्तिस्वीकारे इटा सह नकारोप्यनुवर्तेत तन्निवृत्त्यर्थमिड्ग्रहणम् 'आर्धधातुकस्येड्वलादे'रित्यत्र चरितार्थमित्याहुस्तन्न 'दीधीवेवीटाम् १.१.६ इति सूत्रे "इटश्चापि ग्रहणं शक्यमकर्तुम् कथमकणिषम् अरणिषम् कणिता श्वो रणिता श्व इति। आर्धधातुकस्येड्वलादेरित्यत्रेडिति वर्तमाने पुनरिड्ग्रहणस्य प्रयोजनमिडेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति। किञ्चान्यत् प्राप्नोति गुण इत्यादिना इडमनुवर्त्य पुनरिड्ग्रहणस्य गुणादिविकाराभावार्थमित्युक्त्वा दीधीवेवीटामिति सूत्र-स्थेड्ग्रहणप्रत्याख्यानपरकभाष्यविरोधात्। तत्र हि इड्ग्रहणस्यान्यत् प्रयोजनमुक्तम् न तु प्रकृतपरिभाषाज्ञापकत्वम्। नञो निवृत्तिस्तु क्वचिदेकदेशोऽप्यनुवर्तते इति न्यायेन संभवतीति भाष्याशयः।

---

अनुवृत्ति और निवृत्ति दोनों साथ साथ ही होती है। इसलिए कित्व में अन्वित "लिङ्सिच् और आत्मनेपद" की अनुवृत्ति एक साथ ही हुई है। इस संसार में या समाज में एक कार्य में नियुक्त बहुत से लोगों की प्रवृत्ति और निवृत्ति एक साथ ही देखी जाती है। जैसे एक स्कूल में नियुक्त बहुत से अध्यापक एक साथ १० बजे प्रातः अपने कार्य में प्रवृत्त होते हैं और ४ बजे सायं एक साथ छुट्टी पाते हैं।

किसी ने (नीलकण्ठ दीक्षित ने) अपनी परिभाषावृत्ति में (परि० सं० १९) कहा "आर्धधातुकस्येड्वलादेः" ८.२.३५ इस सूत्र में नेड्वशि कृति ७.२.८ इस सूत्र से इट् की अनुवृत्ति हो ही जाती थी। फिर जो इड् ग्रहण किया गया वही इस परिभाषा का ज्ञापक है। यदि यह परिभाषा न हो तो इट की—"न" रहित इट् की अनुवृत्ति में कोई बाधा नहीं थी। इसलिए जानते हैं कि यह परिभाषा है। इस परिभाषा के मानने पर तो केवल इट् की अनुवृत्ति हो नहीं सकती, इसलिए "आर्धधातुकस्येड्वलादेः" में इड् ग्रहण सार्थक हुआ; परन्तु यह कथन ठीक नहीं है, क्योंकि भाष्यकार ने "आर्धधातुकस्येड्वलादेः"७.२.४५ में इट् ग्रहण का फल कुछ और बताया है। भाष्यकार ने 'दीधीवेवीटाम्' १.१.६ में इट् ग्रहण की अनावश्यकता बताते हुए लिखा कि 'दीधीवेवीटाम्' में इड् ग्रहण के अभाव में

**वस्तुतस्तु 'दीधीवेवीटामि'ति सूत्रस्थभाष्यमेकदेश्युक्तिः 'आर्द्धधातुकस्येति' सूत्रस्थेड्ग्रहणस्य 'नेडवशी'ति सूत्रे भाष्ये प्रत्याख्यानात्। तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥१८॥**

---

वस्तुतस्तु दीधीवेवीटामिति सूत्रस्थ भाष्यं न सिद्धान्तिभाष्यं किन्तु एकदेश्युक्तिः। आर्धधातुकस्येड्वलादेरितिसूत्रस्थेड्ग्रहणस्य भाष्ये प्रत्याख्यानोपलब्धेः, भाष्ययोर्विरोधादेकदेश्युक्तिः। तत्करणे गुरुतरयत्नमाश्रित्येतत्प्रत्याख्यानस्यायुक्तत्वात्।

अत्र किं ज्ञापकमिति जिज्ञास्यते चेत् "ईदूदेद्द्विवचनं प्रगृह्यम्" इत्यस्मात्सूत्राददस इत्यत्र ईदूदित्येतन्मात्रानुवृत्यैव सिद्धे एतोऽनुवृत्यभावार्थं कृतं माद्ग्रहणमिति गृहाण॥

॥इति शिवम्॥

—-:०:——

---

भी "भविता" में गुण नहीं होगा, क्योंकि 'नेड्वशि कृति ७.२.८ से इड् ग्रहण की अनुवृत्ति की संभावना रहने पर भी आर्धधातुकस्येड्वलादेः में जो इड् ग्रहण किया है। उसका प्रयोजन यह है इट् को गुण रूप विकार न हो। इस तरह भाष्यकार ने वहाँ इड् ग्रहण का प्रयोजन यह नहीं बताया कि एकयोगनिर्दिष्ट होने के कारण "नेड्वशि" सूत्र से केवल इट् की अनुवृत्ति नहीं हो सकती थी, इसलिए इट् ग्रहण किया गया है। भाष्यकार ने इड् ग्रहण का प्रयोजन कुछ और बताया है। इसलिए उक्त भाष्य मत से विपरीत होने के कारण पूर्वोक्त मत मान्य नहीं है।

लौकिक न्याय सिद्ध एक योग निर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इस न्याय के रहते भी "क्वचिदेकदेशोऽप्यनुवर्तते" अर्थात् कहीं एक अंश की भी अनुवृत्ति होती है इस न्याय से "नेट्" में से नञ् की निवृत्ति और इट् की अनुवृत्ति हो सकती है, इसलिए पूर्वोक्त भाष्य को जहाँ कि "नेट्" से केवल इट् की अनुवृत्ति बतायी गयी हैं, अयुक्त नहीं मानना चाहिए।

वस्तुतस्तु 'दीधीवेवीटाम्' इस सूत्रस्थभाष्य एकदेशी की उक्ति है। एकदेशी उक्ति केवल एक ही पक्ष पर आश्रित रहती है। इसलिए वह अप्रामाण्य मानी जाती है एक देशी भाष्य की अप्रामाणिकता में दूसरा कारण यह है कि वह अन्यत्र कहे हुए भाष्य से प्रतिकूल होता है। भाष्यग्रन्थ में परस्पर विरोध के कारण प्रमाण पुष्ट भाष्य को तथ्य मान कर उसके विपरीत कथन को एकदेशी मानते हैं। "आर्धधातुकस्येड्वलादेः" इस सूत्र के इड् ग्रहण का "नेड्वशि कृति" इस सूत्र में भाष्यकार ने प्रत्याख्यान कर दिया। वहां उन्होंने बताया कि "नेड्वशि कृति" से इट् की अनुवृत्ति हो ही जायगी, "आर्धधातुकस्येड्वलादेः" में इड्ग्रहण नहीं करना चाहिए।

नन्वलुगाधिकारः प्रागानङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्न-मेकयोगनिर्दिष्टत्वात्। तथा 'दामहायनान्ताच्चे' त्यादौ 'सङ्ख्याव्ययादेः' इत्यतः सख्यादेरित्यनुवर्त्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह—

**क्वचिदेकदेशोऽप्य······ते ॥१९॥**

'अलुगुत्तरपदे' ६.३.१ इत्येकयोगनिर्दिष्टस्याप्यलुगित्यस्याधिकारः 'आनङ्-ऋतो द्वन्द्वे ६.३.२५ इति सूत्रात् प्राक्, उत्तरपदाधिकारस्तु प्रागङ्गस्य'' ६.४.१ इत्यधिकारादिति सिद्धान्तः व्याकुप्यते, ''एकयोगनिर्दिष्टानां सहैव प्रवृत्तिनिवृत्ति-स्वीकारे, एवं दामहायनान्ताच्च ४.१.२७ इत्यत्र संख्याव्ययादेः ४.१.२६ इत्यतः संख्यादेरित्यस्यानुवृत्तेऽव्ययादेरित्यस्य च निवृत्तेः स्वीकारोऽपि विरुद्ध इव दृश्यते एकयोगनिर्दिष्टत्वादुभयोः सहैव प्रवृतिनिवृत्योरेकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह

''आर्धधातुकस्येड् वलादेः'' में इड्ग्रहण करके और तद्ग्रहणसामर्थ्यात् इस सूत्र से विहित इट् को गुणरूप विकाराभाव मानकर ''दीधीवेवीटाम्'' सूत्र के इड् ग्रहण का प्रत्याख्यान करना महान् यत्न साध्य है इसलिए उसमें न केवल गौरव है। किन्तु ऐसा प्रत्याख्यान अयुक्त भी है।

लौकिक दृष्टान्त से सिद्ध 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः'' इस परिभाषा में यदि आप ज्ञापक खोजना चाहें तो वह भी मिल जायगा। 'ईदू-देद्द्विवचनं प्रगृह्यम्'' इस सूत्र से ईत् और ऊत् एतन्मात्र की अनुवृत्ति से काम चलता था, एत् की वहाँ अनुवृत्ति न हो, इसलिए किया गया ''अदसो मात्'' सूत्र का माद् ग्रहण ही ज्ञापन करता है कि ''एकयोग······वा निवृत्तिः''। परिभाषा के ज्ञापित होने पर ईत् और ऊत् के साथ प्राप्त ऐत् की अनुवृत्ति को रोकने के लिए 'माद्' ग्रहण चरितार्थ हो गया।

''लिङ्सिचावात्मनेपदेषु'' १.२.११ सूत्र से 'सिच्' की अनुवृत्ति होने से ही इष्ट सिद्धि हो जाती ''हनः सिच्'' १.२.१४ यह भी इस परिभाषा का ज्ञापक है। ''सिच्'' इसके पुनः कथन से संकेत मिलता है कि पाणिनि को यह डर था कि यदि ''सिच्'' की अनुवृत्ति करेंगे तो उसके साथ 'लिङ्' भी आ जायेगा; इसलिए उन्होंने पृथक् ''सिच्'' कहा है।

॥इति शिवम् १८॥

**क्वचिदेकदेशोऽप्यनुवर्तते १९**

यदि पूर्व परिभाषा मानते हैं तो (अलुगुत्तरपदे) ६.३.१ इस योग में निर्दिष्ट अलुक् और उत्तरपदे दोनों की अनुवृत्ति उत्तर सूत्रों में साथ-साथ होना चाहिए, परन्तु वास्तविकता तो यह है कि अलुक् का अधिकार (अलुक् की अनुवृत्ति) आनङ्ऋतो द्वन्द्वे ६।३.२५ से पहले तक ही माना जाता है; किन्तु 'उत्तरपदे' की अनुवृत्ति इस षष्ठाध्याय के तृतीयपाद की समाप्ति तक अर्थात् सम्प्रसारणस्य च ६.३.१३९। सूत्र तक—''अङ्गस्य'' अधिकार ६.४.१ तक—मानी जाती है।

## एकयोगनिर्दिष्टानां क्वचिकदेशोऽप्यनुवर्त्तते ॥१९॥

**एकत्रार्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति 'पक्षात्तिरिति सूत्रे कैयटः। तावन्मात्रांशे स्वरिरितत्वप्रतिज्ञाबलाल्लभ्यमिदम्।**

---

वा निवृत्तिरिति परिभाषाया स्वीकारादिति चेन्न क्वचिदेकदेशोऽप्यनुवर्तते इति परिभाषाया अप्यङ्गीकारात्। 'स्थितस्य गतिश्चिन्तनीये'ति सिद्धान्तेन लक्ष्यानुसारि व्याख्याया एव स्वीकार्यत्वेन यावन्मात्रस्यानुवृत्तिरुत्तरत्र लक्ष्यसिद्ध्युपयोगिनी तावन्मात्रे स्वरितत्वप्रतिज्ञानात् 'स्वरितेनाधिकारः १.३.११ इत्यनेन एकयोगनिर्दिष्टानां क्वचिदेकदेशस्याप्यनुवृत्तिः संभवतीति एकदेशस्वरितत्वप्रतिज्ञाबलादियं लभ्यते।

एकत्र योगः सम्बन्धस्तेन निर्दिष्टानामन्वितानां क्वचिदेकदेशोऽपि अनुवर्तते। यत्रैकदेशानुवृत्यैव लक्ष्यसिद्धिः अव्याप्त्यतिव्याप्त्यसंभवदोषाश्च न भवन्ति तत्र तावत्येवांशे स्वरितत्वप्रतिज्ञा क्रियते। तेन तावतोंशस्यैकदेशस्यानुवृत्तिः सम्भवतीति तात्पर्यम्। "पक्षात्तिः ५.२.२५ इति सूत्रे मूल इति वक्तव्यम्। पक्षस्य मूलं पक्षतिः। तर्त्हि वक्तव्यम्। न वक्तव्यम्। मूल इति वर्तते। क्व प्रकृतम्? 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ'५.२.२४ इति। यदि तदनुवर्तते। पाकेऽपि प्राप्नोति 'मूल' इत्यनुवर्तते, पाक इति निवृत्तम्। कथं पुनरेकयोगनिर्दिष्टानामेकदेशो नुवर्तते। एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति। तद्यथा संख्याव्ययादेर्ङीप् ४.१.२६ दामहायनान्ताच्च 'संख्यादेरित्यनुवर्ततेऽव्ययादेरिति ४.१.२७ निवृत्तम्।' इति भाष्ये परिभाषेयं चर्चिता। अत्र कैयटेनोक्तम् परिभाषार्थं कुर्वता—एकस्मिन्नर्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोः इत्यर्थः द्वन्द्वस्य तदर्थस्य चैकत्वादेकदेशानुवृत्तिर्न संभवतीति भावः। एकसूत्रनिर्दिष्टानां त्वेकदेशानुवृत्तिर्दृश्यते॥ **एकयोगनिर्दिष्टानामिति।** अर्थाधिकारपक्षेऽर्थस्यैकत्वाद्विच्छेदाभावान्न स्यादेकदेशानुवृत्तिः। शब्दाधिकारपक्षे तु यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञातं तत्सदृशशब्दान्तरसन्निधानं योगोत्तरे प्रतीयत इति दोषाभावः। अत्र कैयटग्रन्थे समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थकरणं न युज्यते अलुगुत्तरपदे ६.३.१ इत्यवतरणभाष्यविरोधात् एवम् ओतऽमशसोः ६.१.९३ इत्यत्राचिनवम् इत्यत्रात्वाप्राप्त्यर्थं 'वा सुपी'त्यतो वेति निवृत्तं सुपीत्यनुवर्तत इति भाष्यविरोधात्, उभयत्र समासस्याभावात्।

---

इतना ही नहीं (दामहायनान्ताच्च) ४.१.२७ इस सूत्र में संख्याव्ययादेर्ङीप् ४.१.२६ इस सूत्र से एक योग निर्दिष्ट होने पर भी संख्यादि की अनुवृत्ति होती है, किन्तु अव्ययादि की निवृत्ति मानी जाती है, यह कैसे सम्भव है? इसलिए नई परिभाषा बताते हैं :—

"**एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते**" एक सूत्र में जिनका निर्देश है; उन पदों के एक देश की भी कहीं अनुवृत्ति हो जाया करती है।

"पक्षात्तिः' ५.२.२५ सूत्र में कैयट ने "एकत्रार्थे=एक अर्थ में योगः सम्बन्धः तेन निर्दिष्टयोः ऐसा विग्रह करके एक अर्थ में जो सम्बन्ध है उस सम्बन्ध के

स्पष्टा चेयं 'दामहायनान्ताच्चे'ति सूत्रे औतोऽम्शसोः" इति सूत्रे च भाष्ये पूर्वा च ॥१९॥

इयं परिभाषा दामहायनान्ताच्च ४.१.२७ इति सूत्रस्य भाष्ये स्पष्टा इति नागेशेनोक्तं किन्तु तत्र सूत्रभाष्ये नास्या उल्लेख उपलभ्यते। पक्षात्तिः ५.२.२५ इति सूत्र भाष्येऽनुपदमेव निर्दिष्टेऽस्या उल्लेखः दामहायनान्ताच्चेति सूत्रेणोदाहरणीकृतेन सह यथोपलभ्यते तथा दृष्टमेव उपर्युद्धृते भाष्ये।

औतोऽम्शसोः ६.१.९३ इत्यत्र यथेयं स्पष्टा तथा विलोक्यताम् अथ उद्धृते तद्भाष्येः—

ननु चोक्तम्—ओतस्तिङि प्रतिषेध इति। सुवधिकारात् सिद्धम्। सुपीति प्रकृतं वर्तते। क्व प्रकृतम्। वा सुप्यापिशलेः (६.१ ९२) इति। यद्यनुवर्तते इहापि प्राप्नोति सुब्ग्रहणमनुवर्तते वा ग्रहणं निवृत्तम्। कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोनुवर्तत एकदेशो न। एकयोगे चैकदेशानुवृत्तिरन्यत्रापि नावश्यमिहैव। एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति। अन्यत्रापि नावश्यमिहैव। क्वान्यत्र। अलुगधिकारः प्रागानङः उत्तरपदाधिकारः प्रागङ्गाधिकारात् इति। यत्रेयं परिभाषा चर्चिता तत्र पूर्वाऽपि वर्तते निगदिता॥ इति शिवम्॥—१२

द्वारा निर्दिष्ट अर्थात् समुदाय को प्रगट करने वाले द्वन्द्व समास के द्वारा निर्दिष्ट पदों में से कहीं एक देश की अनुवृत्ति होती है; ऐसा अर्थ किया है परन्तु यह अर्थ गलत प्रतीत होता है; क्योंकि भाष्यकार ने जिस "अलुगुत्तर पदे" इस सूत्र में इसकी प्रवृत्ति करायी है; वहाँ द्वन्द्व समास नहीं है। इसी तरह भाष्य में "औतोम्शसोः" ६.१.९३ सूत्र में "वा सुप्यापिशलेः" ६.१.९२ इस सूत्र से "सुपि" की अनुवृत्ति और 'वा' की निवृत्ति मानी गयी है; वहाँ भी द्वन्द्व नहीं है। "अचिनवम्" स्वादि-चि धातु—से लङ्, उत्तम पुरुष एक वचन, मिप् में मिप् को अम्, धातु को अडागम, श्नुप्रत्यय, अनुबन्ध लोष करने पर अचिनु+अम् ऐसी स्थिति में "औतोऽम् शसोः" ६.१.९३ से ओ को अम् के परे रहते प्राप्त 'आत्व' के निवारण के लिए 'औतोऽम्शसोः' में 'सुपि' की अनुवृत्ति आवश्यक है। 'सुपि' की अनुवृत्ति करने में 'अम्' और 'शस्' सुप् ही लिये जायेंगे; इसलिए आत्व की प्राप्ति नही होती है।

जिस अंश की अनुवृत्ति अभीष्ट हो, उस अंश में स्वरितत्व प्रतिज्ञा करने पर स्वरितेनाधिकारः १.३.११ इस सूत्र से उतने अंश की अनुवृत्ति उत्तर सूत्र में हो जाती है। इस तरह आंशिक स्वरितत्व प्रतिज्ञा ही इस परिभाषा में बीज है। अथवा यों कहिए कि आंशिक स्वरितत्व प्रतिज्ञा से ही इस परिभाषा की फलितार्थ के रूप में उपलब्धि होती है।

यह परिभाषा 'दामहायनान्ताच्च' ४.१.२७ इस सूत्र के भाष्य में स्पष्ट है और 'औतोऽम्शसोः ६.१.९३ सूत्र के भाष्य में यह और इससे पूर्व की परिभाषा, दोनों स्पष्ट रूप से आई हैं।

ननु 'त्यदादीनाम' इत्यादिनेममित्यादावनुनासिकः स्यादत आह—

**भाव्यमानेन सवर्णानां ग्रहणं न ॥२०॥**

---

**भाव्यमानेन''''''ग्रहणं न ॥२०॥**

ननु 'इमम्' इत्यत्र इदम्+अम् इतिस्थिते 'त्यदादीनामः' ७.२.१०२ इत्यनेन मकारस्य विधीयमानोऽकारः सानुनासिकः स्यात् तस्यानुनासिकस्थाने जायमानत्वात् विद्वाल्लिँखतीत्यत्र विधीयमानो लँकार इवेति चेन्न 'भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषावतारात् । न च प्रथमा द्विवचनबहुवचनयो जर्यमानम् "इमौ" इमे इति रूपद्वयं विहाय द्वितीयैकवचने दोषदानानुधवनं व्यर्थमिति वाच्यम् 'इमौ" इत्यत्र सानुनासिकस्याकारस्य विधानेऽपि इदँ+औ इति स्थिते एचोऽनुनासिकस्याभावेन 'वृद्धिरेचि' ६.१.८८ इति वृद्धिकाले शुद्धस्यैवाकारस्य विधानेनादोषात् । 'इमे' इत्यत्रापि परस्येकारस्य द्विमात्रत्वेन परस्य च प्राधान्येन तत्सदृशगुणकस्यैव विधानेन दोषाभावात् । द्विवचनबहुवचनापेक्षयैकवचनस्य द्वितीयाया अपि प्राथम्येनोपस्थितत्वाच्च । भाव्यमानेनेत्यत्र कर्तरि तृतीया । ग्रहणमिति भावे ल्युट् । विधेयताप्रयोजकेन सवर्णानां ग्रहणं न भवतीति परिभाषार्थः अथवा हेत्वर्थे भाव्यमानेन विधेयभूतेन हेतुना सवर्णानां ग्रहणं न भवतीति । सूत्रेऽशद्वयं भवति उद्देश्यांशो विधेयांशश्च । तत्रोद्देश्यांशे सवर्णग्राहकता जायते न विधेयांशे । अतः त्यदादीनाम इत्यत्राकारस्य विधीयमानत्वात्तत्र न सवर्णग्रहणम् ।

---

यद्यपि नागेश ने लिखा है कि यह परिभाषा दामहायनान्ताच्च' सूत्र के भाष्य में स्पष्ट है । परन्तु वहाँ इसका उल्लेख नहीं है । इसका उल्लेख पक्षात्तिः ५.२.२५ सूत्र के भाष्य में है; वहाँ 'दामहायनान्ताच्च' का और इस परिभाषा का उल्लेख एक साथ है । वहाँ कहा गया है कि एक देश की भी अनुवृत्ति होती है जैसे 'दामहायनान्ताच्च' ४.१.२७ में 'संख्याव्ययादेर्ङीप्' ४.१.२६ से संख्यादेः' की अनुवृत्ति होती है और 'अव्ययादेः' की निवृत्ति होती है । "औतोऽम्शसोः" ६.१.९३ सूत्र के भाष्य में कहा गया है कि ओत् के स्थान में विहित 'आ' का तिङ् के परे रहते प्रतिषेध करने की आवश्यकता नहीं है । "वा सुप्यापिशलेः" ६.१.१२ से 'सुपि' की अनुवृत्ति करने से' "औतोऽम् शसोः" से सुप् के परे रहते ही आत्व होगा । इसलिए "अचिनवम्" में दोष नहीं होगा क्योंकि वहाँ 'अचिनो+अम्' का 'अम्' सुप् नहीं है । "सुपि" के साथ 'वा की अनुवृत्ति नहीं होगी, क्योंकि एकयोग निर्दिष्टों में से एक देश की भी कहीं अनुवृत्ति होती है । इससे स्पष्ट है कि यह परिभाषा वहाँ निर्दिष्ट है ।

इति शिवम्—१९

**भाव्यमान परिभाषा—२०**

'इदम्' में इमम् शब्द से अम् विभक्ति इदम्+अम्=ऐसी स्थिति में 'त्यदादीनामः' ७.२.१०२ से म् के स्थान में अ, उसे द में अ के साथ पररूप करने पर

'अणुदित्'सूत्रेऽप्रत्यय इत्यनेन सामर्थ्यात्सूत्रेण प्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः। अत एव 'अणुदित्' सूत्रे प्रत्ययादेशागमेषु सवर्णग्रहण-

अत्र मूलम् ''अणुदित् सवर्णस्य चाप्रत्ययः' १.१.६६ इत्यत्राप्रत्यय इति योगविभागः। प्रत्ययः सवर्णग्राहको न भवतीति तदर्थः। यदि चोत्तरयोगेन अप्रत्यय इत्यनेन पूर्वयोगस्याणुदित्सवर्णस्येत्यस्यैव निषेधः स्यात्तदा योगविभागस्य वैयर्थ्यम्। अतः 'अप्रत्यय' इति योगविभागसामर्थ्यात् अणुदित्सूत्रेण प्राप्तं जातिपक्षेण प्राप्तं गुणाभदेकत्वेन च प्राप्तमनेन वार्यते।

''दश्च'' ७.२.१०९ सूत्र से द को म करके (अमिपूर्वः) से पूर्वरूप करते हैं तो रूप सिद्ध होता है। यहाँ यह प्रश्न होता है कि मकार अनुनासिक है, उसके स्थान में होने वाला अकार भी अनुनासिक होना चाहिए, इस तरह उसे पूर्वरूप करने पर भी ''इमँम्'' रूप बनना चाहिए। इस अनिष्ट रूप के निवारण के लिए परिभाषा मानते हैं ''**भाव्यमानेन सवर्णानां ग्रहणं न**''। यहाँ भाव्यमानेन'' में कर्ता में 'तृतीया' हुई है ''ग्रहणम्'' यहाँ भाव में ल्युट् हुआ है। इस तरह परिभाषा का अर्थ होता है कि भाव्यमान अर्थात् सूत्र में जो भाग विधेय या विधीयमान है; वह स्वसवर्ण का ग्राहक नहीं होता है। सूत्र में जो विधीयमान भाग है; उससे सवर्ण का ग्रहण नहीं किया जाता है, ऐसा अर्थ भी हो सकता है। अथवा 'भाव्यमानेन' में हेतु में तृतीया माननी चाहिए भाव्यमान होने के कारण सवर्णों का ग्रहण नहीं होगा। ''त्यदादीनामः''७.२.१०२ में 'अ' भाव्यमान है इसलिए वहाँ सवर्णग्राहकता नहीं होगी। इसलिए 'म्' के स्थान में अनुनासिक अकार नहीं होगा किन्तु शुद्ध अकार ही होगा।

प्रथमा द्विवचन में 'इमौ' यहाँ पर 'त्यदादीनामः'' सूत्र से अनुनासिक अकार विधान होने पर भी 'औ' में निरनुनासिक होने के कारण वृद्धि होने पर शुद्ध औकार होने के कारण दोष नहीं था, प्रथमा बहुवचन में (इमे) यहाँ पर ई के द्विमात्रिक होने के कारण तत्सदृश गुण वाले 'ए' का ही गुण रूप में विधान होगा। इसलिए वहाँ भी दोष नहीं था, अतः ''इमम्'' में दोष दिया गया।

'अणुदित् सवर्णस्य चाप्रत्ययः इस सूत्र में 'अप्रत्ययः इसे पृथक् योग मानने पर उसका अर्थ होगा कि प्रत्यय सवर्ण ग्राहक नहीं होता है। ''अप्रत्ययः'' यह योग यदि अणुदित् सूत्र का ही निषेध करे तो योगविभाग व्यर्थ हो जायगा। इसलिए अणुदित् सूत्र से प्राप्त सवर्ण ग्रहण की तरह यह योग जातिग्रहण से प्राप्त सवर्ण—ग्रहण का और गुणाभेदक होने के कारण प्राप्त सवर्णग्रहण का निषेधक माना जायगा। अर्थात् सूत्रों में ह्रस्व अकारादि से दीर्घ आकारादि का जो ग्रहण होता है; उसके तीन मार्ग हैं (१) पहला मार्ग है अणुदित् सूत्र की प्रवृत्ति। जैसे 'अकः सवर्णे दीर्घः' सूत्र में अक् पद से आकारादिका ग्रहण होता है (२) दूसरा मार्ग है जाति पक्ष का आश्रयण। जाति पक्ष मानने पर 'अस्य च्वौ' ७,४.३२ में अ पद से आकारादि का ग्रहण होता है; क्योंकि 'अत्व' जाति 'अ' की तरह आ में भी

**भावं प्रकारान्तरेणोक्त्वा एवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्या-चार्यो भवत्येषा परिभाषा—'भाव्यमानेन सवर्णानां ग्रहणं ने'ति ॥**

---

नन्वेवमप्यप्रत्यय इति व्यर्थम् ज्यादादीयसः ६.४.१६० इत्यत्र अदादेश विधानेऽपि अणुदित्सूत्रबलेनादादेशे सिद्धे आदिति दीर्घविधानेनादेशे सवर्णग्रहणं नेति ज्ञापनेनादेशे दोषाभावः, इड्विधानेनापि अणुदित्सूत्रेण दीर्घस्यापीटो विधानात् वरिता वरीता इत्यादिसिद्धे 'वृतो वा' ७.२.३८ इति आगमे सवर्णग्राहकताऽभावज्ञापनेन, अनभिधानात् 'सनाशंसभिक्ष उः' ३.२.१६८ इत्यादौ प्रत्यये च सावर्ण्यग्राहकतायाः सिद्धेरिति चेन्न अनेनैवाप्रत्ययग्रहणेन एकदेशानुमत्या परिभाषाज्ञापनात्। भाव्यमानस्य च प्रत्ययागमादेशत्रयरूपत्वात्।

नच प्रत्ययपदमिह यौगिकम् प्रतीयते विधीयते इति, नतु योगरूढं सुप्तिङादाविति, तथा च तादृशस्य प्रत्ययपदस्य नञ्समासे कृते अविधीयमानेन सवर्ण-ग्राहकताबोधनेन परिभाषेयमप्रत्ययपदवाच्यैव, न तेनेयं ज्ञाप्यत इति वाच्यम् 'अणु-दित्' सूत्रे भाष्ये पूर्वोक्तरीत्या प्रत्ययागमादेशेषु सवर्णग्राहणाभावं संसाध्य "एवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयति (एकदेशानुमत्या बोधयति) आचार्यो भवत्येषा परिभाषा "भाव्यमानेन सवर्णानां ग्रहणं नेति" भाष्येण अप्रत्यय-ग्रहणस्य ज्ञापकत्वस्वीकारात्। यदीयं परिभाषा अप्रत्ययपदवाच्यार्थरूपा स्यात् स ज्ञापयतीति नैव वदेत्।

---

है। तीसरा मार्ग गुणाभेदकत्व है, गुण के अभेदक होने के कारण 'अ' के उच्चारण में 'उदात्त' 'अ' का भी ग्रहण होता है

तीनों मार्ग से प्राप्त सवर्ण-ग्राहकता का "अप्रत्ययः" यह निषेध करेगा किन्तु तीनों मार्गों से प्राप्त सवर्ण-ग्राहकता का निषेधक मानने पर "अप्रत्ययः" योग-व्यर्थ ही है; क्योंकि ह्रस्व इकार विधान करने पर भी अणुदित् सूत्र के बल से दीर्घ ईकार का विधान संभव था ही "ई हल्यघोः" ६.१.११३ सूत्र में ई ग्रहण और 'अ' आदेश करने पर भी सवर्ण-ग्राहकता के बल से 'आ' हो ही जाता फिर भी "ज्यादादीयसः" ६.४.१६० सूत्र में 'आत्' में किये गये दीर्घोच्चारण के कारण आदेश में सवर्ण ग्राहकता नहीं हो ऐसा ज्ञापन मानने पर आदेशों में दोष नहीं होगा, ह्रस्व इड् करने से ही अणुदित् सूत्र के बल से दीर्घ ईट् का भी विधान संभव था ही, वृतो वा" इस सूत्र के आरम्भ सामर्थ्यात् आगम में, और अनभिधान अर्थात् अनुक्ति के कारण प्रत्यय में सवर्ण ग्राहकता का अभाव सिद्ध था ही, अप्रत्यय ग्रहण व्यर्थ ही है। इसलिए अप्रत्ययग्रहणसामर्थ्यात् एकदेशानुमत्या यह परिभाषा ज्ञापित

**किञ्च ज्याद ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादादिति दीर्घोच्चारणमस्या ज्ञापकम् ॥**

**'अणुदित्' सूत्रे च भाष्ये स्पष्टैषा ।**

---

किञ्च ज्याद ईयस इत्यकारविधानेऽपि आन्तर्यतः दीर्घे सिद्धे ज्यादादीयस ६.४.१६० इत्यनेन विहिते आति विधेये दीर्घोच्चारणमस्या ज्ञापकम् । ज्ञापितायान्तु अकारस्य भाव्यमानतया सवर्णग्राहकत्वनिषेधादाकारविधानासम्भवादकारे कृते पररूपापत्त्या ज्ययानित्यनिष्टापत्तिवारणाय दीर्घाकारविधानं चरितार्थम् । ज्यादादीयसः ६. ४.१६० इति सूत्रस्य भाष्येऽस्या उल्लेख एवं वर्तते:—अथ किमर्थं ज्यात्परस्येयसो दीर्घ उच्यते । न अकार एवोच्येत । का रूपसिद्धिः ? ज्यायान् । आन्तर्यतो दीर्घस्य दीर्घो भविष्यति । एवं तर्हि सिद्धे यद्दीर्घग्रहणं करोति तज्ज्ञापयत्याचार्यो-भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति ॥ "अणुदित्सूत्रे" भाष्ये एषा स्पष्टा । इत्थं वर्ततेऽणुदित् सूत्रस्थं भाष्यमेतत् परिभाषासम्बद्धम् :—"अणुदित् सवर्णस्य चाप्रत्ययः" १.१.६९ अप्रत्यय इति किमर्थम् । सनाशंसभिक्ष उः ३.२.१६८ अ सांप्रतिके ४.३.९ अत्यल्पमिदमुच्यतेऽप्रत्यय इति । अप्रत्ययादेशटित्कृन्मित इति वक्तव्यम् । प्रत्यय उदाहृतम् । आदेशे इदम इश् [५.३.३] इतः इह । टिति-लविता, लवितुम् । किति-बभूव । मिति—हे अनड्वन् । टितः परिहारः । आचार्यप्रवृत्तिर्ज्ञापयति—न टिता सवर्णानां ग्रहणं भवतीति यदयं

---

होती है । भाव्यमान के प्रायः तीन ही प्रकार हैं । प्रत्यय, आगम और आदेश । यही बताते हुए अणुदित्...सूत्र के भाष्य में लिखते हैं कि प्रत्यय, आदेश और आगम में सवर्ण ग्रहण का अभाव प्रकारान्त से अर्थात् "ई हल्यघोः ६.४.११४ इत्यादि ज्ञापनादि के बल से हो ही जायगा । यह कहकर भाष्यकार ने कहा कि अप्रत्यय इस निषेध के द्वारा आचार्य पाणिनि संकेत करते हैं कि "भाव्यमानसे सवर्णग्रहण नहीं होता । इस तरह यह परिभाषा सिद्ध होती है ।

पूर्वोक्त भाष्य से यह सिद्ध होता है कि अणुदिति सूत्र में "अप्रत्ययः" का अर्थ योग रूढि के अनुसार जिसे प्रत्यय कहते हैं, उससे भिन्न, ऐसा नहीं है किन्तु यहाँ प्रत्यय की व्युत्पत्ति प्रतीयते विधीयते इति प्रत्ययः" है । इस तरह यौगिक शब्द होने के कारण यहाँ प्रत्यय शब्द विधीयमान का बोधक है । विधीयमान के तीन भेद हैं—आदेश, आगम और प्रत्यय । ये सभी यहाँ प्रत्यय पद के वाच्य हैं ।

एक बात और—"ज्याद ईयसः" ऐसा सूत्र करने पर ज्य से पर ईयस् के ईकार को 'अ' करने पर भी अणुदित् सूत्र से दीर्घ आ का विधान यहाँ स्थानेऽन्तरतमः' इस परिभाषा के बल से ही हो जाता था; क्योंकि यहाँ का 'अ' आदेश था । प्रत्ययः परश्च" इस अधिकार में पठित प्रत्यय नहीं; फिर भी जो 'ज्यादादीयसः' में 'आत्' में आ किया गया, वही इस परिभाषा में ज्ञापक है । अथवा वही 'अप्रत्यय' घटक प्रत्यय पद के 'विधीयमान' अर्थ का संकेतक है । अणुदित्' सूत्र के भाष्य में यह परिभाषा स्पष्ट रूप से आयी है ।

**'चोः कुरि' त्यादौ भाव्यमानेनापि सवर्णग्रहणम् । विधेये उकारोच्चारण-सामर्थ्यात् । एतन्मूलकमेव—भाव्यमानोऽण् सवर्णान्न गृह्णातीति नव्याः पठन्ति ॥२०॥**

---

ग्रहोऽलिटि दीर्घत्वं शास्ति 'ग्रहोऽलिटि दीर्घः' ७.२.३७ इति । नैतदस्ति ज्ञापकम् नियमार्थमेतत्स्यात् । ग्रहोऽलिटि दीर्घ एवेति । यर्त्तहि वृतो वा ७.२.३८ इति विभाषां शास्ति ॥ सर्वेषामेव परिहारः भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति। प्रत्यये भूयान् परिहारः । अनभिधानात् प्रत्ययः सवर्णान्न ग्रहीष्यति ॥ इदं तर्हि प्रयोजनम् । इह केचित् प्रतीयन्ते केचित्प्रत्याय्यन्ते । ह्रस्वाः प्रतीयन्ते, दीर्घाः प्रत्याय्यन्ते । यावद् ब्रूयात् प्रत्याय्यमानेन सवर्णानां ग्रहणं नेति तावदप्रत्यय इति । कं पुनः सवर्णग्रहणेन गृह्णीयात् ? ह्रस्वम् यत्नाधिक्यान्न ग्रहीष्यति । प्लुतं तर्हि गृह्णीयात् । अनण्त्वान्न ग्रहीष्यति एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवप्येषा परिभाषा **भाव्यमानेन सवर्णानां ग्रहणं** नेति ।

अत्र कैयटः— **अप्रत्यय इति किमर्थमिति** । किं यस्य प्रत्ययसंज्ञा विहिता तस्य प्रतिषेधः उत यः प्रतीयते विधीयते इति यौगिकः प्रत्ययस्तस्यापीति प्रश्नः । ...**प्रत्यये भूयानिति** । साधारणश्चासाधारणश्चेत्यर्थः । प्रत्यय इत्यन्वर्थसंज्ञा कृता येनार्थं प्रतियन्ति स प्रत्ययो न च दीर्घप्लुतयोरर्थस्याभिधानमस्ति ।...**दीर्घा,** इति ह्रस्वैर्गृहीतैरण्त्वाद्दीर्घाणां ग्रहणात् । तत्राष्टन आ विभक्तौ ८.२.८४ इत्यत्राकारो ग्राहको मा भूदिति । यथैवाण्त्वादाकारो रपरत्वादिकार्यं प्रतिपद्यते तथा ग्राहकत्वमपि प्रतिपद्येतेति भावः । कथं पुनरप्रत्यय इत्यस्य प्रत्याय्यमान इत्यर्थः अन्तर्भावितण्यर्थाएते कर्मण्यज् विधानात् ॥......भाव्यमानेन प्रतीयते विधीयते इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमितिभावः ।

'चोः कुः' ८.२.३० इत्यत्र यद्यपि कुरिति विधीयमानः; तथापि तत्र सवर्णग्राहकता स्वक्रियते, कुरित्यत्र उदिदुच्चारणसामर्थ्यात् । अन्यथा यद्यनया परिभाषया तत्रापि सवर्णग्रहणं निषिध्येत तर्हि उदित्करणं तत्र व्यर्थं स्यात् अत एव दीक्षिताः (नव्याः) अस्या परिभाषायाः शरीरमित्थं स्वीकुर्वन्ति—भाव्यमानोऽण् सवर्णान्न गृह्णाति । अण् यदि भाव्यमानस्तर्हि स सवर्णग्राहको न भवतीति परिभाषार्थः कोरण्त्वाभावः स्पष्ट एव ।

॥इति शिवम्॥—२०

---

"चोः कुः" सूत्र से भी 'कु' का विधान होता है इसलिए "कु" विधीयमान (भाव्यमान) हुआ । उससे सवर्ण ग्रहण नहीं होने पर 'वाक्' में ककारादेश करके चरितार्थ पूर्वोक्त सूत्र की पयोमुक् में प्रवृत्ति नहीं होगी । ऐसा प्रश्न यद्यपि निराधार नहीं है; तथापि इसका समाधान है कि वहाँ विधेय में उकारोच्चारण सामर्थ्यात् भाव्यमान से भी सवर्णग्राहकता होगी । इसी कारण से नवीन वैयाकरण (दीक्षित) यहाँ परिभाषा के कलेवर में "अण्" पद का निवेश करके परिभाषा का स्वरूप मानते हैं—।'भाव्यमानोऽण् सवर्णान्न गृह्णाति"

इति शिवम्—२०

नन्वेवम् 'अदसोऽसेरि' त्यादिनाऽमू इत्यादौ दीर्घविधानं न स्यादत आह—

**भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥२१॥**

दिव उत्, ऋत उत् इति तपरकरणमस्या ज्ञापकम् ॥ 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टैषा ॥२१॥

---

भाव्यमानोऽप्युकारः···गृह्णाति—२१

**भाव्यमानेन सवर्णानां ग्रहणम्** (प० १६) अथवा भाव्यमानोऽण् सवर्णान्न गृह्णाति इत्यनयोरन्यतरस्याः स्वीकारे ''अदसोऽसेर्दादु दोमः' ८.२.८० इत्यादिना 'अमू' इत्यादौ यद्दीर्घोकारः विधीयते तन्न स्यात्, तत्रोकारस्य विधेयत्वादिति चेन्न भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति इति परिभाषोदयात्। इयं परिभाषा तस्याः परिभाषायाः बाधिका। उकारः विधीयमानोऽपि स्वसवर्णान् गृह्णातीति परिभाषार्थः। अस्या ज्ञापकं 'दिव उत्' ६.१.१३१ 'ऋत उत्' ६.१.१११ इत्यनयोस्तपरकरणम्। तत्र तपरकरणं 'तपरस्तत्कालस्य' १.१.७० इत्यनेन समकालानां बोधाय दीर्घादीनां च विधानवारणाय क्रियते। यदि भाव्यमानेन सता उकारेणापि सवर्णा न गृह्येरन् तदात्र भाव्यमानपरिभाषयैव दीर्घादीनां वारणे सिद्धे तद्वारणार्थं कृतं तपरकरणं व्यर्थं स्यात्। अस्यां ज्ञापितायान्तु अनया भाव्यमानेनाप्युकारेण सवर्णानां दीर्घादीनां ग्रहणं प्राप्तं तद्वारणाय तपरकरणं चरितार्थम्। परिभाषाज्ञापनफलन्तु अमू इत्यत्र दीर्घोकारस्य विधानेनेष्टरूपसिद्धिरिति

---

भाव्यमानोऽप्युकारः २१

भाव्यमान यदि सवर्ण का ग्राहक न हो तो "अदसोऽसे र्दादु दोमः" इस सूत्र से 'अदस्' शब्द के द के आगे के ह्रस्व स्वर को ह्रस्व उकार और दीर्घस्वर को दीर्घ ऊकार हो; इस सिद्धान्त में कमी आयेगी; क्योंकि वहाँ सूत्र में ह्रस्व उकार का निर्देश है, अतः सवर्ण ग्राहकता नहीं होने पर दीर्घ ऊकार का विधान नहीं होगा, ऐसी स्थिति में ''अमू'' इत्यादि रूपों की सिद्धि नहीं होगी—इसलिए कहते हैं— भाव्यमानोऽप्यु......गृह्णाति।

विधीयमान उकार भी सवर्ण का ग्राहक होता है विधीयमान यदि 'उकार' है तो उससे सवर्ण का ग्रहण हो ही जायगा। ''अदसोऽसेः सूत्र से उकार का विधान होता है। इसलिए उकार के विधीयमान होने के कारण सवर्ण का ग्रहण होने से 'अमू' में दीर्घ उकार के होने में कोई आपत्ति नहीं है।

'दिव उत्' ६.१.३१ और 'ऋत उत्' ६.१.११ में तपरकरण इस परिभाषा का ज्ञापक है। तपरकरण इसलिए करते हैं कि 'तपरस्तत्कालस्य'' इस सूत्र के अनुसार समकाल का ग्रहण हो। दिव उत् और ऋत उत् में तपर निर्देश इसलिए किया गया है कि ह्रस्व उकार का विधान हो दीर्घ या प्लुत ऊ या ऊ ३ का विधान न हो। यदि भाव्यमान से सवर्ण का ग्रहण न हो; तो यहां भाव्यमान होने के कारण

तित्स्वरितम् ६.१.१३१ इतिसूत्रे भाष्यकारेणैषा स्पष्टीकृता । तथाहि—तिति प्रत्ययग्रहणं कर्त्तव्यम् । इह मा भूत्—ऋत इद्धातोः ७.१.१०० किरति, गिरति । तर्त्तर्हि वक्तव्यम् न वक्तव्यम् । नैष तकारः । कस्तर्हि दकारः । यदि दकारः आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति । भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति । यदि भाव्यमानेन सवर्णानां ग्रहणं नेत्युच्यतेऽदसोऽसेर्दादु दोमः ८.२.८० अमूभ्यामित्यत्र न प्राप्नोति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहणं यदयं दिव उत् ६.१.१३१ इत्युकारं तपरं करोति । एवमर्थमेव तर्हि प्रत्ययग्रहणं कर्तव्यम् अत्र माभूदिति । नैष तकारः । कस्तर्हि दकारः । यदि दकारो न ज्ञापकं भवति । एवं तर्हि तपरस्तत्कालस्य १.१.७० इति दकारोऽपि चर्त्वभूतो निर्दिश्यते । यद्येवं चर्त्वस्यासिद्धत्वाद्धशि च ६.१.११४ इत्युत्त्वं प्राप्नोति । सौत्रो निर्देशः । अथवाऽसंहितया निर्देशः करिष्यते—अणुदित्सवर्णस्य चाप्रत्ययः तपरस्तत्कालस्येति ।

फलाभावादेषा परिभाषा न मन्तव्या । अमू इत्यादौ दीर्घोकारविधानन्तु उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः इति स्वीकारेण उ+ऊ इतिस्थिते सूत्रत्वात् पूर्व दीर्घे ऊ इति जाते पश्चात् समाहारस्यैकत्वात् एकवचने 'स नपुंसकम्' २.४.१७ इति नपुंसकत्वाद्ध्रस्वो नपुंसके प्रातिपदिकस्य १.२.४७ इति ह्रस्वे सुपो लुकि च कृते निष्पन्नेन उ इत्यनेन सिद्धयत्येव । तदुक्तं सिद्धान्तकौमुद्याम् अदसोऽसेरित्यत्र उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः । आन्तरतम्याद्ध्रस्वव्यञ्जनयो र्ह्रस्वः दीर्घस्य च दीर्घः

॥इति शिवम्॥—२१

---

'उ' से स्वतः दीर्घादि के ग्रहण का निवारण हो जाता, दीर्घादि की व्यावृत्ति के लिए किया गया 'तपर' निर्देश व्यर्थ हो जायगा । पाणिनि का तो एक वर्ण भी व्यर्थ नहीं है । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्—महाभाष्यम् १.१.१ अतः तपार करण सामर्थ्यात् जानते हैं कि भाव्यमान होते हुए भी उकार से सवर्ण का ग्रहण होता है । 'तित्स्वरितम्' ६.१.१.३१ इस सूत्र के भाष्य में यह परिभाषा स्पष्ट है ।वहाँ "तिति प्रत्ययग्रहणं कर्तव्म्" अर्थात् तित् यदि प्रत्यय रहे तभी स्वरित हो, ऐसा वार्तिक मानना चाहिए, वार्तिककार के इस सुझाव का खण्डन करते हुए भाष्यकार ने कहा कि गिरति में ऋत इद्धातोः ७.१.१०० सूत्र से इत् नहीं होता है, किन्तु इद् होता है इसलिए तित् नहीं होने से दोष नहीं होगा । इस पर प्रश्न उठा कि यदि वहाँ 'द्' मानेंगे तो दीर्घ स्थानी के स्थान में दीर्घ 'ई' होगा क्योंकि 'तपरस्तत्कालस्य— की प्रवृत्ति नहीं होगी । इसका समाधान भाव्यमान परिभाषा से किया । फिर प्रश्न उठा कि—भाव्यमान से सवर्ण का ग्रहण नहीं हो, ऐसा मानने पर 'अमू' में दीर्घ उकार नहीं होगा । इसके उत्तर में उन्होंने कहा कि दिव उत् के तपर करण से जानते हैं कि भाव्यमान उकार से भी सवर्णो का ग्रहण होता ही है ।

इस तरह सिद्ध हुआ कि उकार को छोड़कर अन्य विधीयमान 'अण्' से सवर्ण ग्रहण नहीं होता । इति शिवम्—२१

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह—

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥२२॥**

---

**वर्णाश्रये नास्ति—लक्षणम्—२२**

गवे हितम् इति लौकिकविग्रहे गो+ए, हित स् इत्यलौकिकविग्रहे 'चतुर्थी तदर्थार्थंबलिहितसुखरक्षितैः' २.१.३६ इति समासे 'कृत्तद्धितसमासाश्च' १.२.४६ इति नियमेन 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' १.२.४५ इति प्रातिपदिकत्वेन "सुपो धातुप्रातिपदिकयोः" २.४.७२ इति सुपो लुकि सौ तस्य 'अतोऽम् ७.१.२४ इति अमादेशेऽ'मि पूर्वः' ६.१.१०७ इति पूर्वरूपे गोहितमित्यत्र 'सुपो धातुरिति लुप्तस्य एकारस्य 'प्रत्ययलोपे प्रत्ययलक्षणम्' १.१.६१ इत्यानयनेन अच्परत्वाद् एचोयवायावः ६.१.७८ इत्यवादेशः प्राप्तो 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति परिभाषास्वीकारेण वार्यते। नच 'न लुमताङ्गस्य' १.१.६३ इति प्रत्ययलक्षणनिषेधादवतरणासङ्गतिर्वाच्या, लुमता शब्देन लुप्ते तन्निमित्तकाङ्गकार्यं न स्यादिति तदर्थतयाऽवादेशस्याङ्गकार्यत्वाभावात् निषेधाप्रवृत्तेः। शब्दनित्यत्वसिद्धान्तपरिरक्षणायान्यादेशविधायकसूत्राणामिव एचोऽयवायावः ६.१.७८ इत्यस्यापि अजव्यवहितपूर्वस्थितो य एच् तद्घटितस्यायादिघटित आदेश इत्यर्थोऽवश्यस्वीकार्यः। अत्रार्थेऽपि लुप्तप्रत्ययाव्यवहितपूर्वत्वस्याङ्गेऽन्वयो न कल्पितः येनायाद्यादेशोऽङ्गविधिः स्यात्। परे तु गोहितमित्यादौ गवे हितमिति लौकिकः विग्रहः, अलौकिकविग्रहस्तु गो+ङे हित सु इति। तत्र ङे इत्यस्यैव लुक् तस्य प्रत्ययलक्षणेनानयनेऽपि अच्परत्वाभावा-

---

**वर्णाश्रये नास्ति…लक्षणम् ॥२२॥**

'गवे हितम्' गो हितम् यहाँ गो ङे और हित सु को चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः" २.१.३६ इस सूत्र से समास होने पर प्रातिपदिक संज्ञा और सुपो धातु प्रा० २.४.७१ से ए और सु का लोप करने पर गोहित शब्द से प्रातिपदिकादि कार्य करने पर 'गोहितम्' बनता है। यहाँ यदि लुप्त 'ए' का 'प्रत्ययलक्षण' के द्वारा आनयन हो जाय; तब तो 'एचोऽयवायावः' ६.१.७८ से अवादेश होना चाहिए। 'प्रत्यय' लक्षण' का निषेध "न लुमताङ्गस्य" १.१६२ इस सूत्र से नहीं हो सकता; क्योंकि वह सूत्र अङ्ग कार्य कर्तव्य में ही प्रत्यय-लक्षण का निषेध करता है। इस प्रकार प्रत्ययलक्षण अनिवार्य है और फिर अवादेश भी अनिवार्य। इस दोष के निवारण के लिए परिभाषा मानते हैं **वर्णाश्रये नास्ति प्रत्यय-लक्षणम्"**। वर्ण को आश्रय (निमित्त) बनाकर जो काम होता है; वह यदि कर्तव्य रहे; तो प्रत्यय-लक्षण नहीं होता है। "वर्णः आश्रयो निमित्तं यस्य" यह वर्णाश्रय शब्द का विग्रह है। "एचोयवायावः" से विधीयमान अवादेश कार्य वर्ण को '(अच्' को) निमित्त बनाकर होता है; इस लिए वह कार्य वर्णाश्रय कार्य है; यहाँ प्रत्यय लक्षण करके वही करना है। इसलिए प्रत्यय-लक्षण नहीं होगा। इस तरह "अच् परे" नहीं होने के कारण अवादेश नहीं हुआ।

वर्णप्राधान्यविषयमेतत् । तत्त्वं च 'प्रत्ययलोप' इति सूत्रे स्थानिवत् इत्यनु-

---

देवावादेशाप्राप्तिः । तथाच नागेशस्याशय इत्थं कल्पनीयो यत् गवे हितमितिवद् गोहित-मित्यत्राप्यवादेशापत्तिरिति । गोहितमित्यत्र न चतुर्थीसमासः किन्तु गावौ हितौ यस्य कुलस्य तत्कुलं गोहितम् इत्यत्र गो+औ+हित+औ इत्यनयोबहुव्रीहिसमासः। एवञ्च लुप्तस्य औकारस्य प्रत्ययलक्षणेनानयने अच्परत्वसंभवादवादेशस्य प्राप्ति-रस्तीत्याहुः ।

वर्ण आश्रयो निमित्तं यस्य स वर्णाश्रयः तादृशे कार्ये कर्तव्ये प्रत्ययलक्षणं न भवति । अवादेशकार्यं वर्णनिमित्तकम्, एचो वर्णस्याचि वर्णे परेऽयादेशविधानात् । नचैतावता वर्णाः यस्य कार्यस्योद्देश्यीभूताः, तादृशे कार्ये कर्तव्ये प्रत्ययलक्षणं नेत्ये-वायाति । तथाच गोहितमित्यादिसिद्धावपि वेधा इत्यत्र 'ससजुषोरुः' ८.२.६६ इति रुत्वे कर्तव्ये प्रत्ययलक्षणेन पदत्वानापत्तिः, रुत्वकार्यस्य वर्णोद्देश्यककार्यत्वेन वर्णा-श्रयत्वात् इति वाच्यम् प्रत्यासत्त्या लुप्तप्रत्ययवृत्तिवर्णत्वव्याप्यधर्मावाच्छिन्नोद्देश्यताके कार्ये प्रत्ययलक्षणं नेत्यर्थस्वीकारेण दोषाभावात् । गोहितमित्यादौ लुप्तप्रत्ययः एकारः बहुव्रीहिसमासे च औकारः तद्वृत्तिवर्णत्वव्याप्यो धर्मः अच्त्वधर्मस्तद-वच्छिन्नोद्देश्यताकं कार्यम् अवादेशकार्यम् तत्र कर्तव्ये प्रत्यलक्षणाभावाद्दोषाभावः । रुत्वकार्यं तु न तादृशं कार्यं यतस्तत्र लुप्तप्रत्ययः सुः तद्वृत्तिवर्णत्वव्याप्यधर्मः सकार-त्वादिकं रुत्वकार्यस्योद्देश्यीभूतं नास्ति पदत्वमेवात्र प्रत्ययलक्षणेन सम्पाद्यं सकारस्तु वेधस् इत्यत्र वर्तते एव । अथवा लुप्तप्रत्ययवृत्तिर्या वर्णत्वव्याप्यधर्मावच्छिन्नविषयता-तन्निरूपके कार्ये कर्तव्ये प्रत्ययलक्षणं नेति परिभाषार्थः स्वीकार्यः ।

---

यह परिभाषा उसी वर्ण निमित्तक कार्य में लगती है; जहाँ वर्ण का प्रधान रूप में आश्रयण हो । "तत्त्वञ्च" में 'तत्त्वं' का अर्थ 'तत्' है । तत् पद से 'परिभाषारूपम्' लिया गया है । परन्तु इस अर्थ में "तत्त्वं" में 'त्व' प्रत्यय लगाना व्यर्थ जान पड़ता है । 'तत्' ही पर्याप्त था । इसलिए 'तत्त्वं' का अर्थ यह 'रहस्य' करना चाहिए । इदमत्र तत्त्वम् में—'तत्त्वम्' का अर्थ 'रहस्य' या सारांश ही है । सारांश यह है "प्रत्ययलोपे प्रत्ययलक्षणम्" १.१.६२ इस सूत्र में "स्थानिवत्' सूत्र से स्थानिवत् की अनुवृत्ति करने से ही राजा इत्यादि में सुलोप करने पर 'राजान्' यहाँ पदसंज्ञा सिद्ध हो जाती थी, 'प्रत्ययलक्षण' ग्रहण सामर्थ्यात् यह अर्थ होगा कि जहाँ प्रत्यय प्रधान हो अर्थात् जहाँ प्रत्यय किसी का विशेषण न हो; वहीं सूत्र की प्रवृति होगी । इस तरह स्पष्ट है कि प्राधान्येन जहां प्रत्यय का आश्रयण है वहीं प्रत्ययलक्षण होगा; वर्ण का जहाँ प्राधान्येन आश्रयण है; वहाँ नहीं होगा । इसतरह यह रहस्य निकला कि प्राधान्येन वर्णाश्रयण में प्रत्यय लक्षण नहीं हो और यह परिभाषा सिद्ध हो गयी । वर्णप्राधान्य का तात्पर्य है वर्ण का किसी अन्य का विशेषण न होना; अथवा यों ही कहिए कि प्रत्ययनिरूपितविशेष्यतावान् जहाँ वर्ण है वहीं वर्ण-प्राधान्य है । अर्थात् प्रत्यय की अपेक्षा वर्ण में जहाँ विशेष्यता होगी; वहीं वर्णप्राधान्य माना जायगा ।

**वृत्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम् ।**

---

"प्रत्ययलोपे प्रत्यलक्षणम्" १.१.६२ इत्यत्र 'स्थानिवदादेशोऽनल्विधौ' १.१.५६ इत्यतः स्थानिवादित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं व्यर्थं सत् प्रत्ययस्य यत्र प्राधान्यं तत्रैव प्रत्ययलक्षणं भवतीति ज्ञापयति । तेन यत्र प्रत्ययोऽन्यस्याविशेषणरूपं प्राधान्यं भजते; तत्रैव प्रत्ययलक्षणसूत्रप्रवृत्तिरित्येषा परिभाषा सिद्धा । इत्थं मूलोक्तस्य "तत्त्वं च" इत्यत्रत्यस्य तत्त्वमित्यस्य परिभाषारूपञ्चेति तात्पर्यम् मन्तव्यम् । किन्तूक्ततात्पर्यावधारणे त्वप्रत्ययप्रयोगोऽनिरर्थकः प्रतिभाति तच्चेत्यनेनैव परिभाषारूपञ्चेत्यर्थस्य परामर्शसम्भवात् । तत्त्वञ्चेत्यस्य परिभाषारूपत्वञ्चेत्येवार्थः शब्दस्वारस्यलभ्यः, स चार्थोऽत्र न संघटते । अतस्तत्त्वञ्चेत्यस्य 'रहस्यन्तु' इतितात्पर्यं स्वीकार्यम् । एतादृशशब्दप्रयोगेण नागेशोऽत्र विवक्षति यत् यथाऽन्यासुपरिभाषासु किमपि ज्ञापकं भवति, ज्ञापनादनन्तरं ज्ञापकं च स्वांशे चरितार्थं वर्ण्यते, तथात्र नास्ति; किन्तु प्रत्ययादिपदमहिम्ना प्रत्ययलोपसूत्रस्यैव तादृशार्थो लभ्यते, येन वर्णाश्रये प्रत्ययलक्षणं न भवततीति । प्रत्ययलोपे तल्लक्षणमित्येव सिद्धे प्रत्ययपदप्रयोगात् प्रत्ययलोपेऽपि प्रत्ययत्वव्याप्यधर्माश्रितं कार्यं भवतीत्यर्थो लभ्यते । स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणात् प्रत्यये प्राधान्यलाभः । तेन सिद्धमेव यद् वर्णस्य प्राधान्येनाश्रयणे प्रत्ययलक्षणं न भवतीति ।

---

यत्र **"प्रत्ययस्य इतराविशेषणत्वरूपं प्राधान्यम्"** **"तत्रैव प्रत्ययलक्षणम्"** का तात्पर्य यदि यह मानें कि जहाँ प्रत्यय किसी अन्य विशेष्य का विशेषण न हो; वहीं प्रत्यय प्राधान्य है और वहीं प्रत्यय लक्षण होगा तो 'एचोऽयवायावः' ६.१.७८ में अजव्यवहित पूर्वत्वविशिष्ट एच् को अयादि हो; इस अर्थ में जिस एको (प्रत्यय को) लाकर अच् परे होने से अवादेश की आपत्ति दी जाती है; वह 'अच्' यहाँ इतर=अन्य का (एच् का) विशेषण ही है । इसलिए प्रत्यय-लक्षण नहीं होने से किसी प्रकार का दोष नहीं होने पर भी "दीर्घाहो निदाघ" में 'दीर्घाणि अहानि यस्मिन्' इस विग्रह में दीर्घाहन् शब्द से सम्बोधन में 'हल्ङ्यादि लोप' करने पर "रोऽसुपि" ८.२.६९ से रेफादेश कर्तव्य रहने पर प्रत्यय लक्षण नहीं होगा; क्योंकि 'रोऽसुपि' में सुब्भिन्नाव्यवहित पूर्वत्वविशिष्ट अहन् शब्द के नकार को र् हो इस अर्थ में 'सुप्' इतर विशेषण ही है । अतः प्रत्ययलक्षण नहीं होने से असुप् परे हो जाने के कारण रेफादेश होने पर रु सम्बन्धी रेफ नहीं होने कारण 'हशि च' ६.१.११४ से उत्व नहीं होने 'दीर्घाहो निदाघ' नहीं बनेगा । इतना ही नहीं; दधि मधु यहाँ भी "सुप्तिङन्तं पदम्" से पदसंज्ञा कर्त्तव्य में प्रत्यय-लक्षण नहीं होगा । क्योंकि 'सुप्तिङन्तं पदम्' १.१.१४ इस सूत्र से विधीयमान पदसंज्ञा में प्रत्यय सुप् और तिङ् अन्त के विशेषणीभूत हैं । अतः प्रत्यय-प्राधान्य का तात्पर्य पूर्वोक्त नहीं माना जा सकता है ।

**वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं च। तेन गोहितमित्यादाववादि न। चित्रायां जाता चित्रेत्यादावणो योऽकारस्तदन्तान्ङीबिति ङीप् च न॥**

---

प्रत्ययप्राधान्यं नाम वर्णत्वव्याप्यधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानाश्रयत्वम्। गोहितम् चित्रायां जाता चित्रेत्यादौ तादृशस्य प्रत्ययप्राधान्यस्यासत्त्वान्न प्रत्ययलक्षणम्।

एषा वर्णप्राधान्यविषया। प्रत्ययप्राधान्ये प्रत्ययलक्षणम्। वर्णप्राधान्ये नेति स्वतःसिद्धत्वात्। वर्णप्रधान्यं यदीतरनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वं गृह्येत तर्हि गोहितम् इत्यत्रैज्निष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेन प्रत्ययलक्षणनिषेधो न स्यात्। अतः **वर्णस्येतराविशेषणत्वमिति** 'वर्णप्राधान्यलक्षणे मूलोक्ते इतरपदेनावयवीग्राह्यः, तेन स्वावयवि-निष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वं वर्णस्येतराविशेषणत्वमिति मूलोक्तस्य वर्णप्रधान्यप्रथमप्रकारस्यार्थः। गोहितमित्यादावच्पदार्थस्यैचि विशेषणत्वेऽपि न क्षतिः। चित्रायां जाता चित्रा इत्यादौ 'तत्र जातः' ४.३.२५ इति विहितस्य "चित्रा रेवती रोहिणीभ्यः ४.३.३४ इत्यनेन नक्षत्रेभ्यो बहुलम् ४.३.३७ इत्यनेन वा लुप्तस्य चाणः प्रत्ययलक्षणेनानयनाट्टिड्ढेति ङीब्मा भूदिति हेतोरन्यदप्यपरं वर्णप्राधान्यमाश्रयणीयम्। अन्यथा अवयविप्रातिपदिकनिष्ठविशेष्यतानिरूपितप्रकारताश्रयस्यैव अकारे सत्त्वात् वर्णप्राधान्यं न स्यात्। तच्च द्वितीयं वर्णप्राधान्यं स्वावयविनिष्ठप्रकारतानिरूपितविशेष्यत्वरूपम्। प्रातिपदिकस्याणोऽयोऽकारस्तदन्तान्ङीप् इत्यर्थे वर्णप्राधान्यादर्थात् अवयविप्रातिपादिकनिष्ठा या प्रकारता, तादृशप्रकारतानिरूपितं विशेप्यत्वमकारे वर्तते इति हेतोः प्रत्ययलक्षणाभावान्न ङीप्। प्रत्ययत्वव्याप्यधर्म्मावच्छिन्नविशेष्यतानिरूपितविशेषणतानाश्रयत्वमुभयसाधारणं वर्णप्राधान्यं स्वीक्रियते चेत्तदा एकविधवर्णप्राधान्यस्वीकारेणैव सिद्धे द्विविधं वर्णप्राधान्यं न स्वीकार्यम्, गौरवात्।

महाभाष्यकारस्तु स्थानिवत्सूत्रेणैव प्रत्ययलक्षणकार्यं साधयित्वा प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रं नियमार्थं स्वीकरोति, तन्मतेन वर्णाश्रयविधौ अर्थाद्विशेष्य-

---

इसलिए प्रत्यय-प्राधान्य का तात्पर्य यह लेना चाहिए कि जहाँ प्रत्यय किसी वर्णत्व-व्याप्य-धर्मावच्छिन्न-विशेष्यता-निरूपित प्रकारता का अनाश्रय हो। अर्थात् वह प्रत्यय प्रधान माना जायगा; जहाँ प्रत्यय किसी वर्ण का विशेषण नहीं बना होगा। 'गवे हितम्' चित्रायां जाता" यहाँ दोनों जगह प्रत्यय वर्ण के विशेषण हैं; इसलिए ए का और चित्रारेवती-रोहिणीभ्यः ४.३.३४ अथवा नक्षत्रेभ्यो बहुलम् ४.६.३७ से लुप्त अण् का प्रत्यय लक्षण नहीं हुआ। क्योंकि 'एचोऽयवायावः' और 'ठिड्ढणञ्' यहाँ प्रत्यय को वर्ण का विशेषण बनाकर अर्थ किया है। 'अणो योऽकारः" तस्य ङीप् इस भाष्यकार सम्मत "टिड्ढ" इस सूत्र के अर्थ में वर्ण प्रधान है ही।

**इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तस्य प्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥२२॥**

---

तया विशेषणतया वा यत्रालाश्रयणमस्ति तत्रानल्विधावित्यस्य प्रवृत्त्यास्थानिवद्भावाप्रसक्त्या प्रत्ययलोपप्रयुक्तकार्यस्य सुतरामप्रवृत्त्या परिभाषेयं व्यर्था। अतो यस्य वार्तिककारस्य मतेन प्रत्ययलोपसूत्रं तस्य मतेन अस्याः परिभाषायाः प्रयोजनमस्ति। अतो वार्तिककारमतेनेयं परिभाषावश्यकी न भाष्यकारमतेन। तदाह मूले **इदमल्विधौ स्थानिवत्वाप्राप्तावपि** प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति एवञ्च मित्रशीरित्यत्र वार्तिककारमतेन प्रत्ययलक्षणार्थं सूत्रस्यावश्यकत्वेन गोहितमित्यादावपि प्रत्ययलक्षणापत्या तद्वारणार्थेयं परिभाषा मन्तव्येति भावः। प्रत्ययलोपे प्रत्ययलक्षणम् १.१.६२ इति सूत्रस्य भाष्ये परिभाषेयमुल्लिखिता। तथाहि अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्। प्रत्ययलक्षणं यथा स्याद्वर्णलक्षणं मा भूदिति। गवेहितं गोहितं रायः कुलं रैकुलमिति। किमर्थं पुनरिदमुच्यते॥ प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य (वा०१) प्रत्ययलोपे प्रत्ययलक्षणमित्युच्यते सदन्वाख्यानाच्छास्त्रस्य। सच्छास्त्रेणान्वाख्यायते सतो वा शास्त्रमन्वाख्यायकं भवति। सदन्वाख्यानाच्छास्त्रस्य। उगिदचां सर्वनामस्थानेऽधातोः ७.१.७० इतीहैव स्यात् गोमन्तौ यवमन्तौ। गोमान् यवमानित्यत्र न स्यात्। इष्यते च स्यादिति। तच्चान्तरेण यत्नं न सिद्धयति। अतः प्रत्ययलोपे प्रत्ययलक्षणवचनम्। एवमर्थमिदमुच्यते।

---

भाष्यकार के मतानुसार प्रत्यय-लोप सूत्र नियमार्थक ही है। सर्वत्र 'स्थानिवत्' सूत्र से स्थानिवद् भाव होने से ही निर्वाह होजायगा, प्रत्यय-लक्षण सूत्र नियमार्थ माना गया है। इस तरह "गवे हितन्" में "अनल्विधौ" से निषेध हो जाने के कारण 'स्थानिवद्भाव' की अप्राप्ति होने के कारण अवादेश की प्राप्ति नहीं होगी। इस परिभाषा की आवश्यकता नहीं है; तथापि वार्तिकार के मत से 'मित्रशीः' 'अतृणेट्' इत्यादि स्थलों में 'शास इदङ्हलोः ६.४.३४ तृणह इम् ७.३.९२ इत्यादि सूत्रों में हलादि निमित्त होने के कारण विशेषणतया अलाश्रय विधि होने से 'स्थायिवद्भाव' का निषेध हो जाने के कारण इत्वादि की अप्राप्ति हो जायेगी। इसलिए प्रत्यय-लक्षण सूत्र की आवश्यकता है। ऐसी स्थिति में "गो हितम्" इत्यादि स्थलों में प्राप्त प्रत्यय-लक्षण के निवारण के लिए "वर्णाश्रये नास्ति" इत्यादि परिभाषा की आवश्यकता है। "मित्रशीः" इत्यादि में जो उपायान्तर दिखाये गये हैं; वह भाष्यकार की कल्पना है, वार्तिककार की नहीं। इसलिए वार्तिककार के मत में अल्विधि में स्थानिवत्व की अप्राप्ति होने पर अनिवार्य प्रत्यय लक्षण की आवश्यकता की पूर्ति के लिए प्रत्ययलक्षण सूत्र को विध्यर्थक मानने पर 'गोहितम्' में प्राप्त दोष के निवारणार्थ परिभाषा की आवश्यकता है ही॥

॥इति शिवम् २२॥

ननु 'अतः कृकमी'त्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह—
**उणादयोऽव्युत्पन्नानि प्रतिपदिकानि ॥२३॥**

---

न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च । किं प्रयोजनम् । प्रत्ययं गृहीत्वा यदुच्यते; तत्प्रत्ययलक्षणेन यथा स्यात् । शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूदिति । किं प्रयोजनम् । शोभना दृषदोऽस्य सुदृषद् ब्राह्मणः । सोर्मनसी अलोमोषसी ६.२.११७ इत्येष स्वरो माभूदिति । अत्र कैयटः—प्रत्ययलोपे तल्लक्षणवित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययत्वरूपाश्रयेण वर्णरूपाश्रयेण वा तत्सर्वं स्यात् सर्वनाम्नो वस्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे तु सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपेऽपि भवति न वर्णरूपतानिमित्तम् ।

**किमर्थमिति**—स्थानिवद् भावेन सिद्धमिति भावः ।······न च स्थानविद्भावेन सिद्ध्यति 'अतृणेद्' इत्यदावल्विधित्वात्······ । **प्रत्ययं गृहीत्वेति**—स्थानिवद्भावेन सिद्धे सत्ययं योगो नियमार्थः··· ।

इति शिवम् २२ ।।

**उणादयोऽव्युत्पन्नानि प्रतिपादिकानि** (प० २३) ननु विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ६.३.९२ इति सूत्रेऽप्रत्ययग्रहणं क्रियते । तच्च धातुग्रहणेऽपि तदादिविधिं ज्ञापयति । अन्यथा विष्वगञ्चनम् इत्यादावञ्चधातुरूपोत्तरपदपरत्वाभावादद्र्यादेशाप्राप्त्याऽप्रत्ययग्रहणं व्यर्थं स्यात् । तेन यथा अयस्कार इत्यादौ कारशब्दे कृधात्वादिरूपोत्तरपदपरत्वाद् अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८.३.४६ इति सत्त्वं भवति तथा कम्धातुरूपोत्तरपदपरत्वादेवायस्कंस इत्यादौ सत्त्वे सिद्धे कमेः पृथक्कंसग्रहणं व्यर्थमिति चेन्न **उणादयोऽव्युत्पन्नानि प्रतिपादिकानीति** परिभाषास्वीकारात् । अत्रोणादय इत्यस्योणादिप्रत्ययनिष्पन्नानीत्यर्थो लक्षणया स्वीकार्यः । तेनोणादिनिष्पन्नानि प्रातिपदिकानि अव्युत्पन्नानि अर्थात् प्रकृतिप्रत्ययविभागरहितानि मन्तव्यानीति परिभाषार्थः । उणादेः प्रत्ययमात्रस्य प्रतिपदिकत्वाभावेन यथाश्रुतेन्वयानुपपत्तिरूपस्य लक्षणाबीजस्य सत्त्वात् । "ननूणादिप्रत्ययनिष्पन्नानि" इत्युच्यते पुनश्च प्रकृतिप्रत्ययविभागरहितानि" इतिकथ्यते तत्र विरोधः, उणादिरेव प्रत्ययः यतश्च स विहितः सैव प्रकृतिः, इति प्रकृतिप्रत्ययविभागस्य स्वतः सिद्धेरिति चेत् श्रूयताम् शाकटायनादिभिर्यथा उणादिनिष्पन्नेषु प्रकृतिप्रत्ययविभागः स्वीकृतस्तथा न पाणिनीयैः । अर्थात् उणाद्यन्ततदादीनि प्रकृतिप्रत्ययविभागप्रयोज्यपाणिनिसूत्रप्रवृत्त्यनर्हाणि मन्तव्यानीत्येव तस्याः तात्पर्यमिति ।

---

**उणादयोऽव्युत्पन्नानि प्रातिपादिकानि** २३

वृतृवदि-हनिकमिकषिभ्यः सः (३.६२ उणादि) सूत्र से कंस शब्द बनता है । अतः अयस्कंसः में कमादि उतर पद के परे रहते सत्त्व हो ही जायगा "अतः कृकमि कंस" ८.३.४६ इत्यादि सूत्र में कंस ग्रहण व्यर्थ है । इसलिए कहते हैं कि "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" । उणादिप्रत्यय से निष्पन्न प्रातिपादिक को

**इदमेवास्या ज्ञापकमिति कैयटादयः कंसेस्तु न सोऽनभिधानात् ।। प्रत्ययस्य लुगि' त्यादौ भाष्ये स्पष्टा ।।**

---

अतः कृकमिकंस...८.३.४६ इति सूत्रस्थं कंसग्रहणमेवास्याः ज्ञापकमिति कैयटादयः । अन्यथा वृतृवदि-हनि-कमि-कषिभ्यः सः (उणादि ३.६२) इत्यनेन कमेः सप्रत्ययेन निष्पन्नकंसशब्दस्य कमाद्युत्तर-पदपरत्वात्कमिग्रहणेनैव सिद्धे कंसग्रहणं व्यर्थं स्यात् । ज्ञापितायान्तु कंसशब्दस्योणादिनिष्पन्नस्य प्रकृतिप्रत्ययविभागरहितत्व-स्वीकारेण तत्र कम्धातुकल्पना न शक्यते कर्तुम् । तथाचायस्कंस इत्यत्र सत्वार्थं कमेः पृथक् कंसग्रहणमावश्यकम् । कंस्धातोः सप्रत्ययेन सलोपेन कंसशब्दं संसाध्य तत्र परे सत्वार्थं सूत्रे कंसग्रहणस्य सार्थक्यं तु न शङ्क्यम् अनभिधानात् । प्रत्ययस्य लुकश्लुलुपः १.१.६१ इति सूत्रस्य भाष्येऽत एव कमेः सः कंस इत्येवोक्तम् । नन्वेवं 'सर्पिषा' 'यजुषा' इत्यादौ प्रत्ययावयवसकारं मत्वा "आदेशप्रत्यययोः" ८,३.५९ इति विधीयमानं षत्वमनुपपन्नं स्यात् 'अर्चिशुचि-हु-सृपिच्छादिच्छर्दिभ्य इसिः" (सिद्धा कौ० उणादि सू० ४४६८) अर्तिपृवपि यजि तनि थनि तपिभ्यो नित्" (सि० कौ० उणा० सू० ४४७७) इत्याभ्याम् इस्प्रत्ययोस्प्रत्ययनिष्पन्नयोस्तयोरुणाद्यन्ततदादितयाऽस्याः परिभाषायाः प्रवृत्तेरिति चेन्न 'उणादयो बहुलम्' ३.३ । इति बहुलग्रहणेन बहून् अर्थान् लाति ददातीतिव्युत्पत्त्या षत्वकार्यसाधनात् । प्रत्ययस्य लुक् १.१.६१ इत्यादौ भाष्येऽसौ स्पष्टा । तथाहि—"कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम् । कंसीय परशव्ययोरपि विशिष्टनिर्देशः कर्तव्यः । कंसीयपरशव्ययोरपि विशिष्टनिर्देशः कर्तव्यः कंसीयपरशव्ययोर्यञञौ भवतः, छयतोश्च लुग्भवतीति ।। स चावश्यं विशिष्टनिर्देशः कर्तव्यः । क्रियमाणेऽपि वै प्रत्ययग्रहणे उकारसकारयो र्मा भूदिति । कमेः सः कंसः, परान् शृणातीति परशुरिति । नैष दोषः—"उणादयोऽव्युत्पन्नानि प्राति-पादिकानि" ।

---

अव्युत्पन्न (प्रकृति प्रत्यय विभाग शून्य) प्रतिपादिक मानते हैं । "उणादिप्रत्यय से निष्पन्न" और प्रकृतिप्रत्ययविभागशून्य" ये शब्द परस्पर विरोधी हैं । प्रत्यय निष्पन्न मानते हुए उसे प्रकृतिप्रत्ययविभागशून्य कहना परस्पर विरुद्ध दिखाई पड़ता है । इसलिए परिभाषा का फलितार्थ यह मानना चाहिए कि शाकटायन ने जिन्हें उणादि प्रत्यय लगा कर सिद्ध किया है उन्हें पाणिनि अव्युत्पन्न मानते हैं । इस तरह "कंस" शब्द में कम् धातु और स प्रत्यय जैसे विभाग नहीं माने जाने के कारण कमादि मानकर "अयस्कंसः" में सत्त्व नहीं हो सकता । अतः सत्त्व विधान के लिए 'कंस' शब्द का पृथक् निर्देश चरितार्थ हुआ 'कंस' ग्रहण ही इस परिभाषा का ज्ञापक है । यद्यपि 'कंस' धातु से अच् या स प्रत्यय से निष्पन्न "कंस" शब्द में सत्त्व करने के लिए 'कंस' ग्रहण चरितार्थ दिखाई पड़ता है; तथापि अनभिघान के कारण कंस् से अ या स प्रत्यय नहीं माना जा सकता । इसका प्रमाण यह है कि भाष्य में "कमेः सः कंसः" यहीं कहा गया है ।

**ण्वुल्तृचावि'त्यादौ भाष्ये व्युत्पन्नानीत्यपि । इदं शाकटायनादिरीत्या । पाणिनेरस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम् ॥**

---

'ण्वुल्तृचौ' ३.१.१३३ इत्यादौ भाष्ये उणादिनिष्पन्नानि प्रतिपदिकानि व्युत्पन्नान्यपि स्वीकृतानि । अर्थात् उणादिप्रत्ययनिष्पन्नानि प्रकृतिप्रत्ययविभाग-सहान्यपि भवन्तीति स्पष्टीकृतम् तथाहि ण्वुल्तृचौ ३.१.१३३ इति सूत्रस्थं भाष्यमेवमस्तिः—विशेषणार्थस्तर्हि (चकारस्तृचः) क्व विशेषणार्थः ? अप्तृन्तृच् इति । तृ इत्युच्यमाने मातरौ मातरः, पितरौ पितरः अत्रापि प्रसज्येत ॥ इत्थमुणादिनिष्पन्नप्रातिपदिकविषये पक्षद्वयं प्रतिपादितं भाष्ये अव्युत्पन्नपक्षः व्युत्पन्न-पक्षश्च अव्युत्पन्नस्वीकारादेव अर्थवत्सूत्रं चरितार्थम् । अन्यथा कृदन्तत्वादेव सर्वेषां प्रातिपदिकसंज्ञासिद्धे तद्वैयर्थ्यं स्पष्टमेव । अतः कृकमि...इति सूत्रे कमेः पृथक्-कंसग्रहणञ्च चरितार्थम् ।

व्युत्पत्तिपक्षस्वीकारादेव अप्तृन्तृच् इति सूत्रस्थं नप्त्रादिग्रहणं नियमार्थकं सम्भवति । उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां संज्ञाशब्दानां यदि दीर्घस्तर्हि नप्त्रा-दीनामेवेति नियमस्वीकारादेव पितरौ मातरौ इत्यादौ दीर्घापत्तिर्न भवति ।

व्युत्पत्तिपक्षस्यापि स्वीकारादेव अयामन्ताल्वाय्येत्न्विष्णुषु ६.४.५५ इति सूत्रे अन्तग्रहणमाय्यग्रहणमित्नुज्ग्रहणं चोदाहरणानि लभन्ते । मण्डयन्त इत्यत्र "तृभू-वहि वसि भासि साधि गडि मण्डि जि नन्दिभ्यश्च" (उ० ४६११ सिः) इति झच्-प्रत्यये तस्य झोऽन्तः ७.१.३ इत्यन्तादेशेऽनेनाय् आदेशः । स्पृहयाय्यः इत्यत्र ण्यन्तस्पृहि-धातोः "श्रुदक्षिस्पृहिगृहिभ्यः" (उ० ४५७६) इति विहित आय्यप्रत्ययोऽप्ययौणादिक एव । स्तनयित्नुरित्यत्र यस्मिन्नित्नुच्प्रत्यये परेऽयादेशो विधीयते सोप्यौणादिक एव । पाणिनिनाऽष्टाध्याय्यामिमे प्रत्यया न विहिताः किन्तु परेष्वेषु सत्सु णेरयादेशो विहितः । अतो ज्ञायते पाणिनेरौणादिका अपीमे प्रत्ययत्वेनाभिमता इति ।

अत्र नागेशः भाष्यकारेण उणादिनिष्पन्नस्य प्रकृतिप्रत्ययविभागसम्पन्नता-पक्षः शाकटायनमतमनुसृत्य प्रतिपादित इति । अतएव उणादयो बहुलम् ३.३.१ इति

---

उणादि को प्रत्यय न मानने पर उणादि निष्पन्न सर्पिस् और यजुस् शब्द से तृतीया के एकवचन में सर्पिषा और यजुषा इत्यादि में प्रत्ययावयव सकार न होने से षकारादेश नहीं होगा; क्योंकि 'आदेशप्रत्यययोः'' ८.३.५९ सूत्र से आदेश स्वरूप सकार और प्रत्ययावयव सकार को ही षत्व विधान किया गया है, ऐसा नहीं मानना चाहिए; क्योंकि ''उणादयो बहुलम् ३.३.१ इस पाणिनिसूत्र में बहुलग्रहण से षत्वादि की व्यवस्था की जा सकती है; क्योंकि बहुल ग्रहण कामधेनु है । 'प्रत्ययस्य लुक् १.१.६१ इस सूत्र के भाष्य में यह स्पष्ट है । वहाँ कंस शब्द की सिद्धि 'कमेः सः, कह कर की गई है । कंस में सकार को प्रत्यय मानकर उसके लुक् की आशंका का समाधान उणादि को अव्युत्पन्न मानकर किया गया है ।

**'आयनेयी'ति सूत्रे भाष्ये स्फुटमेतत् ॥२३॥**

---

सूत्रस्थे महाभाष्यग्रन्थे "नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्" इत्यत्र वैयाकरणेषु शकटतोकस्यार्थात् शाकटायनस्य नाम्नो निर्देशः पाणिनेस्त्वव्युत्पत्तिपक्ष एवाभिमत इति कथयति शब्दन्दुशेखरे। तथाहि उणादयो बहुलम् ३.३.१ इति सूत्रस्थः शब्देन्दु शेखर ग्रन्थ इत्थमस्ति। उणादय इति व्याकरणान्तरस्थसूत्रव्यवस्थापकम्। उणाद्यन्ता येन व्याकरणान्तरेण व्युत्पादिताः शब्दास्तत्र बहुलमिति वक्तव्यं वर्तमानाधिकारे च ते वाच्या भूतेऽपीति च वाच्यमिति सूत्रार्थः स्वशास्त्रे तेषां साधुत्वबोधनं चैतावदेव कृतम्। सर्पिषा यजुषा इत्यादौ षत्वं तु बहुलग्रहणादेवेत्यादि...।

वस्तुतस्तु "अतः कृकमि-कंस"..."अर्थवदधातु—इति सूत्ररचनयाऽव्युत्पत्तिपक्षः" अयामन्ता...इति सूत्रस्थान्तादिग्रहणाद् व्युत्पत्तिपक्षश्च पाणिनिसम्मतौ। लक्ष्यानुरोधाच्च व्यवस्था कार्या। अत्रत्यो विचारविस्तरोऽस्याष्टीकाया लेखकस्य मम चान्द्रव्याकरणवृत्तेः समालोचनात्मकमध्ययनम् इति ग्रन्थस्य चान्द्रोणादिसूत्रविचारभागे (पृ० १७४-१८३) द्रष्टव्यः।

आयनेयी (७.१.२) इतिसूत्रे भाष्येऽस्याव्युत्पत्तिपक्ष एवेत्येत्येतन्मतं स्फुटम्। स्फुटमेतदेवेति पाठोऽपि क्वचिदुपलभ्यते। तत्र हि शमेः खः शङ्ख (उ० ४३० सि० कौ०) इत्यत्र "आयनेयीति ईनादेशं सभाव्य प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम्। प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम्। उणादयोऽव्युत्पन्नानि प्रातिपादिकानि ॥

इतिशिवम् २३

---

"ण्वुल् तृचौ" ३.१.१३३ इस सूत्र के भाष्य में उणादि को व्युत्पन्न भी माना गया है। परन्तु उणादि-निष्पन्न को व्युत्पन्न मानने की बात को शाकटायन के अनुसार कही गयी माननी चाहिए। पाणिनि तो उणादि सिद्ध को अव्युत्पन्न प्रतिपादिक ही मानते थे, ऐसा प्रतीत होता है। यह शब्देन्दु शेखर में कहा गया है। "आयनेयीनीयियः" इस सूत्र ७.१.२ के भाष्य में उणादि सिद्ध को अव्युत्पन्न मानने की बात स्पष्ट रूप में कही गई है। वहाँ भाष्य में "शमेः खः" 'शंखः' यहाँ ख को ईन होने की आशङ्का करके भाष्यकार ने कहा कि "प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्" अर्थात् पाणिनि उणादिव्युत्पन्न को प्रकृतिप्रत्ययविभाग शून्य प्रातिपदिक मानते हैं। इसलिए उस 'ख' को "ख" प्रत्यय का दर्जा नहीं देने के कारण यहाँ आदेश नहीं हुआ।

मेरे विचार में पाणिनि, कात्यायन और पतञ्जलि तीनों आवश्यकतानुसार उणादि व्युत्पन्न को प्रकृति-प्रत्यय विभागवान् और प्रकृति-प्रत्यय-विभाग शून्य दोनों मानते हैं।

"आयामन्ताल्वाय्य—६.४.५५ इससूत्र में निर्दिष्ट 'अन्त' आय्य, इत्नुच् ये प्रत्यय उणादि में ही मिलते हैं। 'मण्डयन्तः' स्पृहयाय्यः' 'स्तनयित्नुः' इत्यादि में

ननु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह—

**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥२४॥**

---

प्रत्ययग्रहणे यस्मात् स······ग्रहणम् २४

सनाद्यन्ता धातवः ३.१.३२ इति सन्नन्तस्य धातुसंज्ञा क्रियते। देवदत्तश्चिकीर्षति इत्यत्र देवदत्तश्चिकीर्ष इत्यस्य सन्नन्तत्वाद् धातुसंज्ञायां सुपो धातुप्रातिपदिकयोः २.४.७१ इति देवदत्तोत्तरवर्तिनः सुपो लुगापत्तिः अतः परिभाषा स्वीक्रियते "**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्**" व्याकरणे यत्र प्रत्ययग्रहणं वर्तते तत्र यस्मात्स प्रत्ययोविहितस्तत्प्रकृत्यादेरेव यश्च प्रत्ययो विहितस्तत्प्रत्ययान्तस्यैव ग्रहणं भवति। तथाच सन्नन्ततदादिरेव धातुसंज्ञाविधायके 'सनाद्यन्ता' इति सूत्रे ग्राह्यः। इह च यस्मात् कृधातोः सन् प्रत्ययो विहित स एवादिर्नास्ति इति सन्नन्ततदादित्वाभावान्न देवदत्तविशिष्टस्य चिकीर्ष शब्दस्य धातुसंज्ञाऽऽपद्यते। देवदत्तादेः 'सन्यङोः' ६.१.९ इति द्वित्वापत्तिस्तु नोद्भाव्या, तत्रानभ्यासस्येत्यनुवृत्तेः। तच्चानुवृत्तमनभ्यासस्येति बहुव्रीहिबलात् सन्नन्तविशेषणम्। तथाच तेनानभ्यासस्यैव सन्नन्तस्य द्वित्वविधानाद् द्वित्वाप्राप्तेः। न च वाक्यसंस्कारपक्षे प्रथममेव देवादेर्द्वित्वापत्तिः सा च निवार्यतेऽनया परिभाषयेति कथं नोच्यत इति वाच्यम् एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्यानौचित्यात्। तथाच सुपोलुगापत्तिनिवारणमेव परिभाषाफलम्।

---

णि को अयादेश होता है। इन प्रत्ययों के परे रहते 'णि' को अयादेश विधान यह सिद्ध करता है कि पाणिनि को उणादि विहितों में यहाँ प्रत्ययत्व स्वीकार था। [क्स' ग्रहण उसे अव्युत्पन्न सिद्ध करता है इसलिए 'इष्टि' के अनुसार उणादि को प्रत्ययत्व या अप्रत्ययत्व मानना ध्वनित होता है।

"अप्तृन्तृच्"—६.४.११ सूत्र में नप्तृ आदि ग्रहण की नियमार्थकता को स्वीकार करने वाले भाष्यकार को इसे व्युत्पन्न मानना ही पड़ेगा।

लक्ष्यानुरोधात् दोनों पक्ष माने जा सकते हैं। इस पर मेरे शोधप्रबन्ध "चान्द्र वृत्तेः समालोचनात्मकमध्ययनम्" के पृ०१७५-१७६ पर विस्तृत विचार किया गया है। इति २३

**अथ प्रत्ययग्रहणे यस्मात्स...ग्रहणम् २४**

"देवदत्तश्चिकीर्षति" "इत्यादि स्थलों में वाक्यसंस्कारपक्ष में" सनाद्यन्ता धातवः' ३.१.३२ से देवदत्त आदि को सन्नन्त होने के कारण धातुसंज्ञा हो जायगी, धातुसंज्ञा होने पर 'देवदत्तः' के सुप् का" सुपो धातु-प्रातिपादिकयोः" २.४.७१ से लुक् हो जायगा। इस दोष के निवारण के लिये परिभाषा मानते हैं—**प्रत्ययग्रहणे यस्मात् प्रत्य०-तदन्तस्य ग्रहणम्**"।

**'यस्मात्प्रत्ययविधिरि'ति सूत्रे यस्मात्प्रत्ययविधिस्तदादिप्रत्यये इति योगो विभज्यते। गृह्यमाणे उपतिष्ठत इति शेषः। तेन तदाद्यन्तांशः सिद्धः। तदन्तांशस्तु 'येन विधिरि'त्यनेन सिद्धः। स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे॥**

---

इयं परिभाषा योगविभागमूलिका।

यस्मात्प्रत्ययविधिः १.४.१३ इति सूत्रे यस्मात्प्रत्ययविधिस्तदादिप्रत्यये इति पृथग् प्रथमो योगः क्रियते "अङ्गम्" इति चान्यो योगः। तत्र प्रथमे योगे गृह्यमाणे उपतिष्ठते चेति पदद्वयमाध्याह्रियते। तथाच प्रत्यये गृह्यमाणे यस्मात्स विहितस्तदादि-रित्युपतिष्ठत इति शब्दयोजनया परिभाषायाः 'प्रत्ययग्रहणे यस्मात् विहितस्तदादेर्ग्रहणम्' इत्यंशः सिद्धः। तदाद्यन्तांश इति मूले तदादिः अन्ते यस्येति विग्रहः। तदन्तस्य ग्रहणम् इति तदन्तांशस्तु येन विधिस्तदन्तस्य १.१.७२ इत्यनेन सिद्धयति। सन्निति प्रत्ययग्रहणस्य विद्यमानत्वात्तदादिरित्यंशोपस्थितिः। तत्र च सनाद्यन्ता इत्यस्याभेदेना-न्वयः। तथाच सनादिर्यस्माद्विहितस्तदादिर्यस्सनाद्यन्त इत्यादिक्रमेण बोधः। यत्र चान्तपदं सूत्रे निर्दिष्टं नास्ति यथा ङ्याप्प्रातिपदिकादित्यादौ। तत्रोपस्थितस्य तदादेर्विशेष्यत्वं ङ्यापोर्विशेषणत्वञ्च प्रकल्प्य येन विधिरिति तदन्तविधिं सम्पाद्य ङ्याबन्तात्तदादेरित्यर्थः करणीयः। तदेतत् सर्वमभिप्रेत्य मूल आह—तदन्तांशस्तु येन विधिरित्यनेन सिद्धः। अत्र हि सूत्रे रीतिद्वयेन निर्देश उपलभ्यते। क्वचित् प्रत्ययस्य विशेष्यं सूत्रानिर्दिष्टम् यथानुपदमेवोक्ते ङ्याप्प्रादिपदिकादित्यादौ। कुत्रचिच्च विशेष्यं निर्दिष्टम् यथा च 'यञिञोश्च' ४.१.१०१ इत्यादौ प्रातिपदिकादिति विशेष्यं निर्दिष्ट-मस्ति। तत्र प्रथमेऽनुक्तविशेष्ये प्रत्यये गृह्यमाणे उपस्थिततदादिशब्दस्वरूपविशेषणा-देव प्रत्ययात्तदन्तविधिः। यथा ङ्याप्प्रातिपदिकादित्यत्र ङ्याब्भ्याम् तदादि-विशेषणाभ्यां तदन्तविधिं विधाय ङ्याबन्ततदादीत्यर्थः क्रियते। द्वितीये निर्दिष्ट-विशेष्ये प्रत्यये गृह्यमाणे तदेव विशेष्यं मत्वा प्रत्ययात्तदन्तविधिः। यथा 'यञिञो-श्च' ४.१.१०१ इत्यत्र प्रातिपदिकं विशेष्यं मत्वा तदन्त-विधिं विधाय यञ्-

---

प्रत्यय के ग्रहण में या प्रत्यय का ग्रहण जहाँ (जिस सूत्र में) है वहाँ प्रत्ययान्त पद से, जिससे वह प्रत्यय विहित है वह प्रकृति आदि में हो और जो प्रत्यय विहित हो, वह प्रत्यय अन्त में हो, इतना ही अंश लिया जायगा अर्थात् प्रत्ययान्त का अर्थ उस प्रत्यय की प्रकृति सहित तत्प्रत्ययान्त है। इसलिए सन्नन्त का अर्थ सन् प्रकृति कृमात्र आदि में और सन् प्रत्यय मात्र अन्त में हो ऐसा 'चिकीर्ष' लिया जायगा। उसी को 'सनाद्यन्ताः' से धातुसंज्ञा होगी "देवदत्त" तो सन् की प्रकृति नहीं है। इसलिए उसका ग्रहण नहीं होगा। तात्पर्य यह है कि सनाद्यन्ता धातवः इत्यादि सूत्रों में सन् यह प्रत्यय ग्रहण है। इसलिए तदादि की उपस्थिति होगी और उसमें सनाद्यन्ताः का अभेद सम्बन्ध से अन्वय होगा। इस तरह अर्थ होगा कि सनादि जिससे विहित हो, तदादि जो सनाद्यन्त उसी को धातु संज्ञा होगी। देवदत्त से सन् विहित नहीं है, इसलिए वह सन्नन्त तदादि नहीं हुआ। अतः उसको धातु-संज्ञा नहीं होगी।

प्रकृत्यादितदन्तात् प्रातिपदिकात् अर्थात् यञ्प्रकृत्यादियञन्तात् प्रातिपदिकादित्यर्थः कार्यः। क्वचित्तु अन्यस्य विशेष्यस्य सत्त्वेऽपि तदादिरूपविशेष्यं गृहीत्वैव प्रत्ययेन प्रथमं तदन्तविधिं विधाय ततस्तत्सूत्रनिर्दिष्टं विशेष्यमादाय पुनः प्रत्ययान्ततदादि-विधिना तदन्तविधिर्निष्पाद्यते—यथा 'वनो र च' ४.१.७ इत्यादौ। तेन वन्नन्ततदाद्य-न्तात् प्रातिपदिकादित्यर्थेन वन्नन्ततदाद्यात्मकधीवन्नन्ताद् अतिधीवन् शब्दान्ङीपि-रत्वे च कृतेऽतिधीवरीति सिद्ध्यति। इयं व्यवस्था लक्ष्यानुरोधात् प्रमाणोपलब्धे-र्वा क्रियते। अत्रो नातिप्रसक्तिः। अतिधीवरीति लक्ष्यं "नित्यं समासेऽनुत्तरपदस्थस्य" ८.३.४५ इति सूत्रस्थमनुत्तरपदग्रहणरूपं प्रमाणञ्च 'वनो र च' ४.१.७ इत्यादौ द्विस्तदन्तविधिं कल्पयितुं प्रेरयति।

---

परिभाषा की सिद्धि इस तरह होती है कि 'यस्मात् प्रत्यय-विधिस्तदादि प्रत्ययेऽङ्गम् इस सूत्र में योगविभाग है पहला योग है—यस्मात् प्रत्ययविधिस्तदादि प्रत्यये और दूसरा है—अङ्गम्"। प्रथम योग के अन्त में "गृह्यमाणे उपतिष्ठते" इन दोनों पदों का शेष (अध्याहार) माना जाता है। इस तरह प्रत्यये गृह्यमाणे यस्मात्' प्रत्ययविधिस्तदादि उपतिष्ठते अर्थात् प्रत्यय का ग्रहण रहने पर जिससे प्रत्यय विहित हो, उससे तदादि की उपस्थिति होती है। इस प्रकार परिभाषा का तदादि भाग फलित हुआ (सिद्ध हुआ) तदन्त अंश तो 'येन विधिस्तदन्तस्य' १.१.७२ इस सूत्र से सिद्ध होता है। यथा "ङ्याप् प्रातिपदिकात्" इस सूत्र में ङी और आप् प्रत्यय से पहले तदादि की उपस्थिति हुई, ङी और आप् अभेद सम्बन्ध से तदादि का विशेषण है। इसलिए "येन विधिस्तदन्तस्य" इस सूत्र से तदन्त की उपस्थिति हुई, ङी और आप् अभेद सम्बन्ध से तदादि का विशेषण है। इसलिए "येन विधि स्तदन्तस्य" इस सूत्र से तदन्त की उपस्थित होने पर "ङ्याबन्त तदादि" अर्थ का लाभ हुआ। तदन्त की उपस्थिति शब्दस्वरूप को विशेष्य मान कर वहाँ भी सम्भव है जहाँ अन्य विशेष्य की गुंजाइश न हो। तात्पर्य यह है कि जहाँ प्रत्यय का कोई विशेष्य सूत्र में नहीं कहा गया हो, जैसे "ङ्याप्" सूत्र में, वहाँ उपस्थित 'तदादि' शब्द स्वरूप को ही विशेष्य मानकर 'ङ्याप्' से तदन्त विधि करनी चाहिए। जहाँ और कोई विशेष्य कहा गया हो, जैसे 'यञञोश्च' ४.१.१०१ सूत्र में वहाँ "प्रातिपादिकात्" विशेष्य उपात्त है। इसलिए उसे ही विशेष्य मानकर 'यञ्' और 'अञ्' प्रत्यय से तदन्त विधि होती है। कहीं लक्ष्यानुरोध से या प्रमाण के मिलने से विशेष्यान्तर के रहते हुए भी उपस्थित तदादि रूप विशेष्य के अनुरोध से ही प्रत्यय से तदन्त विधि की जाती है और फिर उपात्त विशेष्यान्तर के अनुरोध से तदन्त विधि होती है। दो दो तदन्त विधि होने के कारण ही 'वनो र च' ४.१.७ का अर्थ वन्नन्तान्तात्' प्रातिपादिकात्' अर्थात् वन्नन्तान्त प्रातिपदिक से ङीप् और

**यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति तन्न। इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात्।**

यत्तु प्रत्ययः प्रकृतिं विनानुपपन्नः अतो येन विना यदनुपपन्नस्तत्तेना क्षिप्यते इति नियमेन 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यत्र यथा भोजनं विना पीनत्वानुपपत्या पीनत्वेन रात्रिभोजनमाक्षिप्यते तथा प्रत्ययेन स्वप्रकृत्यवयवकसमुदाया-क्षेपात् तं विशेष्यीकृत्य प्रत्ययेन तदन्तविधौ प्रत्ययान्तः स्वप्रकृत्यवयवकसमुदाय इत्यर्थेनैव सिद्धौ परिभायेयं निष्फलेति कस्य चिन्मतमिति तन्न, इयान् इत्यत्र इदम् परिमाणमस्येत्यर्थे इदम् शब्दात् इदमः परिमाणे "किमिदम्भ्यां वो घः" ५.२.४० इति वतुपि वस्य घत्वे च घस्य "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" ७.१.२ इति इयादेश इदमः इदम्किमोरीश्की ६.३.९० इतीशादेशे ई+इयत् इति स्थिते यस्येति च ६.४.९० इति प्रकृतिभागस्य लोपे इयत् शब्दात् सौ पुंसि अत्वसन्तस्य चा-धातोः ६.४.१४ इति दीर्घे उगिदचाम् ७.१.७६ इति नुमि सुलोपे तकारस्य संयोगान्त-लोपे प्रत्ययमात्रस्य शेषतया प्रत्ययः प्रकृतिं विनानुपपन्न इति स्वीकारासंभवेन प्रत्ययेन स्वप्रकृत्यवयवकस्य समुदायस्याक्षेपासम्भवात्।। आक्षेपश्च तदैव सम्भवति यदि सर्वत्र प्रकृतिप्रत्ययोः सहभावरूपस्य समुदायस्यैव दर्शनं स्यात्। न च तथा 'इयान्' 'अस्यापत्यमिः' व्यतिसे इत्यादौ व्यभिचारात्। इः इत्यत्र प्रकृतेरकारस्य यस्येति च ७.४.१४८ इति लोपेनापहारात् व्यतिसे इत्यादौ अस्तेरकारस्य "श्नसोरल्लोपः" ६.१.१११ इति, सकारस्य च तासस्त्योर्लोपः ७.४.५० इति लोपेना-पहारात्प्रत्ययमात्रस्यैव सत्त्वात् "दधि" 'मधु' इत्यादौ प्रत्ययं विना प्रकृतिस्तिष्ठत्येव। अतः प्रकृतिप्रत्यययोर्नास्ति तादृशः सहभावः यादृशः भोजनपीनत्वयोर्गन्धवत्त्वपृथिव्यो-श्चेति।

रेफान्त आदेश हो' यह हुआ। इसलिए अतिधीवरी" प्रयोग बना। दो दो तदन्त विधि करने में प्रमाण है—"नित्यं समासेऽनुत्तरपदस्थस्य" ८.३.४५ इस सूत्र में अनुत्तर पद ग्रहण। अनुत्तर पद इसलिए कहते हैं कि "परमसर्पिःकुण्डिका" में षत्व न हो। यदि विशेष्यान्तर के रहते उपस्थित तदादि को विशेष्य बनाकर तदन्त विधि न हो तो "समास" के द्वारा पूर्वपद का अध्याहार होने पर 'इसुस्' प्रत्ययान्त जो तदादित्व विशिष्ट पूर्वपद, उसको सत्व हो ऐसा ही अर्थ होगा। फिर तो परमसर्पिः में षत्व की प्राप्ति ही नहीं होने से 'अनुत्तरपद ग्रहण व्यर्थ हो जाएगा। अनुत्तर पद ग्रहण व्यर्थ न हो; इसलिए दो दो तदन्त विधियों की कल्पना की जाती है। यदि उणादि-निष्पन्न सर्पिः आदि शब्दों को अव्युत्पन्न मानें और 'सर्पिस्' घटक इसको प्रत्यय बोधक नहीं माने तो" अतिधीवरी' इस तरह के लक्ष्यों के अनुरोध से ही दो तदन्त विधियों की कल्पना करनी चाहिए।

किसी ने कहा कि प्रत्यय बिना प्रकृति के नहीं रह सकता है, इसलिए प्रत्यय के द्वारा स्व (प्रत्यय) विशिष्ट प्रकृति रूप आदिम अवयव वाले समुदाय का आक्षेप होता है और उसी आक्षिप्त समुदाय को विशेष्य बनाकर प्रत्यय को उसका विशेषण

**यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदादेरित्यन्तांशमात्रोपस्थितिरिति 'अङ्गस्ये'ति सूत्रे भाष्यकैयटयोः। एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते**

---

न च सुपि च ७.३.१०२ त्यादौ सुपीतिप्रत्ययग्रहणात्तदाद्युपस्थितौ तदादिं विशेष्यं कृत्वा तदन्तोपस्थितौ च जातायां सुबन्ततदादौ परेऽदन्ताङ्गस्य दीर्घ इत्यर्थे रामाभ्यामित्यादौ दीर्घो न स्यादिति वाच्यम् यत्र प्रत्ययो निमित्तत्वेनाश्रितस्तत्र परिभाषया स्तदादीत्यंशमात्रस्योपस्थितेः स्वीकारात्। अत्र प्रमाणम् अङ्गस्य ६.४.१ इति सूत्रस्थमहाभाष्यकैयटग्रन्थः तथाहि :— अथवा प्रत्यय इति प्रकृत्याङ्ग-कार्यमध्येष्ये। यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे प्राकरोत् उपैहिष्ट उपसर्गात् पूर्वमडाटौ प्राप्नुतः। सिद्धं तु प्रत्ययग्रहणे यस्मात्स विहितस्तदादितदन्तविज्ञानात्। सिद्धमेतत्। कथम्। प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति। एवनुपसर्गात्पूर्वमडाटौ न भविष्यतः॥

अत्र "सिद्धन्त्विति" प्रतीकमादाय कैयट आह—यत्र प्रत्ययो निमित्तत्वेनो-पादीयते तत्र पूर्वः कार्यित्वेन गृह्यमाणो यस्मात्स विहितस्तदादिर्गृह्यते। एतच्चाङ्ग-स्येति सूत्रे योगविभागेन साधितम्। यत्र तु प्रत्यय एव कार्यित्वेनोपादीयते तत्र तदन्त-ग्रहणमिति द्वे एते परिभाषे इति।

---

होने के कारण तदन्त विधि होती है। परन्तु यह मत युक्त नहीं प्रतीत होता; क्योंकि "इयान्" में केवल प्रत्यय का प्रयोग दिखाई पड़ता है। इसलिए यह कहना कि विना प्रकृति के प्रत्यय का प्रयोग नहीं मिलता; इसलिए प्रत्यय से स्वप्रकृत्यवयवक समुदाय का आक्षेप होगा, गलत है। इदम् शब्द से वतुप् प्रत्यय, वत् के व को घ आदेश, घ को इय्, इदम्+इयत् ऐसी स्थिति में इदम् को ईश् आदेश, ई का लोप करने पर स्वादिकार्य होने से 'इयान्' बनता है; यहाँ प्रकृति भाग है ही नहीं।

जिस सूत्र में प्रत्यय का आश्रयण निमित्त रूप में किया गया है अर्थात् जहाँ प्रत्यय निमित्त है जैसे "स्यतासी लृलुटोः' ३.१.३३ सुपि च' ७.३.१०२ इत्यादि सूत्र में, वहाँ 'तदादि' इतने मात्र अंश की ही उपस्थित होगी। यह 'अङ्गस्य' ७.४.१ सूत्र के भाष्य और कैयट में कहा गया है।

जहाँ पर पञ्चम्यन्त से पर प्रत्यय का आश्रय है; वहाँ भी 'तदादि' पर्यन्त अंश की उपस्थिति होती है और उस तदादि के विशेषण से तदन्त अंश की उपस्थित होती है। इसलिए एङन्तात् ह्रस्वान्ताच्चाङ्गात् हल् लुप्यते सम्बुद्धेश्चेत्, इस तरह का अर्थ 'एङ्ह्रस्वात् सम्बुद्धेः ६.१.६९ का हुआ। 'एङ्ह्रस्वात् सम्बुद्धेः' सूत्र में सम्बुद्धि से जिस अङ्ग का आक्षेप होता है, उसे विशेष्य बनाकर तदन्त विधि नहीं की जा सकती; क्योंकि आक्षिप्त का शाब्दबोध में भान नहीं होता। इसलिए अङ्ग को विशेष्य के रूप में स्वीकार नहीं किया जा सकता।

**तत्रापि तदादीत्यन्तांशोपस्थितिः परन्तु तत्र पञ्चम्यन्तता । अत एव 'एङ्ह्रस्वादि'ति सूत्रे एङन्तादित्यर्थलाभः ॥**

**अस्याः परिभाषायाः प्रयोजनान्तरं 'येन विधिरि' त्यत्र भाष्य उक्तं परमगार्ग्यायण इति । परमगार्ग्यस्यापत्यमितिविग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो न**

---

यत्र च पञ्चम्यान्तात्परः प्रत्ययः किञ्चित् कार्यं विधातुमाश्रीयते; तत्रापि तदादिमात्रोपस्थितिर्भवति । तस्य चोपस्थितस्य तदादेः प्रत्ययविशेषणता स्वीक्रियते । तत्र च पञ्चम्यन्ततास्त्येव । अतएव एङ् ह्रस्वात्सम्बुद्धेः ६.१.६९ इति सूत्रे एङन्ततदादेर्ह्रस्वान्ततदादेः परस्येत्यर्थलाभः तेन हे कतरत् इत्यत्र कतर+अत् इति स्थिते न तकारलोपः सम्बुद्धे र्ह्रस्वान्ततदादिपरत्वाभावात् । 'हे कतरत् इत्यत्र सम्बुद्ध्यवयवीभूताकारान्तस्यापि ह्रस्वान्ततदादित्वेन ततः परस्य सम्बुद्ध्यवयवस्य हलो लोपापत्तिस्तु न वाच्या एङ्साहचर्येणाङ्गसंज्ञानिमित्तभिन्नस्यैव ह्रस्वस्य ग्रहणात् । उक्तसाहचर्यात्सम्बुद्ध्यवयवाघटितस्यैव तदादे र्ग्रहणमिति कल्पना तु न युक्ता हे कुलेत्यत्र नलोपानापत्तेः । आक्षिप्तस्य शाब्दबोधे भानाभावेनाङ्गस्याक्षेपेण तु तदन्तविधिरिति न युज्यते । अत एङ्ह्रस्वात्सम्बुद्धेरित्यत्रास्याः परिभाषाया अतीवावश्यकता वर्तते ।

अस्या परिभाषाया एकमन्यत्प्रयोजनमपि येनविधिस्तदन्तस्य १.१.७२ इति सूत्रे भाष्यकारेणोक्तं परमगार्ग्यायण इति । परमश्चासौ गार्ग्यः परमगार्ग्य इत्यत्र

---

अतः हे 'कतरत्' में कतर को ह्रस्वान्त तदादि मानकर; उससे पर में विद्यमान सम्बुद्धि के अवयव हल् व' का लोप नहीं होता । यदि यह कहें कि एङ् के साहचर्य से अङ्ग के अनवयव से भिन्न 'ह्रस्व' लिया जायगा; यहाँ तो 'अत्' के अवयवीभूत होने के कारण 'ह्रस्व' अङ्ग अनवयव ही है । इस तरह यहाँ तलोप की तो प्राप्ति ही नहीं है तो साहचर्य नियम से सम्बुद्धि के अवयव से अघटित तदादि का ग्रहण मानने पर हे कुल यहाँ 'हेकुलम्' बनाकर जो मलोप करते हैं, वह नहीं हो पाएगा । इसलिए साहचर्य नहीं लिया जा सकता ।

'येन विधिः" १.१.७२ सूत्र के भाष्य में इस परिभाषा के कुछ और प्रयोजन बताये गये हैं—'परमगार्ग्यायणः' यहाँ परमगार्ग्यस्यापत्यम् इस विग्रह में गार्ग्य शब्द से ही प्रत्यय होगा विशिष्ट (परम गार्ग्य) शब्द से नहीं होगा । यही कारण है कि आदि अच् को वृद्धि करते समय गार्ग्य घटक अकार को वृद्धि हुई 'प' घटक अकार को नहीं । तात्पर्य यह है कि प्राचां ष्फ तद्धितः' ४.१.१७ सूत्र यञन्त तदादि से ष्फ प्रत्यय का विधान करता है । यञन्त तदादि 'गार्ग्य' है, 'परमगार्ग्य' नहीं ।

यहाँ प्रश्न यह उठता है कि 'राजपुरुषस्यापत्यम्' इस विग्रह में ''राजपौरुषिः' नहीं बनता; क्योंकि तद्धितवृत्ति एकार्थीभावापन्न प्रकृति से होती है, एक देश से नहीं; ठीक इसी तरह परम का जब गार्ग्य के साथ समास हो गया है; तब एकार्थीभावापन्न शब्द परमगार्ग्य है, वह यञन्ततदादि नहीं है; क्योंकि यञ् प्रत्यय जिससे विहित है; वही प्रकृति यदि आदि में होती तभी उसे यञन्त तदादि कह सकते थे

**विशिष्टात्। निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव। अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः॥**

---

परमशब्दस्य गार्ग्यशब्देन "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः २।१।६१ इति समासे प्रातिपदिसंज्ञायां सुपो लुकि निष्पन्नपरमगार्ग्यघटकगार्ग्यशब्दादेव यञिञोश्च ४.१.१०१ इति फक् प्रत्ययो भवति, तस्यैव यञन्ततदादित्वात् तेन च कित्त्वादाद्यचो वृद्धिकाले किति चेति वृद्धिर्गार्ग्यशब्दस्याद्यच एव जायते। अन्यथा (परिभाषाया अभावे) परमगार्ग्यात् यञन्तप्रातिपदिकात्फकि पकारघटकाकारस्य वृद्ध्यापत्तिः। तदुक्तम् परमगार्ग्यस्यापत्यमित्यादिना। ननु समासे जाते परमगार्ग्येति विशिष्टे एकार्थीभावसत्त्वात् कथं केवलाद् गार्ग्यशब्दात् फक् प्रत्ययः शक्यते कर्तुम् इति चेत् न निष्कृष्य केवलात् (तावन्मात्रात्) गार्ग्यशब्दादेव प्रत्ययविधाने येन विधिः १.१.७२ इति सूत्रस्थं भाष्यमेव प्रमाणम्। तत्र हि परमगार्ग्य इति वृद्धिरहितः पकारः प्रयुक्तः। विशिष्टात् प्रत्यये स्वीकृते तु पारमगार्ग्य इति प्रयोगेण भवितव्यम्। अस्मादेव भाष्याज् ज्ञायते यत् तावति पर्याप्त्यैकार्थीभावाभावेऽपि तद्धितवृत्तिर्जायत एव। अतएव देवीभागवतम् शिवभागवतमित्यादि सिद्धम्। दृश्यते हि येन विधिस्तदन्तस्य १.१.७२ सूत्रमहाभाष्यग्रन्थः इत्थम्:—प्रत्ययग्रहणं चापञ्चम्याः

---

जो यञन्त तदादि गार्ग्य है; उसमें पर्याप्त्या अर्थ नहीं है; क्योंकि समास हो जाने पर पर्याप्त्या अर्थ का अधिकरण गार्ग्य नहीं; किन्तु परमगार्ग्य है; इस तरह यहाँ ष्फ प्रत्यय कैसे हुआ? इसके उत्तर में कहा गया है कि निष्कृष्य अर्थात् गार्ग्यमात्र को अलग करके तद्धित प्रत्यय हो ही जायगा; भले ही उतने से अंश में एकार्थी भाव नहीं है; तथापि इस भाष्य के कारण 'गार्ग्य भाग में एकार्थी भाव नहीं होने पर भी तद्धित वृत्ति हो जायगी। 'राजपौरुषिः' में केवल पुरुष शब्द मात्र से इञ् प्रत्यय नहीं होगा; क्योंकि "अत इञ्' ४.१.९५ सूत्र से अदन्त से 'इञ् प्रत्यय का विधान किया गया है; उसमें किसी प्रत्ययान्त को जैसे कि' प्राचां ष्फ' आदि में है, उद्देश्य नहीं बनाया गया है। शिवस्य भगवतोऽपत्यम् 'शिवभागवतम्' यहाँ की परिस्थिति भी राजपुरुष जैसी है। इसलिए जैसे वहाँ 'राजपौरुषिः' नहीं होता है वैसे ही 'शिवभागवतम्' में भी एकदेश भगवत् से अण् प्रत्यय नहीं होना चाहिये, परन्तु यहाँ जैसे समास हुआ है, उसी तरह प्रयोग सामर्थ्यात् तद्धित भी होगा। तात्पर्य यह है कि शिवभागवतम् में भगवत् विशेषण है; तथापि जिस शिष्ट प्रयोग के आधार पर भगवच्छिव नहीं होता है; उसी के आधार पर केवल गार्ग्य में एकार्थीभाव नहीं रहने पर भी 'ष्फ' प्रत्यय हो जायगा। दूसरी बात यह कि जैसे शिवभगवत् शब्द के एक देश 'भगवत्' से यहाँ तद्धित अण् हुआ है वैसे ही परम गार्ग्य के एकदेश गार्ग्य से 'ष्फ' प्रत्यय हो जायगा। एकदेश से तद्धित होने से ही आदि अच् को वृद्धि होते समय 'शिव' में ई को जैसे वृद्धि नहीं हुई; वैसे ही 'परम' में प के 'अ' को नहीं होगी। यह भाष्य ही यहाँ प्रमाण है।

**प्रत्ययमात्रग्रहणे एषा न तु प्रत्ययाप्रत्ययग्रहण इति 'उगितश्चे'तिसूत्रे भाष्ये ।। इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ।।२४।।**

---

प्रयोजनम् । यञिञोः फग् भवति गार्ग्यायणः, वात्स्यायनः, परमगार्ग्यायणः, परम-वात्स्यायनः । अपञ्चम्या इति किमर्थम् । दृषत्तीर्णा परिषत्तीर्णा ।। अत्र कैयटः परमगार्ग्यायणः इति प्रतीकमुपादाय प्राह—अत्र गार्ग्यायण इत्येवोदाहरणम् गार्ग्यशब्दाद् यञन्तात्फग्विधानात् । नत्वत्र परमगार्ग्यशब्दात् प्रत्ययस्तस्य यञन्त-त्वाभावादिति ।

यः केवलं प्रत्ययः यथा सन् तस्यैव ग्रहणेऽसौ प्रवर्तते । यथा 'सनाद्यन्ता धातवः ३.१.३२ इत्यत्र । यश्च प्रत्ययोऽप्यप्रत्ययोऽपि तादृशस्य प्रत्ययाप्रत्ययसाधारण-स्य ग्रहणेऽसौ न प्रवर्तते यथा अत्वसन्तस्य चाधातोः ६.४.४४ इत्यत्र अस् इति रूपं यद् गृहीतं तत् प्रत्ययप्रातिपदिकधातुषु दृष्टतया प्रत्ययाप्रत्ययसाधारणम् । अत-स्तत्रेयं परिभाषा नोपतिष्ठते । तेन वेधा इत्यत्रेव सुपया इत्यादावपि दीर्घः सिद्धयति एषा प्रत्ययमात्र ग्रहणे प्रवर्तते न तु प्रत्ययाप्रत्ययग्रहण इत्यत्र प्रमाणम् उगितश्च ४.१.६ इति सूत्रस्य भाष्यम् । तथाहि उभयथा निर्गोमती निर्यवमती-ति न सिद्धयति । किं कारणं प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति । नचैतत् प्रत्ययग्रहणं प्रत्ययाप्रत्यययोरेतद्ग्रहणम् । कथं वर्णोऽप्युगित् । प्रत्ययोऽप्युगित् । प्रातिपदिकमप्युगित् । एतेन भाष्येण पूर्वोक्तं तथ्यं स्पष्टम् ।

इयं यस्मात् प्रत्ययविधिः १.४.१३ इति सूत्रे भाष्ये स्पष्टा । इत्थं हि तत्रत्यं भाष्यम् । तर्हि कर्तव्यम् । न कर्तव्यम् । केनेदानीमङ्गकार्यं भविष्यति । प्रत्यय

---

यह परिभाषा प्रत्यय मात्र के ग्रहण में प्रवृत्त होती है प्रत्ययाप्रत्ययसाधा-रण के ग्रहण में प्रवृत्त नहीं होती । यह 'उगितश्च' ४.१.६ सूत्र के भाष्य में स्पष्ट है । 'उगित्' में 'शतृ' आदि प्रत्यय भी आते हैं 'भवत्' सर्वनाम (प्रतिपदिक) भी उगित् है इसलिए 'उगित्त्व' 'धर्म प्रत्ययाप्रत्यय साधारण धर्म है । इसलिए वहाँ पर परिभाषा नहीं पहुँची । यही कारण है कि 'निर्यवमती' यहाँ भी 'उगितश्च' से ङीप् हुआ । अन्यथा यदि वहाँ यह परिभाषा जाती, तो इसका अर्थ होता उगिदन्त तदादि से ङीप् हो; यहाँ मतुप् प्रत्यय जिससे हुआ है; वह 'यव' शब्द ही आदि में नहीं है किन्तु निर् भी है इसलिये उगिदन्ततदादि के अभाव में ङीप् नहीं हो पाता ।

प्रतीषिषति प्रति पूर्वक इण् से सन् प्रत्यय, अजादेर्द्वितीयस्य ६.१.२ इस नियम से 'सन्यङोः' ६.१.६ इस सूत्र से 'क्' को द्वित्व, अभ्यास संज्ञा, 'सन्यतः ७.४.७६ से अभ्यास के अकार को इत्व, सवर्णदीर्घ, षत्व प्रतीषिस पुनः षत्व, करने पर प्रतीषिष बना, इसको धातुसंज्ञा लट् तिप् शप्, 'अतोगुणे' ६.१.६७ से पररूप होने पर पर प्रतीषिषति बनता है । यहाँ शेखर में अभ्यास के इकार को 'अज्झनगमां सनि'

इति प्रकृत्याङ्गकार्यमध्येष्ये । यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे प्राकरोत्, उपैहिष्ट उपसर्गात् पूर्वमडाटौ प्राप्नुतः

(वा० ७) सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादेस्तदन्तविज्ञानात् । सिद्धमेतत् कथम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीत्येषा परिभाषा कर्तव्या । कः पुनरत्र विशेषः एषा परिभाषा क्रियेत प्रत्ययग्रहणं वा? अवश्यमेषा परिभाषा कर्तव्या । बहून्यस्याः परिभाषायाः प्रयोजनानि (वा ८) प्रयोजनं धातुप्रातिपदिकप्रत्ययसमासतद्धितविधिस्वराः । धातु । देवदत्तश्चिकीर्षति । संघातस्य धातुसंज्ञा प्राप्नोति । धातु ।। प्रातिपदिक । देवदत्तो गार्ग्यः । संघातस्य प्रातिपदिकसंज्ञा प्राप्नोति ।। प्रत्यय । महान्तं पुत्रमिच्छति । संघातात् प्रत्ययोत्पत्तिः प्रसज्येत । प्रत्यय ।। समास । ऋद्धस्य राज्ञः पुरुषः । संघातस्य समाससंज्ञा प्राप्नोति । समास ।। तद्धितविधि । देवदत्तो गार्ग्यायणः संघातात्तद्धितोत्पत्तिः प्राप्नोति । तद्धित ।। स्वर । देवदत्तो गार्ग्यः । संघातस्य ञ्नित्यादिर्नित्यम् ६.१.१९७ इत्याद्युदात्तत्वं प्राप्नोति । प्रत्ययग्रहणे यस्मात्स तदादेस्तदन्तस्य च ग्रहणं भवतीति न दोषो भवति । सा तर्ह्येषा परिभाषा कर्तव्या । एवं वक्ष्यामि । यस्मात् प्रत्ययविधिस्तदादि प्रत्यये गृह्यमाणे गृह्येत । ततोऽङ्गम् । अङ्गसंज्ञं च भवति यस्मात् प्रत्ययविधिस्तदादिप्रत्यये ।। यदि प्रत्ययग्रहणे तदादेग्रहणं भवतीत्युच्यतेऽवतप्तेनकुलस्थितं त एतत्, उदकेविस्तीर्णं त एतत्, सगतिकेन सनकुलेन च समासो न प्राप्नोति । एवं तर्हि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्युक्त्वा ततो वक्ष्यामि (वा० ९) कृद्ग्रहणे गतिकारकपूर्वस्यापि । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीत्येषा परिभाषा कर्तव्या ।। कान्येतस्याः परिभाषायाः प्रयोजनानि ।

(वा० १०) प्रयोजनं समासतद्धितविधिस्वरः ।।

समास । अवतप्तेनकुलस्थितं त एतत् । उदकेविस्तीर्णं त एतत् । सगतिकेन सनकुलेन च समासः सिद्धो भवति । समास ।। तद्धितविधि । सांकूटिनं व्यावक्रोशी । संघातात्तद्धितोत्पत्तिः सिद्धा भवति । तद्धितविधि ।। स्वर । दूरात् आगतो दूरादागत इति । अन्तः ६.२.१४३ थाथघञ्क्ताजबित्रकाणाम् ६.२.१४४ इत्येष स्वरः सिद्धो भवति । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति न दोषो भवति ।। स तर्ह्येषा परिभाषा कर्तव्या । न कर्तव्या आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं गतिरनन्तरः ६.२.४९ इत्यनन्तरग्रहणं करोति ।।

एतेषु भाष्यवाक्येषु परिभाषाया अस्याः सिद्धिः, फलानि, दूषणोद्धारश्च सर्वं स्पष्टमितिशम् ।।२४।।

---

६.४.१६" से दीर्घ प्राप्ति दिखाकर कहा गया है कि उत्तर खण्ड में विद्यमान 'स' अप्रत्यय है । इसलिए दीर्घ नहीं हुआ । शेखर की पूर्वोक्त बात स्वीकार करने पर दोष यह आता है कि सन् यदि यहाँ अप्रत्यय है तो 'सनाद्यन्ता धातवः' में परिभाषा

## प्रत्ययग्रहणे चापञ्चम्याः ॥२५॥

**अथ प्रत्ययग्रहणे चापञ्चम्याः २५**

'येन विधिस्तदन्तस्य' १.१.७२ इति सूत्रस्य अस्याः परिभाषायास्तदादि-

---

की प्रवृत्ति नहीं होगी; क्योंकि 'सन्' प्रत्ययाप्रत्यय साधारण हो गया, उसके ग्रहण में इस परिभाषा की प्रवृत्ति नहीं होनी चाहिये। इसका उत्तर यह है कि उत्तरखण्ड को प्रत्यय ही मानना चाहिये। दीर्घ तो नहीं होगा; क्योंकि जब यह कहते हैं कि अजन्त अङ्ग को झलादि सन् के परे रहते दीर्घ हो तो जाहिर है कि जिस प्रकार के झलादि सन् के परे रहते दीर्घ करना चाहेंगे, उस प्रकार के सन् के परे रहते जिसे अङ्ग संज्ञा हुई होगी; उसी को दीर्घ होगा। जिगीषति में जिस झलादि सन् के परे रहते 'जिगि' को 'दीर्घ' करना है; उस सन् के परे रहते 'जिगि' अंग भी है। इसलिये यहाँ दीर्घ होगा; किन्तु 'प्रतीषि' को जिस सन् के परे दीर्घ करना चाहते हैं; उसके परे रहते 'प्रतीषि' को अंग संज्ञा नहीं होती है; इसलिए यहाँ दीर्घ नहीं होगा। क्योंकि "आगन्तुकामग्रे सन्निवेशः" इस न्याय से द्वित्व के द्वारा आया हुआ 'स' ही उत्तर खण्ड में है; वह 'स' किसी से विहित नहीं है। इसलिए उस 'स' के परे रहते पूर्व को अङ्ग संज्ञा नहीं होगी। शेखर में जहां अप्रत्ययत्वात्' लिखा हुआ है उसका भी तात्पर्य यह है कि 'स' में अजन्त को अंग संज्ञा करने के लिए जिस प्रत्यय निमित्तता की आवश्यकता है; वह प्रत्ययनिमित्तता उसमें नहीं है। 'सन्नन्त प्रकरण में' सूत्र में लिखित 'अप्रत्ययत्वात्' का यह तात्पर्य शेखरकार का नहीं है कि वह प्रत्यय ही नहीं है किन्तु यही तात्पर्य है कि 'स' में अंगसंज्ञा का निमित्त बनने के लिए जिस प्रत्ययत्व की आवश्यकता है, वह प्रत्ययत्व नहीं है। इस तरह लाठी भी नहीं टूटी और सांप भी मरा। अथवा यहाँ का शेखर-ग्रन्थ खण्डनीय ही है क्योंकि 'अज्झनगमां सनि' में हन् और गम् के साहचर्य से अजन्त भी अभ्यासानवयव ही लिया जायगा, प्रतीषि में 'षि' तो अभ्यासावयव ही है; इसलिए उसे दीर्घ नहीं होगा। तात्पर्य यह है कि 'जिघांसति' और 'जिगांस्यते' में हन् धातु और गम् धातु के जिस अच् को दीर्घ किया गया है, वह अभ्यास का अनवयव है। इसलिए अजन्त भी अभ्यासानवयव ही लिया जायगा; इस तरह जिगीषति में दीर्घ होगा 'प्रतीषिषति' में नहीं। इस तरह यहाँ का शेखर ग्रन्थ खण्डनीय ही है। इसके विरोध के परिहार के लिए विशेष कष्ट कल्पना की आवश्यकता नहीं है। यह परिभाषा अङ्गसंज्ञा सूत्र के भाष्य में स्पष्ट है।

॥ इति शिवम् २४ ॥

**प्रत्ययग्रयणे चावञ्चम्याः २५**

"येन विधिस्तदन्तस्य" १.१.७२ इस सूत्र के भाष्य में "प्रत्यय ग्रहणे यस्मात्

**यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते; तत्र तदन्त-विधिर्नेत्यर्थः। यथा 'रदाभ्यां निष्ठातो नः' इत्यत्र। तेन दृषत्तीर्णेत्यादौ धातुतकार-**

---

तदन्तेतिविधेयांशद्वये तदन्तांशस्यापवादः पठितः—प्रत्ययग्रहणे चापञ्चम्याः (प० २५) इति प्रत्ययग्रहणे सति तदन्तविधिः अपञ्चम्या भवति न पञ्चम्या इत्यक्षरार्थः। यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय गृह्यते; तत्र तदन्तविधिर्न भवतीति भावार्थः। अतएव 'दृषत्तीर्णा' इत्यादौ धातुतकारस्य 'रदाभ्याम्' ८.२.४२ इति न नत्वम् रदाभ्यामिति पञ्चम्यन्तात् परः प्रत्ययः निष्ठातकारः नत्वरूपकार्यान्तिरविधानाय गृह्यते। अत एवात्र प्रत्ययग्रहणे चापञ्चम्या इति तदन्तांशोपस्थितिर्निषिध्यते। अन्यथा 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया यथा तदादिरित्युपतिष्ठते तथा तदादिविशेष्यकतदन्तोपस्थितौ अर्थात् तदादितदन्तोभयांशोवस्थितौ 'निष्ठा यस्मात् विहिता तदादि तदन्तं यच्छब्दस्वरूपं तदवयवीभूतो यस्तकारः रेफदकाराभ्यां परस्तस्य नत्वं स्यादिति सूत्रार्थे जाते तॄधातोः क्तप्रत्यये 'ऋत-इद्धातोः' ७.१.१०० इतीत्वे 'हलि च' ८.३.७७ इतिदीर्घे दृषत् तीर् त इत्यवस्थायां निष्ठा यस्माद् विहिता तदादितदन्तशब्दस्वरूपं दृषत्तीर्त इति तदवयवीभूतस्तकार उभयत्राऽपि वर्तते, तत्र प्रथमो दकारात् परो, द्वितीयश्च रेफात् पर इति उभयस्यापि नत्वं स्यात्। 'प्रत्ययग्रहणे चापञ्चम्याः' इति परिभाषायाः स्वीकारे तु अनया परिभाषया तदन्तांशनिषेधात् निष्ठा यस्मात् विहिता तदादि रेफान्तं यच्छब्दस्वरूपं तस्मात्परो यस्तकारस्तस्य नत्वमित्यर्थे प्रत्ययतकारस्यैव नत्वं भवति। अतएवेयं परिभाषाऽवश्यस्वीकरणीया।

---

स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इस परिभाषा के तदन्त अंश के अपवाद के रूप में एक परिभाषा पढ़ी गई है, वह है :—"**प्रत्ययग्रहणे चापञ्चम्याः**" अर्थात् जहाँ पञ्चम्यन्त से परीभूत प्रत्यय का कार्यान्तर विधान के लिए ग्रहण है, वहाँ तदन्त विधि नहीं होती है। इसीलिए "रदाभ्यां निष्ठा तो नः पूर्वस्य च दः" यहाँ ८.२.४२ रदाभ्यां" इस पञ्चम्यन्त से परीभूत प्रत्यय निष्ठा के तकार को नकार विधान किया है, इसलिए यहाँ तदन्त विधि नहीं हुई। यदि तदन्त विधि होती; तो अर्थ होता कि रेफ और दकार से पर निष्ठान्त तदादि के अवयव तकार को नकार हो। ऐसा अर्थ होने पर "दृषत्तीर्णा" में धातु तकार को भी नकार हो जाता। तदन्त की उपस्थिति नहीं होने पर सूत्र का अर्थ हुआ कि रेफ और दकार से पर निष्ठा के तकार को नकार हो, इसलिए यहाँ दकार से पर निष्ठातकार न होने के कारण 'नत्व' नहीं हुआ। तदन्त अंश की उपस्थिति न होने पर भी तदादि अंश की उपस्थिति होने से रेफान्त और दान्त तदादि से पर निष्ठा के तकार को नकार हो, ऐसा अर्थ होने के कारण दोष नहीं हुआ। तदन्त अंश की उपस्थिति होने पर तो रेफान्त और दान्त तदादि से पर निष्ठान्त तदादि के तकार को नकार हो ऐसा अर्थ करने पर त को न हो ही जाता।

स्य न नत्वम् । तदन्तेत्यंशानुपस्थितावपि तदादीत्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषस्तदाद्यंशोपस्थितौ मानाभावात् । तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति दृषत्तीर्णेत्यादौ दोषः स्यादेव ॥

'स्यतासी लृलुटोरि'त्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यैवावधित्वेनान्वयान्न तदन्तविधिः ॥ ङ्याब्भ्य इत्यादौ तु न दोषः, तत्र कस्मादितिनियतावध्याङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेष-

---

पूर्वोक्तपरिभाषया प्रत्यय ग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणमित्यस्याः खण्डद्वयं तत्परिभाषानिरूपणे दर्शितम् । अतस्तदन्तेत्यंशस्य निषेधादनुपास्थितावपि तदादीत्यंशोपस्थितौ निष्ठा यस्माद् विहिता तदादि रेफान्तं यच्छब्दस्वरूपं तस्मात्परो यस्तकारस्तस्येत्यर्थेऽर्थात् रेफदान्तात् तदादेः परस्य निष्ठातस्य नत्वम् इत्यर्थे न दोषः । यत्तु प्राचीनाः उभयांशस्यानया निषेध इति तन्न, तदादीत्यंशानुपस्थितौ मानाभावात् तदन्तांशस्यैवानया निषेधः स्वीकार्यः पूर्वोक्तयुक्तेः । प्रत्यासत्तिन्यायाच्च तदन्तांशस्यैव निषेधौचित्यात् । उभयोस्तदादितदन्तयोरिति भावः । यत्र प्रत्ययग्रहणे यस्मात्सेति परिभाषा प्रवर्तते तत्र द्वावप्यंशौ प्रवर्तेते, इति स्वीकारे प्रत्ययग्रहणे चापञ्चम्या इत्यनयोभयोरपि निषेधः स्यादित्युभयोरपि परिभाषयोरेकविषयत्वापत्या दृषत्तीर्णा इत्यादौ निष्ठान्तत्वप्रयुक्तधातुतकारस्यापि नत्वापत्तिः स्यादेव । अतः 'प्रत्ययग्रहणे चापञ्चम्याः' इति परिभाषा तदन्तस्यैव निषेधिकेति स्वीकार्यम् । नच स्यतासी लृलुटोः ३.१.३३ इति सूत्रे लृलुटोरित्यस्य पञ्चम्यन्तात् परत्वाभावादस्याः परिभाषाया अप्रवृत्या प्रत्ययग्रहणे यस्मात्सेति परिभाषया तदादितदन्तोपस्थितौ लृलुडन्ततदाद्योरित्यर्थापत्या लृलुडन्ततदाद्योः परयोः स्यतासिप्रत्ययावापद्येते इति वाच्यम् लृलुटोः परयोरित्युक्ते कस्मात् परयोरित्यवध्याकाङ्क्षाया नियमेनोदयात् तच्छान्तये उपस्थितस्य धातोरित्यस्यैवावधित्वेनान्वयात् तस्य च पञ्चम्यन्ततया परिभाषाप्रवृत्तेः सुलभत्वेन तदन्तस्य निषेधात् । हल्ङ्याब्भ्यः ६.१.६८ इत्यादौ तु नेयं परिभाषा प्रवर्तते तत्र ङ्यापौ कस्माद् विहिताविति नियताकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात् । अतो न

---

"स्यतासी लृलुटोः" ३.१.३३ में जब कहते हैं कि लृ और लुट् के परे रहते स्य प्रत्यय और तासि प्रत्यय हो, तो पर होने वाले प्रत्यय से "कस्मात् परयोः के द्वारा पञ्चम्यन्त धातु का आक्षेप होता है। इसलिए पञ्चम्यन्त से परीभूत प्रत्यय (लृ लुट्) का यहाँ स्य तासी रूप कार्यान्तर विधान के लिए ग्रहण किया गया है। इसलिए तदन्त विधि नहीं होगी।

"हलङ्याब्भ्यो दीर्घात्" ६.१.६१ यहाँ यद्यपि ङी और आप् प्रत्यय हैं और प्रातिपदिक से पर वे (ङी और आप्) विद्यमान भी है; तथापि यहाँ नित्य साकांक्षतोत्थापक पद के अभाव के कारण "प्रातिपदिकात्" का आक्षेप नहीं होता है।

**णत्वाभावात् ।। अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव । अत एव उत्तमैकाभ्यामित्यादिनिर्देशाः सङ्गच्छन्ते ।।२५।। (क)**

तदन्तत्वनिषेधः । 'यस्मात् प्रत्ययविधिस्तदादेः प्रत्यये परेऽङ्गसंज्ञा भवतीत्यर्थे पञ्चम्यन्तस्य प्रत्ययविशेषणत्वादनया परिभाषया निषेधो भवत्येव ।' सुपि च' ७.३.१०२ इति सूत्रे सुपो निमित्तत्वेन ग्रहणात् तदादिमात्रोपस्थितौ अदन्ततदादेः सुपि दीर्घ इत्यर्थे कृते उत्तमैकाभ्याम् ५.४.९० इत्यादौ सुपि चेति कृतदीर्घनिर्देशः संगच्छते । नचैवम् तिङतिङः ८.१.२८ इत्यत्रानया परिभाषया तदन्तविधिनिषेध आपद्येत तत्रातिङ इति पञ्चम्यन्तस्य तिङि तिप्रत्ययविशेषणत्वात्; तथाचातिङन्ततदादेः परं तिङन्तं निहन्यत इत्यर्थो न स्यादिति वाच्यम् यत्राध्याहृतं विशेष्यं तत्रैवेयं परिभाषा प्रवर्तते । अत्र हि पदस्य ८.१.१६ पदात् ८.१.१७ इत्यधिकारात् अतिङन्तात् परं तिङन्तं पदं निहन्यते इत्यर्थे पञ्चम्याः प्रत्ययेऽन्वयाभावाच्च । अत्र चोत्तमैकाभ्याम् ५.४.९० इति निर्देशः ज्ञापक इति बोध्यम् । अन्यथा सुपि च ७.३.१०२ इत्यादौ तदादिविशेष्यकतदन्तोपस्थितौ सुबन्ततदादौ परे पूर्वस्य दीर्घ इत्यर्थे निर्देशासंगतिः स्यादिति । ।।इति शिवम्।। २५

अर्थात् यहाँ कोई ऐसा पद नहीं है जो "प्रातिपदिक" इस अर्थ की आंकाक्षा को सतत जगाये; इस लिए पञ्चम्यन्त से परीभूत प्रत्यय के आश्रयण के अभाव के कारण परिभाषा की प्रवृत्ति नहीं हुई; इसलिए तदादि और तदन्त दोनों की उपस्थिति होने पर "ङ्याबन्त तदादि" ऐसा अर्थ हुआ; ङ्याबन्त तदादि से पर "सुतिसि" इन प्रत्ययों के आश्रयण होने पर भी वहाँ 'तदन्त' की उपस्थिति नहीं हुई; किन्तु तदादि मात्र की उपस्थिति हुई; उसको विशेष्य बनाकर तदन्त की उपस्थिति होने से ङ्याबन्त तदाद्यन्त तदादि से पर सुति सि के अपृक्त हल् का लोप हो ऐसा अर्थ हुआ । इसलिए बहुश्रेयसी में सुलोप हुआ । यदि यह पूछें कि तदादि का जब कोई अन्य विशेष्य है; तो प्रथमतदन्त विधि कैसे हुई तो इसका उत्तर यह है कि "वनोरच" ४.१.७ की तरह तदन्त विधि हो जायगी । वन्नन्तान्तात् प्रातिपदिकात् स्त्रियां ङीप् रश्चान्तादेशः यह अर्थ जैसे किया जाता हैं वैसे "हल्ङ्याब्—६.१.६१ यहाँ किया जायगा ।

अङ्गसंज्ञा सूत्र (यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्) १.४.१३ का जिस से जो प्रत्यय किया जाय, उस प्रत्यय के परे रहते तदादि शब्दस्वरूप को अङ्ग संज्ञा हो ऐसा अर्थ है । इस अर्थ में पञ्चम्यन्त से पर तदादि को कार्यान्तर (अङ्ग संज्ञा) का विधान किया गया है । इसलिए पञ्चम्यन्त का विशेषणत्व वहाँ स्पष्ट ही है । इसलिए वहाँ परिभाषा की प्रवृत्ति होगी ही । आक्षिप्त पञ्चम्यन्त को अवधिमानकर भी यह परिभाषा प्रवृत्त होती है । इसलिए "यस्मात् प्रत्ययविधिः"

(क) येनविधिरिति सूत्रे भाष्ये एतत् घटकतदन्तांशस्यापवादः पठ्यते (परिभाषायो अवतरणमेतत् प्रमादादमुद्रितम्)

नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ घरूपेतिह्रस्वापत्तिरत आह—

**उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥२६॥**

---

**उत्तरपदाधिकारे······न तदन्तग्रहणम् २६**

प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया तदादितदन्तोपस्थितौ उत्तरपदविशेष्यकतदन्तोपस्थितौ वा सत्यां रूपप्प्रत्ययान्ततदादौ परे घान्ताद्युत्तरपदे ह्रस्व इत्यर्थे वा कृते प्रशस्ता ब्राह्मणी-ब्राह्मणिरूपा, तत्परत्वेन कुमारी ब्राह्मणिरूपेत्यत्र वाक्ये कुमारीघटकदीर्घेकारस्य घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः" ६.३.४३ इति ह्रस्वापत्तिः। अतः परिभाषामवतारयति—**उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्।** (पं० २६) अलुगुत्तरपदे ६.३.१ इति सूत्रोक्त उत्तरपद इत्यधिकार षष्ठाध्यायस्य तृतीयपादसमाप्ति यावद् वर्तते; तत्र प्रत्ययग्रहणे तदन्तविधिर्न भवतीति परिभाषार्थः। तेनोत्तरपदविशेष्यकतदन्तविधिरपि निषिद्धः। घरूप···६.३.४३ सूत्रस्योत्तरपद इत्यधिकारान्तःपातित्वात् तदन्तविधिनिषेधे भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपकल्पप्प्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु इत्यर्थेन न ह्रस्वः।

---

में प्रवृत्त हुई। इसी से उत्तमैकाभ्याञ्च ५.४.९० यह निर्देश संगत हुआ। अन्यथा "सुपि च" सूत्र में तदादि तदन्त दोनों की उपस्थिति होने पर सुबन्त तदादौ परे पूर्वस्य दीर्घः' इस अर्थ में दीर्घ नहीं होने से निर्देश असंगत हो जाता। सुबन्त तदादि उत्तमैक+भ्याम् है, उसके परे तो यहाँ दीर्घ नहीं किया जाता है।

॥ इति शिवम् ॥२५

**उत्तरपदाधिकारे······न तदन्त ग्रहणम् ॥२६॥**

"**प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्**" इस परिभाषा के मानने पर भी कुमारी ब्राह्मणिरूपा इत्यादि में 'घरूप' ५.३.४३ सूत्र से ह्रस्वता हो जायेगी; घरूपान्त तदादि के परे रहते ङ्यन्त अनेकाच् को ह्रस्वता हो, इस अर्थ के अनुसार "ब्राह्मणिरूपा" रूप रूपप्प्रत्ययान्त के परे रहते कुमारी को ह्रस्व होने में कोई प्रतिबन्ध नहीं दिखता है; इस के निवारण के लिए परिभाषा मानते हैं "**उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्**" अर्थात् उत्तरपदाधिकार में प्रत्ययग्रहण रहने पर तदन्तग्रहण नहीं होता है। "हृदयस्य हृल्लेखयदण्लासेषु" ६.३.५० इस सूत्र में लेख ग्रहण इसका ज्ञापक है। यदि उत्तरपदाधिकार में भी प्रत्यय ग्रहण से तदन्त विधि हो तो अणन्ततदादि उत्तरपद को निमित्त मान कर ही 'हृदयं लिखति' इस विग्रह में 'कर्मण्यण्' ३.२.१ इस सूत्र से अण् प्रत्यय होने पर निष्पन्न हृदय+लेखः में हृत् आदेश हो सकता था और "हृल्लेखः" बन सकता था; फिर पूर्वोक्त सूत्र में लेख ग्रहण करने की क्या आवश्यकता थी? लेख ग्रहण किया गया है, इससे सिद्ध होता है कि पाणिनि को उत्तरपदाधिकार में तदन्त ग्रहण होना अभीष्ट नहीं था। "हृदयस्य" इस सूत्र के भाष्य में यह परिभाषा स्पष्ट है।

'हृदयस्य हृल्लेखयदण्लासेषु' इत्यत्र लेखग्रहणात्। तत्र लेखेति न घञन्तमन-

---

अत्र ज्ञापकं हृदयस्य हृल्लेखयदण्लासेषु ६.३.५० इति सूत्रस्थं लेखग्रहणम्। अन्यथा हृदयं लिखतीति इत्यत्र अणन्ततदादिरूपोत्तरपदपरत्वादेवादेशे सिद्धेऽण्-ग्रहणात् पृथग् लेखग्रहणं व्यर्थं स्यात्। 'हृल्लेख' इत्यत्र लेखशब्दः 'कर्मण्यण्' ३.२.१ इत्यणा निष्पन्नः। न च हृदयस्य लेख इति विग्रहो लेखशब्दश्च भाव-घञन्तः स्वीक्रियताम् इति वाच्यम् तत्र लेखेति न घञन्तमनभिधानात्। न च लेख-ग्रहणं यदि क्रियते तदा तदन्तविधौ लेखान्त उत्तरपदे इत्यर्थे हृत्परमलेख इत्यत्र

---

विजयाकार ने इस परिभाषा के अवतरण आदि पर कुछ उपयुक्त शंकाओं का समाधान देते हुए लिखा है कि "कुमारी ब्राह्मणिरूपा" में ह्रस्व की प्राप्ति ही नहीं है; क्योंकि "स्यतासी लृलुटोः ३.१.३३ में जैसे धातोः का अध्याहार होकर पञ्चम्यन्त से परीभूत प्रत्यय लृलुट् को उद्देश्य बनाकर स्य तासि का विधान होने के कारण पूर्व परिभाषा से तदन्त विधिका निषेध हो जाता है, उसी तरह 'घरूप" में भी तदन्त विधिका निषेध पूर्व परिभाषा से ही हो जायगा। इसी लिए नागेश ने कुमारी ब्राह्मणितरा' में ह्रस्वापत्ति होने की बात नहीं उठायी; अन्यथा 'घरूप-चेलट्" ६.३.४३ इत्यादि सूत्र में घ का प्रथम उल्लेख होने के कारण 'कुमारी ब्राह्मणितरा' में ही ह्रस्व होने का दोष देना उचित था। इस तरह "कुमारी ब्राह्मणिरूपा" इस परिभाषा का फल नहीं हो सकता। इस प्रश्न का उत्तर देते हुए मिश्रचरण ने लिखा है—पूर्व परिभाषा से केवल उस तदन्त विधिका निषेध होता है, जो तदादि को विशेष्य बनाकर विशेषण से प्राप्त होता है। इसी लिए "रात्रेः कृति विभाषा" ६.३.७२ में तदादि को विशेष्य बनाकर प्राप्त तदन्त विधिका निषेध होने पर भी उत्तरपद को विशेष्य मानकर 'कृति' से तदन्त विधि हुई ही। इसलिए कृदन्त उत्तर पद के परे रहते मुम् का विधान हो सका और 'रात्रिञ्चर' जैसा प्रयोग बना। इस तरह उत्तरपद को विशेष्य बनाकर प्राप्त तदन्त विधि के निषेध के लिए इस परिभाषा की अत्यन्त आवश्यकता है और इस परिभाषा के बिना कुमारी ब्राह्मणिरूपा में कुमारी को ह्रस्वता हो जाती थी। इसलिए परिभाषा की आवश्यकता है। "घरूप" सूत्र में 'घ' की प्रथमोपस्थिति होने पर 'घ' वाला उदाहरण "कुमारी ब्राह्मणितरा' जो नहीं दिया गया; उसका कारण है 'घ' जिस रूप में श्रुत है; उस रूप में वह प्रत्यय नहीं है; श्रुत है 'घ' लेकिन प्रत्यय है उसका अर्थ-- तर और तम। "तरप्तमपौ 'घः' १.१.२२ से उसको 'घ' संज्ञा होती है। 'रूप' जिस रूप में श्रुत है, उस रूप में ही प्रत्यय है इसलिए अवतरण को अधिक स्पष्ट बनाने के लिए 'रूपप् से सम्बद्ध उदाहरण दिया गया।

**भिधानात् । इयं च 'हृदयस्ये'ति सूत्रे एव भाष्ये स्पष्टा ॥२६॥**

हृदादेशविधानार्थं सूत्रे लेखग्रहणं चरितार्थमिति वाच्यम् ज्ञापकत्वप्रतिपादकभाष्यप्रामाण्येन तस्यानभिधानात् ।

न च स्यतासी लृलुटोः ३.१.३३ इत्यत्र यथा प्रत्ययग्रहणे चापञ्चम्या इति तदन्तनिषेधो जायते तथा 'घरुप'—६.३.४३ इत्यत्रापि स्यात् । अतएव घांशे तदन्त विधिमाशङ्क्य कुमारी ब्राह्मणितरेत्यत्र ह्रस्वापत्तिदोषः प्राथम्यादुपस्थितोऽपि भवता कथं नोद्भावित इति वाच्यम् तदादिरूपविशेष्यमादाय प्राप्तस्य तदन्तविधेरेव 'प्रत्ययग्रहणे चापञ्चम्याः" इति निषेधः, अतएव 'रात्रेः कृति विभाषा' ६.३.७२ इत्यादौ तदादिविशेष्यकतदन्तविधिनिषेधेऽप्युत्तरपदरूपविशेष्यजन्यतदन्तविधेर्न निषेधः । इत्थमुत्तरपदं विशेष्यमादाय प्राप्तस्य तदन्तविधेर्निषेधार्थेयं परिभाषेति ।

हृदयस्य हृल्लेखयदण्लासेषु ६.३.५० इति सूत्रे भाष्येऽसावित्थं स्पष्टा । इदं हि तत्रत्यं भाष्यम्—यदण्ग्रहणमिदं प्रत्ययग्रहणं तत्र प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति यदणन्ते प्राप्नोति । यदण्ग्रहणे रूपग्रहणं लेखग्रहणात् (वा० १) ॥ यदण्ग्रहणे रूपग्रहणं द्रष्टव्यम् । कुतः लेखग्रहणात् । यदयं लेखग्रहणं करोति तज्ज्ञापयत्याचार्यो न यदणन्ते भवतीति ॥ अपर आह—अत्यल्पमिदमुच्यते सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं द्रष्टव्यम् । कुतः लेखग्रहणात् । किं प्रयोजनम् । कुमारी गौरितरा । नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ॥ अत्र कैयटः लेखग्रहणादिति प्रतीकमादाय वदतिः—एतद्वचनान्यथानुपपत्त्या लेखशब्दोऽणन्तो गृह्यते नतु घञन्त इति धञि हृदयलेख इत्येव भवति इति ।

॥इति शिवम्॥ २६

"हृदयस्य हृल्लेख—६.३.५०" इस सूत्र के भाष्य में इस परिभाषा का स्पष्ट निर्देश है—वहाँ कहा गया है यत् और अण् ये दोनों प्रत्यय हैं । इसलिए "प्रत्ययग्रहणे यस्मात् स विहित,"—से तदादि की उपस्थिति होने पर विशेषण से तदन्त विधि होने से यत् प्रत्ययान्त और अण् प्रत्ययान्त के परे रहने पर भी हृदय शब्द को हृत् आदेश होने लगेगा । इस का समाधान करते हुए कहा कि 'लेख' ग्रहण सामर्थ्यात् यत् प्रत्ययान्त और अण् प्रत्ययान्त के परे रहते आदेश नहीं होगा । यदि अणन्त के परे रहते आदेश हो तो हृदय+लेख यहां 'कर्मण्यण् ३.२.१ से अण् प्रत्यय करके बना हुआ होने के कारण लेख शब्द को अणन्त मानकर आदेश हो ही जाता; लेख ग्रहण करने की क्या आवश्यकता थी । आचार्य पाणिनि ने लेख ग्रहण किया है इससे ध्वनित होता है कि यदन्त और अणन्त के परे रहते इस सूत्र की प्रवृत्ति नहीं होती है । किसी अन्य का मत बताते हुए पतञ्जलि ने कहा कि आपने तो ज्ञापन के क्षेत्र को अत्यन्त छोटा बना दिया; ऐसा कहना चाहिए कि उत्तर पदाधिकार में प्रत्यय ग्रहण में 'रूप' का ग्रहण हो, तदन्त का नहीं । इसलिए कुमारी गौरितरा

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्रापि 'ष्यङः सम्प्रसारणं पुत्रपत्योरि'ति स्यादत आह—

**स्त्रीप्रत्यये चानुपसर्जने न ॥२७॥**

---

**अथ स्त्रीप्रत्यये चानु''''''न ॥२७॥**

ननु 'परमकारीषगन्धीपुत्र' इत्यत्रेव अतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ६.१.१३ इति सम्प्रसारणं कुतो न भवतीत्यत आह— **स्त्रीप्रत्यये चानुपसर्जने नेति**। तथाहि:—

करीषस्येव अथवा करीष इव गन्धो यस्येति विग्रहे बहुव्रीहौ 'उपमानाच्च' ५.४.१३७ इति समासान्त इकारे कृते निष्पन्नात् करीषगन्धिशब्दात् करीषगन्धेरपत्यं स्त्रीत्यर्थे अण्प्रत्यये आद्यचो वृद्धौ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे" ४.१.७८ इत्यणः ष्यङादेशे भसंज्ञायां 'यस्येति च' ६.४.१४८ इति इकारलोपे चापि कारीषगन्ध्या इति पदं सिद्धम्। ततः परमा चासौ कारीषगन्ध्या इति विग्रहे सन्महत्परम २.१.६१ इति कर्मधारयसमासे कृते सिद्धस्य परमकारीषगन्ध्याशब्दस्य परमकारीषगन्ध्यायाः पुत्र इति विग्रहे षष्ठीसमासे परमकारीषगन्ध्यापुत्र इत्यवस्थायां 'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे' ६.१.१३ इति सम्प्रसारणेन इकारे 'सम्प्रसार-

---

में "घरूप" से ह्रस्व नहीं हुआ। घञन्त लेख शब्द का ग्रहण सूत्र में नहीं होता है; इसमें यह भाष्य ही प्रमाण है इसलिए घञन्त लेख शब्द के परे रहते 'हृदयलेख' ही होगा यह कैयट ने कहा।

॥इति शिवम्॥ २६

**स्त्रीप्रत्यये चानुपसर्जने न ॥२७॥**

"करीषस्येव गन्धोऽस्याः" इस विग्रह में बहुव्रीहिसमास करने पर 'उपमानाच्च' ५.४.१३७ इस सूत्र से गन्ध के अकार को इत्व करने से करीषगन्धि बना। करीषगन्धेरपत्यं स्त्री, इस विग्रह में 'तस्यापत्यम्' ४.१.९२ सूत्र से किये गये अण् प्रत्यय के स्थान में "अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे" ४.१.७८ इस से ष्यङ् आदेश किया गया, फिर अनुबन्ध लोप, भसंज्ञा, 'यस्येति च' ६.४.१४८ इस से लोप आद्यच् को वृद्धि 'यङश्चाप्' ४.१.७४ से चाप् करने पर 'कौमुदगन्ध्या' बना। उससे कौमुदगन्ध्यायाः पुत्रः इस विग्रह में षष्ठीसमास करने से कौमुदगन्ध्यापुत्रः ऐसी स्थिति में 'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे" ६.१.१३ से य को सम्प्रसारण 'इ' करके 'सम्प्रसारणाच्च' ६.१.१०८ से पूर्वरूप द्वारा आ का अपहार, होने पर कौमुदगन्धिपुत्र बना। अब 'इ' को सम्प्रसारणस्य च' ६.३.३९ से दीर्घ हुआ। इसलिए कौमुदगन्धीपुत्रः बनता है। परमा चासौ कारीषगन्ध्या, परमकारीषगन्ध्या, तस्याः पुत्रः परम कारीषगन्धीपुत्रः में भी सम्प्रसारणादि होता है और परमकारीष गन्धीपुत्रः बनता है। परन्तु अतिकारीष गन्ध्यापुत्रः में सम्प्रसारणादि नहीं होता है। इसका कारण

णाच्च' ६.१.१०८ इति पूर्वरूपे 'सम्प्रसारणस्य' ६.३.६६ इति दीर्घे परमकारीष-गन्धीपुत्र इति सिद्धयति । अत्र यथा सम्प्रसारणं तथातिकारीषगन्ध्यापुत्रः इत्यत्रापि स्यात् तत्रापि करीष इव गन्धो यस्येति विग्रहे प्रथमं बहुव्रीहिस्तत्प्रयुक्तः समासान्त इकारः करीषगन्धेपत्यं स्त्रीति विग्रहे अणिञोरितिष्यङि चापि, कारीषगन्ध्या इति सिद्धयति । ततस्तामतिक्रान्तेत्यर्थेऽत्यादयः क्रान्ताद्यर्थे द्वितीयया' २.२.१८ १ इति समासेन सिद्धस्यातिकारीषगन्ध्या इत्यस्य पुत्रशब्देन सह अतिकारीषगन्ध्यायाः पुत्र इति विग्रहे षष्ठीतत्पुरुषसमासे अतिकारीषगन्ध्यापुत्रः इति सिद्धयति इति अवतर-णाशयः, परन्तु पूर्वपदस्येति विशेष्यान्तरसत्त्वेन तदादिविशेष्यकतदन्तविध्यभावे पूर्वपद-ष्यमादाय तदन्तविधौ तदन्ते च तदादेरभेदेनान्वये तदाद्यभिन्नं यत् ष्यङन्तपूर्वपदम् अर्थात् ष्यङ् यस्माद्विहितस्तदादितदन्तं यत् पूर्वपदं तस्य संप्रसारणं स्यात् पुत्रपत्यो-रुत्तरपदयोः परयोस्तत्पुरुषे इत्यर्थेष्यङन्त तदाद्यभिन्नं पूर्वपदं कारीषगन्ध्या इति नास्ति; यतो हि ष्यङ् यस्माद्विहितस्तदादि तदन्तं कारीषमन्ध्या इति वर्तते, तस्य च पूर्वपदत्वं नास्ति, यच्च पूर्वपदं परमकारीषगन्ध्या इति तस्य च ष्यङन्तत्वतदादित्वं नास्ति । एवं चावतरणासांगत्यं प्रतिभाति, दृष्टान्ते संप्रासारणाप्राप्तेः । अतः प्रोक्तस्यावतरणस्य सांगत्यं यथा कथञ्चित्स्थापनीयमिति भावनाशीलैरिवशब्दं मपिशब्दञ्च भिन्नक्रमं कृत्वातिकारीषगन्ध्यापुत्र इत्यत्र योज्यते तथाच "परम-कारीषगन्धीपुत्र इत्यत्रापि अतिकारीषगन्ध्या पुत्र इत्यत्रेव "ष्यङः सम्प्रसारणं पुत्र-पत्योरिति स्यात्" इति वाक्ययोजना सम्पत्स्यते । एवञ्च मरुस्थल्यामिव बङ्गेऽपि वृष्टिः स्यादिति वाक्ये मरुस्थल्यामिव बङ्गेऽपि वृष्टिकार्याभावापत्तिर्यथा प्रतीयते तथेहापि अतिकारीषगन्ध्यापुत्र इत्यत्र यथा न सम्प्रासरणं तथा परमकारीगन्धीपुत्र इत्यत्रापि सम्प्रसारणाभावापपत्तिरिति तात्पर्यावगत्या अवतरणसंगतिरवस्थाप्यते । मरुवदुशीररेषु जलमितिवत् अतिकारीषगन्ध्यापुत्र इतिवदिहापि स्यादिति काकु-वाक्यमिदं नागेशस्येति मन्तव्यम् अथवा नैवकारो भिन्नक्रमः करणीयः । यथाश्रुत-वाक्यविन्यास एव साधुः । तथाहिः—ष्यङ इति प्रत्ययत्वेन शब्दस्वरूपरूपं विशेष्य-मादाय ततस्तदन्तविधिः, उत्तरपदाक्षिप्तस्य पूर्वपदस्यापि विशेष्यत्वेन द्वितीयस्तदन्त विधिः । तेन ष्यङन्तान्तस्य सम्प्रसारणमित्यर्थतया परमकारीषगन्धीपुत्र इत्यत्रेव अतिकारीषगन्ध्यापुत्र इत्यत्रापि सम्प्रसारणस्य प्राप्त्यावतरणं यथापदविन्यासं साध्वेव । तद्दोषवारणाय "स्त्रीप्रत्यये चानुपसर्जने नेति परिभाषा स्वीक्रियते ।

अनुपसर्जने स्त्रीप्रत्यये तदादि विधिर्नेति परिभाषार्थो न कर्तु शक्यते, अनुप-सर्जनस्त्रीप्रत्ययस्य लक्ष्ये सत्त्वेऽपि तत्र तदादिविधेरप्राप्तेः । प्रत्ययग्रहणे यस्मात्सेति परिभाषाया अपवादत्वात् अत्रापि ग्रहणपदसंबन्धात् यत्र शास्त्रे लक्ष्यगतानुपसर्ज-नस्त्रीप्रत्ययबोधकं पदं गृहीतं तत्र तदादिनियमो नेत्यर्थः स्वीकार्यः । इत्थं यत्र यत्र शास्त्रे स्त्रीप्रत्ययग्रहणमस्ति तत्र शास्त्रस्यावृत्या द्वौ वाच्यार्थौ कर्तव्यौ तदादिविधि-घटितः तद्रहितश्च । कुत्र तदादिपदघटितो वाक्यार्थः करणीयः, कुत्र च तदादिपद-

स्त्रीप्रत्यय इति विषयसप्तमी । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह तत्र तदादिनियमो न । यस्त्वप्राधान्येनाह तत्र तदादिनियमोऽस्त्येवेत्यर्थः । प्रत्यासत्त्या

---

रहित इति जिज्ञासायामेषा परिभाषा व्यवस्थायै समुपादेया । यत्र लक्ष्ये स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाख्याति तादृशे लक्ष्ये संगमनाय प्रवृत्ते शास्त्रे तदादिनियमो न । तेन परमकारीषगन्धीपुत्र इत्यत्र कर्मधारयसमासे उत्तरपदार्थस्य प्राधान्यात् स्त्रीप्रत्ययार्थस्य मुख्यत्वात् स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाख्याति । अतस्तदादिनियमरहितवाक्यार्थेन ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात् पुत्रपत्योस्तत्पुरुष इत्येवं विधेन सम्प्रसारणं जायते । अतिकारीषगन्ध्यापुत्र इत्यत्र करीषगन्धेरपत्यं स्त्रीत्यर्थे जातस्य ष्यङ्प्रत्ययार्थस्त्रीत्वस्य अत्यादय इति समासार्थं प्रत्युसर्जनत्वात्स्त्रीप्रत्ययो न स्त्रियं प्राधान्येनाख्याति । अतः उपसर्जनत्वात्तदादिनियमघटितवाक्यार्थेन ष्यङन्ततदादिपूर्वपदस्य संप्रसारणं स्यात् पुत्रपत्योरुत्तरपदयोः परयोस्तत्पुरुषे इत्यर्थे ष्यङ्प्रत्ययोयस्मात्करीषगन्धेर्विहितस्तदादितदन्तं पदं कारीषगन्ध्येति तच्च तत्पुरुषसमासस्य पूर्वपदं नास्ति, यच्च पूर्वपदमतिकारीषगन्ध्येति तत्ष्यङन्ततदादि नास्तीति संप्रसारणाभावः सिद्धयति । इत्थं यत्र लक्ष्ये अनुपसर्जनस्त्रीप्रत्ययस्तमादाय प्रवर्तमाने सूत्रे तदादिनियमो न । तदादिनाऽतदादेर्व्यावृत्तिर्न, अतदादौ तदादित्वमारोप्यते इति परिभाषायाः सरलार्थः छात्रवर्गे प्रचलितः । कश्चितु पूर्वोक्तं वाक्यार्थद्वयं न कल्पयति किन्तु परिभाषार्थमित्थं करोति—यत्र लक्ष्येऽनुपसर्जस्त्रीप्रत्ययस्तमादाय प्रवृत्तिकाले शास्त्रे तदादिनियमो न भवति किन्तु तदेव शास्त्रं यदा यत्र लक्ष्ये उपसर्जनस्त्रीप्रत्ययस्तत्र तादृशं स्त्रीप्रत्ययमक्षिलक्ष्यीकृत्य प्रवर्तते तदा तदादिनियमो भवतीति । अथवा अनुपसर्जनस्त्रीप्रत्ययविषयकवाक्ये तदादिविधिर्न, उपसर्जनस्त्रीप्रत्ययविषयकवाक्ये तदादिविधिर्भवत्येवेत्यर्थः स्वीकार्यः तदाह—विषयसप्तमी……नियमोऽस्त्येवेति ।

---

बताते हुए लिखते हैं **"स्त्रीप्रत्यये चानुपसर्जने न"** "स्त्रीप्रत्यये" में सप्तमी, वैषयिक आधार में हुई है । इसलिए उसका अर्थ विषय है । इसलिए स्त्रीप्रत्यय के विषय में तदादिनियम नहीं हो अर्थात् जो स्त्रीप्रत्यय स्त्रीत्व अर्थ को प्रधान रूप में बताता है, वहाँ तदादि नियम नहीं होता अर्थात् वहां अतदादि में भी तदादित्व का आरोप हो जाता है, अतदादि को भी तदादि मान लिया जाता है । इसलिए "परमकारीषगन्ध्यापुत्रः" में सम्प्रसारणादि हुआ । जो स्त्रीप्रत्यय, स्त्रीत्व अर्थ को अप्रधान रूप में बताता है वहां तो तदादि नियम होता है । इसलिए अतिकारीषगन्ध्यापुत्रः में तदादि नियम हुआ और ष्यङन्ततदादि नहीं होने के कारण सम्प्रसारणादि नहीं हुआ । ष्यङन्त तदादि का अर्थ है ष्यङ् प्रत्यय की प्रकृति ही आदि में हो; और ष्यङ् प्रत्यय ही अन्त में हो ऐसा शब्द ।

प्रत्यासत्ति के कारण इस परिभाषा की प्रवृत्ति में उस अर्थ के प्रति अनुप-

**यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम् । तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः ।।**

**अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वमसम्भवात् ।।**

---

उपसर्जनत्वं द्विविधं लौकिकं शास्त्रीयञ्च । तत्र लौकिकमुपसर्जनत्वं नाम किञ्चिन्निष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वम् । शास्त्रीयञ्चोपसर्जनम् एकविभक्तिचापूर्वनिपाते १.२.४४ इति 'प्रथमानिर्दिष्टं समास उपसर्जनम्' १.२.४३ इति सूत्रद्वयोक्तम् । तथाच अतिराजकुमारिरित्यत्र दोषः । अत्र हि 'गोस्त्रियोरपसर्जनस्य' १.२.४८ इति ह्रस्वत्वमिष्यते, तन्न स्यात् । तत्र हि कुमारशब्दात् "वयसि प्रथमे" ४.१.२० इति ङीप् कुमारीति षष्ठीतत्पुरुषः । तामतिक्रान्तः अतिराजकुमारिः अत्यादयः क्रान्ताद्यर्थे इति समासः । अत्र हि अतिक्रमणार्थनिष्टविशेष्यतानिरुपितप्रकारताश्रयत्वाद् राजकुमारीत्यस्योपसर्जनत्वमस्तीति तादृशे लक्ष्ये प्रवर्तमानस्य गोस्त्रियोरितिसूत्रस्य उपसर्जस्त्रीप्रत्ययविषयकवाक्यार्थेऽनया तदादिविधौ 'स्त्रीप्रत्ययान्ततदादिरूपं यदुपसर्जनं तस्य ह्रस्व इत्यर्थे ह्रस्वो न स्यात्, राजकुमारीत्यस्योपसर्जनस्त्रीप्रत्ययान्ततदादित्वाभावात्, स्त्रीप्रत्ययो ङीप्प्रत्ययो यस्माद्विहितस्तदादितदन्तं कुमारीत्येव वर्तते, तस्योपसर्जनत्वं नास्ति, यस्य चोपसर्जनत्वं वर्तते राजकुमारीत्यस्य, तस्य स्त्रीप्रत्ययान्ततदादित्वं नास्तीति ह्रस्वाभावप्रसङ्गः स्यादिति तु न वाच्यम् प्रत्यासत्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनमेव परिभाषाप्रवृत्तौ निमित्तमिति स्वीकारेणादोषात् । अतिराजकुमारिरित्यत्र राजकुमारिति समुदाये स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रति अर्थात् राजकुमारीशब्दार्थं प्रत्यनुपसर्जनत्वमेव स्त्रीप्रत्ययस्य ङीपः इति अनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः । राजकुमारीशब्दार्थः अतिक्रमणरूपान्यपदार्थपरकः, स एव चातिक्रमणा-

---

सर्जनत्व को ही निमित्त मानते हैं; जो अर्थ उस समुदाय का हो; जिसमें कि स्त्रीप्रत्ययत्व लाना हो । अर्थात् जिस समुदाय में स्त्रीप्रत्ययत्व लाना हो उस अर्थ के प्रति अनुपसर्जन ही इस परिभाषा की प्रवृत्ति में निमित्त है । इसी लिए अतिराजकुमारिः' इत्यादि प्रयोग में "गोस्त्रियोरुपसर्जनस्य" १.२.४८ ह्रस्वता हुई; क्योंकि यहाँ राजकुमारी शब्द का अर्थ अतिशब्दार्थ के प्रति यद्यपि उपसर्जन है, तथापि अतिराजकुमारी शब्दार्थ के प्रति तो अनुपसर्जन ही है । इसलिए परिभाषा की प्रवृत्ति से तदादि नियम के अभाव के कारण स्त्रीप्रत्ययान्त मानकर ह्रस्वता हो गयी । अतएव इस परिभाषा में शास्त्रीय उपसर्जन नहीं लिया गया; क्योंकि प्रत्यय मात्र में यहाँ उपसर्जनत्व विवक्षित है । प्रत्यय मात्र को ''एक विभक्ति चापूर्वनिपाते' से उपसर्जनसंज्ञा हो नहीं सकती थी, इसलिए असम्भवात् इस परिभाषा में शास्त्रीय उपसर्जन नहीं लिया गया ।

**अस्याः प्रत्ययग्रहणे इत्यस्यापवादत्वात्तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपद-सम्बन्धेन स्त्रीप्रत्ययसामान्यग्रहणे विशेषग्रहणे च प्रवृत्तिर्न तु स्त्रीप्रत्ययाऽस्त्री-प्रत्ययग्रहणे ॥**

---

थंरूपविशेष्यतानिरूपित प्रकारताश्रयः भवतु नामोपसर्जनोऽतिराजकुमारिशब्दार्थं प्रति। परन्तु कुमारीनिष्ठः ङीब्रूपस्त्रीप्रत्ययार्थः न राजशब्दार्थापेक्षयाऽप्रधानः न वा राजकुकारी'शब्दार्थे ङीबर्थस्याप्राधान्यमतः अत्र ङीपोऽनुपसर्जनत्वात् स्त्रीप्रत्यये चानुपर्जने नेति तदादिविधिप्रतिषेधात् स्त्रीप्रत्ययान्ततया राजकुमारीशब्दस्य च 'एक-विभक्ति चापूर्वनिपाते' १.२.४४ इति शास्त्रीयोपसर्जनतया गोस्त्रियोरिति ह्रस्व-सिद्धौ न कापि बाधा। 'गोस्त्रियो' रित्यत्र शास्त्रीयमुपसर्जनं निमित्ततया गृह्यते। अस्यां परिभाषायान्तु लौकिकमेवोपसर्जनत्वं गृह्यते न शास्त्रीयम्। यतोऽह्यत्र प्रत्यय-मात्रस्योपसर्जनत्वं विवक्षितमस्ति, प्रत्ययमात्रस्य च शास्त्रीयमुपसर्जनत्वं न संभवति। अतोऽसंभवादिह शास्त्रीयमुपसर्जनं न गृह्यते। विग्रहे यन्नियतविभक्तिकं तदुपसर्जन-संज्ञं स्यादिति उपसर्जनसंज्ञाविधायकस्य सूत्रस्यार्थः। विभक्तिश्च सुब्रूपा प्रातिपदि-कात् टाब्ङीबादिप्रत्ययान्ताद् आगच्छति न तु केवलात् प्रत्ययात्। अतोनियतविभक्ति-कत्वं केवलस्य प्रत्ययस्य न सम्भवतीति न तस्य शास्त्रीयोपसर्जनसंभावना। अतो ऽत्र परिभाषायां केवलस्य प्रत्ययमात्रस्योपसर्जनत्वस्वीकारात् न शास्त्रीयनुपसर्जनं गृहीतम्। यच्च नियतविभक्तिकत्वाद्राजकुमारीत्यस्योपसर्जनत्वं शास्त्रीयं तच्च गोस्त्रियोरित्यत्र ग्राह्यमेव।

इयं परिभाषा 'प्रत्ययग्रहणे यस्मात्स विहित' इत्यस्याः परिभाषाया अपवादः। अतः उत्सर्गसमानदेशा अपवादा इति सिद्धान्तानुसारेण तदेकवाक्यतापन्नतया चा-त्रापि ग्रहणपदं सम्बध्यते, तेन स्त्रीप्रत्ययसामान्यग्रहणे स्त्रीप्रत्यय विशेषग्रहणे चैवेयं प्रवर्तते न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे सापि च प्रत्ययमात्रग्रहणे प्रवर्तते न प्रत्यया-प्रत्ययग्रहणे इत्यनुपदमेवोक्तम्। एतत् अर्थवदधातुः १.२.४५ इति सूत्रे भाष्ये ध्वनितम्—तत्र हि कृत्तद्धि०—१.२.४६ इति सूत्रस्थसमासग्रहणस्य नियमार्थ-त्वमुक्तम्। राजन् ङस् पुरुष सु इति समुदायस्य धातुप्रत्ययप्रत्ययान्ततदादिभिन्नत्वेन पूर्वसूत्रेणैव प्रातिपदिकसंज्ञासिद्धेः समासग्रहणं नियमार्थम्—अर्थवत्समुदायानां समासग्रहणं नियमार्थम् इति। यदि स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणेऽसौ परिभाषा

---

यह परिभाषा "प्रत्ययग्रहणे यस्मात्स" इस परिभाषा का अपवाद है। इसलिए उसके साथ एकवाक्यताप्राप्त इस परिभाषा में भी ग्रहण पद का सम्बन्ध होगा। अतः सामान्यतया स्त्रीप्रत्यय के ग्रहण में जैसे—'गोस्त्रियोरुपसर्जनस्य" १.२.४८ में और विशेषतया स्त्रीप्रत्यय के ग्रहण में जैसे 'ष्यङः सम्प्रसारणम्" ६.१.१३ इस सूत्र में यह परिभाषा प्रवृत्त होगी; किन्तु ऐसे प्रत्यय के ग्रहण में जिनसे स्त्रीप्रत्यय और स्त्री-प्रत्ययभिन्न दोनों प्रकार के प्रत्ययों का ग्रहण होता है, नहीं प्रवृत्त होगी।

**ध्वनितं चेदमर्थवत् सूत्रे भाष्ये । इयं च वाचनिक्येव 'ष्यङः इति सूत्रे भाष्ये स्पष्टा ॥२७॥**

---

प्रवर्तेत तदानुपसर्जनत्वाद् राजकुमारीति समुदायस्यानया प्रत्ययान्तत्वेन प्रत्ययान्त-पर्युदासस्य प्राप्त्याऽर्थवत्सूत्राप्रवृत्या तत्र प्रातिपदिकसंज्ञाविधानाय समासग्रहणस्य चरितार्थत्वेन नियमार्थकथनमसंगतं स्यात् । नियमार्थत्वं च कथितम् । तेन नियमा-र्थत्वकथनेनैतद् ध्वनितं यदस्याः स्त्रीप्रत्ययस्य सामान्येन विशेषेण वा ग्रहणं विषयः यथा गोस्त्रियोरित्यत्र स्त्रीप्रत्ययस्य सामान्येन ग्रहणात् ष्यङः सम्प्रसारणमित्यत्र च विशेषेण ग्रहणादुभत्रेयं प्रवर्तते । न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे । यथा अर्थवद-धातुरित्यत्र । तत्रेयं न प्रवर्तते ।

इयं परिभाषा न न्यायसिद्धा न वा ज्ञापकसिद्धा किन्तु भाष्ये वचनरूपेण पठितत्वाद् वाचनिक्येव । तथा च ष्यङः सम्प्रसारणम् ६.१.१३ इति सूत्रे भाष्येऽस्या ईदृशः सन्दर्भ उपलभ्यते—इहापि तर्हि न प्राप्नोति कारीषगन्धीपुत्रः कारीषन्धीपति-रिति । किं कारणं पूर्व पदमित्युच्यते । न ह्यत्र ष्यङ् पूर्वपदमस्ति । ष्यङन्तमेतत्पूर्व-पदम् । कथम् । प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति । यदि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्युच्यते । परमकारीषगन्धीपुत्रः परमकारीषगन्धीपतिरिति न सिद्ध्यति । प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवत्यस्त्रीप्रत्ययेनेति । यद्यस्त्री-प्रत्ययेनेत्युच्यतेऽतिक्रान्तः कारीषगन्ध्यामतिकारीषगन्ध्यस्तस्य पुत्रोऽतिकारीष-गन्ध्यपुत्रोऽतिकारीषगन्ध्यपतिरित्यत्रापि प्राप्नोति अस्त्रीप्रत्ययेनेत्युपसर्जने न । यो ह्युपसर्जनं स्त्रीप्रत्ययो भवत्येषा परिभाषा प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति ॥

भाष्ये वचनरूपेण पठिता नत्वस्याः ज्ञापकमुपन्यस्तम् । एतस्यैतत्तात्पर्यं

---

अर्थवत् सूत्र के भाष्य से यह ध्वनित होता है कि स्त्री प्रत्ययास्त्रीप्रत्यय-ग्रहण में यह परिभाषा नहीं लगती । वहाँ यह कहा गया कि राज्ञः कुमारी, राज-कुमारी में राजन् ङस् और कुमारी सु को समास करने पर लुक् को अन्तरङ्गत्वात् बाधकर पहले सु का हल्ङ्यादि लोप होने पर यदि इस परिभाषा की प्रवृत्ति हो जाय, तो तदादिनियम के अभाव में अर्थात् अतदादि में भी तदादित्व का आरोप करने पर प्रत्ययान्त तदादि हो जाने से अर्थवत् सूत्र से प्राप्त प्रातिपदिक संज्ञा के विधान के लिए "कृत्तद्धितसमासाश्च" १,२.४६ में समासग्रहण के चरितार्थ होने पर उसे नियमार्थक बताना असंगत हो जाता । नियमार्थक बताया गया है, इसलिए जानते हैं कि यह परिभाषा उस प्रत्यय के ग्रहण में नहीं लगती; जिससे स्त्रीप्रत्यय और तद्भिन्न दोनों का ग्रहण होता है । 'अर्थवत्' १.२.४५ सूत्रस्थ प्रत्यय पद से स्त्रीप्रत्यय और तद्भिन्न प्रत्यय दोनों लिये जाते हैं । इसलिए वहाँ यह परिभाषा नहीं प्रवृत्त होगी; तब तो तदादि नियम होगा; अर्थात् अतदादि अतदादि ही रहेगा ।

कदापि नास्ति यदत्र ज्ञापकं न भवितुमर्हति । ज्ञापकान्वेषपरायणा वदन्ति—अङ्ग-संज्ञासूत्रे 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' १.४.१३ इत्यत्र नेयङुवङ्स्थाना-वस्त्रीत्यतोऽस्त्रीपदस्य सम्बन्धः । तस्य च स्त्रीबोधकभिन्न इत्यर्थः । प्रत्यये च तदन्वयः । स्त्रीबोधकञ्च प्रधानाप्रधानयोः प्रधानस्यैव ग्रहणमिति न्यायेन प्रधानमेव—अनुपसपर्जनमेव—गृह्यते । एवञ्चानुपसर्जनस्त्रीबोधकभिन्नप्रत्यये गृह्यमाणे तदादि-रित्युपतिष्ठते इत्यर्थे कृतेऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमालाभादियं परिभाषा सिद्धेति ।

॥इति शिवम्॥ २७

---

ऐसी स्थिति में प्रत्ययान्ततदादिभिन्न होने से पूर्वसूत्र से ही प्रातिपदिक संज्ञा सिद्ध थी; समासग्रहण की कथित नियमार्थकता संगत बैठती है।

नागेश की पंक्ति "स्त्रीप्रत्ययसामान्यग्रहणे विशेष ग्रहणे च प्रवृत्तिः" में अभिमतसम्बन्धाभाव दोष है। वह चाहता तो है कि 'स्त्रीप्रत्यय' शब्द का सम्बन्ध "विशेषग्रहणे" के विशेषपद के साथ भी हो, परन्तु स्त्रीप्रत्ययशब्द, सामान्य शब्द के साथ समस्त है, इसलिए "ऋद्धराजपुरुषः" के 'ऋद्ध' का सम्बन्ध ग्रामपुरुषः के 'ग्राम' के साथ नहीं होता; उसीतरह यहाँ भी "स्त्रीप्रत्ययसामान्यग्रहणे" में विशेषणीभूत स्त्रीप्रत्यय का अन्वय विशेषग्रहणे" के साथ नहीं हो सकता। इसलिए ऐसा लिखना चाहिए था "स्त्रीप्रत्ययस्य सामान्यग्रहणे विशेषग्रहणे च"। शायद लेखक के दोष से 'स्य' लुप्त हो गया हो।

'स्त्रीप्रत्ययसामान्यग्रहणे' का अर्थ है 'स्त्रीप्रत्ययत्वावाच्छिन्नबोधकग्रहणे' अर्थात् सकलस्त्रीप्रत्यय के बोधक पद के ग्रहण में जैसे 'गोस्त्रियोः १.२.४८ में स्त्री-प्रत्ययग्रहण में इस परिभाषा की प्रवृत्ति होती है; इसी तरह विशेषग्रहणे का अर्थ है स्त्रीप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजक पद में। यथा "ष्यङः सम्प्रसारणम्" ६.१.१२ में ष्यङ् के ग्रहण में।

भाष्यकार ने "ष्यङः सम्प्रसारणम्' इस सूत्र में इस परिभाषा को वाचनिकी परिभाषा के रूप में स्पष्ट किया है। अविकल भाष्य दुर्गा-व्याख्या में उद्धृत है। वहाँ इस परिभाषा के प्रत्येक अंश को वचन के रूप में ही कहना ध्वनित होता है। इसका यह तात्पर्य नहीं लेना चाहिए कि इस परिभाषा में कोई ज्ञापक ही नहीं हो सकता।

ज्ञापक निकालना चाहें तो इस तरह निकाल सकते हैं:—अङ्गसंज्ञा १.४.१३ सूत्र में नेयङुवङ्स्थानावस्त्री" १.४.४ सूत्र से अस्त्री की अनुवृत्ति करके सम्बन्ध करना चाहिए। अस्त्री का शब्दाधिकार मानकर वहाँ 'स्त्रीबोधक से भिन्न' ऐसा अर्थ करना चाहिए और उसका प्रत्यय के साथ अन्वय मानना चाहिए। स्त्रीबोधक पद से "प्रधानाप्रधानयोः प्रधानस्यैव ग्रहणम्" इस न्याय से प्रधान अर्थात् अनुपसर्जन ही लिया जायगा। इसतरह अङ्गसंज्ञा सूत्र का अर्थ होगा कि अनुपसर्जन स्त्री बोधक

नन्वेवं 'तरप्तमपौ घ' इत्यादिना तरबन्तादेः संज्ञा स्यादत आह—

**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥२८॥**

---

**संज्ञाविधौ प्रत्ययग्रहणे······नास्ति २८**

ननु प्रत्ययग्रहणे यस्मात्स इति परिभाषास्वीकारे तरप्तमपौ घः १.१.२२ इत्यादौ तरबन्ततदादेर्घसंज्ञायां कुमारी ब्राह्मणितरा इत्यादौ घरूपचेलड् ६.३.४३ इति तरबन्ततदादौ ब्राह्मणितरेति शब्दे परे कुमारीबटेकेकारस्य ह्रस्वापत्तिरिति चेदत आह—**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति** (२८) इति । संज्ञाविधायक-सूत्रे यत्र प्रत्ययग्रहणमस्ति, तत्र तदादिं विशेष्यं विधाय प्रत्ययग्रहणपरिभाषया यस्तदन्तविधिः क्रियते स न भवति । साक्षात् संज्ञानिष्ठविधेयतानिरूपितोद्देश्यता-प्रयोजकं प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तदादिविशेष्यकतदन्तोपस्थापकं न

---

प्रत्यय के गृह्यमाण रहने पर तदादि की उपस्थिति हो, इस तरह अनुपसर्जन स्त्री-प्रत्यय में तदादि नियम के अलाभ से यह परिभाषा फलित होती है। इस तरह इस में ज्ञापन संभव है ।

'ष्यङः सम्प्रसारणम्' ६.१.१३ सूत्र के भाष्य का तात्पर्य इस प्रकार है—"कारीषगन्धीपुत्रः" की सिद्धि के लिए यदि ष्यङन्त तदादिपूर्वपद को सम्प्रसारण होना स्वीकार करें तो "परमकारीषगन्धीपुत्रः" में सम्प्रसारण नहीं प्राप्त होता है । वहाँ दोष निवारण के लिए यदि "अस्त्रीप्रत्ययेन कहते है; अर्थात् "प्रत्ययग्रहणे यस्मात् स विहितः" से तदादि की उपस्थिति" स्त्रीप्रत्यय में नहीं होती है ऐसा मानते हैं, तो कारीषगन्ध्याम् अतिक्रान्तः अतिकारीषगन्ध्यः तस्य पुत्रः 'अतिकारीषगन्ध्यपुत्रः' यहाँ भी सम्प्रसारण होगा इस के निवारण के लिए यह मान लेंगे कि यदि स्त्रीप्रत्यय उपसर्जन होगा तभी तदादि नियम होगा । इस भाष्य से परिभाषा का—विशेषणविशिष्ट का—वाचनिकी होना सिद्ध है, तथापि ज्ञापक निकालना चाहे, तो पूर्वोक्त प्रक्रिया का अनुसरण करना चाहिए ।

॥इति शिवम्॥ २७

**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति—२८**

प्रत्यय ग्रहण परिभाषा मानने पर "तरप् तमपौ' घः १.१.२२ इत्यादि में तदन्त की उपस्थिति होने पर घसंज्ञा तरबन्त और तमबन्त को होगी; फिर तो 'कुमारी ब्राह्मणितरा' में घसंज्ञक (ब्राह्मणितरा) के परे रहते कुमारी को 'घरूप चेलड् ६.३.४३ सूत्र से ह्रस्वता हो जायगी । इस दोष के निवारण के लिए परिभाषा मानते हैं:—**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति**" अर्थात् संज्ञाविधि में प्रत्यय ग्रहण में तदन्तविधि नहीं होगी । इसलिए तरबन्त और तमबन्त अर्थ नहीं होगा ।

**'सुप्तिङन्तमि'त्यन्तग्रहणमस्या ज्ञापकम् ॥ न च प्रत्यययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसम्भवाज्ज्ञापितेऽपि फलाभाव इति वाच्यम् । पदसंज्ञायाः स्वादिष्विति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् ॥**

---

भवति इति निर्गलितोऽर्थः । तेन तरप्तमपौ घ इत्यादौ न दोषः । अत्र च 'सुप्तिङन्तम्' १.४.१४ इति सूत्रस्थमन्तग्रहणं ज्ञापकम् । अन्यथा सुप्तिङौ पदमिति सूत्रे कृतेऽपि प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया तदादेस्तद्विशेष्यकतदन्तस्य चोपस्थितौ सुबन्ततदादिस्तिङन्ततदादिश्च पदसंज्ञकौ स्यातामित्यर्थेनैव पदसंज्ञासिद्धावन्तग्रहणं व्यर्थं स्यात् । नच परिभाषायां ज्ञापितायामप्यन्तग्रहणं व्यर्थमेवेति वाच्यम् संज्ञाविधाविति निषेधेन सुप्तिङोरेव पदसंज्ञाविधाने पचति इत्यादौ तिङंपदं मत्वा "नित्यवीप्सयोः" ८.१.४ इति पदस्य तिमात्रस्य द्वित्वापत्तेस्तद्वारणायान्तग्रहणस्य सूत्रे चारितार्थ्यात् । न च "पदस्य" ८.१.१६ इत्यत्र प्रत्ययग्रहणपरिभाषया तदादिविशेष्यकतदन्तविधौ पदान्ततदादेर्द्वित्वमित्यर्थेन पचतीत्यादौ प्रत्ययमात्रस्य द्वित्वाप्राप्तावदोष इति अन्तग्रहणस्य स्वांशे चारितार्थ्याभाव इति वाच्यम् 'स्वादिष्वसर्वनामस्थाने' १.४.१७ इति विहितपदसंज्ञायाः केवलप्रकृतिनिष्ठत्वेन पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्या पदस्येत्यत्र तदादितदन्तोपस्थितेरभावेन

---

"सुप्तिङन्त पदम्" १.४.१४ में किया गया अन्त ग्रहण इसका ज्ञापक है। यदि संज्ञाविधि में भी प्रत्यय ग्रहण में तदन्त ग्रहण हो ही जाय, तो तदादि को विशेष्य मानकर तदन्त ग्रहण हो जाने से ही सुबन्त तिङन्त अर्थ लाभ हो जाता; सुप्तिङन्तम् पदम् १.४.१४ में अन्त ग्रहण व्यर्थ हो जायगा । अन्त ग्रहण किया गया है; इसलिए मालूम होता है कि संज्ञाविधि में प्रत्यय ग्रहण में तदन्त ग्रहण नहीं होता । परिभाषा स्वीकार कर लेने पर यदि अन्त ग्रहण नहीं करें, तो केवल सुप् और तिङ् को पदसंज्ञा प्राप्त होगी, वह नहीं हो, किन्तु सुबन्त और तिङन्त को पदसंज्ञा हो; इसलिए अन्त ग्रहण स्वांश में चरितार्थ हुआ । केवल सुप् और तिङ् को पदसंज्ञा होने पर भी प्रत्यय ग्रहण परिभाषा से तदन्त ग्रहण हो ही जायगा, इस तरह परिभाषा के ज्ञापित होने पर भी परिभाषा के फल का अभाव ही दिखता है" ऐसा कहना तब ठीक होता, जब कि पदसंज्ञा का विषय केवल प्रत्यय होता और ऐसी स्थिति में पद को प्रत्यय मान कर प्रत्यय परिभाषा से तदन्त की उपस्थिति हो जाती; परन्तु पदसंज्ञा 'स्वादिष्वसर्वनामस्थाने' १-४-१७ से भी होती है और उससे जो पद संज्ञा होती है; वह प्रकृति मात्र को होती है; इस लिए पद ग्रहण को प्रत्ययमात्र का ग्रहण नहीं ठहराया जा सकता । अतः प्रत्यय मात्र के ग्रहण में प्रवृत्त होने वाली 'प्रत्यय ग्रहण' परिभाषा से तदन्त की उपस्थिति नहीं की जा सकती । इसलिए परिभाषा के ज्ञापन का फल है सुबन्त और तिङन्त को पद संज्ञा करना ।

सुप्तिङन्तमि'ति सूत्रे भाष्ये स्पष्टा ॥२८॥

संज्ञाविधावितिपरिभाषा स्वीकारे तिप्रत्ययमात्रस्य द्वित्ववारणायान्तग्रहणस्य साफल्यात् सुप्तिङन्तं पदम् १.४.१४ इति सूत्रभाष्ये परिभाषेयं स्पष्टतो वर्णिता । तथाहि :—

अन्तग्रहणं किमर्थम् "न सुप्तिङ् पदमित्येवोच्येत ? केनेदानीं तदन्तानां भविष्यति ? तदन्तविधिना ॥

अत उत्तरं पठति पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् । पदसंज्ञायामन्तग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यः अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । तरप्तमपौ घः तरप्तमबन्तस्य न भवति । किं च स्यात् ? कुमारी गौरितरा । घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ॥

यद्येतज्ज्ञाप्यते 'सनाद्यन्ता धातवः' ३.१.३२ इत्यन्तग्रहणं कर्तव्यम् । कृत्तद्धितसमासाश्च १.२.४६ इत्यन्तग्रहणं कर्तव्यम् । इदं तृतीयं ज्ञापकार्थम् ॥ द्वे तावत्क्रियेते न्यास एव । यदप्युच्यते—कृतद्धितसमासाश्च इत्यन्तग्रहणं कर्तव्यम् । अर्थवदितिवर्तते कृत्तद्धितान्तं चैवार्थवत् न केवला कृतस्तद्धिता वा ।

॥इति शिवम्॥

"सुप्तिङन्त पदम्" १.४.१४ इस सूत्र के भाष्य में यह स्पष्ट रूप में प्रतिपादित की गयी है ।

वहाँ यह कहा गया है कि "सुप्तिङ् पदम्" यही सूत्र करना चाहिए था "तदन्त विधि" के कारण सुबन्त और तिङन्त को पदसंज्ञा हो ही जाती; फिर तो अन्त ग्रहण किया है, इससे आचार्य यह सूचित करते हैं कि इस सूत्र को छोड़कर और संज्ञाविधायक सूत्र में तदन्त विधि नहीं होती है । इसका फल यह हुआ कि "तरप्तमपौ घः १.१.२२ इस सूत्र में तदन्तविधि नहीं हुई । इसलिए कुमारी गौरितरा में कुमारी शब्द के ईकार को "नद्याः शेषस्यान्यतरस्याम्" ६.३.४४ से ह्रस्व नहीं हुआ । अन्यथा तदन्त विधि हो जाती और घान्त (तरप्तमबन्त) 'गौरितरा के परे रहते कुमारी के ई को भी ह्रस्व हो जाता ।

परिभाषा का दोष बताकर उसके निवारण के लिए भाष्यकार ने कहा—कि यदि यह परिभाषा मानते हैं तो "सनाद्यन्ता धातवः' ३.१.३२ में अन्तग्रहण करना होगा । और कृत्तद्धितसमासाश्च १.२.४६ में अन्तग्रहण करना पड़ेगा । अन्यथा केवल कृत् और तद्धित को प्रातिपदिकसंज्ञा हो जायगी । इस दोष के निवारण के किए पतञ्जलि ने लिखा कि "सनाद्यन्ता धातवः" में तो 'अन्त' किया गया है ही । इसे दूसरा ज्ञापक मानना चाहिए ।

रही प्रातिपदिक संज्ञा की बात, वह तो पूर्वसूत्र से अर्थवत् की अनुवृत्ति के कारण, केवल कृत् और तद्धित को लोक में अर्थवान् नहीं होने पर अर्थवान् कृदन्त और तद्धितान्त को ही होगी । उस तरह वहाँ 'अर्थवत्' की अनुवृत्ति के बल पर तदन्त विधि होगी । ॥इति शिवम्॥ २८

नन्वेवमवतप्तेनकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह—

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥२६॥**

---

**अथ कृद्ग्रहणे......ग्रहणम् २६**

ननु प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया तदादिविशेष्यकतदन्तोपस्थितौ क्षेपे २.१.४७ इत्यस्य क्तान्ततदादिप्रकृतिकसुबन्तेन सह सप्तम्यन्तं समस्यते इत्यर्थतया 'अवतप्तेनकुलस्थितम् इत्यत्र नकुलशब्दस्य क्तान्ततदादित्वाभावात् समासो न स्यात्, क्तप्रत्ययो यस्माद् विहितः तस्य स्थाधातोरेवादावविद्यमानत्वेन क्तान्ततदादित्वाभावः स्पष्ट एव, स्थाधातुभिन्न-नकुलशब्दस्यापि विद्यमानत्वात् । नकुलेन स्थितमित्यत्र कर्तृकरणे कृता बहुलम् २.१.३२ इति समासः इत्यत्र आह—

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्** (प० २७) इति परिभाषा स्वीकर्तव्येति । अनया नकुलस्थितशब्दस्यापि क्तान्ततदादित्वसिद्धेरत्र 'क्षेप' इति समासः सिद्धयति । अव्यवस्थितत्वप्रतिपत्यात्र निन्दा गम्यते । तत्पुरुषे कृति—६.१.१४ इति सप्तम्या अलुक् कृतः—धातोर्विहितस्य तिङ्भिन्नस्य प्रत्ययस्य-ग्रहणे गतिपूर्वकस्यापि कारकपूर्वकस्यापि च ग्रहणं भवति । तेन नखनिर्भिन्न इत्यत्र गतिपूर्वकस्य भिन्नशब्दस्य कृदन्ततदादित्वस्वीकारात् 'कर्तृकरणे कृता बहुलम्—२.१.३२ इति समासः । कारकपूर्वकस्योदाहरणम्=अवतप्ते नकुलस्थितं त एतदिति । परिभाषाशरीरे अपि शब्द-

---

**कृद्ग्रहणे गतिकारक......ग्रहणम्—२६**

'अवतप्तेनकुलस्थितं त एतत्' यहाँ पहले 'नकुलेन स्थितम्' इस विग्रह में तृतीयान्त नकुल शब्द के साथ प्रथमान्त क्तान्त शब्द को 'कर्तृकरणे कृता बहुलम्'' २.१.३२ सूत्र से समास हुआ । इस तरह सिद्ध नकुलस्थित शब्द के साथ 'क्षेपे' २.१.४७ सूत्र से 'अवतप्ते' यह सप्तम्यन्त शब्द समस्त हुआ । 'तत्पुरुषे कृति बहुलम्' ६.१.१४ से सप्तमी का अलुक् हो जाने से ''अवतप्तेनकुलस्थितम् त एतत्'' में 'अवतप्तेनकुलस्थितम्'' यह रूप बनता है । अव्यवस्थित व्यक्ति के लिए इसका प्रयोग हुआ है । इसलिए इसमें चंचलता या अव्यवस्था रूप 'क्षेप'—निन्दा—गम्यमान है । यहाँ यह प्रश्न होता है कि नकुलस्थित शब्द क्तान्त तदादि नहीं है; क्योंकि क्तप्रत्यय जिससे विहित था; वही स्था वहाँ आदि में नहीं है, किन्तु 'नकुल' भी आ गया है । इस तरह 'क्षेपे' सूत्र से समास नहीं होना चाहिए क्योंकि क्षेपे' का अर्थ 'प्रत्ययग्रहण'—परिभाषा (प० २४) के बल से यह होगा कि क्तान्त तदादि प्रकृतिक सुबन्त के साथ सप्तम्यन्त को समास हो, समस्त पद से 'क्षेप' की प्रतीति होने पर । नकुलस्थित शब्द क्तान्त तदादि नहीं है, क्योंकि यहाँ जिस स्था प्रकृति से क्त प्रत्यय हुआ था । वही अब आदि में नहीं है । इस तरह प्राप्त समासाभाव रूप दोष के निवारण के लिए परिभाषा मानी जाती है—''**कृद्ग्रहणे गतिकारकपूर्व-**

**अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके 'गति-रनन्तरः' इति सूत्रेऽनन्तरग्रहणं ज्ञापकम्: तद्धयभ्युद्धृतमित्यादावतिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद्व्यर्थं सदस्या ज्ञापकम् ॥**

---

प्रवेशात् गतिकारकासमभिव्याहृतस्थले केवलस्यापि ग्रहणं भवति । अस्यांज्ञापकं क्तान्ततदादावुत्तरपदेऽनन्तरो गतिसंज्ञकः प्रादिः प्रकृतिस्वर इत्यर्थके गतिरनन्तरः ६.२.४९ इति सूत्रेऽनन्तरग्रहणम् । तच्च अभ्युद्धृतमित्यत्र उदा व्यवहितस्याभेः प्रकृतिस्वरवारणार्थं कृतम् । यदीयं परिभाषा न स्यात् तदा उद्धृतम् इत्यस्य क्तान्ततदादित्वाभावात् तत्परत्वेन क्तान्ततदाद्युत्तरपदभावेनैवाभेः प्रकृतिस्वराप्राप्त्या तद्वारणाय कृतमनन्तर-ग्रहणं व्यर्थं स्यात् । तद्व्यर्थं मा भूदिति परिभाषेयं स्वीक्रियते । "हृतशब्दस्योच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्तोद्धृतशब्दस्य पुनरभिशब्देन समासः ।

---

**स्यापि ग्रहणम्"** । अर्थात् कृत के ग्रहण में गति पूर्वक और कारक पूर्वक शब्दों का भी ग्रहण होता है । इस तरह यहाँ 'कृत्' के ग्रहण में कारक पूर्वक शब्द नकुलस्थित का भी ग्रहण होगा। केवल कृत् (क्त, ण्वुल्) आदि का प्रयोग नहीं होता, और न केवल कृत् सुबन्त के रूप में ही उपलब्ध होता है । इसलिए परिभाषा में कृत् का अर्थ 'कृदन्त' लिया गया है "कर्तृकरणे कृता' इस सूत्र में भी कृता का अर्थ "कृदन्तेन" ही है । इस तरह परिभाषा का अर्थ हुआ कि कृदन्त के ग्रहण में गतिपूर्वक और कारकपूर्वक का भी ग्रहण होता है । यही कारण है कि कृदन्त का—स्थित का—जहां ग्रहण होना चाहिए; वहाँ इस परिभाषा के बलसे "नकुलस्थित" का भी ग्रहण हुआ ।

इस परिभाषा का ज्ञापक "गतिरनन्तरः ६.२.४९ इस सूत्र में किया गया अनन्तर ग्रहण है । अनन्तर ग्रहण के कारण इस सूत्र का अर्थ है कि कर्म अर्थ में विद्यमान क्तान्त उत्तरपद के परे रहते अव्यवहित गतिसंज्ञक शब्द को प्रकृतिस्वर हो । अनन्तर ग्रहण के कारण "अभ्युद्धृतम्" में 'अभि' को प्रकृति स्वर नहीं होता है; क्योंकि वह "धृतम्" जैसे क्तान्त पद से अव्यवहित पूर्व में नहीं है । यदि "कृद्-ग्रहणे" यह परिभाषा नहीं मानें, तो 'गतिरनन्तर' में प्रत्यय ग्रहण परिभाषा की उपस्थिति से "क्तान्त तदादि उत्तरपद के परे रहते ही स्वर का विधान होगा । उद्धृतम्', यह शब्द क्तान्ततदादि नहीं है । इस कारण से ही "अभि" को प्रकृति-स्वर की प्राप्ति थी ही नहीं, उसे रोकने के लिए किया गया 'अनन्तर' ग्रहण व्यर्थ हो कर इस परिभाषा का ज्ञापन करता है । 'अनन्तर' ग्रहण इस परिभाषा को ज्ञापित करके चरितार्थ हो गया; क्योंकि अब यदि 'अनन्तर' ग्रहण नहीं करते हैं, तो इस परिभाषा के बल से क्त के ग्रहण में गतिपूर्वक अर्थात् उत् पूर्वक धृतम् का ग्रहण होने पर उसके अर्थात् 'उद्धृतम्' के परे रहते 'अभि को' प्राप्त प्रकृतिस्वर के निवारण के लिए 'अनन्तर' ग्रहण करने की आवश्यकता है ।

**न चाभ्युद्धृतमित्यादौ परत्वाद्गतिर्गताविसनेनाभेर्निघात एवेति वाच्यम्। पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः॥ अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्गत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यते इति न दोषः॥**

---

तस्य कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया उद्धृतशब्दः क्तान्त उत्तरपदम्। एवं समासान्तोदात्तत्वे प्राप्ते तद्बाधकाव्ययपूर्वपदकप्रकृतिस्वरत्वे तदपवादस्थाथादिस्वरः प्राप्तः तमपोह्याभेरयं स्वरः स्यात्, सोऽनन्तरग्रहणेन वार्यते। न च ज्ञापितेऽपि अभ्युद्धृतमिति नैतस्याः परिभाषायाः फलम्, तत्र परत्वाद् गतिर्गतौ' ८.१.७० इत्यनेनाभेर्निघात एवेति वाच्यम् पादादिस्थत्वेन पदात् परत्वाभावेन च तदप्राप्तेः। वस्तुतस्तु कुत्सने सुप्यगोत्रादौ ७.१.६९ इत्यतः प्रागेव 'पदात' ८.१.१७ इत्यस्य निवृत्तिरिति सिद्धान्ताद् गतिर्गतौ ८.१.७० इत्यस्य च ततः परत्वात्पदादित्यस्यात्र सम्बन्धाभावस्तथाचायं तत्सम्बन्धबोधको ग्रन्थोऽयुक्त एवेति। नचानन्तरग्रहणे कृतेऽपि गतिरनन्तरः ६.२.४९ इति प्रकृतिस्वरो दुर्वारः, अनया परिभाषया उद्धृतशब्दस्य क्तान्ततदादित्वेनाभेस्तदानन्तर्यसत्वादिति वाच्यम्, यावता विनानुपपत्तिस्तावत्सर्वं ज्ञापयतीति सिद्धान्ततयाऽनन्तरग्रहणेन गत्याक्षिप्त धातुनिरूपितानन्तर्यस्य

---

ज्ञापन करने पर भी अनन्तर ग्रहण की सार्थकता नहीं प्रतीत होती क्योंकि 'अभ्युद्धृतम्' यहाँ परत्वात् 'गतिर्गतौ' ८.१.७० इस सूत्र से अभि को 'निघात' ही होगा, ऐसा नहीं कह सकते हैं, क्योंकि "गतिर्गतौ" ८.१.७० सूत्र में "पदात्" ८.१.१७ "अनुदात्तं सर्वमपदादौ" ८.१.१५ इन अधिकारों के कारण पद से पर और अपादादि में स्थित गति को ही निघात होता है। 'अभ्युद्धृतम्' में 'अभि' को पद के आदि में स्थित होने तथा पद से पर स्थित नहीं होने के कारण निघात की प्राप्ति नहीं है।

"कुत्सने च सुपि" ८.१.६९ सूत्र से पहले ही 'पदात्' की निवृत्ति हो जाती है, यह और जगह कह आये हैं 'गतिर्गतौ' ८.१.७० यह सूत्र तो 'कुत्सने च सुपि' ८.१.६९ इस सूत्र से पर है। इस तरह "गतिर्गतौ" में पदात् की अनुवृत्ति मानना गलत है। साथ साथ उसके आधार पर 'अभ्युद्धृतम्' में अभि को गतिर्गतौ से प्राप्त निघात का वारण भी निर्मूल जंचता है, इस प्रश्न के उत्तर में चन्द्रिका—टीकाकार ने बताया कि 'परत्वाभावेन च" इस पंक्ति में प्रयुक्त 'च' शब्द हेतु अर्थ में है। इस तरह पंक्ति का स्वरूप होगा "यतः पदात् परत्वाभावोऽतः पादादिस्थत्वम्" अर्थात् पद से पर नहीं होने के कारण "अभि" पादादि में स्थित है। इस तरह चन्द्रिकाकार ने "गतिर्गतौ" में "पदात्" अधिकार की निवृत्ति मानते हुए नागेश की पङ्क्ति का समर्थन किया है, परन्तु उनका यह समर्थन ठीक नहीं है; क्योंकि पूर्वोक्त-सिद्धान्त तो तब ठीक माना जाता; जबकि पद से पर होकर विद्यमान रहने वाले को अगर अपादादि नहीं माना जाता, परन्तु देखने में तो इसके विपरीत आता है जैसे "गोपायति हरिर्भक्तं त्वां न पाति कुतस्तदा" इस श्लोक में "त्वाम् को पद

**न चाभ्युद्धृतमित्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वाभावेऽपि स्वरार्थं तदिति वाच्यम् । 'कारकाद्दत्ते' तिसूत्रे कारकादितियोगं विभज्य तत्र गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमितिनियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः । तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेव ।।**

---

ग्रहणात् । नचाभ्युद्धृतमित्यत्रानन्तरस्योदो यद्यपि पूर्वपदत्वं नास्ति तथापि अनन्तरग्रहणसामर्थ्यात् तस्य स्वरो यथा स्यादिति हेतोस्तस्य चारितार्थ्येन सामर्थ्यस्योपक्षीणत्वात् कथं ज्ञापकत्वमिति वाच्यम् कारकाद्दत्तश्रुतयोरेवाशिषि ६.२.१४८ इतिसूत्रे तत्पुरुषे संज्ञायामाशिषि कारकात्परयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्त इत्यर्थके कारकादिति योगं विभज्य गतिग्रहणञ्च तत्रानुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः । तस्मादनन्तरग्रहणमभ्युद्धृतमित्यादौ व्यवहितनिवृत्यर्थमेव कृतमिति प्रोक्तयुक्त्या ज्ञापकमेव । गतिरनन्तरः ६.४.४६ इति सूत्रे भाष्यकारेणानन्तरग्रहणस्य ज्ञापकत्वं स्पष्टीकृतम् तथाहिः—एवं च कृत्वा नार्थोऽनन्तर ग्रहणेन । कथमभ्युद्धृतम् । उद् हरति क्रियां विशिनष्टि । उदा विशिष्टामभिर्विशिनष्टि । तत्र गतिरनन्तर इति च प्राप्नोति । गतिर्गताविति च । गतिरनन्तर इत्यस्यावकाशः ' प्रकृतं प्रहृतम् । गतिर्गतावित्यस्यावकाशः अभ्युद्धरति, उपसमादधाति । इहोभयं प्राप्नोति—अभ्युद्धृतम्, उपसमाहृतम् । गतिर्गतावित्येतद् भवति विप्रतिषेधेन । एवं तर्हि सिद्धे सति यदनन्तरग्रहणं करोति—तद्ज्ञापयत्यचार्यो भवत्येषा परिभाषा कृद्ग्रहणे गति०—

---

से पर होकर विद्यमान रहने पर भी पादादि माना जाता है । अतः चन्द्रिका कार की कल्पना युक्ति विरुद्ध होने से मान्य नहीं है ।

इसलिए "गतिर्गतौ" में पदात् की अनुवृत्ति मूलक समाधान को अयुक्त ही मानना चाहिए यह किसी का मत है । जिसे 'विजयाकार ने "परे" शब्द से दर्शाया है ।

यदि यह प्रश्न करें कि परिभाषा मानने पर "उद्धृत" शब्द को क्तान्त पद से ग्रहण होने में कोई बाधा नहीं रही, इस तरह "उद्धृत" के अव्यहित पूर्व में होने के कारण अभि में "गतिरनन्तरः" की प्राप्ति है ही । इस तरह अनन्तर ग्रहण का अभि में प्रकृतिस्वर की निवृत्ति रूप जो प्रयोजन दिया गया, वह अयुक्त जान पड़ता है तो इसका समाधान यह है कि अनन्तर ग्रहण सामर्थ्यात् "यावता विना न चारितार्थ्यम् तावज् ज्ञाप्यम्" अर्थात् जितना माने बिना सूत्र चरितार्थ नहीं हो उतना ज्ञापन मानना चाहिए "इस न्याय के अनुसार" गतिसंज्ञक के द्वारा आक्षिप्त जो धातु तन्निरुपित आन्तर्य ही लिया जायगा, इसलिए यहाँ अभि+उद्+धृतम् में 'धृतम्' और अभि के बीच अव्यवधान नहीं है । 'उद्' का व्यवधान आगया है।

**यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणमपि-शब्दात्तदसमभिव्याहृतस्य केवलस्यापीति तदर्थः । अन्यथाऽनया कृद्ग्रहणविषये परत्वात् प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपिग्रहणम् ॥**

---

यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणमपि शब्दात्तदसमभिव्याहृतस्य केवलस्यापीति तदर्थः ।

यद्यपि पूर्वोक्तार्थो नापिशब्दस्य मर्यादया लभ्यते ब्राह्मणमानय शूद्रमप्यानयेत्युक्तौ ब्राह्मणसत्त्वेऽपि शूद्रस्यानयनं प्रतीयते न तु तदसत्त्व एव । तथाच तदसमभिव्याहार इत्यसङ्गतं, तथाप्यग्रिमभाष्यात्तदसमभिव्याहार इत्यंशस्य लाभेनादोषः । अन्यथा परिभाषायामपिशब्दाभावेऽनया कृद्ग्रहणे परत्वात् (उत्कृष्टत्वादपवादत्वात् प्रत्ययग्रहणपरिभाषायाः सर्वत्र बाधः स्याद् । तथाच नखर्निर्भिन्न इत्यत्रैव समासः स्यात् न तु नखभिन्न इत्यादौ ।

---

इसलिए अनन्तर ग्रहण करने पर दोष नहीं हुआ । यद्यपि इस परिभाषा के बल से गति के समभिव्याहार में (साथ बोलने) पर कर्मवाच्य में किये गये क्तान्त पद से 'उद्धृत' का ग्रहण सम्भव है, फिर तो अभि में धातु से अव्यहितपूर्वत्व अबाधित ही है ऐसी स्थिति में अभि में अतिव्याप्ति की प्रसक्ति जैसे पहले थी; वैसे परिभाषा ज्ञापित करने पर भी है ही, यह प्रश्न उठता है; तथापि अनन्तर ग्रहण में पुनः सामर्थ्य का आश्रयण करके दूसरा ज्ञापन भी माना जायगा । वह ज्ञापन होगा कि गति के समभिव्याहार होते हुए भी क्तान्त तदादि का ही ग्रहण होगा । इसलिए धृत ही क्तान्त तदादि माना जायगा "उद्धृतम्" नहीं ।

परिभाषाज्ञापन के बिना भी "अभ्युद्धृतम्" में अभि के साथ समास करने पर अव्यवहित उद् को पूर्वपदत्व के अभाव में अप्राप्त स्वर भी अनन्तर ग्रहण के कारण हो जाता है । इस तरह अनन्तर ग्रहण को चरितार्थ बनाने की भूल नहीं करनी चाहिए; क्योंकि "कारकादृत्त" ६.२.१४८ इस सूत्र में 'कारकात्' यह योग विभाग करके उसमें गति ग्रहण की अनुवृत्ति करके कारक ही से पर गतिपूर्वपद क्तान्त को अन्तोदात्त होता है, ऐसा नियम करके 'थाथादि' ६.२.१४४ स्वर की (अन्त उदात्त की) अप्राप्ति होने पर कृत् स्वर से उद् को उदात्तत्व की सिद्धि हो जायगी । इसलिए 'अनन्तर' ग्रहण का एकमात्र प्रयोजन ठहरता है व्यवहित की निवृत्ति । व्यवहित की निवृत्ति रूप फल की सिद्धि के लिए परिभाषा का ज्ञापन आवश्यक है । इस तरह अनन्तर ग्रहण परिभाषा का ज्ञापक है

परिभाषा में 'अपि' शब्द का प्रयोग किया है । उसका फल यह हुआ कि जहाँ गति कारक का समभिव्याहार है; वहाँ केवल कृदन्त का भी ग्रहण होगा । यदि 'अपि' न करते तो कृत् के ग्रहण में सर्वत्र प्रत्यय ग्रहण परिभाषा (प० २४) का इससे बाध हो जाता और इसका अर्थ होता कि कृत् के ग्रहण में गति और कारक पूर्वक

**अत एव साङ्कूटिनमिति 'गतिकारकोपपदानामि'ति कृद्ग्रहण इति च परि-**

परिभाषायाः फलमाह—अतएवेत्यादिना । गतिसमभिव्याहारे केवलस्याग्रहणादेव सम्पूर्वकात् कूट परितापे, कूट आप्रदाने वा इत्यस्माद्धातोः 'अभिविधौ भाव इनुण्' ३.३.४४ इति इनुण्प्रत्ययः ततश्च 'अणिणुनः' ५.४.१५ इति स्वार्थेऽण् प्रत्ययो विधीयते स चाण् प्रत्ययः" गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इतिपरिभाषया समित्यस्यकूटिन् इत्यनेन समासे ततश्च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया संकूटिन् इत्यस्माद् विशिष्टादेव विधीयते, तेनाद्यचो वृद्धिकाले समुघटकाकारस्य वृद्धिः । इत्थं साङ्कूटिनमित्यस्य सिद्धिरस्याः

का ग्रहण हो। इस तरह कृत् के ग्रहण में कहीं भी केवल कृदन्त का ग्रहण नहीं होता । ऐसा होने पर "नखनिर्भिन्नः" में ही "कर्तृकरणे कृता बहुलम्" २.१.३२ से समास होता "नखभिन्नः" में नहीं होता। 'अपि' ग्रहण करने पर गतिकारक पूर्वक का भी ग्रहण होता और केवल का भी । यद्यपि 'अपि' शब्द के द्वारा गति और कारक के समभिव्याहार में (साथ किये गये उच्चारण में) तद्विशिष्ट का और उनके असमभिव्याहार में केवल का ग्रहण हो, इस नागेश प्रतिपादित अर्थ में "तदसमभिव्याहृत" यह अंश 'अपि' शब्द की मर्यादा से लभ्य अर्थ नहीं है; क्योंकि जब कोई कहता है "ब्राह्मणमानय शूद्रमपि आनय" अर्थात् ब्राह्मण को लाओ और शूद्र को भी, तो ब्राह्मण के रहने पर भी शूद्र को लाया जाता है। ऐसा नहीं कि ब्राह्मण के नहीं रहने पर ही शूद्र को लाया जाता है। इस तरह "तदसमभिव्याहारे" यह अर्थ 'अपि' शब्द की मर्यादा से लभ्य अर्थ नहीं है; तथापि "पुंयोगात्" ४.१.४८ इस सूत्र पर लिखित भाष्य के अनुसार 'तदसमभिव्याहार' इस अंश का लाभ हो जाता है; अन्यथा यदि परिभाषा में 'अपि' शब्द का प्रयोग न किया जाता, तो कृत् के ग्रहण में परत्वात् अपवादत्वात् प्रत्यय ग्रहण—परिभाषा का इस परिभाषा से सर्वत्र बाध ही हो जाता तो 'कृत्तद्धितसमासाश्च' १.२.४६ कर्तृकरणे कृता बहुलम् २.१.३२ आदि सूत्रों में केवल कृदन्त को तत्तत्सूत्रविहित कार्य नहीं होता। नागेश ने जो 'परत्वात्' लिखा है उसका अर्थ 'अपवादत्वात्' करना चाहिए परत्वात् का अर्थ उत्कृष्टत्वात् तो हो ही सकता है। और 'अपवाद' सब से उत्कृष्ट याने अधिक बलवान् होने के कारण 'पर' माना ही जा सकता है। "परत्वात्" का अर्थ 'पर' करना तो ठीक नहीं होगा; क्योंकि पर तभी प्रबल होता है; जब कि तुल्य बल और विरोध हो यहाँ तो कृद्ग्रहण कहीं भी चरितार्थ नहीं होने से अत्यन्त बलवान् है और 'प्रत्ययग्रहण' परिभाषा उसकी अपेक्षा अत्यन्त दुर्बल फिर तुल्य बल विरोध कैसे माना जाय ?

गतिसंज्ञक शब्द के समभिव्याहार (पूर्वप्रयोग) रहने पर केवल का ग्रहण नहीं होने के कारण ही 'साङ्कूटिनम्' इस प्रयोग की सिद्धि हुई। यहाँ संपूर्वक कूट-धातु से इनुण् प्रत्यय करने पर 'गतिकारकोपपदानाम्' (परि० ७६) और 'प्रत्यय ग्रहण (परि० २४) परिभाषा के बल से कृदन्त के साथ सुबुत्पत्ति से पहले ही समास

**भाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति न तु सङ्कौटिनमितीति 'पुंयोगादि'तिसूत्रे भाष्योक्तं सङ्गच्छते। अन्यथा तत्र केवलं कूटिन्नित्येतस्यापीनुणन्तत्वात्ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात् ॥**

**स्पष्टं चेदं सर्वं 'समासेऽनञ्पूर्वे' इति सूत्रे भाष्यकैयटयोः ।**

---

परिभाषायाः फलमितिभावः। इदमस्याः फलमितिपुंयोगादाख्यायाम् ४.१.४८ इति सूत्रे भाष्ये स्पष्टत उक्तम्—सांकूटिनमित्यस्य सिद्ध्यर्थमुभयोः परिभाषयोरावश्यकता च तत्रैव प्रतिपादिता।

अस्याः परिभाषाया वर्णनं समासेऽनञ्पूर्वो क्त्वो ल्यप् ७.१.३७ इत्यत्र भाष्ये दृश्यते तथाहिः—

स्नात्वाकालकादिषु प्रतिषेधो वक्तव्यः। स्नात्वाकालकः, पीत्वास्थिरकः भुक्त्वासुहितकः ॥ तदन्तनिर्देशात् सिद्धम् ॥५॥ तदन्तनिर्देशात् सिद्धमेतत्। कथं क्त्वान्तस्य ल्यपा भवितव्यम् न चैतत् क्त्वान्तम् ॥ समासनिपातनाद्वा ॥६॥

अथवावश्यमत्र सामासार्थनिपातनं कर्त्तव्यम्। तेनैव यत्नेन ल्यबपि न भविष्यति ॥ अनञो वा परस्य ॥७॥

अथवानञः परस्य ल्पपा भवितव्यम्। नचात्रानञं पश्यामः। ननु च धातुरेवाऽनञ्। न धातोः परस्य भवितव्यम्। किं कारणम्। **नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः।** नञ्युक्तमिवयुक्तं चान्यस्मिन् तत्सदृशे कार्यं विज्ञास्यते। कुत एतत्। तथाह्यर्थो गम्यते। तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति। नासौ लोष्टमानीय कृती भवति। एवमिहाप्यनञिति नञ्प्रतिषेधादन्यस्मादनञो नञ्सदृशात् कार्यं विज्ञास्यते। किञ्चान्यदञ् नञ्सदृशम्। पदमित्याह ।

अथवा प्रत्ययग्रहणे यस्मात्स तदादे र्ग्रहणं भवतीत्येवं धातुरपि क्त्वाग्रहणेन ग्राहिष्यते। ननु चेयमपि परिभाषास्ति—**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति सापीहोपतिष्ठते।** तत्र को दोषः। इह न स्यात्। प्रकृत्य, प्रहृत्य। क्व तर्हि स्यात् परमकृत्वा उत्तमकृत्वा। न वा अत्रेष्यते। अनिष्टं च प्राप्नोति। इष्टं च न सिद्ध्यति ॥ गतिकारक पूर्वस्यैवेष्यते। कुतो न खल्वेतद् द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवति कृद्ग्रहणे गतिकारकपूर्वस्येति चेयमिह परिभाषा भवति प्रत्ययग्रहणे यस्मात्स तदादे ग्रहणं भवतीतीयं

---

हो जाने पर विशिष्ट अर्थात् 'सङ्कुटिन्' शब्द से ही अण् प्रत्यय होने से आदि अच् को वृद्धि करते समय 'सम्' घटक अकार हो ही वृद्धि हुई। अन्यथा वहाँ केवल 'कूटिन्' शब्द को भी इनुणन्त होने के कारण उसी से अण् होकर 'कू' घटक अच् को वृद्धि होने पर "सङ्कौटिनम्" यह पाक्षिक दोष हो ही जाता। यह "पुंयोगात्" ४.१.४८ सूत्र के भाष्य तथा समासेऽनञ् पूर्वे" ७.१.४७ इस सूत्र के भाष्य और कैयट में स्पष्ट है।

'गतिरनन्तरः इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधाना-त्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् ॥ इयं च कृद्विशेषग्रहणे कृत्सा-मान्यग्रहणे च न तु कृदकृद्ग्रहण इत्यनुपसर्जनादितिसूत्रे भाष्ये स्पष्टम् ॥२९॥

---

परिभाषा न भवति कृद्ग्रहणे गतिकारकपूर्वस्यापीति । आचार्यप्रवृत्तिर्ज्ञापयतीयमिह परिभाषा भवति 'प्रत्ययग्रहण' इतीयं न भवति 'कृद्ग्रहण' इति यदयमनञ् इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । कथं हि नञ् न गतिर्नच कारकम् । तत्र कः प्रसङ्गो यन्नञ्पूर्वस्य स्यात् । पश्यति त्वाचार्य इयमिह परिभाषा भवति प्रत्ययग्रहण इति इयं न भवति कृद्ग्रहण इति । ततोऽनञिति प्रतिषेधं शास्ति ॥

किं नञः प्रतिषेधेन न गतिर्नच कारकम् ।
यावता नञ्पूर्वे तु ल्यब्भावो न भविष्यति ॥१॥
प्रतिषेधात्तु जानीमस्तत्पूर्वं नेह गृह्यते ।
प्रत्ययग्रहणे यावत्तावद् भवितुमर्हति ॥२॥

---

गतिसमभिहार में केवल कृदन्त का ग्रहण न मानने पर 'उद्धृतम्' और 'पुरोहितम्' इत्यादि प्रयोगों में "गतिरनन्तरः" ६.२.४९ सूत्र की प्रवृत्ति नहीं होगी; ऐसा नहीं मानना चाहिए; क्योंकि सूत्रारम्भसामर्थ्यात् "गतिरनन्तरः" ६.२.४९ ६.२.४९ सूत्र में केवल कृदन्त का क्तान्त रूप में ग्रहण होगा । क्योंकि वह सूत्र पूर्वपद गति को क्तान्त उत्तर पद के परे रहते कार्य का (प्रकृति स्वर का) विधान करता है इसलिए केवल का क्तान्त रूप में ग्रहण होना आवश्यक है । तात्पर्य यह है कि 'गतिरनन्तरः' ६.२.४९ सूत्र में सूत्रारम्भसामर्थ्यात् केवल का ग्रहण मानने पर भी और जगह पुंयोगात् सूत्र के भाष्य के अनुसार गतिसमभिव्याहार में केवल का ग्रहण नहीं होगा । 'अनुपसर्जनात्' सूत्र के भाष्य से यह भी सिद्ध होता है कि यह परि-भाषा 'क्षेपे' २.१.४७ इत्यादि में जहाँ कृद् विशेष का ग्रहण है, वहां और 'कर्तृकरणे कृता' २.१.३२ इत्यादि में जहाँ कृत् सामान्य का ग्रहण है, वहाँ इसकी प्रवृत्ति होगी; किन्तु जो प्रत्यय कृत् और अकृत् दोनों है उस के ग्रहण में प्रवृत्ति नहीं होगी । इसी लिए 'कौम्भकारेयः' प्रयोग की सिद्धि को भाष्यकार ने "टिड्ढाणञ्" सूत्र में द्वितीय तदन्त विधिका प्रयोजन बताया । अण् प्रत्यय जब 'कर्मण्यण्' से करते हैं, तो वह कृत् है और जब 'तस्यापत्यम्' इत्यादि सूत्रों से कहते हैं तो वह तद्धित होने के कारण अकृत् है । इसलिए अण् जो कि कृत् और अकृत् दोनों हैं, उसके ग्रहण में यह परिभाषा नहीं लगती है । यदि ऐसे स्थलों में भी लगती, तो इस परिभाषा के बल से 'कुम्भकार' का ग्रहण अणन्त तदादि के रूप में हो ही जाता, फिर इसकी सिद्धि के लिए भाष्यकार ने जो 'टिड्ढ' ४.१.१५ इस सूत्र का अनुपसर्जनं यट्टिदादि तदन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात्" इस तरह जो दो तदन्त विधि करके अर्थ किया, वह निरर्थक हो जाता । ॥इति शिवम्॥ २९

पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥३०॥

पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः 'येन विधि'रित्यस्यायं

अत्र कैयटः प्रत्ययग्रहणपरिभाषाया अवकाश उपगोरपत्यमौपगव इत्यत्र। कृद्ग्रहणपरिभाषाया अवकाशो व्यावलेखीत्यादौ।। अत्र हि णचस्त्रियामजिति गतिपूर्वस्य णजन्तत्वादञि सति वृद्धिस्वरौ भवतः। अत्र हि प्रत्ययग्रहणपरिभाषायाः स्त्रीप्रत्यये चानुपसर्जनेनेति प्रतिषेधादुपस्थानाभावः। इत्थं सावकाशयोः परिभाषयो भिन्नफलयोर्विरोधात् पर्यायोऽप्रतिपत्तिर्वा प्राप्नोति—तदेवाह नागेशः पाक्षिकदोषो दुर्वार इति।

नचैवं पुरोहितमित्यत्र 'गतिरनन्तर' ६.२.४९ इत्यनेन पुरः शब्दस्य प्रकृतिस्वरो न स्यात्, समुदायस्य क्तान्ततदादित्वादिति वाच्यम् सूत्रारम्भसामर्थ्यात्, गतिसमवधानेऽपि केवलस्य क्तान्ततदादित्वेन ग्रहणात्। अन्यथा गतिरनन्तर इति गतेः पूर्वपदस्य क्तान्त उत्तरपदे प्रकृतिस्वरकार्यं विधीयते, तदचरितार्थं स्यादतः गतिसमवधानेऽपि केवलस्य क्तान्ततदादित्वेन ग्रहणं स्वीक्रियते। परिभाषेयं कृत्सामान्यग्रहणे "कर्तृकरणे कृता बहुलम् २.१.३२ इत्यादौ, कृद्विशेषग्रहणे क्षेपे २.१.४७ इत्यादौ च प्रवर्तते नतु कृदकृद्ग्रहणे। अतएव टिड्ढ ४.१.१५ इति सूत्रभाष्ये 'कौम्भकारेय' इत्यस्य सिद्धिः द्वितीयतदन्तग्रहणस्य फलमुक्तम्। अन्यथा कृदकृद्ग्रहणेऽस्याः प्रवृत्तावनयैव विशिष्टस्य ग्रहणात् कौम्भकारेय इति सिद्धौ तस्य द्वितीयतदन्तविधेः फलत्वेनोपन्यासोऽसंगतः स्यात्। एतद् 'अनुपसर्जनात्' ४.१.१४ इति सूत्रे भाष्ये स्पष्टम्। तथाहिः—इदं तर्हि प्रयोजनम्। प्रधानेन तदन्तविधिर्यथा स्यात्। कुम्भकारी, नगरकारी। अत्रहि प्रत्ययग्रहणे यस्मात्स तदादेग्रहणं भवतीत्यवयवादुत्पत्तिः प्राप्नोति। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति संघातादुत्पत्तिर्भविष्यति। कृद्ग्रहण इत्युच्यते नचैतत्कृद्ग्रहणम्। कृदकृद्ग्रहणमेतत्। कृदप्ययमण् तद्धितोऽपि।

॥इति शिवम्॥ २९

पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥३०॥

ननु 'जराया जरसन्यतरस्याम्' ७.२.१०१ इत्यत्र 'येन विधिस्तदन्तस्य' १.१.७२ इति प्रातिपदिकविशेष्यकतदन्तविधौ जराशब्दान्तस्य परमजराशब्दादेरेव जरसादेशः स्यात्, जरसावित्यादौ केवलस्य जराशब्दस्य न स्यात्ः अतः परिभाषा स्वीक्रियते—पदाङ्गाधिकारे तस्य च तदन्तस्य चेति। पदाङ्गाधिकार इत्यत्र विषय-

पदाङ्गाधिकारे तस्य च तदन्तस्य—३०

सूत्रों में अनुवृत्त "पद म्" और 'अङ्गम्' ये सब जगह विशेष्य रहते हैं और जराया जरसन्यतरस्याम्' ७.२.१०१ इत्यादि सूत्रोक्त 'जरादि' पद विशेषण। येन विधिस्तदन्तस्य' १.१.७२ इस सूत्र से विशेषण से तदन्त विधि का विधान है। इस लिए पदाधिकारी और अङ्गाधिकारी कार्य तदन्त को हो, यह स्वाभाविक ही है।

**प्रपञ्चः। तेनेष्टकचितं पक्वेकचितमित्यादावि'ष्टकेषीकामालानां चित' इति ह्रस्वो महान्परममहान्परमातिमहानित्यादौ 'सान्तमहत' इति दीर्घश्च सिद्धः। अतएव तदुत्तरपदस्येति पाठोऽयुक्त इति भाष्ये स्पष्टम्॥**

---

सप्तमी। येन विधिरित्यतो विधिरिति सम्बध्यते। अधिकारशब्दः द्वन्द्वान्तशब्दतया प्रत्येकमभिसबद्धयते। तेन पदाधिकारविषयकम् अङ्गाधिकारविषयकं च कार्यम् तस्य=सूत्रे पठितशब्दस्य तदन्तस्य सूत्रपठितशब्दान्तस्य भवतीति परिभाषार्थः। अतोऽङ्गाधिकारीयकार्यतया जरसादेशः केवलस्य जराशब्दस्य जायते। तेन जरसावित्यादि सिद्धयति। जराशब्दान्तस्य च भवति। अतः परमजरसावित्यादि सिद्धम्। पदाधिकारीयं कार्यं यथा तस्य च तदन्तस्य च भवति तथा मूले एव प्रतिपादितम्—तेनेष्टकचितं पक्वेष्टकचितमित्यादिना। इष्टकाभिश्चितम् इत्यत्र समासे इष्टकचितम् इत्यत्र केवलस्य इष्टकाशब्दस्य, पक्वाः इष्टकाः पक्वेष्टकास्ताभिश्चितमित्यत्र तदन्तस्य च "इष्टकेषीकामालानां चिततूलभारिषु" ६.३.६५ इति ह्रस्वः पदाधिकारीयविधिः सम्पद्यते। महान् इत्यत्र केवलस्य, परममहान् परमातिमहान् इत्यादौ

---

इस तरह यह परिभाषा "येन विधिस्तदन्तस्य" इस का प्रपञ्च, फलितार्थ कथन या विस्तार दिखाई पड़ती है। परिभाषा मानने से इष्टकचितम् यहाँ इष्टका+चितम्' ऐसी अवस्था में "इष्टकेषीकामालानां चिततूलभारिषु" ६.३.६५ से जैसे ह्रस्व हुआ, उसी तरह पक्वेष्टकचितम् में तदन्त मानभर ह्रस्वता हुई। महान् में "तस्य च" के कारण जैसे 'सान्तमहतः संयोगस्य' ६.४.७० से दीर्घ हुआ, उसी तरह परममहान् 'परमातिमहान्' में भी दीर्घ हुआ तदन्त मानकर अर्थात् महत् शब्दान्त मान कर।

"येन विधिः" १.१.७२ सूत्र के प्रदीप में कैयट ने कहा कि परिभाषा में पदाधिकार का अर्थ है उत्तरपदाधिकार—"पदशब्देनोत्तरपदं गृह्यते, पदैकदेशलोपात्। उत्तरपदेन सामर्थ्यादाक्षिप्तं पूर्वपदमिष्टकादिभिर्विशेष्यते। इस तरह "इष्टकेषीकामालानाम्" सूत्र का अर्थ होगा कि इष्टकान्त पूर्वपद को चित रूप उत्तर पद के परे रहते ह्रस्व हो। इसलिए 'पक्वेष्टका+चितम्" यहाँ भी ह्रस्व हुआ। "पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य" इस वार्तिक में 'तदुत्तरपदस्य' यह पाठ ठीक नहीं हैं, क्योंकि पक्वेष्टका+चितम् पक्वेष्टकचितम् में इष्टका, चित के साथ सम्पन्न समास में उत्तरपद नहीं है।

इसीलिए "तदुत्तरपदस्य" इस पाठ को भाष्य में अयुक्त बनाया गया। इस परिभाषा के बल से सूत्रोपात्तशब्द को और तदन्त को कार्य हो ही जायगा 'तदुत्तरपदस्य' यह पाठ मानना व्यर्थ ही है। इस परिभाषा में आये हुए 'पद' पद से उत्तरपदाधिकार और केवल पदाधिकार दोनों लिये जाते हैं, तभी तो उत्तरपदाधिकार में भी इस की प्रवृत्ति बेखटके हो ही जाती है।

पादस्य पदाज्याती'त्यत्र न तदन्तग्रहणं लक्ष्यानुरोधादिति सर्वं 'येन विधि'

तदन्तस्यच "सान्तमहतः"—६.४.१० इति अङ्गाधिकारीयं कार्यं सिद्धचति। 'पदम्' अङ्गञ्चाधिकृतं तत्तत्सूत्रे विशेष्यं कृत्वा विशेषणेन तदन्तविधिः, लक्ष्यानुरोधात्। तेन जराशब्दान्तस्याङ्गस्य जरसादेशः सिद्धचति। इत्थं तदन्तांशः सिद्धः विशेष्य-विशेषणभावस्य कामचारत्वात् जरसावित्यादि सिद्धिकाले अङ्गं विशेषणं जरा-शब्दश्च विशेष्यः तेन, जराशब्दात्मकस्याङ्गस्य जरसादेशे न कापि बाधा।

अत्र कश्चित् 'पदाङ्गधिकारे तस्य तदुत्तरपदस्ये'ति परिभाषास्वरूपं मन्यते। तदन्तस्येति पाठे बहुच्पूर्वकेष्वपि बहुजरेत्यादौ जरसादेशः प्रसज्येतेति च वदति तन्न, परमातिमहान् इत्यादौ महच्छब्दस्य कर्मधारयसमासे उत्तरपद-त्वाभावाद्दीर्घानापत्तेः। परमश्चासावतिमहान् इत्यादौ अतिमहान् इति महच्छब्दान्त-मुत्तरपदं न तु महच्छब्द उत्तरपदम्। अतएव भाष्ये तदुत्तरपदस्येति पाठोऽयुक्त इत्युक्तम्। बहुच्पूर्वकेषु त्वनभिधानात्पदाङ्गाधिकारकार्यं वारणीयम्। तदुत्तरपद-स्येति पाठस्यायुक्ततां प्रतिपादयन्नत्र भाष्यकार आह—"अलैवानर्थकेन (तदन्तविधिः) नान्येनानर्थकेनेति वक्तव्यम्॥ किम् प्रयोजनम्? हन् ग्रहणे प्लीहन्ग्रहणं माभूत्। (तेन प्लीहानाविति दीर्घो भवति। अन्यथा इनहन्...६.४.१२ 'सौ च' ६.४.१३ इति नियमेन दीर्घो न स्याद् यथा वृत्रहणावित्यत्र)। उद्ग्रहणे गर्मुद् ग्रहणं मा भूत्। (तेन गर्मुत्स्थास्यतीत्यत्र उदः स्था ८.४.६१ इति पूर्वसवर्णाभावः) स्त्रीग्रहणे शस्त्री-ग्रहणं (माभूत्) (तेन शस्त्र्यामितीयङ् स्त्रियाः ६.४.७९ इति न भवति)...किमर्थ-मिदमुच्यते न 'पदाङ्गाधिकारे तस्य तदुत्तरपदस्य च' इत्येव सिद्धम्। न चेदं तत् नापि तदुत्तरपदम्। तन्न वक्तव्यं भवति। किं पुनरत्र ज्यायः? तदन्तविधिरेव ज्यायान् इदमपि सिद्धं भवति परमातिमहान्। एतद्धि नैव तत् नापि तदुत्तरपदम्।

एतेन स्पष्टमेव कथितं यत् परमातिमहान् इत्यत्र सान्तमहतः संयोगस्य ६.४.१० इति दीर्घसिद्धयर्थं तदुत्तरपदस्येति पाठो न स्वीकर्तव्यः। अत्र पदशब्देन केवल-पदाधिकारः उत्तरपदाधिकारश्चोभयोऽपि गृह्यते। तेन नद्धम् इत्यत्र केवलस्य नहेः उपानदित्यादौ तदन्तस्य च पदाधिकारपठितः नहो धः ८.३.३४ इति सिद्धचति। इष्टकेषीकामालानाम् इति तु उत्तरपदाधिकारस्योदाहरणम्। लक्ष्यानुरोधात् पादस्य पदाज्याति...६.३.५२ इत्यत्र नेयं प्रवर्तते। अतएव न तदन्तग्रहणम्। तेन पदाति-रित्यत्रेव सुपादातिरित्यत्र न पदादेशः।

येन विधिः १.१.७२ इत्यत्र भाष्ये सर्वमिदं स्पष्टम्। तत्र ह्युक्तं विशेषण-

---

पादाभ्याम् अजति, अतति, इस विग्रह में पदाजिः और पदातिः में पादस्य पदाज्याति ६.३.५२ इस सूत्र से 'पाद' को जैसे पद आदेश हो जाता है; उसी तरह स्थूल पादाभ्याम् अतति, इस विग्रह में स्थूलपदातिः नहीं बनता, क्योंकि 'पादस्य पदाज्यातिगोपहतेषु' ६.३.५२ इस सूत्र में तदन्त का ग्रहण नहीं होता है। लक्ष्य सिद्धि ही इस व्यवस्था में कारण है। व्याकरण 'शब्दान्वाख्यान' है। वह शिष्ट

रित्यत्र भाष्ये स्पष्टम् ।।३०।।

---

विशेष्ययोर्यथेष्टत्वात् । तेन पदाङ्गयोर्विशेष्यत्वे तदन्तविधौ तदन्तस्येति सिद्धम् । विशेषणत्वे तस्येति ।...पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति तत्र पठितम् वार्तिकरूपेण । पदाधिकारे इष्टकेषीकामालानां चिततूलभारिषु इति प्रयोजनं अङ्गाधिकारे च महदप्स्वसृनप्तॄणां दीर्घविधौ इत्यादिना प्रयोजनं प्रतिपादितम् ।...

यदि तर्हि पदाधिकारे पादस्य तदन्तविधि र्भवति । पादस्य पदाज्यातिगोपहतेषु । यथेह भवति—पादेनोपहतं पदोपहतम् । एवमत्रापि स्यात् दिग्धपदोपहतम् इति । एवं तर्ह्यङ्गाधिकार एव प्रयोजनमिति भाष्येणास्याः पादस्य ६.३.५२ इत्यत्राप्रवृत्तिः सूचितेति दिक् ।।

।।इति शिवम्।। ३०

---

जन प्रयुक्त शब्दों की सिद्धि के लिए विविध कल्पनाएं करता है । यदि किसी कल्पना से बहुत से इष्टशब्दों का अन्वाख्यान होता है; तो वहाँ प्रवृत्त होनेवाली कल्पना को ऐसे स्थलों में भी प्रवृत्त कराना कोई आवश्यक नहीं; जहाँ कि उस कल्पना से इष्ट—सिद्धि न होकर अनिष्ट होता हो । यह सब कुछ "येन विधिः—सूत्र के भाष्य में स्पष्ट है । भाष्य का अविकल आवश्यक रूप दुर्गा व्याख्या में उद्धृत है । उसका तात्पर्य है कि विशेषण और विशेष्य भाव में परिवर्तन इष्ट सिद्धि को ख्याल में रखकर किया जाता है । इसलिए पद और अङ्ग को विशेष्य मानने पर तदन्त विधि हो जाने से तदन्त को कार्य सिद्ध हो जायगा । इस तरह पदाधिकार और अङ्गाधिकार में पद और अङ्ग की विशेष्यता की स्वीकृति से तदन्त विधि हो जाने पर परममहान् निर्जरसौ इत्यादि की सिद्धि हो जायगी । जब केवल को कार्य करना होगा तो पद और अंग को विशेषण मान लेंगे, जिससे केवल महत् और जरा शब्द को दीर्घ तथा जरस् आदेश हो जायगा ।

पदाधिकार में "इष्टकेषीकामालानां चिततूलभारिषु" इस सूत्र के उदाहरणों—इष्टकचितम्, पक्वेष्टकचितम् इत्यादि—में ह्रस्वतादि की सिद्धि को और अङ्गाधिकार में महत्, स्वसृ, नप्तृ इत्यादि शब्दों से बने उदाहरणों—महान्, परममहान्, स्वसा, परमस्वसा में 'सान्तमहतः" ६.४.१० "अप्तृन्" ६.४.११ सूत्रों से दीर्घ की सिद्धि को प्रयोजन बताया गया । परिभाषा मानने पर भाष्यकार ने पादेनोपहतं "पादोपहतम्" की तरह "दिग्धपादोपहतम्" में भी पादस्य पदाज्याति ६.३.५२ सूत्र से पदादेश होने के दोष का निवारण करते हुए कहा कि अङ्गाधिकार में ही इसका प्रयोजन है । इससे सूचित होता है कि भाष्यकार ने पादस्य ६.३.५२ सूत्र के विषय में इस परिभाषा की प्रवृत्ति न होना ही स्वीकार किया ।

।।इति शिवम्।। ३०

नन्वेवमस्यापत्यमिरित्यादावदन्तप्रातिपदिकाभावादिञ् न स्यादत आह—

**व्यपदेशिवदेकस्मिन् ॥३१॥**

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी । यस्तु

---

**व्यपदेशिवदेकस्मिन् ॥३१॥**

ननु विशेषणेन तदन्तविधौ अत इञ् ४.१.९५ इत्यस्य अदन्तात् प्रातिपदिकादिञ् इत्यर्थेन वासुदेववाचकादशब्दात् अस्यापत्यमिरित्यर्थे इञ् न स्यात् एवम् आभ्यामित्यादौ अ भ्यामित्यवस्थायां 'सुपि च' ७.३.१०२ इति दीर्घोऽप्यदन्तप्रातिपदिकत्वाभावान्न स्यादतः परिभाषां स्वीकरोति—व्यपदेशिवदेकस्मिन् (३१) निमित्तसत्त्वे विशिष्टोऽपदेशः मुख्यव्यवहारः यस्यास्ति स व्यपदेशी; तेन तुल्यं व्यपदेशिवत् । एकस्मिन्नित्यस्यासहाये इत्यर्थः । असहाये मुख्यवद् व्यवहारो भवतीति परिभाषार्थः । तेन दशरथस्यापत्यम् दाशरथिः इत्यादौ दशरथ् इतिनिमित्तसत्त्वे यथादन्तत्वव्यवहारः भवति तथा अस्यापत्यमिरित्यादौ केवले अकारेऽपि अदन्तत्वव्यवहारो भवति । पूर्वसत्त्वे यस्मात् परो नास्ति तस्यैवान्तपदार्थत्वात् । दशरथशब्दस्यादन्तत्वसाधकं निमित्तम् दशरथ् इत्यस्ति, एवं रामशब्दस्यादन्तत्वसाधकं निमित्तं राम् इत्यस्ति । अतस्तत्रादन्तत्वस्य मुख्यव्यवहारो भवति, केवले अशब्दे अकारात्पूर्वं कस्यापि वर्णस्याभावाददन्तत्वसाधकनिमित्ताभावादसहायत्वं वर्तते । तथाप्यनया परिभाषया केवलेऽकारे दशरथाद्यदन्तशब्दवददन्तत्वं सम्पाद्यते । तदेतत्सर्वमाह मूले **निमित्तसद्भा...न क्षतिः** ।

---

**व्यपदेशिवदेकस्मिन् ॥३१॥**

"अस्यापत्यम्" इस विग्रह में वासुदेवार्थक 'अ' शब्द से "अत इञ्" ६.४.११ से 'इञ्' प्रत्यय हुआ करता है । इस तरह 'अ+इ' ऐसी स्थिति में भसंज्ञा होने से 'यस्येति च' से लोप होने पर 'इः' बनता है । परन्तु 'इञ्' तो अदन्त प्रातिपदिक से होता है । अतः जिसके अन्त में ह्रस्व अकार हो, उस प्रतिपदिक को अदन्त' कहते हैं 'दशरथस्यापत्यम्' यहाँ 'दशरथ' शब्द तो अदन्त हो सकता है; क्योंकि वहाँ दशरथ" इस समुदाय के अन्त में 'अ' है । इसलिए वहाँ 'अदन्त' माना जा सकता है । 'अ' में तो केवल 'अ' ही है । इसलिए "अ' जिसके अन्त में हो वह अदन्त होता है "अदन्त का यह लक्षण वहाँ नहीं घटता; क्योंकि वहाँ केवल 'अ' है, कोई ऐसा समुदाय नहीं है, जिसके अन्त में अ होने से हम उसे अदन्त कहें । तात्पर्य यह है कि अजादि और अदन्त ये ऐसे शब्द हैं, जिनमें बहुत से वर्णों का रहना आवश्यक प्रतीत होता हैं । इस तरह 'इः' में 'इञ्' प्रत्यय कैसे हो, इसके लिए परिभाषा मानते हैं "**व्यपदेशिवदेकस्मिन्**" ।

एक में भी व्यपदेशिवत् याने अङ्गीवत् कार्य होता है । व्यपदेशी का अर्थ है ससहाय । निमित्त अर्थात् कारण या हेतु के रहने से जहाँ मुख्य व्यवहार हुआ करता है; उसे व्यपदेशी कहते हैं । व्यपदेशी शब्द, वि+अप उपसर्ग पूर्वक

**व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः स तेन तुल्यं वर्त्तते। कार्यं प्रतीत्येकस्मि-सहायेऽपि तत्कार्यं कर्त्तव्यमित्यर्थः। तेनाकारस्याप्यदन्तत्वान्न क्षतिः। एकस्मिन्नि-त्युक्तेः सभासन्नयने आकारस्य नादित्वं दरिद्राधाताविकारस्य नान्त्यत्वम्। अन्यथा सभासन्नयने भव इत्यर्थे 'वृद्धाच्छः' दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात्। अत एव हरिष्वित्यादौ सोः पदत्वं न। लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यव-हारोऽयं मे ज्येष्ठः कनिष्ठो मध्यम इति। किन्त्वेकपुत्रसत्त्वे एव।**

---

परिभाषोक्तस्यैकस्मिन्नित्यस्य फलमाह— **एकस्मिन्नित्युक्ते** इत्यादि। एकस्मि-न्नित्युच्यते तस्यासहाये केवले इत्यर्थः। तेन सभासन्नयने भव इत्यत्र आशब्दस्य सस-हायस्य केवलत्वरहितस्यानया परिभाषया आदित्वं नापद्यते। अतएव तत्र "वृद्धि-र्यस्याचामादिस्तद्वृद्धम्" १.१.७३ इति वृद्धसंज्ञाद्वारकः वृद्धाच्छः ४.२.११४ इति छप्रत्ययो न। सत्यन्यस्मिन् यस्मात्पूर्वो नास्तीत्यस्यैवादिपदार्थत्वात्। सभासन्नयनशब्दे आ शब्दः ससहायः तत्र आशब्दात् पूर्वं भादिशब्दस्य विद्यमानत्वात्। यदि केवल आ-शब्दः स्यात्तदापरिभाषा प्रवर्तेत। 'दरिद्रा' धातौ ससहायत्वादिकारस्य नानयेवर्णान्त-त्वं सम्पाद्यन्ते। तेन 'एरच्' ३.३५६ इति इवर्णान्ताज्जायमानोऽच् प्रत्ययो नेह जायते सत्यन्यस्मिन् यस्मात्परो नास्ति तस्यैवान्तपदार्थत्वात्। हरिषु इत्यादौ केवलस्य प्रत्ययस्य सोः पदत्वमतएव अर्थात् ससहाये व्यपदेशिवद्भावसाधकस्यैकस्मिन्नित्यस्योपादाना-देव न भवति। लोकेऽप्यसहाये एकपुत्रसत्त्वे एव तस्मिन्नेकस्मिन् पुत्रे अयमेव मे ज्येष्ठः; अयमेव मे मध्यमः, अयमेव मे कनिष्ठ इति व्यवहारो दृश्यते, नतु बहुपुत्रसत्त्वे क्वाप्येकस्मिन् ज्येष्ठत्वमध्यमत्वकनिष्ठत्वव्यवहारः।।

---

उच्चारणार्थक दिश् धातु से घञ् प्रत्यय करके बने हुए व्यपदेश शब्द से मतुबर्थक इनि प्रत्यय से बना है। बहुत से अचों के रहने पर जागृ धातु में 'जाग्' रूप एकाच् का व्यवहार उचित है, किन्तु 'भू' में तो केवल एक ही अच् है। इसलिए बभूव में धातु के अवयव प्रथम एकाच् को द्वित्व करते समय 'भू' को द्वित्व कैसे होगा यह प्रश्न सहज में ही उठता है उसका उत्तर है कि 'जागृ' में 'ऋ' रूप निमित्त के होने के कारण धात्ववयव प्रथम एकाच् का व्यपदेश हो सकता है 'भू' में नहीं हो सकता। इसलिए यह परिभाषा 'भू' को जागृ की तरह मानने की प्रेरणा देती है। 'एकस्मिन्' का अर्थ है अकेला असहाय। भू में अच् अकेला है—असहाय है, उसे ससहाय की तरह मानना चाहिए। (आदि अन्त आदि) व्यपदेश के कारणों के अभाव में जिस के लिए अजादि और अजन्त का व्यवहार नहीं किया जा सकता, वह असहाय; व्यपदेशी अर्थात् ससहाय के तुल्य होता है कार्य के प्रति। इस तरह परिभाषा का तात्पर्य हुआ कि एक में अर्थात् असहाय में ससहाय—प्रयुक्त कार्य करना चाहिए। इस लिए अस्यापत्यम् 'इः' में 'अ' को अदन्त मानने के कारण 'अत इञ्' से इञ् प्रत्यय हुआ और 'आभ्याम्' में अदन्त मानकर 'सुपि च' ७.३.१०२ से दीर्घ हुआ। इस तरह कहीं कोई दोष नहीं हुआ।

**अनेन चाशास्त्रीयस्याप्यतिदेशः। अत एव इयायेत्यादावेकाच्त्वनिबन्धनद्वित्व-**

---

पूर्वोक्तलौकिकन्यायसिद्धत्वादनयाऽशास्त्रीयस्य धर्मस्याप्यतिदेशो जायते। तेन इयायेत्यादौ इण्धातोर्लिट्तिब्णलादिषु कृतेषु द्वित्वे कर्तव्ये य एकाच्त्वरूपधर्म इकारस्यावश्यकः। स चाशास्त्रीयः। किन्त्वनयालोकन्यायसिद्धयाऽशास्त्रीयस्याप्येकाच्त्वरूपधर्मस्यातिदेशो जायते। तेन तत्र द्वित्वं सिद्ध्यति। अच्त्वन्तु यद्यपि आक्षरसमाम्नायपठितत्वाच्छास्त्रीयम् तथाप्येकोऽच् यस्मिन् इति बहुव्रीहिघटितो धर्मोऽशास्त्रीय एव। अत्र शास्त्रीयत्वं शास्त्रसंकेतितावच्छेदकधर्मवत्त्वम्। अन्तत्वमादित्वं च येन विधिस्तदन्तस्य १.१.७२ 'यस्मिन् विधिस्तदादावल्ग्रहणे' (प० २४) इत्यादिशास्त्रसंकेतितावच्छेदकधर्मः, किन्तु एकोऽच् यस्मिन् इति बहुव्रीहिसमासबोधितमेकाच्त्वमशास्त्रीयमेव।

---

परिभाषा में 'एकस्मिन्' पद का उपादान है। इसलिए जहां अकेलापन नहीं है; वहाँ व्यपदेशिवत् भाव नही होगाः—जैसे "सभासन्नयने भवः" यहां सभासन्नयन शब्द से 'वृद्धाच्छः' से छ प्रत्यय करते समय व्यपदेशिवत् नहीं हुआ; क्योंकि यहाँ 'स' के आदि में होने के कारण ससहाय; होने से 'भा' को 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्" १.१ ७३ सूत्र से वृद्धसंज्ञा करते समय इस परिभाषा के द्वारा वृद्धिसंज्ञक अच् आदिवाला शब्द नहीं सिद्ध किया जा सका। इससिए वृद्धसंज्ञा नहीं हुई और जब वृद्धसंज्ञा नहीं हुई तो 'वृद्धाच्छः' ४.२.११४ से छ प्रत्यय कैसे होता? सभासन्नयन में आकार को आदित्व नहीं सिद्ध किया जा सका और दरिद्रा धातु में इकार को अन्तत्व भी नहीं प्राप्त हुआ। इसलिए दरिद्रा धातु से 'अचो यत् ३.१.९७ से यत् प्रत्यय नहीं हुआ।

'हरिषु' में केवल 'षु' को पद संज्ञा नहीं हुई। क्योंकि 'षु' यहाँ असहाय नहीं हैं। सुबन्तत्व 'हरिषु' में है; उसे पदसंज्ञा होगी। हरिप्रकृति रहित 'षु' को सुबन्त सिद्ध नहीं किया जा सका; क्योंकि यहाँ 'सु' अकेला असहाय नहो हैं।

हम संसार के व्यवहार में भी देखते है कि बहुत पुत्रों के रहने पर किसी एक को ही जेष्ठ, मध्यम और कनिष्ठ नहीं कहा जाता। कोई भी बहुत पुत्रवान् व्यक्ति किसी एक पुत्र को लेकर यह नहीं कहता कि यही मेरा ज्येष्ठ पुत्र है, यही कनिष्ठ पुत्र है, और यही मझिला बेटा है, एक पुत्र को ही ज्येष्ठ, कनिष्ठ और मध्यम वह बताता है; जिसे एक ही पुत्र होता है। एक पुत्र वाला व्यक्ति ही कहा करता है कि मेरा तो यही बड़ा है यही छोटा है और यही मझिला है। इसी तरह एक 'अच्' रहने पर ही उसे आदि और अन्त माना जा सकता है; अनेक अच् वाले शब्दों में किसी एक को आदि, अन्त या मध्य नहीं कहा जा सकता।

इस परिभाषा से अशास्त्रीय धर्म का भी अतिदेश होता है। इसलिए 'इण्'

**सिद्धिः। अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वम्। व्यतिसे इत्यादौ से इत्यस्य पदत्वम्। इरियानित्यादौ (इयानित्यादौ इति पाठभेदः) कार्यकालपक्षे तद्धितान्तत्व-निबन्धनप्रातिपदिकत्वं च सिध्यति। अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात्।**

---

परिभाषायाः अशास्त्रीयस्यातिदेशस्वीकारफलमाह—अतएव भवती-त्यादौ...न स्यादि इति। परिभाषयाऽशास्त्रीयस्यातिदेशस्वीकारादेव भवतीत्यत्र भू+अ+ति इतिस्थिते भू इत्यस्याङ्गत्वं सिद्धचति। यस्माद्विहितस्तदादेरङ्गसंज्ञा क्रियते। अत्र यस्माद्विहितः स केवलः भूर्वर्तते, तदादित्वमनयानीयाङ्गसंज्ञा विधीयते। तेन भू इत्यस्याङ्गत्वात् सार्वधातुकगुणः सिद्धचति। व्यतिसे (इत्यत्र) व्यतिपूर्वकादस् धातोः "कर्तरि कर्मव्यतिहारे १.३.१४ इत्यात्मनेपदे कृते थासः से आदेशेऽस्धातोरकारस्य श्नसोरल्लोपः ६.१.१११ इति लोपे सकारस्य च तासस्त्योर्लोपः ७.४.५० इति लोपे तिङन्ततदादित्वाभावात्पदत्वं न स्यात्, अत्र यस्माद्विहितः सोऽस् धातुर्न वर्तते तस्य लुप्तत्वात्। अत्र असहाये सेप्रत्यये तिङन्ततदादित्वमनयातिदिश्यते। अतएवात्र 'से' इत्यस्य पदत्वात्पदादिसकारस्य "आदेशप्रत्यययोः" ८.३.५९ इति प्राप्तं षत्वं 'सात्पदा-द्योः' ८.३.१११ इत्यनेन वार्यते। अस्यापत्यम् इः, इदम् परिमाणमस्येति इयान् इत्यादौ कार्यकालपक्षे तद्धितान्ततदादित्वनिबन्धं प्रातिपदिकत्वं कृतद्धितसमासाश्च १.२,४६ इति सूत्रेण सिद्धचति। तत्र कवले तद्धितेऽसहाये तद्धितान्तव्यवहारः अनयैव साध्यते।

---

के परोक्ष (लिट् लकार) के रूप 'इयाय' में 'इ' को एकाच् प्रयुक्त 'एकाचो द्वे प्रथमस्य ६.१.१ लिटि धातोरनभ्यासस्य" ६.१.८ इस से द्वित्व हुआ। एकाच्त्व-धर्म, शास्त्रीय धर्म नहीं है। उसका भी यहाँ अतिदेश हुआ। जिसका संकेत शास्त्र करता है; उसे शास्त्रीय कार्य कहते है। अन्तत्व धर्म का संकेत 'येन विधिस्तदन्तस्य" यह सूत्र करता है और आदित्व धर्म का संकेत हमें "यस्मिन् विधिस्तदादावल्ग्रहणे" (परिभाषा) में मिलता है; परन्तु 'एकाच्' के अभिप्राय को बताने वाला कोई शास्त्र नहीं है; इसलिए एकाच् धर्म अशास्त्रीय है। अशास्त्रीय धर्म के अतिदेश होने के कारण ही भवति में "यः प्रत्ययो यस्माद् विहितस्तदादि शब्दस्वरूपत्व अर्थात् जो प्रत्यय जिससे किया गया है, तदादि शब्दस्वरूपत्व का (अशास्त्रीय धर्म का) अतिदेश हुआ और तब जाकर अंग संज्ञा हुई और अंग संज्ञा के फल स्वरूप 'सार्वधातुकार्ध-धातुकयो' ७.३.८४ से गुण हुआ। तदादि शब्दस्वरूपत्व को शास्त्रों में असंकेतित होने के कारण अशास्त्रीय कहा गया है।

वि+अति पूर्वक अस्धातु से 'कर्तरि कर्मव्यतिहारे, १.३.१४ से आत्मनेपद, लट् लकार मध्यम पुरुष थास् को से आदेश होने पर "श्नसोरल्लोपः"६.४.१११ से अलोप और 'तासस्त्योर्लोप' ७.४.५० से सलोप होने पर 'व्यतिसे' बनता है। यहाँ आदेशप्रत्यययोः ८.३.५९ से प्राप्त षत्व का निषेध" सात्पदाद्योः

यत्तु योऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयायेत्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैयटः—तन्न। तस्यैकपदगित्यत्रत्यभाष्योक्तरीत्या

---

फलव्यापारवाचकः शब्दः धातुः सोऽत्रान्यपदार्थः। एकोऽच् यस्मिन्निति विग्रहस्थेन यच्छब्देन फलव्यापारवाचकः धातुः गृह्यते एकाजिति बहुव्रीहौ एकोऽच् शब्दमात्रं गृह्यते। इत्थम् एकोऽच् शब्दमात्रं यस्मिन् फलव्यापारविशिष्टे धातौ इतिस्वीकारेण्धातौ एकाच्त्वं निर्बाधम् अर्थात् इकाररूपः शब्दात्मकः एकोच् फलव्यापारविशिष्टेऽन्यपदार्थग्राह्ये धातावयवीभूतो वर्तते। इत्थं योऽर्थवान् तत्रार्थस्य वतिपदार्थविवक्षायां त्यागेन शब्दमात्रस्य ग्रहणेन अन्यपदार्थविवक्षायामर्थस्योपादानेन एकाच्त्वव्यवहारो यथा अर्थवतो धातोरयं वर्णरूपः एकोऽजिति कैयटस्तन्न इयायेत्यादौ व्यपदेशिवद्भावाद्द्वित्वसिद्धिरितिभाष्यविरोधात्। न च कैयटेनापि व्यपदेशिवभावादेव एकाच्त्वसिद्धिरिष्यत इति न भाष्यविरोध इति वाच्यम् एवंरीत्या एकाच्त्वोपपादने कृते एकपदा ऋग् इत्यत्रत्यभाष्यरीत्या मुख्यव्यवहार एव सम्भाव्यते। इत्थमियायेत्यस्य व्यपदेशिवद्भावोदाहरणदानपरकभाष्यविरोधः स्यात्, तस्मात्, कैयटोक्तमत्र न युक्तमिति।

---

८.३.१११ से होता है। इस तरह सिद्ध होने वाले "व्यतिसे" में 'से' केवल प्रत्यय (मध्यम पुरुष का एकवचन) है। उसमें तिङन्त तदादित्व का इस परिभाषा से अतिदेश करके पदसंज्ञा हुई। इसलिए यहां 'सात्पदाद्योः" से षत्व का निषेध हुआ।'अस्यापत्यम्' इः यहाँ प्रकृति 'अ' का यस्येति च से लोप होने पर केवल प्रत्यय को तद्धितान्तत्व प्रयुक्त हाने वाली प्रातिपदिकसंज्ञा हुई। अन्यथा केवल प्रत्यय में 'यस्माद् विहितस्तदादित्व' के अभाव के कारण 'कृत्तद्धितसमासाश्च' से प्रतिपदिक संज्ञा नहीं होती। इस परिभाषा से अशास्त्रीय धर्म का अतिदेश होने के कारण 'यस्माद् विहितस्तदादित्व' का अतिदेश हुआ। इसी तरह इदम् परिमाणम् अस्य इस विग्रह में 'इदम् शब्द से वतुप् प्रत्यय, 'किमिदम्भ्यां वो घः" इस सूत्र से व को घ, घ को इयम्, इद इयत् ऐसी स्थिति में इदंकिमोरीश्की सूत्र से 'इदम्' को "ईश्" आदेश, यस्येति च से ई का लोप होने पर इयत् बना। इस इयत् को "तद्धितान्तत्वात्" प्रातिपदिकसंज्ञा हुई, फिर सु प्रत्यय, 'अत्वसन्त'दीर्घ, नुम्, त का संयोगान्त लोप होने पर 'इयान्' बनता है। यहाँ भी केवल प्रत्यय में प्रत्ययान्ततदादित्व इस परिभाषा के बल से ही आता है।

'इयाय' में द्वित्व की सिद्धि दिखाने के लिए कैयट ने कहा कि "लिटि धातोः" मे धातु पद से फलविशिष्टव्यापार का वाचक शब्द किया जाता है। और 'एकाच्' में 'एक अच्' पद से शब्दमात्र लिया जाता है अर्थात् एकः अच् शब्द मात्रं यस्मिन् फलव्यापारविशिष्टरूपे धातौ" इस विग्रह के अनुसार एक अच् रूप शब्द मात्र जिस फल व्यापार विशिष्ट धातु में हों, उसको द्वित्व हो ऐसा अर्थ

मुख्यव्यवहारसत्त्वात् । एकपदर्गित्यत्रार्थेन युक्तो व्यपदेश इति भाष्य उक्तम् । ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽवयव इत्यर्थ इति तदाशयः। तस्मादेकस्मिंस्तत्तद्धर्मारोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहारो यथा च शिलापुत्रकस्य शरीरमित्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेण तस्य शरीरमित्यादिव्यवहारस्तथात्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम् ।

---

एकपदा ऋक् इत्यत्र एकं पदं यस्याम् इति विग्रहः । बहुव्रीहौ यथा पीतमम्बरं यस्य स पीताम्बर इत्यत्र पीतादम्बरादतिरिक्तः कश्चित्पदार्थः यत्पदार्थवाच्यो भवति

---

करने पर अर्थ के त्याग और उपादान से 'इयाय' में एकाच् व्यपदेश हो जायगा। धातु पद से सार्थक 'इ' लेने पर उस फलव्यापारविशिष्ट धातु को अन्यपदार्थ और शब्दमात्र 'इ' को बहुव्रीहि का वर्तिपदार्थ मानने से इष्ट सिद्धि हो ही जायगी; यही कैयट का मत है । फलव्यापाररूपार्थविशिष्टधातु का अवयवीभूत एकाच् 'इ' शब्द हो सकता है; इसलिए द्वित्व हो जायगा। कैयट की यह मान्यता ठीक नहीं है। इस तरह यदि वहाँ एकाच्त्व की सिद्धि दिखायी जाय; तब तो एकपदा ऋक् की तरह 'इयाय' में एकाच्त्व का मुख्य व्यवहार ही हो जायगा; फिर 'इयाय' को इस परिभाषा के उदाहरण के रूप में दिखाने वाला भाष्य असंगत हो जायगा। भाष्य तो असंगत हो नहीं सकता। इसलिए कैयट की पूर्वोक्त कल्पना को ही बेबुनियाद माननी चाहिए । एकपदा ऋक् में भाष्यकार ने बताया कि ऋक्त्व अर्थात् 'ऋचा' कहने से शब्द और अर्थ दोनों का बोध होता है। इसलिए ऋचा का अवयव शब्दमात्ररूप पद को माना जा सकता है। प्रश्न यह था कि "एकं पदं यस्यात्" इति एकपदा ऋक् यहाँ अन्यपदार्थ क्या है और वर्तिपदार्थ क्या है। भाष्यकार ने कहा कि अर्थ विशिष्ट पद अवयवी है अर्थात् यत् पदार्थ है अन्य पदार्थ है और शब्दमात्र पद अवयव है अर्थात् वर्ति पदार्थ है। इस तरह भाष्य कार ने 'एकपदा' में ऋक्त्व के व्यवहार को विना व्यपदेशिवद् भाव के दिखा दिया। यदि 'इयाय' में भी वैसी ही कल्पना करें; तो यहां भी एकाच्त्व की सिद्धि विना व्यपदेशिवद्भाव के हो जायगी; ऐसी परिस्थिति में 'इयाय' में व्यपदेशिवद्भाव के द्वारा 'धात्ववयवैकाच्त्व' दिखाना व्यर्थ हो जायगा। इसलिए मानना चाहिए कि एक में ज्येष्ठत्वादि धर्म के आरोप से जैसे जेष्ठ, कनिष्ठ और मध्यम का एक साथ व्यवहार होता है अथवा जैसे पत्थर के पुतले को देखकर कहते हैं कि यह शिला पुत्रक का शरीर है; यद्यपि शिलापुत्रक और शरीर दोनों एक ही है; यहाँ उनमें कोई भेद नहीं है; फिर भी जैसे आरोपित भेद से अभेद में ही (एक में ही) अनेक आरोपित अवस्थाओं के कारण समुदाय रूप का आरोप करके शिलापुत्र क शरीर ऐसा व्यवहार होता है; इसी तरह यहाँ 'इयाय' में व्यपदेशिवद्भाव के द्वारा एकाच् आदि का व्यवहार हुआ करता है। इस तरह यह परिभाषा लोकन्याय से सिद्ध है।

**न चासहाय एवैतत्प्रवृत्तौ, भवतीत्यत्र भू इत्यस्याङ्गत्वानापत्तिः, ससहायत्वादिति**

---

तथा एकपदा ऋक् इत्यत्रापि ऋग्रूपोऽन्यपदार्थः एकपदादतिरिक्त एव भवितुमर्हति। किन्त्वत्र ऋचि केवलमेकमेव पदं वर्तते यच्चैकपदं तदेवात्र ऋक्, या च ऋक् सैवैकपदम्। एकपदात्मकत्वाद् ऋच एकपदान्नातिरिच्यते सा, ऋगात्मकत्वादेकपदस्यैक- पदमपि ऋचो नातिरिच्यते। अतो भाष्ये बहुव्रीहेरनुपपन्नत्वं सम्भावितं, ऋक्त्वादिव्यवहारस्य शब्दार्थोभयवृत्तित्वात्। अतः पदं शब्दमात्ररूपमेकोऽवयवो यस्या इति विग्रहे शब्दमात्र-रूपात्पदादवयवात् अर्थरूपाया ऋचः व्यतिरिक्तपदार्थत्वात् बहुव्रीहिरुपपादितो भाष्ये। उक्तं च तत्र एकपदर्गित्यत्रार्थेन युक्तो व्यपदेशः। एकपदर्गित्यत्र तद्भाष्येण मुख्य-व्यवहारः एव प्रमाणितो भवति। अतः इयायेत्यादावपि कैयटरीत्या एकाच्त्वोप-पादने मुख्यव्यवहारस्यैव सिद्धेर्भाष्ये तत्र व्यपदेशिवद्भावेन तदुपपादनं वृथाऽयास एव स्यात्। तथाच कैयटग्रन्थो न साधुरिति नागेशस्य तात्पर्यम्।

अतः देवदत्तस्यैकपुत्रस्य तस्मिन्नेव पुत्रे तत्तद्धर्मविशेषस्य श्राद्धकर्तृत्ववात्सल्या-श्रयत्वादेरारोपेण युगपद् यथा जेष्ठत्वकनिष्ठत्वव्यवहारो दृश्यते एष एव मम जेष्ठः कनिष्ठ इत्यादिरूपः तथेयायेत्यादावपि एकाच्त्वादिव्यवहारः इति पूर्वोक्तलौकिक-दृष्टान्तमूलकोऽयं न्यायः। अथवा शिलापुत्रकशरीरन्यायमूलिकेयं परिभाषेति मन्त-व्यम्। शिलापुत्रकस्य शरीरम् इति लोकैः सदा व्यवह्रियते। किन्तु शिलापुत्रकमेव शरीरम्। उपलपुत्तलिकातः शरीरं नान्यद् वस्तु वर्तते किमपि। देवदत्तस्य शरीर-मिति व्यवहारे शरीरादात्मा कश्चिदन्यः पदार्थो व्यतिरिच्यते। अतएव स व्यवहार उपपद्यते। तत्रात्मावयवी, शरीरं चावयवम्, न तथा शिलापुत्तलिकायां शक्यते वक्तुम्, तत्रात्मनोऽभावात्। अचेतनत्वात्तत्र नात्मा स्वीकर्तुं शक्यते। एवञ्च शिलापुत्रकस्य शरीरमिति व्यवहारोपपादनाय तत्रानेका अवस्था आरोप्यते इयमस्य पाषाणावस्था, इदमस्य च पुत्तलिकावस्था, इदमस्य नेत्रम्, इदं च घ्राणम्, इमौ चरणौ, इदं च मुखम् इत्याद्यवयवस्थितिस्तत्र कल्प्यते तेषामवयवानां समुदायस्य चारोपो विधीयते। इत्थमेकस्यामेव शिलापुत्तलिकायां यथाऽऽरोपिताभिरनेकाभिरवस्थाभिः समुदायरूप-त्वाद्यारोपेण तस्य शरीरमिति व्यवहार उपपाद्यते तथेयायेत्यादावपि तदुपपद्यत इति लोकन्यायसिद्धेयं परिभाषा।

परिभाषायामेकस्मिन्नित्युच्यते तस्य चासहाय इत्यर्थः कृतः तस्य च सभासन्नयने भव इत्यत्र परिभाषाया अप्रवृत्तिमुखेन वृद्धसंज्ञाऽभावद्वारेण वृद्धाच्छः ४.२.११४ इत्य-स्याप्रवृत्तिरिति फलमप्यनुपदमेवोक्तम्। तथाचासहाय एवैतस्याः परिभाषाया प्रवृत्तौ, भवतीत्यादौ भू + अ + ति इतिस्थितौ गुणे कर्तव्येऽपेक्षिताङ्गसंज्ञा भू इत्यस्य न स्यात्,

---

ऊपर बताया गया है कि निःसहाय एक में व्यपदेशिवद्भाव होता है; स-सहाय में नहीं; यदि ऐसा मानें तो 'भवति' में 'भू' को अङ्ग संज्ञा नहीं होगी; क्योंकि भू + अ + ति ऐसी स्थिति में 'अ' के रहने के कारण वह ससहाय प्रतीत

**वाच्यम् । शपमादायाङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्त्वेऽप्येकपुत्रस्य तस्मिन्नैवायमेव ज्येष्ठ इत्यादिव्यवहारवत् ।। न**

---

यः प्रत्ययो यस्मात् क्रियते तदादिशब्दस्वरूपं तस्मिन् प्रत्यये परेऽङ्गं स्यादित्यर्थे शप्प्रत्ययः भू धातोः क्रियते, तदादि शब्दस्वरूपं भू इति नास्ति, केवलस्य तस्य तदादिशब्दस्वरूपत्वाभावात्, यदि हि भूधातोः शप्प्रत्ययस्य च मध्ये किञ्चिद्विकरणादिकमागन्तुकं स्यात्तदैव तत्र तदादिशब्दस्वरूपत्वं संभवति, यथा भविष्यामि इत्यादौ मिप्प्रत्यये परेऽङ्गसंज्ञाविधानकाले मिपः भूधातोश्च मध्ये विकरणमागन्तुकमादाय भविष्य इत्यस्य यस्माद्विहितस्तदादित्वं सम्पद्यते तथा भू इत्यस्य शप्प्रत्यये परे विधीयमानाङ्गसंज्ञाकाले नास्तीति, यस्माद्विहितस्तदादित्वमिह व्यपदेशिवद्भावेन सम्पाद्यं परन्तु तन्न संभवति तिपो विद्यमानत्वेन ससहायत्वात् इत्य तु न वाच्यम्, शप्प्रत्यये परे याङ्गसंज्ञात्र प्रयोजनवशाच्चिकीर्ष्यते; तस्यां यद् यस्माद्विहितस्तदादित्वमपेक्ष्यते, तत्र तस्य ससहायत्वाभावादस्याः परिभाषायाः प्रवृत्तौ बाधकाभावात् । लोके यथा पुत्रात् पुल्लिङ्गाद् विजातीयायाः कन्यायाः सद्भावेऽपि एकपुत्रस्य तस्मिन् पुत्रेऽयमेव मे जेष्ठः कनिष्ठ इति व्यवहारो भवति, तथेहापि विजातीयस्य तिपः सत्वेऽपि भूधातौ अयं भूधातुरेव मे प्रकृतिः' अयमेव च मे प्रकृतितदादिरिति व्यवहार उपपद्यते । इत्थमसहाय एव व्यपदेशिवद्भाव इति स्वीकारे न कोऽपि दोषः। एवञ्चासहायत्वं न केवलं तद्धर्मसम्पादकद्वितीयराहित्यम्, यच्च किल आभ्यामित्यादौ वर्तते तत्र अदन्तत्वसम्पादकस्य द्वितीयस्याकारपूर्ववर्तिनः कस्यापि वर्णस्याभावात् । किन्तु तत्कार्यविधायकशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तसमुदायघटितत्वाभाववत्त्वमपि स्वीकार्यम् । अत्र तत्कार्यपदेन केवलमङ्गसंज्ञा न गृह्यते, किन्तु शब्निमित्तकाङ्गसंज्ञा गृह्यते, तद्विधायकं शास्त्रं यस्मात्प्रत्ययविधिरिति, तदुद्देश्यतावच्छेदकं शपि परे धात्वादित्वं, तदाक्रान्तसमुदायोऽत्र नास्त्येवेति समुदायघटितत्वाभावात् असहायत्वेन व्यपदेशिवद्भावः सिद्धः ।

---

होता है; तथापि 'शप्' प्रत्यय अर्थात् 'अ' को निमित्त मान कर याने 'अ' के परे रहते जब 'भू' को गुण करने के लिए अङ्गसंज्ञा करने लगते हैं, तो यस्माद् विहितस्तदादित्व के अभाव के कारण वह असहाय ही है; इसलिए शप् के परे रहते अङ्गसंज्ञा करते समय निःसहाय (बेचारे) 'भू' को व्यवदेशिवद्भाव हो ही जायगा। लोक में भी हम हम देखते है कि कन्या के रहने पर यदि भी कोई एक पुत्रवान् है, तो वह उसी एक पुत्र को ज्येष्ठ, कनिष्ठ और मध्यम बताता हीं है। विजातीय कन्या उसके उस व्यवहार में जैसे बाधक नहीं होती; उसी तरह प्रकृतित्व की अपेक्षा प्रत्ययत्व रूप विषम धर्म वाले प्रत्यय के कारण भू की असहायता पर कोई आँच नहीं आयेगी।

**चैवं निजौ चत्वार एकाच इति भाष्यासङ्गतिरिकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम् । एकस्मिन्नित्यस्यापर्यालोचनया तत्प्रवृत्तेः ॥**

**अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते । अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यते इति तदर्थः । प्रायोऽसहाय एवार्थवत्त्वात् ।**

---

असहाय एव व्यपदेशिवद्भावो भवतीति मतं भवता समर्थितम्, किन्तु तथा स्वीकारे निजौ चत्वार एकाचः, अर्थात् णिजिर् शौचपोषणयोरित्यत्र निर्दिष्टे निज् धातौ "निजां त्रयाणां गुणः श्लौ" ७.४.७५ इत्यत्रोक्ते निज्धातौ चत्वारः एकाचः सन्ति, नि, निज्, इ, इज् इति । तत्र एकोऽच् यस्मिन् स एकाच् तत्त्वं च व्यपदेशिवद्भावबललभ्यमेव । स च व्यपदेशिवद्भावः ससहायत्वादसंभवः । तथाचासहाय एव व्यपदेशिवद्भाव इति स्वीकुर्वतो भवतो भाष्यं 'निजौ चत्वार एकाच' इति व्याहरद् विरुद्धं स्यादिति चेत् अत्र नागेश आहः—भाष्यस्य तद्वचनं परिभाषायां विद्यमानमसहाय इत्यर्थकमेकस्मिन् इति पर्यालोचनं विना प्रवृत्तम् । अतो न तस्यापर्यालोचितप्रवृत्तवचनविरोधस्य भयं कार्यम् । अपर्यालोचितवचनं भाष्यकारस्याप्यनादरणीयमेव । तत्र तु वृक्षप्रचलनन्यायेन निज्धातौ निज् इत्यस्यैव द्वित्वसंभवादेकाच्त्वेन चतुर्णां तदधिकानां तन्न्यूनानां वा ग्रहणे बुद्धिव्यायामादन्यन्नास्ति किमपि फलम् इति हेयमेव ।

अर्थवता व्यपदेशिवद्भाव इति दृश्यते भगवता च असहाये व्यपदेशिवद्भाव उच्यते, उभयत्र वर्तते किमपि वैलक्षण्यम् । अथवा शब्दमात्रभिन्नं समानतात्पर्यकम् समानफलकञ्चोभयमिति जिज्ञासायां समानतात्पर्यकमिति स्वीकुर्वन् लिखति **अर्थबोधकेन शब्देन—एवार्थवत्त्वात्** । अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं

---

यदि ससहाय में व्यपदेशिवद्भाव नहीं मानें तो निजौ "चत्वार एकाचः" भाष्यकार का यह कथन असंगत हो जाय; क्योंकि 'इ' कार वहां ससहाय है; उसमें व्यपदेशिवद्भाव के द्वारा एकाच्त्व की सिद्धि नहीं की जा सकती है । भाष्यकार ने कहा कि निज् धातु में चार एकाच् हैं १—निज्, २—इज्, ३—नि, ४—इ । इनमें 'इ' के आगे और पीछे नकार तथा जकार के होने के कारण ससहायता साफ दिखती है; उसे एकाच् कैसे बताया जा सकता, किन्तु बताया तो गया ही है । इसलिए "एकस्मिन् अर्थात् 'असहाये' एव व्यपदेशिवद्भावः" ऐसा मानने पर उक्त भाष्य विरुद्ध हो जायेगा । इसलिए असहाय ही व्यपदेशिवत् हो, ऐसी कल्पना छोड़ देनी चाहिए, ऐसा विचार आता है, तथापि उक्त भाष्य निर्बल है क्योंकि उसमें परिभाषा के महत्वपूर्ण अंश 'एकस्मिन्' पर ध्यान नहीं दिया गया है । इसलिए उस भाष्य को यों गपशप कह सकते हैं, उसे सिद्धान्ती नहीं मान सकते । निर्बल भाष्य के आधार पर किसी युक्तियुक्त तथ्य को छोड़ना नहीं चाहिए ।

जो मानते हैं—'अर्थवता व्यपदेशिवद्भावः' वहाँ पर भी अर्थवत् पद असहायक का ही उपलक्षक (बोधक) है । उसका अर्थ है कि अर्थ बोधक शब्द से

**कुरुते इत्यादौ तशब्दाकारोऽचामन्त्य इति व्यवहारे स आदिर्यस्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्यन्यत्र विस्तरः ॥३१॥**

---

लभ्यत इति तदर्थः । प्रायः यः असहायः स एवार्थवान् आभ्यामित्यत्र अशब्दः असहायः अर्थवांश्च, सभासन्नयने भाशब्दः ससहायः अतएव नार्थवान्। अतः अर्थवता व्यपदेशिवद्भावः इत्यनेनापि असहायस्यैव व्यपदेशिवद्भावो जायते इत्युभयत्र फलैक्यात्तात्पर्यैक्याच्च न कोऽपि विरोधः । प्रायोऽसहाय एवार्थवत्त्वात् इत्यत्र कृतस्य प्रायोग्रहणस्य फलं दर्शयति **कुरुत** इत्यादौ......। कुरुते इत्यत्र टित आत्मनेपदानाम् ३.४.७९ इति टेरेत्वं विधीयते । तत्र च टिसंज्ञापेक्ष्यते । टिसंज्ञा च तघटकाकारस्य तदा भवेत् यदा स अचां मध्ये योऽन्त्यः स आदिर्यस्यैतादृशो भवेत् तादृशश्च व्यवहारस्तत्र व्यपदेशिवद्भावेनैव सम्पाद्यः यतः तघटकाकारः टितोलकारस्य सम्बन्धिनः कस्याप्येकस्यापि च वर्णस्यादिर्नास्ति अतोऽत्रासहायत्वात् व्यपदेशिवद्भावः व्यपदेशिवदेकस्मिन् इति पाठे सम्भवति । अर्थवता व्यपदेशिवद्भाव इति पाठे तु न सम्भवति, तस्याकारस्यार्थवत्त्वाभावात् । अतः योयोऽसहायः ससोऽर्थवान् इति कथयितुं न शक्यते । अतएव मूले प्रायोऽसहाय एवार्थवत्त्वादित्यत्र प्रायोग्रहणं कृतम् । कुरुते इत्यत्र च दोषापत्त्या "अर्थवता व्यपदेशिवद्भाव" इति पाठस्त्याज्य इत्यपि हृदयम् ।

यद्यपीयं परिभाषा लोकन्यायसिद्धेत्युक्तम् तथापि किमस्याः ज्ञापकमिति जिज्ञास्यते चेत् इट ईटि ७.२.२८ इति सूत्रमेव ज्ञापकत्वेन गृहाण । अनेन इटः परस्य सस्य

---

व्यपदेशिसदृश कार्य हुआ करता है । प्रायः असहाय शब्द ही सार्थक देखा जाता है । जैसे 'आभ्याम्' का ,अ' अदन्त नहीं होने से असहाय है, वह अर्थवान् भी है; 'दरिद्रा' धातु का "इ" ससहाय है; इसलिए वह सार्थक नहीं है । इस तरह 'निज्' धातु के 'इ' को अर्थवता व्यपदेशिवद् भावः" से भी एकाच् (एकअच्वाला वर्णसमूह) नहीं सिद्ध किया जा सकता ।

अब प्रश्न यह है कि 'कुरुते' में 'त' के अ को टिसंज्ञा होती और फिर "टित आत्मनेपदानाम्" ३,४.७९ से उसे एत्व होता है, परन्तु वह तो ससहाय है; उसे अचों में अन्त्य अच्त्व सिद्ध करने के लिए व्यपदेशिवद्भाव नहीं हो सकेगा, उसके बिना टिसंज्ञा नहीं होगी और टिसंज्ञा के बिना एत्व न होगा; इसका उत्तर यह है कि त शब्द के अकार को 'अचामन्त्यः" इस व्यवहार के योग्य बनाना है; अथवा स आदि र्यस्य" अर्थात् बहुत से अचों में अन्त्य के साथ साथ उसे कुछ वर्णों का आदि भी बनाना है। इन दोनों व्यवहारों में 'त' का 'अ' असहाय ही है । वहाँ प्रत्यय 'त' में बहुत से अच् है ही नहीं; जिनकी कि वह अन्तिम इकाई हो । इस तरह 'अ' बेचारा असहाय ही है; उसे व्यपदेशिवद् भाव के द्वारा टिसंज्ञा हो ही जायेगी । यह अन्यत्र विस्तार पूर्वक कहा गया है ।

ईटि परे लोपो विधीयते। सिचः सस्येट्परत्वं तदैव स्यात् यदा तस्य आर्धधातुकस्येड् वलादेः ७.२.३५ इतीट् स्यात्, इट् शास्त्रस्य च प्रवृत्तौ वलादित्वमपेक्ष्यते। अगादीत् इत्यत्र आगाद् स् ईत् इतिस्थितौ सः केवलः, नास्ति कोऽपि वर्णस्तत्परः येन सकारस्य वलो वलाद्यार्धधातुकत्वं सम्पद्यते। इत्थं इटोऽप्राप्त्या इट्परस्य सिचः सस्य सर्वथाऽसम्भवात् इट ईटि ७.२.२८ इति लोपविधानं निरुदाहरणं स्यात्। आचार्येण इट ईटि इति सूत्रं कृतम्। अतो मन्ये स पश्यति यद्व्यपदेशिवद्भावेन लोकप्रसिद्धेन इहाप्याश्रितेन तत्र वलादित्वं स्यादिति सूत्रं करोति।

अन्यत्र=उद्योतादौ विस्तरः। आद्यन्तवदेकस्मिन् १.१.२१ इति सूत्रस्य भाष्ये पतञ्जलिना सूत्रापेक्षया "व्यपदेशिवदेकस्मिन्" इत्यत्र प्रतिपादितस्यार्थस्य व्यापकत्वं प्रदर्शितम्। तत्रोक्तम् सूत्रस्य स्थाने 'व्यपदेशिवदेकस्मिन्' इति वक्तव्यम् तस्य प्रयोजनानि प्रतिपाद्यन्ते—**एकाचो द्वे प्रथमार्थम्**॥३॥ वक्ष्यत्येकाचो द्वे प्रथमस्य (६.१.१) इति बहुव्रीहिनिर्देश इति। तस्मिन् क्रियमाण इहैव स्यात्—पपाच, पपाठ। इयाय, आर इत्यत्र न स्यात्। व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति (आद्यन्तभावेन तु द्वित्वं न सिद्धं भवतीति व्यापकार्थबोधिका परिभाषैव स्वीकार्या। परिभाषया

---

इहां अन्यत्र का तात्पर्य 'उद्योत' से है। आद्यन्तवदेकस्मिन्" १.१.२१ सूत्र के भाष्य और प्रदीप पर लिखे गये उद्योत में नागेश ने कैयट की इस बात पर तो सहमति प्रकट की कि यद्यपि "देवदत्तस्य एक एव पुत्रः स एव ज्येष्ठः मध्यमः कनिष्ठः" इस लौकिक न्याय से एक में (असहाय में) आदि तथा अन्त का व्यवहार सिद्ध हो सकता था तथापि ऐसे व्यवहार को गौण समझ कर मुख्य रूप से अदन्त व्यवहार के योग्य क्षेत्र 'वृक्षाभ्याम्' इत्यादि में चरितार्थ 'सुपि च' ७.३.१०२ इत्यादि सूत्रों से पूर्वोक्त लौकिक व्यवहार के आधार पर अदन्त माने जाने के कारण गौण रूप से अदन्त के व्यवहार योग्य 'आभ्याम्' इत्यादि में दीर्घादि कार्य नहीं हो सकता। इस प्रकार की भ्रान्ति से युक्त व्यक्ति के लिए आद्यन्तवदेकस्मिम् १.१.२१ यह सूत्र किया गया है; परन्तु कैयट की इस बात को स्वीकार नहीं किया कि व्यपदेशिवद्भाव (लौकिकन्याय सिद्ध "व्यपदेशिवदेकस्मिन्" इस परिभाषा के द्वारा होने वाला व्यपदेशिवद्भाव) अर्थवान् से हुआ करता है; 'कुरते' में तो 'त' का अकार निरर्थक है—अर्थ रहित है; 'त' यह समुदाय अर्थवान् है; उस समुदाय का एक देश 'अ' अर्थ रहित है। इस लिए परिभाषा के द्वारा नहीं सिद्ध होने वाले व्यपदेशिवद्भाव की समस्या को सुलझाने के लिए सूत्र रचा गया। नागेश का कहना है कि कैयट का यह कथन (अर्थवता—इत्यादि) पूर्वोक्त कथन के विपरीत है। इसलिए 'अर्थवता' का अर्थ असहाय ही करना चाहिए अन्यथा आद्यन्तवद्भाव भी नहीं होगा।

॥इति शिवम्॥ ३१

**ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यादत आह—**

**ग्रहणवता प्रातिपादिकेन तदन्तविधिर्नास्ति ॥३२॥**

---

तु 'कुरुते' 'आभ्याम्' इत्यादौ आद्यन्तभावप्रयुक्तटिसंज्ञादीर्घादि, इयायेत्यादौ एकाच्त्व-प्रयुक्तद्वित्वादीत्युभयविधं कार्यं सिद्धयति। षत्वे आदेशसंप्रत्ययार्थम् ४. वक्ष्यत्या-देशप्रत्यययोः ८.३.५९ इत्यवयवषष्ठ्येव, एतस्मिन् क्रियमाणे इहैव स्यात् करिष्यति, इन्द्रो मा वक्षत् इत्यत्र न स्यात् (इह हि प्रत्ययः केवलं स् रूपः) व्यपदेशिवद्भावेन तु सिद्धयति ॥ व्यपदेशिवद्भावस्य व्यापकत्वत्वात्तस्मिन्नेव कर्तव्ये सूत्रं किमर्थम् इति प्रश्नं समादधत्कैयट आह—यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्-नपि सिद्धयति तथापि गौणत्वात् कार्येण न भवितव्यमिति यस्य भ्रान्तिः स्यात्तं प्रति योगोऽयमारब्धव्यः ॥इति॥ आद्यन्तवदेकस्मिन् १.१.२१ इत्यस्य यानि प्रयोजनानि तान्याह भाष्ये—(१) आदिवत्त्वे प्रयोजनं प्रत्ययञ्नित्दाद्युदात्तत्वे—कर्तव्यम्—औपगवः २—वलादेरार्धधातुकस्येट् प्रयोजनम्—करिष्यति—जोषिषत् ११.३ यस्मिन् विधिस्तदा-दित्वे प्रयोजनम् श्रियः—श्रियौ। ४. अजाद्याट्त्वे प्रयोजनम् ऐहिष्ट—ऐष्ट। ५. अन्तवद्-द्विवचनान्तप्रगृह्यत्वे प्रयोजनम्—पचेते—माले ॥ ६. मिदचोन्त्यात्परः प्रयोजनम् —कुण्डानि—यानि ७. अचोऽन्त्यादि प्रयोजनम्—कुवार्थे—कुरुते। तत्र कुरुते इति प्रतीकमादाय कैयटः प्राह—अर्थवता व्यपदेशिवद् भावात्तशब्दाकारस्यानर्थकत्वादिह प्रयोजनत्वेनोपन्यासः ॥ अत्रत्यम् 'अर्थवता' इति प्रतीकमादाय नागोजिभट्टः—तत्र हि ('कुरुतेइत्यत्र') अर्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः। इदं चिन्त्यम्—यद्यपि व्यपदेशिवद्भावेन सिद्धयति, तथापि गौणत्वान्नेति यस्य भ्रान्तिस्तम् प्रति सूत्रारम्भ इति पूर्वोक्तस्वग्रन्थविरोधात् सूत्रकारेण तदनज्ञानात् तदुदाहरणसम्भवाच्चार्थवतेति चासहायत्वस्यैवोपलक्षणं, ससहायस्य, प्रायेणानर्थकत्वातशब्दाकारश्चासहाय एव। येन सहायेनाचामन्त्यत्वस्य बहुव्रीह्यर्थस्य चोपपत्तिस्तादृशसहायाभावात्। अन्यथान्त-वद्भावोऽपि न स्यात्। विजातीयकन्यादिसत्वेऽपि एकपुत्रस्यायमेव ज्येष्ठ इत्यादि-व्यवहाराद् ईदृशस्थलेऽपि लोकसिद्धत्वमित्याहुरिति ग्रन्थेनोद्योते विस्तर इति।

॥ इतिशिवम्॥३१॥

**ग्रहणवता प्राति——नास्ति ॥३२॥**

'गर्गादिभ्यो यञ्' ४.१.१०५ इति सूत्रे प्रातिपदिकं विशेष्यं कृत्वा 'येन विधिस्तदन्तस्य' १.१.७२ इति तदन्त विधौ गर्गाद्यन्तात् प्रातिपदिकात् यञित्यर्थे परमगर्गशब्दादपि यञ् स्यादत आह—**ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति।**

---

**ग्रहणवता प्राति०——नास्ति ॥३२॥**

'गर्गादिभ्यो यञ्' ४.१.१०५ सूत्र जैसे गर्गादि से यत् प्रत्यय करता है; वैसे तदन्तविधि होने से परमगर्गशब्द से भी यञ् प्रत्यय करने लगेगा, ऐसा न हो इसीलिए परिभाषा कहते है "**ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति**"।

इयं च समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जमिति वार्त्तिकस्थप्रत्ययांश नु-

---

तदन्तविधिप्रतिषेधके वार्तिके समासप्रत्ययविधौ प्रतिषेध इत्यत्र प्रत्ययग्रहणेन कृतस्य तदन्तविधिप्रतिषेधस्यानुवाद एवेयम् । समासप्रत्ययविधाविति निषेधः उगिद्ग्रहणं वर्णग्रहणञ्च वर्जं वर्जं प्रवर्तते। तेन 'उगितश्च ४.१.६ अत इञ्' ४.१.९५ इत्यादौ तदन्तविधिर्भवत्येव । अत एव 'अतिभवती' दाक्षिरित्यादि सिद्धयति । समासप्रत्ययविधौ तदन्तविधिर्न भवतीत्युक्तौ कस्मादित्याकाङ्क्षायां प्रातिपदिकादिति लभ्यते। सूत्रे यस्य प्रातिपदिकस्य ग्रहणमुच्चारणं वर्तते, तादृशात् प्रातिपदिकात् प्रत्ययविधौ तदन्तविधिर्नेति परिभाषार्थः । गर्गादेर्ग्रहणं 'गर्गादिभ्यो यञ्' ४.१.१०५ इत्यत्र कृतं वर्ततेः । अतस्तत्रानया तदन्तविधिप्रतिषेधात् परमगर्ग-

---

ग्रहणवान् प्रातिपदिक से तदन्त विधि नहीं होती है। अर्थात् जो प्रातिपदिक सूत्र में गृहीत है; उससे होने वाली विधि तदन्त से नहीं होती है। ग्रहणवत्-प्रातिपदिक-प्रयोज्य विधान तदन्त से नहीं होता है । गर्गादिभ्यो यञ् इस सूत्र से गर्गादिका ग्रहण करके यञ् प्रत्यय का विधान है। अतः यह यञ् गर्गादिशब्दान्त प्रातिपदिक (परमगर्ग) से नहीं होगा । ग्रहणवान् प्रातिपदिक का अर्थ यदि यह लें कि सूत्र में उच्चरित प्रातिपदिक विशेष ही ग्रहणवान् प्रातिपदिक हैं; तो 'गर्गादिभ्यो यञ्' में विशेष रूप से गर्गादि का ग्रहण होने के कारण तदन्त विधि का निषेध होने से इष्ट सिद्धि होने पर भी 'वृद्धाच्छः' ४.२.११४ और 'नौद्वचः' ४.४.७ सूत्र में तदन्त विधि का निषेध, वृद्ध संज्ञक शब्दों और दो अच् वाले शब्दों से नहीं होगा; क्योंकि इन में विशेष रूप में किसी प्रातिपदिक का—किसी आनुपूर्वी विशेष का—ग्रहण नहीं है। पूर्वोक्त दोष के उद्धार के लिए ग्रहणवान् का अर्थ यदि यह लें कि जो शब्द प्रातिपदिक का विशेषण बनने के कारण प्रातिपदिक विशेष को प्रगट करता है; वह भी ग्रहणवान् प्रातिपदिक माना जाता है, 'वृद्धाच्छः' 'नौद्व्यचः' में प्रातिपदिकाधिकार होने से जब सूत्र का अर्थ करेंगे वृद्धसंज्ञक जो प्रातिपदिक और द्वयच् जो प्रातिपदिक उनसे छ प्रत्यय हो, तो प्रातिपदिक के विशेषण वृद्ध और द्वयच् शब्द, प्रातिपदिक विशेष को प्रगट करने के कारण ग्रहणवान् प्रातिपदिक माने ही जायेंगे। इस तरह उक्त दोनों स्थलों में तदन्तविधि का निषेध हो ही जायेगा और दोष नहीं होगा; परन्तु अब 'अत इञ्' ४.१.९५ में दोष हो जायेगा, वहाँ भी प्रातिपदिकाधिकार होने से अकार प्रातिपदिक से इञ् प्रत्यय हो इस अर्थ में 'अत्' प्रातिपदिक विशेष का उल्लेख है ही । इस लिए तदन्तविधि का निषेध हो जायगा और अदन्त प्रातिपदिक से इञ् प्रत्यय नहीं होगा; "अस्यापत्यम् इः" तो बनेगा; किन्तु दशरथस्यापत्यम् दाशरथिः नहीं बनेगा, इसीतरह 'उगितश्च" ४.१.६ सूत्र में भी तदन्तविधि नहीं होगी। इस अव्याप्ति दोष के निवारण के लिए यदि यह कहें कि आनुपूर्वी

**वादः। अत एवेयं प्रत्ययविधिविषय एव। अत एव 'येन विधिरि'ति सूत्रे भाष्ये प्रत्ययविधिभिन्नेऽप्तृन्नित्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च सङ्गच्छते।**

शब्दात्दोषाभावः। वार्तिकस्थप्रत्ययांशानुवादत्वादेवायं प्रत्ययविधावेव प्रवर्तते। अतएव येन विधि, १.१.७२ इत्यत्र भाष्ये दीर्घविधायके प्रत्ययविधिभिन्ने ग्रहणवता प्रातिपदिकेनापि तदन्तविधिं विधाय स्वसा इत्यादिवत् परमस्वसा परमस्वसारा-वित्यादावपि दीर्घः संसाधितः संगच्छते। अस्य निषेधस्य वार्तिकस्थप्रत्ययांशानुवाद-

बोधक प्रातिपदिक ही ग्रहणवान् प्रातिपदिक हैं। "गर्गादिभ्यो यञ्" में गर्गादि पद आनुपूर्वी का बोधक है ही, 'वृद्धाच्छः,' 'नौद्व्यचः' में वृद्धपद, वृद्धपदवत्त्वेन शाला आदि आनुपूर्वी का परम्परा सम्बन्ध से बोधक होने के कारण और द्व्यच् पद दो अच्वाले पदों का बोधक होने के कारण परम्परा से आनुपूर्वी का बोधक है ही, तो 'वृद्धाच्छः' और 'नौद्व्यचः' में तो अव्याप्ति नहीं होगी किन्तु 'उगितश्च ४.१.६ 'वनो र च' ४.१.७ यहाँ भी तदन्तविधिका निषेध हो जायगा। अतः मानना चाहिए कि वर्णत्वव्याप्यधर्म से या प्रत्ययत्वव्याप्य धर्म से युक्त का बोधक न होते हुए जो प्रातिपदिकविशेष का बोधक हो; उसे ग्रहणवत् प्रातिपदिक कहते हैं। 'उगितश्च' में पहली बात नहीं है और वनो र च में दूसरा अंश नहीं है, इसलिए कोई दोष नहीं होगा। यद्यपि 'द्व्यच्' पद भी वर्णत्वव्याप्यधर्म से युक्त का बोधक है; वहाँ परिभाषा की प्रवृत्ति नहीं होनी चाहिए, परन्तु वर्णत्व-व्याप्त धर्म वह लिया जायगा जो किसी विशेषण से विशिष्ट न हो, "द्व्यच्" में तो 'द्वि' अच् का विशेषण है।

'अस्मायामेधा ५.२.१२१ में अस् पद भी ग्रहणवान् प्रातिपदिक है; उससे तदन्त विधि का निषेध होने पर 'यशस्वी' प्रयोग नहीं बनेगा, अतः अव्याप्ति दोष के निवारण के लिए परिभाषा को अनित्य मानना आवश्यक है। अनित्यता का ज्ञापक है "असमासे निष्कादिभ्यः" ५.२.२० में असमास ग्रहण। यदि यह परिभाषा अनित्य न हो तो 'निष्कादि' से तदन्तविधि का निषेध हो जाने पर ही समास में परमनिष्कादि से ठक् प्रत्यय की प्राप्ति होती ही नहीं थी; असमास ग्रहण व्यर्थ हो जायगा। अनित्य होने का फल हुआ कि 'रोणी ४.२.७४ सूत्र से 'आजकरौण' में अण् प्रत्यय हुआ। 'मेर्घतिभयेषु कृञः' ३.२.४३ यहाँ भय शब्द से तदन्तविधि होने पर अभयंकरः बना। अस्तु, प्रकृतिमनुसरामः—

यह परिभाषा केवल प्रत्ययविधि में लगती है; क्योंकि यह 'समासप्रत्यय-विधौ प्रतिषेधः, उगिद्वर्णग्रहणवर्जम्" इहाँ आये हुए प्रत्यय अंश का अनुवाद अर्थात् प्रकारान्तर से कथन है। इसीलिए भाष्यकार ने प्रत्यय विधि से भिन्न अर्थात् दीर्घविधायक सूत्र अप्तृन्तृच्" ६.४.११ इसमें गृह्यमाण प्रातिपादिक से भी तदन्त विधि की और 'स्वसा' 'परमस्वसा' ये उदाहरण दिये।

**अत एव च 'तदन्तविधि'सूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम् ।**

**सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव । ध्वनितं चेदम-समासे 'निष्कादिभ्यः' इति सूत्रे भाष्ये ।**

---

कत्वादेव समासप्रत्ययविधाविति निषेधस्य यथा निर्देशस्तथा नास्य निर्देश उपलभ्यते । समासप्रत्ययविधाविति निषेधोऽपि विशिष्य तद्वर्णोत्तरतद्वर्ण-रूपेण यत्र प्रातिपदिकं गृहीतं प्रकृतिर्वा गृहीता तत्र सूत्र एव प्रवर्तते न तु प्राग्वतेष्ठक् ५.१.१८ इत्यादौ विशेषरूपेणागृहीतप्रकृतिके सूत्रे । इदं ध्वनितम-समासे निष्कादिभ्यः ५.१.२० इत्यस्य सूत्रस्य भाष्ये । तथाहि असमासे निष्कादिभ्यः ५.१.२० असमास इति किमर्थम् ? परमनिष्केण क्रीतं परमनैष्किकम् । नैतदस्ति निष्कशब्दात् प्रत्ययो विधीयते तत्रः कः प्रसङ्गो यत्परमनिष्कशब्दात् स्यात् । नैव प्राप्नोति । नार्थः प्रातिषेधेन । तदन्तविधिना प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ।। अत उत्तरं पठति ।

निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य ।१। निष्कादि-ष्वसमासग्रहणं क्रियते, ज्ञापकार्थम् । किं ज्ञाप्यम् । एतज्ज्ञापयत्याचार्यः पूर्वत्र तदन्त-विधेः प्रतिषेधो न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । प्राग्वतेष्ठञ् [५.१.१८] इत्यत्र तदन्तविधिः सिद्धो भवति । नैतदस्ति प्रयोजनम् । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते न च ठञ्विधौ काचित्प्रकृतिर्गृह्यते । इदं तर्हि प्रयोजनम् । अर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ५.१.१७ परमगोपुच्छेन क्रीतं पारमगोपुच्छिकम् एतदपि नास्ति प्रयोजनम् । विधौ प्रतिषेधः । प्रतिषेधश्चायम् ।

प्राग्वतेष्ठञ् इति प्रतीकमादाय कैयटः प्राह तेन परमनिष्कशब्दाट्ठञ् सिद्धो भवति । केवलात्प्रातिपदिकाट्ठञ् विधीयमानः समासान्न स्यादित्याभासमात्रेणेद-मुक्तम् ।

एतेन सिद्धं यत् विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिके सूत्र एवेदं प्रवर्तते ।

---

इसी लिए तदन्त विधि सूत्र—येन विधिस्तदन्तस्य" १.१.७२ इस सूत्र के भाष्य में जैसे 'समासप्रत्ययविधौ प्रतिषेधः" यह कहा गया उस तरह "ग्रहण-वता" इस परिभाषा का उल्लेख नहीं किया गया । "समासप्रत्ययविधौ" यह निषेध भी विशेष करके तत्तद्रूप से अर्थात् गर्गादि, अग्नि आदि (अग्नेर्ढक् इत्यादि में) रूप से गृहीत प्रातिपदिक से ही होता है । असमासे निष्कादिभ्यः' ५.२.२० सूत्र के भाष्य में यह ध्वनित है ।

वहां 'परमनिष्क' शब्द से प्राप्त ठक् प्रत्यय के निवारण के लिए किये गये असमास ग्रहण को भाष्यकार ने यह कह कर व्यर्थ बताया कि "निष्कशब्दात् प्रत्ययो विधीयते तत्र कः प्रसङ्गो यत् परमनिष्क शब्दात् स्याद" अर्थात् निष्क शब्द से प्रत्यय का विधान कनते हैं; भला, वह प्रत्यय परमनिष्क से क्यों होगा । अतः उसके निवारण के लिए किया गया 'असमासे' ग्रहण व्यर्थ है । आगे भाष्य-

अत्र च ज्ञापकं 'सपूर्वाच्चे'तिसूत्रम् । अन्यथा पूर्वादिनिः इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥३२॥

नन्वेवं सूत्रान्ताट्ठक् दशान्ताड्डः एकगोपूर्वात् इत्यादेः केवलसूत्रशब्ददशन्शब्दैक-शब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह—

**व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥३३॥**

---

परिभाषाया अस्या ज्ञापकं सपूर्वाच्च ५.२.८७ इति सूत्रम् । अन्यथा परिभाषाया अभावे पूर्वादिनिः ५.२.८६ इत्यत्र तदन्तविधौ पूर्वान्तात्प्रातिपदिकात् अर्थात् सपूर्वात् प्रातिपदिकात् कृतपूर्वादिशब्दादपि इनिप्रत्यये कृतपूर्वीत्यादिसिद्धौ सपूर्वाच्च ५.२.८७ इति सूत्रं व्यर्थं स्यात् । ग्रहणवत्प्रातिपदिकत्वं नाम उगिद्ग्रहणभिन्नत्वे सति वर्णग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्वम् ।

॥इति शिवम्॥ ३२

**व्यपदेशिवद् भावो——न ॥३३॥**

'सूत्रान्ताट्ठक्' ४.२.६० 'दशान्ताड्डः' ५.२.४५ एकगोपूर्वात् ५.२.११८ इत्यादिष्वन्तग्रहणे पूर्वग्रहणे च कृतेऽपि केवलात्सूत्र शब्दाद् दशन्शब्दात् एकशब्दाच्च तेषां प्रवृत्तिः स्यात्, व्यपदेशिवद्भावेन केवलस्य सूत्रशब्दस्यापि सूत्रान्तत्वादित्यतः परिभाषामवतारयति—**व्यपदेशिवद्भावोऽप्रातिपदिकेन** अर्थात् व्यपदेशिवद्भावः प्रातिपदिकभिन्नेन शब्देन गृहीतेन भवति । सूत्रान्तेत्यादयस्तु प्रातिपदिकानि । अतः व्यपदेशिवद्भावप्रतिषेधान्न दोषः ।

---

कार ने कहा असमासग्रहण ज्ञापन करेगा कि पूर्वसूत्र में तदन्त विधि न हो। इस ज्ञापन की अनावश्यकता बताते हुए भाष्यकार ने कहा "ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते" अर्थात् सूत्र में गृहीत प्रातिपदिक से तदन्त विधि का प्रतिषेध करते हैं । इस तरह भाष्य में इसका ध्वतित हाना पाया जाता है ।

इस परिभाषा का ज्ञापक है 'सपूर्वाच्च' ५.२.८७ यह सूत्र। अन्यथा "पूर्वादिनिः" ५.२.८६ सूत्र से कृतपूर्वी में भी तदन्तविधि के द्वारा पूर्वान्त शब्द से इनि का विधान होने पर इनि प्रत्यय हो ही जाता 'सपूर्वाच्च' सूत्र व्यर्थ ही था। परिभाषा मानने पर तो 'पूर्व' (ग्रहणवान् प्रातिपदिक) से तदन्त विधि का निषेध हो जाने पर पूर्वान्त शब्दों से अप्राप्त इनि प्रत्यय के विधान के लिए ,सपूर्वाच्च' यह सूत्र सार्थक हो गया । ॥इति शिवम्॥ ३२

**व्यपदेशिवद्भावोऽप्रातिपदिकेन—३३**

'व्यपदेशिवदेकस्मिन्' यह परिभाषा मानने पर 'सूत्रान्ताट्ठक्' ४.२.६० 'दशान्ताड्डः, ५.२.४५ एकगोपूर्वात्" ५.२.११८ इत्यादि सूत्रों की प्रवृत्ति केवल सूत्र शब्द, दशन् शब्द और एक शब्द से भी हो जायगी; क्योंकि व्यपदेशिवद्भाव के द्वारा केवल सूत्र शब्द भी सूत्रान्त माना जा सकता है, केवल दशन्शब्द को भी

**पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्तव्ये पृथग्योगकरणमस्या ज्ञापकम् । न चे'ष्टादिभ्यः' इति सूत्रेऽनुवृत्त्यर्थन्तथा पाठोऽत एवानिष्टीत्यादिसिद्धिरिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात् । एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च ॥**

---

पूर्वात्सपूर्वादिनिरित्येकयोगे कृतेऽपि सपूर्वकात् पूर्वशब्दादिनिरित्यर्थेन कृतपूर्वीति, व्यपदेशिवद्भावेन च पूर्वीति सिद्धौ पूर्वात् ५.२.८६ सपूर्वाच्च ५.२.८७ पृथग्योग इति करणमेतस्या ज्ञापकम् । न च इष्टादिभ्य ५.२.८८ इति सूत्रेऽनुवृत्यर्थं तथा योगविभागः क्रियते, अतएव सपूर्वादिष्टशब्दादिनिप्रत्ययो जायते । तेन चानिष्टीति सिद्ध्यतीति वाच्यम् योगविभागस्य ज्ञापकत्वं भाष्ये प्रतिपादितम्, तद्भाष्यप्रामाण्येन ज्ञायते यत् अनिष्टीति प्रयोगोऽनभिधानादनिष्ट इति तस्य फलरूपेण स्वीकारासंभवात् । एकयोगेऽपि तावन्मात्रे स्वरितत्वप्रतिज्ञया तावत उत्तरस्मिन् सूत्रेऽनुवृत्तौ बाधकाभावाच्च । अस्याः परिभाषायाः स्वीकारादेव नान्तादसंख्यादे-

---

दशनुशब्दान्त माना जा सकता है; एक शब्द एक पूर्वकशब्दं को भी माना जा सकता है । इत्यादि दोष के निवारण के लिए परिभाषा मानते हैं—

**"व्यपदेशिवद्भावोऽप्रातिपदिकेन"** ।

"पूर्वात् सपूर्वादिनिः" यह एक योग ही करते, सपूर्वक पूर्व शब्द से इनि प्रत्यय हो, ऐसा अर्थ करने पर कृतपूर्वी में सपूर्वक शब्द होने से इनि प्रत्यय हो जाता, पूर्वी में व्यपदेशिवद्भाव से सपूर्वकत्व नहीं होने पर भी वह सपूर्वक की तरह माना जाता और इनि प्रत्यय हो ही जाता; योग—विभाग व्यर्थ होकर इस परिभाषा में ज्ञापक बनता है । यद्यपि एक योग करने पर 'अनिष्टी' यह प्रयोग नहीं बनेगा; क्योंकि एक योग रहने पर "इष्टादिभ्यश्च ५.२ ८८ में केवल 'सपूर्वात् इस अंग की अनुवृत्ति नहीं की जा सकती; तथापि पूर्वोक्त ग्रन्थ का तात्पर्य यह लेना चाहिए कि इष्टादि गण में पूर्व शब्द का पाठ करके सपूर्वात् इष्टादिशब्दात् इनिः, ऐसा अर्थ करने से ही कृतपूर्वी और व्यपदेशिवद्भाव में पूर्वी बन ही जाता, फिर भी इष्टाद्यन्तादिनिः यह न्यास नहीं करके पूर्वात्सपूर्वादिनिः इष्टादिभ्यश्च इत्यादि न्यासान्तर और योगविभाग जो किया गया, उसके सामर्थ्य से यह परिभाषा ज्ञापित होती है । अथवा यह भी कहा जा सकता है कि भाष्यकार ने 'पूर्वात्सपूर्वादिनिः' इस योगविभाग को परिभाषा का ज्ञापक बताया है । इसलिए ज्ञापकत्व का उल्लेख करने वाले भाष्य के प्रामाण्य से यह मानना चाहिए कि अनिष्टीत्यादि प्रयोग अनिष्ट है । इसलिए 'अनिष्टी' की सिद्धि के लिए "पूर्वात्सपूर्वादिनिः" में योगविभाग को चरितार्थ नहीं बताया जा सकता । अथवा 'इष्टादिभ्यश्च' इस सूत्र में केवल 'सपूर्वात्' की अनुवृत्ति एक योग करने पर भी उतने—से अंश में स्वरितत्वप्रतिज्ञा करने से सम्भव हो सकती है; इसीलिए तो कहते है "क्वचिदेकदेशोऽप्यनुवर्तते" । इस तरह "पूर्वात्सपूर्वादिनिः" ऐसा एक योग न करके योगविभाग जो किया गया है उसे परिभाषा का ज्ञापक माना ही जा सकता है ।

अत एव नान्तादसङ्ख्यादेरिति चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव ॥

इयञ्च प्रातिपदिकग्रहणे एव न तु प्रातिपदिकाप्रातिपादिकग्रहणे । तेन 'उगितश्चे'त्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम् ॥

इयं ग्रहणवता इति च प्रत्ययविधिविषयैवेत्यसमासे 'निष्कादिभ्य' इति सूत्रे

---

मट् ५.२.४९ इति सूत्रं चरितार्थम् । एतत्सूत्रं 'दशमः' इत्यत्र केवलाद्दशन्शब्दात् प्रवर्तते एकादशन् इत्यस्मान्न प्रवर्तते; अत्र नान्तशब्दस्य दशन् इत्यस्य एकशब्दरूपसंख्यादित्वात् । यदीयं परिभाषा न स्वीक्रियेत तदा 'दशन्' 'पञ्चन्' इत्यादेरपि संख्यादित्वात्सूत्राप्रवृत्या सूत्रं व्यर्थमेव स्यात् ।

इयं परिभाषा प्रातिपदिकमात्रग्रहणे प्रवर्तते, न तु प्रातिपदिकाप्रातिपदिकग्रहणे । तेनोगितश्च ४.१.६ इत्यत्र नेयं परिभाषा प्रवर्तते उगित्त्वस्य प्रादिपदिकाप्रातिपदिकसामान्यधर्मत्वात् 'भवति' 'अतिभवती'त्यादिवत् इयतीत्यत्रापि 'व्यपदेशिवद्भावेन' ङीप् सिद्धयति । उगित्त्वं हि भवच्छब्दादौ प्रातिपदिके, तनु विस्तारे धातौ, क्तवत्वादौ प्रत्यये च दृष्टमेवेति प्रत्यक्षमेव तस्य प्रातिपदिकाप्रातिपदिकसाधारणत्वम् ।

इयं परिभाषा ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति परिभाषा च प्रत्ययविधिविषये एवेति असमासे निष्कादिभ्यः ५.१.२० इति सूत्रस्य भाष्ये तस्य भाष्यस्य च कैयटकृते प्रदीपे निर्दिष्टम् ।

तथाच कैयटः 'असमासे'—५.१.२० इति सूत्रस्य प्रदीपे पूर्वादिनिः सपूर्वा-

---

परिभाषा मानने के कारण ही ''नान्तादसंख्यादेर्मट्'' ५.२.४९ यह सूत्र चरितार्थ हुआ । ''असंख्यादेः'' कहने का फल यह है कि 'दशमः' में मट् हो, किन्तु 'एकादश' से मट् हो कर 'एकादशम' नहीं बने । परन्तु यदि यह परिभाषा न हो तो 'दशम' और 'पञ्चम' में दशन् और पञ्चन् को भी व्यपदेशिवद्भाव से संख्यादित्व सिद्ध किया जा सकता है; फिर वहां भी मट् प्रत्यय नहीं होगा । इस तरह 'असंख्यादि'' कहने पर इष्ट प्रयोग की सिद्धि नही होगी । इसलिए यह परिभाषा माननी चाहिए । परिभाषा मानने पर ही असंख्यादि ग्रहण का सूत्रकाराभिमत प्रयोजन सिद्ध होता है ।

यह परिभाषा प्रातिपदिक ग्रहण में ही प्रवृत्त होती है, प्रातिपदिक और अप्रातिपदिक उभय के ग्रहण में प्रवत्त नहीं होती । इसलिए 'उगितश्च' ४.१.६ में दोष नहीं हुआ उगित्त्व धर्म, ऐसा धर्म है जो भवत् इत्यादि प्रतिपदिक और दिवु लोक्र आदि धातुओं में भी पाया जाता है इस । इसलिए उगितश्च सूत्र में यह नहीं प्रवृत्त हुई । यही कारण है कि अतिभवती और भवती दोनों प्रकार के प्रयोगों में ङीप् हुआ । यह बात 'उगितश्च'' सूत्र के भाष्य में स्पष्ट है ।

भाष्यकैयटयोः । तेन अहन्नित्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥३३॥

ननु वान्तो यीत्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह—

**यस्मिन् विधिस्तदादावल्ग्रहणे ॥३४॥**

दिनिः सपूर्वाच्चेति प्रत्ययविधौ ग्रहणवतेत्येतस्याः परिभाषाया ज्ञापितत्वाद् यत्रैव प्रत्ययो विधीयते तत्रैवानया तदन्तविधिः प्रतिषिध्यते" इत्याद्याह ।

उभयोरनयोः परिभाषयोः प्रत्ययविधिविषयत्वादेव 'अहन्' ८.२.६८ इत्यादेः प्रवृत्तिः परमाहन् शब्दे केवलाहन् शब्दे च भवति । तेन 'परमाहोभ्याम्' अहोभ्यामित्यादौ रुत्वादिः सिद्धयति । अत्रत्यो विचारविस्तरो ऽन्यत्र द्रष्टव्यः । अन्यत्रेति उद्योते इत्यर्थः ॥ ॥इति शिवम्॥

**यस्मिन् विधिस्तदादावल्ग्रहणे ॥३४॥**

ननु वान्तो यि प्रत्यये ६.१.७९ इत्यादौ यीति प्रत्यय इत्यस्य विशेषणम्, येन विधिरिति सूत्रेण विशेषणेन तदन्तविधौ यान्ते प्रत्यये ओदौतोरवावौ स्त इत्यर्थ

---

यह और "ग्रहणवता" यह, दोनों परिभाषाएं प्रत्यय विधि में ही प्रवृत्त होती हैं यह बात 'असमासे निष्कादिभ्यः' इस सूत्र के भाष्य और कैयट में स्पष्ट है । भाष्य का तात्पर्य बताते हुए कैयट ने लिखा हैं कि "पूर्वादिनिः सपूर्वाच्च" इन प्रत्यय विधायक सूत्रों के द्वारा प्रत्यय विधि में ज्ञापित होने के कारण, जहां कि प्रत्यय का विधान होगा; वहीं इस परिभाषा से तदन्त विधि का प्रतिषेध होगा । "अर्हादगोपुच्छसंख्यापरिमाणाद् ५.१.१९ इसमें तो 'ठक्' प्रत्यय का प्रतिषेध किया गया है । इसलिए यहाँ न तदन्तविधि का प्रतिषेध होगा और न व्यपदेशिवद् भाव का ।

इसलिए "अहन्" ८.६८ इत्यादि सूत्र की प्रवृत्ति अहन् और परमाहन् आदि शब्दों में होती है । 'अहन्' सूत्र रुत्व विधायक है' प्रत्यय विधायक नहीं । इसलिए इस सूत्र के विषय में न "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" यह परिभाषा लगती हैं और न 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' यह परिभाषा लगती है । इसलिए तदन्त विधि होने से 'परमाहन्' शब्द में रुत्व होकर 'परमाहः बनता है और 'अहः' में 'व्यपदेशिवद्भाव' होने से अहन् शब्दान्त मानकर रुत्व होता है । यह बात और जगह (उद्योत में) विस्तार के साथ वर्णित है ।

॥इति शिवम्॥ ३३

**यस्मिन्विधिस्तदादावल्ग्रहणे—३४**

**"वान्तो यि प्रत्यये"** ६.१.७९ का अर्थ सूत्राक्षर के अनुसार "य प्रत्यय के परे 'ओ' और 'औ' को अव् और आव् आदेश हो" यही होना चाहिए । यादि प्रत्यय के परे रहते ऐसा अर्थ कैसे हुआ ? इस प्रश्न का उत्तर देने के लिए परिभाषा मानते हैं:—**'यस्मिन् विधिस्तदादावल्ग्रहणे"** जिस सप्तम्यन्त अल् के परे रहते कार्य का

एव युक्तः यादौ प्रत्यये इत्यर्थः कथं लभ्यत इति चेत्, श्रूयताम् 'येन विधिस्तदन्तस्य' १.१.७२ इति तदन्तविधेरपवादभूताया **यस्मिन् विधिस्तदादावल्ग्रहणे** इति परिभाषायाः स्वीकारात् तया च यादीत्यर्थलाभात्।

न च यान्ते प्रत्यये परे इत्यर्थस्वीकारे सूत्रं व्यर्थम्, यान्तप्रत्ययपरकयोरोदौतोरभावादिति वाच्यम् गोमयमत्तीति गोमयात् तमाचष्टे गोमययति इति टिलोपे गोमयि इत्यस्मात् क्विप्प्रत्यये णिलोपे च गोमय् इत्यत्र यान्तप्रत्ययपरकौकारस्य सम्भवात्; तथापि गव्यम् नाव्यम् इत्यादावव्याप्तिवारणार्थं गोमय् इति पूर्वोक्ते रूपेऽतिव्याप्तिनिवृत्त्यर्थञ्च येनविधिरिति तदन्तविधेरपवादस्वरूपेयं परिभाषा स्वीक्रियते। तत्र हि प्रोक्तम्:—यस्मिन् विधिस्तदादावल्ग्रहणे। यस्मिन् विधिस्तदादाविति वक्तव्यम्। किं प्रयोजनम् 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' ६.४.७७ इतीहैव स्यात्। श्रियौ भ्रुवा। श्रियः भ्रुव इत्यत्र न स्याद् इति।

अत्र केचित् परिभाषाया अस्या अभावे अजन्ते उत्तरपदे कोः कदादेशः तत्पुरुषे इत्यर्थापत्त्या 'कोः कत्तत्पुरुषे ऽचि' ६.३.१०१ इत्यनेनैव सिद्धे 'रथवदयोश्च' ६.३.१०२ इति सूत्रमस्याः ज्ञापकमिति वदन्ति तन्न रथं वदं वाचष्टे इत्यर्थे णिचि ततः क्विपि रत् वत् इति तयोः कुशब्देन समासे सूत्रस्य चारितार्थ्यात्। तत्र स्थानिवद्भावेनाजन्तत्वं न सम्भवति 'न पदान्त'—१.१.५८ इति पदान्तविधौ तन्निषेधात्। स्थानिभूतादचः पूर्वत्वेन दृष्टस्य कार्याभावाच्च। नच तावन्मात्रप्रयोजने सति ण्यन्ताचारक्विबन्तयोरेवानुकरणेन रद्वदोश्चेत्येव कथनं पर्याप्तम्, अजन्तकथनं ज्ञापकमेवेति वाच्यम् रम् धातोः वद् धातोश्च क्विपि रत् वद् इत्यनयोः परयोरादेशवारणार्थं तस्यावश्यकत्वात्। तथाचात्र किं ज्ञापकमिति चेत्, श्रूयताम्

---

विधान हो और वह यदि विशेषण हो, तो उससे तदादि की उपस्थिति होती है। "वान्तो यि प्रत्यये" इस सूत्र में 'यि' में अल् 'य' का ग्रहण है। वह सप्तम्यन्त है और प्रत्यय का विशेषण भी है। इसलिए तदादि की उपस्थिति होने से "यादौ प्रत्यये परे" ऐसा अर्थ हुआ।

जैसे "तस्मिन्निति निर्दिष्टे" इस सूत्र में "तस्मिन्" पद से सप्तमी ली जाती है; उसी तरह परिभाषा में 'यस्मिन्' पद से सप्तम्यन्त का परामर्श होता है, अल् ग्रहण का अर्थ है अल्बोधक। विधिपद से विधीयतेऽसौ इति विधिः इस व्युत्पत्ति से कार्य अर्थ लिया जाता है। "येन विधि" इस सूत्र की यह परिभाषा अपवादिका है। अपवाद का वही देश होता है; जो उत्सर्ग का होता है। इसलिए "येन विधिः" की तरह यहाँ भी 'विशेषणे' यह अर्थ आ गया। इस तरह अर्थ हुआ कि अल्बोधक सप्तम्यन्त पद को विशेषण बनाकर जिस कार्य का विधान किया गया हो, वह कार्य सप्तम्यन्त पद बोध्य जो अलः तदादि को हो—जैसे वान्तो यि प्रत्यये" में यि पद सप्तम्यन्त है, वह अल् का बोधक है अर्थात् 'य' रूप अल् (वर्ण) का प्रत्यायक है और प्रत्यये का विशेषण है, वह इसलिए यकारादि का बोधक होगा।

तदन्तविधेरपवाद इयम् । वाचनिक्येषा 'येन विधि'रित्यत्र भाष्ये पठिता ।।

'न ल्यपि' ६.७.६९ इत्यस्यैव ज्ञापकत्वात् । अन्यथा 'प्रदाय' इत्यत्र हलन्ते किति घुनास्थादीनामीत्त्वमित्यर्थकस्य 'घुमास्थागापाजहातिसां हलि' ६.४.६६ इत्यस्याप्रवृत्या न ल्यपीति निषेधसूत्रं व्यर्थमेव स्यात् । न च 'प्रदायच्छत्रम्' इत्यत्र तुकि कृते हलन्तत्वसंभवेनेत्वं प्राप्नोति तद्वारणाय 'नल्यपीति' चरितार्थम्, ईत्त्वे कर्तव्ये तुको बहिरङ्गासिद्धत्वं तु न वाच्यम् 'नाजानन्तर्य (प० ५२) इति निषेधात्, तथाच प्रदायच्छत्रमित्यत्र चरितार्थ्यात् न ल्यपि ६.४.६९ इति न ज्ञापकमिति वाच्यम् परिभाषाया अभावे 'आतो लोप इटि' च ६.४.६४ इत्यस्याप्यजन्त इत्यर्थापत्त्या तुकः पूर्वमेवातो लोपे ईत्वाप्राप्त्या 'न ल्यपि' ६.४.६९ इति निषेधस्याचारितार्थ्येन ज्ञापकत्वसंभवात् ।

"वाचनिक्येषा" इति मूलग्रन्थस्यैषा वाचनिकी एव, नात्र किमपि ज्ञापकं संभवतीति तात्पर्यं नाङ्गीकार्यम् । भाष्ये वचनरूपेण पठिताया अपि ज्ञापकत्वान्वेषणे कृते ज्ञापकत्वं संभवत्येव ।

परिभाषां विनापि यद्यपि वान्तो यि प्रत्ययः' ६.१.७९ इत्यादौ 'अमि पूर्वः ६.१.१०७ इतिवत् प्रत्यये यो यकारस्तस्मिन् परे अर्थात् प्रत्ययावयवे यकारे परे इत्यर्थेन गव्यमिति सिद्धम् गोयानमित्यत्र च दोषाभावो जातः । 'अपोभिः' ७.४.४८ इत्यत्रापि प्रत्ययावयवे भकारे परे इत्यर्थेनादोषः । किञ्च परिभाषास्वीकारे "एकहलादौ पूरयितव्येऽन्तरस्याम्" ६.३.५९ इत्यत्रादिग्रहणं व्यर्थम्, तथापि तत्र तत्रानेकविधकष्टकल्पनापेक्षया परिभाषास्वीकार एव साधीयान् । 'एकहलादौ ६.३ ५९ इत्यत्रादिग्रहणं तु स्पष्टार्थमेव ।

---

यह परिभाषा तदन्तविधि का अपवाद है । "येन विधिस्तदन्तस्य" इस सूत्र के भाष्य में यह वचन रूप से पढ़ी गयी है । भाष्यकार ने इसके ज्ञापक का उल्लेख नहीं किया है । इससे यह नहीं समझना चाहिए कि इसका कोई ज्ञापक है ही नहीं । "वान्तो यि प्रत्यये" इसी को इसका ज्ञापक माना जा सकता है; क्योंकि इस परिभाषा के अभाव में "येन विधिः" से तदन्त विधि होने पर यान्त प्रत्यय के परे वान्त आदेश हो यही सूत्रार्थ होगा । यान्त प्रत्यय कहीं मिलेगा ही नहीं; इस तरह सूत्र व्यर्थ हो जाइगा । व्यर्थ होकर इस परिभाषा का ज्ञापक बन जायगा ।

यदि यह कहें कि मयट् प्रत्यय के द्वारा सिद्ध गोमय शब्द से गोमयम् अतति इस विग्रह में क्विप् प्रत्यय करके गोमय पूर्वक अत् धातु से बने हुए रूप 'गोमयात् अम्' से 'गोमयातमाचष्टे' इस अर्थ में णिच् इष्ठवद्भाव होने के कारण टिलोप करने पर सिद्ध रूप ण्यन्त गोमयि से विच् प्रत्यय करके बने रूप गोमय् इत्यादि में यान्त प्रत्यय मिलने पर सूत्र चरितार्थ हो जायगा । इस लिए ज्ञापक नहीं हो सकता । पूर्वोक्त प्रयोग में 'अत्' रूप टि के लोप को स्थानि-

वद् भाव करके यान्त प्रत्यय का अभाव सिद्ध नहीं कर सकते; क्योंकि स्थानिवद्भाव नहीं हो पायगा; क्योंकि अचः परस्मिन् पूर्वविधौ १.१.५७ सूत्र अच् स्थान में हुए आदेश को ही स्थानिवद भाव करता है। यह आदेश तो अच् और हल् दोनो के स्थान में है। "असिद्धं बहिरङ्गमन्तरङ्गे (प० ५१) से भी टिलोप की असिद्धता नहीं हो सकती, नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः (प० ५२) यह निषेध कर देगी। भान्त प्रत्यय के असंभव होने के कारण कहीं भी चरितार्थ नहीं होने वाले "अपोभिः ७.४.४८ सूत्र को भी ज्ञापक नहीं माना जा सकता; क्योंकि सूत्रारम्भसामर्थ्यात् वहाँ यह भी माना जा सकता है कि 'भि' यह प्रत्यय का विशेषण नहीं है; किन्तु स्वतन्त्र शब्द है, इसलिए उसका अर्थ किया जायगा कि जो अप् शब्द प्रत्ययाव्यवहित पूर्व होते हुए भकाराव्यवहित पूर्व हो उसको तकारादेश हो; इस तरह सूत्र चरितार्थ हो जायगा। परिभाषा के अभाव में अजन्त उत्तरपद के परे रहते तत्पुरुष में 'कु' को कत् आदेश हो, ऐसा अर्थ करने पर "कद्रथः और कद्वदः की सिद्धि हो ही जायगी, "रथवदयोश्च" ६.३.१०२ सूत्र को भी ज्ञापक नहीं सिद्ध किया जा सकता, क्योंकि रथ और वद शब्द से आचार अर्थ में ण्यन्त से क्विप् करने पर रत् और वत् के परे रहते कद्रत् और कद्वत् में आदेश विधान के लिए सूत्र चरितार्थ हो जायगा। यदि कहें कि इतना ही प्रयोजन था, तो 'रद्वदोश्च' यही सूत्र करते 'रथवदयोश्च' में अदन्त शब्द का उच्चारण ज्ञापक हो सकता है, तो यह भी ठीक नहीं है; क्योंकि रम् और वद् धातु से क्विप् प्रत्यय करने पर सिद्ध रूप 'रत्' और वत् के साथ समास करने पर कुरत् और कुवत् में 'कत्' आदेश के निवारण के लिए अदन्त निर्देश चरितार्थ है। इस तरह परिभाषा में क्या ज्ञापक हो सकता है? इस प्रश्न का उत्तर यह है कि 'न ल्यपि' ६.४.६९ यही इस परिभाषा में ज्ञापक है। प्रदाय में "घुमास्था" ६.४.६६ से प्राप्त ईत्व के निवारण के लिए 'न ल्यपि' सूत्र बनाया गया है। परन्तु इस परिभाषा के अभाव में 'घुमास्था' सूत्र में "येन विधिः" से तदन्त विधि होने पर हलन्त कित् के परे रहते ईत्व करेगा 'प्रदाय' में 'य' के हलन्त न होने से ईत्व की प्राप्ति है ही नहीं, इसलिए ईत्व का निषेधक सूत्र "न ल्यपि" व्यर्थ होकर परिभाषा का ज्ञापन करता है।

यद्यपि 'प्रदायच्छत्रम्' में तुक् होने के बाद हलन्त ल्यप् मिलना संभव हो जायगा, वहाँ ईत्व के निवारण के लिए सूत्र चरितार्थ प्रतीत होता है; तथापि परिभाषा के अभाव में 'आतो लोप इटि च' यह सूत्र अजन्त आर्धधातुक के परे आत् का लोप किया करेगा; इस तरह 'प्रदाय' में ईत्व को बाधकर 'आ' का लोप हो जायगा। इस तरह 'न ल्यपि' सूत्र व्यर्थ ही है और वह ज्ञापक हो ही सकता है। इस तरह यह परिभाषा ज्ञापक सिद्ध ही है।

**अस्याश्च स्वरूपसती सप्तमी निमित्तम् । अत एव 'नेड्वशि कृती'त्यादौ वशादेः कृत इत्याद्यर्थलाभः ।।**

**इयं चा 'र्धधातुकस्येडि'ति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते । तेन'ङःसि धुडि'त्यादौ सादेः पदस्येति नार्थः ।।**

---

**स्वरूपसती सप्तमीति**—अस्याः परिभाषायाः प्रवृत्तौ स्वरूपसती सप्तमी निमित्तम् अर्थात् यत्रार्थतः सप्तमी नास्त्यपि, अधिकरणार्थोऽपि नास्ति, किन्तु ङि, ओस्, सुप् इति सप्तमी, स्वरूपतः प्रयुक्तास्ति, तत्रापीयं प्रवर्तते । अतएव नेड्वशि कृति ७.२.८ इत्यत्राधिकरणार्थप्रतीत्यभावेऽपि तदादिविधिः ।

'आर्धधातुकस्येड् वलि' ७.२.३५ इति सूत्रकरणेऽपि तदादिविधिना वलादेरार्धधातुकस्येत्यर्थलाभसम्भवात् आर्धधातुकस्येड्वलादेः ७.२.३५ इत्यत्रादिग्रहणेन कृतेन ज्ञायते यत् परिभाषेयं विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते । तेन ङः सि धुट् ८.३.२९ इत्यत्रोभयोः सप्तम्यन्तत्वाभावेन सादेः परस्येति नार्थः । नन्वेवं तीषसहलुभरुषरिषः ७.२.४८ इत्यत्र ति इति विशेषणे आर्धधातुकस्येति विशेष्ये चोभयत्र सप्तम्यभावादियं न प्रवर्तेत, तथाच तादेरित्यर्थो न स्यात् । एवं सेऽसिचि ७.२.५७ इत्यत्रापि सादेरित्यर्थो न स्यादित्यत आह **यथा...तादे निरूपितम्** । तत्र हि प्रोक्तम्—ति से इति सप्तम्यौ प्रथमार्थौ । आर्धधातुकस्येतिवत् वलादेरित्यप्यनुवर्तते । वलादिघटकवलपदार्थेऽभेदसम्बन्धेन तकारसकारयोरन्वयः, तथाच तकाररूपः अथवा सकारा-

---

इस परिभाषा की प्रवृत्ति में अधिकरणार्थप्रतिपादक सप्तमी निमित्त नहीं है किन्तु "ङि ओस् सुप्" इत्येतत् स्वरूप सप्तमी ही निमित्त है । इसीलिए "नेड्वशि कृति" ७.२.८ में वशादेः कृतः यह अर्थ इस परिभाषा की उपस्थिति के कारण तदादि की उपस्थिति होने पर हुआ । यहाँ सप्तमी स्वरूप सन्बन्धेन है ङि, ओस्, सुप्" इन सप्तमी विभक्तियों में से 'ङि' रूप सप्तमी का प्रयोग हुआ है । किन्तु अधिकरण अर्थ नहीं है । अर्थ तो षष्ठी का है तथापि परिभाषा की प्रवृत्ति हुई ।

यह परिभाषा वहीं लगती है, जहाँ विशेषण और विशेष्य दोनों में सप्तमी होती है । इसीलिए "आर्धधातुकस्येड्वलादेः" ७.२.३५ में आदि ग्रहण किया गया । अन्यथा 'वलि आर्धधातुकस्य' ऐसा न्यास करने पर भी तदादि विधि होने पर वलादेरार्धधातुकस्य इस प्रकार का अर्थ लाभ हो जाता, वलादि में आदि ग्रहण करने की क्या आवश्यकता थी ? विशेषण और विशेष्य दोनों जगह सप्तमी रहने पर ही इस परिभाषा की प्रवृत्ति होती है, ऐसा मानने से फल यह हुआ कि 'ङसि धुट्' ८.३.२९ में 'सादि पद' ऐसा अर्थ नहीं हुआ । यद्यपि यहाँ विशेषण 'सि' में सप्तमी थी, परन्तु 'पदस्य' में सप्तमी नहीं थी । इस लिए परिभाषा की प्रवृत्ति नहीं हुई । यदि "सादि पद को धुट्" हो ऐसा अर्थ होता, तो 'षट्त्सु' में धुट् नहीं होता, क्योंकि यहां पद सादि नहीं है अर्थात् पद के आदि में 'स' नहीं है ।

'तीषसह'सेऽसिचीत्यादौ यथा तादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ।।३४।।

---

भिन्नो यो वल् तदादेरार्धधातुकस्येत्यर्थः। एवञ्च तादिसादीत्याद्यर्थस्तत्र न परिभाषालभ्यः किन्तु तत्रादिरिति वर्तत एव।

अनया रीत्या कष्टकल्पनया यदि निर्वाहः साध्यते तदेयं परिभाषा निष्फलेत्यपि ध्वनितम्।।

।।इति शिवम्।। ३४

---

अब प्रश्न यह उठता है कि "तीषसह ७.२.८७ और से ऽसिचि" ७.२.५७ इत्यादि में भी तो षष्ठचन्त आर्धधातुक की ही अनुवृत्ति है। इस तरह विशेषण में सप्तमी होने पर भी विशेष्य में षष्ठी ही है, इसलिए यहाँ "तादेः आर्धधातुकस्य" इस प्रकार का अर्थ नहीं होना चाहिए परन्तु यहां जैसे "तादेरार्धधातुकस्य" इस प्रकार के अर्थ का लाभ होता है उसका शब्देन्दुशेखर में निरूपण किया गया है। वहाँ लिखा गया है कि सूत्र में 'ति' और 'से' में प्रथमार्थ में सप्तमी है और आर्धधातुकस्य" की तरह 'वलादेः' इस की भी अनुवृत्ति आयी है। "वलादि" शब्द में यद्यपि "वल्" पदार्थैकदेश है; तथापि उसमें अभेद सम्बन्ध से तकार और सकार का अन्वय होगा। इस तरह अर्थ हुआ कि तकाराभिन्न जो वल् और सकाराभिन्न जो वल्, तदादि आर्धधातुक को इट् हो। इस प्रकार इस परिभाषा की प्रवृत्ति के बिना ही वहाँ 'आदि' अर्थ का लाभ हो गया है। उस के लिए वहां इस परिभाषा की प्रवृत्ति नहीं की गयी है।

यद्यपि 'ति' में सप्तमी को और 'से' में सप्तमी को स्वतंत्र रूप से भेद सम्बन्ध से विशेषण मानकर तकाराव्यवहित पूर्व जो इषादि और सकाराव्यवहित पूर्व कृदादि धातु, उससे पर आर्धधातुक को इट् हो ऐसा अर्थ करने पर "तादि और सादि" अर्थ के बिना भी निर्वाह हो जाता; तथापि इस परिभाषा की जिन्दगी की सुरक्षा के लिए वैसा अर्थ न ही किया गया। यदि इस तरह की व्याख्या अपनायी जाय तो सब जगह इस परिभाषा के बिना ही निर्वाह हो जायगा, परिभाषा व्यर्थ हो जायगी और उसका जीवन खतरे में पड़ जायगा।

अनेक प्रकार की कष्टकल्पना करके परिभाषा के प्रत्याख्यान की अपेक्षा परिभाषा को स्वीकार करना ही सरल है, लघु है।

यदि पूर्वोक्त कष्टकल्पना को स्वीकार कर लें तो परिभाषा के बिना भी काम चलने के कारण परिभाषा व्यर्थ है, यह भी लघुशब्देन्दुशेखर में ध्वनित हुआ है।

।।इति शिवम्।। ३४

घटपटं घटपटावित्यादिसिद्धये आह—

**सर्वो द्वन्द्वो विभाषैकवद्भवति ॥३५॥**

---

**सर्वो द्वन्द्वोविभाषयैकवद्भवति ॥३५॥**

घटपटं घटपटावित्यादिसिद्ध्यर्थं परिभाषामारभते—**सर्वो द्वन्द्वो विभाषैकवद्भवति।** तेनैकवद्भावपक्षे 'घटपटम्' तद्विकल्पे घटपटौ इति च सिद्ध्यतः। नन्वनुद्भूतावयवभेदविवक्षायां समाहारद्वन्द्वे कृते एकवचनं सिद्धम्, उद्भूतावयवभेदविवक्षायामितरेतरयोगद्वन्द्वे द्विवचनादिकं सिद्धमेव। तथाच परिभाषेयं व्यर्था इति चेच्छ्रूयताम्, प्रकृत्या शब्दो द्विविधः कश्चिदुद्भूतावयवभेदकसमुदायबोधकः—यथा वृक्षशब्दः। अतएव वृक्षा इति बहुवचनान्त एव तत्र प्रयुज्यते। कश्चिच्च शब्दः तिरोहितावयवभेदकसमुदायबोधकः—यथा वनशब्दः। तत्रैकवचनान्तवनशब्द एव प्रयुज्यते वनमिति। एवं चाविशेषेण समाहारेतरेतरयोगयोर्विधानेऽपि स्वस्वभावात् घटपटादिशब्दः पूर्वोक्तयोरुभयोरेकविधसमुदायबोधक एव स्यात् तथा चैकस्मिन् घटपटादिशब्दे द्वन्द्वीभूतशब्दे उभयविवक्षाया अभावेनैकवचनद्विवचनान्तत्वं न सिद्ध्येदतः परिभाषावतार आवश्यकः। वस्तुतस्तु वृक्षवनादिकतिपयशब्दस्योभयविधसमुदायबोधकत्वाभावेऽपि लोकशब्दसर्वशब्दादौ सर्वे लोकाः सर्वो लोक इति यथोभयविधविवक्षा दृश्यते तथा द्वन्द्वीभूतघटपटादि शब्देऽपि उभयविधविवक्षा सम्भवति। तथाचेयं परिभाषा द्वन्द्वलब्धोभयविधविवक्षाफलमेव बोधयतीति ज्ञेयम्।

---

**सर्वो द्वन्द्वो विभाषयैकवद् भवति ॥३५॥**

"घटपटं और घटपटौ" दोनों प्रकार के प्रयोग बनते हैं। प्रथम में समाहार द्वन्द्व होने से "स नपुंसकम्" २.३.१७ से नपुंसक होता है और समाहारके एकत्व के कारण एकवचन भी होता है और दूसरा इतरेतरयोग द्वन्द्व के कारण सिद्ध होता है। दोनो प्रकार के प्रयोग इष्ट हैं। इसलिए परिभाषा मानी गयी है :—

"सर्वो द्वन्द्वो विभाषयैकवद् भवति"। अर्थात् सभी द्वन्द्व विकल्प से एकवत् अर्थात् एकवचन वाला होता है।

यदि कोई यह कहे कि उद्भूत अवयवों के भेदों की विवक्षा में इतरेतर योग द्वन्द्व, तथा तिरोहितावयवभेद विवक्षा में समाहारद्वन्द्व करने पर सर्वत्र सामान्य रूप से विवक्षा भेद के कारण द्विवचन-बहुवचन और एकवचन की सिद्धि हो ही जायगी यह परिभाषा व्यर्थ हैं, तो उसका उत्तर इस तरह दिया जा सकता है कि शब्द दो प्रकार का होता है कुछ शब्द ऐसे हैं, जो उद्भूतावयवभेद वाले समुदाय के बोधक हैं जैसे वृक्ष शब्द। इसीलिए बहुवचनान्त "वृक्षाः" का प्रयोग होता है। कुछ शब्द ऐसे हैं जो तिरोहित अवयव भेदवाले समुदाय के बोधक हैं:—जैसे 'वन' शब्द। इस तरह यद्यपि सामान्यतया इतरेतर योग और समाहार दोनों द्वन्द्वों का विधान हैं; तथापि द्वन्द्वीभूत भी घटपटादि शब्द एक समुदाय का बोधक होगा या तिरोहितावयव भेदवाले समुदाय का बोधक होगा।

**'द्वन्द्वश्च प्राणी'त्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः ॥**
**'चार्थे द्वन्द्व' इति सूत्रेण समाहारेतरयोरविशेषेण द्वन्द्वविधानान्न्यायसिद्धेयम् ॥**
**तिष्यपुनर्वस्वोरिति सूत्रस्थबहुवचनस्येति ग्रहणमस्या ज्ञापकम् । तद्धीदं तिष्य-**

---

परिभाषायां द्वन्द्वशब्दस्य जात्यैकत्व विवक्षया एकवचनान्तत्वं ज्ञेयम् । एतेन परिभाषायां द्वन्द्वपदस्य तन्त्रैकशेषावृत्तिष्वन्यतरेण सकलद्वन्द्वबोधकत्वे एकवचनानुपपत्तिः । एकविधद्वन्द्वबोधकत्वे सर्वेति विशेषणासंगतिः । लोक्यते दृश्यते इति लोक इति व्युत्पत्त्या लोकत्वं प्रत्येकं, समुदाये चोभयत्र पर्याप्तमित्युपपद्यते लोकशब्दे एकवचनादिकम् । द्वन्द्वत्वं तु न तथा प्रत्येकं समुदाये च पर्याप्तमित्यपास्तम् ।

नच पाणिपादम् इत्यादौ नित्यैकवद्भाव एव भवति । अतः सर्वो द्वन्द्वो विभाषैकवद्भवतीत्यत्र सर्व इति कथनमनुपपन्नमिति वाच्यम् परिभाषायां द्वन्द्वपदेन "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" २.४.२ इत्यादिप्रकरणाविषयस्यैव सर्वद्वन्द्वपदेन ग्रहणविवक्षणात् ।

चार्थे द्वन्द्वः २.२.२९ इत्यनेन समाहारे इतरेतरयोगे च द्वन्द्वः शब्दादिविशेषमनपेक्ष्य विधीयते । तथाच समाहारद्वन्द्वे समाहारस्यैकत्वादेकवचनम्, इतरेतरयोगे च यथायथं द्विवचनादिकं सिद्ध्यतीति न्यायसिद्धेयं परिभाषा, तथापि ज्ञापकत्वापेक्षा चेत् "तिष्यपुनर्वस्वोः" १.२.६३ इति बहुवचनग्रहणमस्या ज्ञापकम् इति गृहाण । **तद्धीदं तिष्यपुनर्वस्विति** अयं भावः कृतद्वन्द्वस्य तिष्यपुनर्वसुशब्दस्योद्भूतावयवभेदस्य समुदायस्य बोधकत्वे बहुवचनान्त एव तिष्यपुनर्वसुशब्दो लभ्यते । अतः इदं तिष्यपुनर्वसु इत्यस्य रूपस्यैवाभावेन व्यावर्त्याभावाद् बहुवचनग्रहणं व्यर्थम् । अनुद्भूतावयवभेदविवक्षायां तिष्यपुनर्वसु इत्येकवचनान्तस्येव संभवेन बहुवचनान्तस्यैवासंभवात् सूत्रमेव व्यर्थं सदिमां परिभाषां ज्ञापयतीति ।

---

प्रथम में बहुवचन या द्विवचन ही होगा और द्वितीय में एकवचन ही । दोनों रूप सिद्ध हों, इसलिए परिभाषा की आवश्यकता है ही ।

परिभाषा में "सर्वो द्वन्द्वः" के पहले "द्वन्द्वश्च प्राणीति प्रकरणाविषयः" यह जोड़ देना चाहिए । इस तरह फलितार्थ यह होगा कि "द्वन्द्वश्च प्राणि" २.४.२ इस प्रकरण में अप्रोक्त सभी द्वन्द्व विकल्प से एकवत् होता है "चार्थे द्वन्द्वः" २.२.२९ यह सूत्र सर्वत्र सामान्यरूप से समाहारद्वन्द्व और इतरेतर योग द्वन्द्व का विधान करता है । समाहारद्वन्द्व में एकवद् भाव होगा और इतरेतर में नहीं होगा । इस तरह सिद्ध हो गया कि 'द्वन्द्वश्च' इत्यादि इस सूत्रों के प्रकरण में अप्रोक्त सभी द्वन्द्व विकल्प से एकवद्भाव को प्राप्त करता है । इस तरह यह परिभाषा न्यायतः सिद्ध हो गयी ।

'तिष्यपुनर्वस्वोः' १.२.६३ इस सूत्र का बहुवचन ग्रहण इसका ज्ञापक है । क्योंकि तिष्यपुनर्वसु शब्द यदि उद्भूतावयवभेद समुदाय का बोधक है, तब तो

**पुनर्वस्वित्यत्र तद्व्यावृत्त्यर्थम् । न चैवमप्यत्र 'जातिरप्राणिनामि'ति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम् । तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिन इति वाच्यम् । 'आपोमयः प्राण' इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् ।। स्पष्टं चेदं 'तिष्यपुनर्वस्वो'रिति सूत्रे भाष्ये ।। अतएव 'द्वन्द्वश्च-प्राणी'त्यादौ प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ।३५।।**

---

द्वन्द्वश्च प्राणितूर्य २.४.२ इति प्रकरणविषय एवायमिति ज्ञापितेऽपि चारितार्थ्याभावाद् "यावदनुपपन्नं तावत्सर्वं ज्ञापयतीति न्यायेन जातिरप्राणिनाम् २.४.६ इति सूत्रस्यापि वैकल्पिकत्वमनया ज्ञाप्यते । तेन जातिरप्राणिनाम् २.४.६ इति नित्यैकवद्भावेन तिष्यपुनर्वस्वित्यत्र बहुवचनाभावादिदं सूत्रं (तिष्यपुनर्वस्वोः १.२.६३) इति सूत्रं व्यर्थमिति न शङ्क्यम् ।

आपोमयः प्राणः इतिश्रुतेः जलेन विना ये ग्लायन्ते ते प्राणिन इति प्रतीत्या तिष्यपुनर्वसु प्रभृतिनक्षत्राणामप्राणित्वमस्त्येव । तानि जलेन विना ग्लायमानानि न दृश्यन्ते । अतस्तत्र जातिरप्राणिनाम् २.४.६ इत्यस्य प्राप्तिरस्त्येव ।

तिष्यपुनर्वस्वोः १.२.६३ इति सूत्रे भाष्येऽस्याः परिभाषाया विषये पूर्वोक्तं तत्थ्यं स्पष्टमुक्तम् । तथाहि—बहुवचनस्येति किमर्थम् ? उदितं तिष्यपुनर्वसु । कथं चात्रैकवचनम् । जतिद्वन्द्व एकवद्भवतीति । 'अप्राणिनाम्' इति प्रतिषेधः प्राप्नोति । एवं तर्हि सिद्धे यद्बहुवचनग्रहणं करोति तज्ज्ञापयत्याचार्यः सर्वो द्वन्द्वो विभाषयैकवद्भवतीति । किमेतस्य ज्ञापने प्रयोजनम्—बाभ्रवशालङ्कायनम् बाभ्रवशालङ्कायना इत्येतत् सिद्धं भवति । अथवा नात्रभवन्तः प्राणिनः, प्राणा एवात्र भवन्तः ।

---

बहुवचन होगा ही; इदं 'तिष्यपुनर्वसु' यह रूप कभी होगा ही नहीं; फिर उसकी व्यावृत्ति के लिए किया गया बहुवचनग्रहण व्यर्थ होकर इसका ज्ञापक बनेगा । तिरोहितावयवभेदक—समुदाय—बोधक यदि मानें तो एकवचनान्त ही मिलना सम्भव है। इस तरह बहुतवत्रनान्त का मिलना असंभव होने से सूत्र ही व्यर्थ है। इसलिए यह सूत्र ज्ञापन करता है कि दोनों प्रकार की विवक्षा माननी चाहिए । परिभाषा ज्ञापित होने पर तो उभयविवक्षा होने से बहुवचनान्त और एकवचनान्त दोनों रूपों के सम्भव होने से "सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवद्" इस न्याय से बहुवचन ग्रहण चरितार्थ हो गया ।

यदि यह कहें कि परिभाषा मानने पर भी जातिरप्राणिनाम्" २.४.६ से नित्य एकवद्भाव हो जाने के कारण बहुवचन के नहीं मिलने से सूत्र व्यर्थ ही है; अथवा यों कहिए कि यह उदाहरण तो "द्वन्द्वश्च प्राणि" इस प्रकरण का ही है। इसलिए परिभाषा के ज्ञापित होने पर भी चारितार्थ्याभाव ही रहा, तो इसका उत्तर यह होगा कि उसकी विकल्पता का भी यह सूत्र ज्ञापन करेगा ।

**अथवा** इति प्रतीकमादायात्र कैयटः—नह्येतेषु लोके प्राणिव्यवहारः सिद्धयति भावः। प्राणा एवेति प्रतीकमादाय कैयटो लिखति:—तदधीनस्थितित्वात्प्राणिनामेत एव प्राणा उच्यन्ते।

परिभाषास्वीकारादेव द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २.४.२ इत्यादिना एषां समाहार एवेति नियमः क्रियते नतु एषां प्राण्यङ्गादीनामेव समाहार इति नियमः। एतत्परिभाषाप्रतिपाद्यार्थसामञ्जस्याभावात्। समाहारस्यैकत्वात् प्राण्यङ्गदीनां एकवद्भावे सिद्धे सूत्रं व्यर्थं सञ्ज्ञापयति—एषां समाहार एवेति। तेन समाहार द्वन्द्वे कृते तत्रोद्भूतावयभेदविवक्षालभ्यः एतत्—परिभाषालभ्यो वा द्विवचनान्तादिर्न जायत इति भावः।

॥इति शिवम्॥ ३५

---

यह तो नहीं कह सकते कि ये "तिष्यपुनर्वसु" प्राणी हैं; क्योंकि "आपोमयः प्राणः" इस श्रुति के अनुसार बिना पानी के जो दुःख का अनुभव करे; उसे ही प्राणी कहा जायगा, इस तरह ये भी अप्राणी ठहरते हैं। इस तरह यहाँ जातिरप्राणिनाम् २.४.६ सूत्र की प्रवृत्ति में कोई बाधा नहीं है। यही बहुवचन ग्रहण यह भी ज्ञापन करता है कि प्राण्यङ्गादीनां समाहार एव। इसी बहुवचनग्रहण के कारण प्राण्यङ्गादीनामेव समाहारः" ऐसा विपरीत नियम नहीं हुआ।

'तिष्यपुनर्वस्वोः' १.२.६३ सूत्र के भाष्य में इस परिभाषा के विषय में हम यह उल्लेख पाते हैं—इस सूत्र में बहुवचन ग्रहण क्यों किया गया? उदितं तिष्यपुनर्वसु में दोष न हो—द्विवचन न हो, इसलिए। यहां एकवचन कैसे हुआ? जातिवाचक शब्दों का द्वन्द्व समास एकत्व विशिष्ट होता है। वाह, यहाँ तो अप्राणिनाम्' से निषेध हो जायगा। इस तरह इन्हें अप्राणी मानकर "जातिरप्राणिनाम्" २.४.६ से एकवद्भाव हो जाने पर बहुवचन कहीं मिलेगा ही नहीं ऐसा समझते हुए भाष्यकार ने आगे कहा कि इस तरह इष्ट सिद्ध होने पर भी जो बहुवचन ग्रहण किया गया; उसके द्वारा आचार्य (पाणिनि) यह बताना चाहते हैं कि सभी द्वन्द्व विकल्प से एकवत् होता है। इस परिभाषा का क्या प्रयोजन है? "बाभ्रवशालङ्कायनम्, बाभ्रवशालङ्कायनाः" यहाँ एकवचन और उसके विकल्प होने से बहुवचन की सिद्धि हुई।

तिष्य और पुनर्वसु आदि को अप्राणी बताने के लिए भाष्यकार ने कहा कि ये प्राणी नहीं है, किन्तु ये (आप) प्राण ही हैं।

कैयट ने बताया कि लोग इन्हें प्राणी नहीं मानते हैं। इसलिए ये प्राणी नहीं हैं। दूसरी बात यह है कि प्राणियों की स्थिति इन्हीं के अधीन है। इसलिए इन (नक्षत्रों) को प्राण कहा गया है। जिलाने की क्षमता के कारण जल जैसे जीवन कहलाता है, वैसे ही ये भी स्वयं जीवन हैं; जीवनवान् नहीं हैं।

॥इति शिवम्॥ ३५

**सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥३६॥**

'व्यत्ययो बहुलमि'ति सूत्रे भाष्ये बहुलमिति योगविभागेन 'षष्ठीयुक्तश्छन्दसी'ति सूत्रे वेति योगविभागेन चैषा साधिता ॥ तेन प्रतीपमन्य उर्मिर्युध्यतीत्यादि सिद्धम्। युध्यत इति प्राप्नोति ॥३६॥

---

**सर्वेविधयश्छन्दसि विकल्पन्ते (विकल्प्यन्ते) ॥३६॥**

छन्दसि दृष्टानुविधित्वाच्छन्दसि सर्वे विधयो विकल्पेन भवन्ति। छन्दसि प्रयुक्तरूपाणां यथा सिद्धिस्तथा सूत्राणि प्रवर्तनीयानि निवर्तनीयानि च। व्यत्ययो बहुलम् ३.१.८५ इति सूत्रे भाष्ये बहुलमिति योगविभागेन परिभाषेयं साधिता। तत्र बहुलमिति पृथग्योगः। तत्र च छन्दसीत्यनुवर्तते। तेन छन्दसि सर्वे विधयो बहुलप्रकारेण भवन्तीत्यर्थेनेयं परिभाषा सिद्धा। तथाहि "व्यत्ययो बहुलम्" ३.१.८५ इति सूत्रस्थं भाष्यमित्थमस्ति। योगविभागः कर्तव्यः—"व्यत्ययः" 'व्यत्ययो भवति स्यादीनामिति।.........ततो बहुलम् 'बहुलं छन्दसि विषये सर्वेविधयो भवन्तीति॥

ननु बहूनर्थान् लाति ददातीति बहुलमिति व्युत्पत्यानेकप्रयोजनकं बहुलग्रहणम् तथाचः—

"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव विधेविधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति" इत्यत्र प्रतिपादितेषु प्रयोजनेषु विभाषाप्येकं यद्यपि वर्तते तथापि तेन केवलं विधीनां वैकल्पिकत्वज्ञापनमनुचितमिति विचार्याह—षष्ठी युक्तश्छन्दसि वा १.४.९ इति सूत्रे वेति योगविभागेनेत्यादि। अत्र वेति योगविभागं कृत्वा तत्र छन्दसीत्यनुवृत्य छन्दसि वा भवन्ति सर्वे विधय इति शेषः। तेनैषा परिभाषा लब्धा। तथा च भाष्यम्—षष्ठीयुक्तश्छन्दसि वा १.४.९ योग विभागः कर्तव्यः। षष्ठीयुक्तश्छन्दसि। षष्ठीयुक्तः पतिशब्दश्छन्दसि घिसंज्ञो भवति। ततो वा—वा छन्दसि सर्वे विधयो भवन्ति।...तेन प्रतीपमन्य ऊमिर्युध्यतीति सिद्धम् अत्र हि—अनुदात्तङित आत्मनेपदम् १.३.१३ इति प्राप्तमात्मनेपदं परिभाषयाऽनया विकल्प्यते तेन परस्मैपदं जायत इति भावः।

---

**सर्वे विधयश्छन्दसि विकल्पन्ते (विकल्प्यन्ते) ॥३६॥**

"सर्वे विधयश्छन्दसि विकल्प्यन्ते" छन्द याने वेद में सभी कार्य विकल्प से होते हैं। व्यत्ययो बहुलम्" ३,१.८५ इस सूत्र में भाष्यकार ने 'बहुलम्' इस को अलग योग माना। उस 'बहुलम्' की सर्वत्र अनुवृत्ति की गयी। इसलिए छन्द में प्रवृत्त होने वाले सभी सूत्र बहुल प्रकार से प्रवृत्त हुए। इसलिए वेद में सभी सूत्रों की प्रवृत्ति विकल्प से हुई। अथवा "षष्ठीयुक्तश्छन्दसि वा" १.४.९ में 'वा' को अलग योग के रूप में माना गया। उसकी सर्वत्र अनुवृत्ति की गयी। इसलिए छन्द में प्रवृत्त होने वाले सभी सूत्र विकल्प से लगने वाले सिद्ध हुए। यही कारण है 'प्रतीप-

ननु 'क्षिय' इत्यादावियङ्कथमत आह—

**प्रकृतिवदनुकरणं भवति ॥३७॥**

क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः ॥ तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति 'क्षियो दीर्घादि'ति सूत्रे भाष्ये स्पष्टम् ॥३७॥

---

**प्रकृतिवदनुकरणं भवति —॥३७॥**

ननु क्षियो दीर्घात् ८.२.४६, क्षियः ६.४.५९ इत्यादौ क्षिय इत्यत्रेयङ् न स्यात् 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' ६.४.७७ इत्यनेनेवर्णोवर्णान्तधातोरियङुवङ्विधानात् इह च क्षि इत्यस्यानुकृतस्य प्रातिपदिकत्वात्। अतएव निर्दिष्टा सुब्विभक्तिः संगच्छते इत्यत आह—प्रकृतिवदनुकरणं भवति इति। अनुकरणं प्रकृतिवद् भवति। क्षियो दीर्घात् इत्यादौ क्षिय इति क्षि धातो र्धातुपाठपठितस्यानुकरणम्। अतएवानयापरिभाषया प्रकृतौ स्थितस्य धातुत्वस्यानुकरणाद्धातुत्वेनेयङ् सिद्ध्यतीति भावः।

---

मन्य उर्मिर्युध्यति" यहाँ 'युध्यति' में 'अनुदात्तङित आत्मनेपदम्" १.३.१२ की विकल्प से प्रवृत्ति हुई। इसलिए एक पक्ष में परस्मैपद होकर 'युध्यति' बना। या बहुल ग्रहणात्' अनुदात्त ङित से आत्मने पद न होकर परस्मैपद हुआ। "बहूनर्थान् लाति ददाति" इति बहुलम् इस व्युत्पत्ति के अनुसार बहुलग्रहण वाले सूत्र की कहीं निवृत्ति, कहीं विकल्प से प्रवृत्ति, होती है और कहीं वह इष्ट प्रयोग बनाने के लिए और ही विधान करता है। इसीलिए कहा गया है—

"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

जब बहुल के पूर्वोक्त अनेक अर्थ हैं तब बहुल को केवल विभाषापरक मानना यदि किसी को न अच्छा लगे तो उसके लिए उपायान्तर बताते हुए लिखते हैं—

'वा' इति योगविभागम्......। 'वा' इस योग विभाग से छान्दस विधियों की वैकल्पिकता पूर्वोक्त रीति से सिद्ध हो जाती है।

॥इति शिवम्॥ ३६

**प्रकृतिवदनुकरणं भवति ॥३७॥**

"क्षियो दीर्घात्" ८.२.४६ इस सूत्र में 'क्षियः' यह रूप पञ्चमी एकवचन में "अचिश्नुधातु" ६.४.७७ इस सूत्र से इयङ् करके बनाया गया है; परन्तु यहां धातुत्व के अभाव के कारण 'इयङ्' नहीं होना चाहिए; क्योंकि यहाँ 'क्षि' यह लक्ष्य में स्थित 'क्षि' धातु का अनुकरण है। अनुकरण में क्रियावाचकता नहीं होने से धातुत्व नहीं माना जा सकता। इसलिए धातु को होने वाला 'इयङ्' यहाँ नहीं होना चाहिए। इसलिए यहाँ 'इयङ्' की सिद्धि के लिए परिभाषा मानते हैं "**प्रकृति-**

क्षियः ८.२.७७ इति सूत्रे इयङ्निर्देशोऽस्या ज्ञापकः। यदि प्रकृतिवदनुकरण-मिति न स्यात्तदा धातुत्वाभावदियङोऽ प्राप्त्या निर्देशासंगतिः स्पष्टैव।

नचैवं तस्य धातुत्वेन प्रातिपदिकत्वाभावः, अधातुरिति पर्युदासात् तथाच सुब्निर्देशासंगतिरितिवाच्यम्, "क्षियः" ८.३.७७ इत्यादावेव सुब्निर्देश-दर्शनेन तस्या अनित्यत्वज्ञापनात्। सर्वमिदं क्षियो दीर्घादित्यत्र भाष्ये स्पष्टम् इत्थं हि तत्रत्यं भाष्यम्:—क्षियो दीर्घात् ८.२.४६—दीर्घादिति किमर्थम्। अक्षित-मसि मा मे क्षेष्ठाः॥ दीर्घादिति शक्यमकर्तुम्। कस्मान्न भवति अक्षितमसि मा मे क्षेष्ठाः निर्देशादेवेदमभिव्यक्तं दीर्घस्य ग्रहणमिति। यदि ह्रस्वस्य ग्रहणं स्यात्क्षे-रित्येव ब्रूयात्॥ नात्र निर्देशः प्रमाणं शक्यं कर्तुम्। यथैव ह्यत्राप्राप्ता विभक्ति-रेवमियङादेशोऽपि। नात्राप्राप्ता विभक्तिः। सिद्धात्र विभक्तिः प्रातिपदिकादिति। कथं प्रातिपदिकसंज्ञा। अर्थवत्प्रातिपदिकमिति। ननु चाधातुरिति प्रतिषेधः प्राप्नोति नैष धातुः। धातोरेषोऽनुकरणः। यद्यनुकरणः इयङादेशो न प्राप्नोति। प्रकृतिवद-नुकरणं भवतीत्येवमियङादेशो भविष्यति। यदि प्रकृतिवदनुकरणं भवतीत्युच्यते स्वाद्युत्पत्तिर्न प्राप्नोति। एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते। अथा-प्येतन्नास्त्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते इति। एवमपि न दोषः। अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या। तद्यथा नेर्विशः (१.३.१७) परिव्यवेभ्यः क्रियः (१.३.१८) विपराभ्यां जेः (१.३.१७) अथाप्येतन्नास्ति प्रकृतिवदनुकरणं भवतीति। एवमपि न दोषः धातोरजादौ यद्रूपं तदनुक्रियते॥

---

**वदनुकरणं भवति**" अर्थात् अनुकरण प्रकृतिवत् होता है। अनुकरण में अनुकार्य का सारा धर्म आता हैं। इसलिए मूल 'क्षि' में रहने वाला धातुत्व, सूत्रनिष्ठ अनुकृत 'क्षि' में भी आयेगा। इसलिए इयङ् होगा। इस "क्षियो दीर्घात्" ८.२.४६ सूत्र में किया गया यही इयङ्विशिष्ट निर्देश परिभाषा का ज्ञापक है।

"क्षियो दीर्घात्" में पञ्चमी विभक्ति भी लगायी गयी है। पञ्चमी-विभक्ति प्रातिपदिक संज्ञा होने पर ही आ सकती है। प्रातिपदिक संज्ञा के लिए अधातु होना आवश्यक है, क्योंकि 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" १.२.४५ में "अधातुः" कहा हुआ है। अतः "क्षियः" को धातुभिन्न भी मानना पड़ेगा। अतः मानना चाहिए कि यह परिभाषा अनित्य भी है। इस तरह "क्षियः" में लगायी गयी प्रातिपदिकसंज्ञामूलक विभक्ति के कारण प्रकृतिवदनुकरणं न भवति, यह सिद्ध होता हैं और इयङ् विधान यह सिद्ध करता है कि प्रकृतिवदनुकरणं भवति"। इसीलिए प्रवाद चल पड़ा है कि इष्ट प्रयोग की सिद्ध के लिए जैसा उचित हो वैसा मानना चाहिए।

यदि प्रकृतिवदनुकरण से इष्ट प्रयोग सिद्धि होता हैं तो अनुकरण को 'प्रकृतिवत् मानना चाहिए और यदि प्रकृतिवत् अनुकरण न मानने से इष्ट प्रयोग सिद्ध होता हो तो वैसी व्यवस्था माननी चाहिए। इसीलिए लोग कहते हैं "प्रकृति-**वदनुकरणं भवति न वा भवतीति**"।

**ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षे कथं पदत्वमुभयत आश्रयणेऽन्तादिवद्भावाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह—**

**एकदेशविकृतमनन्यवत् ॥३८॥**

---

अत्राथापीति प्रतीकमादाय कैयटः—

इहानुकर्ता कदाचित्सामान्यमनुकरोति कदाचिद् विशेषं तत्र यदा समान्यमनुक्रियते तदा विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात्प्रकृतावदृष्टत्वादनुकरणेऽप्यभावो यदा तु विशेषोऽनुक्रियते तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्तते। तत्र यदा धात्वधातुसामान्यं क्षिमात्रमनुक्रियते तदेयङोऽप्राप्तिरिति चिक्षियतुरित्यादौ कृतेयङादेशस्येदमनुकरणमिति दीर्घादिति वक्तव्यम्।

॥इति शिवम् ॥ ३७

**एकदेशविकृतम्—३८**

रामौ मे प्रभू स्त इत्यादौ ममेत्यस्य 'मे' आदेशने सम्पादनाय रामावित्यस्य पदत्वमावश्यकम्। तच्च सुप्तिङन्तं पदम् १. ४. १४ इत्यनैव सम्पाद्यम्। कार्यकालपक्षे च यदा कार्यं तदा संज्ञेति सिद्धान्ताद् रामौ इत्यस्य वृद्धौ कृतायां सुबन्ततदादित्वाभावात्सूत्राप्राप्त्या पदत्वमसंभवम् प्रकृतिप्रत्ययविभागसंमोहात् राम्+औ

---

'क्षियो दीर्घात्' ८.४.४६ इस सूत्र के भाष्य में "क्षियः" इस निर्देश की असंगति बताते हुए भाष्यकार ने कहा कि यदि अनुकरण को प्रकृतिवत् मानते हैं, तो यहाँ 'क्षि' को धातु-प्रकृति के तुल्य मानना पड़ेगा। इस स्थिति में अधातु नहीं होने से विभक्ति (ङसि) नहीं आयेगी। यदि उसे प्रकृतिवत् नहीं मानते हैं, तो धातुत्व के अभाव में अचिश्नु' से इयङ् नहीं होगा। इस प्रश्न के समाधान के लिए कहा गया है। कि "प्रकृतिवत् अनुकरणं भवति" यह मानने पर इयङ् हो जायेगा। फिर धातु स्वीकार करने पर प्रातिपदिक संज्ञा कैसे होगी, और उसके अभाव में बिभक्ति कैसे आयेगी। इस लिए यदि माने कि प्रकृतिवत् अनुकरण होते हुए भी अतिदेश के द्वारा आरोपित धर्मवालों में स्वाश्रयप्रयुक्त कार्य भी होते है, तो स्वभावतः अनुकरण में विद्यमान अधातुत्व के कारण प्रातिपदिकत्व प्रयुक्त कार्य हो जायगा और अतिदेशसिद्ध धातुत्व के कारण इयङ्। इस तरह अनुकरण को प्रकृतिवत् होने और नहीं होने की बात सिद्ध हो जाती है।

॥इति शिबम् ॥३७

**एकदेशविकृतम् ३८.**

'रामौ' इत्यादि में वृद्धि कर देने पर एकादेश के द्वारा सुप् का और प्रकृति का अपहार हो जाने से सुबन्त तदादि नहीं होने से "सुप्तिङन्तं पदम्" १.४.१४ की प्राप्ति नहीं होने पर कार्यकाल पक्ष में पद संज्ञा नहीं होगी।

इति विभज्य अन्तादिवच्च ६. १. ८५ इत्यनेन 'औ' इत्यत्र सुप्त्वम् परादिवद्भावेन, राम् इत्यत्र च पूर्वान्तवद्भावेन प्रकृतित्वञ्चानीय यस्माद्विहितः यश्च विहित इति तत्त्वसम्पादनद्वारेण सुबन्ततदादित्वसम्पादनं त्वशक्यम् उभयत आश्रयणे नान्तादिवत् (व्याडिप० ४४) इति तन्निषेधात् । अतः पदत्वसम्पादनाय परिभाषामवतारयति एकदेशेविकृतमनन्यवत् इति । मूले यद्यपि "कार्यकालपक्षे" इत्युक्तम् तथापि तद्-यथोद्देशपक्षस्याप्युपलक्षणमिति ज्ञातव्यम् । अतएव क्वचित्पुस्तके म. म. अभ्यंकर कृतटीके "कार्यकालपक्षेऽपि" इति अपिघटितः पाठः । यथोद्देशपक्षेऽपि भविष्यति किञ्चिदनेन प्रयोजनमिति कृत्वा राम+औ इति स्थितौ विहिता पदसंज्ञा एकादेशे-कृते समुदाये न स्वीकर्तुं शक्या समुदायस्यान्यत्वात् । यद्यपि स्थानिवदादेशोऽनल् विधौ १. १. ५६ इत्यत्रादेशग्रहणसामर्थ्यात् सूत्रे आनुमानिकस्थान्यादेशभावस्यापि-ग्रहणं; तथापि राम+औ इत्यस्य स्थाने जाते रामावित्यानुमानिकादेशे राम+औ इति विसन्धित्वं नानेतुं शक्यते, अशास्त्रीयत्वात् । नचान्तादिवद्भावेन औ इत्यत्र सुप्त्वं व्यपदेशिवद्भावेन यस्माद्विहितस्तदादित्वञ्चानेतुं सुशकमिति वाच्यम् एतादृशधर्मस्य व्यपदेशिवद्भावेनानयनासंभवात् । एवञ्च तत्र पदत्वसम्पादनाय एकदेशविकृतमिति परिभाषैव शरणम् ।

---

अन्तादिवद्भाव से काम नहीं चल सकता, क्योंकि यदि एकादेश 'औ' में परादिवद्भाव से सुप्त्व लाने का यत्न करेंगे; तो राम् तदादि (प्रकृति) नहीं सिद्ध होगा । यदि साथ २ एकादेश विशिष्ट 'रामौ' में पूर्वान्तवद्भाव से तदादित्व लाने की भी कोशिश की गयी तो "उभयत आश्रयणे नान्तादिवत्" (व्याडि प० ४४) इस परिभाषा से न सुप्त्व आ पायेगा और न तदादित्व ही, ऐसी स्थिति में कार्यकालपक्ष में "रामौ" में पदसंज्ञा एक बड़ी समस्या बन जायगी उसके समाधान के लिए परि-भाषा मानते हैं—**'एकदेशविकृतमनन्यवत्'**

जिसके एकदेश में कुछ विकार हो गया है, वह अन्यवत् नहीं होता है किन्तु स्ववत् ही होता है । राम् में तदादित्व इस न्याय से आजायगा और 'औ' में सुप्त्व परादिवद्भाव से आजाने के कारण सुबन्त तदादि होने से पदसंज्ञा हो जायगी ।

यद्यपि नागेश ने भ-पदसंज्ञा के विषय में यथोद्देश पक्ष को ही स्वीकार किया है, दूसरी बात यह कि माने हुए दो पक्षों में से किसी एक पक्ष के आश्रयण से यदि इष्ट-सिद्धि होती है; तो पक्षान्तर का अवलम्बन उचित नहीं माना गया है, यहाँ यथोद्देश पक्ष में इष्ट सिद्धि है ही, इसलिए पूर्वोक्त ग्रन्थ को प्राचीन आचार्यों के मतानुसार मान कर नागेश के ग्रन्थों में पूर्वापरविरोध का परिहार करना चाहिए । इतना ही नहीं, उभयत आश्रयण में भी अन्तादिवद्भाव हुआ करता है । इसलिए निषेधो-द्भावन भी प्राचीन के मतानुसार ही मानना चाहिए । वस्तुतः "रामौ" में पद-संज्ञा, इस परिभाषा का फल नहीं है; क्योंकि यथोद्देश पक्ष में 'राम औ' में की गयी

वस्तुतस्तु यथोद्देशपक्षे राम+औ इत्यवस्थायां कृतं पदत्वं रामौ इत्यत्रानुमानिकादेशे स्थानिवद्भावेनानेतुं शक्यत एव । अतएव मूले "कार्यकालपक्षे" इत्युक्तम् । एवञ्चापिशब्दरहित एव पाठः साधीयान् ।

ननु भपदसंज्ञाविषये यथोद्देशपक्ष एवेति यथोद्देशं संज्ञापरिभाषं कार्यकालं संज्ञापरिभाषम् इति परिभाषानिरूपणावसरे नागेशेन स्वयमेवोक्तम् तेन ग्रन्थेन सह विरोधादिदमवतरणमसंगतम् । अथ च एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरमवलम्ब्य दोषदानमयुक्तमिति सिद्धान्तानुसारेण यथोद्देशपक्षेण लक्ष्यसिद्धेः कार्यकालपक्षे दोषदानस्यायुक्तत्वादवतरणमिदमसंगतमिति चेत् सत्यम्, प्राचां मतमनुसृत्येदमवतरणम् । उभयत आश्रयणे नान्तादिवदिति कथनमपि प्राचां मतमनुसृत्यैव । स्वस्य मतेन तूभयत आश्रयणेऽप्यन्तादिवद्भावो भवत्येव ।

---

पद संज्ञा स्थानिवद्भाव से 'रामौ' में भी आ जायगी । राम+औ के स्थान में रामौ आदेश हुआ है । इस प्रकार के आनुमानिक स्थान्यादेशभाव की कल्पना करके स्थानी राम+औ में रहने वाले धर्म का 'रामौ' में आनयन संभव है । इसलिए स्थानिवद्भाव से ही काम चल जायगा, इसे इस परिभाषा का फल नहीं मानना चाहिए ।

राम+औ इस अवस्था में पदसंज्ञा और वृद्धि आदेश दोनों की प्राप्ति होते हुए भी कृताकृतप्रसंगी (पद संज्ञा न करने और न करने दोनों ही स्थिति में प्राप्त होने के कारण) वृद्धि-आदेश 'नित्यत्वात्' हो जायगा; तब तो यथोद्देशपक्ष में भी पद संज्ञा की सिद्धि नहीं होगी; ऐसा नहीं कहना चाहिए, अपर निमित्तक होने के कारण 'अन्तरङ्गत्वात्' पहले पद संज्ञा ही हो जायगी, विरोध नहीं होने के कारण बाध्यबाधकभाव हो नहीं सकता, इसलिए समकाल में ही पदसंज्ञा की प्रवृत्ति हो जायगी । इस लिए 'रामौ' को इस परिभाषा का फल मानने की आवश्यकता नहीं है । 'चकार' यहां कृ धातु से लिट्लकार में द्वित्व, पूर्व को अभ्यास संज्ञा, उरदत्व, रपरकरने पर, कर कृ इस अवस्था में 'कर' में अभ्यासत्व नहीं होने के कारण हलादि शेष नहीं होगा, यहाँ अभ्यास के अनर्थक होने के कारण 'रामौ' की तरह आनुमानिक स्थानी और आदेश की कल्पना नहीं की जा सकती; क्योंकि सार्थक खण्ड में ही आनुमानिक स्थान्यादेश भाव की कल्पना की जाती रही है । वहाँ 'कर' को फिर अभ्यास संज्ञा भी नहीं कर सकते; क्योंकि वह द्विरुक्त धातु का पूर्वभाग नहीं है । यह परिभाषा मानने पर तो 'कृ' यहां पर स्थित द्विरुक्त धातु के पूर्व भागत्व को या अभ्यासत्व को 'कर्' में लाकर हलादि शेष हो जाता है । इस तरह यद्यपि चकार' को इस परिभाषा का फल माना जा सकता है; तथापि यहाँ ऋ में, जो एक मात्रावाला है और एकमात्रा के उच्चारण में लगने वाले काल का है, विकार हुआ है, वह विकार अर्धाधिकविकार है । इसलिए यह परिभाषा लग ही नहीं सकती ।

वस्तुतस्तु रामावित्यादौ यथोद्देशपक्षे राम+औ इत्यवस्थायां कृतायाः पदसंज्ञाया रामा इत्यत्र स्थानिवद्भावेनानयनं सुलभम्। तत्र चादेशग्रहणेनानुमानिकादेशस्यापि ग्रहणमिति भाष्योक्तेः। अत एव भवतु इत्यत्र पदत्वम्। 'चकार' इत्यत्र तु कृधातोर्लिटि द्वित्वे पूर्वस्याभ्याससंज्ञायाम् उरत् ७. ४. ६६ इत्यनेनात्वे रपरत्वे च कृते कर्कृ इत्यवस्थायामनया परिभाषया कृइत्यत्र स्थितस्याभ्यासत्वस्य करित्यत्रानयनेन हलादिशेषसम्पादनमपि नास्याःफलम्, अर्धाधिकस्य मात्राकालिकस्य ऋकारस्य विकृतत्वेन परिभाषाया अप्रवृत्तेः। ननु कथं तत्र हलादिशेषः, न चानुमानिकस्थानिवद्भावेन स्वीकृतेन तत्सिद्धिः, अभ्यासस्यानर्थकत्वेन तत्रार्थवत्तायां कल्पनीयस्यानुमानिकस्थान्यादेशभावस्याप्रवृत्तेरिति चेत्, श्रूयताम्, द्वित्वशास्त्रीय—विधेयतावधिकपूर्वस्य द्वित्वशास्त्रीयोद्देश्यताश्रयसमभिव्याहृतवर्णाघटितस्याभ्यास—संज्ञा भवतीत्यर्थस्वीकारेणाभ्याससंज्ञासिद्धेः। अत्र हि कर्कृ इत्यत्र करित्यस्य 'द्वित्व—शास्त्रीय—विधेयतावधिकपूर्वत्वं वर्तते तच्छास्त्रीयोद्देश्यतासमभिव्याहृतेन द्वित्वपूर्वकालिकेन वर्णेन उपसर्गावयवादिनाऽघटितत्वं च वर्तत इति परिभाषां विनापि सिद्धत्यभ्याससंज्ञा। अथवा द्वित्वाश्रयविकृतिघटितस्याप्यभ्यास-संज्ञा भवतीति पूर्वोभ्यासः ६. १. ४ इत्यस्यार्थकरणेनात्र कर् इत्यस्य द्वित्वाश्रयकृविकृतत्वाद् भवत्यभ्याससंज्ञा। प्रहिणोतीत्यत्र प्र हितीत्यवस्थायां श्नुप्रत्यये गुणणत्वयोः प्राप्तयोः हिनुमीना ८. ४. १५ इत्यस्यासिद्धत्वात् पूर्वं सार्वधातुकार्ध० ७. ३. ८४ इति गुणेऽत्तेनैव न्यायेन हिनोशब्दे हिनुशब्दत्वं सम्पाद्य णत्वविधानमस्याः फलम्, आनुमानिकस्थान्यादेशकल्पनया स्थानिवद्भावेन हिनोशब्दे हिनु शब्दत्वं तु नैव सम्पादयितुं शक्यते, हिनो इत्यस्यानर्थकत्वेन सार्थके एव कल्पनीयस्यानुमानिकस्थान्यादेशभावस्य कल्पनाऽसम्भवादिति चेन्न 'अचः परस्मिन् पूर्वविधौ' १. १. ५७ इति स्थानिवद्भावेन हिनोशब्दे हिनु-शब्दत्वमुपपाद्यते इति परिभाषायास्तादृशेन फलेन फलवत्त्वकल्पनासंभवात्। न च प्रकृष्टा रायो यस्मिन् कुले तत् प्ररि कुलम् ताभ्यां प्रराभ्यामित्यत्रानया परिभाषया रिशब्दस्य रैशब्दत्वसम्पादनेन रायो हलि ७. २. ८५ इत्यात्त्वसम्पादनमस्याः फलमिति वाच्यम् 'रै' इत्यस्य रीत्यादेश इति रीत्यात्रानुमानिकस्थान्यादेशभावकल्पनेन निर्वाहात्। निर्जरसावित्यादावपि आनुमानिकस्थान्यादेशभावकल्पनामूलकस्थानिवद्भावेनैव जरसादेशसिद्धिः। अतएव स्थानिवत्सूत्रभाष्ये आनुमानिकस्थान्यादेशभावाश्रयणेनास्याः परिभाषाया आवश्यकताऽभावो दर्शितः।

---

'प्रहिणोति' यहाँ णत्व को इस परिभाषा का फल के रूप में नहीं माना जा सकता, यहाँ 'प्रहि ति इस स्थिति में श्नु प्रत्यय करने पर गुण और णत्व की एक साथ प्राप्ति होने पर 'हिनुमीना' ८.४.१५ की असिद्धता करके पहले गुण हो जाने पर और 'हिनो' शब्द के अनर्थक होने के कारण आनुमानिक स्थान्यादेश भाव की कल्पना के असंभव होने से स्थानिवद्भाव की अप्राप्ति होने पर यही एक न्याय है

अनन्यवदित्यस्यान्यवन्नेत्यर्थः तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम् । अत एव तादृशा दर्थबोधः । अन्यथा शक्ततावच्छेदकानुर्व्यज्ञानात्ततो बोधो न स्यात् । एवं च 'राम्' इति मान्तस्य यस्माद्विहितस्तत्त्वम् 'औ' इत्यस्य परादिवत्त्वेन सुप्त्वमिति

---

एकदेशः विकृतो यस्मिन् तदेकदेशविकृतम् । अथवा विकृतमिति भावे क्तः विकार इत्यर्थः । एकदेशस्य विकृतं विकारो यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः । अथवा एकदेशेन एकदेशावच्छेदेन विकृतमिति तृतीयातत्पुरुषः । एकदेशविकारविशिष्टम् अनन्यवद् भवति अन्यवन्न भवतीति अन्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरां सिद्धत्येव । एकदेशविकृतं शब्दस्वरूपमन्यवत् अन्यसदृशं नेत्यर्थः । तत्र

---

जिसके सहारे 'हिनो' शब्द में 'हिनु' शब्दत्व लाया जा सकता है; ऐसा भी नहीं कहना चाहिए, वहाँ गुणादेश करने पर भी गुण को अचः परस्मिन् १.१.५७ से स्थानिवद् भाव होने से 'हिनु' शब्दत्व आ जायगा । 'प्रराभ्यां कुलाभ्याम्' में 'प्ररि' शब्द में इस परिभाषा के बिना भी सार्थक 'रै' के स्थान में 'रि' को पूर्ववत् आनुमानिक स्थान्यादेश भाव माना जा सकता है । इसलिए इसे भी परिभाषा के फल के रूप में नहीं माना जा सकता । इस तरह ''निर्जरसौ'' में निर्जर 'घटक जर'' में 'जरा' शब्दत्व लाकर 'जराया जरसन्यतरस्याम्' ७.२.१९ से जरसादेश को इस परिभाषा का फल माना जा सकता है ।

'अनन्यवत्' का अर्थ है अन्यवत् नहीं । दूसरों के सादृश्य का भी जहां निषेध किया गया है; वहां परायापन तो माना ही कैसे जा सकता है ? इस तरह एकदेशविकृत दूसरों के समान नहीं होता है अर्थात् वह स्ववत् होता है, यह इसका तात्पर्य निकलता है । अतएव इस परिभाषा से मान्त राम् को रामौ में अदन्त-राम से अभिन्न बताने के कारण ही उस प्रकार के पद से अर्थ बोध होता है । अन्यथा ( यदि परिभाषा न रहती तब ) शक्ततावच्छेदक-आनुपूर्वी का ज्ञान न होने से उससे बोध भी नहीं होता अर्थात् लोगों को अदन्त राम शब्द में और 'औ' में बोधकता शक्ति के होने का ज्ञान है, वे हलन्त राम् और 'औ' में बोधकता का अनुभाव नहीं करेंगे तो उन्हें अर्थ बोध नहीं होगा । किन्तु इस परिभाषा से हलन्त राम् में भी बोधकता आगयी, जैसे कि वह अदन्त राम में थी । रामौ में प्रकृतिप्रत्ययानुपूर्वी का ज्ञान, वृद्धि के बाद ( राम्+औ में ) जो होता है वह यही परिभाषा कराती है । अगर यह परिभाषा न होती तो रामपद दशरथ के पुत्र का बोधक है और 'औ' पर द्विवचनादि का । यहाँ तो हलन्त राम् है और 'औ' भी प्रकृति के अंश 'अ' से मिश्रित है । इस प्रकार तत्तादर्थविशेष में शक्त प्रकृतिप्रत्ययानुपूर्वी का बोध नहीं होने से शाब्दबोध नहीं होता । परिभाषा मानने पर तो काम चल जाता है; क्योंकि इस परिभाषा के बल से 'राम्' इस मान्त में 'यस्माद् विहितस्तदादित्व' ले आते हैं और 'औ' में 'अन्तादिवच्च ६.१.८५ सूत्र से

**तदादितदन्तत्वमार्थसमाजग्रस्तम् ॥ छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् ॥**

**अत एव 'प्राग्दीव्यतः' इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदितीत्युक्तम् । एतेनायं न्यायः शास्त्रीयकार्य एव शास्त्रीयविकार एवेत्यपास्तम् ।**

---

यदि अन्यसदृशं नेत्युच्यते तदा अन्यन्नेति किमु वक्तव्यम् । यथा वृद्धौ जातायां कार्यकालपक्षे राम्+औ इत्यवग्रहे राम् इति एकदेशेन विकृतमपि अनन्यवद्भावात् स्ववदर्थात् रामवद् भवतीति सुबन्ततदादित्वनिबन्धना पदसंज्ञा जायते । अतएवेति मान्तराम्शब्देऽदन्तरामशब्दवद्भावस्यानया बोधनादेवेत्यर्थः । रामौ इत्येवं विधाद् दाशरथिरूपार्थबोधो जायते । निर्जरसौ इत्यस्माच्च निर्गतजरात्वरूपोऽर्थो बोध्यते । अन्यथा परिभाषाया अभावे शक्ततावच्छेदकानुपूर्व्या राम+औ इत्येवंरूपाया ज्ञानाभावाद् बोधो न स्यात् । एवञ्च परिभाषायाः स्वीकारे राम् इति मान्तस्य यस्माद्विहितस्तत्त्वमनया सम्पादयते, औ इत्यस्य च 'अन्तादिवच्च' ६. १. ८५ इति परादिवद्भावेन सुप्त्वम् । अतः सुबन्ततदादित्वात्पदत्वं सिद्धयति । पदत्वं हि आर्थसमाजग्रस्तम् । तस्य यस्माद् विहितस्तदादिरूपस्य यश्च विहितस्तदन्तरूपस्य चार्थस्यापेक्षणात् आर्थसमुदायसापेक्षत्वात् अर्थस्यायमार्थः समाजः समुदायः आर्थश्चासौ समाजः इति कर्मधारयः, तेन ग्रस्तम् व्याप्तम् सापेक्षमित्यर्थः । अत्रार्थपदेन सुप्त्वं तदादित्वञ्चाभिप्रेतम् ।

---

परादिवद्भाव करके सुप्त्व ले आते हैं । इस तरह तदादि और तदन्तत्व अर्थ समुदाय से व्याप्त होकर सामने आता है । इसलिए पदसंज्ञा और बोध दोनों हो जाते हैं । यहाँ अर्थ पद से सुप्त्व और तदादित्व ही लिया गया है । इस तरह फलितार्थ निकलता है कि परिभाषा मानने पर 'रामौ' में सुप्त्व और तदादित्व का मिला जुला **समाज** आ जाता है । जैसे पूंछ कटे कुत्ते को भी लोग कुत्ता मानते हैं, उसी तरह राम् इस मान्त को प्रकृति मान सकते हैं । इस प्रकार यह परिभाषा लौकिकन्याय सिद्ध है । लोक न्याय को शास्त्र में लिया गया है इसका प्रमाण है—'प्राग्दीव्यतोऽण्' ४.१.८३ सूत्र का भाष्य । वहाँ भाष्यकार ने कहा कि "दीव्यतः" यह "दीव्यति' शब्द के एकदेश का अनुकरण है । इस पर प्रश्न उठा कि "दीव्यतेः" नहीं लिखकर आचार्य पाणिनि ने दीव्यति के विकृत ( एकदेश ) दीव्यत् के पञ्चमी एकवचनान्त रूप "दीव्यतः" क्यों लिखा ? इस पर भाष्यकार ने बताया कि पाणिनि इस निर्देश के द्वारा बताना चाहते हैं कि "एकदेशविकृतमनन्यवत्" अर्थात् आचार्य पाणिनि का यह विकृत निर्देश सूचित करता है कि व्याकरण में एक परिभाषा मानी जाती है—'एकदेशविकृतमनन्यवत्' । इस परिभाषा को माने बिना 'दीव्यति खनति' इस सूत्र

यथा यस्य शुनः पुच्छं छिन्नं सोऽपि लोके श्वेत्युच्यते, छिन्नत्वात्पुच्छस्य स कुक्कुर एकदेशेन पुच्छदेशेन विकृतोऽपि अन्यपशुवत् गर्दभादिवन्न मन्यते तथान्ति-मेनाकाररूपेणैकदेशेन विकृतोऽपि राम् इति मान्तशब्द अन्यवन्न भवतीति राम शब्द-वत्त्वात्तत्र यस्मात्विहितस्तदादित्वं सिद्धचति । छिन्नपुच्छश्वदृष्टान्तेन लौकिकेन सिद्धत्वादियं परिभाषा लोकसिद्धा ।

लोकसिद्धायास्तस्याः शास्त्रे समुपादानं शास्त्रीयं प्रमाणमपेक्षत एवेत्यत आह —अतएव प्राग्०० । प्राग् दीव्यत इति सूत्रे निर्दिष्टं दीव्यत इति तेन दीव्यति खनति जयति जितम्' ४. ४. २ इत्यत्रत्यदीव्यतीत्यस्यानुकरणमिति भाष्ये प्रोक्तम् तच्च न संगच्छते परिभाषास्वीकारं विना, अनुकरणेनानुकार्यसमानानुपूर्वीकेन भवि-तव्यमिति' नियमाद्दीव्यत इति दीव्यतिशब्दानुकरणं न भवितुमर्हति । परिभाषायां स्वीकृतायान्तु परिभाषयानया दीव्यदित्येकदेशविकृतं शब्दस्वरूपं न दीव्यतितो भिन्न-वदिति बोधनान्न दोषः । उक्तञ्चैतत् प्राग्दीव्यतोऽण् ४. १. ८३ इत्यत्र भाष्ये दीव्यति-शब्दैकदेशदीव्यच्छब्दानुकरणम् । तत्र पृष्टम्-किमर्थं विकृतनिर्देशः अर्थात् इकार-रहितः कथं निर्दिश्यते । तत उक्तम् एतदेव दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमेतां परिभाषां ज्ञापयतीति । एतेन उक्तभाष्यप्रमाणेन ज्ञायते यदियं परिभाषा अशास्त्रीय-कार्येऽपि प्रवर्तते । तत्र दर्शितस्य विकारस्य कार्यस्य च शास्त्रीयत्वाभावात् । शास्त्रीयविकारकार्ययोरेवात्र ग्रहणे भाष्यविरोधः स्पष्ट एव । न्यायस्यास्य लौकिकत्वादपि सिद्धचत्यशास्त्रीये कार्ये विकारे चास्य प्रवृत्तिर्भवतीति । अतः शास्त्रीयकार्ये एव शास्त्रीयविकार एवायं न्याय इति कथन**मपास्तं** खण्डितम् ।

---

में उक्त 'दीव्यति' का 'प्राग्-दीव्यतोऽण्' यहाँ पर लिखित 'दीव्यतः' यह अनुकरण नहीं हो सकता; क्योंकि अनुकरण और अनुकार्य दोनों की आनुपूर्वी (अक्षरशृङ्खला) समान हुआ करती है । परन्तु यहाँ अनुकरण इकारान्त नहीं; किन्तु तकारान्त है और अनुकार्य इकारान्त है । इस न्याय के स्वीकार करने पर तो कोई दोष नहीं हुआ; क्योंकि इस न्याय ने यह प्रमाणित कर दिया कि एकदेशविकृत 'दीव्यत्', दीव्यति से भिन्न नहीं है । इसलिए दोनों को समानानुपूर्वी मान लिया गया । जब यह 'प्राग् दीव्यतोऽण्' सूत्र से निकली है और जब कि विकार रूप कार्य के शास्त्रीय नहीं होने पर भी यह परिभाषा वहाँ लगती है; तब स्पष्ट हो जाता है कि यह परिभाषा शास्त्रीय कार्य और शास्त्रीय विकार के ग्रहण में ही नहीं प्रवृत्त होती है । ऐसी स्थिति में यह कहना कि यह परिभाषा शास्त्रीय कार्य और शास्त्रीय विकार में ही प्रवृत्त होती है, निर्मूल और गलत ही माना जायगा ।

**विकृतावयवनिबन्धनकार्ये तु नायं छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्वि-कृतावयवव्यवहारस्य दुरुपपादत्वात् ॥**

**एवमक्तपरिमाणग्रहणेऽपि नायम् उक्तयुक्तेः । एतत् 'येन विधिः' इत्यत्र भाष्यकैयटयोर्ध्वनितम् ।**

---

**विकृतो योऽवयवस्तन्निबन्धनकार्येऽर्थात्** तन्निमित्तककार्ये एष न्यायो न प्रवर्तते । अतएव निर्जरसौ इत्यादौ विकृतमाबन्तनिबन्धनम् "औङ आप" ७-१-१८ इत्यादिना श्यादेशादिकार्यं न । छिन्नपुच्छे शुनि लोके श्वेति व्यवहारस्तु दृश्यते किन्तु छिन्नपुच्छः श्वा, पुच्छवान् श्वेति व्यवहारः कदापि न भवति । अतस्तद्दृष्टान्त-मूलकस्यास्य न्यायस्य विकृतावयवनिमित्तके कार्येऽप्रवृत्तिरेवोचिता । पूर्वोक्तदृष्टान्त-विरुद्धत्वादनेन न शक्यते विकृतावयवव्यवहारमुपपादयितुम् ।

**अक्तपरिमाणग्रहणे** परिच्छिन्नपरिमाणग्रहणेऽयं न्यायो न प्रवर्तते उक्तयुक्तेः लौकिकदृष्टान्तविवेकरूपयुक्तेरित्यर्थः । लोके छिन्नपुच्छे शुनि पुच्छयुक्तश्वनिष्ठस्य एककिलोपरिमाणवत्त्वस्यादर्शनात् इहापि तथैव न्याय्यत्वात् । लोकः छिन्नपुच्छं श्वानं श्वेति तु मन्यते किन्तु यथा पुच्छवान् श्वा एकेन किलोपरिमाणेन परिमितस्तथा पुच्छरहितोऽपीति न कोऽपि स्वीकरोति । तेन उपैधते इत्यादौ वृद्धौ जातायाम् अवग्रहे सति उप्+एधत इत्यत्र उप् इति पान्ते उपसर्गत्वमानीय तस्य पदत्वाज्जश्त्वं न । प्र परा अप समादौ परिच्छिन्नत्योपसर्गत्वस्याक्तपरिमाणत्वात् ।

एतत्सर्वं येन विधिस्तदन्तस्य १-१-७२ इति सूत्रस्य महाभाष्ये कैयटे च ध्वनि-तम्—तथाहि भाष्ये प्रोक्तम् इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति य एते संख्याशब्दाः परिमाणशब्दाश्च । पञ्च सप्तेति एकेनाप्यपाये न भवन्ति ।

---

विकृतावयव निबन्धन कार्य में यह परिभाषा नहीं लगती है । अर्थात् विकृत जो अवयव, उसको निमित्त मानकर होने वाले कार्य में इस परिभाषा की प्रवृत्ति नहीं होती है । इसीलिए निर्जर शब्द में आदन्तत्व प्रयुक्त कार्य नहीं हुआ । वहाँ टाप् (आ) रूप अवयव में विकार (अ) हुआ हैं । अतः यदि यह परिभाषा लगती तो 'अ' को 'आ' वत् मान कर आबन्तप्रयुक्त कार्य हो जाता । पूंछ कटे कुत्ते को लोग कुत्ता तो मानते हैं, परन्तु उसे पूंछ वाला कुत्ता तो नहीं मानते ।

अक्त परिमाण याने परिच्छिन्न परिमाण के ग्रहण में भी यह न्याय प्रवृत्त नहीं होता । एक रुपया १०० पैसे का होता है । जो—रेलवे ठिकट एक रुपये में मिलता है । वह ९९ पैसे में नहीं मिलता, वहाँ थोड़ा कम रहने पर उसे पूरा नहीं समझा जाता । लोक में भी दुमदार कुत्ते में जो वजन होता है, वह बेदुम कुत्ते में नहीं साबित किया जाता है । यह बात "येन विधिः" १.१.७२ सूत्र के भाष्य में स्पष्ट है । अक्त परिमाण का तात्पर्य है वह परिमाण जो खास संख्या, नाप तौल आदि से नियमित हो ।

यत्र 'त्वर्द्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन द्रोणः खारी आढकमिति नैवाधिके भवन्ति, न न्यूने। केचिद् यावदेव तद्भवति तावदेवाहुः। य एते जातिशब्दाः गुणशब्दाश्च। तैलं घृतमिति खार्य्यामपि भवन्ति, द्रोणेऽपि। शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेऽपि द्रव्ये॥

इमाश्चापि संज्ञा अक्तपरिमाणानामर्थानां कियन्ते ताः केनाधिकस्य स्युरिति।

अत्र कैयटः—अक्तपरिमाणानामिति। परिच्छिन्नपरिमाणानामित्यर्थः। यावदिति—अल्पमधिकं वेत्यर्थः इमाश्चापीति=सर्वाद्युपादानेन संज्ञाः क्रियमाणाः कथं सर्वकादीनां भवन्ति। नित्या हि शब्दा विकारोपजनरहिता इति सर्वशब्दः सर्वकशब्द इति न वक्तुं शक्यत इत्यर्थः।

अत्रोद्द्योते—भाष्ये अक्तपरिमाणानाम् इत्यत्र कथयति नागेशः अक्तपरिमाणम् आनुपूर्वीविशेषोऽपि। परिमाणेत्युपलक्षणं परिच्छिन्नार्थानाम्। नन्वधिकगड्वादिजननेऽपि शुनः श्वत्ववदकस्याधिकस्योपजनेऽपि सर्वकस्य सर्वशब्दत्वमक्षतमेवेत्यत आह कैयटः नित्या इति। वस्तुतः परिच्छिन्नपरिमाणग्रहणे एकदेशविकृतन्यायस्याप्यप्रवृत्तिरिति भाष्याशयः। ननु गुडोदकमित्यत्रानेन न्यायेन दकशब्दे उदकशब्दत्वमानीय उदकेऽकेवले इति स्वर इति भाष्येण सह विरोधः, उदकशब्दत्वस्याक्तपरिमाणत्वादिति चेन्न तस्य भाष्यस्यैकदेशिकथनात्मकत्वात्, पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो नेति (प० ५४) परिभाषया पूर्वं स्वरः प्रवर्तते पश्चाच्च गुण इति कल्पनया तत्र दोषाभावात्।

न चास्यां परिभाषायां सत्यां स्थानिवत्सूत्रं व्यर्थम्, अनयैव सर्वत्र तत्तकार्य-

---

इसी न्याय से रामाय इत्यादि में राम ङे के स्थान में हुए राम य को अनन्यवत् मानकर दीर्घादि कार्य हो जायगा; फिर स्थानिवत्सूत्र व्यर्थ है, इस प्रकार का भय नहीं दिखाना चाहिए; क्योंकि यह न्याय वहां नहीं लगता, जहाँ आधे या आधे से अधिक भाग में विकार हो गया है, क्योंकि वहाँ जाति को प्रगट करने वाले अवयवों अथवा शरीर के अधिक भागों का अभाव रहता है। इसलिए वस्तुस्थिति का पता नहीं लगता। जैसे पूँछ न रहने पर भी कुत्ते को लोग कुत्ता समझते हैं परन्तु यदि शिर ही न रहे या कुत्ते की पहचान शरीर के जिस अर्ध या अर्धाधिक भाग से होती, उसमें ही यदि ऐसा विकार हो जाय, जिससे कुक्करत्व का पता न लगे, तो भला कौन उसे कुत्ता कहेगा ? ऐसी स्थिति में 'स्थानिवत्' सूत्र तद्वद्भाव करके इष्ट प्रयोग की सिद्धि करता है। इस तरह स्पष्ट है कि आधे या आधे से अधिक भाग में विकार रहने पर अभीष्ट कार्य की सिद्धि के लिए 'स्थानिवत्' सूत्र की आवश्यकता बनी रहेगी। इसलिए इस परिभाषा से स्थानिवत् सूत्र गतार्थ नहीं है। 'रामाय' में ङे के स्थान में 'य' आदेश होने पर सुप्त्व जातिव्यञ्जक कोई

**तत्त्वाप्रतीतौ कार्यसिद्धयर्थं विकृतानल्रूपावयवत्त्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् ॥**

**क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम् । तेनाभीयादित्यादिसिद्धिः । स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः 'प्रथमयोः पूर्वसवर्णः' इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥३८॥**

---

सिद्धेरितिवाच्यम् यत्रार्द्धं तदधिकं वा विकृतं तत्रातिदेशार्थस्थानिवत्सूत्रस्यावश्यकत्वात् । अयं न्यायस्तु तत्र रामायेत्यादौ सुप्त्वजातिव्यञ्जकस्य भूयोऽवयवस्य दर्शनाभावात्सुप्त्वाप्रतीतेर्न प्रवर्तते । अतः अर्धविकारविशिष्टे ऽर्धाधिकविकारयुक्ते च स्थले सुपि च ७-३-१०२ इति विहितस्य सुपि परे दीर्घादिकार्यस्य सिद्धयर्थं स्थानिवत्सूत्रमावश्यकम् । लोकेऽपि छिन्नाधिकावयवे छिन्नमुखादवयवे श्वादौ न भवति श्वासौ इति व्यवहारः श्वत्वजातिव्यञ्जकभूयोऽवयवदर्शनाभावेन श्वत्वस्याप्रतीतेः । अथ च चर्मन् शब्दादाचक्षाणे णिचि टिलोपे क्विपि तस्य सर्वापहारे चर्म् इत्यत्र विकृतानल्रूपावयवान्नन्तत्वस्यातिदेशार्थं च स्थानिवत्सूत्रम् । विकृतावयवनिबन्धनत्वादन्नन्तत्वव्यवहारस्य, नानया सोऽतिदेष्टुं शक्यते । ननु अभीयादित्यत्र दीर्घैकादेशे कृते उपसर्गत्वमभ् इति भान्ते ऽनेन न्यायेनातिदेष्टुं न शक्यते उपसर्गत्वस्याक्तपरिमाणत्वात् किन्तु पदत्वन्तु नाक्तपरिमाणं तस्यानेनातिदेशात् अभ् इत्यस्य पदत्वात् पदान्तस्य भकारस्य जश्त्वमापद्यत इत्यस्योत्तरमाह—क्वचिदिति

क्वचिल्लक्ष्यानुरोधान्नाश्रीयतेऽयं न्यायः तेनाभीयादित्यस्य सिद्धिः तत्र न जश्त्वमित्यर्थः ।

प्रथमयोः पूर्वसवर्णः ६. १. १०२ इति सूत्रस्य महाभाष्ये कैयटेन प्रोक्तम् अभीयादित्यत्र जश्त्वापत्या वचनस्यास्यासत्ता नाङ्गीकार्या सत्यपि वचने सर्वत्र तदाश्रयणीयमेवेति नास्ति नियम इत्यर्थपरेण वाक्येन "नहि वचनस्यासत्तासंभावना, न्यायस्तु क्वचित् क्वचिदाश्रीयत इति युज्यते वक्तुम् इति ।

---

चिह्न शेष नहीं है । इसलिए वहाँ दीर्घ कार्य इस परिभाषा से सिद्ध नहीं होता, वहाँ अतिदेश के लिए 'स्थानिवत्' सूत्र की आवश्यकता है ।

'चर्मन् शब्द से णिच् प्रत्यय, क्विप्, टिलोप और णिलोप करने पर निष्पन्न रूप 'चर्म्' यहाँ अन्नन्तत्व (विकृतानल् रूप अवयवत्व) की प्रतीति के लिए 'स्थानिवत्' सूत्र आवश्यक है । वहाँ यह न्याय नहीं लगेगा । क्योंकि अन्नतत्व का व्यवहार विकृतावयव निबन्धन व्यवहार है । जहाँ कि यह परिभाषा नहीं लगती है, यह ऊपर बताया गया है । 'अभीयात्' यहाँ 'भान्त' में उपसर्गत्व को इस न्याय से लाकर 'इयात्' में परादिवद्भाव से इण् धातुत्व को लाकर उपसर्गप्रादुर्भ्याम्—८.३. ८७ से ह्रस्व हो जाने की शङ्का नहीं करनी चाहिए, क्योंकि उपसर्गत्व अक्तपरिणाम है, उसका आनयन इस परिभाषा के बलबूते के बाहार है । यदि यह कहें कि 'अभ्' में पदत्व तो इस न्याय से आजायगा और फिर जश्त्व हो जायगा तो समझना चाहिए

अन्यत्र शब्देन्दुशेखरे इत्यर्थः। शब्देन्दुशेखरेऽत्र विचारविस्तरो दर्शितः। तत्र हि प्रोक्तम्—परिभाषेयं पतञ्जलिना स्वीकृता; यतः श्रायसौ इत्यत्र नुममाशङ्क्याचः परस्मिन् पूर्वविधौ, १. १. ५७ इति स्थानिवद्भावेन वारितः। श्रेयस् इत्यस्मादणि आदिवृद्धौ श्रायस इत्यस्मादौविभक्तौ वृद्धौ श्रायसौ इत्यत्र श्रायस्+औ इति विभागं कृत्वा परादिवद्भावेन औ इत्यत्र सुप्त्वं, श्रायस् इत्यत्रानया परिभाषयाऽङ्गत्वमानीय सान्तस्योगित्त्वाद् उगिदचां सर्वनामस्थाने चाधातोः ७. १. ७० इति नुम् कथं नेत्याशङ्क्याचः परस्मिन् इति स्थानिवद्भावेन नुम् वारितः। यदीयं परिभाषा पतञ्जलेरङ्गीकृता न स्यात्, तदा श्रायस् इत्यस्याङ्गत्वाभावेन नुमाशङ्कैव न स्यात्। अतो ज्ञायते पतञ्जलिना परिभाषेयं स्वीकृतेति।

इति परिभाषेन्दुशेखरे शास्त्रत्वसम्पादकपरिभाषाप्रकरणं समाप्तम्।

अस्मिन् प्रकरणे ताः परिभाषा व्याख्याता या पाणिनिना स्वकण्ठरवेणानुक्ता शास्त्रत्वं सम्पादयन्ति। इमा विना शास्त्रघटकपदप्रयोज्यविषयताया नियमनं न सम्भवति। अतः शास्त्रत्वसम्पादकपरिभाषाप्रकरणमित्यस्य शास्त्रघटकपदप्रयोज्यविषयतानियामकपरिभाषाणां प्रकरणं समाप्तमित्यर्थः।

इति परिभाषेन्दुशेखरस्य हर्षनाथमिश्रकृतायां 'दुर्गा' व्याख्यायां शास्त्रत्वसम्पादकं प्रथमं प्रकरणं समाप्तिमगात्॥ शिवमस्तु॥

---

कि परिभाषा इष्ट सिद्धि के लिए हुआ करती है। अनिष्ट रूप बनाने के लिए नहीं। इसलिए लक्ष्यानुरोध से इस न्याय का यहाँ आश्रयण नहीं होगा। इसलिए जश्त्वापत्ति नहीं होगी। 'लक्ष्यानुरोधात्' कहीं न्याय की अप्रवृति की बात कैयट ने 'प्रथमयोः पूर्वसवर्णः' ६. १. १०२ सूत्र में कही है।

वहाँ कैयट ने 'अभीयात्' के 'अभ्' में इस परिभाषा से अभिवत् पदत्व लाकर जश्त्व की आपत्ति उठायी और कहा कि किसी न्याय के रहने पर भी सब जगह उस पर अमल करना कोई लाजिमी नहीं है। न्याय का आश्रयण तो कहीं कहीं किया जाता है (इष्ट सिद्धि के लिए परिभाषा मानी गयी है अनिष्ट के लिए नहीं, यह कैयट का आशय है)

परिभाषेन्दु शेखर का शास्त्रत्वसम्पादक नाम का पहला प्रकरण समाप्त हुआ।

इस प्रकरण में प्रायः वे परिभाषाएँ व्याख्यात हुई हैं जो शास्त्र (सूत्र) में आये हुए पद के विषयादि का नियमन करती है। इस प्रकरण को शास्त्रत्व-सम्पादक प्रकरण कहा गया है; क्योंकि ये परिभाषाएँ शास्त्र के अर्थ में दिखाई पड़ने वाले सन्देह को दूर करने का उपाय प्रस्तुत करके उनके शास्त्रत्व को सिद्ध करती हैं, सम्पादित करती हैं।

इति परिभाषेन्दुशेखरस्य डा० हर्षनाथमिश्रकृते हिन्दीभाष्ये शास्त्रत्वसम्पादकं नाम प्रथमं प्रकरणम्। शिवमस्तु।

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तर बलीयः ॥३९॥
पूर्वात्परं बलवत् । विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत् ॥३६॥

# अथ बाधबीजकथनं नाम द्वितीयं प्रकरणम्

बाधबीजकथनं नाम द्वितीयं प्रकरणं प्रारभ्यते । प्रकरणेऽस्मिन् व्याख्याताः सर्वाः परिभाषा एकस्य शास्त्रस्यान्येन शास्त्रेण बाधे विद्यमानं बीजं (कारणं) वर्णयन्ति । अतोऽन्वर्थनामेदं प्रकरणम् । यथास्य प्रकरणस्य प्रथमा परिभाषा पूर्वपरनित्यान्तरङ्गेति पूर्वात् परस्य, ताभ्यां नित्यस्य, पूर्वपरनित्येभ्योऽन्तरङ्गस्य पूर्वपरनित्यान्तरङ्गेभ्यश्चापवादस्य बलवत्त्वे यानि कारणानि तानि वर्णयति; अतएवेदं प्रकरणं शास्त्रस्य बलवत्त्वप्रयोजकपरिभाषाणां प्रकरणमिति ।

**पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥३६॥**

पूर्वपरनित्यान्तरङ्गापवादशास्त्रेषु उत्तरोत्तरं शास्त्रं बलवत्तरं बलवत्तमं वेति यथायोग्यं योज्यम् । पूर्वात् परं शास्त्रं बलवत्तरमिति योज्यते । पूर्वपरनित्येषु नित्यं बलवत्तममिति योज्यम् । यद्यपि परिभाषायां बलीय इत्युक्तम् । तत्र 'द्विवचनविभज्योपपदे तरबीयसुनौ' ५. ३. ५७ इत्यनेन द्विवचने एव तद्विधानात् पूर्वपरयोः परं बलीय इत्यत्रैव तत्सम्बन्धो निर्वहति पूर्वपरनित्यान्तरङ्गेषु अन्तरङ्गं बलीय इत्यन्वयो न संगच्छते तत्र बहुषु प्रकर्षत्वबोधाय 'अतिशायने तमबिष्ठनौ' ५. ३. ५५ इति इष्ठन्प्रत्ययस्यैव योग्यत्वात्; तथापि पूर्वपरयोः परं बलीय इति प्राथम्यादुक्तं

---

अथ बाधबीजकथनप्रकरणम् (२)

पूर्व प्रकरण में शास्त्र की यथास्थल प्रवृत्ति के लिए अपेक्षित परिभाषाओं की व्याख्या करके इस प्रकरण में उन परिभाषाओं की व्याख्या करना प्रारम्भ करते हैं, जो शास्त्र के बलवत्व का प्रमाण प्रस्तुत करते हैं ।

अतः सर्वप्रथम कौन शास्त्र किससे बलवान होता है यह बताने के लिए परिभाषा लिखते हैं—**पूर्वपरनित्यान्तरङ्गाणाम्—बलीयः**

पूर्व से पर, पर से नित्य, पर और नित्य दोनों से अन्तरङ्ग; पर, नित्य और अन्तरङ्ग तीनों से अपवाद बलवान् होता है । इस बात को संक्षेप में लिखते हैं कि पर नित्य अन्तरङ्ग और अपवाद में उत्तरोत्तर बलवान् होता है ।

ईयसुन् प्रत्यय दो में एक को अतिशय बताने के अर्थ में आता है । 'बलीयः' में ईयसुन् प्रत्यय ही है । इसलिए जहाँ दो में से एक की बलवता बतानी है; वहाँ वह ठीक अर्थ देगा जैसे 'पूर्वपरशास्त्रयोः परं बलीयः' अर्थात् पूर्व और पर में पर बलवान् है किन्तु जहाँ दो से अधिक में एक की बलवता बतानी है जैसे पूर्व-पर-नित्य-अन्तरङ्ग और अपवाद में अपवाद बलवान् है यह कहना है; वहाँ बलिष्ठः का प्रयोग

विपरिणामेन चान्यत्र बलिष्ठमिति योजनीयम्। किञ्च लोके इयसुन्निष्ठन्प्रत्यययोः प्रयोगसांकर्यम् दृश्यते। अतएव पुत्रद्वयेऽपि प्रथमस्य कृते ज्येष्ठो ऽयम्मे पुत्र इति व्यवहारः। अथवा पूर्वपरयोः परं बलीयः पूर्वनित्ययोर्नित्यं बलीयः परनित्ययोश्च नित्यं बलीय इति युग्मकं प्रकल्प्यान्वयः कार्यः। उत्तरोत्तरमित्यत्र 'आनुपूर्व्ये द्वे वाच्ये' ८ २. १२/। इति वचनेनात्र द्वित्वम्। पूर्वात् परं बलवदित्यत्र किं बीजमित्याकाङ्क्षायामाह:—विप्रतिषेधशास्त्रादित्यादि। अयमभिप्रायः पूर्वात् परं बलीयः विप्रतिषेधसूत्रारम्भसामर्थ्यात्। अतएव वृक्षेभ्य इत्यत्र 'सुपि च' ७. ३. १०२ इति दीर्घं बाधित्वा परत्वाद् 'बहुवचने झल्येत्' ७. ३. १०३. इत्येत्वम्। परान्नित्यं बलीयो यथा तुदति रुणद्धीत्यादौ परमपि लघूपधं गुणं बाधित्वा 'तुदादिभ्यः शः' ३, १. ७७ 'रुधादिभ्यः श्नम् ३. १. ७८ इति शश्नमौ। ततो न लघूपधगुणः। परादन्तरङ्गं यथा-उभये देवमनुष्या इत्यत्र 'प्रथमचरमतयाल्पार्ध' १. १. ३३ इति परमपि विकल्पं बाधित्वा ''सर्वादीनि सर्वनामानि'' १. १. २७ इति नित्यमेव सर्वनामत्वम् विभक्तिनिरपेक्षत्वेन तस्यान्तरङ्गत्वात्। परादपवादो बलीयान् यथा दध्ना दध्ने इत्यादौ परमपि 'अनेकाल्शित्सर्वस्य' १ १. ५५ इति बाधित्वा 'ङिच्च' १. १. ५३ इत्यपवादत्वादस्थिदधि' ७. १. ७५ इत्यनङ् अन्त्यस्य जायते। 'नित्यादन्तरङ्गं

---

होना चाहिए। द्विवचनविभज्योपपदे तरबीयसुनौ, अतिशायने तमबिष्ठनौ ५.५.५७/५५ ये दोनों सूत्र यही कहते हैं, तथापि लोक में इष्ठन् और ईयसुन् प्रत्ययों के प्रयोग में सांकर्य देखा जाता है। जिसे दो पुत्र हैं, वह भी बड़े पुत्र को जेष्ठ पुत्र कहता है। यहाँ भी वही प्रयोग-सांकर्य मानना चाहिए। अथवा पूर्वनित्ययाः नित्यं बलीयः, परनित्ययोश्च नित्यं बलीयः इस प्रकार की योजना करनी चहिए।

'विप्रतिषेधे परं कार्यम्' १. ४. २ यह शास्त्र पूर्व की अपेक्षा पर को बलवान् सिद्ध करता है। विप्रतिषेध सूत्र से हम जानते हैं कि पूर्व शास्त्र का पर शास्त्र बाधक होता है। इसलिए 'वृक्षेभ्यः' में पूर्व दीर्घ शास्त्र को पर एत्व ने बाध लिया।

(सुपिच-दीर्घ-७. ३. १०२ बहुवचने—एत्व ७. ३ १०३)

नित्य आदि शास्त्र की बलवता का कारण आगे की परिभाषाओं में देते हैं। नित्यानित्य, अन्तरङ्ग और अपवाद आदि के लक्षण और उदाहरण सम्बद्ध परिभाषाओं के निरूपण के समय दिये जायेंगे। यहाँ केवल उदाहरण दिये जाते हैं। जिनसे नित्यादि की बलवता के स्थलों का आभास हो जायगा। पर से नित्य की बलवत्ता जैसे—तुदति। यहाँ 'पर' होने के कारण बलवान् भी लघूपध गुण को बाधकर 'तुदादिभ्यः शः ३. १. ७७ से 'श' होगया। 'श' नित्य है; क्योंकि वह गुण के होने और न होने दोनों ही स्थिति में प्राप्त है। 'श' होने पर गुण अप्राप्त है। क्योंकि 'श' अपित् सार्वधातुक होने से ङित् है—'सार्वधातुकमपित्' १. २. ४१, ङित् के परे क्ङिति च १. १. ५ से गुण का निषेध होजाता है।

नन्वेवं भिन्धीत्यत्र परत्वात्तातङा बाधितो धिर्न स्यादत आह—

पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥४०॥

बलीयो-यथा ग्रामणिनी कुले इत्यत्र ग्रामणी ई इत्यवस्थायाम् 'इकोचि विभक्तौ' ७. १. ७३ इति नुमं 'ह्रस्वो नपुंसके प्रातिपदिकस्य' १. २. ४७ इति ह्रस्वे कृतेऽकृते च प्राप्तमतएव नित्यमपि बाधित्वान्तरङ्गत्वाद् 'ह्रस्वो नपुंसके' १. २. ४७ इति ह्रस्वः नुमि कृते त्वजन्तत्वाभावाद् ह्रस्वत्वं न प्राप्नोति। 'अन्तरङ्गादपवादो बलीयान्' अतएव दैत्यारिः श्रीश इत्यादौ परमपि सवर्णदीर्घमन्तरङ्गत्वाद् बाधित्वा आद्गुणः ६. १. ८७ इति 'इको यणचि' ६. १. ७७ इति गुणे यणि च प्राप्तेऽपवादत्वात्सवर्णदीर्घः। इति शिवम्॥ ३८॥

**पुनः प्रसंगविज्ञानम्—४०**

ननु पूर्वात्परस्य बलीयस्त्वे 'भिन्धि' इत्यत्र भिनद् हि इति स्थितौ 'तुह्योस्तातङाशिष्यन्यतरस्याम्' ७. १. ३५ इति तातङा परेण धिं बाधित्वा तातङि भिन्तात्, विकल्पपक्षे भिन्हीत्येव स्याद् ध्यादेशो न स्यात् "सकृद्गतौ विप्रतिषेधे यद् बाधितं तद्बाधितमेवेति परिभाषया (प० ४१) विप्रतिषेधे सति सकृद् यद्बाधितं तद् गतौ प्राप्तौ सत्यामपि बाधितमेव (न प्रवर्तते) इत्यर्थया धेः सकृद्बाधितस्य

---

पर से अन्तरङ्ग के बलवान् होने के कारण ही 'उभये देवमनुष्याः' में प्रथमचरम १. १. ३३ से परत्वात् प्राप्त विकल्प सर्वनाम-सज्ञा को बाधकर सर्वादीनि —१.१. २७ से अन्तरङ्गत्वात् निन्य सर्वनाम संज्ञा होती है।

पर से अपवाद बलवान् जैसे—'दध्ना' में पर अनेकाल्शित् सर्वस्य १.१.५५ को बाधकर ङिच्च १. १. ५३ से अपवादत्वात् अन्त के स्थान में अनङ् आदेश हुआ। नित्य से अन्तरङ्गः—जैसे ग्रामणिनी कुले यहाँ ग्रामणी+ई इस स्थिति में इकोचि —७. १. ७३ नुम् को, जो कि ह्रस्व करने और नहीं करने पर दोनों ही स्थिति में प्राप्त होंने से नित्य था, बाधकर पहले ह्रस्वो नपुंसके—१. २. ४७ से ह्रस्व हुआ; फिर नुम् होकर रूप बना।

अन्तरङ्ग से अपवाद की प्रबलता का उदाहरण है—दैत्यारिः, श्रीशः। दैत्य +अरिः, श्री+ईशः अवस्था में पर होने पर भी सवर्णदीर्घ को अन्तरङ्गत्वात् बाधकर प्रवृत्त होने के लिए उद्यत आद् गुणः ६. १. ८७ और इको यणचि ६. १ ७७ को बाधकर 'अपवादत्वात्' सवर्ण दीर्घ हुआ।

इति शिवम् ३९

**पुनः प्रसङ्गविज्ञानात् सिद्धम्—४०**

यदि पूर्व की अपेक्षा पर को बलवान् और पर को पूर्व का बाधक माने तो 'भिन्धि' में भिनद्धि ऐसी अवस्था में तुह्योः—७. १. ३५ के तातङ् के द्वारा परत्वात् बाधित हुझल्भ्यो—६. ४. १०१ से 'धि' आदेश नहीं होगा। इसलिए परिभाषा मानते हैं कि "पुनः प्रसङ्गविज्ञानात् सिद्धम्"। तात्पर्य यह है भिनद् हि

**नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः स्यादत आह—**

विकल्प पक्षेऽपि प्रसराभावात् अत आहः—"**पुनः प्रसङ्गविज्ञानम्** (३९) अत्र प्रसङ्ग-शब्दो लुप्तसप्तम्यन्तः। पुनः प्रसंगे (प्राप्तौ सत्यां) सति विज्ञानं शास्त्रप्रवृत्ति-रित्यर्थः। पुनः प्रसंगविज्ञानम् इति प्रथमान्तमेव परिभाषास्वरूपम्। पुनःप्रसंगविज्ञा-नात्सिद्धमित्यत्र पञ्चमी सिद्धमिति तु समाधानप्रयोजनम् पुनः प्रसंगस्य प्राप्ते-विज्ञानात् संप्रत्ययात् भिन्धीत्यत्र धित्वं सिद्धमिति तात्पर्यम्।

सकृद्गतौ इति परिभाषात्र प्रथमं पठनीया ततश्च पुनः प्रसंगविज्ञानम् इति परिभाषावतरणीया। मूलोक्तः क्रमस्तु चिन्त्य एव प्रतिभाति। अथवा उभयोः परिभाषयोः मिथ एकस्या अन्यत्र तथापेक्षावर्तते यथा मूलोक्तोऽपि क्रमः समर्थयितुम् शक्यते। अथावतरणमिदं विचार्यते।

तातङो विकल्पेन विधानात् तेन पक्षे बाधेऽपि पक्षान्तरे धित्वं सुलमभ्। इत्थं तातङा बाधितो धिर्न स्यादित्यवतरणमसंगतम् प्रतिभाति। न च वैकल्पिकत्वेन तातङ्-तदभावौ विधेयौ। एवञ्च तातङा इव तदभावेनापि परत्वाद्‌बाधितो धिर्न स्यात् अपितु हेरेव श्रवणं स्यादित्यवतरणं संगतमेव, केवलं "तातङेव तदभावेनापि बाधितो धिर्न स्या-दिति वाक्यांशोऽध्याहार्य इति वाच्यम् अप्राप्तविभाषास्थलेऽभावस्य स्वतः सिद्धतया भावमात्रस्यैव विधेयत्वात् तथा चाभावस्याविधेयतया तेन धिर्बाधित इति कथना-सम्भवादवतरणमसंगतमेव।

केचित्तु भिन्धकीत्यत्र परत्वाद्ध्यादेशेन बाधितोऽकज् न स्यादित्यवतरणं योजयन्ति तन्न मनोरमम् कुत्सार्थनिमित्तकत्वेनाकचो बहिरङ्गत्वेनैव बाधात्, तुल्य-बलत्वाभावेन 'विप्रतिषेधे परं कार्यम्' १.४.२ इत्यस्याप्रवृत्तेः परत्वादित्यादि-ग्रन्थासंगतेः। एवञ्च "नन्वेवं भिन्द्धकीत्यत्र परत्वाद्धिना बाधितोऽकज् न स्यादिति पाठोऽयुक्त एव॥"

वस्तुतस्तु भिन्धीति भिन्तादित्यस्योपलक्षणम्। भिन्तादित्यत्र धिभावं प्रबाध्य तातङि जाते धिभावस्याप्राप्त्या तातङादेः स्थानिवत्त्वप्रतिषेधो वक्तव्य इति वार्तिक-स्यानर्थक्यमित्याशयोऽवतरणस्येति॥ शिवम्॥ ३९.

**सकृद्गतौ—४१**

तिसृणाम् इत्यत्र त्रि+आम् इति स्थितौ त्रयादेशं 'त्रेस्त्रयः' ७.१.५३ इति प्राप्तं परत्वाद् बाधित्वा 'त्रिचतुरोः स्त्रियां तिसृचतसृ" ७.२.९९ इति

---

ऐसी अवस्था में तातङ् होने पर 'भिन्तात्' बनेगा और उसके अभाव में भी हि को 'धि' नहीं होगा; क्योंकि वह परत्वात् तातङ् के द्वारा बाधित है ऐसा नहीं मानना चाहिए पुनः प्रसङ्ग होने से 'धि' आदेश हो जायगा। इति शिवम्. ४०

**सकृद्गतौ विप्रतिषेधे—४१**

यदि "पुनः प्रसङ्ग होने पर बाधित शास्त्र की प्रवृत्ति दुबारा मानें, तब तो

**सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव ।।४१।।**

**तत्र क्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसंभवेन बाधकाभावात् पर्य्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं 'विप्रतिषेध' सूत्रमिति सकृद्गतिन्याय-सिद्धिः। यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति। यदा**

---

तिस्रादेशे "पुनः प्रसङ्गविज्ञानात्" तिस्रादेशस्य स्थानिवद्भावेन त्रिशब्दत्वात् त्रयादेशः स्यादिति चेन्न सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव इति परिभाषा-स्वीकारात्। विप्रतिषेधे सति सकृद् यद्बाधितं तद् गतौ प्राप्तौ सत्यामपि बाधितमेव अर्थात् पुनर्न प्रवर्तते इत्यर्थः।

ननु पुनः प्रसंगविज्ञानमित्युच्यते सकृद्गताविति चेति मिथो विरोधः प्रतिभाति। तत्परिहारोपायः क इति चेच्छृणु यथा ण्वुल्तृचौ ३. १. १३३ इत्यत्र विहितौ ण्वुल्तृचावेकस्माद् धातोर्युगपन्न भवतोऽसम्भवात्, किन्तु पर्यायेण भवतः, अतएव पाठकः पठितेत्यादि रूपं जायते तथा क्वचिच्चारितार्थयोरेकत्र प्रयोगे युगपत्प्राप्तयोः पूर्वपरयोः कार्ययोरसम्भवेन बाधकाभावात् पर्यायेण शास्त्रद्वयप्रसंगे सति कदाचित्पर-कार्येऽपि सिद्धे विप्रतिषेधसूत्रं नियमार्थम्। तेन परं कार्यमेवेति नियमात् सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न्यायः सिद्ध्यति। अतएव वृक्षाभ्यामित्यादौ चरितार्थं 'सुपि च' ७. ३. १०२ इति दीर्घकार्यं सर्वेषाम् इत्यत्र च चरितार्थं बहुवचने झल्येत् ७. ३. १०३ इति एत्वकार्यं युगपद् वृक्षेभ्य इत्यत्र प्राप्ते पर्यायेण न भवतः विप्रतिषेधसूत्रस्य नियमार्थकतया तन्नियमेन सकृद्गतिन्यायेन वा एत्वेन दीर्घबाधात्।

---

'तिसृणाम्' में त्रि+आम् ऐसी स्थिति में 'त्रेस्त्रयः' ६. ३. ४. ४८ से प्राप्त त्रयादेश को बाध कर परत्वात् 'त्तिचतुरोस्त्रियां तिसृचतसृ ७. २. ९९ सूत्र से तिसृ आदेश करने पर स्थानिवद् भाव से त्रि शब्द मान कर पुनः प्रसङ्ग के कारण त्रयादेश हो जायगा इसलिए एक परिभाषा मानते हुए लिखते हैं—

**सकृदगतौ विप्रतिषेधे यद् बाधितं तद्बाधितमेव"** विप्रतिषेधे सति सकृदचद् बाधितं तद् गतौ=प्राप्तौ सत्यामपि बाधितमेव न प्रवर्तते इत्यन्वयः। अर्थात् तुल्य-बल विरोध रहने पर एक बार जो बाधा गया, वह फिर नहीं होगा, भले ही उसकी प्राप्ति पुनः क्यों न हुई हो। इस तरह यहाँ तुल्य-बल विरोध में एक बार बाधित त्रयादेश फिर नहीं होगा; यद्यपि उसकी पुनः प्राप्ति है।

बात यह है कि कहीं चरितार्थ रहने के कारण सामर्थ्यहीन दो कार्य परस्पर विरुद्ध होने के कारण एक लक्ष्य में एक साथ प्राप्त होकर भी होने से रहे; क्योंकि उनका एक साथ होना सम्भव नहीं है। तब वे पर्याय से (बारी बारी से) उसी तरह होंगे; जैसा कि 'ण्वुलतृचौ, ३. १. १३३ सूत्र से विहित ण्वुल्' और तृच् प्रत्यय 'कारकः' और 'कर्ता' में एक दूसरे के होने में बाधा डाले बिना हुआ करते हैं, उसी

तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये तदोभयोर्न करोति यौगपद्यासंभवात्। तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसंभवादप्रतिपत्तौ प्राप्तायामिदं

---

**नियमार्थमिति**—विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

इति **तन्त्रवार्तिके कुमारिलभट्टः**। अत्र विधित्रयं वर्णयति—अत्यन्तमप्राप्तौ विधिः। यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽत्यन्ताप्राप्तविधानादपूर्वविधिः यथा स्वर्ग कामो यजेतेत्यत्र, यागस्य स्वर्गफलकत्वं न प्रमाणान्तरेण प्राप्तं किन्त्वनेनैव वचनेन बोध्यत इत्यस्यापूर्वविधित्वम्। इको यणचि ६.१.७७ इत्यप्यपूर्वविधिः, अन्येनाबोधितस्य यणो विधानात्। यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः। यथा व्रीहीन् अवहन्ति। अस्य वचनस्याभावे व्रीहीणां तण्डुलीकरणाय तुषरहितत्वकार्यं नखविदलनेन अवघातेन च प्राप्तं, द्वयोर्युगपदसंभवेन नखविदलनप्राप्तिकालेऽवहननस्य प्राप्त्यभावात् तस्य पाक्षिकी प्राप्तिः स्यात् सति च तस्मिन् विधौ अवघातेनैव तुषदूरीकरणं सम्पाद्यं न नखविदलनेनेति नियमे जाते नखविदलनं सर्वथा निवर्तते। अवघातेनैव तुषरहितत्वकरणेऽपूर्वोत्पत्तिस्वीकारात्। विप्रतिषेधे परं कार्यम्' १.४.२ इत्यपि नियमविधिः स्वस्वविषये चरितार्थयोः पूर्वपरविध्योः वृक्षेभ्य इत्यत्र पर्यायेण परकार्यरूपविधेयस्य पाक्षिकप्राप्तेरनेन नियम्यते परं कार्यमेव, न पूर्वम्। तेन सिद्धम्—**सकृद्गतौ विप्रतिषेध इति।**

---

तरह 'रामैः' में "सुपि च" ७. ३. १०२ से प्राप्त दीर्घ और 'अतो भिस ऐस्' ७. १. ९ से प्राप्त ऐस् दोनों होने लगेंगे। इसलिए व्यर्थ होकर विप्रतिषेधसूत्र नियम करेगा कि "परमेव भवेत्" अर्थात् पर ही हो। इस तरह सिद्ध हो गया कि पूर्व कभी नहीं होगा। इसी का फलितार्थ कथन है "सकृद्गतौ"। इस तरह यह न्याय सिद्ध हुआ। जैसे बराबर प्रभाव (बल) वाले दो व्यक्तियों का कोई एक नौकर होता है, वह उनका बारी-बारी से काम करता है। किन्तु दिक्कत तब आती है, जबकि विभिन्न दिशाओं में सम्पादनीय दो कार्यों को करने के लिए उसके दोनों स्वामी उसे एक साथ (एक काल में) भेजे; ऐसी स्थिति में वह किसी का कार्य नहीं करेगा, क्योंकि वह उन्हें एक साथ नहीं कर सकता। इसी तरह दो शास्त्र जिनका निर्माण लक्ष्य सिद्धि के लिए हुआ है, किसी लक्ष्य में जब एक साथ प्रवृत्ति की असम्भावना के कारण प्रवृत्त नहीं हो पायेंगे तब कौन-सा शास्त्र वहाँ प्रवृत्त हो, और कौन-सा न हो इस संदिग्ध स्थिति में विप्रतिषेध-सूत्र मार्गदर्शक के रूप में पर शास्त्र का विधान करेगा; इस तरह वह विधि सूत्र होगा, नियम सूत्र नहीं। इसलिए वहाँ परशास्त्र की प्रवृत्ति होने पर यदि पूर्व शास्त्र की प्रवृत्ति की गुंजाइश रहेगी, तो वहाँ उस पूर्व शास्त्र की भी प्रवृत्ति होगी ही। इस तरह **"पुनः प्रसङ्गविज्ञानसिद्धिः"** यह परिभाषा भी सिद्ध हो गई।

**परविध्यर्थं, तत्र कृते यदि पूर्वप्राप्तिरस्ति तर्हि तदपि भवत्येवेति पुनः प्रसङ्गविज्ञान-सिद्धिरिति 'विप्रतिषेध' सूत्रे भाष्ये स्पष्टम् ।**

---

उभयस्य युगपत्प्राप्तौ इतरनिवृत्तिफलकोविधिः परिसंख्याविधिः यथा पञ्च-पञ्चनखा भक्ष्याः । अनेन वाक्येन न भक्षणं विधीयते; तस्य रागतः प्राप्तत्वात् । नायं नियमविधिः, युगपत्प्राप्तेः तथाच पञ्चपञ्चनख-पञ्च-पञ्चेतरनख-भक्षणस्य युगपत्प्राप्तौ पञ्चपञ्चनखभक्षणेनैव क्षुन्निवृत्तिः कार्या इत्यनेन वाक्येन परिसंख्यायते । पञ्चपञ्चेतरनखभक्षणं निवर्तते इतिपरिसंख्याविधिरेषः । पञ्चपञ्चनखा इत्यस्य नियमत्वेन भाष्ये व्यवहृतत्वाद् अन्यनिवृत्तिरूप फलेनैक्याच्च नियमपदेन परिसंख्यापि व्याकरणे गृह्यते इति परमलघुमञ्जूषायां नागेशः । (पृ० १३८)

लौकिकदृष्टान्तेन पुनः प्रसङ्गविज्ञानं दर्शयति—**यथातुल्यबलयोः**—मिति । विप्रतिषेधसूत्रे १.४.२ भाष्ये स्पष्टम्: तथाहि अप्रतिपत्तिर्वोभयोस्तुल्यत्वात् । ५ अप्रतिपत्तिर्वा पुनरुभयोः शास्त्रयोः स्यात् । किं कारणम् तुल्यबलत्वात् । तुल्यबले ह्युभे शास्त्रे । तद्यथा द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदा यद्यसाववविरोधार्थी भवति, तत उभयोर्न करोति । किं पुनः कारणमुभयोर्न करोति यौगपद्यासंभवात्, नास्ति यौगपद्येन संभवः । तत्र प्रतिपत्त्यर्थं वचनम् ।६। तत्र प्रतिपत्त्यर्थमिदं वचनम् ।। तव्यदादीनां त्वप्रसिद्धिः ।। ७ ।। तव्यदादीनां तु कार्यस्याप्रसिद्धिः । नहि किञ्चित्तव्यदादिषु नियमकारि शास्त्रमारभते येन तव्यदादयः स्युः ।। नैष दोषः । अनवकाशास्तव्यदादयः, उच्यन्ते च ते वचनाद्भविष्यन्ति । यश्च भवता हेतुर्व्यपदिष्टस्तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति तुल्यः स तव्यदादिषु ।।

एतावदिह सूत्रं विप्रतिषेधे परमिति । पठिष्यति ह्याचार्यः । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । पुनः पठिष्यति—पुनः प्रसङ्गविज्ञानात् सिद्धमिति । किम्पुनरियता सूत्रेणोभयं लभ्यम् । लभ्यमित्याह कथम् । इह भवता द्वौ हेतू व्यपदिष्टौ । तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति च । अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वादिति च । तद्यदा तावदेष हेतुस्तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति तदा विप्रतिषेधे परमेव भवतीति । यदा त्वेष हेतुरप्रतिपत्तिर्वोभयोस्तुल्यबलत्वादिति तदा विप्रतिषेधे

---

यह बात विप्रतिषेध सूत्र (१. ४. २) के भाष्य में इष्ट लक्ष्य सिद्धि को ध्यान में रखकर वार्तिककार के बनाये हुए पूर्व विप्रतिषेध वाले 'वृद्धयौत्त्ववतृज्वद्भावादि'—वार्तिकों को अनावश्यक बताते हुए भाष्यकार ने कहा कि सूत्र में पर शब्द इष्ट वाची है । इसलिए तुल्य बल और विरोध में इष्ट कार्य का विधान करना ही सूत्र का कार्य है । इष्ट कार्य यदि पूर्वकार्य है तो वह भी होगा । यदि पर कार्य करने से इष्ट प्रयोग की सिद्धि होती है, तो पर कार्य होगा । इस तरह "सकृद गतौ" के द्वारा बाध और पुनः प्रसंग-विज्ञानमूलक प्रवृत्ति दोनों वहाँ ध्वनित होती है ।

**यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः। अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव। जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरित्याहुः—तन्न। व्यक्तिपक्षे सर्वं लक्ष्यं**

परमित्यनेन किं क्रियते। द्वारम्। विप्रतिषेधे परं तावद् भवति तस्मिन् कृते यदि पूर्वमपि प्राप्नोति तदपि भवति। तदेतदुपपन्नं भवति—पुनः प्रसङ्गविज्ञानात् सिद्धमिति।

सरूपाणामिति सूत्रनिर्माणात्पाणिनेर्व्यक्तिपक्षः जात्याख्यायामितिसूत्रनिर्माणाच्च जातिपक्षोऽप्यभिमत एव तथा चः—

कैयटसीरदेवहरदत्तशब्दकौस्तुभकारादयस्तु व्यक्तेः पदार्थस्वीकारपक्षे प्रतिलक्ष्यं लक्षणोपप्लव आवश्यकः। अन्यथा अकः सवर्णे दीर्घः ६.१.१०१ इत्यनेन दैत्यारिरिति सिद्धौ सूत्रस्य चारितार्थ्येन रामावतार इति न सिद्ध्येत्। इत्थं सिद्धौ उभयोरपि शास्त्रयोः पूर्वपरयोरचारितार्थ्येन वृक्षेभ्य इति प्रयोगार्थोपप्लवं गतयोः 'सुपि च' ७.३.१०२ 'बहुवचने झल्येत्' ७.३.१०३ इत्युभयोः पूर्वपरयोः चारितार्थ्याभावेन पर्यायेण द्वयोरपि प्राप्तौ वृक्षाभ्य इत्यस्यानिष्टस्य प्रयोगस्य निवृत्तये विप्रतिषेधसूत्रं परमेव कार्यं भवति, न पूर्वं कार्यम् इति नियमार्थं तेन सकृद्गतिन्यायसिद्धिः। नचैवमुपप्लुतस्य पूर्वशास्त्रस्य सुपि चेत्यस्याचारितार्थ्यम् इति वाच्यम् पूर्वोक्तनियमवशादेतादृशलक्ष्यविषयकस्य पूर्वशास्त्रस्यानुपप्लवस्यैव कल्पनात्: जातिपक्षे तु सकलप्रयोगाणां सिद्धये एकमेव शास्त्रं भवति। इत्थं तच्च पूर्वं परम्वा शास्त्रं स्वोद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थम्। अतः यत्रोभयासम्भवरूपो विरोधस्तिष्ठति

कैयटादि ने इन परिभाषाओं की सिद्धि के लिए कुछ अन्य तर्क दिये। उन्होंने कहा कि यदि व्यक्ति को पदार्थ मानें; तब तो प्रत्येक लक्ष्य के लिए लक्षण का उपप्लव नया-नया निर्माण होगा; ऐसी स्थिति में उस लक्ष्य के लिए निर्मित पूर्व और पर शास्त्र दोनों अचरितार्थ ही रहेंगे, इसलिए बारी-बारी से दोनों की प्राप्ति होने पर विप्रतिषेध सूत्र नियम करेगा कि पर ही हो। इस तरह सकृद्-गतिन्याय—परि० ४१ की सिद्धि होती है। इस व्यक्तिपक्ष में विप्रतिषेध नियम के कारण इस लक्ष्य में सम्भावित प्रवृत्तिवाले पूर्व शास्त्र का उपप्लव ही नहीं होता है। जाति-पक्ष में तो उद्देश्यतावच्छेदकाक्रान्त अर्थात् प्रवृति के लिए अनिवार्य शर्त की पूर्ति करने वाले किसी लक्ष्य में चरितार्थ दोनों (पूर्व-पर) शास्त्रों में, सत्प्रतिपक्ष न्याय से अर्थात् विरुद्ध साध्य साधक हेतुओं के एक पक्ष (स्थान) पर रहने के कारण जैसे अनुमान नहीं होता उसी तरह एक साथ दोनों विरुद्ध शास्त्रों की प्रवृति के असम्भव रूप

यथा वृक्षेभ्य इत्यादौ वर्तते। तत्र उभयोरप्राप्तिर्भवति। सत्प्रतिपक्षन्यायात् अर्थात् यत्र साध्याभावसाधकं हेत्वन्तरं विद्यते तत्र सत्प्रतिपक्षे शब्दः नित्यः श्रावणत्वात् शब्दत्ववत्, शब्दोऽनित्यः कार्यत्वात् घटवत् इत्यादौ नित्यत्वानुमानं न भवति साध्यनित्यत्वाभावसाधकस्यान्यस्य हेतोः सत्वात्, शब्दोऽनित्य इत्यनित्यत्वानुमानमपि साध्यस्यानित्यत्वस्याभावसाधकस्यार्थान्नित्यत्वानुमापकस्य हेतोः श्रावणत्वस्य सत्वात् न जायते। इत्थं प्रथममनुमानद्वयमप्यवरुद्धं जायते पश्चाच्च प्रतिपक्षोऽस्तीति बुद्ध्या यथा विरोधिद्वयं मिथो भयान्न प्रवर्तते विरोधस्थले तथा वृक्षेभ्य इत्यस्य कृते वृक्षाभ्यामित्यत्र चरितार्थं सुपि च ७.३.१०२ इति स्वस्योपप्लवं न करोति, बहुवचने झल्येत् ७.३.१०३ इति विरोधिसूत्रं संभाव्य। वृक्षेषु इत्यत्र चरितार्थं 'बहुवचने झल्येत्' इति च वृक्षेभ्य ७.३.१०३ इत्यर्थं स्वस्योपप्लवं परिहरति सुपि च ७.३.१०२ इति सूत्रं संभाव्य। इत्थं जातिपक्षे परविध्यर्थं विप्रतिषेधसूत्रमिति पुनः प्रसङ्गविज्ञानसिद्धिरिति तन्न व्यक्तिपक्षे शास्त्रं सर्वं लक्ष्यं व्याप्नोति न जातिपक्ष इत्यत्र

---

विरोध स्थल में दोनों की अप्राप्ति होने पर विप्रतिषेध सूत्र पर शास्त्र की विधि के लिए होगा। इस तरह पुनः प्रसंग विज्ञान की सिद्धि होगी अर्थात् जब जातिपक्ष मानेंगे तो प्रतिलक्ष्य के लिए लक्षण का उपप्लव नहीं होगा। ऐसी स्थिति में पर और पूर्व शास्त्र का उद्देश्य जाति होगा। इस तरह 'अतो भिस ऐस्' ७.१.९. का उद्देश्य सकल अदन्ताङ्ग से पर भिस् होगा और सुपि च ७. ३. १०२ का भी सकल सुबव्यवहित पूर्वत्वविशिष्ट अदन्त अङ्ग होगा, दोनों सूत्र किसी न किसी लक्ष्य में प्रवृत्त होकर चरितार्थ हो गये हैं जैसे वृक्षैः में ऐस् और 'वृक्षाभ्याम्' दीर्घ चरितार्थ है। इसलिए उनमें सामर्थ्य का अभाव है। अतः जब किसी एक लक्ष्य में "रामैः" में दोनों की एक साथ प्राप्ति होगी; तो वहाँ दोनों का एक साथ होना सम्भव न होगा; यही उनमें विरोध होगा, जैसे यदि अनुमान में सत्प्रतिपक्ष हेतु रहता है तो अनुमान नहीं होता—जैसे यदि कोई कहे कि शब्दो नित्यः श्रावणत्वात् शब्दत्ववत् और दूसरा कहे शब्दोऽनित्यः कार्यत्वात्, घटवत् तो शब्द में नित्यत्व या अनित्यत्व दोनों में से किसी का अनुमान नहीं होगा; क्योंकि यहाँ एक साध्य के विरुद्ध दूसरा साध्य है और दोनों के साधक हेतु यहाँ मौजूद हैं। इसी तरह जहाँ दो विपरीत कार्य करने वाले सूत्रों की एकत्र प्राप्ति है, वहाँ दोनों में से कोई कार्य नहीं होगा। ऐसी परिस्थिति में पर शास्त्र की विधि के लिए विप्रतिषेध सूत्र होगा, वह विधायक होगा, नियमार्थक नहीं। इसलिए 'पर ही हो' ऐसा नियम न होने के कारण यदि पूर्व की पुनः प्राप्ति होगी तो वह भी हो जायगा। इस तरह 'पुनः प्रसंगविज्ञान' की सिद्धि होती है। यह कैयट का विचार है; परन्तु यह मत ठीक नहीं है व्यक्ति-पक्ष में सभी लक्ष्य को शास्त्र व्याप्त करते हैं और जातिपक्ष में नहीं करते हैं, इसमें कोई प्रमाण

**शास्त्रं व्याप्नोति न जातिपक्षे इत्यत्र मानाभावात् । न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । अत एव 'सरूप' सूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधेः प्रवृत्तौ गौरनुबन्ध्य इत्यादौ सकलगवानुबन्धनासम्भवात्कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे चाऽसर्वद्रव्यावगतेगौरनुबन्ध्य इत्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्त इत्युक्तम् ।।**

---

प्रमाणाभावात् । न ब्राह्मणं हन्यादित्यादौ ब्राह्मणत्वावच्छिन्नस्य प्रतिव्यक्ति हननाभावाय जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । केवलव्यक्तिपक्षाङ्गीकारे एकस्या एव ब्राह्मणव्यक्तेर्हननं प्रतिषिध्य वचनं कृतार्थं स्यान्न सर्वासां व्यक्तीनामिति हेतोर्जातिपक्षाश्रयणमिति भाष्यकाराकूतम् । तथाहि दृश्यते:—

'सरूपाणाम्—१.२.६४ इति सूत्रस्य भाष्ये-एवञ्च कृत्वा धर्मशास्त्रं प्रवृत्तम् ब्राह्मणो न हन्तव्यः सुरा न पेया इति । ब्राह्मणमात्रं च न हन्यन्ते सुरामात्रं च न पीयते । यदि द्रव्यं पदार्थः स्यादेकं ब्राह्मणमहत्वैकां च सुरामपीत्वान्यत्र कामचारः स्यात् इति । अतएव=जातिपक्षे शास्त्रस्य सकललक्ष्यव्यापकत्वादेव 'सरूपाणाम्' १.२.६४ इति सूत्रे जातौ पदार्थेऽनवयवेन ( साकल्येन ) विधिप्रवृत्तौगौरनुबन्ध्य इत्यादौ सकलानां गवामनुबन्धनासंभवात् कर्मणो वैगुण्यमुक्तम् । अर्थात् 'गौरनुबन्ध्यः' इत्यनेन यूपे

---

नहीं है । प्रत्युत हम देखते हैं कि 'न ब्राह्मणं हन्यात्' यहाँ भाष्यकार ने जातिपक्ष के आश्रयण की आवश्यकता यह कह कर बतायी है कि जातिपक्ष में ही इस वाक्य का विषय ब्राह्मणत्व जाति का आश्रय सकल व्यक्ति होगा । अर्थात् 'न ब्राह्मणं हन्यात्' में यदि जातिपक्ष मानेंगे, तब इस का अर्थ होगा ब्राह्मण जाति की हत्या नहीं करनी चाहिए । जाति की हत्या तो असम्भव है, इसलिए इसका अर्थ लिया जायगा कि ब्राह्मण जाति के किसी व्यक्ति को नहीं मारना चाहिए । इस तरह जाति पक्ष में सकल व्यक्ति को लक्ष्य बनाया जाता है यह पूर्वोक्त प्रमाण से सिद्ध है । इसीलिए (जातिपक्ष में शास्त्र सकल लक्ष्य को व्याप्त करता है यह मानने के कारण ही) 'सरूप' १. २. ६४ सूत्र में भाष्यकारने कहा कि जाति पक्ष माने तो गौरनुबन्ध्यः इस वाक्य का अर्थ होगा कि गो जाति को बान्धना चाहिए । इस तरह यह विधिवाक्य सकल गो व्यक्ति को बान्धने की आज्ञा देगा । जैसा कि होना असम्भव है । इसलिए अनुबन्धन क्रिया का कर्म के रूप में गो का अन्वय ठीक नहीं जँचेगा और अगर द्रव्य (व्यक्ति) वाद को स्वीकार करें, तो दिक्कत यह होगी एक यज्ञ में किसी एक गाय का अनुबन्धन शास्त्रीय माना जायगा और अन्य यज्ञों में बान्धी गई गायों का बन्धन अशास्त्रीय माना जायगा; क्योंकि व्यक्तिपक्ष में इस वाक्य का तात्पर्य केवल एक गाय का बन्धन ही होगा । इस भाष्य से तो यही सिद्ध होता है कि जातिपक्ष में किसी वाक्य का विषय उस जाति के सारे व्यक्ति होते हैं । अतः इस भाष्य से विपरीत होने के कारण कैयट का मत अमान्य है । भाष्य-

**किञ्च न हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्षे इत्यत्र मानमस्ति ।**

**अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्वमित्यत्र विनिगमकाभावः ।**

---

गवानुबन्धनं विधीयते । तत्र यदि जातिपक्षो गृह्येत तर्हि सकलगोजातेर्बन्धनमावश्यकं भवेत् । तच्च न संभवति । अतः वचनस्य पूर्वोक्तस्य अर्थानुपालनाभावात् कर्मणो वैगुण्यं स्यादित्युक्तम् । एतेन सिद्धयति यत् जातिपक्षेऽपि शास्त्रं सर्वं लक्ष्यं व्याप्नोत्येव । तत्रैव सरूपसूत्रे प्रोक्तं यत् व्यक्तिपक्षे (द्रव्यवादे) सर्वद्रव्यप्रत्ययः सर्वव्यक्तिबोधो न स्यादतः व्यक्तिपक्षे गौरनुबन्ध्य इत्यनेन विहितं बन्धनं एकगोविषयकमेव शास्त्रोक्तं स्यात् । अपरगोबन्धनमशास्त्रोक्तं स्यात् । एतेन कैयटकथनवैपरीत्यमेव सिद्धयति । व्यक्तिपक्षे शास्त्रं सकलं लक्ष्यं न व्याप्नोतीत्यभिप्रायस्यैवानेन सिद्धेः । **कैयटेन** तृजादिदृष्टान्तः व्यक्तिपक्षे दर्शितः, लौकिकदृष्टान्तश्च जातिपक्षे प्रस्तुतस्तदप्ययुक्तमित्याह—**किञ्चेत्यादिना** । भाष्योक्तस्य तृजादिदृष्टान्तस्य व्यक्तिपक्षे सकललक्ष्यविषयत्वं न तु जातिपक्ष इत्यत्र किञ्चिद् विनिगमकं न दृश्यते । कैयटेन व्यक्तिपक्षं स्वीकृत्य या सकृद्गतिन्यायसिद्धिर्विहिता सापि न रोचते मह्यमित्याह—**अपि चेत्यादिना** । व्यक्तिपक्षेऽपि अन्यव्यक्तिरूपविषयलाभेन वृक्षाभ्यां वृक्षेषु इत्यादौ

---

कार ने जो "ण्वुल्तृचौ" का दृष्टान्त दिया है उससे यह सिद्ध नहीं होता कि व्यक्तिपक्ष में ही सकललक्ष्यविषयक लक्षण का उपप्लव होता है और जातिपक्ष में लक्षण का विषय सभी लक्ष्य नहीं होता है ।

व्यक्तिपक्ष में भी जब शास्त्र किसी एक लक्ष्य (व्यक्ति) में प्रवृत्त होकर सफल हो गया है तो वह लक्ष्य (व्यक्ति) विरोध के कारण अपने विषय की कल्पना नहीं करेगा, ऐसा भी माना जा सकता है । अर्थात् व्यक्तिपक्ष में प्रतिव्यक्ति जो लक्षण का उपप्लव मानकर पूर्व और पर दोनों शास्त्रों को अचरितार्थ बताया गया है और दोनों की प्राप्ति में पर ही हो ऐसा कह कर "सकृद्गतिन्याय की सिद्धि बतायी गयी है और कहा गया है कि ऐसे स्थलों में जहाँ पर शास्त्र की प्रवृत्ति अभीष्ट है; वहाँ पूर्वशास्त्र का उपप्लव नहीं हुआ करता है, किन्तु व्यक्ति पक्ष में भी यह कहा जा सकता है कि इस पक्ष में भी किसी एक व्यक्ति में जब पूर्व और पर शास्त्र चरितार्थ हो गये हैं, तो पूर्व और पर शास्त्र के विरोध स्थल में यह व्यक्ति विरोध के कारण अपने लिए लक्षण का उपप्लव नहीं करेगा । उस लक्ष्य के लिए लक्षण की आवृति या नया निर्माण नहीं होगा ।

जातिपक्ष में भी उस जाति के आश्रय अमुक व्यक्ति में सूत्र प्रवृत्त होगा और उसी जाति के आश्रय अन्य व्यक्ति में प्रवृत्त नहीं होगा; यह कौन कह सकता है; क्योंकि यहाँ एक पक्ष के साधक और दूसरे पक्ष के बाधक प्रमाणों का अभाव है ।

**तत्र लक्ष्यानुसारात्क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्य-सम्मत मार्ग एव युक्त इति बोध्यम् ।**
**द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी । इदम् 'इको गुणे'ति सूत्रे कैयटे स्पष्टम् । यथा शिष्टादित्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमि-**

---

चरितार्थयोः सुपि च ७.३.१०२ बहुवचने झल्येत् ७.३.१०३ इत्यनयोः सतोरियं व्यक्तिः विरोधस्थलरूपा लक्ष्यरूपा व्यक्तिः=रामेभ्य इत्यादौ विरोधात् स्वविषयकं शास्त्रं न कल्पयतीत्यपि शक्यते वक्तुम् । कैयटेन जातिपक्षे वृक्षाभ्यां इत्यादौ उक्तसूत्रयोः सुपि च ७.३.१०२ बहुवचने झल्येत् ७.३.१०३ इत्यनयोः साफल्यं यद्दर्शितं, तदपि न युक्तम् इति दर्शयति—**जातिपक्षेऽपीत्यादिना** । यञादिसुपि परे ऽदन्तत्वादिजात्याश्रयत्वाद् वृक्षाभ्यां वृक्षेभ्य इत्यनयोरुभयोः समानत्वाद् वृक्षाभ्यामित्येतदर्थं लक्षणं सुपि चेत्युपप्लवते, न वृक्षेभ्यः इत्यर्थमित्यत्र एकतरपक्षपातिन्या युक्तेरभावः । कैयटादिमतं युक्तिभिः खण्डयित्वा स्वमतं भाष्यकारसिद्धान्तानुकूलत्वादुत्तममित्याह—**तत्रेत्यादिना** । स्थितस्य गतिश्चिन्तनीयेत्येव व्याकरणशास्त्रस्य लक्ष्यत्वाल्लक्ष्यानुसारिव्याख्यानं शरणीकृत्य क्वचिच्छास्त्रीयदृष्टान्तस्य ण्वुल्तृचाविति सूत्रविहितौ ण्वुल्तृचौ यथा पर्यायेण भवतस्तथैव सूत्रद्वयं पर्यायेण स्यादित्येवं रूपस्य पूर्वोक्तस्याश्रयणं क्रियते । तेन संकृद्गतिन्यायसिद्धिरित्यनुपदमेवोक्तम् । क्वचिच्च तुल्यबलयो राज्ञोर्यथैकः प्रेष्यो भवति स एकस्मिन् काले सम्पाद्ये विभिन्नदेशस्थे उभयोः कार्यं न करोति, यौगपद्यासम्भवात्, तथा लक्ष्यमुभयोः शास्त्रयोः विधेयसम्बन्धं न करिष्यतीति, लौकिकदृष्टान्ताश्रयणेन पुनर्विज्ञानन्यायसिद्धिरिति भावः । द्वयोः कार्य-

---

इस तरह इष्ट लक्ष्य सिद्धि को ध्यान में रखकर कहीं शास्त्रीय दृष्टान्त का और कहीं लौकिक दृष्टान्त का आश्रयण करना चाहिए, इस भाष्य संमत मार्ग को ही प्रशस्त मार्ग मानना चाहिए ।

शास्त्रीय दृष्टान्त "ण्वुलृतृचौ" है वहाँ जैसे पर्याय से होता है वैसे पर्याय से होगा । लौकिक दृष्टान्त 'तुल्यबलयोरेकः प्रेष्यो भवति' इस सन्दर्भ के द्वारा दिखाया गया है ।

दो कार्यों की एक साथ असंभवता ही विप्रतिषेधशास्त्र की प्रवृत्ति के लिए उपयोगिनी है, एक में दो कार्यों की असंभावना ही नहीं । यह बात "इकोगुण" सूत्र के कैयट में स्पष्ट है । जैसे शिष्टात् शास्+हि ऐसी स्थिति में 'तातङ्' और 'शा' आदेश दोनों की एक साथ प्रवृत्ति होने पर एक दूसरे के निमित्त के आनन्तर्य का असंभव ही विप्रतिषेध सूत्र की प्रवृत्ति में कारण हुआ । 'तातङ्' आदेश होने पर 'हि' से अव्यवहित पूर्व में शास् धातु नहीं मिलेगा । इसलिए 'तातङ्' और 'शा' आदेश दोनों का स्थानी यद्यपि एक नहीं है; तथापि दोनों की प्रवृत्ति की असंभवता ने ही विप्रतिषेध शास्त्र की प्रवृत्ति करायी है । यद्यपि 'तातङ्' आदि को यदि

**त्तानन्तर्य्यासम्भवः। यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत्तथाप्यादेशप्रवृत्त्युत्तरमेव स न तु तत्प्रवृत्तिकाले। एवं नुम्तृज्वत्त्वयोः प्रियक्रोष्टूनीत्यादौ युगपदसम्भवो यदागमाः इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः। एवं भिन्धीत्यत्र तातङ्धिभावयोर्युगपदेकस्था-**

---

योर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी न तु एकस्य कार्यद्वयासम्भव एवेति भावः। इदमिकोगुणवृद्धी १. १. ३ इति सूत्रे कैयटे स्पष्टम्। तथाहि इको गुणवृद्धी १. १. ३ इति सूत्रस्थं "नावश्यं द्विकार्ययोग एव विप्रतिषेधः। किन्तर्हि। असंभवोऽपि इत्यादि भाष्यग्रन्थं व्याचक्षाणेन कैयटेन नावश्यमिति प्रतीकमादाय प्रोक्तम् द्विकार्ययोगत्वाभावे केवलोऽप्यसंभवो विप्रतिषेधः इत्यर्थ इत्युक्त्वा पूर्वोक्तार्थः स्पष्टीकृत एव। यथा 'शिष्टात्' इत्यत्र शास् हि इत्यवस्थायां 'शा हौ' ६. ४. ३५ इति शादेशस्य "तुह्योस्तातङाशिष्यन्यतरस्याम्" ७. १. ३५ इति तातङादेशस्य चैकस्थानिकत्वं नास्ति शादेशस्य शास्स्थानिकत्वात् तातङादेशस्य च हिस्थानिकत्वात् तथापि यौगपद्येन प्रवृत्तौ स्वस्वनिमित्तानन्तर्यसम्भवो वर्तते। अतः विप्रतिषेधशास्त्रं प्रवर्तते परत्वाच्च तातङादेशो जायते। **स्वस्वनिमित्तानन्तर्यासम्भव** इति। शासः हौ परे शादेशो विधीयते अतः शादेशाय हिनिरूपिताव्यवहितपूर्वत्वरूपमानन्तर्यं विधीयते। तातङादेशाय च अङ्गनिरूपिताव्यवहितपरत्वरूपमानन्तर्यमपक्ष्यते। इत्थमेकस्य प्रवृत्तावपरस्य पूर्वोक्तानन्तर्यस्यासम्भवत्वमिह जायते। तदेवासम्भवत्वमादाय विप्रतिषेधसूत्रं प्रवर्तते। सम्पद्यते च परत्वात्तातङादेश इति। न च शास्+हीति स्थितौ हिनिरूपिताव्यवहितपूर्वत्वविशिष्टशास्त्वं शासि वर्तते, अङ्गाव्यवहितोत्तरत्वविशिष्टहिशब्दत्वं च हौ, युगपत्सम्भवत्येवेति वाच्यम् हिपरत्वविशिष्टः शासाधुरिति अङ्गपूर्वकस्तातङ् साधुरिति युगपन्न वक्तुं शक्यते इत्येवंरूपस्य असंभवस्य सत्त्वात्। ननु तातङ्शादेशयोः युगपज्जातयोरपि शातातङ् इत्यत्र तातङादेः स्थानिवद्भावेन आनन्तर्यं विद्यते इति नास्ति तदसम्भव इति चेन्न आदेशप्रवृत्युत्तरं स्थानिवद्भावेनानन्तर्यसम्भवेऽपि आदेशात्प्राग् उभयोः सूत्रयोः प्रवृत्तिकाले न तादृशस्यानन्तर्यस्य सम्भवः स्थानिवद्भावस्य आदेशप्रवृत्युत्तरमेव प्रवृत्तेः, उभयोः सूत्रयोः प्रवृत्तिकाले आदेशाभावादप्रवृत्तेः। **स** इत्यस्य स्थानिवद्भाव इत्यर्थः। एवं प्रियक्रोष्टूनि इत्यादौ

---

स्थानिवद्भाव कर दें; तब तो 'हि' के परे है ही, तथापि स्थानिवद्भाव से हित्व का आनयन आदेश प्रवृत्ति के बाद में ही होगा, किन्तु तातङ् आदेश के काल में तो नहीं होगा। इसी तरह-प्रियक्रोष्टूनि में 'नुम्' और 'तृज्वद्भाव' का एक साथ होना असंभव था, इसीलिए विप्रतिषेध शास्त्र की प्रवृत्ति हुई "यदागमाः" इस न्याय से 'नुम्' आगम को क्रोष्टु का गुणीभूत मान कर क्रोष्टु के ग्रहण से क्रोटुन् का ग्रहण तो नुम् की प्रवृत्ति के बाद होता; इसीलिए प्रवृत्ति के पहले जो तृज्वत् और नम् आगम की यौगपद्यासंभावना थी; उसी को लेकर विप्रतिषेध शास्त्र की प्रवृत्ति हुई। "वारी-

**निसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासम्भवो बोध्यः। नुमनुटोरपि नुड्यजादिविभक्तचानन्तर्य्यबाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद्विप्रतिषेधः।**

---

नुमतृज्वद्भावयोर्युगपदसम्भव एव विप्रतिषेधसूत्रप्रवृत्तौ निमित्तम्। प्रियाः क्रोष्टारो येषां कुलानामिति विग्रहे निष्पन्नस्य प्रियक्रोष्टुशब्दस्य नपुंसकत्वेन ततो जसि तस्य श्यादेशे प्रियक्रोष्टु इ इति स्थिते 'शि सर्वनामस्थानम्' १. १. ४२ इति सर्वनामस्थानसंज्ञायाम् कृतायां तृज्वत् क्रोष्टुः ७. १. ९५ इति तृज्वद्भावस्य 'इकोऽचि विभक्तौ ७. १. ७३ इति नपुंसकस्य झलचः ७. १. ७२ इति वा नुमश्च युगपत्प्रवृत्तावानन्तर्यविरोधः असंबुद्धिसर्वनामस्थानपरकक्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः साधुः अजादिविभक्तिपरकः सर्वनामस्थानपरकः नुमघटितक्रोष्टून् इति साधुरित्यस्य युगपद्वक्तुमशक्यत्वात्। ननु नुमागमे कृतेऽपि यदागमन्यायेन (प. १२) क्रोष्टुशब्दोऽस्त्येवेति चेन्न आदेशोत्तरं 'यदागमन्यायेन' तथा सम्भवेऽपि आदेशात् प्राग् आनन्तर्यासम्भवस्य स्पष्टत्वात्। न च प्रियक्रोष्टूनीत्यादौ "वृद्धयौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन इति वार्तिकेन पूर्वविप्रतिषेधात् तृज्वद्भावो नुमा बाध्यते, न परविप्रतिषेधात् इति विप्रतिषेधसूत्रसन्दर्भे तदुदाहरणमसंगतमिति वाच्यम् विप्रतिषेधसूत्रे परशब्दः इष्टवाचीति कृत्वा सर्वेषां पूर्वविप्रतिषेधबलवत्प्रतिपादकवार्तिकानां भाष्ये प्रत्याख्यानात् तथाहि—विप्रतिषेधे परमित्युक्त्वाङ्गाधिकारे पूर्वमिति वक्तव्यं—किं कृतं भवति। पूर्वविप्रतिषेधा न पठितव्या भवन्ति-गुणवृद्धयोत्त्व इत्यनन्तरं भाष्ये प्रोक्तम्—पर शब्दोऽयं बह्वर्थः। अस्त्येव व्यवस्थायां वर्तते। तद्यथा पूर्वः पर इति। अस्त्यन्यार्थे वर्तते परपुत्रः। परभार्या। अन्यपुत्रः। अन्यभार्येति गम्यते। प्राधान्ये वर्तते। तद्यथा परमियंब्राह्मण्यस्मिन् कुटुम्बे। प्रधानमिति गम्यते। अस्तीष्टवाची परशब्दः। तद्यथा परं धाम गतः। इष्टं धामेति गम्यते। तद्य इष्टवाची पर शब्दः, तस्येदं ग्रहणम्। विप्रतिषेधे परं यदिष्टं तद्भवति। इत्थमत्रापि विप्रतिसूत्रं प्रवर्तत इति। न तदीया चर्चात्रासंगताः एवं भिन्धीत्यत्र तातङो धिना बाधे उभयोर्युगपदेकस्मिन् स्थाने विधानरूपासम्भव एव। झलन्तादङ्गात् परस्य हेर्धिरित्यर्थकस्य हुझल्भ्यो हेर्धिः ६. ४. १०१ इति सूत्रस्य प्रवृत्तौ हिः स्थानित्वेनापेक्ष्यते, आशिषि अङ्गात् परयोस्तुह्योस्तातङ् वा स्यादित्यर्थकस्य तुह्योस्तातङाशिष्यन्यतरस्याम् ७. १. ३५ इत्यस्य च प्रवृत्तौ हिः स्थानी। अतः एकस्थानिकयोरुभयोरादेशयोस्तातङ्धिभावयोर्युगपदसम्भवरूपविप्रतिषेधमादाय सूत्रं प्रवर्तते। नन्वेकस्यैव हेः स्थाने युगपदुभौ तातङ्धिभावौ कर्तुं शक्येते इत्यस्ति युगपत्सम्भव उभयोः। हेरुभावादेशौ क्रियेते। उभे सूत्रे सहैवैकवाक्यतया प्रवर्तेताम् तेन हेस्तात्धिरिति तादविशिष्टो धिरादेश उभयोः सूत्रयोः प्रयासेन स्तामिति न दोष इत्यत आह—**अङ्गरूपनिमित्तानन्तर्यस्येति**। युगपत्प्रवृत्तावुभयोर्यादृशस्याङ्गरूपनिमित्तानन्तर्यस्यापेक्षा वर्तते तस्यासम्भवः स्याद्युगपत्प्रवृत्तौ। अङ्गादव्यवहित-

**क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्यमित्यर्थात्पूर्वमेव भवति। तेन सर्वे पूर्वविप्रतिषेधाः संगृहीता इति 'स्वरितेन' इति सूत्रे भाष्ये। 'विप्रतिषेध'सूत्रस्थपरशब्दस्येष्टवाचित्वात्तत्संग्रह इति 'विप्रतिषेध'सूत्रे भाष्ये ॥४१॥**

---

परस्तात्प्रयोज्यो मध्यमपुरुषैकवचने आशिषि गम्यमानायामिति 'तुह्योः' सूत्रस्यापेक्षा सा भिन्द्तात्धि इतिस्थितौ न सफलीभवति धेरपि तत्र सत्वात्। झलन्ताङ्गाव्यवहितपरः धिः प्रयोज्यो मध्यमपुरुषैकवचने इति हुझल्भ्यो हेरिति सूत्रस्यापेक्षा सा च भिन्द् तात्धि इत्यत्र न सिद्धयति, तादित्यनेन व्यवधानात्। धिविशिष्टस्तादादेशे स्वीकृतेऽप्यानन्तर्यविघातः स्पष्ट एव। अ॒ःस्तादृशानन्तर्यासम्भवरूपविरोधमादाय विप्रतिषेधसूत्रं प्रवर्तते। मूले भिन्धीत्युक्त्या आशिषि मध्यमपुरुषैकवचने भिन्तादिति रूपस्यानभिधानं सूच्यते।

एवं वारीणाम् इत्यत्र 'वारि+आम्' इति स्थिते 'इकोऽचि विभक्तौ' ७. १. ७३ प्राप्तं नुमं 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेति वार्तिकेन पूर्वविप्रतिषेधाद्बाधित्वा 'ह्रस्वनद्यापो नुट्' ७. १. ५४ इति नुड् भवति। तेन नाम्परत्वान्नामि ६. ४. ३. इति दीर्घः सिद्धयति। अन्यथा 'मिदचोऽन्त्यात् परः' १. १. ४७ इति परिभाषया नुमः पूर्वान्तावयवत्वेन वारिन्+आम् इति खण्डे स्वीकृते अजन्ताङ्गत्वाभावात् नाम्परत्वाभावाच्च दीर्घो न स्यात्। तत्र नुटि कृते वारि+नाम् इति स्थितौ 'इकोऽचि विभक्तौ' ७. १. ७३ इति सूत्रप्रवृत्तौ अपेक्षितस्य इगन्ताङ्गाजादिविभक्त्योरानन्तर्यस्य बाधो नुमि च कृते नुमः पूर्वान्तावयवत्वेन वारिन्+आम् इतिस्थितौ ह्रस्वनद्यापो नुट् ७. १. ५४ इति सूत्रप्रवृत्तावपेक्षितस्य ह्रस्वान्ताङ्गाम्विभक्त्योरानन्तर्यस्याभावो भवतीत्यसम्भवरूपो विप्रतिषेधोऽस्त्येव। तयोः कृतयोः ह्रस्वाव्यवहितपूर्वको नुट् साधुः अजादिविभक्तिपरको नुम् साधुरिति न शक्यते युगपन्निगदितुम्।

यत्र च पूर्वशास्त्रप्रवृत्त्यैवेष्टं सिद्ध्यति तत्र पूर्वशास्त्रप्रवृत्तिं व्यवस्थापयति—**क्वचिदिष्टानुरोधेनेत्यादिना**। शास्त्रस्येष्टसिद्ध्यर्थत्वादनिष्टनिवर्तकत्वात् स्थितस्य गतिश्चिन्तनीयेत्येव च व्याकरणस्य लक्ष्यत्वादिष्टरूपसिद्धिमनुरुध्य पूर्वशास्त्रे स्वरितत्वप्रतिज्ञा क्रियते। तत्प्रतिज्ञाबलाच्च स्वरितेनाधिकारः १. ३. ११ इति सूत्रं तत्र प्रवर्त्य तत्र चाधिकारशब्दस्याधिकं कार्यमित्यर्थं कृत्वा पूर्वकार्यस्य सिद्धिः क्रियते। इत्थं सर्वे पूर्वविप्रतिषेधाः गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषेधेनेत्यादयः संगृहीता जायन्ते। अतः तानि पूर्वविप्रतिषेधबलवत्त्वबोधकानि वार्तिकानि न कर्तव्यानीति लाघवम्। सर्वमिदं **स्वरितेनाधिकार** १. ३. ११ इति सूत्रस्य **महाभाष्ये** स्पष्टम्। तथाहि:—पूर्वविप्रतिषेधा न पठितव्या भवन्ति। गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धं नुमचिरतृज्वद्भावेभ्यो नुडिति नुम्नुटौ स्वरयिष्यते तत्र स्वरितेनाधिकः कारो भवतीति नुम्नुटौ भविष्यतः। कथं पुनरधिकः कार इत्यनेन पूर्वविप्रतिषेधाः

नन्वेवमेधत इत्यादौ परत्वाद्विकरणेऽनुदात्तङित इत्यादिनियमानुपपत्तिस्तेन व्यवधानादत आह—

**विकरणेभ्यो नियमो बलीयान् ॥ ४२ ॥**

शक्या न पठितुम्। लोकतः। तद्यथा-लोकेऽधिकमयं कारं करोतीतित्युच्यते। योऽयं दुर्बलः सन् बलवद्भिः सह भारं वहत्येवमिहाप्यधिकमयं कारं करोतीत्युच्यते। योऽयं पूर्वः सन् परं बाधते ॥ अत्र कैयटः पूर्वविप्रतिषेध इति प्रतीकमादाय लिखति-विप्रतिषेधे परं कार्यम् १.४.२ इति वचनात् पूर्वो बाध्यः स्वरितत्वप्रतिज्ञानेन बाधकः सम्पद्यते तुल्यजातीयस्य बाधको न तु नित्यत्वादियुक्तस्येति ॥

विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात्तेषां सर्वेषां पूर्वविप्रतिषेधस्थलानां संग्रह इति विप्रतिषेधसूत्रे भाष्ये प्रोक्तम् तच्च भाष्यमुद्धृतं दुर्गाव्याख्यायां २४४ तमे पृष्ठे। ॥ **इति शिवम् ॥ ४१**

**विकरणेभ्यो नियमो बलीयान्—४२**

प्रियंवदः जनमेजयः पचमान इत्यादौ विकरणस्य (शबादेः) चारितार्थ्यात्, लिडादौ (पेचे इत्यादौ) नियमस्य (आत्मनेपदस्य) च सावकाशत्वाद् एधते एधिष्यत इत्यादौ एध्इत्यवस्थायां प्राप्तमात्मनेपदं परत्वाद् बाधित्वा विकरणे शप्स्यादौ च कृते तद्व्यवधानादनुदात्तङित आत्मनेपदम् १.३.१२ इत्यात्मनेपदं न स्यादत आह **विकरणेभ्य** इति। प्रकृतिप्रत्यययोर्धातुतिङोर्मध्ये यस्तिष्ठति स विकरणः

णाम्'' में नुम् को बाध कर 'पूर्वविप्रतिषेध' से नुट् होता है। यहाँ नुम् और नुट् में विप्रतिषेध इस तरह है कि यदि नुट् करते हैं तो अजादि विभक्ति का आनन्तर्य नहीं रहता, बीच में नुट् का 'न' व्यवधान हो जाता है, यदि नुम् होता है तो ह्रस्वान्त अङ्ग का अभाव हो जाता है। इसलिए एक के करने से दूसरे का असंभव ही यहाँ विप्रतिषेध है।

''नुमचिरतृज्वद्भाव'' यह वार्तिक विप्रतिषेधे परं कार्यम् और स्वरितेनाधिकारः सूत्र के भाष्य में फलितार्थ कथन के रूप में माना गया है। ''स्वरितेनाधिकारः'' सूत्र में भाष्यकार ने कहा कि कहीं इष्टसिद्धि के लिए पूर्वशास्त्र में स्वरितत्व प्रतिज्ञा के बल से स्वरितेनाधिकं कार्यं भवति' ऐसी अधिकार शब्द की व्याख्या करने से पूर्व ही कार्य होगा। इसीलिए जितने पूर्वविप्रतिषेध वार्तिक हैं सब का संग्रह हो जायगा। विप्रतिषेधसूत्र में पर शब्द इष्टवाची है। इस तरह विप्रतिषेध रहने पर इष्ट कार्य हो ऐसी व्याख्या से पूर्वविप्रतिषेधों का संग्रह हो जायगा, यह विप्रतिषेध सूत्र के भाष्य में कहा गया है।

इस तरह ''वारीणाम्'' में भी विप्रतिषेध दिखाना आवश्यक है।

इति शिवम् ४१

**विकरणेभ्यो नियमो बलीयान् ४२**

'खश्' और 'शानच्' आदि प्रत्यय वाले स्थलों में जैसे अरुन्तुदः और वर्धमानः में) विकरण सावकाश है और लिट् आदि आर्धधातुक में आत्मनेपः विधायक सूत्र

**अत्र 'वृद्भ्यः स्यसनोः' इति सूत्रेण स्येविभाषाऽतङ्विधानं ज्ञापकम्।**

प्रकृतेर्गुणवृद्धिद्वित्वादिहेतुत्वात् शप्स्यतास्सिच्चङङादयो विकरणाः, विक्रियते प्रकृतिर्येन स विकरण इति व्युत्पत्तेः। नियम्यते कर्तृगामिक्रियाफलत्वं क्रियायाः कर्तृकर्मभाववाच्यत्वादिकं व्यवस्थाप्यते येन स नियमः तिङ्प्रत्ययः। विकरणनियमशब्दौ योगरूढौ तेन विकरणपदेन विकारजनकशबादयः नियमपदेन च परस्मैपदात्मनेपदे "अनुदात्तङितः" "व्याङ्परिभ्यो रमः" इत्यादिसूत्रविहिते गृह्येन्ते। अतो नातिव्याप्त्यादिदोषः। विकरणापेक्षयानया नियमस्य बलवत्त्वबोधनात् प्रथममात्मनेपदं ततश्च शप्स्यादिः। अतो न दोषः।

नच विप्रतिषेधसूत्रे परशब्दस्येष्टवाचित्वं स्वीकृतं, तेन पूर्वविप्रतिषेधेन नियमशास्त्रप्रवृत्तिसिद्धिरितिवाच्यम्, पूर्वविप्रतिषेधेनेति कृत्वा कात्यायनेन यानि स्थलानि वार्तिकेषु निर्दिष्टानि, तेषां संग्रहाय वार्तिकानाञ्च प्रत्याख्यानायैव परशब्दस्येष्टवाचित्वस्वीकारात्। वार्तिकारम्भतत्प्रत्याख्यानयोः फलैक्याय च यानि यानि वार्तिकोदाहरणानि तेषां सिद्ध्यर्थमेव पूर्वविप्रतिषेधः स्वीक्रियते। अत्र च परिभाषायां ज्ञापकं 'वृद्भ्यः स्यसनोः, १. ३. ९२ इति सूत्रेण स्ये परे विकल्पेनात्मनेपदविधानम्। अन्यथा (यदीयं परिभाषा न स्यात्तदा) वर्त्स्यन्तीत्यादौ वृध् इत्यवस्थायां परत्वात् 'स्यतासी लृलुटोः' ३. १. ३३ इति स्यविकरणे जाते तेन व्यवधानात् अनुदात्तङित-आत्मनेपदम् १. ३. १२ इति आत्मनेपदाप्राप्त्या सामान्येन तिबादिसूत्रेणोभयपदसिद्धौ वृद्भ्यः स्यसनोः १. ३. ९२ इति विकल्पेन परस्मैपदविधानं व्यर्थं स्यात्। अतो ज्ञायते यत् पाणिनिः विकरणेभ्यो नियमं बलवन्तं स्वीकरोति। परिभाषायां ज्ञापितायान्तु विकरणं बाधित्वा यदात्मनेपदं प्राप्यते तस्य 'स्ये' परे विकल्पेन बाधपुरस्सरं परस्मैपदविधानाय सूत्रमावश्यकम्। ननु ज्ञापितायामपि परिभाषायां वृध् इत्यत्र स्यपरत्वाभावात् कथं वृद्भ्यः स्यसनोः १. ३. ९२ इत्यस्य प्रवृत्तिरित्यत आह

---

(नियम सूत्र) चरितार्थ हैं, एधते में दोनों की प्राप्ति होगी, 'पर' होने के कारण शप् (विकरण) पहले हो जायगा; फिर अनुदात्तेत्धातु के अव्यवहित पर में लकार के नहीं होने के कारण आत्मनेपद नहीं होगा, इसलिए परिभाषा मानते हैं **"विकरणेभ्यो नियमो बलीयान्"** अर्थात् विकरण की अपेक्षा नियम अधिक बलवान् होता है। विप्रतिषेध सूत्र में पर शब्द को इष्टवाची मानकर पूर्वविप्रतिषेध मानने से तो निर्वाह नहीं हो सकता; क्योंकि पूर्वविप्रतिषेध की स्वीकृति उन्हीं स्थलों के लिए है; जहाँ भाष्यकार ने वैसा स्वीकार किया है। अवतरण वाक्य में निर्दिष्ट 'परत्वात्' यह शब्द "नित्यत्वात्" का भी उपलक्षक है —बोधक है।

अन्यथा विकरण जो कि नियम के होने और न होने दोनों ही स्थिति में प्राप्त होने के कारण नित्य है 'नित्यत्वात्' हो ही जाता परिभाषा का अवतरण असंगत माना जाता।

**अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्यात्। अत्रार्थे ज्ञापिते तु स्य इति विषयसप्तमी बोध्येत्य 'नुदात्तङित' इत्यत्र**

---

**स्य इति विषय सप्तमी।** स्य इत्यत्र विषयसप्तमीस्वीकारेणादोषात् सूत्रस्य स्यविषये प्रवृत्तेः। स्य इति विषयसप्तमीति अनुदात्तङितः १. ३. १२ इति सूत्रस्थभाष्येण ध्वन्यते। परिभाषा चेयं तत्र कण्ठरवेणोक्ता। तथाहि विकरणव्यवहितत्त्वात्तु नियमाप्राप्तिः। विकरणैस्तु व्यवहितत्वान्नियमो न प्राप्नोति। इदमिह संप्रधार्यम्-विकरणाः क्रियन्तां नियम इति। किमत्र कर्तव्यम्? परत्वाद् विकरणाः। नित्याः खल्वपि विकरणाः, कृतेऽपि निमित्ते प्राप्नुवन्त्यकृतेऽपि प्राप्नुवन्ति। नित्यत्वाच्च परत्वाच्च विकरणेषु कृतेषु विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति। अत्र सूत्रे यदि स्यसनोरिति परसप्तमी यस्य च भावेनेति सति सप्तमी वा स्यात् तदा विकरणैः व्यवहितत्वादित्यादिभाष्यासंगतिः स्यात्।

यद्यप्यव रणे परत्वादित्येव बाधनहेतुरुक्तः भाष्ये तु नित्यत्वादित्यपि बाधनहेतुतयोपन्यस्तं तथापि **परत्वादिति** नित्यत्वादित्यस्याप्युपलक्षणमिति स्वीकर्तव्यम्।

वृद्भ्यः स्यसनोः १. ३. १२ सूत्रस्य भाष्ये 'अथवा पुनरस्तु नियमः। ननु चोक्तं विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति-विकरणेभ्यो नियमो बलीयान् इति। यदयं विकरणविधावात्मनेपदपरस्मैपदान्याश्रयति 'पुषादिद्युताद्यॢदितः परस्मैपरेषु ३. १. ५५ आत्मनेपदेष्वन्यतरस्याम् ३. १. ५४ इति। नैतदस्ति ज्ञापकम्-अभिनिर्वृत्तानि हि लस्य स्थाने आत्मनेपदानि परस्मै-

---

"वृद्भ्यः स्यसनोः" १.३.९२ इस सूत्र से 'स्य' के परे रहते विकल्प से परस्मैपद का विधान इस परिभाषा का ज्ञापक है; क्योंकि परिभाषा के अभाव में वृध्' धातु से परत्वात् या नित्यत्वात् 'स्य' हो जाता, फिर वृध् स्य ऐसी अवस्था में 'स्य' के व्यवधान होने के कारण अनुदात्तेत् से पर नहीं होने से "अनुदात्तङित आत्मनेपदम्" १.३.१२ सूत्र की अप्राप्ति होने से "तिप्तस्" से दोनों पदों के हो जाने से ही 'वर्त्स्यति' और वर्तिष्यते दोनों की सिद्धि हो ही जाती; विकल्प से परस्मैपद का विधान व्यर्थ हो जाता। परन्तु पाणिनि तो जानते हैं कि विकरण से नियम बलवान् होता है। इसलिए नित्य आत्मनेपद हो जायगा, उन्हें अभीष्ट था कि परस्मैपद भी हो। इसलिए सूत्र बनाया गया। जब परिभाषा ज्ञापित हुई तब 'स्य' की प्रवृत्ति के पहले नियम की प्रवृत्ति को रोकने के लिए परस्मैपद का विधान चरितार्थ हुआ। यद्यपि 'वृध् लृट्' ऐसी अवस्था में 'स्य' परे नहीं होने से 'वृद्धभ्यः स्यसनोः' की प्राप्ति ही नहीं है; तथापि परिभाषा ज्ञापन के वाद 'स्ये' यहाँ विषयसप्तमी मानी जायगी, तब तो 'स्य' के विषय में ही अतङ् की प्राप्ति होगी, इस तरह 'वृध् लृट्' ऐसी स्थिति में नियम की प्राप्ति सम्भव है। यह बात 'अनुदात्तङित'

**भाष्यकैयटयोः स्पष्टम् ॥ विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति 'शदेः शित' इत्यत्र भाष्ये ध्वनितम् ।**

पदानि च (अभिनिवृत्तानीत्यस्य प्राप्तानीत्यर्थः) । यत्तर्हि-'अनुपसर्गाद्वा' इति विभाषां शास्ति । इत्थं परिभाषेयं कण्ठतः भाष्यकारेण प्रोक्ता ज्ञापकञ्चास्य प्रदर्शितम् । न च 'अनुपसर्गाद्वा' १. ३. ४३ इति विभाषातङ्विधानं लिटि लिङि च विकरण-रहिते चरितार्थम् चक्रमे, चक्राम, क्रम्यात् क्रंसीष्टेत्यादौ, ततश्च तत्सूत्रस्य ज्ञापन-प्रदर्शनपरं भाष्यमसंगतमिति वाच्यम् भाष्यस्य ज्ञापकदिक्प्रदर्शनपरत्वात् । तदुक्तं कैयटेन प्रदीपे—चक्रमे इत्यादौ सूत्रस्य चारितार्थ्यात् ज्ञापकदिक् प्रदर्शिता भाष्य-कृता । ज्ञापकं तु वृद्भ्यः स्यसनोरित्यत्र स्ये विकल्पविधानम् इति ।

"विकरणव्यवधानेऽपि नियमः प्रवर्तते" इत्यस्य ज्ञापकं वृद्भ्यः स्यसनोः १.३.९२ इति स्ये विकल्पेनातङ्—विधानमिति शदेः शितः १.३.६० इति सूत्रस्य भाष्येण ध्वन्यते । तत्र "उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानम्" इति वार्तिकं व्याचक्षणो भाष्यकार "उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानं कर्तव्यम् । न्यविशत व्यक्रीणीत ।। किं पुनः कारणं न सिद्धयति ? अटा व्यवहितत्वात् ।। इत्युक्त्वा नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदटो नित्यनिमित्तत्वादात्मनेपदाभावः (तस्मादुपसंख्यानम्) इत्यभिधायान्तरङ्गस्तर्हि लादेशः (लकारमात्रापेक्षत्वात् अडा-गमस्तु लकारविशेषापेक्षत्वाद् बहिरङ्गः) इत्याख्याय नैतद् विवदामहे लादेशोऽन्तरङ्गो नान्तरङ्ग इति लादेशेन सह नास्ति विवादः किन्तु नियमेन सहेति । अस्त्वयं (लादेशः) नित्योऽन्तरङ्गश्च अत्र खलु लादेशे कृते त्रीणि कार्याणि युगपत् प्राप्नुवन्ति—विक-रणाः अडागमः, नियम इति । तद्यदि सर्वतो नियमो लभ्येत, कृतं स्यात्, तत्तु न लभ्यम् इत्युक्तम् । अत्र कैयटः—ननु पूर्वमेव ज्ञापकाद्विकरणेभ्यो नियमस्य बली-यस्त्वं साधितं तत्किमुच्यते "तत्तु न लभ्यमिति" (विकरणेभ्यो नियमो बलीयानिति परिभाषया नियमस्याबलीयस्त्वेन विकरणात्पूर्वप्रवृत्तेः सुलभत्वात्) इति प्रश्नमुत्था-प्योदतरत्—अन्यथाऽपि तज्ज्ञापकं=वृद्भ्यः स्यसनोरिति स्येऽतङ्विधानरूपम्) समर्थयितुं शक्यते—कुतोऽपि विकरणो न व्यवधायक इति ( महाभाष्यम् प्रदीपश्च पृ० १७०) अस्मिन् पक्षे स्य इति परसप्तम्येव । विप्रतिषेधशास्त्रबाधकल्पनापि न कर्त्तव्या भवतीति लाघवम् ।

इस सूत्र के भाष्य में स्पष्ट है । **अथवा** यह भी कह सकते हैं कि विकरण व्यवधान में भी नियम की प्रवृत्ति होती है; इसका ज्ञापक यही सूत्र है, "यह शदेः शितः" १.३.६० सूत्र के भाष्य से ध्वनित होता है । इस पक्ष में 'वृद्भ्यः स्यसनोः' १.३.९२ के 'स्ये' में परसप्तमी ही मानी जाती है और विप्रतिषेध शास्त्र के बाध की कल्पना नहीं करनी पड़ती है । वस्तुतः यहाँ पूर्वोक्त दोनों पक्ष के अतिरिक्त एक अन्य पक्ष ही मानना युक्ति संगत है । वह पक्ष इस प्रकार है:—'वृद्भ्यः स्यसनोः १.३.९२

**वस्तुतोऽस्माज्ज्ञापकाद 'नुदात्तङित' इत्यादिप्रकरणं तिबादिविध्येकवाक्यतया विधायकम् । तत्र 'धातोरि'ति विहितपञ्चमी तत्समानाधिकरणमनुदात्तङित' इत्यादिविहितविशेषणमेव । एवं च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः । शबादिभ्यस्तु पूर्वमेव नियमः ।**

---

तृतीयपक्षं सिद्धान्तमङ्गीकृत्य वक्ति—**वस्तुत इत्यादिना** । तत्र तिप्तस्झी-त्यादिसूत्रे इत्यर्थः । **विहितपञ्चमीति** । स्यतासी लृलुटोः इति प्रतिपदोक्ततया विहितयोः स्यतासिप्रत्यययोः कृतयोः प्रवृत्यर्थं विहितपञ्चम्यावश्यकीति भावः । ननु प्रथम-पक्षे विषयसप्तमीस्वीकारे विप्रतिषेधशास्त्रबाधकल्पनायां विद्यमानं गौरवं परिहर्तुं विकरणविधानेऽपि नियमप्रवृत्तिरिति द्वितीयः पक्षः स्वीकृतः । किन्तु तत्रापि तिबादिसूत्रेण विहितानां नियमे स्वीकृतेऽपि जातप्रत्ययानां- निवृत्तिभिन्नवाक्य-कल्पना चेति गौरवमासीत् । तत्परिहारायायं तृतीयः पक्ष आश्रितः । 'वृद्भ्यः स्यसनोः'' १.३.९२ इति विभाषाऽतङ् विधानेनानुदात्तङितः १.३.१२ इत्यादि-प्रकरणं तिबादिविध्येकवाक्यतया विधायकमिति ज्ञापनेन तृतीयः पक्षः सिद्धः । अत्र न किमपि पूर्वोक्तं गौरवम् । तथाचानुदात्तङितो धातोर्विहितस्य लस्य स्थाने युष्मद-स्मदोः कर्तृकर्मत्वाभावे प्रथमपुरुषैकवचने आत्मनेपदस्य तादेशो भवतीत्यर्थेन स्यादि-व्यवधानेऽपि तङ् सिद्धयति ।

---

के ज्ञापन से यह समझना चाहिए कि अनुदात्तङित इत्यादि प्रकरण, 'तिप्तस्झि' इत्यादि विधिसूत्र के साथ एक वाक्य बनकर विधायक बनते हैं । उस सूत्र में अनु-वृत्त 'धातोः' में विहित अर्थ में पञ्चमी माननी चाहिए ''धातोः'' का समानाधि-करण 'अनुदात्तङितः को भी विहित विशेषण ही माना गया है । 'धातोः' में विहित पञ्चमी मानना इसलिए भी आवश्यक है कि ''स्यतासी लृलुटोः'' ३.१. ३३ ने प्रति-पदोक्त लृ और लुट् के परे रहते स्य और तासी प्रत्ययों का विधान किया है, इसलिए 'स्य' और तासी प्रत्यय प्रतिपदोक्तत्वात् पहले हो जायेंगे, ऐसी स्थिति में वृद्भ्यः स्यसनोः १.३.९२ से 'अ तङ्' विधान या अनुदात्तङित अत्मनेपदम् १.३.१२ से 'तङ्' विधान के लिए विहित पञ्चमी माने बिना काम चल नहीं सकता । ऐसी स्थिति में अनुदात्त त् और ङित् धातु से विहित लट् के स्थान में ''तिप्तस्'' इत्यादि प्रत्ययों में तङ् हो । ऐसा अर्थ होगा । इसी तरह वृत् आदि धातु से विहित लृ लुट् के स्थान में विकल्प से अतङ् होगा । लावस्था में विहित 'स्य' के व्यवधान में भी तङ् की सिद्धि हो जायगी । शप् आदि से तो नियम (आत्मनेपदादि, पहले ही होगा; क्योंकि 'तिप् तस् 'झि' यह सूत्र शप् विधायक सूत्र से पर है । इसलिए तिप्तस्झि सूत्र के साथ एकवाक्यता प्राप्त नियम सूत्र को पर ही मानना पड़ेगा और परत्वात् उसका होना लाजिमी होगा, क्योंकि तिबादि के बिना सार्वधातुकसंज्ञा के अभाव के कारण शप् आदि की प्रवृत्ति ही नहीं होगी ।

**यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा लकारविशेषापेक्षत्वात् स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः। अत्र पक्षे 'वृद्भ्यःस्य' इति सूत्रं स्यविषय इति व्याख्येयम्। आत्मनेपदशब्दादौ भाविसंज्ञाश्रयणीयेति तत्वम्।**

---

विहितपञ्चमीस्वीकृतिरेव गौरवमिति मन्यते चेच्चतुर्थपक्षः स्वीक्रियतामित्याह **यद्वेत्यादिना**। सामान्यापेक्षमन्तरङ्गं विशेषापेक्षं बहिरङ्गम्। इत्थं लमात्रापेक्षत्वादन्तरङ्गा नियमा ल-विशेषं लृडादिरूपमपेक्ष्य जायमानान् स्यादीन् "असिद्धं बहिरङ्गमन्तरङ्गे (प० ५१) इति बाधित्वा भविष्यन्तीति धातोरित्यत्र दिग्योगलक्षणपञ्चम्या अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते २.३.२९ इति इति जातायाः स्वीकारेऽपि न दोषः। अत्र पक्षे 'वृद्भ्यः स्य इति सूत्रं 'स्य' विषय-इति व्याख्येयम्। तेन तदानीं स्यपरत्वाभावेऽपि सूत्रस्य प्रवृत्तिः। ननु जातस्य तङः आत्मनेपदसंज्ञा क्रियते संज्ञायां च तङ् विधीयते तद्यथा एधते इत्यादौ एध् धातोरनुदात्तङित आत्मनेपदमित्यनेनात्मनेपदं विधीयते तङः आत्मनेपदसंज्ञा तदा स्यात् यदा च तल्लस्थाने विहितः स्यात्, लस्थाने विहितश्च तदा स्यात् यदात्मनेपदसंज्ञा स्यादित्यन्योन्याश्रयस्तु न शङ्क्यः आत्मनेपदादौ भाविसंज्ञाश्रयणात्।

---

अथवा दिग्योग-लक्षण-पञ्चमी मानने पर भी कोई दोष नहीं होगा। अर्थात् अनुदात्तेत् और ङित् से पर ल के स्थान में आत्मनेपद हो ऐसा सूत्रार्थ मानने पर भी कोई दोष नहीं होगा; क्योंकि तिबादि आदेश ल मात्र (लकार सामान्य) की अपेक्षा रखते हैं। इसके विपरीत लृट् आदि ल विशेष की अपेक्षा रखने के कारण स्यादि आदेश बहिरङ्ग हैं। इसतरह स्य को 'असिद्धं बहिरङ्गमन्तरङ्गे' इस परिभाषा (प०५१) के द्वारा बाधकर तङादि आदेश हो जायेंगे। इस पक्ष में "वृद्भ्यः स्यसनोः" सूत्र का अर्थ स्य के विषय में वृत् आदि धातु से परस्मैपद हो विकल्प से; ऐसा करना चाहिए। अर्थात् बहिरंग स्यादि को अन्तरङ्गात्वात् बाध कर प्राप्त नियम को अपवादत्वात् बाधकर "वृद्भ्यः स्यसनोः" की प्रवृत्ति होगी। यद्यपि इस समय 'स्य' आदि नहीं है; तब तो "वृद्भ्यः स्यसनोः" की प्रवृत्ति का कोई आसार नहीं दिखता; तथापि 'स्य' को विषयसप्तमी मानने से 'स्य' के बिना भी उसकी विषयता में सूत्र की प्राप्ति सम्भव है।

आत्मनेपद संज्ञा तो 'त आताम् झ' आदि को तब होगी; जब कि लकार के स्थान में ये आदेश होंगे और ये आदेश होंगे तब, जबकि इनकी आत्मनेपद संज्ञा हो जायगी, यह बात तो वैसी ही अटपटी सी लगती है :—जैसी कि मोहन का नाम पाचक तो तब पड़ेगा; जब कि वह रसोई बनायेगा, परन्तु यदि उसकी यह शर्त हो कि वह रसोई तब बनायेगा जब कि उसका नाम पाचक पड़ जायेगा। इस तरह यहाँ अन्योन्याश्रय दोष दिखाई पड़ता है, परन्तु आत्मनेपदादि संज्ञाओं में भाविसंज्ञा का आश्रयण मानने से दोष हट जायेगा अर्थात् "पाचकः देवदत्तः पाकं करिष्यति" में जैसे

**भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेनैव जात-निवृत्तिरङ्गीकार्या । भुक्तवन्तं प्रति मा भुक्था इति ब्रूयात् । किं तेन कृतं स्यादिति न्यायस्तु नात्र शास्त्रे आश्रयितुं युक्तो नियमादिशास्त्राणां वैयर्थ्यापत्तेः । ध्वनितं चेदं**

---

विहितानां नियमे दोषं वदति—**जातनिवृत्तिरिति** । अर्थात् तिबादिसमान्य शास्त्रेण प्रथमं लादेशं विधाय एध् धातोरपि तिप्प्रत्ययः स्यात्, तस्य च अनुदात्त-ङित आत्मनेपदम् १.३.१२ इति भिन्नवाक्यतया नियमस्वीकारे सामान्यशास्त्रेण तिप्तस्झीत्यादिना जातस्य निवृत्तिस्तथैव कल्पनीया भवति यथा "स्वमोर्नपुंस-कात्" ७.१.२३ इत्यादिना विहितेन लुका जातस्य सोरमश्च निवृत्तिः कल्प्यते । न च भुक्तवन्तं प्रति मा भुक्था इति ब्रूयात् किं तेन कृतं स्यात् इति भाष्योक्तेन लौकिकेन न्यायेन यथा यः भोजनं कृतवान् तं प्रति कथितं मा भुक्था इति भोजन-निवृत्तिवाक्यं निरर्थकं, तेन वाक्येन कृतस्य भोजनस्य निवृत्यभावात्, तथा सामान्य-शास्त्रेण यदा आदेशादिकं जातं, यथा लटः स्थाने यदि तिप्तस्झीत्यादि सूत्रेण तिबादेशो जातः जातः तदा विशेषशास्त्रेण तस्य निवृत्यसंभवः । एवञ्च एध्धातो-र्जातस्य तिपो निवृत्तिरनुदातङित १.३.१२ इति सूत्रेण न स्यादिति वाच्यम् उक्तस्य न्यायस्य व्याकरणशास्त्रेऽनाश्रयात् । यदि स न्याय इह प्राप्तस्थानः स्यात्तदा नियम-

---

'पाचक' यह भावीसंज्ञा का आश्रयण है और जैसे कि "आँटा पिसाने जायेंगे" में (आँटा भावी संज्ञा का अर्थात् पीसने के बाद जिसका नाम आँटा होगा उसे पिसाने जायेंगे इस प्रकार से) भावी संज्ञा का आश्रयण करते हैं; उसी प्रकार आदेश होने पर जिसका नाम आत्मनेपद होगा 'अनुदात्तङितः' इत्यादि के द्वारा उसीका विधान किया जायगा । यदि सामान्यशास्त्र ( तिप्तस्झि इत्यादि ) नियमशास्त्र (अनुदात्त-ङितः इत्यादि) में एकवाक्यता न मानकर भिन्नवाक्यता मानें, तब सामान्य शास्त्र से विहित तिप्तस् आदि प्रत्ययों की निवृत्ति नियमशास्त्र (अनुदात्तङित इत्यादि) के द्वारा मानी जायगी; ठीक उसी प्रकार जिस प्रकार कि सामान्य शास्त्र ("सुऔं-जस् आदि) से विहित प्रत्ययों की लुक् शास्त्र ''स्वमोर्नपुंसकात् ७.१. २३ के लुग् द्वारा निवृत्ति होती है ।

वाह, जब अनुदात्त और ङित् धातुओं से सामान्य शास्त्र के द्वारा 'तिप् तस् झि' आ जायेगा तो नियमसहस्र भी उसे उसीतरह नहीं हटा सकेगा जैसे कि कोई भोजन कर लें तब उसे कहा जाय कि खाना मत, तो उससे उसकी वह तृप्ति जो उसे मिल गयी है; छीनी नहीं जा सकती । इसलिए यह लोकोक्ति बन गयी है कि यदि भोजन किये हुए को यह कहा जाय कि खाना मत, तो इस कथन से उसका क्या किया जायगा अर्थात् इस कथन से कुछ लाभ नहीं होगा । इस प्रश्न का उत्तर इस प्रकार दिया गया है कि वह न्याय यहाँ (इस व्याकरण शास्त्र में नहीं लगता, क्योंकि ऐसा मानने पर नियम शास्त्र व्यर्थ हो जायगा । यह बात 'स्थानेऽन्तरतमः' १. १.

**'स्थानेन्तरतम' इति सूत्रे भाष्ये शास्त्रानर्थक्यं तु वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पना-**

---

शास्त्राणां वैयर्थ्यं स्यात्। ध्वनितं चेदमिति स्थानेन्तरतमः १.१.५० इति सूत्रे भाष्ये प्रोक्तम्—"अनर्थकमेतत् स्यात् यो हि भुक्तवन्तं ब्रूयात् मा भुक्था इति किं तेन कृतं स्यात्॥" उक्तम् वा (इको गुणवृद्धी) १.१.३ इत्यत्र। षष्ठ्यधिकारे सूत्रमिदं कर्त्तव्यम् "स्थानेऽन्तरतमः" षष्ठीनिर्दिष्टस्य इति"। अतः यत्र षष्ठी, तत्रेदमुपतिष्ठते। तेन विधिवाक्यानामेवानेन सूत्रेणैकवाक्यतां सम्पत्स्यते। एवं विधानकाल एवानेनान्तरतम आदेशो भविष्यतीति। एवञ्चेतरस्याविधानमेवेति इष्टव्यवस्थासिद्धिरित्थमिष्टा व्यवस्था न प्रकल्पेतेत्यस्योत्तरं दत्तम्। अत्रोद्योते नागेशः"—परे तूत्पन्नानामनेन निवृत्तिर्न सिद्धयतीति। तदभ्युपेत्य समाधत्ते—उक्तं वेति। भुक्तवतो भोजनफलं तृप्तेर्जातत्वान्निषेधस्य वैयर्थ्येऽपि शास्त्रे एकस्यापि वर्णस्यानर्थक्याभावप्रतिपादकस्य "प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम् किम्पुनरियता सूत्रेणेति वृद्धिसंज्ञा ( १.१.१ ) सूत्रभाष्यस्य प्रामाण्येन नियमशास्त्रवैयर्थ्यसंभावनावारणाय लुगादिनेव जातनिवृत्तिरिति (उक्तं वेत्यत्रत्येन) 'वा' शब्देन सूचितमित्याह। वृद्धिसंज्ञासूत्रे भाष्ये परिहृतम् इति। उक्तं हि तत्र प्रमाणभूत आचार्य इत्यनुपदमेवोक्तं वाक्यम्।

नन्वेवं विहितानां नियम इति पक्षेऽस्मिन् एकस्माद्धातोः परस्यैकस्य लस्य कथमष्टादशादेशाः स्युः, अष्टादश प्रत्यया युगपदेकस्मिन् न भवितुमर्हन्तीति विचार्यं हि—सामान्यशास्त्रेणेति। प्रधानं बलवद् भवति। प्रत्ययः प्रधानम्। प्रकृतिश्च प्रत्ययापेक्षया गुणः अप्रधानम्। तेन यावन्तः प्रत्ययास्तावतीनां प्रकृतीनां कल्पनां विधाय सामान्यशास्त्रेणोत्पत्तिः कार्या। प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्पनीया। सरूपसूत्रस्य ( १.२.६४ ) भाष्ये कैयटः प्राह:—यथैव हि बहवो यजः एवं प्रकृतयोऽपि बह्व्यः स्युः" (इत्थम्) एकैकस्यापत्यार्थस्य प्रकृत्यर्थेन योगात् प्रधानभेदे च गुणावृत्या गार्ग्यशब्दानामेवैकशेषः क्रियते इत्यर्थः। अत्र प्रधानस्य प्रत्ययस्यानुरोधेन गुणभेदकल्पनं स्पष्टमेवोक्तम्।

---

५० सूत्र के भाष्य में ध्वनित हुई है। नियम शास्त्रों की व्यर्थता को इष्ट कोटि में नहीं गिना जा सकता, क्योंकि वृद्धिरादैच् सूत्र के भाष्य में कहा गया है कि पाणिनि का एक वर्ण भी निरर्थक नहीं है। जब वर्ण भी निरर्थक नहीं है, तब सूत्र के निरर्थकत्व की तो सम्भावना ही कहाँ की जा सकती। जब एक सूत्र निरर्थक नहीं; तो अनेक नियमशास्त्रों की अनर्थकता की बात भी कहाँ उठ सकती? सामान्य शास्त्र से प्रत्यय की उत्पत्ति की बात तो इसलिए उचित नहीं जँचती कि उसमें गौरव है। क्योंकि एक धातु से पर एक 'ल' के स्थान में १८ आदेशों का एक साथ होना असंगत

**त्तावत्प्रकृतिकल्पनया कार्या । प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः ॥ ४२ ॥**

**परान्नित्यं बलवत् । कृताकृतप्रसङ्गित्वात् । तत्राऽक्लृप्ताभावकस्याभाव-**

---

अत्र पक्षे सामान्यशास्त्रेण प्रत्ययानां कल्पना कर्त्तव्या, तेषां निवृत्तिः तेषां कल्पितप्रकृतीनामपि निवृत्तिः कल्प्येत्यत्र गौरवमतः नियमशास्त्राणां विध्येकवाक्यतया बोध इति पक्ष एव साधीयान् । विध्येकवाक्यतायां "धातोर्लस्य स्थाने तिबादयो भवन्ति ते चानुदात्तङितो लस्य स्थाने तादृशा भवन्ति येषां जातानामात्मनेपदसंज्ञा भवति इति । अत्र न जातप्र कृतिप्रत्ययनिवृत्तिकल्पना गौरवमिति । अतो **वस्तुत इत्यादिना** विध्येकवाक्यतापक्ष एव प्रतिपादितः । अन्यतरपक्षस्य युक्तायुक्तत्वप्रतिपादनं स्पष्टशब्देन न कृतम् । अत उक्तमन्यत्र विस्तर इति अन्यत्रेति उद्योते इत्यर्थः ।

**॥ इति शिवम् ॥४२॥**

**परान्नित्यं बलवत् ४३**

परान्नित्यं बलवत् । परशास्त्रापेक्षया नित्यशास्त्रं बलवद् भवति । अतः परशास्त्रस्य नित्यशास्त्रस्य च युगपत्प्राप्तौ नित्यशास्त्रस्यैव प्रवृत्तिः । नित्यशास्त्रस्य बलवत्त्वे हेतुः तस्य कृताकृतप्रसंगित्वम् । कृतेऽपि तत्प्राप्नोति अकृतेऽपि च । नित्यस्य बलवत्त्वे औचित्यं हेतु । एतदाह-तत्राक्लृप्ताभावेत्यादिना । तुदति इत्यत्र तुद् धातोः

---

है । इसलिए सरूप सूत्र के भाष्य के अनुसार प्रधान (प्रत्यय) के भेद के अनुसार गुण अप्रधान (प्रकृति) की कल्पना करनी होगी । 'अनुदात्त' धातु से तिप् तस् आदि प्रत्ययों की निवृत्ति की कल्पना 'अनुदात्त ङितः' सूत्र के द्वारा करनी होगी, प्रत्यय की निवृत्ति होने पर उसके लिए कल्पित प्रकृति की भी निवृत्ति माननी होगी । इस तरह सामान्य शास्त्र से प्रत्ययोत्पत्ति की कल्पना में गौरव ही गौरव है । यह सब बातें और जगह (उद्योत में) विस्तार से कही गयी हैं । इति शिवम् ४२

**'परान्नित्यं बलवत्' ४३**

पर से नित्य बलवान् होता है, क्योंकि नित्य शास्त्र कृताकृत प्रसङ्गी होता है । एक शास्त्र ऐसा है, जो हर हालत में प्राप्त है और दूसरा ऐसा है जो विशेष परिस्थिति में ही प्राप्त है, दोनों में से किसके अभाव (बाध) की कल्पना की जाय, जब ऐसा प्रश्न उठता है; तब हृदय यही कहता है कि उसी शास्त्र के अभाव की कल्पना करो जो कृताकृत प्रसंगी नहीं है, एक शास्त्र जो दूसरे शास्त्र की प्रवृत्ति के पहले और बाद में दोनों ही परिस्थिति में प्राप्त है, उसके अभाव की कल्पना की कि अपेक्षा उस शास्त्र के अभाव की कल्पना अधिक उचित है, जिसकी कि पहले प्राप्ति थी और बाद में प्राप्ति नहीं रही । इस तरह विशेष परिस्थिति में स्वयं अभावग्रस्त की अभाव-कल्पना ही श्रेष्ठ है । इसी औचित्य के आधार

**कल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्वे बीजम् तदाह—**

**कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम् ॥ ४३ ॥**

**अत एव तुदतीत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४३ ॥**

---

तिप्रत्ययेकृते पुगन्तेति गुणः प्राप्नोति शप्रत्ययश्च, तत्र शप्रत्ययः गुणे कृतेऽपि प्राप्नोति अकृतेऽपि च। गुणस्तु शप्रत्यये कृते न प्राप्नोति शप्रत्ययापित्सार्वधातुकत्वेनङिद्वद्भावेन क्ङिति च १ १. ५ इति निषेधात्। इत्थं कतरस्य बाधः कल्प्य इति प्रस्तावे एकत्र कृते यदन्यन्न प्राप्नोति तस्यैवाभावो बाधो वोचितः कल्पयितुं, न तु तस्य बाधो यस्य हि प्रसक्तिः कृतेऽप्यस्तीति परोऽपि गुणः शप्रत्यये कृते प्रसक्तिरहितः कृतेऽकृतेऽपि प्रसक्तेन नित्येन शप्रत्ययेन बाध्यते। किं नाम नित्यं किञ्चानित्यमित्याह-कृताकृतप्रसङ्गि नित्यमित्यादि। तुदतीत्युदाहरणम्।

यद्यपि अग्रिमासु परिभाषासु (४४-५०) नित्यानित्यत्वमीमांसैव दृश्यते ताश्च परिभाषात्वेन स्वीकृता दृश्यन्ते, अतः कृताकृतप्रसंगि नित्यमित्यस्य परिभाषापदाभिषेकः शक्यते समर्थयितुं तथापि परान्नित्यं बलवदित्यस्य परिभाषापदापहरणं मह्यं न रोचते। उभयी परिभाषाप्रतिष्ठामेत्वित्येव ममाभिप्रायः। विजयाकारस्तु परान्नित्यमित्येव परिभाषां मत्वा व्याख्यातवान्। विजयायाः प्राचीनसंस्करणद्वये परान्नित्यं बलवदित्येव परिभाषास्वरूपमासीत्। किन्तु १९६८ तमे ख्रिष्टाब्दे प्रकाशिते संस्करणे परान्नित्यं बलवदिति परिभाषास्वरूपं न स्वीकृतम्। अथ च कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यमित्येव परिभाषेति टिप्पण्यां निगदितम्। किन्तु विभूतिबृहच्छास्त्रार्थकलादिटीकापरिलसिते कीलहार्नादिसम्पादिते च परिभाषेन्दुशेखरे "परान्नित्यं बलवदित्येव" परिभाषात्वेन स्वीकृतम्। अथ च कृताकृतप्रसंगि नित्यमिति नित्यानित्यलक्षणसूचकं वाक्यं परान्नित्वं बलवदिति परिभाषास्थं नित्यपदं व्याख्यातीति नाम बाधबीजकथनप्रकरणे किं कस्माद् बलीय इति प्रतिपादके प्रधानं स्थानमर्हतीति मया परान्नित्यं बलवदित्येव परिभाषास्पदे स्थापितेति सुधियः प्रमाणम्।

---

पर की गयी कल्पना नित्य शास्त्र की बलवता में कारण है। इसी बात को निम्नलिखित वचन में बताते हुए लिखते हैं **'कृताकृतप्रसंगि नित्यं तद्विपरीतमनित्यम्'** अर्थात् जो शास्त्र कृताकृत प्रसंगी हो, वह नित्य है और जो उसके विपरीत हो, वह अनित्य है। यही कारण है कि तुदति में तुद्+ति ऐसी अवस्था में ति के परे रहते परत्वात् प्राप्त 'सार्वधातुकार्धधातुकयोः' के गुण को बाधकर 'श' प्रत्यय होता है; क्योंकि 'श' गुण के पहले और पश्चात् दोनों ही हालत में प्राप्त है, इसलिए वह नित्य है। इसलिए पर से वह बलवान् है। गुण तो 'ति' के परे प्राप्त है और 'श' प्रत्यय होने से अपित् सार्वधातुक के ङिद्वत् होने के कारण 'क्ङिति च' १. १. ५ के द्वारा निषेध होने के कारण अप्राप्त है इसलिए वह अनित्य है। इति शिवम् ४३

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह—

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४४ ॥**

इदं 'शदेः शित' इति सूत्रे भाष्ये स्पष्टम् । तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्याट्, अकृते विकरणे धातुमात्रस्येत्यडनित्य इत्युक्तम् ॥ ४४ ॥

---

४४ कृताकृतप्रसंगित्वं संकोचयति **यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तीत्यादिना** अर्थात् यस्य पूर्वं कार्यप्रवृत्तिस्तस्यैव यदि पश्चादपि कार्यं प्राप्नोति तदैव कृताकृतप्रसङ्गित्वं स्वीक्रियते अर्थात्तदेव शास्त्रं कृताकृतप्रसङ्गित्वान्नित्यं यत् पूर्वं यस्य प्राप्तमासीत् तस्यैव यदि पश्चादपि प्राप्तं भवेत् । अतः सिद्धं शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवतीति । अन्यः शब्दः शब्दान्तरम् अर्थात् पूर्वप्रवृत्तौ शास्त्रस्योद्देश्यतावच्छेदकतावच्छिन्नो यावान् भागस्ततोऽन्यस्य यो विधिः प्राप्नोति सोऽनित्यो भवति । शदेःशित् (१. ३. ६०) इति सूत्रे भाष्ये परिभाषेयमित्थं स्पष्टिता । न्यविशत इत्यत्र निपूर्वकात् विश धातोः नेर्विशः १. ३. १७ इत्यात्मनेपदे कृते नि विश त इति स्थिते विकरणः शप् प्राप्नोति अडागमश्च तयोः कतरेण भाव्यमिति विचारणायां नित्यत्वाद् विकरणःशप् क्रियते । विकरणे कृते निविशेति अदन्ताङ्गस्य व्यक्तेः, अकृते निविश् इति शान्ताङ्गस्य प्राप्त्या अडनित्यः । यद्व्यक्तिसम्बन्धितयेत्यादेस्तत्र संगमनात् शब्दान्तरस्य प्राप्त्यापि अडनित्यः । विकरणोऽपि प्रथमं निविश इति व्यक्तिसम्बन्धितया प्राप्यते, अटि कृते न्यविश् इति व्यक्तेरिति शब्दान्तरात्प्राप्नुवतो विकरणस्यानित्यत्वं तु न शङ्क्यम् यदागमन्यायेनाड्विशिष्टस्य तच्छब्दत्वबोधनेन शब्दान्तरात्प्राप्तेरभावात् ।

शदेः शित् १. ३. ६० इति सूत्रस्थं भाष्यमित्थमस्ति इदमिह (न्यविशतेत्यत्र) सम्प्रधार्यम् । अट्क्रियताम् विकरणा इति किमत्र कर्त्तव्यम् । परत्वादडागमः । नित्याविकरणाः । कृतेऽप्यटि प्राप्नुवन्त्यकृतेऽपि । अडपि नित्यः । कृतेष्वपि विकरणेषु

---

**शब्दान्तरस्य—विधिरनित्यः ४४**

जिस शब्द व्यक्ति को पहले प्राप्त है उसी व्यक्ति को यदि पुनः प्राप्त रहे तभी कृताकृत प्रसंगी (नित्य) माना जायगा, इस आशय से लिखते हैं—"**शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति**" पूर्व में जिस शब्द को प्राप्त है; बाद में उससे भिन्न शब्द से प्राप्त होने वाली विधि अनित्य होती है । यह परिभाषा 'शदेः शितः' १. ३. ६० इस सूत्र के भाष्य में स्पष्ट है । वहाँ भाष्यकार ने 'न्यविशत' में अडागम को अनित्य बताया; क्योंकि अडागम पहले केवल 'विश्' धातु प्राप्त था, और विकरण करने पर 'विश' को प्राप्त है । इस तरह वह कृताकृत प्रसंगी होने पर भी इसलिए अनित्य है क्योंकि पहले जिस शब्द (व्यक्ति) को प्राप्त है, बाद में उस शब्द से अतिरिक्त को प्राप्त है । इति शिवम् ४४

एतत्तुल्यन्यायेनाह—

**शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ ४५ ॥**

---

प्राप्नोत्यकृतेष्वपि प्राप्नोति । अनित्योऽट् । अन्यस्य कृतेषु विकरणेषु प्राप्नोति अन्यस्याकृतेषु । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति ।

अत्र कैयटः ''विकरणास्तु शब्दान्तरात्प्राप्नुवन्योऽपि नानित्याः । (पूर्वयुक्तेः)

एतेन भाष्येणैकव्यक्तिनिमित्तकमेव कृताकृतप्रसङ्गित्वं गृह्यत इति सिद्धम् ।

**शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतः ४५**

शास्त्रेऽस्मिन् निमित्तं द्विधा पञ्चमीविभक्तिबोध्यम् सप्तमीविभक्तिबोध्यञ्च । तदाह-शब्दान्तरात् शब्दान्तरे यो विधिः शब्दान्तरात् परस्य प्राप्नोति यश्च शब्दान्तरे परे प्राप्नोति उभावप्यनित्यावित्यर्थः ।

एषिषिषतीत्यत्र इष् धातोः सन्प्रत्यये इडागमद्वित्वयोः प्राप्तयोः द्वित्वमनित्यं बाधित्वा प्रथमं नित्यत्वाद् इड् भवति । द्वित्वमिडागमे कृते षिशब्दस्य प्राप्नोति, अकृते इडागमे षशब्दस्य प्राप्नोतीत्यतोऽनित्यम् शब्दान्तरस्य प्राप्तत्वात् । तेन षिशब्दस्य द्वित्वे एषिषिषतीति ।

तुल्यन्यायेनेति-प्रागुक्तवचनमूलभूतयुक्तितुल्यतयेत्यर्थः । यद्व्यक्तिसंबंधितया पूर्वं प्रवृत्तितस्तद्व्यक्तिसम्बन्धित्वेनाप्राप्त्या कृताकृतप्रसंगित्वाभाव इति पूर्वोक्ते वचने मूलं वर्तते । तत्र शब्दान्तरात् प्राप्नुवत इत्यंशस्योदाहरणम् मा भवानुजिहदिति । अत्र हि ऊहधातोर्णिचि लुङि तिपि च्लेश्चङि'णौ चङ्युपधाया ह्रस्वः १७.४.१. इत्युपधाह्रस्वत्वे 'चङि'६.१.११ इति द्वित्वे च प्राप्ते शब्दान्तरात्प्राप्नुवतोऽनित्याद्द्वित्वात् पूर्वं परत्वाण्णौ चङीति उपधाह्रस्वः । द्वित्वं हि उपधाह्रस्वे कृते ह्रस्वादुकारात् परस्य हेः प्राप्नोति उपधाह्रस्वे चाकृते दीर्घोकारात् परस्य हिशब्दस्य । अत एव शब्दान्तरात्प्राप्नुवदनित्यत्वस्योदाहरणम् । यदि तु णौचङीति सूत्रस्थं ''यदयमोणिमृदितं करोति तज्ज्ञापत्याचार्यो द्विर्वचनाद् ह्रस्वत्वं बलीय इति भाष्यं प्रमाणमादाय कृताकृतप्रसङ्गित्वेन द्वित्वस्य नित्यत्वेऽपि ह्रस्वत्वस्य पूर्वं सिद्धिरित्युच्यते तदा 'च्यवन्ते' 'प्लवन्ते' इत्युदाहरणं बोध्यम् । अत्र हि गुणे कृते शब्दान्तरात् प्राप्नुवतोऽतोगुणे ६. १. १९७

---

**शब्दान्तरात्......श्चानित्यत्वम्—४५**

इसी पूर्वोक्त न्याय से मिलता जुलता न्याय है **''शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम्''** शब्दान्तर से पर या शब्दान्तर के परे रहते जो विधियाँ प्राप्त होती हैं, वे अनित्य मानी जाती हैं । इस तरह सिद्ध है कि एक ही रूप से यहाँ कृताकृतप्रसंग अपेक्षित है अर्थात् जिस शब्द स्थिति में प्रथम प्राप्त है, उसी स्थिति में यदि बाद में शास्त्रान्तर के लगने पर भी प्राप्त रहे, तभी वह शास्त्र नित्य माना जायगा । इति शिवम् ४५

एतन्मूलकमेवाह—

**लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४६ ॥**

**अतिदेशविषय इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥ ४६ ॥**

---

इति पररूपस्यानित्यत्वात् पूर्वं गुणो जायते । च्यु+अ+अन्ते इति स्थितौ अकृते गुणे उकारात् परयोरकारयोः पररूपं प्राप्नोति, कृते च गुणे ओकारात्परयोरिति शब्दान्तरात्प्राप्नुवतस्तस्यानित्यत्वमतोगुण इति पररूपस्य । यदि च अ+अन्ते इत्यत्र पररूपं प्रथमं स्यात्तदा क्ङिति च १. १. ५ इति निषेधात् गुणो न स्यादिति रूपासिद्धिः । न च तत्राचः परस्मिन्निति स्थानिवद्भावस्य निषेधे कर्तव्ये प्रवृत्या स्थानिवत्त्वेनान्तेघटकाकारस्य पित्त्वाद्ङित्त्वाभावेन गुणसिद्धिरिति वाच्यम् उभयोरप्यकारयोः 'एकः पूर्वपरयोः' ६. १. ८४ इति स्थानित्वेन निर्देशाद् एकस्य पित्त्वधर्मवत्तोऽपरस्य चापित्त्वधर्मवतः सत्त्वात् स्थानिवत्वेन पित्त्वसम्पादनासम्भवात् । न चान्तादिवच्च ६. १. ८५ इति पूर्वान्तवद्भावेन पित्त्वं सम्पाद्यमिति वाच्यम् न्यविशतेत्यत्र विकरणान्तस्याटि कृते विशेर्नेः परत्वाभावान्नियमानुपपत्तौ उपसर्गनियमेऽड्व्यवाय उपसंख्यानम् इतिवार्तिकोदाहरस्यैवास्या उदाहरणत्वात् । अस्यकृते नेः परस्य विशः नेर्विशः १. ३. १७ इत्यात्मनेपदं प्राप्नोति कृते चाटि पूर्ववार्तिकसहकारेण नि+अ इत्यस्मात् परस्येति शब्दान्तरात् प्राप्तेः सम्भवः । अतो नेर्विश इत्यस्यानित्यत्वम् । इयं परिभाषा पूर्वोक्तं वार्तिकञ्च निष्प्रयोजने दृश्येते; शब्दान्तरस्य प्राप्नुवन् विधिरनित्य इति परिभाषास्वीकारात् । तत्र च विकरणापेक्षया अडागमस्यानित्यत्वं प्रतिपादितम् । शब्दान्तरे प्राप्नुवत इत्यस्योदाहरणं 'करिष्यते' 'हरिष्यते' इति । अत्र शब्दान्तरे प्राप्नुवतो विकरणस्यानित्यत्वाल्लादेशे कृते स्वरितञितः १. ३. ७२ इत्यात्मनेपदम् । अयं भावः-स्योऽत्र विकरणः स चानित्यः स्वरितञित इति कृते स ते परे प्राप्नोति, अकृते च लृट् परे इति शब्दान्तरे प्राप्तिसम्भवात् ।

**लक्षणान्तरेणेति ॥ ४६ ॥**

एतमूलकं न्यायान्तरमाह येन लक्षणेन चिह्नेन पूर्वं प्राप्तं तेनैव लक्षणेन पुनः प्राप्तौ कृताकृतप्रसङ्गित्वम् । लक्षणान्तरेण प्राप्नुवन् विधिरनित्यो भवति । अतएव अतिजरांसि इत्यत्र नुमागमजरसादेशयोः प्राप्तौ परत्वाज्जरसिति भाष्योक्तं संगच्छते नुमागमस्य अतिजर+इ इत्यवस्थायामजन्तलक्षणेन जरसादेशादनन्तरम् अतिजरस्+इ इत्यवस्थायां झलन्तलक्षणेन प्राप्तत्वादनित्यता ! अतएव 'नपुंसकस्य झलचः' ७. १. ७२ इति सूत्रं बाधित्वा परत्वाज्जराया जरसन्यतरस्याम् ७. २. १०१ इति जरस् ।

---

इसी के फलित अर्थ को लेकर परिभाषा है—"**लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः**" **लक्षणान्तर** से प्राप्त होने वाली विधि अनित्य मानी जाती है । यह परिभाषा अतिदेश विषय में लगती है यह 'असिद्धवदत्राभात्' ६. २.४४ सूत्र में कैयट ने कहा है । इति ४६

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह—

**क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यता ॥ ४७ ॥**

---

एतन्मूलकमेवेति—उक्तपरिभाषाद्वयमूलकमेवेत्यर्थः । एवकारेणापूर्वत्व-निरासः ।

यो विधिरन्यस्य लक्षणस्य सहकारेण कृते प्राप्नोति अकृते च स्वयमेव स न नित्यः अर्थादनित्य इति । असिद्धवत् ६. ४. २२ सूत्रे कैयटः—(कुर्वः इत्यत्र कृ+उ+व इति स्थिते) नित्यत्वात्पूर्वमुकारलोपः, पश्चाद् गुणः कृते ह्युकारलोपे प्रत्यय-लक्षणमिति गुणेन भाव्यम् ततो लक्षणान्तरेण च प्राप्नुवन् विधिरनित्य इति गुणस्या-नित्यत्वम् इत्याह । ४६

**क्वचित्कृताकृत—४७**

यदि लक्ष्यानुरोधात् व्यक्त्यैक्यं लक्षणैक्यं प्रति वा नाग्रहः किंतु विधेयकार्ययो-रेव कृताकृतप्रसङ्गित्वं दृश्यते तदा **क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यता स्वीक्रियते ।** अतएव तुदति इत्यत्र विकरणस्य नित्यत्वं सिद्धम् । अन्यथा विकरणं हि पूर्वं गुणात् तुदः प्राप्नोति, गुणे कृते च तोदः इति यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्ति-स्तद्भिन्नव्यक्तिसम्बन्धितया प्रवृत्या विकरणस्यानित्यत्वं स्यात् । न च स्थानिवद्-भावेन तोदस्तुद्भावस्तथापि लक्षणान्तरेणेति परिभाषया तस्या अनित्यत्वमतो लक्ष्या-नुसारिता शरणीकर्तव्येति ।

---

**क्वचित्कृताकृतप्र०······नित्यता—४७**

व्याकरण शिष्टप्रयोगों का अन्वाख्यानमात्र करता है ! शिष्ट प्रयुक्त शब्दों की सिद्धि के अनुरोध से या लक्ष्यसिद्धि के अनुरोध से जब कि व्यक्ति की एकता और लक्षणैक्य को महत्व नहीं दिया जायेगा' किन्तु दोनों शास्त्रों के द्वारा विधेय कार्य की एकता और पुनः प्रवृत्ति मात्र देखी जायेगी, ऐसी परिस्थिति में शब्दान्तर या लक्षणान्तर से प्राप्त होने वाला कार्य भी कार्य की दृष्टि से कृताकृतप्रसंगी होने के कारण नित्य माना जायेगा इसी बात को कहते हैं-**क्वचित् कृताकृत-प्रसङ्गित्वमात्रे-णापि नित्यता**, कहीं कृताकृत प्रसङ्गत्व मात्र से नित्यता मानी जाती है ! द्वितीय शासन की प्रवृत्ति होजाने के बाद भी उस शासन की जिसे नित्य होने का दावा है प्राप्ति को नित्यत्व के व्यवहार का कारण माना गया है ! वह प्राप्ति बाधका-बाधित हो और फल-गुण लोपादि का विधायक हो, तभी उसे नित्य माना जायेगा ऐसा कोई आग्रह नहीं है ।

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकं न तु बाधकाबाधितफलोपहितप्रसङ्ग एव तथेति भावः तदाह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४८ ॥**

क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते । तदाह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४९ ॥**

सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम् । वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालिनः प्राबल्यं न व्यवहरन्ति । भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्य व्यवहरन्ति चेति । सर्वं चेदं लक्ष्यानुरोधाद्व्यवस्थितम् ।

---

कृतेऽन्यस्मिन् शास्त्रे नित्यत्वेनाभिमतस्य शास्त्रस्य प्रसंगमात्रेण नित्यतास्वीक्रियते स च प्रसङ्गो बाधकाबाधितत्वेन फलोपहितोऽस्ति न वेत्यत्र नाग्रहः । तदत्रोच्यते—

**यस्य च लक्षणान्तरेण ४८.**

४९. क्वचित्तु वाधकाबाधितः अतएव सफलः प्रसङ्ग एव गृह्यते तदाह—**यस्य च लक्षणान्तरेण निमित्तं विहन्यते** तदप्यनित्यम् ।

सप्तमे सप्तमाध्याये अर्थात् ७.१.२३ स्वमोर्नपुंसकात् इति सूत्रस्थस्य भाष्यस्य व्याख्यावसरे कैयटेन एतत्परिभाषाद्वयज्ञापकं लोकव्यवहारद्वयमुपन्यस्तम् । वालिसुग्रीवयुद्धे कौरवपाण्डवयुद्धे चोभयत्र सुग्रीवस्य पाण्डवानां च जये भगवतः-

---

**यस्य च······तदनित्यम्**

यही बताते हुए लिखते हैं—यस्य च······किसी दूसरे सूत्र ने जिसके निमित्त का विघात कर दिया, वह अनित्य नहीं माना जायेगा । इति शिवम्—४८

**यस्य च लक्षणान्तरेण······तदप्यनित्यम्**—४९

कहीं तो प्रसंग बाधकों से अबाधित और फल जनक ही लिया जाता है । इसी लिए कहते है-जिसके निमित्त को लक्षणान्तर ने नष्ट करदिया है, वह भी अनित्य है सातवें अध्याय के भाष्य में अर्थात् स्वमोर्नपुंसकात् ७-२-२३ इस सूत्र के भाष्य में कैयट ने इन दोनों परिभाषाओं के ज्ञापक के रूप में दो लोक-व्यवहारों को उद्धत किया है । (१) बालि सुग्रीव का दृष्टान्त पहला दृष्टान्त है । बालि और सुग्रीव जब दोनों आपस में युद्ध कर रहे थे, उस समय भगवान राम ने बालि को मारा, युद्ध में सुग्रीव की जीत हुई, फिर भी लोगों ने कभी यह नहीं स्वीकार किया कि सुग्रीव बालि से प्रबल था । दूसरा दृष्टान्त कौरव-पाण्डवों का है । पाण्डवों ने जो जीत हासिल की, वह भगवान् श्रीकृष्ण की सहायता से ही की, तथापि लोग पाण्डवों की प्रबलता स्वीकार करते हैं । समान परिस्थिति होते हुए भी अर्थात् भगवान् के सहयोग से दोनों युद्धों में विजय मिलने की स्थिति समान होते हुए भी कहीं एक की (पाण्डव की) प्रबलता स्वीकार की गयी और दूसरे की सुग्रीव में नहीं । इसी तरह लक्ष्यानुरोधात् कहीं शब्दान्तर और लक्षणान्तर से प्राप्त विधि अनित्य मानी गयी और कहीं शब्दान्तर और लक्षणान्तर से प्राप्त विधि को नित्य स्वीकार किया गया । इति ४९

'लुटः प्रथमस्य' इतिसूत्रे भाष्ये—

**स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति ॥५०॥**

**इति पठ्यते। यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च तत्रेच्छयान्यतरत्त-दुभयं वा तस्य बलवत्वे नियामकमुल्लेख्यम्। अत एव तत्र परत्वान्नित्यत्वाच्चेति भाष्य उच्यते।**

---

प्रयत्न एव कारणम्, तथापि लोका वालिसुग्रीवयोः सुग्रीवस्य प्राबल्यं वालितो न स्वीकुर्वन्ति, किन्तु कौरवेभ्यः पाण्डवानां प्राबल्यं व्यवहरन्ति तथैवेहापि लक्षणा-न्तरेण निमित्तविघातप्रसंगस्थले बाधकाबाधितफलोपहितप्रसंगत्वाभावे समानेऽपि क्वचिन्नित्यत्वं क्वचिच्चानित्यत्वं मन्यत इति।

नित्यानित्यत्वव्यवस्थाया नियामको लक्ष्यानुरोध इति नातिव्याप्त्यादिदोषः। तदाह—**सर्वं चेदमिति।**

"सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितं लुटः प्रथमस्येति सूत्रे भाष्ये"। इति विजयायुक्तसंस्करणस्य (१९६८) (पृ० १८३) पाठः प्रमादयुक्तः। "सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितम्"। इति पाठेन भाव्यम्।

"लुटः प्रथमस्य" इति सूत्रे भाष्ये **स्वरभिन्नस्य च प्राप्नुवन् विधिरनित्यो भवतीति पठ्यते**" इति च द्वितीयेन वाक्येन भाव्यम्। २. वृहच्छास्त्रार्थकलायुक्त-संस्क० (१९४३) तत्वादर्शयुक्तसंस्करणयोः १९६२-तथैवास्ति। ४९

**स्वरभिन्नस्य ५०**

**स्वरभिन्नस्येति** परिभाषा "लुटः प्रथमस्य" २.४.८५ इति सूत्रस्य महाभाष्ये इत्थं दृश्यते पठिता—स्वरे विप्रतिषेधात् सिद्धम्—इदमिह संप्रधार्यम्—डारौरसः क्रियन्तामनुदात्तत्वमिति। किमत्र कर्तव्यम्? परत्वादनुदात्तत्वम् ॥ नित्या डारौरसः। कृतेऽप्यनुदात्तत्वे प्राप्नुवन्ति, अकृतेऽपि प्राप्नुवन्ति ॥ अनुदात्तत्वमपि नित्यं कृतेष्वपि डारौरस्सु प्राप्नोति, अकृतेष्वपि। अनित्यमनुदात्तत्वम्। अन्यस्य कृतेषु डारौरस्सु प्राप्नोति अन्यस्याकृतेषु। शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ॥ डारौरसोऽप्यनित्याः। अन्यथा स्वरस्य कृतेऽनुदात्तत्वे प्राप्नुवन्ति। अन्यथास्वरस्याकृते। स्वरभिन्नस्य च प्राप्नुवन्तोऽनित्या भवन्ति। उभयोरनित्ययोः परत्वादनुदात्तत्वम्। अनुदात्तत्वे कृते पुनः प्रसङ्गविज्ञानाद् डारौरसः। टिलोपे उदात्तनिवृत्तिस्वरेण सिद्धम्। इति

---

**स्वरभिन्नस्य......अनित्यो भवति-५०**

लुटः प्रथमस्य २-४-८५ सूत्र के भाष्य में पढ़ा गया है—'स्वरभिन्नस्य—५० स्वर भिन्न को प्राप्त होने वाली विधि अनित्य होती है।

जहाँ एक ही कार्य, पर और नित्य दोनों हो, वहाँ लिखने वाले की मर्जी है कि वह शास्त्र को बलवान साबित करने के लिए 'पर' और 'नित्य' दोनों में से किसी एक हेतु का उल्लेख कर या दोनों का उल्लेख करे। इसी से भाष्य में जगह जगह 'परत्व' के साथ 'नित्यत्व' का भी उल्लेख किसी को बलवान् बनाने के लिए मिलता है।

**वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं 'विप्रतिषेधसूत्रे' कैयटे। 'णौ चङि' इतिह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासम्भव एवेति बोध्यम्॥ ५०॥**

---

आद्युदात्तश्च ३.१.३ सूत्रे भाष्येऽपि परिभाषेयं विलोक्यते—तथाहि"'इट् लविता। इट् तावन्न प्रयोजयति, इदमिह संप्रधार्यम्, इट् क्रियताम् आद्युदात्तत्वमिति। किमत्र कर्तव्यम्? परत्वादिट्॥ नित्यमाद्युदात्तम्, कृतेऽपीटि प्राप्नोति अकृतेऽपि प्राप्नोति। इडपि नित्यः। कृतेऽप्याद्युदात्तत्वे प्राप्नोति अकृतेऽपि॥ अनित्य इट्। अन्यथा स्वरस्य कृते आद्युदात्तत्वे प्राप्नोति। अन्यथास्वरस्याकृते प्राप्नोति स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यो भवति।

स्वरितो वानुदात्ते—८.२.६ इति सूत्रे भाष्येऽपि दृश्यते ऽस्या परिभाषाया उल्लेखः— तथाहि इदमिह (कुमार्यै इत्यत्र) सम्प्रधार्यम् (कुमारी+ए इतिस्थिते) आण्नद्याः ७.३.११२ इत्यनेनाट् क्रियताम्, उदात्तयणो—६.१.१७४ इत्यनेन उदात्तत्वम् इति किमत्र कर्तव्यम्?। परत्वादाडागमः। नित्यमुदात्तत्वम्। कृतेऽप्याटि प्राप्नोत्यकृतेऽपि प्राप्नोति। आडपि नित्यः। कृतेऽप्युदात्तत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति। अनित्य आट्। अन्यथास्वरस्य कृत उदात्तत्वे प्राप्नोत्यन्यथा स्वरस्याकृते, स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यो भवति। उदात्तत्वमप्यनित्यम्। अन्यस्य कृत आटि प्राप्नोत्यन्यस्याकृते प्राप्नोति—शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। उभयोरनित्ययोः परत्वादाडा-

---

सचमुच यदि देखा जाय तो वहाँ "परत्वात्" का उल्लेख एकदेशीका प्रतीत होता है, सिद्धान्ती का नहीं। विप्रतिषेध सूत्र के कैयट में यह स्पष्ट है। बात यह है कि जो शास्त्र नित्य है वह अनित्य शास्त्र की अपेक्षा अधिक बलवान् है इसलिए ऐसी परिस्थति में तुल्यबल के अभाव में विप्रतिषेध सूत्र की अप्रवृत्ति हो जायगी, फिर "परत्वात्" का उल्लेख वहाँ गलत ही रहेगा। 'णौ चङि' ७.४.१ सूत्र से प्राप्त ह्रस्व की अपेक्षा द्वित्व के बलवान् होने में दो कारण हैं (१) नित्यत्व और (२) अन्तरङ्गत्व। परन्तु भाष्यकार ने जो एक ही कारण का उल्लेख किया है; उसका कारण है—बलवत्ता के प्रतिपादक—"परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इस वाक्य में नित्यत्व का प्रथम उल्लेख। इसीतरह नित्यत्व और अन्तरङ्गत्व दोनों हेतुओं का एक साथ होना भी असम्भव ही है। यदि कोई शास्त्र अन्तरङ्ग होने से बलवान् है तो उसमें नित्यत्व प्रयुक्त बलवत्ता दिखाने की न आवश्यकता है और न सम्भावना। आवश्यकता इसलिए नहीं है कि अन्तरङ्ग प्रयुक्त प्रबलता के सामने नित्यत्व प्रयुक्त बलवत्ता नगण्य है। वहाँ नित्यत्व प्रयुक्त बलवत्ता है ही नहीं; क्योंकि अन्तरङ्ग रूपी प्रबल सूर्य के प्रकाश में नित्यत्व रूपी नक्षत्र का प्रकाश दिखाई ही नहीं पड़ता है। इति शिवम् ५०॥

**नित्यादप्यन्तरङ्गं बलीयोऽन्तरङ्गे बहिरङ्गस्यासिद्धत्वात् ।**

तदाह—

---

गम इति । **नियामकमुल्लेख्यमिति** उभयोरपि बलवत्त्वप्रयोजकत्वादित्यर्थः । **परत्वादित्युक्तिरिति** । नित्यत्वस्य परत्वापेक्षयाधिकबलवत्त्वेन तुल्यबलत्वाभावेन विप्रतिषेधसूत्राप्रवृत्तिरिति परत्वादित्युक्तिरेकदेशिनः इति भावः । **विप्रतिषेधसूत्रे कैयटे इति** विप्रतिषेधे परं कार्यम् १.४.२ इति सूत्रे कैयटः—कार्यमित्यत्रार्हार्थे कृत्यः । करणार्हं कार्यम् । तुल्यबलं च करणार्हमिति नित्यानित्योत्सर्गापवादान्तरङ्गबहिरङ्गेष्वस्य सूत्रस्याव्यापारः इत्याह । तेन यत्र परत्वं नित्यत्वञ्चोभयं तत्र नित्यत्वमेव बाधकनिमित्तमुल्लेख्यम् । विप्रतिषेधसूत्राप्रवृत्या परत्वस्य तत्रोल्लेखायोग्यत्वादिति भावः ।

णौ चङ्युपधाया ह्रस्वः ७.४.१ इति सूत्रस्थं भाष्यमित्थमस्ति—"अथेह कथं भवितव्यम् मा भवानटिटदिति, अहोस्विन्मा भवानाटिटदिति । मा भवानाटिटदिति भवितव्यम् । ह्रस्वत्वं कस्मान्न भवति, द्विर्वचने कृते परेण रूपेण व्यवहितमिति कृत्वा । इदमिह संप्रधार्यम्--द्विर्वचनं क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम् परत्वाद्ध्रस्वत्वम् । नित्यं द्विर्वचनम् । कृते ह्रस्वत्वे प्राप्नोत्यकृतेऽपि । एवं तह्याचार्यप्रवृत्तिर्ज्ञापयति द्विर्वचनाद्ध्रस्वत्वं बलीयः यदयमोणिमृदितं करोति । कथं कृत्वा ज्ञापकम् ? ऋदित्करण एतत्प्रयोजनम् ऋदितां नेति प्रतिषेधो यथा स्यात् इत्यादि । अत्र हि द्विर्वचनस्य बलवत्वसाधकहेतुत्वेन नित्यत्वमेवोपन्यस्तं न तु अन्तरङ्गत्वमिति । इति शिवम् ॥५०॥

**अन्तरङ्गपरिभाषा ५१**

नित्यादपि (अपिशब्दात्परस्य ग्रहणम् तेन) नित्यादर्थापत्या पराच्चान्तरङ्गं बलीय इति बोध्यते । तच्च बलवत्वं या परिभाषा प्रतिपादयति सा परिभाषास्ति "असिद्धं बहिरङ्गमन्तरङ्ग" इति । 'ग्रामणिनी कुले' इति नित्यादन्तरङ्गस्य बलवत्वे उदाहरणम् । अत्र ग्रामणी+ई इति स्थिते नित्यमपि 'इकोऽचि—७.१.७३ इति नुमं बाधित्वा' ह्रस्वो नपुंसके'—१.२.४७ ह्रस्वः, तस्य नुम्शास्त्रीयनिमित्तान्तर्भूतनिमित्तकत्वात् । ह्रस्वे कृतेऽकृते च प्राप्तत्वान्नुम् नित्यम् ।

परादन्तरङ्गस्य बलवत्वोदाहरणम्—उभये देवमनुष्या इति । अत्र "प्रथमचरमतयाल्पार्धकतिपयनेमाश्च" १.१.३३ इति परमपि विकल्पं बाधित्वा 'सर्वादीनि सर्वनामानि' १.१.२७ इति नित्या सर्वनामसंज्ञा भवति विकल्पेन विहितसर्वनामसंज्ञाया जस्पर्यन्तं निमित्तम्, नित्यसंज्ञायास्तु उभयशब्दमात्रं निमित्तम् इति नित्यसंज्ञान्तर्भूतनिमित्तत्वेनान्तरङ्गा ।

---

**असिद्धं बहिरङ्गमन्तरङ्गे—५१**

नित्य (शास्त्र) से भी अन्तरङ्ग (शास्त्र) बलवान् होता है, क्योंकि अन्तरङ्ग कर्तव्य में बहिरङ्ग की असिद्धता होती है । इसे कहते हुए लिखते हैं—"**असिद्धं बहिरङ्गमन्तरङ्गे**" अन्तरङ्ग कार्य कर्त्तव्य में बहिरङ्ग की असिद्धता

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५१ ॥

**अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । एतच्च 'खरवसानयोः इति सूत्रे 'असिद्धवत्'-सूत्रे च भाष्यकैयटयोः स्पष्टम् ॥**

---

अनेन ऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य समकालप्राप्तस्य च बहिरङ्गस्यासिद्धत्वं बोध्यते । असिद्धत्वं नाम ज्ञानाभावः बोध्यत इति । तेन यथा अजातबहिरङ्गके लक्ष्ये एतस्य न्यायस्य प्रवृत्तिस्तथा जातबहिरङ्गके ऽपीति ।

अन्तरङ्गबहिरङ्गे लक्षयति अन्तर्मध्य इत्यादिना । बहिरङ्गशात्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । अन्तरङ्गशास्त्रीयनिमित्तसमुदायात् बहिर्भूताङ्गकं बहिर्भूतनिमित्तकं शास्त्रं बहिरङ्गमित्यर्थः **एतच्च खरवसानयोरिति** । खरवसानयोः ८. ६. १५. सूत्रे कैयटो वदति अन्तरङ्गं यस्य बहिरङ्गं यस्येति बहुव्रीहिः । ततः सर्वलिङ्गावन्तरङ्गबहिरङ्गशब्दावुपपन्नौ । अङ्गश्चात्रोपकारकवाची । असिवदत्राभात् ६. ४. २२. सूत्रे भाष्ये "बहिरङ्गमन्तरङ्गमिति च प्रतिद्वन्द्विभाविनावेतावर्थौ । कथम् । सत्यन्तरङ्गे बहिरङ्गम्, सति च बहिरङ्गेऽन्तरङ्गम् । खरवसानयोरिति सूत्रे भाष्येऽपि" विसर्जनीयोऽनुत्तरपदे इति वक्तव्यम् । इह माभूत्-नार्कुटो नापत्यं इति । न वा बहिरङ्गलक्षणत्वात् । बहिरङ्गो रेफोऽन्तरङ्गो विसर्जनीयः । "असिद्धं बहिरङ्गमन्तरङ्गे" नैष युक्तः परिहारः । अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतौ पक्षौ । सत्यन्तरङ्गे बहिरङ्गम्, सति बहिरङ्गेऽन्तरङ्गम् इत्यादि दृश्यते । एतेन भाष्यकैयटग्रन्थेनान्तरङ्गबहिरङ्गयोः पूर्वोक्तस्य निर्वचनस्य संकेतः प्राप्यते ।

---

होती है 'अन्तरङ्ग' शब्द में अन्तर् का अर्थ, मध्य है और अङ्ग का निमित्त । इसी प्रकार बहिरंग शब्द में 'बहिर्' का अर्थ बाहर है और अङ्ग का अर्थ है निमित्त । इस तरह जिसका निमित्त किसी शास्त्र के निमित्तसमुदाय के बीच में पड़ेगा, वह उसके प्रति अन्तरङ्ग होगा । इसके विपरीत जिस शास्त्र का निमित्त किसी शास्त्र के निमित्तसमुदाय के बाहर पड़ेगा वह बहिरङ्ग होगा । इसी बात को बताते हुए लिखते हैं—कि अन्तः अर्थात् मध्य में बहिरंग शास्त्र के निमित्त समुदाथ के बीच में जिसके निमित्त आते हैं; वे शास्त्र अन्तरङ्ग हैं और उस अन्तरङ्ग शास्त्र के निमित्त समुदाय के बाहर जिसके निमित्त आते हैं, वे बहिरङ्ग हैं । अन्तरङ्ग कार्य-कर्त्तव्य में बहिरङ्ग की असिद्धता होती है । अन्तरङ्ग और बहिरङ्ग का पूर्वोक्त स्वरूप "खरवसानयोः" और 'असिद्धवत्' सूत्र के भाष्य और कैयट में स्पष्ट है ।

**अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते। शब्दशास्त्रे तस्यैव प्रधानत्वात्। तेनार्थनिमित्तकस्य न बहिरङ्गत्वम्। अत एव 'न तिसृचतसृ' इति निषेधश्चरितार्थः। अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षयाऽन्तरङ्गत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव। अत एव त्रयादेशे स्नन्तस्य प्रतिषेध इति स्थानिवत्सूत्रस्थभाष्यवार्त्तिकादिः सङ्गच्छते॥**

---

व्याकरणस्य शब्दशास्त्रत्वाच्छब्दस्यैव चात्र प्राधान्यादङ्गशब्देनात्र शब्दरूपमेव निमित्तं गृह्यते। तेनार्थनिमित्तकस्य न बहिरङ्गत्वम्। अत एवार्थनिमित्तकस्य बहिरङ्गत्वास्वीकारादेव न तिसृचतसृ इति दीर्घनिषेधः संगच्छते। त्रि आम् इति स्थितौ त्रयादेशं परत्वाद् बाधित्वा तिस्रादेशे (सकृद्गति) (प. सं. ४१) न्यायेन त्रयादेशाभावे नामि ६. ४. ३ इति प्राप्तस्य दीर्घस्य निषेधाय न तिसृचतसृ ६.४. ४. इति सूत्रं क्रियते। यद्यर्थकृतं बहिरङ्गत्वमाश्रितं स्यात् तदा त्रयादेशतिस्रादेशविधायकयोरुभयोः शास्त्रयोः प्रकृतिप्रत्ययोभयापेक्षत्वेन समानयोरपि तिस्रादेशे स्त्रीत्वरूपार्थस्याधिकस्यापेक्षितत्वात् बहिरङ्गतया तिस्रादेशमसिद्धं विधायान्तरङ्गत्वात् त्रयादेशे स्थानिवद्भावेन प्राप्तमपि तिस्रादेशं सकृद्गतिन्यायेन बाधित्वा नुटि नामि ६. ४. ३. इति दीर्घे ततस्तिस्रादेशे लक्ष्ये लक्षणं सकृदेव प्रवर्तते इति न्यायेन पुनर्दीर्घप्राप्तौ दीर्घनिषेधाय कृतं न तिसृचतसृ ६. ४. ४. इति सूत्रं व्यर्थं स्यात्।

यद्यपि वर्णभेदाल्लक्ष्यभेदस्तथापि आदेशकृतो लक्ष्यभेदो नाङ्गीक्रियते। सहिवहोरोदवर्णस्य ६. ३. ११२ इत्यत्रौदिति तपरकरणप्रत्याख्यानपरकभाष्यमत्र प्रमाणम्। ओदित्यत्र तपरकरणम् उदवोढाम् इत्यत्र ढत्वादीनामसिद्धत्वात्पूर्वं दीर्घे, ढत्वे लोपेऽवर्णस्य ओकारे कृते पुनः वदव्रज ७. २. ३. इति प्राप्ता वृद्धिर्माभूत् किन्तु ओकार एवावतिष्ठतामिति कृत्वा क्रियते पाणिनिना। किन्तु भाष्यकारेण वर्णभेदाल्लक्ष्यभेदे सत्यपि 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इतिन्यायेन पुनर्वृद्धेर-

---

यहाँ अङ्ग शब्द से शब्दरूप निमित्त ही लिया जाता है, क्योंकि शब्दशास्त्र में उसी की प्रधानता है। इसलिए अर्थ-निमित्तक बहिरङ्गत्व नहीं माना गया। अर्थ कृत बहिरङ्गत्व के अनाश्रयण से ही न तिसृचतसृ" ६.४.४ यह निषेध चरितार्थ हुआ। यदि अर्थकृत बहिरङ्ग लें तो "त्रिचतुरोः स्त्रियां तिसृचतसृ" ७.२.९९ इस सूत्र से स्त्रीलिङ्ग में विद्यमान त्रि और चतुर शब्द को तिसृ और चतसृ आदेश करते हैं इसलिए तिस्रादेश को स्त्रीत्वरूपार्थ की अपेक्षा होने के कारण बहिरङ्ग मानना पड़ता; इस तरह बहिरङ्ग तिस्रादेश को अन्तरङ्गत्वात् बाध कर त्रयादेश ही होता; फिर नाम् के परे रहते तिसृ और चतसृ शब्द कहीं मिलते ही न थे। ऐसी स्थिति में "न तिसृचतसृ" ६.४.४ सूत्र से दीर्घ निषेध का विधान व्यर्थ हो जाता। इसीलिए "त्रयादेश कर्तव्य में स्नन्त को स्थानिवद्भाव नहीं हो, इस अर्थ को बतानेवाला भाष्यवार्तिक "त्रयोदेशे कर्तव्ये स्नन्तस्य प्रतिषेधो वक्तव्यः" यह संगत होता है।

**एतेन गौधेरः पचेदित्यादावेयादीनामङ्गसंज्ञापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वाद्वलि लोपो न स्यादिति परास्तम् । एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ॥**

---

प्रवृत्तिं स्वीकृत्य तपरकरणं प्रत्याख्यातम्-वर्णभेदे सत्यपि लक्ष्ये लक्षणमिति प्रवर्त्य तपरकरणं प्रत्याख्यातमतो ज्ञायते आदेशकृतो लक्ष्यभेदो नाश्रीयते इति । **अतएव** अर्थकृतबहिरङ्गत्वस्यानाश्रयणादेव अयादेशे स्नन्तस्य प्रतिषेध इतिस्थानिवत्सूत्रस्य भाष्यवार्तिकादि संगच्छते । अयादेशे कर्तव्ये स्नन्तस्य (सृअन्तो यस्य स स्नन्तः यथा तिसृचतसृ शब्दस्तस्य) स्थानिवत्त्वप्रतिषेधो वक्तव्यः इति वार्तिकार्थः । भाष्यकारेण च सकृद्गतिन्यायेनैवेष्टसिद्धिं कृत्वा वार्तिकं प्रत्याख्यातम् । अर्थकृतबहिरङ्गाश्रयणे तु तिस्रादेशस्य स्त्रीत्वस्यार्थस्याधिकस्यापेक्षितत्वाद् बहिरङ्गतयान्तरङ्गत्वात् अयादेशे स्थानिवद्भावेन प्राप्तमपि तिस्रादेशं सकृद्गतिन्यायेन बाधित्वा नुटि नामि ६. ४.४. इतिदीर्घे ततस्तिस्रादेशे लक्ष्ये लक्षणमितिन्यायेन पुनः दीर्घप्रवृत्तिरिव अयादेशाप्रवृत्तिः स्वत एव सिद्ध्येत् तदा स्थानिवत्त्वप्रतिषेधवार्तिकमसंगतमेव स्यात् । **एतेन** अर्थकृतबहिरङ्गत्वस्यानङ्गीकारेणेत्यर्थः **गौधेर** इति गोधा शब्दात् गोधाया ढ्रक ४. १. १२९. ढ्रकि ढस्य आयनेयीनीयियःफढखछघां प्रत्ययादीनाम् ७. १. २. इति एयादेशे गोधा एय् र इतिस्थितौ लोपो व्योर्वलि ६. १. ६६. इति यलोपे आद्यचः किति च ७. २. ११८. इति वृद्धौ गौधेर इति सिद्ध्यति । यत्तु केनचिदुक्तम् प्राचीनेन अन्तरङ्ग वलि लोपे कर्तव्ये एयादेशस्याङ्गसंज्ञाप्रत्ययसंज्ञाद्वयापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वाद् यलोपो न स्यादिति, तदपास्तम् अर्थकृतबहिरङ्गत्वस्यानाश्रयणात् । यद्यपि यलोपेऽपि वल्लोपसंज्ञाद्वयाश्रयणेन यलोपैयादेशयोरुभयोः साम्यमेवेति, तथापि लोपसंज्ञाया विधेयकोटावश्रयणान्निमित्तत्वाभाव इत्याशयः । अतएवारुचेः पचेदित्यस्योपन्यासः । पच् धातोर्विधिलिङि तिप्यनुबन्धलोपे इतश्च ३. ४. १००. इति तिघटकेकारलोपे शपि यासुटि पच यास् त् इत्यत्र

---

अर्थकृत बहिरङ्ग के नहीं लिये जाने के कारण ही ''गोधा शब्द से ढ्रक प्रत्यय अनुबन्ध लोप, ढ को एय् आदेश करने पर गोधा+एय्+र ऐसी स्थिति में वलि लोप, यस्येति लोप होकर गौधेरः बना इसी तरह पच+ यास्+ त् ऐसी स्थिति में यास् को इय् य कालोप गुण होकर पचेत् बना । क्योंकि अङ्गसंज्ञा की अपेक्षा होने पर भी 'एय्' और 'इय्' आदेश को बहिरङ्ग नहीं माना गया । ऐसा इसलिए कि अर्थकृत बहिरङ्ग का आश्रयण नहीं किया गया । इसलिए जो कोई यहाँ यह मानते थे कि एयादि विधि अगंसंज्ञा सापेक्ष है । इसलिए बहिरङ्ग है उसकी असिद्धता हो जाने से वलि लोप नहीं होगा । उनका यह कथन व्यर्थ साबित्त हो गया । दूसरी बात यह कि एयादि को किसी परीभूतनिमित्त की अपेक्षा नहीं है । इसलिए वह अन्तरङ्ग है । बहिरङ्ग नहीं ।

सुट्तिथोः ३. ४. १०७ इति सुटि लिङः सलोपोऽनन्त्यस्य ७. २. ७६. इति सकारद्वयस्यापि लोपेननिवृत्तौ अतो येयः ७. २. ८०. इति या इत्यस्येयादेशे गुणे-पचेय् त् इत्यवस्यायां लोपो व्योर्वलि ६. १. ६६. इति यलोपे पचेत् इति। अत्र प्राचोक्तम्:—अन्तरङ्गे वलि लोपे कर्तव्ये इयादेशस्य बहिरङ्गत्वादसिद्धत्वेन यलोपो न स्यादिति तदपास्तम्। इयादेशस्य अत्संज्ञासार्वधातुकसंज्ञायासंज्ञानां तिसृणा-मपेक्षा वर्तते इति वल्लोपेतिसंज्ञाद्वयापेक्षलोपापेक्षयाधिकस्यार्थस्यापेक्षत्वेन तन्मते बहिरङ्गत्वमियादेशस्य। किन्तु अर्थकृतबहिरङ्गत्वस्यानाश्रयणेन तत्र न दोषः। ननु नागेशमतेन तत्रेयादेशस्य बहिरङ्गत्वाभावेन दोषाभावः, किन्तु प्राचीनमते इयादेशस्य एयादेशस्य च बहिरङ्गत्वादसिद्धतया कथं यलोपः सिद्ध्यतीति चेच्छ्रूयताम् चेले क्नोपेः ३. ४. ३३. इत्यत्र क्नोपेः इति निर्देशन वलिलोपेऽन्तरङ्गपरिभाषा न प्रवर्तते इति ज्ञापनात्। अन्यथा क्नूयीधातोर्णिचि 'अर्तिह्री ७. ३. ३६ इति पुकि यलोपे पुगन्तलघूपधस्य च ७. ३. ८६. इति गुणे क्नोपि इत्यस्य धातुत्वे 'इक्श्तिपौ धातुनिर्देशे इति इक्प्रत्यये णिलोपे ततःङसि 'क्नोपेः' इति निर्देशः न सिद्ध्यति अङ्संज्ञासापेक्षत्वेन पुगागमस्य बहिरङ्गत्वेन वलि लोपं प्रत्यसिद्धतया निर्देशासंगतिः स्पष्टैव। अत एव पाणिनेः क्नोपेरिति निर्देशाज्ज्ञायते वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति, अस्तु॥ **अपरनिमित्तकत्वेनान्तङ्गत्वाच्चेति।** परिभाषयानयान्तर-ङ्गत्वाभावविशिष्टवहिरङ्गस्यैव सिद्धत्वं बोध्यते गौधेर पचेत् इत्यादिलक्ष्यानुरोधात्। एयादेशस्य इयादेशस्य चोक्तरीत्या संज्ञासापेक्षत्वेन बहिरङ्गत्वेऽपि अपरनिमित्तकत्व-रूपान्तरङ्गत्वस्यापि सत्वेनान्तरङ्गत्वाभावविशिष्टबहिरङ्गत्वस्याभावेनोक्तपरिभाषया लोपे कर्तव्येऽसिद्धत्वाभाव इति भावः। इदमत्राकूतम्:—अन्तरङ्गत्वमनेकविधम् अन्तर्भू-तनिमित्तकत्वम्, शीघ्रोपस्थितिनिमित्तकत्वम्, अपरनिमित्तकत्वम् इत्याद्यनेकान्तरङ्गल-क्षणस्य तत्र तत्रोक्तत्वात्। बहिरङ्गत्वन्तु अन्तरङ्गत्वेनाभीप्सितशास्त्रेऽन्तरङ्गत्वप्रयोजको यो धर्मो दृष्टस्तदभाववत्त्वरूपमेकविधमेव। गौधेर इत्यादौ एयादशे पचेदित्यादा-वियादेशे च न बहिरङ्गत्वम् तत्रान्तरङ्गप्रयोजकधर्मस्यापरनिमित्तकत्वस्य सत्त्वेन बहिरङ्गत्वाभावात्। इत्थं न तयोर्वलि लोपे कर्त्तव्येऽसिद्धत्वमिति।

अपरनिमित्तकत्वमन्तरङ्गत्वमित्यत्र प्रमाणम्-'अतोऽम् ७. १. २४. इति सूत्रे तपरकरणम्। तच्च दीर्घव्यावृत्यर्थं क्रियते किन्तु नपुंसके सर्वत्र ह्रस्वो नपुंसके प्रातिपदिकस्य १. २. ४७. ह्रस्वस्यैव सत्वेन दीर्घाभावात्तद्व्यर्थं सदपरनिमित्त-कत्वमन्तरङ्गत्वमिति ज्ञापयति। ज्ञापिते तु अश्च आश्चेति समाहारद्वन्द्वे सुपोलुकि परनिमित्तकत्वेन बहिरङ्ग-सवर्णदीर्घं बाधित्वा पूर्वमपरनिमित्तकत्वादन्तरङ्गह्रस्वे कृते अ+अ इति स्थिते दीर्घे लक्ष्ये लक्षणं सकृदेव प्रवर्तते इति न्यायेन पुनर्ह्रस्वाप्राप्तौ अत इति तपरकरणत्वात्सोरमादेशाभावेन स्वमोर्नपुंसकात् ७. १. २३. इति लुकि आ इति सिद्ध्यति। इत्थं तपरकरणं सार्थकम् अत एव च ऊकालोऽज्झ्रस्वः १. २. २७. इति सूत्रे ऊकाल इति निर्देशः संगतः। तत्रापि उश्च ऊश्च ऊ३श्चेति समाहार-

**ननु 'येन विधिस्तदन्तस्य' इति सूत्रे भाष्ये 'इको यणचि' इत्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते तन्न सिद्धयेत्। ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद्गुण एव स्यादित्युक्तम्।**

**अत्र कैयटः—सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसङ्गे ऊठ् अपवादत्वाद्वलोपं बाधते। गुणं त्वन्तरङ्गत्वाद्बाधते। गुणो ह्यङ्सम्बन्धिनी-**

---

द्वन्द्वे अपरनिमित्तकत्वेनान्तरङ्गत्वात्वात्पूर्वं ह्रस्वः ततो दीर्घः, लक्ष्ये लक्षणमिति न्यायेन पुनर्ह्रस्वाप्राप्त्या ऊकाल इनि जायते।

यद्यपि सिद्धान्तकौमुद्याम् 'अदसोऽसेः ८. २. ८०. इत्यत्र इति ह्रस्वदीर्घयोरुकारयोः समाहारद्वन्द्वः इत्युक्तम्, उक्तरीत्या तु तत्रापि अपरनिमित्तकत्वेनान्तरङ्गत्वात पूर्वं ह्रस्वे ततो दीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्राप्त्या ह्रस्वरूपासिद्धिः, इत्थं कौमुदीग्रन्थविरोध आपद्यते, तथापि तस्य ग्रन्थस्य दुष्टत्वान्न तद्विरोधश्चिन्ताजनकः। 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति परिभाषया (प० २१) ह्रस्वोकारमात्रोच्चारणेनैव ह्रस्वदीर्घयोर्विधानसिद्धेः इति शेखरे नागेशः। वृद्भ्यः स्यसनोः १. १. ९२, इत्यादिवैकल्पिकपरस्मैपदविधानेनापि अपरनिमित्तकत्वमन्तरङ्गत्वमित्येव ज्ञापनेन एधते इत्यादौ विकरणेभ्यः प्रागपरनिनित्तकत्वेनात्मनेपदसिद्धे विकरणेभ्यो निममो बलीयानिति परिभाषाऽप्यपरनिमित्तकमन्तरङ्गमितिस्वीकृतिमूलैव।

संज्ञाकृतबहिरङ्गत्वाश्रयणप्रतिपादककैयटमतं प्रथमं प्रदर्श्य खण्डयति नागेशः **ननु इत्यादिना**। येन विधिरिति सूत्रे विशेषणमात्रस्य तदन्तसंज्ञकत्वे उत्सर्गसमानदेशा अपवादा इति न्यायेन तस्य सूत्रस्यापवादभूताया यस्मिन्विधिस्तदादावल्ग्रहणे (३४) इति परिभाषाया अपि विशेषणमात्रपरसप्तम्यन्ते प्रवृत्तेरापत्त्याम् 'इको यणचि ६. १. ७७ इत्यादावपि अचीतिपदस्यापि अजादावित्यर्थेन इगन्तस्य यण् स्यादजादावित्यर्थे स्योन इत्यत्रान्तरङ्गत्वाद् यणो गुणबाधकत्वस्येष्टस्यानुपपत्तिः, ऊनशब्दमश्रित्य यणादेशः प्राप्नोति नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव स्यादिति येन विधिरिति सूत्रे भाष्यकारोक्तेः, सिवेर्बाहुलकादौणादिके

---

कैयट ने संज्ञाकृतबहिरङ्गत्व का आश्रयण अपने ग्रन्थ में लिया है, वह नागेश के मत से अनुपयुक्त है। कैयट का ग्रन्थ 'येन विधिस्तदन्तस्य'' १. २. ७२. इस सूत्र के भाष्य पर है। 'येन विधिस्तदन्तस्य सूत्र के भाष्य में बताया कि 'इको यणचि ६. १. ७७. यहाँ भी विशेषण मात्र से तदन्तविधि होने पर अर्थात् उस तदन्तविधि का अपवाद ''यस्मिन् विधिस्तदादावल्ग्रहणे'' इस परिभाषा में भी प्रकार मात्र का ग्रहण किया जायगा, फिर उससे तदादि विधि होने पर अजादि के परे रहते यणादेश विधान होने लगेगा। ऐसी परिस्थिति में ''स्योनः'' में अन्तरंगत्वात् यण्, गुण का बाधक बने, यह जो अभीष्ट है, उसकी सिद्धि नहीं हो सकेगी,

मिग्लक्षणां लघ्वीमुपधामार्द्धधातुकं चाश्रयति । ऊठ् तु वकारान्तमङ्गमनुनासिकादि च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यणुगुणौ प्राप्नुत इति । एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्—न, तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासङ्गतेः । बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च । तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत् ॥

---

नप्रत्यये सिव्+न इतिस्थिते गुणवलोपोठां त्रयाणां कार्याणां प्रसङ्गे ऊठ् अनुनासिकनिमित्तकत्वेनापवादत्वाद्वलोपम् बाधते, अङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चापेक्ष्य प्रवर्तमानस्य गुणस्याङ्गेग्लघूपधार्धधातुकेतिसंज्ञापञ्चकस्याश्रयणेन बहिरङ्गत्वात् अन्तरङ्गत्वाच्च ऊठ् गुणं बाधते ऊठ् हि वकारान्तमङ्गमनुनासिकादि प्रत्ययमाश्रयतीत्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यण्गुणौ प्राप्नुतः इति कैयटेन संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमुक्तमिति संज्ञाकृतबहिरङ्गत्वाश्रयणे तव कैयटविरोध इति वाच्यम् तदन्तविधौ अपि अर्थात् तदन्तविधेरपवादत्वात्तदादिविधौ अजादावित्यर्थेऽपि सि+ऊन इति समुदायस्योभयत्राश्रयणसाम्येऽपि इग्यण्संहितेतिसंज्ञात्रयसापेक्षयण्शास्त्रापेक्षया अङ्गेग्लघूपधार्धधातुकेतिपञ्चसंज्ञा-

---

क्योंकि ऊन शब्द को लेकर अब यणादेश प्राप्त होता है और 'न' शब्द को लेकर गुण प्राप्त होता है, इसलिए अन्तरङ्गत्वात् गुण हो जायगा, इस भाष्य की व्याख्या करते हुए कैयट ने कहा कि सिव् धातु से औणादिक (न) प्रत्यय करने पर गुणवलोप और ऊठ् तीनों की प्राप्ति होने पर अपवाद होने के कारण ऊठ् 'वलि लोप' को बाधता है, गुण को तो ऊठ् अन्तरङ्गत्वात् बाधता है क्योंकि गुण को बहुतों की अपेक्षा है, जैसे अङ्गसम्बन्ध, इग्लक्षण, लघु उपधा और आर्धधातुक । ऊठ् को तो वकारान्त अङ्ग और अनुनासिकादि प्रत्यय की आवश्यकता है, इस लिए अल्प अपेक्षा होने के कारण वह अन्तरङ्ग है ऊठ् करने पर यण् और गुण दोनों प्राप्त होते हैं । कैयट की इस व्याख्या से सिद्ध होता है कि कैयट ने संज्ञासापेक्ष को स्पष्ट रूप से बहिरङ्ग माना है इसतरह अर्थकृत बहिरङ्ग का आश्रयण स्पष्ट दिखाई देता है, ऐसा नहीं मानना चाहिए; क्योंकि तदन्तविधि या तदादिविधि होने पर भी बहुतपदार्थों की अपेक्षा होने के कारण गुण बहिरङ्ग है ही; तब गुण को अन्तरङ्ग बताने वाला भाष्य-ग्रन्थ असंगत हो जायगा । इस तरह सिद्ध है कि अर्थकृत बहिरङ्ग का यहाँ आश्रयण नहीं होता । बहिरङ्ग और अन्तरङ्ग शब्दों का शब्दमर्यादा या व्युत्पत्ति के अनुसार यह अर्थ नहीं किया जा सकता कि बहुत अपेक्षा वाला शास्त्र बहिरङ्ग है और अल्प अपेक्षा रखने वाला शास्त्र अन्तरङ्ग । अगर बहिरङ्ग का बह्वपेक्ष और अन्तरङ्ग का अल्पापेक्ष यही अर्थ होता तो भाष्यकार या परिभाषाकार व्याडि 'असिद्धं बह्वपेक्षमल्पापेक्षे' यही कहते । गुण की अपेक्षा ऊठ् अन्तरङ्ग नहीं है, इसलिए

**अत एव 'विप्रतिषेध'सूत्रे भाष्ये गुणाद्यणादेशोऽन्तरङ्गत्वादित्यस्य स्योन इत्युदाहरणं न तु गुणादूडन्तरङ्त्वादित्युक्तम् । त्वद्रीत्या तदपि वक्तुमुचितम् । प्राथम्यात्तदेव वा वक्तुमुचितम् । मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भवात्तन्नोक्तम् । किंच सिद्धान्ते नित्यत्वात् गुणात् पूर्वमूठ्, गुणस्तु ऊठि यणा बाधितत्वाद-**

पेक्षत्वाद्गुणस्याधिकसंज्ञासापेक्षत्वेन कैयटरीत्या बहुपदार्थापेक्षबहिरङ्गत्वस्यैव सत्त्वेन गुणस्यान्तरङ्गत्वप्रतिपादनपरभाष्यासंगत्या गुणं संज्ञाकृतं बहिरङ्गत्वमूठं प्रति यत् कैयटेन प्रतिपादितं तदयुक्तमिति भावः । अर्थात् कैयटमतेन संज्ञासापेक्षत्वं बहिरङ्गत्वमिति स्वीकृतं तद्यदि युक्तं स्यात् तर्हि पञ्चसंज्ञासापेक्षत्वेन गुणस्य बहिरङ्गत्वमेव सिद्धयति । इत्थम् ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुणः इत्यन्तरङ्गत्वाद् गुण एव स्यादिति भाष्यं कैयटस्य विरुद्धं स्यात् । **शब्दमर्यादयेति ।** शब्दशक्त्येतिभावः । शब्दो वर्तते बहिरङ्गमिति अन्तरङ्गमिति च । तत्र बहिरङ्गं यस्येति विग्रहः अन्तरङ्गं यस्येति विग्रहः । तेन बह्वपेक्षरूपो ऽल्पापेक्षरूपश्चार्थो नशक्यते लब्धुम्, अङ्गशब्दस्यापेक्षेत्यर्थकस्य लोके शास्त्रे च क्वाप्यदर्शनात् । **तथासति**=यदि बहुपदार्थापेक्षमल्पपदार्थापेक्षं बहिरङ्गमन्तरङ्गञ्चेह विवक्षितं स्यात्तदा असिद्धं बह्वपेक्षमल्पापेक्षे इत्येव वदेत् **परिभाषाकारः व्याडिः** । भाष्यकार इति विजयाकारः । **अत ऐवेति** । गुणापेक्षयोठोऽन्तरङ्गत्वाभावादेवेति भावः । **त्वद्रीत्या** । संज्ञाकृतमपि बहिरङ्गत्वमिति वादिनस्तव कैयटस्य रीत्येत्यर्थः । **तदपि** । गुणापेक्षयोठोऽन्तरङ्गत्वमपीति भावः । गुणादूठोऽन्तरङ्गत्वकथनं विना गुणाद्यणादेशोऽन्तरङ्गत्वादित्कथनस्यासंत्यापत्त्या भङ्ग्या तदपि कथितकल्पमेवेति चेत्तदाह—**प्राथम्यादिति** प्राथम्याद्गुठोऽन्तरङ्गत्वप्रतिपादनं युक्तम् तन्न प्रतिपादितम् । गुणाद्यणादेशोऽन्तरङ्गत्वादित्यस्य स्योन इत्युदाहरणं भाष्ये दत्तम् न तु गुणादूठोऽन्तरङ्गत्वादित्यस्यो—दाहरणत्वेन स्योन इत्युपन्यस्तम् । मम नागेशस्य मतेन तु अन्तरङ्गपरिभाषया गुणस्य बारणासम्भवाद् भाष्ये तन्नोक्तम् । किञ्चेति किन्तु इत्यर्थः । **सिद्धान्ते** । नागेशमते इत्यर्थः । नित्यत्वादिह गुणात् पूर्वमूठ् भवति । गुणस्तु न नित्यः, यणा बाधितत्वात् । लक्ष्यानुरोधादिह बाधकाबाधितकृताकृतप्रसंगित्वस्यैव नित्यत्वमङ्गीकृतमिति भावः ॥

विप्रतिषेध १. ४. २. सूत्र के भाष्य में गुण को बाधकर के अन्तरङ्गत्वात् यणादेश होने का उदाहरण 'स्योनः' दिया; किन्तु 'स्योनः' को गुण को बाधकर अन्तरङ्गत्वात् ऊठ् होने का उदाहरण नहीं कहा गया । संज्ञाकृत बहिरङ्ग स्वीकार करने पर तो गुण की अपेक्षा ऊठ् को अन्तरङ्ग बताना उचित था । अथवा यों कहिए कि प्रथमोपस्थित होने के कारण वही कहना उचित था । मेरे (नागेश के) विचार में तो अन्तरङ्ग परिभाषा से यहाँ दोषोद्धार सम्भव नहीं था । इसलिए वैसा नहीं कहा गया है ।

दूसरी बात यह भी है कि सिद्धान्तपक्ष में याने मेरे मत में नित्य होने के कारण गुण से पहले ऊठ् हो जायगा । गुण तो ऊठ् होने पर प्राप्त यण् के द्वारा

**नित्यः। ऊनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्तत-योपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् ॥**

**यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रि-त्येत्यादिभाष्यासङ्गत्या चिन्त्यम् ॥**

---

ऊनशब्दमाश्रित्येत्यादि भाष्ये 'शब्द'शब्दोपादानेन ज्ञायते यत् परिभाषा-यामङ्गशब्देन अर्थात् परिभाषास्थान्तरङ्गशब्दघटकाङ्गशब्देन सप्तम्यादचन्ततयोपात्तं शब्दरूपं निमित्तमेव गृह्यते इति स्पष्टमेवोक्तम्। एवञ्चार्थकृतस्य बह्वर्थापेक्षादिरूपस्य बहिरङ्गस्यात्रानाश्रयणम्। **परिभाषायामङ्गशब्देनेति।** परि-भाषायां निर्दिष्टेनान्तरङ्गघटकाङ्गशब्देनेति योजनयात्रत्यः ग्रन्थः संगमनीयः। तथा-कथितं मूलं तु न संगच्छते वाह ऊठ् ६. ४. १३२ इत्यत्र सप्तम्यन्तपदाभावेन ज्ञापकतापरभाष्यासंगत्यापत्तेरिति विजयाकारः। वाह ऊठ् इत्यस्य भस्य वाहः सम्प्रसारणमूठ्स्यादित्यर्थे भस्येत्युक्तत्वात् भसंज्ञायां च यचि इति सप्तम्यन्तस्य स्पष्ट-मुक्तत्वाद्बहिरङ्गशब्दघटकाङ्गशब्देनेत्यस्य मूलोक्तार्थस्वीकारेऽपि न दोषः। तथाच बहिरङ्गत्वेन विवक्षितस्य शास्त्रस्य यावान् शब्दसमुदायः सप्तम्यन्तपञ्चम्यन्तशब्दा-न्यतरशब्दप्रतिपादचनिमित्तत्वेनाश्रितः तस्य शब्दसमुदायान्तर्भूतं निमित्तं यस्य शास्त्रस्य तदन्तरङ्गम्। यथा बहिरङ्गत्वेन विवक्षितं शास्त्रं वाह इति तस्य शास्त्रस्य निमित्तशब्दसमुदायः वाह अस् इति अजादचसर्वनामस्थाने परे भसंज्ञाविधानात्, तस्य समुदायस्य मध्ये प्रविष्ठं निमित्तं गुणशास्त्रस्य, पुगन्तलघूपधस्य चेति यस्मिन् ण्विप्रत्ययरूपे आर्धधातुके परे गुणो विधीयते यस्योपधाभूतस्य उह् इति सम्प्रसारणेन विहितस्योह् घटकोकारस्य गुण उच्यते, उभयमपि तदन्तर्भूतमिति गुणशास्त्रम् अन्तरङ्गम्, तत्र कर्तव्ये बहिरङ्गस्य वाह इति विहितस्य संप्रसारणस्या-सिद्धतया गुणाप्राप्त्या विश्वोह इति सिद्ध्यर्थमूठ् ग्रहणं स्वांशे चरितार्थम् इति मूलोक्तं संगतमेवेति न "परिभाषायां निर्दिष्टेनान्तरङ्गघटकाङ्गशब्देनेति योजनाया आवश्यकत्वमित्याहुस्तन्न वाह ऊठ् ६. ४. १३४ इत्यत्र सप्तम्यन्तपदस्य साक्षान्नि-

---

बाधित है; इसलिए वह कृताकृतप्रसंगी नहीं होने से अनित्य है। "ऊन शब्दमा-श्रित्य" इत्यादि भाष्य से यह साफ साफ झलकता है कि परिभाषा में 'अन्तरङ्ग' में आये हुए अङ्ग शब्द से सूत्र में सप्तमीविभक्ति या पञ्चमी विभक्ति लगाकर निर्दिष्ट—शब्दों से ग्रहण किये जानेवाले शब्द रूप निमित्त ही लिया जाता है।

कैयट ने जो यह कहा कि तदन्तविधि पक्ष में परत्वात् गुण प्राप्त होता है, उसका यह कथन गलत है; क्योंकि भाष्य में कहा गया है कि 'ऊन' शब्द का आश्रय मान कर होने वाला यण् बहिरङ्ग है और 'न' शब्द को लेकर प्राप्त गुण अन्तरङ्ग है। जब भाष्यकार ने गुण को अन्तरङ्ग बताया है; तब 'गुण' को बलवान् बताने के लिए परत्वात् हेतु देना असंगत ही होगा।

**वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्त्तते इति तु न युक्तम्। तत्सूत्रे भाष्य एव वश्चादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न। न च वृश्चतीत्यादौ चारितार्थ्यम्, बहिरङ्गतया संप्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः।**

---

देशाभावत्तादृशयोजनायाः स्पष्टप्रतिपत्तय आवश्यकत्वात्। परत्वाद् गुणः। **अयं कैयटाभिप्रायः** ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुण इति स्वीकृते गुणस्यान्तरङ्गत्वम् तथा गुणस्य संज्ञापञ्चकापेक्षत्वेन बह्वर्थापेक्षत्वात्तदपेक्षया च यणोऽन्तरङ्गत्वम्। एवञ्च तत्तन्निमित्तापेक्षमन्तरङ्गत्वमुभयोः। अतः परत्वाद् गुण इति कैयटस्य हृदयम्। नचान्योन्यनिरूपिते अन्तरङ्गबहिरङ्गत्वे उभयत्र वर्तेते, अतः अन्तरङ्गपरिभाषया अन्योन्यनिरूपितेऽन्योन्यासिद्धत्वे जाते एकस्मिन् लक्ष्ये युगपद् द्वयोर्विरोधाभावेन विप्रतिषेधासंभवात्परत्वात्कृता व्यवस्था न संगच्छते इति वाच्यम् अत्र युगपदसंभवरूपस्य विप्रतिषेधस्य स्वीकारात्।

ननु कैयटोक्तं परत्वं युज्यते कथंचित्, यदि ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इति भाष्ये "अन्तरङ्गत्वादुभयोः समबलत्वेन परत्वादुण एव

---

किसी ने कहा कि 'चेले क्नोपेः ३. ४. ३३. इस निर्देश से यह ज्ञापित होता है कि वलि लोप में अन्तरङ्गपरिभाषा की प्रवृत्ति नहीं होती है। यदि वलि लोप में अन्तरङ्गपरिभाषा की प्रवृत्ति होती तो यलोप की अपेक्षा णिच् निमित्तक पुक् के बहिरंग होने के कारण उसकी असिद्धता हो जाने से यलोप नहीं हो पाता; फिर क्नूयी धातु के यकार का लोप नहीं होता। ऐसी स्थिति में निर्देश (क्नोपेः यह रूप) नहीं बना पाता। इसलिए गोधेरः में भी वलिलोप की अपेक्षा ऐयादेशादि की असिद्धता नहीं हुई और रूप की सिद्धि हो गयी', परंतु यह मत भाष्यविरुद्ध है। लोपो व्योर्वलि ३. २. ६६. इस सूत्र के भाष्य में ही "व्रश्च" में वलोप की शङ्का की गयी और फिर समाधान दिया गया कि उच्चारण सामर्थ्यात् 'व' का लोप नहीं हुआ। इस पर भाष्य में आगे प्रश्न किया गया कि 'व' के उच्चारण में सामर्थ्य नहीं है; वह तो "वृश्चति" में चरितार्थ हो गया, है; क्योंकि यहाँ सम्प्रसारण (रेफ को ऋ) हो जाने से वल् परे नहीं रहने के कारण लोप की प्राप्ति नहीं है; फिर तो वकार का उच्चारण जब चारितार्थ हो गया, तब उच्चारण में सामर्थ्य रहा नहीं; फिर "व्रश्च" धातु में 'व' का लोप क्यों नहीं हुआ, इस पर वृश्चति में वकार उच्चारण के चारितार्थ्य का अभाव बताते हुए भाष्यकार ने कहा कि वहाँ भी बहिरङ्गतया सम्प्रसारण की असिद्धता करके पहले ही लोप की प्राप्ति ही जायगी। इस तरह देखते हैं कि भाष्यकार ने 'वलिलोप' के विषय में भी अन्तरङ्ग-परिभाषा की प्रवृत्ति करायी है। इसलिए 'वलिलोप' में अन्तरङ्ग-परिभाषा की अप्रवृत्ति की कल्पना भाष्यविरुद्ध है।

यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात्पञ्चेत्यत्र 'न षट्' इति निषेध इति स्यादित्याशयकं किमपि वाक्यं तत्रोपलभ्येत, नच तथास्ति स्वयं तादृशं वाक्यं निर्माय वाक्यशेषयोजनया कैयटस्य युक्तत्वप्रतिपादनं तु न युक्तम्। ऊनशब्दमाश्रित्य यणादेशो, नशब्दमाश्रित्य गुण इति भाष्यस्य स्वारस्येन पूर्वोक्तार्थस्य लाभायोगात्। अतः कैयटग्रन्थश्चिन्त्य एव।

संज्ञाकृतबहिरङ्गत्वाश्रयणे 'गौधेरः' 'पचेत्' इत्यादौ वलिलोपस्याप्राप्तस्य समाधानाय प्राचा 'चेले क्नोपेः ३. ४. ३३ इत्यत्र क्नोपेरिति निदशाद् वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तते इति ज्ञापकाश्रयणं कृतम् (इति मयानुपदमेवोक्तम् पृ० २६७) तदपि न युक्तम् व्रश्चादिषु लोपो व्योर्वलि ६. १. ६६ इति वल्रूपे रेफे परे वकारस्य लोपमाशङ्क्य **उपदेशसामर्थ्यात्** अर्थात् वकारस्योच्चारणसामर्थ्यान्न वलोप इति समाधाय वृश्चतीत्यादौ रेफस्य सम्प्रसारणे कृते वल्परत्वाभावस्थले वकारोच्चारणस्य चारितार्थ्येन उपदेशे सामर्थ्याभावमाशङ्क्य बहिरङ्गतया सम्प्रसारणस्यासिद्धत्वेन सम्प्रसारणात्प्रागेव वलोपप्रसक्त्योपदेशे सामर्थ्यस्य सत्त्वाद् वलोपाभाव इति भाष्यकारेणोक्तम् तथाहि लोपो व्योर्वलि ६. १. ६६ इति सूत्रस्थं भाष्यमित्थमस्ति-अतिप्रसङ्गो व्रश्चादिषु (वा० ३) व्रश्चादिषु चातिप्रसङ्गो भवति। इहापि प्राप्नोति। व्रश्चनः व्रीहिः व्रण इति। उपदेशसामर्थ्यात् सिद्धम्। उपदेशसामर्थ्याद् व्रश्चादिषु लोपो न भविष्यति। उपदेशसामर्थ्यादिति चेत्सम्प्रसारणहलादिशेषेषु सामर्थ्यम्॥ ४॥ उपदेशसामर्थ्यात् सिद्धमितिचेदस्त्युपदेशवचने प्रयोजनं सम्प्रसारणहलादिशेषेषु वकारस्य श्रवणं यथा स्यात्। वृक्णः, वृक्णवान्, विव्रश्चिषतीति॥ न वा बहिरङ्गलक्षणत्वात् (वा० ५) न वैतत्प्रयोजनमस्ति। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गाः सम्प्रसारणहलादिशेषाः। अन्तरङ्गो लोपः। असिद्धं बहिरङ्गमन्तरङ्गे॥ अत्र च कैयटेन "ततश्चाकृतयोरेव सम्प्रसारणहलादिशेषयोर्वलोपः प्राप्त उपदेशसामर्थ्यान्न भवतीत्युक्त्वा वलोपविषयेऽन्तरङ्गपरिभाषायाः प्रवृत्तिः स्वयमङ्गीकृता। इत्थं च भाष्यविरोधात् कैयटग्रन्थविरोधाच्च वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति प्राचां कथनमयुक्तमेव।

न च संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणे ब्राह्मण्यः पञ्चेत्यत्र प्रातिपदिकपदसंज्ञासापेक्षस्य "नलोपः प्रातिपदिकान्तस्य ४. २. ७. इति नलोपस्य षट्संज्ञायां कर्तव्यायामसिद्धत्वाप्राप्त्या नान्तत्वाभावेन 'ष्णान्ता षट्' १. १. २४ इति षट्संज्ञाया

---

किसी ने जो यह कहा कि 'पञ्च' यहाँ पर टाप् के निषेध के लिए 'पञ्च' को षट्संज्ञा करना आवश्यक है। षट्संज्ञा (सू० १.१.२४) नान्त संख्यावाची शब्द को होती है। इसलिए नान्तत्वलाना आवश्यक है। कार्यकालपक्ष में संज्ञा की दृष्टि से नलोप की असिद्धि करने पर ही षट्संज्ञा हो सकती है। असिद्धता तो तब

**तच्चिन्त्यम्। नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्। तच्च न, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। पञ्चेत्यत्र निषेधस्तु स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम्।**

---

अभावात् 'न षट्स्वस्रादिभ्यः' ४. १. १० इति टाप्प्रतिषेधो न स्यादिति वाच्यम् स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यानसामर्थ्येनार्थात् व्याख्यानबलेन भूतपूर्वम् षट्त्वम् अर्थात् लुगर्थं पूर्वं भूतं (जातं) यत् षट्त्वं संकेतसम्बन्धेन षट्पदवत्त्वं तत् स्थादिवद्-भावेनादाय टापो निषेधसंभवात्। **सूले व्याख्यानसामर्थ्येनेत्युक्तम्** तस्य तात्पर्यं यत्

---

हो सकती है; जब कि संज्ञाकृत बहिरङ्गत्व मानें। इस तरह संज्ञाकृत भी बहिरङ्ग होता है, ऐसा स्वीकार करना चाहिए; परन्तु यह कथन असंगत है, क्योंकि संज्ञाकृत बहिरङ्गत्व का आश्रयण नहीं किया गया है। ऐसी स्थिति में पदसंज्ञा सापेक्ष नलोप को बहिरङ्ग कैसे सिद्ध किया जा सकता है?

'पञ्च' यहाँ पर टाप् का निषेध तो हो जायगा; क्योंकि "न षट्स्वस्रादिभ्यः" ४.१.१० का अर्थ यही करना चाहिए कि इन शब्दों से स्त्रीलिङ्ग में जो कुछ प्राप्त है; वह नहीं हो, यदि ङीप् मात्र का निषेध इष्ट होता, तो वह षट् से टाप् की प्राप्ति है ही नहीं। अतः केवल यही कहते कि इनसे ङीप् नहीं हो; परन्तु कहा गया है कि षट्संज्ञक से स्त्रीलिङ्ग में जो कुछ प्राप्त है, वह नहीं हो, ऐसी स्थिति में लुक् के लिए की गयी षट्संज्ञा को स्थानिवद्भावसे ला कर टाप् का निषेध हो जायगा।

'न लोपः सुप्' ८. २. २ इस सूत्र से षट्संज्ञा की दृष्टि से नलोप की असिद्धता करके काम नहीं चलाया जा सकता; क्योंकि उस सूत्र में संज्ञापद से केवल 'घि-संज्ञा' ही ली जाती है। ऐसा इस सूत्र के भाष्य से प्रतीत होता है। भाष्य में संज्ञाविधि में नलोप की असिद्धता का फल 'दत्तदण्डिनौ' 'दण्डिदत्तौ' में नलोप की असिद्धता हो जाने से संज्ञा के अभाव के कारण पूर्व निपात की अनियमितता है, ऐसा बताया गया है। इसपर फिर प्रश्न किया कि जब घि संज्ञा होगी; तब पूर्वनिपात होगा और जब पूर्वनिपात होगा; तब न लोप होगा। इस तरह के अन्योन्याश्रय दोष के निवारण के लिए भाष्यकारने कहा कि नलोपः ८. २. २ में संज्ञाग्रहणसामर्थ्यात् 'द्वन्द्वे घि' २. २. ३२ का ऐसा अर्थ किया जायगा कि पूर्वपदत्व या पूर्वप्रयोग होने पर भी जिसे घिसंज्ञा होने की संभावना हो, उसका पूर्व निपात हो। यदि नलोपः सुप्" ८. २. २ सूत्र में घिसंज्ञा के अतिरिक्त किसी और संज्ञा का ग्रहण होता तो वहाँ षट्संज्ञा की दृष्टि से नलोप की असिद्धता करके "संज्ञाविधि" वाला अंश सार्थक हो जाता; फिर "संज्ञाग्रहणसामर्थ्यात्" यह कहना असंगत हो जाता। 'द्वन्द्वे घि' का २. २. ३२ जो पूर्वोक्त अर्थ किया गया उसका फल यह हुआ कि दध्युलिहौ

**अत एव कृति तुग्ग्रहणं चरितार्थम् । वृत्रहभ्यामित्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्त्वाभावात् । भ्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्त-कत्वाभावात् । परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम् । ध्वनितं चेदं 'नलोपः सुप्' इति सूत्रे भाष्य इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम् ।**

---

'षट्स्वसृतिस्रादिभ्यष्टापोऽसंभवात्तभ्यो ङीप् न स्यादित्येवार्थस्य युक्तत्वेन स्त्रियां यत्प्राप्नोति तत् षट्स्वस्रादिभ्यो न स्यादितिकथनरूपव्याख्यानसामर्थ्येनेतिमन्तव्यम् किं व्याख्यानबलेनेत्यर्थकरणेनेति चेच्छ्रूयताम् प्रियपञ्चा द्रौपदीत्यादौ 'डाबुभाभ्या-मन्यतरस्याम्' ४. १. १३ इति प्राप्तस्य डापो निषेधाय पूर्वोक्तव्याख्यानस्यावश्यकत्वेन व्याख्याने सामर्थ्यस्य क्षीणत्वात् ।

ननु पञ्चेत्यत्र 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' ८. २. २ इति सूत्रेण षट्संज्ञां प्रति नलोपासिद्धिः कथं न स्वीक्रियत इति चेन्न घिसंज्ञाया एव तत्रत्यसंज्ञा-पदेन ग्रहणं भवति; नान्यस्याः संज्ञाया इति नलोपः सुप्स्वर इतिसूत्रमहाभाष्ये ध्वनितत्वात् । तथाहि दत्तदण्डिनौ, दण्डिदत्तौ इत्यादौ नलोपो घिसंज्ञादृष्ट्याऽसिद्ध-स्तेनेदन्तत्वाभावाद्घित्वाभावेन पूर्वनिपातानियमं फलमभिधाय यदा घिसंज्ञा तदा-पूर्वप्रयोगो यदा पूर्वप्रयोगस्तदा नलोपे जाते घिसंज्ञेत्यन्योन्याश्रयमाशङ्क्य नलोपः सुप्स्वर इत्यत्र संज्ञाग्रहणसामर्थ्यात् यस्य पूर्वपदत्वे घिसंज्ञाभाविनी तस्य पूर्वप्रयोग इत्युत्तरितम् । एतेन ध्वनित यत् 'नलोपः सुप्स्वर'—८. २. २ इति सूत्रे संज्ञापदेन घिसंज्ञैव गृह्यते नान्या काचित्संज्ञा । यदि हि अन्यापि काचित्संज्ञा गृहीता स्यात् तदा षट्संज्ञाग्रहणात्तद्दृष्ट्या नलोपस्यासिद्धत्वेन सार्थक्यसंभवाद् भाष्ये सामर्थ्योक्तिर-संगता स्यात् ।'

**अतएव**—संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणादेव नलोपः सुप्स्वर इति सूत्रे कृतितुग्ग्रहणं चरितार्थम् । तद्धि वृत्रहभ्यामित्यादौ नलोपासिद्ध्यर्थं क्रियते, तेन तत्र

---

और 'ग्रामणिराजानौ' में पूर्व प्रयोग हुआ । संज्ञाकृत बहिरङ्गत्व का आश्रयण नहीं करने के कारण ही "नलोपः सुप" सूत्र में 'कृति तुग् ग्रहण चरितार्थ हुआ । "वृत्रहभ्याम्" में नलोप के बाद प्रत्ययलक्षण से क्विप् को लाकर ह्रस्वस्य पिति कृति तुक् ६. १. ७१ से प्राप्त तुक् कर्तव्य में नलोप की असिद्धता के लिए "नलोपः सुप् ८. २. २ में 'कृतितुग्' ग्रहण किया गया है । यदि संज्ञाकृत बहिरंग का आश्रय किया जाय तो पदसंज्ञानिमित्त होने के कारण नलोप बहिरङ्ग होता और उसकी असिद्धता इस परिभाषा से ही हो जाती । इस तरह अन्तरङ्ग परिभाषा से ही काम चल जाता, सूत्र में 'कृति तुग्' ग्रहण करने की क्या आवश्यकता थी । मेरे मत में तो नलोप बहिरङ्ग नहीं है । इस लिए परिभाषा से काम नहीं चलता । यद्यपि पद संज्ञा में निमित्त भ्याम् हैं परन्तु नलोप तो "भ्याम्" निमित्तक नहीं है ।

पितृकृदव्यवहितपूर्वत्वविशिष्टस्य ह्रस्वस्याभावात् 'ह्रस्वस्य पिति कृति तुक्, ६. १. ७१ इति तुग् न भवति। यदि परिभाषायामस्यां संज्ञाकृतस्य बहिरङ्गत्वस्याश्रयणं स्यात्; तदा प्रातिपदिकपदसंज्ञाद्वयसापेक्षस्य नलोपस्य बहिरङ्गस्यान्तरङ्गे तुकि कर्तव्ये परिभाषयैवानयाऽसिद्धत्वात्तुगभावे सिद्धे सूत्रे 'कृतितुग्' ग्रहणं व्यर्थं स्यात्। न च 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः (प० ५२) इति निषेधः, तस्याः परिभाषायाः अस्वीकारात्। न च 'वृत्रहभ्याम्' इत्यत्र नलोपस्य निमित्तभूता पदसंज्ञा, अतः पदसंज्ञाया यन्निमित्तं 'भ्याम् विभक्तिः' सा नलोपस्यापि निमित्तम् तथाच बहिरङ्गत्वेन विवक्षित-नलोपशास्त्रीयनिमित्तसमुदायः भ्याम्पर्यन्तं तिष्ठति 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ३. २. ८७ इत्यनेन विहितः क्विप् वृत्रह इत्यस्मात् परे भ्यामित्यत्यस्माच्च पूर्वभागे तिष्ठति। एवञ्च 'ह्रस्वस्य पिति कृति तुक्' ६. १. ७१ इति तुको निमित्तस्य पितृकृतः (क्विपः) बहिरङ्गशास्त्रीयनिमित्तान्तर्भूतत्वेनान्तरङ्गत्वादन्तर्भूतनिमित्तकत्वमन्तरङ्गत्वमिति स्वीकारेऽपि अन्तरङ्गपरिभाषयैव सिद्धे 'कृति तुग्ग्रहणं' व्यर्थमेवेति वाच्यम् 'भ्याम्' पदसंज्ञायां साक्षान्निमित्तमस्ति न तु नलोपे, अतो भ्याम्रूपनिमित्तं नलोपस्येति कृत्वा तुकोऽन्तर्भूतनिमित्तत्वसम्पादनेनान्तरङ्गसम्पादनासंभवात्। परस्परया 'भ्याम्' विभक्तिर्यद्यपि नलोपस्य निमित्तमस्ति; तथापि परस्परया निमित्तत्वमादाय बहिरङ्गत्वं न सम्पाद्यते मानाभावात्। इदं 'नलोपः सुप्स्वर ८. २. २ इति भाष्ये ध्वनितम्। तत्रैव च प्रदीपे कैयटेन, उद्योते च मया नागेशेन

---

इसलिए वह तुक्शास्त्र की अपेक्षा बहिर्भूत निमित्तक नहीं होने के कारण बहिरङ्ग नहीं हुआ। पदसंज्ञा में निमित्त 'भ्याम्' है और नलोप में निमित्त पद संज्ञा; इस लिए परम्परा सम्बन्ध से नलो। को भी 'भ्याम्' निमित्तक मान सकते हैं। इस तरह नलोप को बहिरङ्ग बनाना ठीक नहीं है; क्योंकि परम्परासम्बन्ध से निमित्त का आश्रयण करके बहिरङ्ग मानना प्रमाण रहित है; इतना ही नहीं, ऐसा नहीं मानना चाहिए यह बात ''नलोपः सुप्स्वर'' ८. २. २ सूत्र के भाष्य में ध्वनित है और उसी सूत्र के भाष्य की टीका उद्योत में मैंने (नागेश ने) इसका निरूपण किया है। भाष्यकार ने ''नलोपः सुप्'' ८. २. २ सूत्र में 'कृति तुग्' ग्रहण का प्रत्याख्यान करने के लिए 'सन्निपात परिभाषा (प० ८६) का सहारा लिया; किन्तु अन्तरङ्ग परिभाषा का नहीं लिया। इससे सिद्ध होता है कि परम्परा सम्बन्ध से बहिर्भूतनिमित्तक शास्त्र बहिरङ्ग नहीं होता है। उन्होंने कहा कि 'वृत्रहभ्याम्' में तुक् का अभाव सन्निपात परिभाषा से ही हो जायगा सूत्र में 'कृति तुग्' ग्रहण नहीं करना चाहिए। परम्परा सम्बन्ध से जो बहिर्भूत निमित्तक है; यदि उसे भी बहिरङ्ग मानना भाष्यकार को अभीष्ट होता तो यहाँ 'अन्तरङ्ग परिभाषा से नलोप की असिद्धता करके 'वृत्रहभ्याम्' मे 'तुक्' का अभाव दिखाकर 'कृति तुग्' ग्रहण का प्रत्याख्यान करते।

निरूपितम्। भाष्ये "तुग्विधौ किमुदाहरणम्? वृत्रहभ्याम्, वृत्रहभिः। नलोपे कृते 'ह्रस्वस्य पिति कृति तुक्' इति कृति तुगिति तुक् प्राप्नोति, असिद्धत्वान्न भवति। तुग्विधौ चोक्तम् (वा० ३) किमुक्तम् 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति प्रोक्तम्'' इत्युक्तम्। अत्र भाष्ये सन्निपातपरिभाषया वृत्रहभ्याम् इत्यादौ तुगभावं संसाध्य 'कृति तुग्ग्रहणं प्रत्याख्यातम्' न किलान्तरङ्गपरिभाषाया आश्रयणेन तुग्ग्रहणानर्थक्यं शङ्कितम्। अतो ज्ञायते बहिरङ्गत्वसम्पादनाय परम्परया निमित्तस्याश्रयणं न भवतीति नागेशमतम्। **अत्र कैयटः तुग्विधौ चोक्तमिति।** द्वयमत्रास्ति सन्निपातलक्षणत्वं बहिरङ्गलक्षणञ्च। विभक्तिनिमित्तको हि नलोपः किब्निमित्तकस्तुक्। सन्निपातपरिभाषायास्तुगभावः प्रयोजनत्वेनोक्त इति भाष्यकारस्तथैव व्याचष्टे सन्निपातेति।

सन्निपातपरिभाषायास्तुगभावः प्रयोजनत्वेनोक्त इति कैयटस्य तात्पर्यं नागेशोवगच्छति यदिह बहिरङ्गत्वं नास्तीति। स च बहिरङ्गत्वाभावस्तदैव स्याद् यदा बहिरङ्गत्वसम्पादनाय परम्परयानिमित्तत्वं नाश्रीयेत।

उद्योते च नागेशेन निरूपितम् तथैव व्याचष्टे इति प्रतीकमादाय यत् कृन्मेजन्तः १. १. ३९ इति सूत्रे भाष्ये बहिरङ्ग—परिभाषानादरेण सन्निपातपरिभाषाश्रयणेन (व्याख्यानादिहान्तरङ्गपरिभाषाया अविषयत्वं तच्च तदैव सम्भवति यदा संज्ञानिमित्तस्य बहिरङ्गत्वं न स्यात्, विभक्तिस्तु संज्ञानिमित्तं न (येनान्तर्भूत-

---

परिभाषा का अर्थ इस प्रकार है—अन्तरङ्ग कर्तव्य में पहले किये (पूर्वजात) बहिरङ्ग कार्यों तथा अन्तरङ्ग के प्रति तत्काल प्राप्त बहिरङ्ग कार्यों की असिद्धता होती है। जातासिद्धत्व और समकालासिद्धत्व मानने के फलों का निरूपण अन्त में किया जायगा।

प्रश्न यह है 'वृश्चति' में भाष्यकार ने वलि लोप के प्रति बहिरङ्ग सम्प्रसारण की असिद्धता बतायी हैं, वह तो असंगत जान पड़ता है; क्योंकि संप्रसारण की प्राप्ति भविष्यकाल में है। आपने तो परिभाषा के द्वारा जातकार्यों की या तत्काल प्राप्त कार्यों की ही असिद्धता बतायी है, और भाष्यकार ने भविष्यत् काल में प्राप्त कार्य की भी असिद्धता दिखायी है। इस तरह आप का कथन भाष्यविरुद्ध होने के कारण उपेक्ष्य प्रतीत होता है। इसके उत्तर में कहते हैं कि पद संस्कार पक्ष में व्रश्च+अ+ति इस स्थिति में सम्प्रसारण की प्राप्ति भविष्यत्काल में नहीं; किन्तु वलि लोप के साथ साथ ही है। इसलिए कोई दोष नहीं हुआ। जात और तात्कालिक दोनों बहिरङ्ग की असिद्धता रूपी अभीष्ट अर्थ का संग्रह जब पूर्वोक्त परिभाषा की विशिष्ट व्याख्या से ही हो जाता है तब "अंतरङ्गम् बहिरङ्गाद् बलीयः" अन्तरङ्ग बहिरङ्ग

**अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः । वृश्चत्यादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् ।**

---

निमित्तकत्वं तुको नलोपापेक्षया साध्येत) नलोपस्य परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे न मानम् इत्याशयेन (इह) सा परिभाषा भाष्यकृता नोक्ता । नच 'वृत्रहधनम्' इत्यादावसंनिपातलक्षणे नलोपे तुगभावार्थं तुग्ग्रहणम्, तेषामनभिधानात् ।

वस्तुतस्तु कैयटेन द्वयमत्रास्ति—सन्निपातलक्षणत्वं बहिरङ्गलक्षणञ्चेत्युक्त्वात्रान्तरङ्गपरिभाषा निर्दिष्टैव, वृत्रहभ्यामित्यत्र तुकः नलोपशास्त्रीयनिमित्तसमुदायान्तर्भूतनिमित्तत्वरूपान्तरङ्गत्वस्य सत्त्वात् । अतो वृत्रहभ्यामित्यादावन्तरङ्गपरिभाषाया अनित्यत्वादप्रवृत्तिः स्वीकार्या ।

अन्तरङ्गादिपदार्थः पूर्वं व्याख्यातः वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वादिदानीं वाक्यार्थो व्याख्यायते—**अन्तरङ्गे कर्तव्य इति** । अन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य तत्कालप्राप्तस्य च बहिरङ्गस्यासिद्धमनया बोध्यत इत्यर्थः । अनयोः फले अन्ते निरूपितव्ये स्तः । नचैवं वृश्चत्यादिषु भाविप्राप्तिकस्यापि संप्रसारणस्य वलोपदृष्ट्या यदसिद्धत्वमुक्तं तदसंगतं स्यादिति वाच्यम् वृश्चतीत्यादौ पदसंस्कार पक्षे व्रश्च+अ ति इति स्थितौ सम्प्रसारणवलोपयो र्द्वयोरपि प्राप्तेः समकालत्वात् । जातबहिरङ्गसमानकालप्राप्तिकबहिरङ्गस्य चानयैवासिद्धत्वस्वीकारादुभयोरप्यर्थयोरनयैव संग्रहेऽपि 'ष्टे सिद्धेऽन्तरङ्गं बहिरङ्गादबलीय इति परिभाषान्तरस्य बहिरङ्गान्तरङ्गयोः प्राप्तयोरन्तरङ्गं बहिरङ्गाद् बलीय इत्यर्थकस्य नास्ति काचिदा-

---

से बलवान् होता है, इसे अन्य परिभाषा के रूप में मानने की क्या आवश्यकता है । इसलिए जो उसे परिभाषान्तर के रूप में स्वीकार करते थे उनका मत खण्डित हो गया । विप्रतिषेध सूत्र के भाष्य में 'असिद्धं बहिरङ्गमन्तरङ्गे' इस परिभाषा का आश्रय लेकर "अन्तरङ्गं बहिरङ्गगादबलीयः" इस परिभाषा का भाष्यकार ने प्रत्याख्यान कर दिया है । भाष्य का अविकल रूप दुर्गा व्याख्या में उद्धृत है । (पृ० २७६)

अन्तरङ्ग शास्त्रत्व इस परिभाषा की उपस्थिति में लिङ्ग याने कारण अथवा चिह्न है । अन्तरङ्ग शास्त्रत्व इस परिभाषा का उपस्थितिप्रयोजक चिह्न है । यह परिभाषा अन्तर्भूतनिमित्तकशास्त्रत्व को देखकर उसके निकट जाकर कहती है कि तुम जान लो कि बहिरङ्ग शास्त्र नहीं है । अन्तरङ्ग शास्त्रत्व को लिङ्ग मानने से यह हुआ कि जहाँ अन्तरङ्ग शास्त्र रहेगा, वहाँ यह उपस्थित होगी । इसकी उपस्थिति के लिए यह आवश्यक है कि अन्तरङ्ग शास्त्र उसको दिखे । अतः जहाँ अन्तरङ्ग शास्त्र त्रिपादी रहेगा वहाँ यह परिभाषा नहीं लगेगी; क्योंकि "वाह ऊठ् ६.४.१३२ सूत्र से ज्ञापित होने के कारण षष्ठाध्यायी (सपाद सप्ताध्यायी) स्थ इस परिभाषा की दृष्टि में त्रिपादी शास्त्र की असिद्धता होजायगी ।

**एतेनान्तरङ्गं बहिरङ्गाद्बलीय इति परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य 'विप्रतिषेध'सूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च ।**

**अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् ।**

---

वश्यकता । **एनाम्** असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषामाश्रित्य अन्तरङ्गम् बहिरङ्गाद्बलीय इति परिभाषाया विप्रतिषेधसूत्रे भाष्ये प्रत्याख्यानाच्च । विप्रतिषेधे परं कार्यम्" १.४.२ इति सूत्रे भाष्ये "असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे" इति परिभाषां प्रथममुक्त्वा वार्तिकमुक्तम् **अन्तरङ्गञ्चेति** तच्चान्तरङ्गञ्च बलीयो भवतीति व्याख्याय प्रयोजनं च **यणेकादेशोरवौत्वानि गुणवृद्धिद्विर्वचनाल्लोपस्वरेभ्य** इत्यादिना प्रयोजनानि चाभिधाय एतान्येतस्याः परिभाषायाः प्रयोजनानि, यदर्थमेषा परिभाषा कर्तव्या । यदि सन्ति प्रयोजनानीत्येषा (अन्तरङ्गम् बलीयो भवतीति) ननु चेयं च कर्तव्या "असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे" इति किं प्रयोजनम् पचावेदम् पचामेदम् (अन्तरङ्ग—बलीयस्त्वमित्यनया नैतत्सिद्धयति आद्गुण इति गुणे कृते 'एत ऐ' ३.४.९३ इत्यस्य प्राप्तेः अन्तरङ्गम् बलीय इति न्यायस्तु उभयोर्युगपत् प्राप्ता—वन्तरङ्गस्य प्रथमप्रवृत्तिं बोधयति । अत्र तु बहिरङ्गस्य जातत्वादुभयोः समकालता नास्तीति भावः ।

उभे (परिभाषे) तर्हि कर्तव्ये । नेत्याह । अनयैव (असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्यनयैव) सिद्धम् । इहापि स्योनः, स्योना, इत्यसिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणो यणादेशो भविष्यति । द्वितीया परिभाषा व्यापकार्था अन्तरङ्गे कर्तव्ये बहिरङ्गमसिद्धं तदबहिरङ्गं कृतं चिकीर्षितं वेत्यन्यत् ।

इत्थमन्तरङ्गं बहिरङ्गाद् बलीय इति परिभाषा भाष्ये प्रत्याख्याता ।।

अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् अर्थात् अस्याः परिभाषाया उपस्थितिप्रयोजकं चिह्नम् अन्तरङ्गशास्त्रमस्ति । एवञ्चास्याः प्रवृत्तावन्तरङ्गशास्त्रस्य दर्शनमावश्यकम् । अन्तरङ्गशास्त्रं दृष्ट्वा गत्वा चेयं प्रतिपादयति यत् बहिरङ्गशास्त्रं नास्तीति त्वं विद्धि । अन्तरङ्गस्य शास्त्रस्य लिङ्गत्वेऽर्थादुपस्थितिप्रयोजकचिह्नत्वे

---

बहिरङ्ग शास्त्रत्व को इस परिभाषा का लिङ्ग (उपस्थिति-प्रयोजकचिह्न) नहीं मान सकते। ऐसा मानने से जातबहिरङ्गस्थलों में तो वह जात ही है; वह कर्तव्य तो है नहीं; इस तरह प्रतिपादन व्यर्थ हो जायगा। यदि बहिरङ्ग को देखकर यह परिभाषा प्रवृत्त हो, ऐसा मानते तो जात बहिरङ्ग स्थल में बहिरंग शास्त्र तो प्रवृत्त हो चुका है उसका दर्शन फिर क्यों होगा ? बहिरङ्ग के त्रिपादीस्थ होने और अन्तरङ्ग के सपादसप्ताध्यायीस्थ रहने पर भी अन्तरङ्ग परिभाषा की प्रवृत्ति, आगच्छ हे पयोऽट, हे आगच्छ पयोद इत्यादि प्रयोगों की सिद्धि के लिए इष्ट ही है। अटति इति अट् (क्विप प्रत्यय) पयस्यट् पयोऽट् आगच्छ हे पयोऽट्" यहाँ दूराद्धूते च" ८.२.८४ वाक्यस्य टेः प्लुत उदात्तः ८.२.८२ इससे वाक्य के 'टि'—'अ' को किया गया

फलम् अस्यास्त्रिपाद्यामर्थादन्तरङ्गशास्त्रे त्रिपादीस्थेऽप्रवृत्तिः । 'वाह ऊठ् ६. ४. १३२ इति सूत्रस्थोठ्ग्रहणज्ञापितत्वात्सपादसप्ताध्यायीस्थामेतां प्रति त्रिपादीस्थस्यान्तरङ्ग-शास्त्रस्य 'पूर्वत्रासिद्धम्' ८. २. १ इत्येननासिद्धत्वबोधनेनोपस्थितिप्रयोजकस्य चिह्न-स्याभावेन परिभाषाया अप्रवृत्तेः । प्रतिपाद्यास्या भावे प्रतिपादनासंभवात् । अत्र हि अन्तरङ्गशास्त्रं प्रतिपाद्यं तत्र कर्तव्ये बहिरङ्गासिद्धत्वस्य प्रतिपादनं क्रियते । त्रिपादीस्थेऽन्तरङ्गशास्त्रेऽसिद्धे कं प्रति असिद्धत्वं प्रतिपादयतु वराकीयं परिभाषेति विरमति ।

बहिरङ्गशास्त्रं तु नास्या लिङ्गम्; तस्य जातत्वे कर्तव्याभावेन प्रतिपादन-वैयर्थ्यात् । बहिरङ्गस्य त्रिपादीस्थत्वेऽपि अन्तरङ्गस्य सपादसप्ताध्यायीस्थत्वे 'आगच्छ हे पयोट्' इति सिद्धचर्थं परिभाषा प्रवृत्तिरिष्यते । अटतीति अट् पयस्यट् पयोट्' तत्सम्बोधने आगच्छ हे पयोट् इत्यत्र दूराद्धूते च ८. २. ८४ इति वाक्यस्य टेरटोऽकारस्य प्लुतो बहिरङ्गस्त्रैपादिकः अन्तरङ्गसपादसप्ताध्यायीस्थोत्वदृष्ट्याऽसिद्धः अतः "अतोरोप्लुतादप्लुते" ६. १. ११३ इत्यप्लुतेऽति परे उत्वं सिद्धचति । बहिरङ्ग-शास्त्रस्य लिङ्गत्वे तु प्लुतस्य बहिरङ्गस्य त्रैपादिकत्वेन सापादसप्ताध्यायिकपरिभाषां प्रत्यसिद्धत्वेन लिङ्गस्य तस्याभावादसिद्धत्वप्रतिपादनासंभवेनोत्वविध्यनापत्तेः । पूर्वत्रासिद्धम् ८. २. १३ इत्यनेन तु प्लुतस्यासिद्धत्वं न सिद्धचति; अप्लुतादिति विशेषणसामर्थ्यात् अप्लुते इति विशेषणसामर्थ्याच्च तस्य तत्राप्रवृत्तेः । अन्यथा 'एहि सुश्रोत अत्र स्नाहि' इत्यादि सकलेषु लक्ष्येषु तेनासिद्धत्वात् सर्वत्र अप्लुतस्यैव सत्वेन ते विशेषणे व्यर्थे स्याताम् । त्रैपादिकेऽन्तरङ्गशास्त्रेऽस्या अप्रवृत्तेः फलम् अभिषिणोति इत्यत्र त्रिपादीस्थेऽन्तरङ्गे णत्वे कर्तव्ये बहिरङ्गस्य जातस्य उपसर्गात् सुनोति—८. ३. ६५ इति षत्वस्य नासिद्धत्वम् तेन णत्वसिद्धिः राज्ञः इत्यत्रान्तरङ्गे

---

वाक्यनिमित्तकत्रैपादिकप्लुत की असिद्धता इस परिभाषा से अन्तरङ्ग उत्व की दृष्टि से की जाती है । इसी तरह पयः ददाति इति तत्सम्बोधने पयर्+द इस अवस्था में संयोग से पूर्व के गुरु अकार को गुरोरनृतः ८.२.८६ से विहित वाक्यनिमित्तक बहिरङ्ग त्रैपादिक प्लुत की असिद्धता उत्व की दृष्टि से होती है । इसलिए पूर्व में 'अतोरोर-प्लुतादप्लुते ६. १. ११३ से और द्वितीय में 'हशि च' से उत्व होता है । बहिरङ्ग शास्त्र को अगर लिङ्ग मानें तो यहाँ जो बहिरङ्ग प्लुत है, वह त्रिपादीस्थ हैं । इसलिए वह सपाद सप्ताध्यायिक परिभाषा के प्रति पूर्वत्रासिद्धम् ८.२.१ सूत्र से असिद्ध है । अतः उसका यहाँ अभाव है अतः, असिद्धता के उद्दिष्ट विषय के अभाव के कारण परि-भाषा की प्रवृत्ति नहीं होने से प्लुत की असद्धिता नहीं होने पर अलुप्त अत् से पर या उसके परे नहीं होने पर उत्व नहीं होगा । 'पूर्वत्रासिद्धम्' इससे असिद्धता नहीं हो सकती, क्योंकि "एहि सुश्रोता अत्र स्नाहि इत्यादि सकल लक्ष्यों में प्राप्त उस सूत्र

**इयं च त्रिपाद्यां न प्रवर्त्तते, त्रिपाद्या असिद्धत्वात्। अस्याञ्च 'वाह ऊठ्' सूत्रस्थमूठ्ग्रहणं ज्ञापक मित्येषा सपादसप्ताध्यायीस्था। अन्यथा संप्रसारणमात्रविधानेन**

---

श्चुत्वे कर्तव्ये जातस्य बहिरङ्गस्य अल्लोपोऽन ६. ४. १३४ इति लोपस्य नासिद्धत्वम् -अतएव श्चुत्वसिद्धिः। 'सर्वेषाम्' इत्यत्र चान्तरङ्गे षत्वे कर्तव्ये जातस्य बहिरङ्गस्य सुटो नासिद्धत्वम्। अतएव षत्वं जायते।

यद्यप्यस्या अष्टाध्यायीपाठाभावात्साक्षात् सापादिकत्वं नास्ति तथाप्येषा 'वाह ऊठ्' ६. ४. ३२ इति सूत्रस्थोठ्ग्रहणेन ज्ञापिता। तच्च सूत्रं सपाद-सप्ताध्यायीस्थम्। ज्ञापकस्य यो देशः सः एवौचित्याज्ज्ञाप्यस्यापि देशः। इत्थमियं परिभाषाऽपि सपादसप्ताध्यायीस्थेवेत्याह-अस्याञ्चेति ऊठ्ग्रहणस्य ज्ञापकत्वं कथमिति चेच्छ्रूयताम् 'वाह ऊठ्' ६. ४. १३२ इत्यस्य स्थाने 'वाह' इत्येव सूत्रकरणेन सम्प्रसारणमित्यस्यानुवृत्या मस्य वाहः सम्प्रसारणं स्यादित्यर्थेन 'विश्ववाह् अस्' इति स्थिते वकारस्य उकारे सम्प्रसारणे 'सम्प्रसारणाच्च' ६. १. १०८ इति पूर्व-रूपे विश्व उह् अस् इति स्थिते ण्विप्रत्यये आर्धधातुके परे 'पुगन्तलघूपधस्य च' ७.३.८६ इति गुणे विश्व ओह् अस् इत्यत्र 'वृद्धिरेचि' ६. १. ८८ इति वृद्धौ विश्वौह—इत्यादि—सिद्धे ऊठ् ग्रहणं ज्ञापयति—'असिद्धं बहिरङ्गमन्तरङ्गे' इति। ज्ञापिते तूठ्ग्रहणं चरितार्थम्=बहिरङ्गत्वेन विवक्षितस्य संप्रसारणस्य भसंज्ञासापेक्षस्य निमित्तम् अस्-प्रत्ययपर्यन्तम्. लघूपधापेक्षतयाऽर्धधातुकण्विप्रत्ययापेक्षतया च गुणस्य निमित्तम् उह् इत्यत आरभ्य ण्विप्रत्ययपर्यन्तमितिकृत्वा सम्प्रसारणशास्त्रीयनिमित्ता-न्तर्भूतनिमित्तकत्वादन्तरङ्गे गुणे कर्तव्ये बहिरङ्गस्यासिद्धया गुणो न स्यात्ततश्चाद् गुणे 'विश्वोह' इति स्यात्। इष्यते च विश्वौह इति। अतः ऊठ्विधानं सार्थकम्। ऊठ्कृते तु 'एत्येधत्यूठसु' ६. १ ८८ इति वृद्धया रूपं सिद्धयति।

---

का अतो रोः—६.१. ११३ सूत्र में 'अप्लुतात्' और 'अलुते' इस विशेषण के सामर्थ्य से बाध की कल्पना की गयी है।

यह परिभाषा त्रिपादीस्थ अन्तरंग कर्तव्य में प्रवृत्त नहीं होती; क्योंकि यह सपादसप्ताध्यायीस्थ है। इस के सपादसप्ताध्यायीस्थ होने का कारण यह है इसका ज्ञापक या जनक वाह ऊठ् ६. ४. १३२ सूत्र का ऊठ् ग्रहण है। वाह ऊठ् सूत्र षष्ठाध्याय का है। इसलिए जनक सूत्र जब सपादसप्ताध्यायी का है तो उत्पन्न परिभाषा भी उसी अध्याय की मानी जायगी। यदि यह परिभाषा न मानें तो 'वाह ऊठ्' सूत्र का ऊठ् ग्रहण व्यर्थ है। 'वाहः' सूत्र करके उसमें सम्प्रसारण की अनुवृत्ति करके उसके द्वारा सम्प्रसारण विधान करने पर 'विश्व वाह् + अस् ऐसी स्थिति में

लघूपधगुणे 'वृद्धिरेचि' इति वृद्धौ विश्वौह इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यात्।

न च 'पुगन्त' इति सूत्रे निमित्तमिको विशेषणम्, अत एव भिनत्तीत्यादौ न

---

नचैवमन्तरङ्गं वहिरङ्गाद्बलीय इति लोकसिद्धेन न्यायेन लघूपधगुणमसिद्धं विधायाद्गुण इति गुणे विश्वोह इति स्यादनिष्टरूपमिति वाच्यम् तस्याप्येतस्यामेवान्तर्भावस्वीकारात्। अस्यामवस्थायाञ्च तस्या अभावात्। न च परिभाषा-स्वीकारेऽपि ऊठ्ग्रहणं व्यर्थमेव, विश्वघटकाकारस्य उह्घटकोकारस्य निमित्तस्य लघूपधगुण-शास्त्रीय-निमित्तान्तर्भूतत्वाल्लघूपधगुणमसिद्धं विधायाद्गुणस्य प्रवृत्तेरिति वाच्यम् विश्वघटकाकारस्यापेक्षणादाद्गुण इत्यस्य लघूपधगुणबहिर्भूत-निमित्तकत्वात्। न च "ऊडिदंपदाद्यप्-पुम्-रै-द्युभ्यः ६.१.१७१ इत्यनेन एकाजन्तोदात्तेभ्य ऊडादिभ्यः परा शसादिविभक्तिरुदात्ता इत्यर्थकेन प्रष्ठौह इत्यत्र स्वरसिद्ध्यर्थमूड्ग्रहणं चरितार्थमिति वाच्यम् स्वरविधायके ऽस्मिन् सूत्रे 'वाह ऊठ्' ६.४.१३२ इत्यत्र च ह्रस्व एव कर्तव्ये दीर्घस्य विधानस्यैव ज्ञापकत्वात्। तद्धि एत्येधत्यूठ्सु ६.१.८९ इत्यस्य प्रवृत्यर्थम्। ह्रस्वविधानेऽपि लघूपधगुणे कृते वृद्धिरेचीति वृद्धौ रूपासिद्धेर्दीर्घग्रहणं व्यर्थं सज्ज्ञापकम्। ज्ञापितायान्त्वेतस्यां 'वाह उठ्' इत्यस्यासिद्धत्वेन लघूपधगुणाप्रवृत्या वृद्धिरेचीत्यस्याप्राप्तौ वृद्धेरनापत्तौ दीर्घग्रहणमेत्येधत्यूठ्सु ६.१.८९ इत्येतत्प्रवृत्ति-सम्पादनेन चरितार्थम्। एत्येधत्योरित्यत्र ह्रस्वकरणेन वृद्धिसिद्धौ दीर्घग्रहणं न स्वांशे चरितार्थमिति तु न वाच्यम् अवतीति ऊर्जनस्य ऊः, जनौरित्यत्र ज्वरत्वर—६.४.२० इति ऊठि एत्येधत्योरिति वृद्ध्यनापत्तेः। ज्वरत्वरेत्यत्र ह्रस्वविधानं तु न युक्तम् ह्रस्वविधाने जूरावित्यत्र दीर्घोकारश्रवणानापत्तेः।

अथवा ज्ञापकतापरभाष्यप्रामाण्येन प्रष्ठौह इत्यत्र स्वराभाव एवेष्टः। दीक्षितेन दत्तं प्रष्ठौह इति तत्सूत्रोदाहरणं चिन्त्यमेवेति।

ननु 'भिनत्ति' इत्यादौ गुणवारणाय पुगन्तेति सूत्रे निमित्तमिको विशेषणं वाच्यम् अङ्गविशेषणे तु सार्वधातुकार्धधातुकाव्यवहितपूर्वत्वविशिष्टाङ्गावयवस्येको गुण इत्यर्थे 'भिनत्ति' इत्यत्र भिनद्+ति इतिस्थितौ सार्वधातुकं तिप्, तदव्यवहित-

---

'व्' के स्थान में 'उ' सम्प्रसारण और 'सम्प्रसारणाच्च' ६.१.१०८ से पूर्वरूप करने पर विश्व+उह+अस् ऐसी स्थिति में लघूपधगुण और 'वृद्धिरेचि' से वृद्धि करने पर विश्वौहः रूप बन ही जाता, ऊठ् ग्रहण व्यर्थ हो जाता। जब यह परिभाषा मान ली गयी, तब तो सम्प्रसारण की असिद्धता हो जाने पर 'लघूपधगुण हो नहीं सकता था, ऐसी स्थिति में 'वृद्धिरेचि' की प्राप्ति नहीं होने से 'आद्गुण' ६.१.८७ सेगुण होने पर 'विश्वौहः' की जगह 'विश्वोहः' यह अनिष्ट रूप न बने, इस-लिए ऊठ् ग्रहण सार्थक हुआ। ऊठ् करने पर तो 'एत्येधत्यूठ्सु' ६.१ ४९ से वृद्धि

**गुणः, एवं च नाजानन्तर्य इति निषेधात् कथं परिभाषाप्रवृत्तिरिति वाच्यम् । प्रत्यय-स्याङ्गांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात्, पुगन्तेत्यादौ कर्मधारयाश्रयणेन**

---

पूर्वत्वविशिष्टाङ्गम् भिनद् इति, तदवयवस्येको गुणापत्तिः, इको विशेषणे तु सार्वधातु-कार्धधातुकाव्यवहितपूर्वत्वविशिष्टस्याङ्गावयवेको लघूपधारूपस्य गुणो भवतीत्यर्थे'' येन नाव्यवधानं तेन व्यवधानेऽपीति न्यायेन 'भेत्ता' इत्यत्र भिद्+ता इत्यवस्थाया-मेकवर्णव्यवधाने सूत्रस्य चारितार्थ्येनानेकवर्णव्यवधानेऽप्रवृत्या न दोषः, तथाच अज्निष्ठान्यव्यवधानशून्यनिमित्तके ऽन्तरङ्गे कर्तव्येऽन्तरङ्गपरिभाषा न प्रवर्तत इति निषेधादन्तरङ्गपरिभाषाया अप्रवृत्या गुणदृष्ट्या संम्प्रसारणस्य कथमसिद्धिरिति चेन्न प्रत्ययस्याङ्गांशे उत्थिताकांक्षा वर्तते अतस्तत्रैव निमित्तस्यान्वयौचित्येनेकि तदन्वया-सम्भवेन नाजानन्तर्य-परिभाषाया अप्रवृत्तेः। 'भिनत्ति' इत्यादौ गुणापत्तिस्तु न वाच्यम् पुगन्तेत्यादौ कर्मधारयमाश्रित्य लघ्वी चासावुपधा लघूपधेति समासं विधाय पुकि अन्तः पुगन्तः, पुगन्तश्च लघूपधा चेत्यनयोः समाहारद्वन्द्वं कृत्वा तस्य पुगन्त-लघूपधस्य चेति कृत्वा सार्वधातुकार्धधातुकपरकाङ्गावयवलघूपधारूपेको गुण इत्यर्थेन इक उपधात्वाभावेनादोषात् । अयमर्थ इको गुणवृद्धी (१.१.३) इति सूत्रभाष्य-सम्मतः । उक्तञ्च तत्र भाष्ये पुगन्तलघूपधस्येति । नैवं विज्ञायते पुगन्तस्याङ्गस्य लघूपधस्य चेति । कथं तर्हि पुक्यन्तः पुगन्तः । लघ्व्युपधा लघूपधा । पुगन्तश्च लघूपधा च पुगन्तलघूपधम् । पुगन्तलघूपधस्येति । अवश्यं चैतदेवं विज्ञेयम् अङ्गविशेषणे सतीह प्रसज्येत भिनत्ति छिनत्तीति ।

---

होकर रूप सिद्ध हो जाता है । इसलिए दोष नहीं होता । यदि यह कहें कि ''पुगन्त-लघूपधस्य च'' ७. ३. ८६ इस सूत्र में निमित्त 'इक्' का विशेषण है । इस तरह सार्वधातुकार्धधातुकाव्यवहितपूर्वत्वविशिष्टलघूपधाङ्गावयव इक् को गुण हो ऐसा अर्थ होगा', भिनत्ति में गुणवारण के लिए ऐसा अर्थ करना ही चाहिए, तब तो नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इस परिभाषा (प० ५२) से 'अन्तरङ्ग परिभाषा का निषेध हो जायगा; फिर विश्वौह में उसकी प्रवृत्ति दिखाना असंगत ही है तो इसका समाधान यह है कि अज्निष्ठ जो प्रत्यय निरूपित आनन्तर्य है तन्निमित्तक होने के कारण 'पुगन्तलघूपधस्य च' विषय में नाजानन्तर्ये की जो प्रवृत्ति दिखायी गयी है वह ठीक नहीं है क्योंकि प्रत्यय का अन्वय अङ्ग में होगा; क्योंकि प्रत्यय, अङ्गांश में नित्य साकांक्ष है । इसलिए सार्वधातुकार्धधातुक प्रत्यय का अङ्ग में अन्वय होगा, इक् में नहीं । इस तरह सार्वधातुक या आर्धधातुक के अव्यवहित पूर्व में विद्यमान जो अङ्ग'' इस प्रकार का अर्थ होगा । उस अर्थ में यह 'नाजानन्तर्य'' परिभाषा का विषय नहीं

**प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इति 'इको गुणवृद्धी' इति सूत्रभाष्यसम्मतेऽर्थे भिनत्तीत्यादावदोषाच्च ।**

**अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त एव । वार्य्यूहेत्यादि तूहतेः क्विपि बोध्यम् । धातूनामनेकार्थत्वान्नार्थासंगतिः । प्रौह**

---

अकारान्तोपसर्गप्रादिपूर्वकाद् वहधातोर्ण्विप्रत्ययेन निष्पन्नात् प्रपूर्वकाद् वह् धातोर्ण्यन्ताद् विचि वा निष्पन्नात् प्रवाह् इत्यस्मात् शसि प्रौह इत्यत्र लघूपधगुणे वृद्धिरेचि ६.१.८८ इत्येतद् बाधित्वा एङि पररूपम् ६.१.९४ इति पररूपे रूपासिद्धचा तत् सिद्धचर्थं वाह ऊठ् ६४.१३२ इत्यत्र ऊठ्ग्रहणं चरितार्थम्, अनकारान्तात् वारिपूर्वकात् वाह् इत्यस्माच्छसि वार्यूह इत्यस्मिन् लघूपधगुणे ऊकारश्रवणानापत्तेस्तच्छ-

---

बनता । इसलिए उसकी प्रवृत्ति नहीं होगी । पुगन्त सूत्र में कर्मधारय मानकर 'लघ्वी चासौ उपधा लघूपधा यह विग्रह करने तथा पुकि अन्तः पुगन्तः पुगन्तश्च लघूपधा चे ति समाहार—द्वन्द्वः तस्य पुगन्तलघूपधस्य च, ऐसा मानने पर सार्वधातुकार्धधातुक प्रत्ययपरकाङ्गावयव लघूपधारूप इक् को गुण हो ऐसा 'इको गुण वृद्धी' सूत्र का भाष्यसंमत अर्थ करने पर भिनत्ति में दोषोद्धार हो जायगा, क्योंकि वहाँ लघूपधारूप इक् का अभाव है ।

ऊठ्ग्रहण को ज्ञापक नहीं मानना चाहिए; क्योंकि अकारान्त उपसर्ग जैसे अप और अनकारान्त उपपद जैसे वारि आदि शब्द पूर्वक वह धातु से ण्वि या ण्यन्त वाह धातु से विच् प्रत्यय करने पर ऊठ् विधान जब करते हैं; तब शस् में अपौहः" बनता है; क्योंकि यहाँ एत्येधत्यूठ्सु से वृद्धि होती है, परन्तु सम्प्रसारण करने पर 'पुगन्त-लघूपधस्य च ७.३.८६ से गुण होने पर भी वृद्धिरेचि से प्राप्त वृद्धि को बाधकर 'एङि पररूपम्' से पररूप होने पर "अपोहः" बनेगा । इसी तरह ऊठ् करने पर शस् में 'वार्यूहः' बनता है किन्तु सम्प्रसारण तथा गुण करने पर "वार्योहः" बनेगा । इस तरह ऊठ् विधान जब चरितार्थ है; तब उसे ज्ञापक मानना उपयुक्त नहीं है । इस प्रश्न के समाधान में कहते हैं कि अकारान्त उपसर्ग या इकाराद्यन्तक उपपद के पूर्व में रहने पर वह् धातु से ण्वि या ण्यन्त वाह् धातु से विच् प्रत्यय नहीं होता है; क्योंकि ऐसे रूप मिलते नहीं हैं, उनका अनभिधान है । वार्यूह प्रयोग तो वारि पूर्वक ऊह् धातु से क्विप् प्रत्यय करने पर बन जाता है; 'ऊह्' धातु का अर्थ यद्यपि 'वह्' धातु के अर्थ से भिन्न है; तथापि "क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः, अनेकार्थेषु युज्यन्ते अनेकार्था हि धातवः" इसके अनुसार ऊह् धातु भी प्रापण अर्थ में प्रयुक्त हो सकता है और वार्यूह का अर्थ 'वारिवाह' की तरह हो सकता है । प्र+पूर्वक वह धातु से ण्वि या णिजन्त से विच् करके बनाया गया प्रौहः अवौहः इत्यादि प्रयोग तो असाधु ही है । 'प्रौहः' में ऊह के अनर्थक होने के कारण "प्रादूहोढो—" ६.१.८९ वा० ३ इससे भी वृद्धि नहीं हो सकती ।

इत्याद्यसाध्वेव। वृद्धेरप्राप्तेः। अस्योहस्यानर्थक्यान्न "प्राद्गूहोढो०" 'इत्यस्यापि प्रवृत्तिः।

न च कार्य्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्। पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात्। न चानया पूर्वस्यासिद्धत्वात्तदभावेन तं प्रति परासिद्धत्वं 'पूर्वत्र' इत्यनेन वक्तुमशक्यमिति वाच्यम्। एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः।

किं च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः। अतः

---

वर्णार्थञ्चोठ्ग्रहणं चरितार्थमिति चेन्न अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्ण्विप्रत्ययस्य ण्यन्तवाहेश्च विच्प्रत्ययस्यानभिधानादभावकल्पनात्।

**कार्यकालपक्षे इति** यथोद्देशपक्षे परिभाषाणामुपदेशदेशमनतिक्रम्य वाक्यार्थबोधेनाऽन्तरङ्गपरिभाषाया ज्ञापकदेशस्थत्वेन सापादिकत्वात् तं प्रति त्रिपाद्या असिद्धत्वेन त्रिपाद्यामप्रवृत्तिः। कार्यकालपक्षे तु परिभाषाणां विधिदेशस्थत्वेन पूर्वत्रासिद्धमित्यस्याप्रवृत्त्याऽसिद्धत्वाभावेन त्रिपाद्यामपि प्रवृत्तिःस्यादेवेतिभावः प्रश्नस्य। परिभाषां प्रति अन्तरङ्गस्यासिद्धत्वाभावेऽपि सापादसप्ताध्यायिकबहिरङ्गं प्रति त्रैपादिकान्तरङ्गस्य पूर्वत्रासिद्धमित्यनेनासिद्धत्वादन्तरङ्गाभावेन तन्निरूपित—बहिरङ्गस्याभावः, अन्तरङ्गत्वबहिरङ्गत्वयोः परस्परसापेक्षत्वात् परस्परसापेक्षत्वञ्च तयोः सत्यन्तरङ्गे बहिरङ्गं, सति च बहिरङ्गेऽन्तरङ्गमिति भाष्येण प्रतिपादितमेव। एवञ्च परस्परसापेक्षान्तरङ्गबहिरङ्गत्वयोरभावात् परिभाषाया अप्रवृत्तिरिति समाधानस्याशयः। **पूर्वं प्रति**=सापादिकबहिरङ्गं प्रति। **परस्य**=त्रैपादिकान्तरङ्गस्य। **पूर्वस्य**=सापादिकबहिरङ्गस्य। **तन्निरूपितबहिरङ्गत्वाभावात्**=त्रैपादिकान्तरङ्ग-

---

यथोद्देश पक्ष में यह परिभाषा त्रिपादी अन्तरङ्ग कर्तव्य में षाष्ठी होने के कारण प्रवृत्त नहीं होती है। यह तो युक्तियुक्त है; परन्तु कार्यकालपक्ष में तो त्रिपादी में भी इस परिभाषा की प्रवृत्ति होगी ही; ऐसा नहीं समझना चाहिए, क्योंकि त्रिपादी में पूर्व के प्रति पर की असिद्धता हो जाती है। इसलिए अन्तरङ्ग शास्त्र का वहाँ अभाव हो जाता है। इसलिए अन्तरंग के अभाव में पूर्व को अन्तरंग निरूपित बहिरंगत्व का अभाव हो जाता है। इसलिए अन्तरंग परिभाषा से यहाँ बहिरंग की असिद्धता नहीं हो सकती। बादी ही न हो तो प्रतिवादी को दण्ड कौन दिलायेगा? यद्यपि यह भी कहा जा सकता है कि इस परिभाषा से जब पूर्व की असिद्धता हो जायेगी; तब पूर्व के नहीं होने के कारण उसके प्रति पर की असिद्धता "पूर्वत्रासिद्धम्" ८.२.१ से नहीं की जा सकती; तथापि यहाँ एक पक्ष को प्रमाणित करने वाली युक्तियों के अभाव के कारण 'पूर्वत्रासिद्धम्' सूत्र और "असिद्धम् बहिरङ्गम्" (परि० ५१) परिभाषा दोनों की अप्रवृत्ति हो जायगी। बात यह है कि 'सूत्र' पूर्व के प्रति पर की असिद्धता करने आयेगा और परिभाषा पर

निरूपितबहिरङ्गत्वाभावात् । न च पूर्वत्रासिद्धमित्यस्य प्रवृत्तेः प्राक् अन्तरङ्गबहिरङ्गयोरुभयोरपि सत्त्वादनयान्तरङ्गं प्रति बहिरङ्गस्यासिद्धत्वं किं न बोध्यते, अन्तरङ्गैकवाक्यतापन्नस्य पूर्वत्रासिद्धमित्यस्याप्यन्तरङ्गत्वेन परिभाषया तद्दृष्ट्यापि पूर्वस्य सापादिकबहिरङ्गस्यासिद्धत्वेन पूर्वत्रासिद्धम् ८.२.१ इत्यस्य पूर्वशास्त्रज्ञानाभावात्तत्प्रति अन्तरङ्गस्यासिद्धत्वबोधनेऽसामर्थ्यात् । एतेन पश्चात् पूर्वत्रासिद्धम् ८.२.१ इत्यस्य प्रवृत्त्या साप्तादिकबहिरङ्गं प्रति परस्य त्रैपादिकस्यान्तरङ्गस्यासिद्धत्वस्याप्रामाण्यापत्तेरन्तरङ्गपरिभाषेह न प्रवर्तत इति कथनमपास्तम् । अन्तरङ्गपरिभाषया पूर्वस्य, बहिरङ्गत्वात् पूर्वत्रासिद्धमित्यनेन परस्यान्तरङ्गस्य त्रैपादिकत्वादसिद्धत्वबोधने एकतरपक्षस्य युक्ततरत्वसाधकप्रमाणाभावेन उभयोरप्यप्रवृत्त्यापत्तेः । पूर्वत्रासिद्धम् ८.२.१ इति सूत्रं बलवत् तस्याष्टाध्याय्यां सूत्रकारेण साक्षादुच्चारितत्वेन प्रत्यक्षदृष्टत्वात् । असिद्धं बहिरङ्गमिति तु ऊठ्ग्रहणेन ज्ञापितेति आनुमानिकी । प्रत्यक्षप्रमा-

---

अन्तरङ्ग के प्रति पूर्व बहिरङ्ग की असिद्धता करने आयेगी; दोनों में से एक पक्ष की बलवत्ता और दूसरे पक्ष की दुर्बलता के साधक प्रमाणों का अभाव है; इसलिए विनिगमना (एक पक्ष को सिद्ध करने वाली युक्ति) के अभाव में न सूत्र की प्रवृत्ति होगी और न परिभाषा की ।

इसके विपरीत पूर्वत्रासिद्धम् यह सूत्र साक्षात् पाणिनिमुखोच्चरित होने से प्रत्यक्षश्रुत है और "असिद्धं बहिरङ्गम्" यह परिभाषा ज्ञापित होने के कारण अनुमान गम्य है । अनुमान से प्रत्यक्ष बलवान् होता है । "श्रुतलिङ्गवाक्य" इस न्याय से भी श्रुत की बलवत्ता सिद्ध होती है। इस तरह प्रत्यक्ष (श्रुत) पूर्वत्रासिद्धम् से अनुमान गम्य असिद्ध-परिभाषा (लिङ्ग) का बाध होना ही उचित है ।

बाल शास्त्री, जो विजयकार के गुरु थे, ग्रन्थकार के पूर्वोक्त समाधान से सन्तुष्ट नहीं है । इसलिए वे 'त्रिपादीस्थ अन्तरङ्ग कर्त्तव्य में बहिरङ्ग की असिद्धता नहीं होती है अर्थात् त्रपादीस्थ अन्तरंग में उक्त परिभाषा नहीं लगती है' इसके लिए यहाँ कोई अतिरिक्त व्यवस्था मानते हैं । वे कहते हैं कि परिभाषा दो प्रकार की होती हैं (१) शास्त्रत्व सम्पादिका परिभाषा । इस प्रकार की परिभाषा सूत्र के अर्थ में दिखाई पड़ने वाले दोषों को अपनी प्रवृत्ति के द्वारा दूर करके सूत्रार्थ को प्रामाणिक बनाती है । ऐसी परिभाषा की प्रवृत्ति के बिना सूत्र में शास्त्रत्व ही नहीं आता। भला, जिस सूत्र का अर्थ स्वयं संदिग्ध है, वह प्रयोग की साधुता का अनुशासन कैसे कर सकता है ? स्वयमसिद्धः कथं परान् साधयेत् ? । अनुशासन के बिना शास्त्रत्व कहाँ ? जैसे "तस्मिन्निति निर्दिष्टे" १.१.६६ की इसकी प्रवृत्ति के बिना 'इको यणचि' ६.१.७७ की अप्रामाणिकता दूर नहीं होती । इसलिए शास्त्रत्व सम्पादिका परिभाषा की प्रवृत्ति त्रिपादी में भी होती है । (२) दूसरे प्रकार की परिभाषा को 'शास्त्रत्वा-

कार्य्यकालपक्षेऽपि त्रिपाद्यामस्या अनुपस्थितिरेव ।

अत एव कार्य्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्त्वाऽयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वादित्युक्तं 'विसर्जनीय' सूत्रे भाष्ये सिद्धान्तिना । त्रिपादीस्थेऽन्तरङ्गे कर्त्तव्येऽयं परिहारो न युक्त इति तदर्थः । किंतु' वचनमेवारब्धव्यमिति

---

णञ्चानुमानाद् बलवद्भवतीति पूर्वत्रासिद्धमित्यस्यान्तरङ्गपरिभाषादृष्ट्या—बलवत्त्वं सिद्धयति ।

इत्थं सिद्धं यत् कार्यकालपक्षेऽपि त्रिपाद्यामस्या उपस्थितिर्न भवति । अतएव सुध्युपास्य इत्यत्र यकारस्य संयोगान्तलोपाभावाय यणः प्रतिषेधो वाच्य इति वचनमेवारब्धव्यम् । अन्यथा त्रैपादिकेऽन्तरङ्गे संयोगान्तलोपे कर्त्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वादेव लोपाभावे सिद्धे वार्तिकस्य नासीदावश्यकता । चक्र्यत्रेत्यादौ

---

वच्छिन्नोद्देश्यिका'' कह सकते हैं। यह परिभाषा अपना उद्देश्य उन सूत्रों को बनाती है, जिनका शास्त्रत्व (जिनकी प्रामाणिकता) स्वतः सिद्ध है। जैसे असिद्धं बहिरङ्गमन्तरङ्गे''। इस परिभाषा की प्रवृत्ति के बिना भी अप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारक-बोध-जनकत्वरूपशास्त्रत्वदत्तच्छास्त्रों में स्वतः सिद्ध है। अर्थात् ''असिद्धं बहिरङ्गमन्तरङ्गे'' की प्रवृत्ति के बिना भी पुगन्तलघूपधस्य च'' आदि के अर्थ में अप्रामाणिकता का ज्ञान हमको नहीं होता है; इसलिए उस में ''असिद्धम्'' इस परिभाषा के बिना भी प्रयोग को सिद्ध करने की क्षमता-रूप शास्त्रत्व है।

द्वितीय कोटि में आनेवाली सपादसप्ताध्यायी परिभाषा त्रिपादी में नहीं लगती; क्योंकि त्रिपादी में 'पूर्वत्रासिद्धम्' से पूर्व के प्रति पर की असिद्धता हो जायगी। इसलिए 'अन्तरङ्गत्वाभावात्' यह परिभाषा त्रिपादी में नहीं लगती। यह व्यवस्था बालशास्त्री जी ने दी है। (विजय टीका पृ० १९९)

कार्यकालपक्ष में भी त्रिपादी में इसकी उपस्थिति नहीं होती है। इसीलिए कार्यकालपक्ष की चर्चा करके उक्तयुक्तियाँ देकर प्रवृत्ति करायी गयी असिद्ध परिभाषा से संबद्ध परिहार को अयुक्त बताते हुए सिद्धान्ती, भाष्यकार ने 'विसर्जनीय' सूत्र के (८. ३. १५.) भाष्य में कहा कि ''असिद्धं बहिरङ्गमन्तङ्गे के द्वारा ''सुद्ध्युपास्यः'' में यलोप का वारण करना अयुक्त है। भाष्यकार का तात्पर्य यह है कि त्रिपादीस्थ अन्तरङ्ग कर्तव्य रहने पर यह जो समाधान दिया गया है वह युक्त नहीं है। बात यह थी कि ''सुद्ध्युपास्यः'' में संयोगान्तस्य लोपः ८. २. २३. से यलोप क्यों नहीं हुआ? इस प्रश्न के उत्तर के रूप में तीन बातें कही गयी। १- ''यणः प्रतिषेधो वाच्यः'' इस वार्तिक का आश्रयण (२) दूसरी बात थी ''संयोगान्तस्य लोपः'' में 'झलो झलि ८. २. २६. से 'झलः' का अपकर्ष और संयोगान्त झल् के लोप का विधान और अन्त में तीसरी बात थी ''न वा बहिरङ्गलक्षण-

तदाशयः। अत एव निगाल्यत इत्यादौ लत्वार्थं तस्य दोष इति वचनमेवारब्धम्। अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव। येऽपि लक्ष्यानुरोधादानुमानिकव्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति तेऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक्।

---

'स्कोः—८.२.२९ इति संयोगादिलोपार्थम्, 'निगाल्यते' इत्यत्राचि विभाषा ८.२.२१ इति लत्वार्थं, 'माषवपनी' इत्यत्र प्रातिपदिकान्त—८.४.११ इति णत्वस्य प्रतिषेधार्थं 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वार्तिकं च कर्तव्यम्। तथाहि तस्य अर्थात् पूर्वत्रासिद्धे न स्थानिवदित्यस्य संयोगादिलोपलत्वणत्वेषु कर्तव्येषु अप्रवृत्तिः। तथाच पूर्वोक्तस्थलत्रये स्थानिवद्भावो भवत्येवेत्यर्थः। तथाच चक्रचय्येत्यादौ 'अचः परस्मिन्—१.१.५७ इति यणादेशस्य स्थानिवत्त्वात् स्कोरिति कलोपो न। निपूर्वकात् ण्यन्तगारि इत्यस्मात् यकि ते णिलोपस्य स्थानिवत्त्वादचि विभाषेति लत्वम्। माषवपनी इत्यत्र माषवपन ई इति स्थिते जातस्य यस्येति च ६४.१४८ इति लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावात् प्रातिपदिकान्तनुम्विभक्तिषु च ८.४.११ इति णत्वं न। बहिरङ्गपरिभाषायाः संयोगादिलोपादिके त्रैपादिकेऽन्तरङ्गे कर्तव्येऽप्रवृत्तेरुक्तस्य

---

त्वात्'' अर्थात् यलोप रूप अन्तरङ्ग कर्तव्य में बहिरङ्ग यण् की असिद्धता। इनमें से तीसरे समाधान को भाष्यकार ने कार्यकाल पक्ष भी अयुक्त बताया; क्योंकि पूर्व-युक्ति के अनुसार त्रिपादीस्थ अन्तरङ्ग कर्तव्य में उक्त परिभाषा की प्रवृत्ति नहीं होती। भाष्यकार का आशय यह है कि ''यणः प्रतिषेधो वाच्यः'' यह वचन ही करना चाहिए।

कार्यकाल पक्ष में भी 'अन्तरङ्ग-परिभाषा' की त्रिपादी में प्रवृत्ति नहीं होने के कारण ही'' निगाल्यते इत्यादि में लत्व के लिए तस्य दोषः संयोगादि-लोप लत्वणत्वेषु'' इस वचन के बनाने की आवश्यकता स्वीकार की गयी। अन्यथा ''निगार्+इ+यते'' इस अवस्था में अन्तरङ्गत्वात् णिलोप से पहले ही विकल्प से ''अचि विभाषा'' से लत्व हो जाता, फिर वह वचन व्यर्थ ही था। जो यह कहते हैं कि लक्ष्यसिद्धि के अनुरोध से ''पूर्वत्रासिद्धम्'' का बाध हो जायगा; वे लक्ष्यैक-चक्षुष्क (लक्ष्य-शब्द को देखकर नियम की कल्पना करनेवाले) व्यक्ति, लक्षणैक-चक्षुष्क के लिए कभी आदर के पात्र नहीं हो सकते। अर्थात् जो लक्षण को माध्यम बनाकर लक्ष्य के साधुत्व को जानते हैं; उन लक्षणैकचक्षुष्क के लिए यहाँ यह अन्योन्याश्रय दोष आयगा कि लक्षण को देखकर वे लक्ष्य के साधुत्व की कल्पना करेंगे और लक्षण को वे तब जानेंगे, जब कि उन्हें साधु लक्ष्य का ज्ञान हो जायगा। इस तरह त्रिपादीस्थ अन्तरङ्ग कर्तव्य में यह परिभाषा न यथोद्देश-पक्ष में प्रवृत्त होती है और न कार्यकाल पक्ष में।

वचनस्यावश्यकता वर्तते। कृतस्यापत्यं कार्तिरित्यत्र 'रदाभ्याम्'—८.२.४२ इति नत्वाभावाय 'निष्ठानत्वमवृद्धेः' नृमतोऽपत्यं नार्म्मतमित्यादौ मादुपधायाश्च—८.२.९ इति वत्वाभावाय "नृमतो वप्रतिषेधः" नार्कूटः नार्पत्य इत्यत्र विसर्गप्रतिषेधाय "विसर्जनीयोऽनुत्तरपदे" इत्यादिवचनानि कर्तव्यानि। **अतएव निगाल्यत इति।** कार्यकालपक्षेऽन्तरङ्गपरिभाषाया स्त्रिपाद्यामप्रवृत्तत्वादेवेत्यर्थः।

ननु ये त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिं स्वीकुर्वन्ति, तेषां तयैव सकलदोषोद्धारे सिद्धे पूर्वोक्तानि वचनानि न कर्तव्यानि भवन्तीति लाघवमधिकृत्य त्रिपाद्यां प्रवृत्तिरेव स्वीक्रियतामस्याः परिभाषायाः, अतिव्याप्तिस्तु न यथोद्देशपक्षाश्रयणात्, एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरमवलम्ब्य दोषदानस्यायुक्तत्वादिति चेत्, श्रूयताम् युक्तियुक्तस्य तथ्यस्य लाघवेन खण्डनमनुचितम्। संयोगान्तलोपे झलोऽपकर्षणेन झल एव संयोगान्तस्य लोपेन वार्तिकं विनैव नागेशस्यापीष्टसिद्धिः। त्रिपाद्यां बहिरङ्गपरिभाषायाः प्रवृत्तिं स्वीकुर्वतोऽपि तक्ष् धातोर्णिचि क्विपि णिलोपे संयोगान्तलोपे तगिति सिद्ध्यति। अत्र संयोगादिलोपाभावाय णिलोपस्य स्थानिवद्भाव आवश्यकः। तत्कृते पूर्वत्रासिद्धीये न स्थानिवदित्यस्य प्रतिषेधाय "तस्य दोषः" इति वार्तिके संयोगादिग्रहणं कर्तव्यमेव, तत्र णिलोपस्य बहिरङ्गत्वाभावेन परिभाषया असिद्धत्वाप्राप्तेः। एवं लत्वग्रहणमपि तत्रावश्यकमेव, प्र+अयते इत्यत्र दीर्घे प्रायते इत्यत्र अयति परस्योपसर्गावयवरेफस्य लत्वं स्यादित्यर्थकेन उपसर्गस्यायतौ ८.२.१९ इति सूत्रेण लत्वसम्पादनायोपसर्गस्याय्धातोश्चापेक्षा वर्तते। अतः स्थानिवत्त्वमावश्यकम्। तस्य 'पूर्वत्रासिद्धीये न स्थानिवदिति निषेधो माभूदित्यर्थं वार्तिके लत्वग्रहणमाप्यावश्यकम् परिभाषया चानया न निर्वाहः दीर्घस्यान्तरङ्गतया बहिरङ्गत्वाभावेन परिभाषयाऽसिद्धत्वस्यासिद्धेः। प्राहिणोत् इत्यत्र हिनुमीना ८.४.१५ ति णत्वसिद्ध्यर्थं वार्तिके णत्वग्रहणमप्यावश्यकम्। अन्यथा पूर्वं धातोः साधनेन योगे अहिनोदिति जायते पश्चाच्चोपसर्गयोगे हिनुशब्दाभावादप्राप्तस्य णत्वस्य सिद्ध्यर्थं गुणस्य स्थानिवद्भावोऽनिवार्यः। तस्य च स्थानिवद्भावस्य प्रतिबन्धकस्य पूर्वत्रासिद्धीये न स्थानिवदित्यस्य निषेधाय वार्तिके णत्वग्रहणं तवापि कर्तव्यमेव। परिभाषया तु नेष्टसिद्धिः णत्वस्यैव बहिरङ्गत्वात् तत्र कर्तव्येऽन्तरङ्गस्य गुणस्य तयाऽसिङ्गत्वाबोधनात्। एवमेव ऋधातोः निष्ठायां कृतायां सिद्धात् ऋतशब्दादाचारक्विपि ततो लङि आर्तदित्यत्र निष्ठानत्वाभावाय वार्तिकं कर्तव्यमेव, वृद्धेरबहिरङ्गत्वात्परिभाषयाऽसिद्धेः। एवम् ऋशब्दान्मतुपि ऋमतुइत्यस्माचारक्विबन्ताल्लङि आर्मत् इत्यत्र वत्वाभावार्थं वचनमेवारब्धव्यम् वृद्धेरन्तरङ्गत्वात्परिभाषयाऽसिद्धत्वासिद्धेः। ऋशब्दात् कल्पप्प्रत्ययेन सिद्धात् ऋकल्पशब्दात् आचारक्विबन्तात्लङि आर्कल्पदित्यत्र विसर्गप्रतिषेधाय विसर्जनीयोऽनुत्तरपद इति वार्तिकं कार्यमेवेति समानमेव त्रिपाद्यां प्रवृत्तिवादिनोऽपि फलमुखाधायकं गौरवम् इति शम्। **इतिजातबहिरङ्गासिद्धत्वविचारः।**

**अत एव 'ओमाङोश्च'-इत्याङ्ग्रहणं चरितार्थम्। तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वाद्गुणे कृते वृद्धिप्राप्तौ पररूपार्थम्।** साधन-

---

अन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्यासिद्धेः फलमुक्त्वा साम्प्रतमन्तरङ्गे कर्त्तव्ये समकालप्राप्तस्य बहिरङ्गस्यासिद्धतायाः फलमाह—**अतएव ओमाङोश्चेत्यादि।** अतएवास्या ज्ञापकस्य ऊठ्ग्रहणस्योदाहरणे विश्वौह इत्यादौ जातस्य बहिरङ्गस्यैवासिद्धिर्दृश्यते तत्साम्यादियमपि परिभाषा जातस्य बहिरङ्गस्यैवासिद्धत्वं बोधयतु, समकालप्राप्तबहिरङ्गासिद्धत्वबोधने किं प्रमाणं किञ्च फलमिति न वाच्यम् 'ओमाङोश्चेति' ६. १. ९५ सूत्रे आङ्ग्रहणस्यैव प्रमाणत्वात्। **अतएव समकालप्राप्तबहिरङ्गा**सिद्धत्वस्वीकारादेवेत्यर्थः। तथाहि आङ्ग्रहणं क्रियते 'खट्वा+आऊढा' इत्यत्र दीर्घगुणयोः प्राप्तयोः परमपि 'अकः सवर्णे दीर्घ' इति दीर्घं बाधित्वान्तरङ्गत्वाद् आद्गुण इति गुणे कृते वृद्धौ प्राप्तायामनेन पररूपं भवत्वित्यर्थम्। यदि समकालप्राप्तबहिरङ्गासिद्धिर्न स्वीक्रियेत तर्हि खट्वा+आ+ऊढा इतिस्थितौ परत्वात्सवर्णदीर्घे ततो गुणे खट्वोढेतिसिद्धावाङ्ग्रहणं व्यर्थं ज्ञापयतिः-अन्तरङ्गे कर्तव्ये बहिरङ्गस्य (समकालप्राप्तस्य) असिद्धत्वं भवतीति। साधनबोधक-

---

यह परिभाषा जात बहिरङ्ग को अन्तरङ्ग कार्य कर्तव्य रहने पर असिद्धता करती है किन्तु समकालप्राप्त अन्तरङ्ग और बहिरङ्ग में बहिरङ्ग की असिद्धता नहीं नहीं करती ऐसा मानना भ्रम होगा; क्योंकि 'ओमाङोश्च ६. १. ९५. में आङ्ग्रहण किया गया है, वह तभी चरितार्थ हो सकता है; जब कि समकालप्राप्तबहिरङ्ग की असिद्धता मानें। आङ्ग्रहण "खट्वा+आ+ऊढा" यहाँ पर भी सवर्णदीर्घ को बाधकर अन्तरङ्गत्वात् गुण करने पर 'खट्वा+ओढा' यहां प्राप्त वृद्धि को बाधकर पररूप के लिए करते हैं। यदि इस परिभाषा से समकालप्राप्तबहिरङ्ग की असिद्धता नहीं मानें; तब तो परत्वात् पहले सवर्णदीर्घ हो जायगा फिर खट्वा+ऊढा में वृद्धि की प्राप्ति नहीं रहने से गुण होकर खट्वोढा बन ही जायगा 'ओमाङोश्च' सूत्र का आङ्ग्रहण व्यर्थ हो जायगा। आङ्ग्रहण सामर्थ्यात् यह जानते हैं कि यह परिभाषा, समकाल प्राप्त बहिरङ्ग की भी असिद्धता करती है। 'खट्वा+आ ऊढा ऐसी स्थिति में पर भी सवर्ण दीर्घ को बाधकर नित्यत्वात् गुण हो जायगा इस तरह दीर्घ होने की कोई संभावना नहीं रहेगी; तब गुण होने पर खट्वा+ओढा ऐसी स्थिति में प्राप्त वृद्धि के बाधन के लिए 'आङ्' ग्रहण चरितार्थ दिखाई देता है फिर उक्त अर्थ में वह ज्ञापक नहीं बन सकता" ऐसा नहीं मानना चाहिए नित्य की अपेक्षा अपवाद अधिक बलवान होता है, दीर्घ अपवाद है। इसलिए पहले दीर्घ हो जाने पर गुण करने से रूपसिद्धि हो ही जाती 'आङ्' ग्रहण व्यर्थ होकर उक्त अर्थ का 'ज्ञापक हो ही सकता है। यदि यह कहें कि ज्ञापन के बाद

**बोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्तरङ्गत्वमिति 'सम्प्रसारणाच्च' इति सूत्रे भाष्ये स्पष्टम् । एहीत्यनु-**

---

प्रत्ययोत्पत्त्यनन्तरं सर्वप्रथमं धातोरुपसर्गयोगे पश्चात् खट्वा शब्दस्य समुदायेन योगो-जायते । अतः प्रथमोपस्थितिकत्वाद्गुणस्यान्तरङ्गत्वेन दीर्घमसिद्धं विधाय गुणे कृते वृद्धिबाधनार्थमाङ्ग्रहणं चरितार्थम् । यद्यपि दीर्घः गुणस्यापवादस्तथापि अन्तरङ्ग-बहिरङ्गत्वाभावविषये दैत्यारित्यादौ चरितार्थस्य दीर्घस्य खट्वोढेत्यत्र अन्तरङ्गेण गुणेन बाधः सम्भाव्यते । अतएवोच्यते-अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते (परि० ६६) अतएव ज्ञापनोत्तरमप्याङ्ग्रहणं व्यर्थमितिशङ्कैव नोत्तिष्ठते । नच आङ्पूर्वकस्येण्धातोर्लोटोमध्यमपुरुषैकवचने एहीति यद्रूपं सिद्धचति तदनुकृत्य ततः पूर्वं शिवेति संयोज्य शिव+एहीत्यादौ पूर्वान्तवद्भावेनानुकार्यावयवे एकारे विद्यमानस्याङ्त्वस्य प्रकृतिवदनुकरणं भवतीति न्यायेनानुकरणेऽप्यानयनादाङ्परत्वा-त्पररूपार्थमाङ्ग्रहणं सूत्रे चरितार्थम्; अन्यथा वृद्धचापत्तावनिष्टरूपापत्तिरितिवाच्यम् "आङि पररूपं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य" इत्येवंरूपेण आङ्ग्रहणस्य ज्ञाप-कताप्रतिपादक 'सम्प्रसारणाच्च' ६. १. १०८ इति भाष्यप्रामाण्येनानित्यस्य प्रकृति-वदनुकरणं भवतीतिन्यायस्य बलेनारोपिताङ्त्वे सूत्राप्रवृत्तेः । एहीत्यनुकार्येऽप्या-

---

भी 'आङ्' ग्रहण व्यर्थ ही है; क्योंकि अन्तरङ्ग की अपेक्षा अपवाद अधिक बलवान् होता है, इसलिए अपवादत्वात् पहले सवर्णदीर्घ हो जायगा और बाद में गुण होने से रूप सिद्धि हो जायगी आङ् ग्रहण व्यर्थ ही है" ऐसा नहीं मनाना चाहिए "दैत्यारिः" इत्यादि स्थल में चरितार्थ अपवाद शास्त्र यहाँ अन्तरङ्ग के द्वारा बाधा जायगा; क्योंकि 'अपवादो यद्यन्यत्र चारितार्थस्तर्हि अन्तङ्गेण बाध्यते" यह सिद्धान्त है। उचित भी है कि चरितार्थ अपवाद को अन्तरङ्ग बाध ले; क्योंकि अपवाद जो प्रबलतम माना गया है उसका कारण है—उसकी अचरितार्थता । चरि-तार्थ अपवाद अपना बल खो देता है; इसलिए उसको अन्तरङ्ग बाध लेता है ।

यद्यपि पदद्वय-सम्बन्धी दो वर्णों की अपेक्षा गुण और सवर्ण दीर्घ दोनों में है; तथापि 'अच परस्मिन्' १. १. ५७ सूत्र के भाष्य में "पट्व्या" में पटु+ई+आ इस स्थिति में पूर्व यण् की तरह पूर्वोच्चरित-निमित्तकत्व रूप अन्तरङ्गत्व तो दीर्घ में ही है; फिर गुण को अन्तरङ्ग बताना गलत है, यह सन्देह होता है; तथापि साधनबोधक प्रत्यय की उत्पत्ति के बाद पहले धातु का उपसर्ग के साथ योग होता है, बाद में खट्वा शब्द का समुदाय के साथ योग होने पर पूर्वो-पस्थिति गुण की होती है । इसलिए गुण में अन्तरङ्गत्व है ही यह सम्प्रसारणाच्च" सूत्र के भाष्य में स्पष्ट है । अर्थात् पहले 'आ' उपसर्ग का 'वह् त' के साथ योग हो कर सम्प्रसारणादि कार्य होने से 'ऊढा' बनेगा । उस ऊढा का बाद में खट्वा के साथ योग होगा; इस लिए गुण के निमित्तों की ही पूर्वोपस्थिति होने से गुण ही

करणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृत्तिर्ज्ञापकपर-'सम्प्रसारणाच्चे' ति सूत्रस्थभाष्यप्रामाण्येनानित्य प्रकृतिवदनुकरणमित्यतिदेशमादाय लब्धाङ्त्वे एतदप्रवृत्तेः ॥

---

ङ्त्वम् 'अन्तादिवच्च' ६. १. ८५ इति सूत्रातिदेशलभ्यमारोपितमेव, तस्य चारोपितस्य प्रकृतिवदनुकरणमित्यनेनानुकरणे पुनरारोपणमस्वाभाविकं प्रतिभाति । तत्रापि 'क्षियो दीर्घात्' ८. २. ४६ इति निर्देशे इयङ्दर्शनेन ज्ञापितस्य तस्य न्यायस्य तत्रैव प्रातिपदिकनिबन्धनविभक्तिदर्शनाज् ज्ञापनसमकालमेवानित्यत्वबोधनादतीवदुर्बलत्वमिति ।

गुणस्यान्तरङ्गत्वप्रतिपादकं सम्प्रसारणाच्च ६. १. १०८ इति सूत्रस्य महाभाष्यमित्थमस्ति-किम्पुनरिहान्तरङ्गं किम्बहिरङ्गम् । यावता द्वे पदे आश्रित्य सवर्णदीर्घत्वमपि भवत्याद्गुणोऽपि । धातूपसर्गयोर्यत् कार्यं तदन्तरङ्गम् । कुत एतत्-पूर्वमुपसर्गस्य हि धातुना योगो भवति नादयशब्देन (अद्य+आ+ऊढा इत्यादौ) । किमर्थं तर्ह्यद्यशब्दः प्रयुज्यते । अथाद्यशब्दस्यापि तु समुदायेन योगो भवति ॥

नच पदसंस्कारपक्षे एहीतिपदं प्रथमं संसाध्य पश्चाच्छिवादिसम्बन्धे पूर्वान्तवद्भावेनाङ्त्वातिदेशे वृद्धिबाधनाय पररूपविधानाय चाङ्ग्रहणं चरितार्थमितिवाच्यम् ज्ञापकताप्रतिपादकस्य 'सम्प्रसारणाच्च' ६. १. १०८ इति सूत्रस्य भाष्यस्य प्रामाण्येन तादृशस्य प्रयोगस्यानभिधानात् ।

---

अन्तरङ्ग है; सवर्ण-दीर्घ नहीं । "पटु+ई—आ" यहाँ भी पूर्वयण् के निमित्तों की उपस्थिति पहले है । इसलिए वही अन्तरंग है ।

"आङ् पूर्वक इण् धातु का लोट् के मध्यम-पुरुषैकवचन में 'एहि' यह रूप बनता है । जब उस 'एहि' का अनुकरण करेंगे तो अनुकार्य 'एहि' शब्द के एकार में पूर्वान्तवद्भाव से जो आङ्त्व था, वह 'प्रकृतिवदनुकरणम्' (पृ० ३७ ) इस अतिदेश से अनुकरण 'एहि में आ जायेगा । उसका शिवादि शब्द के साथ योग करने पर 'शिव+एहि' में प्राप्त वृद्धि को रोककर पररूप के लिए सूत्र में 'आङ्' ग्रहण की आवश्यकता स्पष्ट दिखाई पड़ती है, फिर उसे ज्ञापक कैसे माना जा सकता है" इस प्रश्न का उत्तर यह है कि 'एहि' अनुकरण का शिवादि शब्द के साथ योग करने पर तो यह "ओमाङोश्च" ६. १. ९५. सूत्र नहीं लगता, आङ्ग्रहण' को ज्ञापक बताने वाले 'सम्प्रसारणाच्च ६. १. १०८. सूत्र के भाष्य से यही सिद्ध होता है कि अनित्य "प्रकृतिवदनुकरणम्" के अतिदेश को आधार मानकर जहाँ आङ्त्व आता है, वहाँ यह सूत्र (ओमाङोश्च) नहीं लगता । "प्रकृतिवदनुकरणम्" की अनित्यता का विचार (पृ० ३७) पर किया गया है; उसे वहीं देखना चाहिए ।

यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन। उपसर्गेण तत्संज्ञकशब्देन साधनेन कारकेण तत्प्रयुक्तकार्य्येण। अत एवानुभूयत इत्यादौ सकर्म्मकत्वात् कर्म्मणि लकारसिद्धिरिति तन्न, क्रियायाः साध्यत्वेन बोधात्साध्यस्य च साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्य्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात्। अत एव 'सुट् कात्पूर्वः' इति सूत्रे पूर्वं

---

"साधनबोधकप्रत्ययोत्पत्यनन्तरं पूर्वं धातोरूपसर्गेण योगे" इति मूले प्रोक्तम् तत्र साधनबोधकप्रत्ययोत्पत्यनन्तरमिति कथनं व्यर्थम्, धातूपसर्गकार्यस्यान्तरङ्त्वसम्पादनमत्राभिप्रेतम् तच्च पूर्वं धातूपसर्गेण युज्यते पश्चात्साधनेनेति प्राचां मतस्वीकारेणैव सिद्ध्यति परन्तु नैतत् प्राचां मतं नागेशसम्मतमिति सूचयति **यत्तु** इत्यादिना। अयमभिप्रायः प्राचाम् यत् अनुभूयते इत्यादौ कर्मणि लकारसिद्ध्यर्थं पूर्वं धातोरूपसर्गेण योग आवश्यकः। अन्यथा भूधातोरकर्मकत्वेन कर्मणि लकारो न स्यात्; पश्चाच्च तस्य साधनेन योगः उपसर्गेणेत्यस्योपसर्गसंज्ञकशब्देनेत्यर्थः **साधनेनेत्यस्य** कारकेण तत्प्रयुक्तकार्येणेत्यर्थः। इति प्राचां मतं न युक्तमित्याह—**क्रियायाः साध्यत्वेनेत्यादिना**। अतएव- साधनयोगस्य प्राथम्यादेव। सुट् कात्पूर्वः ६. १. १३५ इति सूत्रस्थं भाष्यमित्थमस्तिः—"किमन्तरङ्गं किम्बहिरङ्गमिति। धातूपसर्गयोः कार्यं यत्तदन्तरङ्गम्। कुत एतत्? पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति। नैतत्सारम्। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्। सत्यमेतत्। यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुः

---

"पूर्वं धातुरूपसर्गेण युज्यते पश्चात्साधनेन" पहले धातु उपसर्ग के साथ जुड़ता है और बाद में साधन के साथ यह, प्राचीन वैयाकरणों को मत नागेश को मान्य नहीं है। इसलिए यहाँ वे प्राचीन-वैयाकरणों के उसमत को पहले प्रस्तुत करते हैं और बाद में उसका खण्डन। प्राचीन वैयाकारण जो यह कहते हैं कि पहले धातु उपसर्ग के साथ जुड़ता है और बाद में साधन के साथ जुड़ता है। यहाँ 'उपसर्गेण' का अर्थ उपसर्गसंज्ञक शब्देन" है और साधनेन का अर्थ 'कारकेण' है। 'कारक' का अर्थ यहाँ 'कारक-प्रयुक्त कार्य' लेना चाहिए। इसलिए 'अनुभूयते'में भूधातु पहले उपसर्ग के साथ जुड़ा। अतः सकर्मक बना और सकर्मक बनने से 'कर्मवाच्य' में लट् लकार हुआ। प्राचीन का यह मत युक्तियुक्त नहीं है; क्योंकि साध्यत्वेन अभिधीयमान को ही क्रिया कहते हैं अर्थात् साध्य को ही क्रिया कहते है। 'साध्य' हमेशा 'साधन' की ओर साकाक्ष रहता है। इसलिए साधन (कारक) के साथ सम्बन्ध होने के बाद ही निश्चित क्रिया का बोध होगा। निश्चितक्रिया के बोध होने के लिए साधनकार्य की प्रवृत्ति आवश्यक है। इस तरह उचित यह

**धातुरुपसर्गेणेत्युक्त्वा नैतत् सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वो-क्तयुक्त्या अस्यैव युक्तत्वमुक्तम्। साधनं हि क्रियां निर्वर्त्तयतीत्यादिना भाष्ये। उप-सर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्म्मणि लकारादिसिद्धिः। पश्चा-च्छ्रोतुर्बोधाय द्योतकोपसर्गसम्बन्धः॥**

---

साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्यास्यते गुरुणेत्यकर्मकः उपास्यते गुरुरिति केन सकर्मकः स्यात्। एवं च कृत्वा सुट् सर्वतोऽन्तरङ्गो भवति कात्पूर्वग्रहणं चापि शक्यमकर्तुम्॥ एतेन भाष्येण साधनबोधकप्रत्ययोत्पत्यनन्तरं पूर्वं धातोरुपसर्ग योगे पश्चादित्यादिमूलोक्तवाक्यार्थः प्रमाणितो भवत्येव। अनुभूयते इत्यादौ कर्मणि लकार सिद्ध्युपायोऽपि भाष्ये दर्शितः—यस्त्वसावित्यादिना। धातु-नैवार्था०— भूधातुरेव ज्ञानार्थस्य वाचकः देवदत्तस्यानन्दो भवति, पौषे पक्षिणो-ऽपि शैत्यं भवति इत्यादावनुप्रयोगं विनापि देवदत्त आनन्दमनुभवति पौषे पक्षिणोऽपि शैत्यमनुभवन्तीति प्रत्ययात। अनुस्तु प्रयुज्यते वक्त्रा स्वस्य ज्ञानार्थे यत्तात्पर्यं

---

जॅचता है कि साधन- कार्य की प्रवृत्ति के बाद ही क्रिया-योग को निमित्त बनाकर होने वाली उपसर्गसंज्ञा से ग्राह्य शब्द के साथ सम्बन्ध किया जाय। इसलिए "सुट् कात् पूर्वः" ६. १. १३५. इस सूत्र में भाष्यकार ने कहा:— पहले धातु उपसर्ग के साथ जुड़ता है और बाद में उक्त मत को निःसार बताते हुए कहा कि "नैतत् सारम्" किन्तु सार तो यही है पहले धातु साधन के साथ जुड़े और बाद में उपसर्ग के साथ। साधन (कारक) ही वह क्रियाजनक तत्त्व है; जो क्रिया को उत्पन्न करता है इत्यादि अर्थ वाले भाष्य ग्रन्थ से "पूर्वं धातुः उपसर्गेण युज्यते" यह मत निःसार दिखता है।

उपसर्ग द्योतक है। इसलिए "अनुभूयते" का अनुभव अर्थ भूधातु का ही है। 'अनु, केवल उसे प्रकाशित करता है। जैसे सूर्य की किरणों में ही सातों रंग हैं। लाल काच का चश्मा उसकी लाली को प्रगट कर देता है और नीली काच यदि हो तो वह किरण नीली दिखती है। इसीतरह विभिन्न उपसर्ग धातु के अर्थ में ही अन्तर्निविष्ट विविध अर्थों को प्रकाशित करते हैं। इसतरह "अनुभूयते' इत्यादि में उपसर्गद्योत्य ज्ञानादि अर्थों का अभिधान धातु से ही होता है, यह मानने के बाद कर्म में लकार की सिद्धि होने में कोई बाधा नहीं है। यद्यपि केवल 'भू' धातु में अनुभव अर्थ है; तथापि प्रयोक्ता 'अनु' का प्रयोग इसलिए करता है कि श्रोता को उसके तात्पर्य का ज्ञान हो जाय। उसतरह 'अनुभूयते' में ज्ञानार्थ का बोध श्रोता को 'अनु' के सम्बन्ध के बाद ही होगा। श्रोता का बोध न तो कर्मसंज्ञा होने में कारण है और न कर्म आदि वाच्य में लकार होने में कारण है। श्रोता के बोध के

**एवञ्च अन्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् समूकृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्त्तते ततो द्वित्वादि ।**

**अत एव प्रणिदापयतीत्यादौ णत्वं यदागमा इति न्यायेन समाहितं भाष्ये ।**

**अत एव प्रत्येति प्रत्यय इत्यादिसिद्धिः । अन्यथान्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः ।**

**यदुपसर्गनिमित्तकं कार्य्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तकत्वात्तदन्तरङ्गम् । यत्तु न तथा तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव 'न धातु'**

---

तच्छ्रोतारं ग्राहयितुम् । **अतएव प्रणीति** उपसर्गसंज्ञकशब्दमात्रनिमित्तककार्यापेक्षया साधनबोधकप्रत्ययनिमित्तक-कार्याणां पूर्वोत्पत्तिस्वीकारादेव प्र+नि+दापयतीत्यत्र पूर्वं पुकि णत्वार्थंधुपरत्वसम्पादनाय यदागमपरिभाषा समाश्रिता भाष्ये । **अतएव** प्रत्येति साधनबोधकप्रत्ययस्य पूर्वमुत्पत्तौ तन्निमित्तककार्यस्य प्रथमप्रवृत्तेः स्वीकारादेव प्रत्येति प्रत्ययः प्रति पूर्वकात् इण् धातोः 'एरच्' ३. ३. ५६ इत्यच्प्रत्यये तन्नित्तकगुणे साधनबोधककार्ये जाते, यणि प्रत्यय इति सिद्धयति अन्यथा पूर्वमुपसर्गयोगस्वीकारे तु । सवर्णदीर्घेत्यत्यस्य गुणमसिद्धं विधायेति शेषः । यत्तु न तथाउपसर्गार्थनिमित्तकम् नधातुलोप १. १. ४ सूत्रस्थं भाष्यमित्थमस्ति किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणम् आर्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति । आहोस्वित् गुणवृद्धिविशेषणमार्धधातु-

---

लिए द्योतक उपसर्ग का धातु के साथ सम्बन्ध हुआ करता है । यही कारण है कि संचस्कार में प्रयोक्ता को 'भूषणादि' अर्थ की उपस्थिति साधनबोधक शब्द के प्रादुर्भाव से पहले ही हुई । इसलिए लिट् की अपेक्षा भूषणार्थ-निमित्तक-सुट् अन्तरङ्गत्वात् द्वित्व से पहले हुआ । "पूर्वं धातुः साधनेन युज्यते" यह मत भाष्यकार को मान्य है । इसलिए 'प्रणिदापयति' में पहले णिच् पुक् आदि हो जानेपर प्र निदापयति ऐसी स्थिति में 'नेर्गद नद' ८. ४. १५. से अप्राप्त णत्व को प्राप्त कराने के लिए "यदागमाः" परिभाषा (प० १२) का आश्रय लिया गया । इसलिए 'प्रत्येति' और 'प्रत्ययः' इत्यादिरूपों को सिद्धि हुई । यदि पहले 'उपसर्ग' के साथ योग होता तो प्रति+इ ऐसी स्थिति में पहले दीर्घ होता, तो प्रत्येति नहीं बनकर "प्रतेति" बनता और प्रति+इ में दीर्घ होकर प्रत्ययः की जगह प्रती+अ ऐसी स्थिति में गुण होने पर प्रते+अः फिर अयादेश होकर 'प्रतयः' बनता ।

इस तरह निकर्ष यह निकला कि जो उपसर्ग निमित्तक कार्य उपसर्गार्थ पर आश्रित है; वह विशिष्टउपसर्ग निमित्तक होने के कारण अन्तरङ्ग है, जो कार्य उपसर्गार्थ-निमित्तक नहीं है, वहाँ पूर्व से आगत साधन निमित्तक ही अन्तरङ्ग है अतएव "न धातुलोप" १. १. ४. इस सूत्र में भाष्यकार ने "प्रेद्धः"

इति सूत्रे प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्य उक्तम् ।

किञ्च पूर्वमुपसर्गयोगे धातूपसर्गयोः समासे ऐकस्वर्य्याद्यापत्तिरि-'त्युपपदम-

---

कग्रहणम् धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति ? यदि लोपविशेषणम् उपेद्धः प्रेद्धः अत्रापि पाप्नोति । अथ गुणवृद्धिविशेषणम् क्नोपयति अत्रापि प्राप्नोति । यथेच्छसि तथास्तु ।। अस्तु लोपविशेषणम् कथम् उपेद्धः प्रेद्ध इति ! बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः असिद्धं बहिरङ्ग-मन्तरङ्गे ।। इति अर्थात् आर्धधातुकं यदि धात्वंशलोपनिमित्तम् तदा गुणो नेत्यर्थे इन्धी धातोः क्तप्रत्यये नकारलोपस्य निमित्तमार्धधातुकमस्तीति कृत्वा प्रेद्ध इत्यत्राद्गुण इति गुणस्यापि निषेधः स्यादित्याशङ्क्य न धातुलोप इति निषेधो नोपसर्गमपेक्षते ; किन्तु गुणस्य तु प्रघटकाकारस्याप्यपेक्षणात् बहिरङ्गत्वेनासिद्धतया प्रतिषेधनीयस्याभावेन प्रतिषेधाप्रवृत्तिः पूर्वमुपसर्गयोगे तु क्तप्रत्ययस्य कितोऽपेक्षणात् निषेध एव बहिरङ्गः स्यादिति भाष्यविरोधः ।

किञ्च पूर्वमुसर्गयोगे इतिसाधनबोधकाल्लकारात्प्रागुपसर्गयोगेऽर्थादुपस-र्गसंज्ञकप्रादिशब्दयोगे कुगतिप्रादय इत्यनेन प्रभवतीत्यादौ प्रभू इत्येतयोः समासे सोपसर्गधातोः समासस्य ६. १. २२३ इति एकस्वरत्वमापद्येत । व्यरमत् इत्यत्र वि रम् इतिस्थितौ समासे 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' ६. १. १२७ इत्यनेन वैकल्पिकप्रकृतिभावोऽभीष्टोऽपि न स्यात् 'न समासे' इति निषेधात् । तदुक्तमुपपदमतिङ्

---

यहां गुण बहिरङ्ग है, यह कहा। "प्रेद्धः" यह प्रयोग प्र पूर्वक इन्धी धातु से क्त प्रत्यय करके नकार का "अनिदिताम्-सूत्र ६. ४. २४. से नलोप होनेपर त को ध पूर्व ध् को जश्त्व करने पर प्र + इद्ध ऐसी स्थिति में "आद्गुणः" से गुण करने पर बनता है। यहाँ भाष्य कारने बताया कि धात्वंश के लोप के निमित्ती भूत आर्धधातुक के रहने पर गुण नहीं हो, ऐसा अर्थ करने पर 'प्रेद्धः' यहाँ पर नकार का धात्वंश का-लोप क्त प्रत्यय के परे रहते हुआ है। इसलिए आद्गुणः का भी "न धातुलोप" से निषेध हो जायगा। इस प्रश्न के समाधान के लिए भाष्यकारने आगे बताया कि "न धातु लोप" इस निषेध की अपेक्षा उपसर्ग सापेक्ष होने के कारण बहिरङ्ग गुण की असिद्धता हो जायगी। इसलिए निषेध्य के अभाव के कारण निषेध की अप्रवृत्ति हो जायगी। यदि पहले उपसर्ग के साथ योग हो तो क्त प्रत्यय की अपेक्षा होने के कारण निषेध ही बहिरङ्ग होता; फिर निषेध को अन्तरङ्ग और गुण को बहिरङ्ग बताना असंगत हो जाता।

दूसरी बात यह है कि यदि पहले उपसर्ग के साथ योग स्वीकार करें, तो धातु और उपसर्ग समास हो जाने पर एक-स्वर-रूप दोष हो जायगा, यह "उपपदमतिङ्" २. २. १९. सूत्र के भाष्य में स्पष्ट है। साधनबोधक लकार से पूर्व यदि धातु का उपसर्गसंज्ञक शब्द के साथ योग मानें, तो "कुगतिप्रादयः" २. २. १८, इस सूत्र से

**तिङ्' इति सूत्रे भाष्ये स्पष्टम्। भावार्थकप्रत्ययस्यापि पूर्वमेवोत्पत्तेः। अत एव 'णेरध्ययन' इति निर्देशः सङ्गच्छते।**

---

२. २. १९ इति सूत्रस्य प्रदीपे कैयटेनः—ततश्चैकस्वर्यादिप्रसङ्गः शाकलप्रतिषेधप्रसङ्गश्च। पूर्वं धातूपसर्गयोर्योगस्वीकारे धातूपसर्गयोः सामर्थ्यं वर्तते, उपसर्गविशिष्टायाः क्रियायाः साधनेन योगात्।

उपपदमतिङ् २.२.१९ इति सूत्रस्थं भाष्यमित्थमस्ति—एवं तर्हि सिद्धे सति यदतिङ्ङिति प्रतिषेधं शास्ति। तज्ज्ञापयत्याचार्योऽनयोर्योगयोर्निवृत्तं सुप्सुपेति। किमेतस्य ज्ञापने प्रयोजनम्। गतिकारकोपपदानां कृद्भिः सह समासो भवति प्राक् सुबुत्पत्तेः (परि० ७५) इत्येषा परिभाषा न कर्तव्या भवति। यद्येतज्ज्ञाप्यते केनेदानीं समासो भविष्यति। समर्थेन। यद्येवं धातूपसर्गयोरपि समासः प्राप्नोति। पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति। नैतदस्ति। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्।

तत्र पूर्वं धातुः साधनेनेति प्रतीकमादाय कैयट आह—ततश्च पूर्वं साधनाभिधायिप्रत्ययोत्पत्तिः पश्चात्साधनसंसृष्ट एव धातुरुपसर्गेण युज्यते न केवल इति

---

"प्रभवति" में प्र+भू इसीको समास हो जायगा और सोपसर्ग धातु को समासजन्य स्वर से एकस्वरता हो जायगी। "अन्वभवत्" में अनु+भू इसको समास होने पर 'न समासे' से निषेध हो जाने पर "इकोऽसवर्णे" ६. १. १२७. से इष्ट वैकल्पिक प्रकृति भाव नहीं होगा। यदि पहले धातु का लकार के साथ योग मानते हैं, तो "अतिङ्" इस निषेध के कारण तिङन्त को समास नहीं होता और सामर्थ्य नहीं होने कारण धात्वन्त को समास नहीं होने से कोई दोष नहीं होता।

"पूर्वं धातुः साधनेन युज्यते" यह मत पाणिनि को भी मान्य था। इसलिए उन्होंने 'णेरध्ययने वृत्तम्" ७: २. २६. इस सूत्र में 'अध्ययने' शब्द का प्रयोग किया है। यदि पहले उपसर्ग के साथ धातु का योग होता तो अधि+इ को दीर्घ होकर अधी बनता और फिर ल्युट् प्रत्यय, युको अन करके अन के परे रहते यण् होने से 'अध्यने' ही बनता। यह निर्देश न केवल ल्युट् के पूर्वोत्पत्ति का ज्ञापक है; किन्तु भावतिङ् की भी पूर्वोत्पत्ति का ज्ञापक है। ज्ञापक को विशेषापेक्ष नहीं मानकर सामान्यापेक्ष ही मानना चाहिए। यदि ज्ञापन को सामान्यापेक्ष नहीं मानें तो भावतिङ् में समास हो जायगा। जब साधन के साथ पूर्व योग मानते हैं तो भाव तिङ् पहले आता है; ऐसी स्थिति में "तिङ्" के साथ समास नहीं होता; क्योंकि सूत्र में अतिङ् कहा गया है।

**इदं च सामान्यापेक्षं ज्ञापकं भावतिङोऽपि पूर्वमुत्पत्तेः। अन्यथा तत्र समासापत्तिः। तिङि त्वतिङिङतिनिषेधान्न दोषो यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्॥**

**यत्तु विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं विशेषधर्म्मस्याधिकस्य निमित्तत्वात्। यथा 'रुदादिभ्यः सार्वधातुके' इत्यत्र रुदादित्वं सार्वधातुकत्वं च। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः।**

---

धातूपसर्गयोः समासाभावः। × × अनुभूयते सुखमुपास्यते गुरुरित्यादौ धातुरेव सकर्मिकां क्रियां वक्त्युपसर्गस्तु द्योतक इति नास्ति कश्चिदस्मिन् पक्षे दोषः।

यदि पूर्वं साधनयोगःस्वीक्रियते तदा पूर्वं लादेशादिकार्ये तिङन्तस्यातिङिङति निषेधात् धात्वन्तस्य चासामर्थ्यात्समासाभावेन नैकस्वरत्वापत्त्यादिःपूर्वोक्तदोष इति। **भावार्थकप्रत्ययस्यापीति**—पूर्वोत्पत्तिसाधिकाया युक्तेः समानत्वात्। अतएव पूर्वं साधनयोगस्वीकारादेव 'णेरध्ययने वृत्तम्' ७.२.२६ इति सूत्रस्थमध्ययन इति निर्देशः संगच्छते तत्र हि अधि+पूर्वकादिङ् धातोः पूर्वं साधनयोगेन ल्युट्प्रत्ययो जायते; तस्यानादेशे गुणेऽयादेशे अयनेतिजाते उपसर्गयोगे यणि अध्ययनमिति रूपम्। यदि पूर्वमुपसर्गयोगः स्यात्तदान्तरङ्गत्वात्प्रथमं सवर्णदीर्घे यणि अध्यनमिति स्यात्।

इदं च "णेरध्ययन" इत्यत्र निर्दिष्टमध्ययन इति रूपं सामान्यापेक्षज्ञापकं सर्वेषां भावार्थकानां प्रत्ययानामुपसर्गयोगात् पूर्वमुत्पत्तेः न तु केवलं ल्युट एव पूर्वोत्पत्तेरितिभावः। तेन भावे विधीयमानस्तिङ्ऽपि उपसर्गसंज्ञकशब्दसम्बन्धात् पूर्वमेव केवलात् धातोर्जायते। तत्र=भावे जायमाने तिङीत्यर्थः यदि भावतिङि उपसर्गयोगोऽस्ति तदा तिङि अतिङिति निषेधान्न दोषः। भावतिङि भूयते इत्यादौ उपसर्गयोगाभावे तु सामान्यापेक्षस्य नोपयोगः किन्तु विक्रियते इत्यादावुपसर्गयोगोपलम्भादस्त्येव सामान्यापेक्षस्य ज्ञापकस्योपयोग इति भावः। अतएवोक्तम् **चित्रप्रभायाम्**= वस्तुतस्तु तस्य विशेषापेक्षज्ञापकत्वेऽपि न दोष इत्यत आह **यदीति**। यदीत्यनेन भावतिङ्युपसर्ग एव नास्तीति ध्वनिते दोषाभावोऽपि ध्वनित एवेति बोध्यम्॥

विशेषापेक्षस्य बहिरङ्गत्वमुपपाद्य खण्डयितुमुपक्रमते **'यत्तु'** इत्यादिना। अयं भावः—

विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्ततया तस्य बहिरङ्गत्वं यथा रुदादि-

---

'भावतिङ्' में उपसर्ग का योग संभव नहीं है। इस लिए 'अध्ययने' इस निर्देश को पूर्वोक्त सामान्यापेक्ष ज्ञापक मानने का कोई उपयोग नहीं है" ऐसा नहीं मानना चाहिए "विक्रियते" इत्यादि प्रयोगों में भावतिङ् में भी उपसर्ग का योगः उपलब्ध होता है।

किसी ने जो यह कहा कि विशेषापेक्ष और सामान्यापेक्ष शास्त्रों में विशेषापेक्ष बहिरङ्ग होता है और सामान्यापेक्ष अन्तरङ्ग, क्योंकि विशेषापेक्ष शास्त्र में सामान्यापेक्ष शास्त्र की अपेक्षा विशेषधर्म रूप अधिक निमित्त की अपेक्षा रहती है। जैसेः—रुदादिभ्यः सार्वधातुके ७ २. २७. और यासुट् परस्मै० ३. ४. १०३ इन

**एतेन यत् 'अनुदात्तङितः' इति सूत्रे कैयटेनोक्तं लमात्रापेक्षयाऽन्तरङ्गास्ति-बादयोलकारविशेषापेक्षत्वाद्बहिरङ्गाः स्यादय इति तत् परास्तम्। विशेषापेक्षत्वेऽपि**

---

त्यत्र रुदादिभ्यः सार्वधातुके ७.२.७६ रुदश्च पञ्चभ्यः ७.३.९८ इतीडटौ बहिरङ्गौ तयोरुदादित्व-सार्वधातुकत्वयोरपेक्षणात् धातुत्वापेक्षया रुदादित्वं विशेषधर्मः प्रत्ययत्वा-पेक्षया सार्वधातुकत्वं च सामान्यधर्मः सामान्यधर्मज्ञानं विना विशेषधर्मस्य ज्ञानं न संभवति। विशेषस्य व्याप्यस्य ज्ञानात् सामान्यस्य व्यापकस्यानुमानं यथा धूम-ज्ञानाद् वह्नेरनुमानम्। अथवा नागृहीतविशेषणा बुद्धिर्विशेषमुपजायते इति सिद्धा-न्तेन सामान्यधर्मज्ञानाधीनज्ञानविषयस्य विशेषधर्मस्य ज्ञाने सामान्यज्ञानमावश्यकम्। एवञ्च तत्र विशेषस्य श्रूयमाणत्वात्सामान्यस्य चानुमीयमानत्वादुपस्थितयोर्द्वयो-र्निमित्तत्वम्। अतः सार्वधातुत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चा-वश्यकम्। इत्थमिटोऽटश्चापेक्षया यासुट् परस्मैपदेषूदात्तोङिच्चेति यासुडन्तरङ्गः। कैयटोक्तोदाहरणस्यायुक्तत्वमुपपादयति **एतेनेत्यादिना**। विशेषापेक्षस्य सामान्यधर्मा-तिरिक्तविशेषधर्मरूपाधिकनिमित्तकत्वादेव बहिरङ्गत्वं स्वीकृतम्। तच्च स्यादिषु नास्ति, स्यतासी लृलुटोः ३.१.३३ इति लृटि स्यो विधीयते, लृटोऽपेक्षणात्तस्य विशेषा-पेक्षत्वं यद्यप्यस्ति; तथापि तत्र कस्यचित् सामान्यस्य धर्मस्यापेक्षा नास्तीति सामान्य-धर्म-सहकृतविशेषधर्मानपेक्षणात् तस्य लकारमात्रापेक्षतिबाद्यपेक्षया बहिरङ्गत्वं न शक्यते वक्तुम्। यथा शास्त्रीयशब्दत्वात्सार्वधातुकत्वज्ञानं प्रत्ययत्वधातुत्वयोर्ज्ञानं विनाऽसम्भवं, न तथा लृट्त्वस्य ज्ञानं लत्वज्ञानं विनाऽसम्भवमिति लृट्त्वज्ञाने लत्व-सामान्यज्ञानमावश्यकं नास्तीति। लृट्त्वज्ञाने लत्वज्ञानस्यापेक्षा कथंचित् कष्टकल्प-

---

दोनों सूत्रों में "रुदादिभ्यः" बहिरंग है और यासुट् विधायक सूत्र, उसकी अपेक्षा अन्तरङ्ग; क्योंकि "रुदादित्व" को रुदादिभ्यः और सार्वधातुकत्व दोनों विशेष धर्म की अपेक्षा है। सार्वधातुकत्व के ज्ञान के लिए प्रकृति में धातुत्वज्ञान और प्रत्यय में प्रत्ययत्व ज्ञान की आवश्यकता है। इस तरह धातुत्व और प्रत्ययत्व रूप सामान्य-ज्ञान के साथ साथ प्रकृतिविशेष (रुदादित्व) और सार्वधातुकरूप प्रत्ययविशेष की अपेक्षा है। इसलिए उसकी अपेक्षा 'यासुट्' अन्तरङ्ग है। इस बात को आधार बनाकर कैयट ने तत्त्व्य निकाला कि विशेषापक्ष शास्त्र में विशेषधर्मरूप अधिक निमित्त होने से ही उसे बहिरङ्ग मानना चाहिए और 'अनुदात्तङित १. १. १६ सूत्र के भाष्य की टीका (प्रदीप) में कहा कि लकार मात्र की अपेक्षा होने के कारण 'तिप्तस्' आदि अन्तरङ्ग हैं और लकार विशेष )लृट् लृङ् और लृट्) की अपेक्षा होने के कारण 'स्यतासी' आदि प्रत्यय विधायक सूत्र बहिरङ्ग हैं, वह अनावश्यक होने के कारण खण्डित हो गया, क्योंकि 'स्यादि' प्रत्यय-विधायक सूत्रों के विशेषापेक्ष होने पर भी उनके सामान्यधर्म

**तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात्। परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति—तन्न । विशेषस्य व्यापकस्यानुमानेनोपस्थितावपि**

---

नया यदि सम्पाद्यते तदापि धटकार्यं प्रति कुलालस्य पिता यथान्यथा सिद्धो न कारणत्वेनाङ्गीक्रियते; तथा स्यादिकार्यं प्रति लत्वस्यान्यथासिद्धत्वादनिमित्तत्वेनाधिक-निमित्तत्वाभावेन स्यादेर्बहिरङ्गत्वोपपादनासंभवात्। परनिमित्तत्वेन स्यादीनां बहि-रङ्गत्वात्। अतः कैयटेन स्यादीनां बहिरङ्गत्वं परनिमित्तकत्वादुपपादनीयन्नतु तथाऽसन्मार्गमवलम्ब्येति भावः। इत्थं कैयटोदाहरणं खण्डयित्वा साम्प्रतं रुदादिभ्य इति विहितस्येडागमस्य बहिरङ्गत्वं प्राचोक्तं खण्डयति **तन्नेत्यादिना** विशेषस्य व्याप्यत्वेन व्यापकस्य सामान्येनानुमानद्वारोपस्थितावपि तस्य निमित्तरूपेण ग्रहणं न सम्भवति शब्दशास्त्रे परिभाषायां, रुदादिभ्यः ७.२.७६ इत्यादौ च निमित्तपदेन ते एव गृह्यन्ते ये शाब्दबोधे भासन्ते, अनुमानेनोपस्थितस्य च धर्मस्य शाब्दबोधे भानाभावेन सामान्यस्य निमित्तत्वाभावात् तथा च न 'रुदादिभ्यः इत्यादेरधिकधर्म-निमित्तकत्वमिति।

---

निमित्तक होने में कोई प्रमाण नहीं है। इसलिए अधिक अर्थ की अपेक्षा के कारण माने जानेवाले बहिरङ्गों में उन्हें नहीं ठहराया जा सकता। तात्पर्य यह है कि सार्वधातुकत्व वस्तु केवल शास्त्रीय है। उसका ज्ञान शास्त्रमात्र प्रमाण पर आश्रित है। इसलिए सार्वधातुकत्व का ज्ञान प्रत्ययत्व और धातुत्व के ज्ञान के बिना जैसे असम्भव है; वैसे 'लृट्त्व' का ज्ञान लकारत्वरूपसामान्य धर्म के ज्ञान के बिना असम्भव नहीं है; क्योंकि 'लृट्त्व' का ज्ञान लौकिक प्रमाण सिद्ध हैं। अतः लृट्त्वरूप विशेषधर्म के ज्ञान में लत्वरूप सामान्य धर्म का ज्ञान माध्यम या द्वार नहीं है। अतः 'स्यादि' विधायक शास्त्र को पूर्व रीति से बहिरङ्ग नहीं बताया जा सकता। 'सार्वधातुक ज्ञान तो प्रत्यय और धातुत्व के ज्ञान के बिना होता नहीं है। अतः सार्वधातुकत्व के ज्ञान में प्रत्ययत्व और धातुत्वरूपसामान्य धर्म की अपेक्षा बनी हुई है। अतः 'रुदादिभ्यः सार्वधातुके को' बहिरङ्ग बताया जा सकता है। इस तरह ''रुदादिभ्यः सार्वधातुके'' ७. २. ८६ और ''स्यतासी ऌलुटोः'' ३. १. ३३ इन दोनों को एक समान नहीं सिद्ध किया जा सकता।

आपको तो यही अभीष्ट है कि स्यादि को बहिरङ्ग सिद्ध किया जाय वह तो पर-निमित्तक होने के कारण बहिर्भूत निमित्तक होने से ही 'स्यादि' बहिरङ्ग कोटि में आ जाता है। इसलिए 'स्यादि' को बहिरङ्ग बताने के लिए 'विशेषापेक्षत्वं बहिर-ङ्गत्वम्' यह मानना व्यर्थ है। इस तरह रुदादिभ्यः सार्वधातुके ७. २. ७६ से विहित इट् को जो बहिरङ्ग बताया गया है। वह भी ठीक नहीं है, माना कि विशेष व्याप्य होता है और सामान्य व्यापक। इसलिए जहाँ विशेष की अपेक्षा रहेगी; वहाँ अनुमान से सामान्य की उपस्थिति तो होगी, परन्तु वह सामान्य भी वहाँ

**तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात् । भाष्ये एवं विधान्त-रङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च ।**

**यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमा-**

---

ननु आदिरन्त्येन सहेता १. १. ७१ इत्यादावादयन्ताभ्यामवयवाभ्यामा-क्षिप्तानां मध्यगानामपि शाब्दबोधे भानं यथा क्वचित्स्वीक्रियते तथेहापि स्वीकरणे सार्वधातुकत्वज्ञानान्यथानुपपत्योपस्थितस्य धातुत्वादेर्भानसम्भवेन निमित्तत्वं स्यादिति प्राह **एवं विधान्तरङ्गबहिरङ्गत्वे** भाष्ये न **क्वाप्युल्लिखिते ।** यच्च तदस्यास्त्य-

---

निमित्तिकोटि में प्रविष्ट होकर प्रतीत हो, इसके लिए कोई प्रमाण नहीं है। अतः विशेषापेक्षस्थल में सामान्य धर्म को लेकर जो अधिक धर्म निमित्तकत्व की सिद्धि करके बहिरङ्गत्व सिद्ध किया है, वह अनुचित है। यह शब्द शास्त्र है, इसलिए शब्द द्वारा उपस्थित निमित्त ही यहाँ निमित्त माना जायगा। अनुमान द्वारा प्रतीत धर्म निमित्त नहीं माना जायगा।

यदि आप यह कहें कि 'कहीं कहीं अर्थापत्ति द्वारा उपस्थित को भी शाब्द-बोध में प्रविष्ट माना गया है जैसे कि "आदिरन्त्येन सहेता" १. १. ७१ में आदि और अन्त्य शब्द द्वारा आक्षिप्त मध्यम वर्णों का यहाँ शाब्द बोध में प्रवेश देखा गया है, तब तो "रुदादिभ्यः सार्वधातुके" ७. २. ७० में सार्वधातुक शब्द से धातुत्व आदि की हुई उपस्थिति को भी शाब्दबोध में प्रवेश होगा; क्योंकि धातुत्व आदि के बिना सार्वधातुकत्व उसी प्रकार अनुपपन्न है, जैसे कि भोजन के बिना पीनत्व। इस तरह यदि आप कहें कि "रुदादिभ्यः सार्वधातुक" में अधिक धर्म-निमित्तकता बतायी जा सकती है और उसको बहिरङ्ग कोटि में बिठाया जा सकता है, तो सुनिये पूर्व निर्दिष्ट अन्तरङ्गबहिरङ्ग की चर्चा भाष्य में कहीं नहीं आयी है। इसलिए इस तरह का अन्तरङ्गत्व और बहिरङ्गत्व मानना भाष्य-विरुद्ध होगा। माना कि 'सार्वधातुकज्ञान' के मूल में धातुत्वज्ञान और प्रत्ययत्व ज्ञान हैं, परन्तु उन्हें सार्वधातुक ज्ञान का कारण इसलिए नहीं माना जा सकता, कि वे अन्यथासिद्ध हैं। जैसे कुम्भकार के पिता को घट का कारण नहीं मानते। अन्यथा-सिद्धशून्यत्वे सति नियतपूर्ववर्तित्वम् कारणत्वम् अर्थात् कारण उसे कहते है; जिसका कार्य के पूर्व में रहना अनिवार्य हो और जो अन्यथा सिद्ध न हो। अन्यथासिद्ध के पाँच भेदों में चौथा भेद उस अन्यथासिद्ध का है जिसका वर्णन "जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते" मुक्तावली की इस कारिका (२०) में किया गया है और "कुलालजनकोऽपरः" के रूप में उदाहरण दिया गया है।

मतुप् सूत्र के भाष्य में विशेषापेक्ष को जो बहिरङ्ग बताया गया है, वह एक-देशी की उक्ति है न कि सिद्धान्ती की; अतः उसे प्रमाण मान कर पूर्व मत का

शङ्कच प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादिति सिद्धान्तिनोक्ते नैतत्सारमुक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्ष्युक्तिर्भाष्ये। 'द्विगोर्लुगनपत्ये' इति लुग्विधानात्तद्धितार्थद्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः। ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद्बाध इत्याशयेन नैष द्विगुः कस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते तमवकाशमजानानोऽप-

---

स्मिन्निति मतुप् ५. २. ६४ इति सूत्रेऽन्तरङ्गत्वाद् बहुव्रीहिर्भविष्यति। कान्तरङ्गता अन्यपदार्थे बहुव्रीहिर्वर्तते, विशिष्टेऽन्यपदार्थे तद्धितार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते इत्यादौ विशेषापेक्षस्य बहिरङ्गत्वमुक्तं तत्तु एकदेशिनोक्तत्वान्नादर्तव्यमित्याह **यत्तु इत्यादिना ग्रन्थेन। प्रत्येकमसामर्थ्यादिति।** नेत्यध्याहृत्य सर्वत्रान्वयः सम्पाद्यः। प्रत्येकम् पञ्च अस् इत्यस्मात् गो अस् इत्यस्माच्च प्रत्येकस्मात् शब्दादित्यर्थः। पञ्चशब्दार्थस्य गोपदार्थेनान्वयान्मत्वर्थेऽन्वयासम्भवरूपादसामर्थ्यादिति भावः। **पञ्चअस्गोअस्रूपात्समुदायादिति।** समासात्पञ्चगुशब्दादित्यर्थः। पाञ्चनापितिरित्यत्र पञ्चानां नापितानामपत्यमिति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' २. १. ५१ इति तद्धितार्थे द्विगुसमासे निष्पन्नात् पञ्चनापित शब्दाद् 'अत इञ्' ४. १ ९५ इतीञ्-प्रत्ययः। द्विगोर्लुग०- ४. १. ८८ द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् इत्यर्थः। **लुग्विधानादिति।** यद्यपि द्विगुसमासेन तद्धितार्थ उक्तः तथापि उक्ततद्धितार्थेऽपि तद्धितप्रत्यय उत्पद्यते। उक्तार्थानामप्रयोग इत्यस्यात्र सूत्रारम्भसामर्थ्यादनुत्पत्तिः। तद्धितानुत्पत्तौ लुग्विधानं व्यर्थं स्यात्। पञ्चगुशब्दस्य द्विगुत्वेऽपि समासान्तविधेरनित्यत्वाद् (परि ८५) गोरद्धितलुकि इति टच् न। पञ्चसु कपालेषु संस्कृत इत्यादौ द्विगुः सावकाशः बहुव्रीहेरप्राप्तेः प्रथमान्तत्वाभावादिति भावः। **तमवकाशम्** अर्थात् पाञ्चनापितिरित्यादौ

---

समर्थन नहीं किया जा सकता। देखिये-मतुप् सूत्र के भाष्य में "पञ्च गावः यस्य सन्ति" स पञ्चगुः यहाँ पर मतुप् प्राप्ति की शङ्का करके समाधान देते हुए सिद्धान्ती भाष्यकार ने बताया कि प्रत्येक शब्द से तो मतुप् इस लिए नहीं होगा कि वहाँ सामर्थ्य नहीं है। समुदाय से मतुप् इसलिए नहीं होगा कि समुदाय प्रातिपदिक नहीं है; समास से वह इसलिए नहीं होगा कि समास से ही मतुबर्थ उक्त हो चुका है। इसलिए 'उक्तार्थानामप्रयोगः' के अनुसार मतुप् का पुनः प्रयोग नहीं होगा। इस सिद्धान्ती भाष्य को असार बताते हुए पूर्वपक्षी (जो केवल प्रश्न ही उपस्थित करने का शौकीन है) ने कहा, आपका यह कथन निःसार है, प्रत्ययार्थ के उक्त रहने पर भी तद्धितोत्पत्ति हुआ करती है जैसे "पाञ्चनापितिः" में। कैयट ने यहाँ टिप्पणी करते हुए भाष्य का आशय बताया कि "द्विगोर्लुगनपत्ये" ४. १·

**वादत्वाद्द्विगुः प्राप्नोतीति पूर्वपक्षी। अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद्बाधकः प्राप्नोतीति कैयटः। ततः सिद्धान्त्येकदेश्याह—अन्तरङ्गत्वाद् बहुव्रीहिः। काऽन्तरङ्गता? अन्यपदार्थे बहुव्रीहिर्विशिष्टेऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियत इति। अधि-**

---

विद्यमानं द्विगोरवकाशमित्यर्थः। सिद्धान्त्येकदेशीत्यत्र विरोधाभासालङ्कारः विरोध-परिहारस्तु प्रतिपाद्यस्य युक्तत्वात्सिद्धान्तित्वम् हेतोरयुक्तत्वादेकदेशित्वमिति। **तस्मिँश्चास्य तद्धित इति**। अस्य=द्विगोः अर्थद्वारा निमित्तभूते तस्मिन् मतुपि तद्धित इत्यर्थः। नैषा=अन्तरङ्गत्वाद्बहुव्रीहिरित्यादिरूपा। अन्यपदार्थे बहुव्रीहिरिति-

---

८८ इस सूत्र से लुक् विधान सामर्थ्यात् यह कल्पना करते हैं कि तद्धितार्थक द्विगु से तद्धित होता है। तात्पर्य यह है कि तद्धितार्थ में द्विगु होने पर उससे विहित तद्धित प्रत्यय के लुक् के लिए यह सूत्र बनाया गया है—जैसे पञ्चसु कपालेषु संस्कृत पञ्चकपालः" यहाँ संस्कृत अर्थ में अण् प्रत्यय हुआ है, जिसका कि 'द्विगो-र्लुगनपत्ये' से लुक् होता है। पाञ्चनापितिः में "पञ्चानां नापितानामपत्यम्" इस अर्थ में भी तद्धितार्थ (अपत्यार्थ) में समास हुआ है; उसी अपत्य अर्थ को प्रगट करने के लिए 'इञ्' प्रत्यय भी होता है। उस इञ् का लुक् इसलिए नहीं होता कि वह सूत्र अनपत्यार्थ प्रत्ययों का लुक् करता है। इस तरह सिद्ध है कि समास से उक्त तद्धितार्थ में भी तद्धित प्रत्यय हुआ करता। 'पञ्चगु शब्द द्विगु है ही। इसलिए यहां समास के द्वारा मतुबर्थ के उक्त होने पर भी मतुप् प्रत्यय होना चाहिए यह आशय कैयट ने बताया। इसके बाद बताया गया कि द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृतः पञ्चकपालः इत्यादि स्थलों में सावकाश द्विगु का बहु-व्रीहि के द्वारा प्रकृत में अर्थात् "पञ्चगुः" में बाध होगया। इसलिए यहाँ द्विगु नहीं है, किन्तु है बहुव्रीहि, यह सिद्धान्ती ने जब कहा तब पूर्वोक्त अवकाश को नहीं जानने वाले पूर्व पक्षी ने बताया कि 'अपवादत्वात्' अर्थात् निरवकाश होने के कारण बहुव्रीहि को बाधकर द्विगु प्राप्त होगा। कैयट ने उक्त पंक्ति का आशय प्रकट करते हुए लिखा कि बहुव्रीहि समास तो अन्यपदार्थ में सुबन्त मात्र को होता है, किन्तु द्विगु संख्यावाची पूर्वपद रहने पर ही तद्धितार्थ में होता है; इसलिए बहुव्रीहि की अपेक्षा विशेषविहित (होने के कारण द्विगु बहुव्रीहि का बाधक होगा। इसके बाद सिद्धान्ती एकदेशी) सिद्धान्ती इसलिए कि उसका साध्य (प्रतिपाद्य) अंश वैयाकरण सिद्धान्त सम्मत है, एकदेशी इस लिए कि जो हेतु दिये हैं वह हेत्वाभास मात्र है) ने कहा अन्तरङ्गत्वात् बहुव्रीहि होगा। अन्त-रङ्गता यहाँ इसतरह है कि, अन्यपदार्थ में बहुव्रीहि होता में और विशिष्ट अन्यपदार्थ में द्विगु होता है। इसीलिए द्विगु के अर्थ द्वारा निमित्त बने हुए इस मतुप्रूपी तद्धित विधायक सूत्र में 'अस्ति' ग्रहण करते हैं। कैयट ने 'अस्ति'

**कास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयटः। नैषा सिद्धान्त्युक्तिरेतावता-प्यपवादत्वाहानेः। अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात्। किञ्च उक्तरीत्या परत्वेनैव बाधसिद्धेः। किञ्च अत्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्। न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम्। अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये। न चार्थकृत-**

---

भाष्येण विशेषापेक्षस्य यद् बहिरङ्गत्वं प्रमाणितं तन्नादर्तव्यम् तस्य भाष्यस्यैकदेश्युक्तत्वादिति प्रघट्टकसारांशः। **अपवादत्वाहानेः**=अपवादस्यान्तरङ्गाद् बलवत्तरत्वात्। त्वन्मतेनाच्सामान्यापेक्षस्यान्तरङ्गस्य विशिष्टसवर्णाजपेक्षदीर्घेणापवादेन (त्वन्मतेन बहिरङ्गत्वेऽपि) यथा बाधस्तथा तत्रापि संभवतीति भावः। **अतएव सुबन्तेति**। सामान्यापेक्षस्यान्तरङ्गत्वं विशेषापेक्षस्य च बहिरङ्गत्वमिति मतस्य भाष्यं सिद्धान्तत्वेनास्वीकारादेव सुबन्तसामान्यापेक्ष इत्यादिर्भाष्ये नोक्तः। **इदमयुक्तमिति**। व्याकरणशास्त्रे शब्दस्यैव प्राधान्यात्परिभाषायामसिद्धं बहिरङ्गमन्तरङ्ग इत्यत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते, तेनार्थनिमित्तकस्य न बहिरङ्गत्व-

---

के अर्थ की अधिक अपेक्षा वाले मतुबर्थनिमित्तक द्विगु को बहिरंग बताया। परन्तु इससे "विशेषापेक्षत्वं बहिरङ्गत्वम्" यह नहीं मानना चाहिए; क्योंकि यह कथन सिद्धान्ती की उक्ति के रूप में नहीं है, किन्तु पूर्वपक्षी का कथन है। इसलिए यह भाष्य आदरणीय नहीं। पूर्वपक्षी की यह उक्ति वजनदार नहीं है, यह बात इससे और साफ प्रगट हो जाती है कि द्विगु में पूर्वनिर्दिष्ट अपवादत्व का निराकरण नहीं किया है, बहिरंग होकर भी द्विगु जब अपवाद है; तो वह बहुव्रीहि का बाध कर ही सकता है; क्योंकि अपवाद तो अन्तरङ्ग से भी बली है। यह देखते हैं कि अच् की सामान्यतः अपेक्षा रखने वाले (इकोयणचि) यण् का; विशिष्ट अच् (सवर्ण अच्) की अपेक्षा रखने वाले दीर्घ (अकः सवर्णे दीर्घः) से बाध होता है। यदि पूर्वोक्त रीति महत्वपूर्ण होती अर्थात् द्विगु सावकाश होता तो परत्वात् ही बाध बताना चाहिए था; वैसा नहीं बताया गया है, इससे सिद्ध है कि द्विगु निरवकाश (अपवाद) है।

अथवा यों समझिये कि द्विगु को जो बहिरङ्ग बताया गया है वह केवल विशेषार्थापेक्ष होने से ही नहीं बताया गया है; किन्तु अधिकार्थापेक्षा होने से ही बताया गया है। इसलिए इस भाष्य को आधार बनाकर विशेषापेक्ष को बहिरङ्ग नहीं सिद्ध किया जा सकता। यदि भाष्य का तात्पर्य वैसा होता तो विश्लेषण करते समय ऐसा ही कहा जाता कि बहुव्रीहि सुबन्त सामान्य की अपेक्षा रखता है, इसलिए अन्तरङ्ग है, और सुबन्त विशेष की अपेक्षा रखने के कारण द्विगु बहिरङ्ग है।

बहिरङ्गत्वस्य अनाश्रयणादिदमयुक्तम् । एकदेश्युक्तित्वेनादोषात् । अत एवास्तिग्रहणं नोपाध्यर्थं किन्तु अस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य इति वचनेनैतत्सिद्धमित्युक्तम् ।

अत एव 'तदोः सः सौ' इति सूत्रेऽनन्त्ययोरिति चरितार्थम् । अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यात्वेऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

---

मिति प्रतिपादनात् "किञ्चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वमिति मूलोक्तमयुक्तमिति भावः । **नोपाध्यर्थमिति** । न मतुपो निमित्तत्वार्थमिति भावः । सिद्धांतिना= **सिद्धान्तिनाप्येकदेशिनेत्यर्थः** । चरमसिद्धान्ती तु परत्वादेव बहुव्रीहिं स्वीचकार । **अतएव**= सामान्यपेक्षविशेषापेक्षत्वयोरन्तरङ्गबहिरङ्गत्वप्रयोजकत्वस्यास्वीकारादेव । अनन्त्ययोरिति क्रियते हे स इत्यादौ परत्वात् त्यदादीनामः ७. २. १०२ इत्यत्वं बाधित्वा दस्य सकारे हल्ङ्यादिना सुलोपे सस्य रुत्वे विसर्गे च कृते हे सः इत्यनिष्टरूपव्यावृत्यर्थम् । यदि सामान्यापेक्षस्यान्तरङ्गत्वं स्यात्तदा प्रत्ययसामान्यापेक्षस्य त्यदादत्वस्यान्तरङ्गत्वात्परमपि सत्वं बाधित्वाऽत्वेऽनन्त्यस्यैव सत्वे स्वतः सिद्धेऽनन्त्ययोरित्यस्य वैयर्थ्यं स्पष्टमेव । पादःपत् ६. ४. १३० सूत्रे भाष्ये प्रदीपे च विशेषापेक्षस्यान्तरङ्गत्वाभाव एव सूचितः । तथाच भाष्यम्—अरुदिताम् अरुदितेति । इटि कृते सेट्कस्य तान्तन्तामादेशाः प्राप्नुवन्ति । निर्दिश्यमानस्यादेशा भवन्ति इति न दोषो भवति ॥ इदमिह संप्रधार्यम् । इट् क्रियतां तान्तन्ताम इति । किमत्र कर्तव्यम् । परत्वादिडागमः । अन्तरङ्गास्तान्तन्तामः ॥

अत्र कैयटः प्रदीपे—अन्तरङ्गा इति प्राग्लादेशेभ्यो धात्वधिकारात्तामादयोऽन्तरङ्गाः ॥

---

यद्यपि अर्थकृत बहिरङ्गत्व का आश्रय नहीं किया गया है; तथापि यह ग्रन्थ एक देशी की उक्ति है । इसलिए अर्थकृत बहिरङ्गत्व के प्रतिपादन को कोई विशेष महत्व नहीं दिया गया है । इसलिए आगे कहा गया कि मतुब् विधायक सूत्र में 'अस्ति' ग्रहण उपाधि (विशेषण) के लिए नहीं; किन्तु (अस्ति) शब्द से मतुप् विधानद्वारा 'अस्तिमान्' बनाने के लिए है । यह कह कर सिद्धान्ती भाष्यकार ने बताया कि अधिक अर्थ की अपेक्षा होने के कारण द्विगु को जो तुमने यथा-कथंचित् बहिरंग बताने का प्रयत्न किया था, वह भी नहीं हो सकता । यह कहकर सिद्धान्ती "मत्वर्थे द्विगोः प्रतिषेधो वक्तव्यः" यह नूतन वार्तिक स्वीकार करके पूर्वोक्त दोष का निवारण किया । यह सिद्धान्ती भी एकदेशी सिद्धान्ती है । परम सिद्धान्ती तो 'परत्वात्' ही बहुव्रीहि मानते हैं ।

वार्तिक स्वीकार करना ही बताता है कि यहाँ विशेषापेक्षत्वं बहिरङ्गत्वम् और अधिकापेक्षत्वं बहिरङ्ग दोनों अभिमत नहीं है ।

अतएव 'तदो सः सौ' ७. २. १०६

'पादः पत्' इति सूत्रे भाष्यकैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु ।

नन्वेवमसुत्सु वदित्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत्—न । तत्रान्तःकार्य्यत्वरूपान्तरङ्गत्वसत्त्वात् । अन्तःकार्य्यत्वं च पूर्वोपस्थि-

---

इदं भाष्यम् प्राग्लादेशेभ्यो धात्वधिकार इति पक्षमादाय प्रवृत्तम् अन्यथा निर्दिश्यमानस्येत्युक्तेऽपि धातोरित्यवध्युपादानादिटो व्यवधानेन तामादय एव न स्युः । तथाच 'रुदादिभ्यः सार्वधातुके ७. २. ७६ इत्यस्य तामादिनिमित्तसमुदायबहिर्भूत-रुदादिनिमित्तकत्वेन बहिरङ्गत्वात्तामादय एव भवन्तीतिसूचनात् सामान्यापेक्षमन्त-रङ्गं विशेषापेक्षं बहिरङ्गमिति नास्त्येवेति सूचितम् । कैयटेन प्राग्लादेशेभ्य इत्यु-क्त्यैव सूचितम् । अन्यथा लादेशादीनां तदधिकारत्वेऽप्युक्तान्तरङ्गत्वसंभवात्तदुक्ति-रयुक्ता स्यात् ।—चित्रप्रभा टीका ।

एवं विशेषापेक्षस्य न बहिरङ्गत्वमिति सिद्धान्तितम् । ननु साम्प्रतं यावदन्त-

---

इस सूत्र में निर्दिष्ट "अनन्त्ययोः" यह अंश चरितार्थ हुआ । अन्त्यतकार दकार को सत्व वारण के लिए अनन्त्ययोः इसलिए कहते हैं कि "तत्" में अत्व को बाध कर 'अन्त्य' को सत्व न हो जाय । यदि विशेषापेक्ष बहिरङ्ग और सामा-न्यापेक्ष अन्तरङ्ग माना जाय; तब तो प्रत्यय सामान्य की अपेक्षा होने के कारण अन्तरङ्ग होने से अत्व, प्रत्ययविशेषापेक्ष बहिरंग सत्व विधायक "तदोः सः सौ" ७. २. ३०६ को बाध लेगा और अन्त्य को त्यदादीनामः ७. २. १०२. से अत्व हो जाने पर सर्वत्र अनन्त्य को ही सत्व होगा, फिर अनन्त्य' यह अंश व्यर्थ था । अतः जानना चाहिए कि विशेषापेक्ष को बहिरङ्ग नहीं मानते हैं । "पादः पत्" ६. ४. १०३ सूत्र के भाष्य और कैयट में भी सामान्यापेक्ष में अन्तरङ्गत्व और विशेषापेक्ष में बहिरङ्गत्व का अभाव ही सूचित किया गया है, यह विद्वान् विचारें । 'पादः पत् ६. ४. १०३ सूत्र का अविकल भाष्य दुर्गा टीका में उक्त है—वहाँ आरुदिताम्" में रुदादिभ्यः—से प्राप्त इट् की अपेक्षा 'ताम्' आदि आदेश को भाष्यकार ने अन्तरङ्ग' बताया । कैयट ने कहा कि 'धातोः' यह अधिकार आदेश विधायक सूत्रों से पूर्व तक ही हैं; इसलिए तामादि आदेश अन्तरङ्ग है । इससे सूचित होता है कि धात्वधिकार नहीं होने के कारण 'ताम्' आदेश का निमित्त रुदादि-धातु नहीं है; किन्तु रुदादिभ्यः—से जो इट् होता है, उसमें रुदादिधातु निमित्त है इसलिए रुदादिधातु और वलादि आर्धधातुक (तस्) रूप समुदाय (इट् के निमित्त) के बीच तामादेश का निमित्त आ गया इसलिए ताम् आदेश अन्तरंग हुआ । यदि विशेषापेक्ष बहिरंग होता तो धातु का अधिकार होने पर ताम् आदेश के अन्तरंग होने कोई खतरा नहीं था फिर कैयट को यह सफाई देने की क्या जरूरत थी कि लादेश से पूर्व तक ही धातोः का अधिकार है ।

**तन्निमित्तकत्वम्। अङ्गशब्दस्य निमित्तपरत्वात्। इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्य्याणि करोति। ततः सुहृदां ततः**

---

रङ्गत्वं द्विधा प्रतिपादितम्, घटकतया अल्पनिमित्तकत्वेन च। तदुभयमपि असुस्रुव-दित्यत्र उवङो न संभवति। तथा च स्रुधातोर्लुङि तिपि अटि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' ३. १. ४८ इति च्लेश्चङि, द्वित्वादिकार्ये सार्वधातुकं तिपं निमित्तीकृत्य पुगन्तलघूपधस्य च ७. ३. ८६ इति गुणः चङ्निमित्तकश्चोवङ् प्राप्नुतस्तत्रान्तर ङ्गत्वादुवङ् भवतीति शाब्दिकसिद्धान्तो व्याकुप्येत, उभयोः परनिमित्तकत्वसा-म्येनाल्पनिमित्तकत्वाविशेषात्। न च गुणशास्त्रीयो निमित्त-समुदायः असुस्रु अत् इति सम्पूर्णः समुदायः तत्र सार्वधातुकपरत्वस्याङ्गस्य चापेक्षणेनाङ्गसंज्ञायाञ्च प्रकृतेऽप्य-पेक्षणात्; उवङश्च असुस्रु अ पर्यन्तमेव निमित्तम्। एवञ्च बहिरङ्गत्वेन विवक्षितस्य गुणशास्त्रस्य निमित्तसमुदायान्तर्भूतनिमित्ततयोवङोऽन्तरङ्गत्वमस्त्येवेति वाच्यम्, समकालप्राप्तबहिरङ्गासिद्धत्वप्रकरणे "ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण" इत्यादिभाष्योद्धरणप्रमाणेन सप्तम्यन्तपदोपात्तस्यैवाङ्गशब्देन ग्रहणमिति प्रतिपादितत्वात्। एवञ्चासुस्रुवदित्यत्र उवङः कथमन्तरङ्गत्वमिति चेन्न पूर्वोप-स्थितिनिमित्तकत्वस्यान्तः कार्यत्वरूपस्यान्तरङ्गत्वस्योवङि विद्यमानत्वात्। अन्तः अर्थात् पूर्वं यत्कार्यम् तत्फलितार्थमाह-पूर्वोपस्थितेत्यादिना। अत्र प्रकारद्वयम् (१)

---

यद्यपि अब यह प्रश्न उपस्थित होता है कि "असुस्रुवत्" में लघूपध गुण की अपेक्षा उवङ् को अन्तरङ्ग बताया गया है, वह नहीं होगा क्योंकि उवङ् अल्प निमित्तक नहीं है। बात यह है कि स्रु धातु से लुङ् लकार के स्थान में तिप् लाकर अनुबन्ध लोप अडागम आदि करने पर 'च्लि' को चङ् निमित्तक द्वित्व होने के बाद जब 'असुस्रु अत्' यह स्थिति हुई; तब सार्वधातुक 'त्' के परे रहते 'लघूपधगुण' की प्राप्ति हुई और चङ् निमित्तक उवङ् की प्राप्ति हुई, वहाँ अन्तरङ्गत्वात् उवङ् की व्यवस्था की जाती है; परन्तु अब वह व्यवस्था सिद्ध नहीं होगी; क्योंकि दोनों समान रूप से पर निमित्तक हैं; तथापि यहाँ उवङ् में अन्तः कार्यत्व रूप अन्तरङ्गत्व होने के कारण पूर्वोक्त व्यवस्था निर्बाध चल सकती है। अन्तः कार्यत्व का तात्पर्य है पूर्वोपस्थित पूर्वोच्चरित निमित्तकत्व। इस तरह जिस शास्त्र का निमित्त पूर्वोच्चरित हो, उसे पश्चादुच्चरित निमित्त वाले शास्त्र की अपेक्षा अन्तरङ्ग माना जायगा। इस प्रकार का अन्तरङ्गत्व लौकिक न्याय पर आधारित है। हम सब देखते हैं कि कोई भी मनुष्य प्रातः उठकर सर्वप्रथम शरीर सम्बन्धी कार्यों को करता है; क्योंकि "शरीर माद्यं खलु धर्म-साधनम्" इस न्याय के अनुसार शरीर की प्रथमोपस्थिति होने से उसे प्राथमिकता दी गयी है। इसके बाद मित्रों का और फिर सम्बन्धियों का कार्य सम्पादन करता है। जाति-व्यक्ति, लिङ्ग, संख्या और कारक रूप अर्थों का बोध भी

**सम्बन्धिनाम्।** अर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितस्तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्-

---

पूर्वोच्चारित (पूर्वोपस्थित) (२) निमित्तत्वेन प्रक्रियोच्चारणक्रमेण च। तत्र प्रथमस्योदाहरणमसुस्रुवदिति। द्वितीयस्य खट्वोढेति। प्रक्रियोच्चारणक्रमेण प्रथमोपस्थितस्यान्तरङ्गत्वे प्रमाणम् ओमाङोश्च इत्यत्राङ्ग्रहणमित्युपपादितं पूर्वम्। एतेन खट्वा+आ ऊढा इत्यत्र गुणस्यान्त-ङ्गत्वकथनमनुपपन्नं गुणापेक्षया दीर्घस्य खट्वाघटकाकारनिमित्तत्वेन पूर्वोच्चरित (पूर्वोपस्थित) निमित्तकत्वादित्यपास्तम् गुणस्य प्रक्रियाक्रमेण प्रथमोपस्थितनिमित्तकत्वात्। यत्र सम्भवस्तत्रार्थकृतैव पूर्वोपस्थितिग्रह्या यत्र च न सम्भवस्तत्रैव उच्चारणकृता पूर्वोपस्थितिर्गृह्यते इति व्यवस्थामाश्रित्य दोषाभावः।

पूर्वोपस्थितनिमित्तकत्वरूपमिदमन्तरङ्गम् लोकन्यायसिद्धम्। स लौकिकन्यायः क इत्याह-**मनुष्योऽयमित्यादि। प्रथमं शरीरेति** सर्वापेक्षया शरीरस्य प्रथमोपस्थितेरितिभावः। जातिव्यक्तिलिङ्गेति-शब्दश्रवणानन्तरं प्रथमं जातिर्बुद्धिमारोहतीति भावः। अत्र जातिपदं धर्ममात्रपरम्। तेनाकाशत्वमपि गृह्यते। जातिपुरस्कृता व्यक्तिर्जात्यनन्तरमुपतिष्ठते। जातिविशिष्टव्यक्तावुपस्थितायां किं लिङ्गमित्यपेक्षया लिङ्गमित्युपतिष्ठते। ततः सजातीयपदार्थान्तरसापेक्षा संख्या बुद्धावागच्छति। ततो विजातीयक्रियापेक्षं कारकत्वं बुद्धिमधिवसति इति तादृशेन क्रमेणैव तत्तदर्थबोधकशब्दप्रादुर्भावः।

---

क्रम से होता है। शब्द श्रवण के बाद सर्व-प्रथम जाति रूपी अर्थ का बोध होता है। यहाँ जाति का अर्थ धर्ममात्र लिया गया है! इसके बाद व्यक्ति-अर्थ का बोध होता है, जाति विशिष्ट व्यक्ति के बोध के बाद लिङ्ग अर्थ की उपस्थिति होती है। इसके बाद सख्या का बोध होता है; क्योंकि संख्या की उपस्थिति में सजातीय पदार्थान्तर की अपेक्षा है। इसके बाद विजातीय क्रियाओं की अपेक्षा रखने वाले कारक, बुद्धि में भासित होते हैं। पूर्वोक्त क्रम से ही तत्तदर्थ बोधक शब्दों का कल्पित प्रादुर्भाव होता है। शास्त्रकारों के द्वारा कल्पित व्युत्पत्ति में भी इसी क्रम से तत्तदर्थ बोधक शब्दों का कल्पित प्रादुर्भाव होता है और उपस्थिति के क्रम से तत् तत् कार्य होते हैं। इसी तरह जिस कार्य का शब्द पहले उच्चरित हैं; उसकी पूर्वोपस्थिति होगी और वह अन्तरङ्ग होगा। इस तरह पूर्वोच्चरित निमित्तकत्वम् अन्तरङ्गत्वम् यह सिद्ध हुआ। इसीलिए पट्व्या में पटु+ई+आ ऐसी स्थिति में अन्तरङ्गत्वात् पहले पूर्वयणादेश होगा, पर यणादेश बहिरंग है। इसलिए पूर्वयणादेश कर्तव्य में उसकी असिद्धता हो जायगी, यह भाष्यकार ने "अचः परस्मिन्" १.१.५७ सूत्र के भाष्य में स्पष्ट रूप से बताया।

कार्याणीति पट्व्येत्यादावन्तरङ्गत्वात् पूर्वयणादेशः परयणादेशस्य बहिरङ्गत-याऽसिद्धत्वादित्यादिना 'अचः परस्मिन्' इति सूत्रे भाष्ये स्पष्टम् ।।

तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव । यथा पट्व्येत्यत्र पदस्य

---

पूर्वोपस्थितनिमित्तकस्यान्तरङ्गत्वम् अचः परस्मिन् पूर्वविधौ १. १. ५७ इति सूत्रस्य भाष्ये पट्व्या मृद्व्या इत्युदाहरणसन्दर्भे प्रतिपादितम्—तत्रोक्तम्-(पटु+ई+आ) अत्र नित्यः परयणादेशः कृतेऽपि पूर्वयणादेशे प्राप्नोति अकृतेऽपि प्राप्नोति । नित्यत्वात्परयणादेशे कृते पूर्वस्य न प्राप्नोति, स्थानिवद्भावाद् भवति । इत्थं प्रातिपदितस्य स्थनिवत्त्वप्रयोजनस्य खण्डनं कुर्वतोक्तम्-एतदपि नास्ति प्रयोजनम्-असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । असिद्धत्वाद् बहिरङ्गलक्षणस्य परयणादेशस्यान्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति ।

अनेन "पूर्वनिमित्तकार्यत्वमात्रस्यान्तरङ्गत्वं सिद्धं भवतीति । अग्रे चास्याः लोकन्यायसिद्धत्वमभिहितम्—बहुप्रयोजनैषा परिभाषा । अवश्यमेषा कर्तव्या । सा चाप्येषा लोकन्यायसिद्धा कथम् ? प्रत्यङ्गवर्ती लोको दृश्यते (अत्र प्रत्यङ्गशब्दः प्रत्यासन्नवाचीति कैयटः तद्यथा पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत्करोति, ततः सुहृदां ततः सम्बन्धिनाम् । प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते । सामान्ये वर्तमानस्य व्यक्तिरुपजायते । व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगोभवति । यथैव चानुपूर्व्यार्थानां प्रादुर्भाव-स्तथैव शब्दानामपि । तद्वत्कार्यैर्भवितव्यम् इति ।। तदपि=अन्तः कार्यत्वरूपान्तर-ङ्गत्वमपि पूर्वोपस्थितनिमित्तकान्तरङ्गत्वमपीति भावः **पदस्य विभज्यान्वाख्याने**= पटु+ई+आ इत्येवंविधे इति । एतादृशेऽन्तरङ्गे =पूर्वोपस्थितनिमित्तकात्मकेऽन्तरङ्ग इत्यर्थः ।

---

यद्यपि पूर्वोच्चरित निमित्तक को अन्तरङ्ग मानने पर 'खट्वा+आ+ऊढा' में गुण को जो अन्तरङ्ग माना गया है; वह असंगत हो जायेगा, क्योंकि गुण के निमित्त आङ् की अपेक्षा दीर्घ के निमित्त खट्वा के आकार की ही पूर्वोपस्थिति है; तथापि यहाँ यह मानने पर दोष नहीं होगा कि यदि संभव हो तो अर्थकृत ही पूर्वोपस्थितत्व का ग्रहण करना चाहिए । यदि अर्थकृत पूर्वोपस्थितत्वग्रहण संभव न हो; तब उच्चा-रण कृत पूर्वोच्चरितत्व को लेकर अन्तरङ्ग मानना चाहिए । इस प्रकार की व्यवस्था करने पर कोई दोष नहीं है । क्योंकि "असुस्रुवत्" में चङ् के अनर्थक होने के कारण उच्चारण कृत पूर्वोच्चरितत्व लिया जायगा, परन्तु 'खट्वोढा' में अर्थकृत पूर्वोच्च-रितत्व का ग्रहण होने के कारण गुण ही अन्तरङ्ग माना जायगा ।

अन्तःकार्यत्वरूप या पूर्वोपस्थित निमित्तकत्व रूप अन्तरङ्गत्व भी वहीं निया-मक बनेगा; जहाँ एक साथ अन्तरङ्ग और बहिरङ्ग दोनों कार्यों की प्राप्ति होगी ।

**विभज्यान्वाख्याने, न तु जातस्य बहिरङ्गस्यैतादृशेऽन्तरङ्गेऽसिद्धतानियामकं प्रागुक्तलोकन्यायेन तथैव लाभादिति 'वाह ऊठ्' सूत्रे कैयटे स्पष्टम्। अत एव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितोऽचः परस्मिन्नित्यत्र भाष्य-कृता। क्रमेणान्वाख्याने-तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमप्यन्तरङ्गत्वं बहिरङ्गस्या-सिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम्॥**

---

वाह ऊठ् ६. ४. १३२ इति सूत्रस्य कैयटे स्पष्टमिति-तथाहि ननु नैतज्ज्ञा-पकसाध्यं, लोकतः सिद्धत्वात्। प्रत्यङ्गवर्ती हि लोकः। नैतदस्ति। यत्र युगपदन्तर-ङ्गबहिरङ्गयोः प्राप्तिस्तत्र लौकिकन्यायाश्रयणाद्भवत्यन्तरङ्गः। इह तु बहिरङ्गनिमि-त्तमन्तरङ्गमिति लौकिकन्यायानवतारः इति।

**अतएव**—एतादृशस्यान्तरङ्गस्य जातबहिरङ्गासिद्धत्वनियामकत्वास्वीकारा-देव। वाय्वोरित्यत्र यकारस्य वलि लोपो न, यणः अचः परस्मिन्निति स्थानिवद्भावेन-वल्परत्वाभावात् इति भाष्याशयः। यदि जातस्य कार्यस्यासिद्धत्वमप्यन्तःकार्य-त्वरूपेऽन्तरङ्गे कर्तव्ये स्यात्तदा विलम्बेनोपस्थितमौकारं निमित्तीकृत्य जातस्य यणो बहिरङ्गस्यानयैव लोकसिद्धया परिभाषयाऽसिद्धत्वेन यलोपनिवारणे सौकर्येण सिद्धे स्थानिवद्भावप्रयासो वृथा स्यादिति। **क्रमेणान्वाख्याने**=पट्वी मृद्वी इति संसाध्य टाविभक्तियोजने। **उक्तोदाहरणे**=पट्व्या मृद्व्या इत्यादौ। पूर्वप्रवृत्ति-कत्वमित्यादि=पूर्वयणादेशस्य पूर्वप्रवृत्तिकत्वरूपमन्तरङ्गत्वं नास्ति परयणादेशस्य विलम्बोपस्थितनिमित्तकत्वरूपं बहिरङ्गमपि नास्ति क्रमेणान्वाख्याने। अतः निमित्ता-भावात्परिभाषाया अप्राप्त्या तस्याश्चोपयोगोऽपि नास्तीति सारांश। अथवा प्रक्रिया-क्रमेणान्वाख्याने पूर्वप्रवृत्तिकत्वरूपमन्तरङ्गत्वमस्ति। बहिरङ्गत्वं तु निमित्ताभावात्

---

अर्थात् पूर्वोक्त अन्तरङ्ग कर्तव्य में तत्काल प्राप्त बहिरङ्ग की असिद्धता होगी जैसे कि पट्व्या में जबकि विभाग पूर्वक पद का अन्वाख्यान करते हैं अर्थात् पटु+ई+आ ऐसी पदावधिक व्युत्पत्ति करते हैं तब पूर्वयण् और परयण् दोनों की प्राप्ति होती है, वहाँ अंतरङ्ग पूर्वयण् के प्रति बहिरङ्ग पर यण् की असिद्धता हो जाती है। जात (कृत) बहिरंग की पूर्व निर्दिष्ट (पूर्वोच्चरित निमित्तकरूप) अन्तरङ्ग कार्य कर्तव्य में असिद्धता नहीं होती। यह 'वाह ऊठ्' ६.४.१३२ सूत्र के कैयट में स्पष्ट है। क्योंकि पूर्वोक्त लोक न्याय से वैसा ही सिद्ध होता है। कोई भी मनुष्य अपना और मित्र के कार्यों की एक साथ उपस्थिति होने पर ही पहले अपना कार्य करता है इसी तरह मित्र और सम्बन्धियों के कार्यों के एक साथ उपस्थित होने पर पहले मित्र का कार्य करता है। ऐसा नहीं कि उसने कल जो मित्र का कार्य कर दिया था; उस कार्य पर आज उपस्थित अपने कार्य के कारण पानी फेर देगा।

उक्त अंतरंग समकाल प्राप्त बहिरङ्ग का नियामक होता है किन्तु जात बहिरंग का नियामक (निवारक) नहीं होता है। इसीलिए भाष्यकार ने ''वाय्वोः'' इत्यादि

यत्त्वेवंरीत्या पूर्वस्थानिकम्प्यन्तरङ्गमिति, तच्चिन्त्यम्। स्रजिष्ट इत्यादौ 'विन्मतोर्लुकि' टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारण-प्रयासस्य 'प्रकृत्यैकाज्' इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्या-पत्तेः त्वदुक्तरीत्या 'विन्मतोर्लुको' बहिरङ्गासिद्धत्वेन अनायासतस्तद्वारणात्।

---

टाप्रत्ययरूपनिमित्ताभावादप्राप्तिरूपं बोध्यमिति। दीक्षितेन काव्यं कलत्रं शाल्वं चाचक्षाणः काव् कलत् शाल् इत्यत्र पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमित्युक्तम् पूर्वस्थानिकमिति तदर्थ इति तच्चिन्त्यमिति भावः। **स्रजिष्ठ** इत्यादाविति—स्रक् अस्यास्तीति विग्रहे अस्मायामेधास्रजोविनिरिति विन् प्रत्ययः। ततः 'अतिशायने तम-विष्ठनौ'' ५. ३. ५५ इतीष्ठन्। स्रज्विन् इष्ठ इत्यत्र 'टेः' ६. ४. १५५ लोपः प्राप्तः विन्मतोर्लुक् ५. ३. ६५ इति लुक् प्राप्तः। तत्र येन नाप्राप्तिन्यायेन (प० ५८) लुकि कृते पुनः प्राप्तं टिलोपं बाधयितुं प्रकृत्यैकाच् ६. ४. १६३ इति सूत्रं क्रियते। इत्थं हि प्रकृत्यैकाच् ६. ४. १६३ इति सूत्रस्थं भाष्यम् ''प्रकृत्यैकाजिष्ठे-मेयस्सु चेदेकाच उच्चारणसामर्थ्यादवचनात् प्रकृति-भावः''। प्रकृत्यैकाजिष्ठेमेयस्सु चेत्तन्न। किं कारणम्? एकाच उच्चारणसामर्थ्यादन्तरेणापि वचनं प्रकृति-भावो भविष्यति। विन्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः। स्रग्वितरः स्रजीयान्। स्रग्वितमः, स्रजिष्ठः स्रग्वत्तरः स्रुचीयान्। स्रग्वत्तमः,—म्रुचिष्ठ॥ ननु च विन्मतो-र्लुक् टिलोपं बाधिष्यते॥ कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्? असति खल्वपि सम्भवे बाधनं भवति। अस्ति च सम्भवो यदुभयं स्यात्। यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते। एवं नस्तद्धिते इत्येतमपि बाधेत। यतरो नौ ब्रह्मीयान्-ब्रह्मवत्तर इति।

---

प्रयोगों में प्राप्त ''लोपो व्योर्वलि'' ६.१.६६ से लोप का वारण ''अचः परस्मिन्'' १.१.५७ के द्वारा स्थानिवद् भाव कर के किया। बात यह है कि 'वाय्वोः' में यण् करने के बाद वल् परक होने के कारण 'लोपो व्योः' से वलोप प्राप्त था; उसके निवारण के लिए 'अचः परस्मिन्' सूत्र के भाष्य में भाष्यकार ने यणादेश को स्थानी 'उकारवत् बनाकर किया। यदि पूर्वोपस्थित निमित्तक अन्तरङ्ग के प्रति जात बहिरङ्ग भी असिद्ध होता; तो विलम्ब से बाद में उपस्थित ओकार को निमित्त बनाकर प्रवृत्त होने वाले जातबहिरंग यण् की लोक-सिद्ध इस न्याय से ही असिद्धता हो जाती और लोप का वारण हो जाता फिर 'स्थानिवद् भाव तक दौड़ने की क्या आवश्यकता थी?

''पट्व्या मृव्व्या'' इत्यादि रूपों का अन्वाख्यान (सिद्धि) अगर क्रम से करें अर्थात् पटु और मृदु शब्दों से पहले 'ङीष्' करके यण् करदें और पट्वी तथा मृद्वी बनाकर 'टा' विभक्ति लावें, तो इस परिभाषा के बिना ही इष्ट सिद्धि हो जायगी।

**भाष्ये ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च । परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च ।**

---

यत्तावदुच्यते—कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्—इति । इदं तावदयं प्रष्टव्यः—यदि तर्हि विन्मतोलुङ्नोच्येत किमिह स्यात् इति । टिलोप इत्याह । टिलोपश्चेत्, नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते स बाधको भविष्यति ॥ यदप्युच्यते—असति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यादिति । सत्यपि सम्भवे बाधनं भवति । तद्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय इति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि सम्भवे 'विन्मतोर्लुक्' टिलोपं बाधिष्यते । यदप्युच्यते-यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधिष्यते, एवं 'नस्तद्धिते' इत्येतमपि बाधेत । न बाधते । किं कारणम् ? येन नाप्राप्ते तस्य बाधनं भवति । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते नस्तद्धिते इत्यस्मिन् पुनः प्राप्ते चाप्राप्ते च ॥ अथवा पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते इत्येवं विन्मतोर्लुक् टिलोपं बाधिष्यते नस्तद्धिते इत्येतन्न बाधिष्यते । इति ।

जातिपक्षाश्रय—यत्र लुक्कृतस्तत्र टिलोपो न इत्यर्थेनेत्यर्थः । त्वदुक्तरीत्येति =पूर्वस्थानिकमन्तरङ्गमिति तव मतानुसारेण । विन्मतोर्लुकः परस्थानिकत्वेन बहिरङ्गत्वं, टिलोपस्य च पूर्वस्थानिकत्वेनान्तरङ्गत्वमिति स्रज् + विन् + इष्ठ इत्यवस्थायां जातस्य विनो लुकोऽन्तरङ्गे टिलोपे कर्तव्येऽसिद्धत्वं सूपपादमिति भावः । ननु भाष्ये तक्रन्यायेन बाधकत्वं दर्शितम् तेन न्यायेन बाधके प्रवृत्ते उत्सर्गो न प्रवर्तते

---

वहाँ यह परिभाषा लगेगी ही नहीं; क्योंकि जिस काल में अन्तरङ्ग पूर्व यण् की प्राप्ति है; उस काल में बहिरङ्ग परयण् की प्राप्ति ही नहीं है । समकाल प्राप्त अन्तरंग और बहिरङ्ग में ही पूर्वोपस्थित निमित्त के आधार पर अन्तरंग के प्रति बहिरङ्ग की असिद्धता मानी गयी है । इसलिए निमित्त (कारण) के अभाव के कारण परिभाषा प्रवृत्ति-रूप कार्य भी नहीं हुआ ।

पूर्वोक्त सन्दर्भ से यह भ्रान्त निष्कर्ष नहीं निकालना चाहिए कि पूर्वस्थानिक अन्तरङ्ग होता है । अर्थात् जिस शास्त्र का उद्देश्य पूर्व में हो वह अन्तरङ्ग होता है क्योंकि ऐसा निष्कर्ष भाष्य सिद्धान्त के विपरीत पड़ता है । "अयमेषु अतिशयेन स्रग्वी" इस अर्थ में अर्थात् यह व्यक्ति इन सभी माला धारण करनेवालों में अधिक माला धारण करता है, इस अर्थ में, स्रग्विन् शब्द से 'इष्ठन्' प्रत्यय करने पर जब "विन्मतो र्लुक्" ५.३.६५ से 'विन्' का लुक् हुआ तब स्रज् + इष्ठ यहाँ टिलोप की प्राप्ति होती है, उसको रोकने के लिए किए गए 'प्रकृत्यैकाच्' ६.४.१६३सूत्र से प्रकृतिभाव होता है । भाष्यकार ने 'प्रकृत्यैकाच्' सूत्र के इस प्रयोजन का खण्डन करते हुए बताया कि 'स्रग्विन् इष्ठ इस अवस्था में टिलोप की प्राप्ति होती है, उसका

इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेतीच 'एकाचोऽम्' इति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्त्तव्या।, परन्तप इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः ॥

---

तथाचात्र टिलोपाप्रवृत्तिरिति प्रयास एव सूचयति यत् पूर्वस्थानिकस्यान्तरङ्गत्वं नास्तीति वदति—**निमित्तपरत्वाच्चेति**। परिभाषायामङ्गशब्दो न स्थान्यर्थबोधक इति भावः। इच एकाचोऽम् ०६. ३. ६८ इति सूत्रे भाष्य इति। तत्र श्रियंमन्यं

---

अपवाद 'विन्मतो लुॅक्' से जब 'विन्' का लोप हो गया है; तब फिर सृज् के 'टि' का लोप नहीं होगा क्योंकि 'विन्मतो लुॅक्' में जाति पक्ष का आश्रयण है इसलिए वह, टिलोप, जाति (सकल टिलोप) का बाधक होगा। इस तरह भाष्यकार ने जाति पक्ष का आश्रयण करके टिलोप का जो वारण किया है उससे सिद्ध होता है कि "पूर्व स्थानिकमन्तरङ्गम्" यह मत भाष्य—सम्मत नहीं है। आपके मत के अनुसार यदि पूर्व स्थानिक अन्तरङ्ग होता, तो बाद में प्राप्त टिलोप का स्थानी (सृज) घटक अज् 'विन्मतोर्लुक्' के स्थानी 'विन्' से पूर्ववर्ती होने के कारण अन्तरङ्ग, 'अज्' रूप टिलोप कर्तव्य में कृत बहिरङ्ग, (विन्लोप) की असिद्धता होने से बिना आयास के ही 'अज् रूप' टिलोप का वारण होना सम्भव था; फिर भाष्यकार का पूर्वोक्त प्रयास निष्फल ही माना जाता।

यह भाष्य भी सिद्धान्ती नहीं है क्योंकि जब 'तक्र न्याय' से बाध होता है तो उत्सर्ग की हमेशा के लिए अप्रवृत्ति हो जाती है। जैसे "सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम् कौण्डिन्याय तक्रम्" इस वाक्य में जब कौण्डिन्य को तक्र दिया गया तो तक्र—दान के पूर्व या पश्चात् दही नहीं दिया जाता। इसी तरह 'विन्मतोर्लुक् से 'विन्' के लोप द्वारा जब टिलोप का बाध हुआ तो विन् के लोप के बाद भी टिलोप की प्रवृत्ति नहीं होगी। इस तरह भाष्यकार का जातिपक्षाश्रयण प्रयास निष्फल ही दिखता है। फिर भी इस भाष्य से पूर्वस्थानिक का अन्तरङ्ग होना सिद्ध नहीं होता क्योंकि महाभाष्य-जैसे विशाल ग्रंथ में अनेक जगह आयी हुई अन्तरङ्ग-बहिरङ्ग की चर्चाओं में कहीं भी इस प्रकार के बहिरङ्गासिद्धत्व की चर्चा नहीं आयी है, जिसमें कि पूर्वस्थानिक को अन्तरङ्ग माना गया हो।

तीसरी बात यह है कि इस परिभाषा में अन्तरङ्ग और बहिरङ्ग में आये हुए 'अङ्ग' शब्द 'निमित्त कारण' का बोधक है; समवायि कारण का नहीं। "स्योनः" में भाष्यकार ने स्पष्ट कहा है कि ऊन शब्द का आश्रय लेकर प्राप्त यणादेश बहिरङ्ग है, और केवल 'न' शब्द का आश्रय लेकर प्राप्त लघूपधगुण अन्तरङ्ग है। इससे साफ जाहिर है कि परिभाषा में आये हुए 'अङ्ग' शब्द से उसी निमित्त का ग्रहण होगा जो सूत्र में आये हुए सप्तम्यन्त पद का या पञ्चम्यन्त का विषय है।

**नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः ॥**

---

ब्राह्मणकुलमित्यत्र स्वमोर्नपुंसकात् ७. १. २३ इति लुक् कस्मान्न भवतीत्युपक्रम्य नाप्राप्ते लुक्यम् आरभ्यते । स यथैव सुपो धातुप्रातिपदिकयोः (२. ४. ७१) इत्येतं बाधते एवं 'स्वमोर्नपुंसकात्)' (७. १. २३) इत्येतमपि बाधेत ॥ न बाधते । किं कारणम् 'येन नाप्राप्ते तस्य बाधनं भवति ॥ नचाप्राप्ते सुपो धातुप्रातिपदिकयोः इत्येतस्मिन्नेतदारभ्यते स्वमोर्नपुंसकात् इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च । अथवा मध्येऽपवादाःपूर्वान् विधीन् बाधन्ते इत्येवमयममागमः "सुपो धातुप्रातिपदिकयोः" इत्येतं बाधते "स्वमोर्नपुंसकात्" इत्येतन्न बाधते । ततः उक्तम् "एवं तर्हि "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यसिद्धत्वाद् बहिरङ्गलक्षणस्यामोऽन्तरङ्गलक्षणो लुक् न भविष्यति" ॥ नैषा परिभाषेहोत्तरपदाधिकारे शक्या विज्ञातुम् । इह हि दोषः स्यात् द्विषन्तपः—इति । तस्माच्छिमन्यमित्येव भवितव्यम् ।

**अत्र कैयटः**—द्विषन्तप इत्यत्र संयोगान्त लोपो न स्यात् इतिकेचिदाहुः । ××× अन्येऽसाधु मन्यमाना अनुस्वाराप्राप्तिलक्षणं दोषमाहुरिति । उत्तरपदाधिकारे यदि परिभाषेयं प्रवर्तेत तदानुस्वारेऽन्तरङ्गे कर्तव्ये बहिरङ्गस्य मुमोऽसिद्धत्वादनुस्वारो न स्यात् । 'परन्तप' इत्यत्र अनुस्वाराभावे परसवर्णाभावान्नकारश्रवणं न स्यात् । अतः उत्तरपदाधिकारस्थबहिरङ्गस्यानयासिद्धता न भवतीतिभाष्याशयः । परन्तु भाष्यमिदं पूर्वपक्ष्युक्तिः । अतो न प्रामाण्यमस्य भाष्यस्य पूर्वपक्ष्युक्तित्वञ्चास्य उद्योते स्पष्टमुक्तम्—कार्यकालपक्षेऽपि त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्तेर्विसर्जनीयसूत्रे भाष्ये वार्तिकखण्डकसिद्धान्तिनोक्तत्वात् यथोद्देशपक्षेण साधयितुं

---

"इच एकाचोऽम् प्रत्ययवच्च" इस सूत्र के भाष्य में जो कहा गया है कि असिद्धं बहिरङ्गमन्तरङ्गे" यह परिभाषा उत्तरपदाधिकारस्थ बहिरङ्गों की असिद्धता नहीं करती है। यह उक्ति पूर्वपक्षी की है; इसलिए आदरणीय (मान्य) नहीं है। यह परिभाषा उत्तरपदाधिकारस्थ बहिरङ्गों की भी असिद्धता करती ही है।

यद्यपि उत्तरपदाधिकारस्थ बहिरङ्गों भी की असिद्धता इस परिभाषा के द्वारा होती है, ऐसा मानने पर "परन्तपः" में अनुस्वार कर्तव्य में मुम् की असिद्धता होने से दोष दिखाई देता है तथापि वहाँ तो यह परिभाषा इस लिए नहीं लगेगी कि अनुस्वार विधायक शास्त्र त्रिपादी है, उसे यह षाष्ठी परिभाषा देखती ही नहीं है। इसलिए दोष नहीं होगा। त्रिपादीस्थ अन्तरङ्ग कर्तव्य में यह परिभाषा नहीं लगती है यह बात पहले बतायी गयी है "अरुन्तुदः" में संयोगान्त लोप कर्तव्य में मुम् की जो असिद्धता नहीं हुई, इसका भी कारण इस परिभाषा की त्रिपादी में अप्रवृत्ति ही है। नव्य मत में (दीक्षित के मत में) भी यथोद्देश पक्ष में अन्तरङ्ग परिभाषा की त्रिपादी में

**आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्व-मसिद्धत्वादित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम् ॥**

---

शक्यत्वाच्चेदं प्रयोजनं शिथिलमिति ॥ अत्र तदप्रवृत्तौ मानाभावाच्च श्रियंमन्य इत्येव रूपमित्याहुरित्यन्तेन ग्रन्थेन ।

ननु यदि उत्तरपदाधिकारस्थस्य बहिरङ्गस्याप्यसिद्धिरुच्यते तर्हि परन्तप इत्यत्रानुस्वारे कर्तव्ये मुमोऽसिद्धिः कथं नेत्यत आह **परन्तप इत्यादाविति** । त्रिपाद्यां यथोद्देशपक्षे बहिरङ्गपरिभाषाया अप्रवृत्तिरितिस्वीकारादेव परन्तप इत्यत्रानुस्वारः सिद्ध्यतीति भावः **नव्यमते=दीक्षितमते** इत्यर्थः । प्रयोजनस्य परन्तप इत्यादाव-नुस्वारस्यान्यथैवसिद्ध्या दीक्षितमतेऽपि तस्य भाष्यस्यासिद्धान्तिभणितत्वमिति भावः ।

यथा पूर्वत्रासिद्धमित्यधिकारे परिभाषेयं न प्रवर्तते तथा आभीयाधिकारेऽपि परस्परासिद्धत्वादन्तरङ्गबहिरङ्गभावस्याभावादिति प्रतिपादयति आभीयेऽन्तरङ्ग इत्यादिना भाष्ये स्पष्टमित्यन्तेन ग्रन्थेन । यथा पपुष इत्यत्र । अत्र हि पपौ इत्यर्थे क्वसुप्रत्यये शसि पपा वस् अस् इतिस्थिते सम्प्रसारणे 'आतो लोप इटि च' ६. ४. ६४ इत्याकारलोपः प्राप्तः किन्वन्तरङ्ग आलोपे कर्तव्ये प्रकृतिप्रत्ययसापेक्षस्य सम्प्र-सारणस्य बहिरङ्गस्यासिद्धत्वेनालोपो न स्यादतः उच्यते यदियं परिभाषा तत्र न प्रवर्तते आभीयाधिकारे परस्परासिद्धत्वेनान्तरङ्गबहिरङ्गभावस्याविद्यमानत्वादिति ग्रन्थाशय इति केचित् । अन्ये त्वस्याः पङ्क्तेरन्यादृशमेवाशयं वर्णयन्ति तथाहि-वाह

---

अप्रवृत्ति मानी ही गयी है। इस तरह पूर्वोक्त भाष्य के जो उदाहरण दिये गये है, उनकी अन्यथा सिद्धि हो जाती है! इस लिए उत्तरपदाधिकारस्थ बहिरङ्ग की इस परिभाषा से असिद्धता नहीं होती इस उक्ति को दीक्षित के मत से भी एकदेशी की उक्ति मानना आवश्यक है।

आभीय अन्तरङ्ग कर्तव्य में समानाश्रय आभीय बहिरंग की असिद्धता इस परि-भाषा से नहीं की जा सकती क्योंकि वहाँ "असिद्धवदत्राभात्" सूत्र से कर्तव्य समा-नाश्रय आभीय के प्रति कृत समानाश्रय आभीय की असिद्धता हो जाती है। यह "असिद्धवदत्राभात्" ६.४.२२ सूत्र के भाष्य में स्पष्ट है। वहाँ कहा गया है कि "असिद्धवदत्राभात्" ६.४.२२ इस सूत्र के रहते हुए भी "पपुषः पश्य" में पपुषः' यहाँ पर 'पपा, उस्, अस्' ऐसी स्थिति में 'आतो लोपः'—से आलोप हो इसके लिए वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यम्" यह वार्तिक बनाकर आलोप कर्तव्य में अन्तरङ्ग परिभाषा से प्राप्त सम्प्रसारण की असिद्धता को रोकना जरुरी है। अन्यथा वसुसम्प्रसारण बहिरङ्ग है। उसकी असिद्धता होने पर अजादि आर्धधातुक पर में नहीं होने से लोप नहीं होगा। इसलिए वार्तिक मानने की आवश्यकता दिखा कर भाष्यकार ने कहा है कि अन्तरङ्ग और बहिरङ्ग ये प्रतिद्वन्द्वी शब्द है। इसलिए दोनों

ऊठ् ६. ४. १३२ इति सूत्र ज्ञापितत्वादस्याः परिभाषाया अपि तद्देशस्थत्वाभीयत्व-मस्त्येव । अतोऽत्र आतो लोप इट् च ६. ४. ६४ इत्यस्यान्तरङ्गपरिभाषायाश्चाभीया-सिद्धत्वमुक्तमिति संभाव्यते । अन्तरङ्गशास्त्रस्यातो लोप इत्यस्य यन्निमित्तं तदेवान्त-रङ्गपरिभाषाया अपि निमित्तमिति । तथाच समानाश्रयायामाभीयायामन्तरङ्गपरि-भाषायां प्रवर्तयितव्यायां समानाश्रयस्य आतो लोप इत्यस्यासिद्धत्वमित्याभीया-सिद्धत्वात् परिभाषादृष्ट्याऽऽतोलोपस्याभावेनान्तरङ्गपरिभाषाऽप्रवृत्त्या संप्रसारणस्या-सिद्धत्वाभावेनाल्लोपे कृते पपुष इति सिद्ध्यति । एष एवाभीयेऽन्तरङ्गे इत्यादिपरि-भाषेन्दुशेखरग्रन्थस्याशय इति तन्न मनोरमम् तत्र हि आभीयबहिरङ्गस्य समानाश्रय-स्य नानेनासिद्धत्वमित्युक्तत्वात् । भवदुक्तौ तु अन्तरङ्गशास्त्रपरिभाषयोर्मध्येऽसिद्धत्व-मर्थात् अन्तरङ्गपरिभाषादृष्ट्याऽन्तरङ्गस्य आतो लोपस्यासिद्धत्वं प्रतिपादितमिति न संवदते मूलग्रन्थेन । अतो मूलस्याशय इत्थं मन्तव्यः समकालप्राप्ते समानाश्रये चाभीये कार्यद्वये तयोरन्तरङ्गबहिरङ्गाभावात् परिभाषाया अप्रवृत्तिरिति । आभीय-कार्यं चतुर्धा । (१) जातंसमानाश्रयम् (२) जातं व्याश्रयम् (३) समकालप्राप्तं समा-नाश्रयम् (४) समकालप्राप्तं व्याश्रयम् । तत्र जातसमानाश्रयकार्यं यथा आस्ताम् इत्यत्र । अस् भुवि इत्यस्माद्धातो लँङि तसि तसस्तामादेशे कृते श्नसोरल्लोपः ६. ३. इत्यल्लोपे तस्य चाभीयत्वेनासिद्धत्वादाडजादीनामित्याडागमो जायते । अत्रान्तरङ्ग-परिभाषाप्रवृत्तावपि न दोषः । जातव्याश्रयस्योदाहरणं पपुष इति । समकालप्राप्त समानाश्रयस्योदाहरणं जज्ञे इति । अत्र जनी प्रादुर्भावे इत्यस्माद् धातोर्लिटि त एशादेशेऽनुबन्धलोपे जन् ए इत्यत्र द्वित्वे कृते एत्वाभ्यासलोपौ गमहनजनखनघसाम्० —६. ४. ९८ इत्युपधालोपश्च प्राप्ताः । तत्र प्रथमोपस्थितकिल्लिङ्रूपनिमित्तकत्वे-नान्तरङ्गत्वाद्यद्येत्वाभ्यासलोपौ स्यातान्तदा जज्ञे इति रूपं न सिद्ध्येत् । अतः आभीयेऽन्तरङ्गे कर्तव्ये आभीयस्य बहिरङ्गस्यानेनासिद्धत्वं न भवति; तयोः परस्परम-सिद्धत्वेनान्तरङ्गबहिरङ्गत्वाभावेन असिद्धपरिभाषाया अस्या अप्रवृत्त्या उपधालोपस्य नित्यस्यैव प्रवृत्त्या एत्वाभ्यासलोपयोरप्रवृत्त्या जज्ञे इति सिद्ध्यति । इत्येष एव मूल-स्याशयः कल्पनीयः ।

---

की वादी और प्रतिवादी के रूप में उपस्थिति जहाँ रहेगी, वहीं बहिरङ्ग परिभाषा से असिद्धता होगी । यहाँ तो बहिरंग सम्प्रसारण अन्तरङ्ग लोप का निमित्त है उनमें प्रतिद्वन्द्विता कहाँ है । यहाँ व्याश्रय होने के कारण 'असिद्धवदत्राभात्' की और प्रतिद्वन्द्विता के अभाव में परिभाषा की अप्रवृत्ति दिखाकर भाष्यकार ने संकेत किया कि समानाश्रय में सूत्र जन्य असिद्धता के कारण प्रतिद्वन्द्विता नहीं रहने से बहिरङ्ग परिभाषा नहीं लगेगी ।

"आभीये बहिरङ्गे.........दित्यसिद्धवत्" यह पंक्ति सुसंगत नही बैठती है

असिद्धवदत्राभात् ६. ४. २२ इति सूत्रस्थ भाष्यं यथा—आरभ्यमाणेऽप्येतस्मिन् योगे सिद्धं वसुसंप्रसारणमज्विधौ (इति वार्तिकं कर्तव्यं भवति) आरभ्यमाणेऽप्येतस्मिन् योगे वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यम् किं प्रयोजनम् ? पपुषः पश्य तस्थुषः पश्य...वसोः सम्प्रसारणे कृते 'अचि' इत्याकारलोपादीनि यथा स्युरिति ।। किं पुनः कारणं न सिद्धयन्ति ? बहिरङ्गलक्षणत्वादसिद्धत्वाच्च ।। बहिरङ्गलक्षणं चैव हि वसु सम्प्रसारणमसिद्धञ्च ।। (एवँ च विना वार्तिकमाकारलोपो न स्यात् । अतः वार्तिकं कर्तव्यमिति) + × × (न कर्तव्यम्) समानाश्रयवचनात् सिद्धम् । समानाश्रयमसिद्धं भवति । व्याश्रयं चैतत् । इह तावत् पपुषः पश्य, तस्थुषः पश्य...वसावाकारलोपादीनि, वस्वन्तस्य विभक्तौ सम्प्रसारणम् ।...किं वक्तव्यमेतत् ? नहि कथमनुच्यमानं गंस्यते ? अत्रग्रहणसामर्थ्यात् । ननु चान्यदत्रग्रहणस्य प्रयोजनमुक्तम् । किमुक्तम् ? 'अत्र' ग्रहणं विषयार्थमिति । अधिकारादप्येतत् सिद्धमिति । इह—पपुषः...द्वौ हेतू उपदिष्टौ-बहिरङ्गलक्षणञ्चासिद्धत्वञ्चेति । तत्र भवेदसिद्धत्वं प्रत्युक्तम्, बहिरङ्गलक्षणन्तु नैव प्रत्युक्तम् । नैष दोषः । बहिरङ्गमन्तरङ्गमिति च प्रतिद्वन्द्विभाविनावेतावर्थौ । कथम् सत्यन्तरङ्गे बहिरङ्गम्, सति च बहिरङ्गेऽन्तरङ्गम् । नचान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति । नानभिनिवृत्ते बहिरङ्गेऽन्तरङ्गं प्राप्नोति । तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्येति भाष्यम् ।

---

क्योंकि पपुषः में वसोः सम्प्रसारणम् ६.४.१३१ से सम्प्रसारण और 'सम्प्रसारणाच्च' ६.१.१०८ से पूर्वरूप करने के बाद पपा उस् अस् इस स्थिति में भाष्यकार ने प्रश्न किया कि 'आतो लोपः' इस सूत्र की दृष्टि में बहिरंग सम्प्रसारण की असिद्धता हो जाने से या 'असिद्धवदत्राभात् ६.४.२२ से कृत आभीय कार्य सम्प्रसारण की आलोपरूप आभीय कर्तव्य में असिद्धता हो जाने से आलोप नहीं होगा । इसके बाद यह उत्तर दिया कि समानाश्रय आभीय कर्तव्य में ही कृत आभीय की असिद्धता होती है यहाँ तो व्याश्रय (असमानाश्रय) आभीय कर्तव्य है । इसलिए आभीय प्रयुक्त असिद्धता होने का खटका नहीं है । रही बहिरङ्गासिद्धत्व के कारण आलोप की अप्रसक्ति की बात, वह भी यहाँ लागू नहीं होती; क्योंकि अन्तरङ्ग और बहिरङ्ग ये दोनों प्रतिद्वन्द्व भाव को प्रकट करते हैं । इसलिए वादी और प्रतिवादी—द्वन्द्वी और प्रतिद्वन्द्वी—की तरह इन्हें एक काल में एक साथ रहने पर ही अन्तरङ्ग के प्रति बहिरङ्ग की असिद्धता हो सकती है । जहाँ बहिरङ्ग कार्य के हुए बिना अन्तरङ्ग की प्राप्ति ही नहीं हो; वहाँ तो बहिरंग अन्तरङ्ग का निमित ही माना जायगा । इसलिए उन में प्रतिद्वन्द्विता कहाँ ? प्रतिद्वन्द्विता के अभाव में परिभाषा की प्रवृत्ति नहीं होगी । इस तरह बहिरङ्गासिद्धत्व का परिहार दिखाया गया । जैसे 'स्योनः' इत्यादि में यण् और गुण की एक

अत्र भाष्ये स्पष्टं दृश्यते यत् पपुष इत्यादौ वसोः सम्प्रसारणे पपा उस् अस् इति स्थिते आतो लोप इटि चेति दृष्ट्या संप्रसारणस्य बहिरङ्गासिद्धत्वादाभीयासिद्धत्वाच्चाकारलोपः कथं स्यादित्याशङ्काया व्याश्रयत्वेनाभीयासिद्धत्वं न स्यादिति समाधानं दत्तम्; बहिरङ्गासिद्धत्वन्तु निराकृतम् "बहिरङ्गान्तरङ्गयोः प्रतिद्वन्द्विभाविनावर्थौ मत्वात्रान्तरङ्गबहिरङ्गयोर्युगवत्समवस्थानाभावात्, बहिरङ्गेऽजातेऽन्तरङ्गस्यात्र प्राप्त्यभावात् निमित्तमेव बहिरङ्गमन्तरङ्गस्येति कृत्वा। यथा स्योन इत्यत्र यणगुणयोर्युगपत्प्राप्तिरस्ति न तथा पपुष इत्यादौ, सम्प्रसारणप्राप्तिकाले आल्लोपादीनां निमित्ताभावादप्रसङ्गः, आल्लोपकाले निर्वृत्तं सम्प्रसारणम्। ततश्च निमित्तमेवाल्लोपादीनां सम्प्रसारणमिति नास्ति परिभाषोपस्थानमिति कैयटेनोक्तम्। तेनैवाग्रे प्रोक्तम् "यद्येवं पचावेदमित्यादावपि नाकृते आद्गुणे 'एत ऐ' ३. ४. ९३ इत्यैत्वं प्राप्नोतीति निमित्तनिमित्तिभावात्-परिभाषाया अनुपस्थानप्रसङ्गः एवं तर्ह्यन्यथा व्याख्यायते —'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येषा परिभाषा, वाह ऊठ्' ६. ४. १३१ इत्यत्र ज्ञापितेत्याभाच्छास्त्रीया। अथवा विप्रतिषेधे परं कार्यम् इत्यत्रोपसंख्याताऽपि संज्ञापरिभाषाणां कार्यकालत्वाद्वसुसंप्रसारणदेशत्वादाभाच्छास्त्रीया आभाच्छास्त्रीयेष्वाल्लोपादिषु कर्तव्येषु असिद्धेति न प्रवर्तते। तदप्रवृत्तौ चाल्लोपादीनि भवन्तीति वाक्यार्थः (तात्पर्यार्थ इत्यर्थ इत्युद्योते)। अत्र "**असिद्धेत्यस्य** नैवास्ति आल्लोपदृष्टौ परिभाषेत्यर्थः। भाष्यस्थपदानि अस्मिन्नर्थे योज्यन्ते तेनैव—**सत्यन्तरङ्गे** इति बुद्ध्या-

---

साथ प्राप्ति हैं, वैसे 'पपुषः' में नहीं है। सम्प्रसारण की प्रवृत्ति काल में आलोपादि की प्राप्ति अजादि आर्धधातुकत्वादि रूप निमित्त के अभाव के कारण नहीं थी, जब आलोप की प्रवृत्ति हुई; तब तो सम्प्रसारण हो चुका था, इस पर भी वह सम्प्रसारण यहाँ आलोपादि का निमित्त ही है। इसलिए "असिद्धं बहिरङ्गमन्तरङ्गे" इस परि- की उपस्थिति यहाँ नहीं होगी यह कैयट ने कहा। कैयट ने ही "पचावेदम्" में भी कहीं पूर्वोक्त युक्ति के आधार पर जात बहिरङ्ग की असिद्धता न हो इस चिन्ता से चिन्तित होकर भाष्य की व्याख्या और ढंग से की। उसने लिखा है कि यह परिभाषा 'वाह ऊठ्' सूत्र से ज्ञापित होने के कारण आभीय है। यह आभीय आलोपादि कर्तव्य में असिद्ध है। इसलिए यहाँ प्रवृत्त नहीं होगी। 'असिद्धत्व' का अर्थ है अभावाप्रतियोगित्व। अर्थात् आभीय में यह परिभाषा है ही नहीं।

इस तरह परिभाषा की प्रवृत्ति नहीं होने से आलोप आदि कार्य होते हैं। भाष्य के पद 'सति अन्तरङ्गे बहिरङ्गम्' में कैयट ने इस तरह संगति बिठायी कि अन्तरङ्ग रहने पर भी जब परिभाषा वहाँ स्वयं असिद्ध है, तो कैसे प्रवृत्त होगी। वसु सम्प्रसारण यह, परिभाषा का और आलोपादि का एक आश्रय है। इस तरह यहाँ समानाश्रय होने के कारण परिभाषा की असिद्धता हो ही जायगी।

पेक्षित इत्यर्थः। परिभाषाप्रवृत्तयेऽन्तरङ्गबहिरङ्गयोः परिभाषायाश्च विद्यमानत्वेन बुद्धिसन्निधिरपेक्षितः। अत्र तु असिद्धत्वात्परिभाषायाः, परिभाषादृष्ट्या तयोरप्य-सिद्धत्वान्न तथा बुद्धौ सन्निधानमिति भाव.। तत्र **निमित्तमेवेति**=परिभाषाया असिद्धत्वादप्रवृत्ताविति भावः। वसुसम्प्रसारणं चैकं परिभाषाया आल्लोपादीनां चाश्रय इति समानाश्रयत्वाद्भवत्यसिद्धत्वं परिभाषायाः इति कैयटः। वस्तुतस्तु स्वस्या असिद्धत्वेऽपि अदृष्टपिशाचन्यायेनासिद्धयाप्यनयान्तरङ्गं प्रति बहिरङ्गासिद्धत्व-बोधने न कापि बाधा दृश्यते। अदृष्टपिशाचन्यायव्याख्या (२९) पृष्ठे कृता द्रष्टव्या।

समानाश्रयत्वं च तत्प्रयोगप्राप्तासिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायापेक्षया न्यूनानतिरिक्ताश्रयकत्वम् आश्रयणं स्थानित्वेनैव-निमित्तत्वेनैव-इति नाग्रहः। किन्तु यथाकथंचित्। विकारकृतमतिरिक्तत्वं तु न, जहीत्यादेरनुदाहरणत्वापत्तेः। 'पपुष' इत्यत्र यथा न्यूनत्वाद् वसुसम्प्रसारणाल्लोपयोः समानाश्रयत्वं नास्ति तथाल्लोपपरि-भाषयोरपि समानाश्रयत्वं नास्तीति कैयटोक्तं चिन्त्यम्। आभीयस्य अन्तरङ्गस्य परिभाषामाभीयां प्रत्यसिद्धत्वात् परिभाषया प्रतिपाद्याभावादसिद्धत्वप्रतिपादनासम्भव इति कथनं तु यथाकथंचित् समर्थयितुं शक्यम्। अन्तरङ्गशास्त्रत्वस्य लिङ्गत्वेन परि-भाषायाश्चान्तरङ्गशास्त्रस्थत्वेन समानाश्रयत्वमपि शक्यते योजयितुम् किन्तु मूले "बहिरङ्गे समानाश्रयत्वमाभीयत्वञ्च यद्दर्शितं तदनया रीत्या नैव समर्थितं भव-तीति। मिश्रपादा अपि मूले बहिरङ्गे समानाश्रयत्वमाभीयत्वमिति विशेषणमनुप-युक्तमेवेत्याहुः।

---

परन्तु यदि विचार करें तो मालूम होगा कि परिभाषा की असिद्धता होने पर यह परिभाषा अदृश्य हो जायगी परन्तु अन्तरङ्ग और बहिरंग की दृष्टि में अदृश्य होकर भी यह परिभाषा अदृष्ट पिशाच न्याय से अन्तरङ्ग के प्रति बहिरंग को असिद्ध करे; इसमें कोई बाधा दिखाई नहीं पड़ती। पिशाच "पिशाच" सिद्ध किये हुए व्यक्ति से तथा जिस पर वह उसका प्रयोग करता है, उससे अदृश्य रहता है; फिर भी वह पिशाच उसका कार्य कर देता है—पिशाची का इष्ट और अभिचार्य का अनिष्ट—कर देता है। इसी तरह स्वयं अदृश्य परिभाषा अन्तरङ्ग के प्रति बहिरङ्ग की असिद्धता करे इसमें क्या संदेह है? इस तरह परिभाषा के असिद्ध होने से आभीय प्रकरण में बहिरङ्गासिद्धत्व नहीं होगा; ऐसा मानकर चलनेवाला कैयट यहाँ भ्रान्त दिखाई पड़ता है। कैयट ने जो आलोप विधायक सूत्र और परिभाषा को समानाश्रय बताया है; वह भी ठीक नहीं है; क्योंकि समानाश्रय का तात्पर्य है कि दोनों के निमित्त बराबर हो न थोड़ा कम हो, न थोड़ा भी ज्यादा। यहाँ वैसा समानाश्रय भी नहीं है इस दृष्टि से भी यहाँ का कैयट—ग्रन्थ अटपटा सा ही दिखता है। इसलिए मूल ग्रन्थ की संगति के लिए यदि यह कहें कि अन्तरङ्ग आभीय की आभीय-परिभाषा

**एवं सिचि वृद्धेर्येन नाप्राप्तन्यायेनान्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीतीको गुण इति सूत्रे भाष्ये स्पष्टम् ॥ ५१ ॥**

---

न सिच्यन्तरङ्ग भवति अर्थात् सिच्यन्तरङ्गपरिभाषा न प्रवर्तते 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' ७. २. ५ इति सूत्रस्थश्विग्रहणाद् ज्ञापकात्। अन्यथा अश्वयीदित्यत्र श्वि+इ+ईत् इत्यवस्थायामन्तरङ्गत्वाद् वृद्धिं बाधित्वा गुणेऽयादेशे च कृते यान्तलक्षणनिषेधेनैव सिद्धे श्विग्रहणं व्यर्थं स्यात्। व्यर्थं सत्तज्ज्ञापयति—**न सिच्यन्तरङ्गमिति**। अधुना प्रथमत एव वृद्धिः स्यात्तदवारणाय श्विग्रहणम्। इत्थं स्वांशे चरितार्थस्य श्विग्रहणस्य फलमन्यत्र भवति **अनेनायीदित्यत्र**। अत्र हि यङ्लुऽन्ताण् णीञ् ज्ञापणे इत्यस्माद् धातोरभ्यासगुणादिषु कृतेषु अनेनी+इस्+ईत् इति स्थितौ वृद्धिगुणयोः प्राप्तयोः अन्तरङ्गत्वाद् गुणे ह्म्यन्तेति निषेधो न। पूर्वोक्तज्ञापनेन सिच्यन्तरङ्गाभावात्प्रथमत एव वृद्धौ अनेनायीत् इति सिद्ध्यति। इत्थं सिच्यन्तरङ्ग नेति परिभाषायां संकोचः कर्तव्य इति केचित्। नागेशस्तु नैतदपूर्ववचनं किन्तु येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति (प० ५८) इति न्यायेनैव सिद्धम्। नाप्राप्ते गुणे आरभ्यमाणाया वृद्धेर्गुणबाधनं स्वतः सिद्धमपवादत्वात्। इत्थं न्यायसिद्धमेव तद्वचनं नापूर्वमिति संकोचोऽनावश्यक इत्याह **एवंसिचीत्यादिना**। इको गुणवृद्धी १. १. ३ इति सूत्रे **भाष्ये** इति=यदि सिच्यन्तरङ्गं भवति-अकार्षीत्, अहार्षीत् गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति। माभूदेवं हलन्त-

---

के प्रति असिद्धता हो जायगी इसलिए प्रतिपादच के अभाव के कारण आभीय प्रकरण में अन्तरङ्ग-बहिरङ्गासिद्धि नहीं होगी। इस परिभाषा में अन्तरङ्ग शास्त्रत्व ही लिङ्ग है, अन्तरङ्गत्व को देखकर ही परिभाषा प्रवृत्त होती है, जब अन्तरङ्गत्व ही नहीं, चिह्न ही नहीं है तो क्या देखकर परिभाषा की प्रवृत्ति होगी। परिभाषा जब अन्तरङ्ग चिह्न को देखकर प्रवृत्त होगी; तब वह भी अन्तरङ्ग शास्त्रस्थ बन जायगी। इस तरह अन्तरङ्ग शास्त्र और परिभाषा दोनों के निमित्त बराबर हो जाने के कारण समानाश्रयत्व भी परिभाषा में आ जायगा। फिर भी मूल में बहिरङ्ग में जो समानाश्रय और आभीय ये विशेषण जोड़े गये हैं, वे अनुपयुक्त ही प्रतीत होते हैं। विद्वान् ही इस पंक्ति की संगति और असंगति का निर्णय कर सकते हैं।

"न सिच्यन्तरङ्ग-मस्ति' सिच् के परे रहते अन्तरङ्ग नहीं होता अर्थात् सिच् को निमित्त मानकर प्राप्त वृद्धि आदि यद्यपि बहिरंग है; फिर भी उसकी असिद्धता करके वहाँ अन्तरंग गुण आदि कार्य नहीं होता। इसका कारण यह है कि वहाँ सिचि वृद्धि "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति"(प० ५८)जिसकी आवश्यक प्राप्ति रहने पर जो नूतन विधि बनाते हैं, वह आरब्ध नूतन विधि उसकी या उनकी बाधिका होती है इस न्याय से अन्तरंग गुण आदि का 'अपवादत्वात्'

स्य इत्येवं भविष्यति । इह तर्हि न्यस्तारीत्, न्यदारीत् गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च नेटि (७. २. ४) इति प्रतिषेधः ।। माभूदेवम् । 'लून्तस्य' इत्येवं भविष्यति । "लून्तस्य" इत्युच्यते, न चेदं लून्तम् । 'लून्तस्य' इत्यत्र वकारोऽपि निर्दिश्यते । किं वकारो न श्रूयते । लुप्तनिर्दिष्टो-वकारः ।। यद्येवं मा भवानवीत्, मा भवान् मवीत् अत्रापि प्राप्नोति । अविमव्योर्नेति वक्ष्यामि । तद्वक्तव्यम् ? न वक्तव्यम् ? णिश्विभ्यां तौ निमातव्यौ (परिवर्तनीयावित्यर्थः) । यद्यप्येतदुच्यते । अथवैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति । गुणे कृतेऽयादेशे च यान्तानां नेत्येव प्रतिषेधो भविष्यति ।। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-न सिच्यन्तरङ्गं भवतीति । यदयम् "अतो हलादेर्लघोः" इत्यकारग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? अकारग्रहणस्यैतत्प्रयोजनम्-इह मा भूत्—अकोषीत्, अमोषीत् । यदि सिच्यन्तरङ्गं स्यात् अकारग्रहणमनर्थकं स्यात् । गुणे कृतेऽलघुत्वाद् वृद्धिर्न भविष्यति । पश्यति त्वाचार्यः—न सिच्यन्तरङ्गं भवतीति । ततोऽकारग्रहणं करोति ।। नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ? यत्र गुणः प्रतिषिध्यते, तदर्थमेतत् स्यात् । न्यकुटीत्, न्यपुटीत् इति । यत्तर्हि णिश्व्योः प्रतिषेधं शास्ति, तेन नेहान्तरङ्गमस्तीति इति दर्शयति । यच्च करोत्यकारस्य ग्रहणं लघोरिति कृते । इति।

**अत्र कैयटः** 'न सिचि' इति न्यायादप्येतत् सिद्ध्यति, येन नाप्राप्तिन्यायेनान्तरङ्गस्य (गुणस्य) वृद्ध्या बाधात् । प्रयोजनं च चिरिजिर्योर्यङ्लुङन्तानाञ्च नयत्यादीनाम् 'अचिरायीत्' 'अजिरायीत्' 'अनेनायीत्' 'अचेचायीत्' इत्यादौ वृद्धिसिद्धिः । अन्यथा गुणायादेशयोः कृतयोर्यान्तत्वाद् वृद्धिप्रतिषेधः स्यादित्याह । **कैयटेन** "न सिच्यन्तरङ्गमस्तीति नापूर्ववचनमिति स्पष्टितमेव । उद्योते चात्र "यदितर्हीति भाष्य प्रतीकमादाय प्रोक्तम्—अत्र यदीत्यनेनापवादत्वात्तद्विषयेऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम् । इत उत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशि-सिद्धान्त्येकदेशिनोरिति बोध्यमित्युक्तम् । अस्य सन्दर्भस्यान्ते नागेशेनोद्योते न्यगादि—(येन नाप्राप्तिन्यायेन) बाध्यसामान्यचिन्तया सकलान्तरङ्गबाध इति बोध्यम् । एवञ्च न

---

नित्य बाध हो जाता है । अतः उक्त वार्तिक को अपूर्व वचन न मानकर फलितार्थ कथन मात्र मानना चाहिए । जात-बहिरङ्गा-सिद्धि मानने का फल यह हुआ कि पचावेदम् में (पच् धातु के लोट् लकार के उत्तम पुरुष द्विवचन के रूप (पचाव) को इदम् के साथ गुण सन्धिकरने पर बने हुए रूप में) "एत ऐ" ३.४.९२ से 'ऐ' आदेश नहीं हुआ । क्योंकि 'ऐ' आदेश कर्तव्य में कृत बहिरंग गुणादेश की असिद्धता हो गयी । पदद्वय सम्बन्धी दो वर्णों की अपेक्षा होने के कारण गुण यहां बहिरंग है । यद्यपि "इत ऐः" इत्यादि न्यास से काम निकाला जा सकता है; तथापि वह मार्ग अपाणिनीय होगा ।।५१।।

**नन्वेवमक्षद्यूरित्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह :—**

**नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।।५२।।**

**अत्र 'षत्वतुकोरिति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् । अन्यथाधीत्य प्रेत्येत्यादौ**

---

ज्ञापकोपयोगः, नापि ज्ञापकसंभवः नापि प्रयोजनम् वार्णादाङ्गं बलीय इति परिभाषयाऽचिरायीत् इत्यादौ गुणे कृतेऽपि अयादेशात् पूर्वं वृद्धिप्राप्तेः । न वा वकारप्रश्लेषस्य फलम् नापि अविमव्योः प्रतिषेधस्य इति शवधातौ वृद्धिविकल्प एवेति बोध्यम् इति । एतेन "यदि तर्हि सिच्यन्तरङ्गं भवति" इत उत्तरग्रन्थस्यासिद्धान्त्युक्तित्वं सूचितमिति दिक् । ५१

**नाजानन्तर्य...५२**

नन्वेवमिति । अन्तरङ्गपरिभाषास्वीकारे । अन्तरङ्गोयणिति= बहिरङ्गत्वेन विवक्षितस्य शास्त्रस्य निमित्तसमुदायान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वमिति लक्षणसमन्वयाद् यणोऽन्तरङ्गत्वम् तथाहि बहिरङ्गत्वेन विवक्षितस्य ऊठ्शास्त्रस्य निमित्तसमुदायो दिव्क्विप् इति समुदायः तस्य मध्ये निमित्तमापतति यणः, वकारस्थानिकस्य ऊकारस्य तदन्तर्गतत्वात् इति बहिरङ्गत्वेन विवक्षितोठ्शास्त्रीयनिमित्तसमुदायान्तर्भूतनिमित्तकत्वेन यणोऽन्तरङ्गत्वं सिद्धमिति । तथाचान्तरङ्गे यणि कर्तव्ये बहिरङ्गस्य ऊठोऽसिद्धत्वेनाच्परत्वाभावाद् यण् न स्यादतः "**नाजानन्तर्ये** इति परिभाषा स्वीक्रियते । अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्यासिद्धत्वं न भवतीति परिभाषार्थः । 'षत्वतुकोरसिद्धः' ६. १. ८६ इति सूत्रे तुग्ग्रहणमेतस्या ज्ञापकम् । अधीत्य, प्रेत्य इत्यादौ समासेऽनञ्पूर्वोक्त्वो ल्यप् ७. १. ३७ इति विहिते

---

**नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ५२**

बहिरङ्ग परिभाषा मानने पर 'अक्षद्यूः' इत्यादि में बहिरङ्ग ऊठ्की असिद्धता हो जाने पर अन्तरङ्ग यण् नहीं होगा । अक्षैः दीव्यति इस विग्रह में 'अक्षभिस् पूर्वक दिव् धातु' से क्विप् प्रत्यय वकारके स्थान में ऊठ् आदेश होकर इकोयण्-करने से 'अक्षद्यू' बनता है यहाँ ऊठ् बहिर्भूत निमित्तक है; क्योंकि अन्तरङ्ग शास्त्रत्वेन विवक्षित शास्त्रयण् के निमित्त ऊ की अपेक्षा क्विप् का निमित्त बाह्य है । यदि ऊठ् की असिद्धता हो जायगी तो यण् नहीं होना चाहिए इसलिए—अक्षद्यूः' में यण् सिद्धि के लिए परिभाषा मानते हैं **नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः**" । अच् के अव्यवधान की अपेक्षा रखने वाले अन्तरङ्ग कार्य कर्तव्य में बहिरङ्ग की असिद्धता नहीं होती है ।

षत्व और तुक् कर्तव्य में एकादेश शास्त्र असिद्ध होता है इस अर्थ के सूत्र "षत्व तुकोरसिद्धः" ६.१.८६ का तुग्ग्रहण इस परिभाषा का ज्ञापक है । तुग्ग्रहण

**समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहितायाः नित्यत्वाल्ल्यबुत्पत्तिपर्य्यन्तमप्यसंहितयाऽवस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षै-**

---

ल्यपि समासस्यापेक्षणात् समासोत्तरं ल्यप्प्रवृत्या पूर्वं समासे तत्र च

"संहितैकपदे नित्या नित्या धातूपसर्गयोः
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते"

इत्युक्तिदिशा संहितायाः (सन्धेः) नित्यतया ल्यबुत्पत्तिपर्यन्तमसंहितयाऽवस्थानासम्भवात् पूर्वं दीर्घे गुणे च जाते ल्यपि तुग्दृष्ट्या पदद्वयसम्बन्धिवर्णद्वयसापेक्षैकादेशस्य बहिर्भूतनिमित्तकत्वेन बहिरङ्गत्वादसिद्धौ जातायां तुक्सिद्धौ सूत्रे व्यर्थं तुग्ग्रहणं परिभाषाया ज्ञापकमिति। नच पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गत्वे प्रमाणाभावः शङ्क्यः, न धातुलोप १. १. ४ इति सूत्रे प्रेद्ध इत्यादौ गुणो बहिरङ्ग इति भाष्योक्तेरेव प्रमाणत्वात्। तत्र गुणस्य बहिरङ्गत्वं वदतो भाष्यकारस्य पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वं बहिरङ्गत्वमित्यवश्यमभिप्रेतं भवेदिति सम्भाव्यते। तत्रत्यं भाष्यमित्थमस्तिः—अस्तु (आर्धधातुकग्रहणं) लोपविशेषणम्—(आर्धधातुकनिमित्ते लोपे सति गुणवृद्धी प्राप्नुतस्ते न भवतः) इत्यर्थे कथम् उपेद्धः प्रेद्धः (तत्र दोषोद्धारकं भाष्यम्) "बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः असिद्धं बहिरङ्गमन्तरङ्ग" इति। अत्र कैयटः—यदा पूर्वं प्रत्ययः पश्चादुपसर्गयोगस्तदा प्रतिषेधोऽन्तरङ्गः, गुणो बहिरङ्गः॥ यदा तु पूर्वमुपसर्गयोगस्तदा गुणोऽन्तरङ्गः पश्चात् प्रत्ययोत्पत्तौ निषेधो

---

इसलिए करते हैं कि अधीत्य में दीर्घ करने के बाद अधी+य इस स्थिति में ह्रस्व के अभाव में अप्राप्त 'ह्रस्वस्य पिति कृति तुक्' ६.१.७१ की दीर्घ की असिद्धता द्वारा ह्रस्व इकार लाकर प्रवृत्ति करायी जाय और तुक् हो। यदि नाजानन्तर्ये' यह परिभाषा न हो तो 'अधीत्य' 'प्रेत्य' इत्यादि प्रयोगों में समास-करने पर ही ल्यप् की प्रवृत्ति होगी, इसलिए पहले समास होगा, समास में संहिता नित्य होती है। इसलिए समास होते ही दीर्घ-सन्धि हो जायगी। वह दीर्घ सन्धि रूपी संहिता ल्यप् की प्रतीक्षा में नहीं रहेगी; किन्तु पहले ही हो जायगी। दीर्घ हो जाने पर अधी+य ऐसी स्थिति में तुक् (अन्तरंग) की दृष्टि में पदद्वय सम्बन्धी वर्णद्वय की अपेक्षा करने वाले बहिरंग दीर्घ एकादेश की अन्तरङ्ग परिभाषा (५१) से असिद्धता होने पर ह्रस्व प्रयुक्त तुक् सिद्ध हो ही जाता, "षत्वतुकोः" सूत्र में एतदर्थ किया गया तुग्ग्रहण व्यर्थ हो जायगा। पदद्वय-सम्बन्धी-वर्णद्वय की अपेक्षा रखने वाला एकादेश बहिरंग होता है; यह बात "प्रेद्धः" में "गुणो बहिरङ्गः" गुण को बहिरंग बताने वाले नधातु—१.१.४ के भाष्यग्रन्थ से तथा 'संयोगान्तलोपः"—८.२.२३ इस सूत्र में यण को—'सुध्युपास्यः' इत्यादि स्थल में पदद्वयसम्बन्धी वर्णद्वयापेक्षी को=बहिरङ्ग बताने वाले भाष्य से स्पष्ट है। (भाष्य दुर्गाव्या० पृ० २९६)

**कादेशस्य बहिरङ्गतया असिद्धत्वेन तद्ध्यर्थ्यं स्पष्टमेव। पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गत्वमिति प्रेद्ध इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन 'न धातुलोप इति सूत्रे संयोगान्तस्य लोपः इति सूत्रे च भाष्ये स्पष्टम्॥**

---

बहिरङ्गः। सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः। एवञ्चात्र कैयटे पूर्वोपस्थितनिमित्तकत्वरूपमेवान्तरङ्गत्वं पश्चादुपस्थितनिमित्तकत्वरूपमेव बहिरङ्गत्वमुक्तमिति पदद्वयसम्बन्धिवर्णद्वयापेक्षस्य बहिरङ्गत्वे प्रमाणाभाव इति न वाच्यम् संयोगान्तलोपः ८. २. २३ इति सूत्रस्थभाष्यस्यैव प्रमाणत्वात् अतएवारुचेराह मूले-संयोगान्तस्य लोपः ८. २. २३ इति सूत्रे च...॥ तत्रोक्तम् संयोगान्तस्य लोपे यणः प्रतिषेधः। संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः। दध्यत्र, मध्वत्र। संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः। काक्यर्थम्, वास्यर्थम्। नवा झलो लोपात् २ नवा वक्तव्यः। किं कारणम्? "झलोलोपात्" झलो लोपः संयोगान्तलोपो वक्तव्यः। बहिरङ्गलक्षणत्वाद्वा ३ अथवा बहिरङ्गो यणादेशः अन्तरङ्गो लोपः, असिद्धं बहिरङ्गमन्तरङ्गे"। अत्र कैयटेन गुणस्यैकपदाश्रयत्वादन्तरङ्गत्वं प्रतिपादितम्। इत्थं यणः पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गत्वमर्थापत्त्या सिद्ध्यतीति भावः।

न धातु लोप १.१.४ इति सूत्रस्य प्रदीपानुसारेण प्रेद्ध इत्यादौ नाजानन्तर्य—(पं० ५२) इति परिभाषा न प्रवर्तते। यत्र कार्यविधावानन्तर्येणाचोराश्रयणं तत्रैव 'नाजानन्तर्य' परिभाषायाः प्रवृत्तेः। अक्षद्यूरित्यत्र 'इकोयणचि' ६.१.७७ इत्यत्रानन्तर्येण इगचोराश्रयणं यथास्ति प्रेद्ध इत्यत्र निषेधसूत्रे तथा नास्तीति ज्ञातव्यम्।

ननु विद्यालये छात्राः इत्यत्र विद्यालयशब्दस्य सप्तम्येम्येकवचने कृतस्य गुणैकादेशस्य" पदान्ताद्वा ६.१.७६ इति तुकि कर्तव्येऽसिद्ध्यर्थं तुग्ग्रहणं चरितार्थम्, नच तत्रान्तरङ्गपरिभाषया निर्वाहः सम्भवति इति वाच्यम् एकादेशस्यान्तरङ्गत्वात्। नचास्त्वसिद्धता. असिद्धतायां जातायामपि (छे च (६.१.७३ इति प्रवृत्त्या तुकि न कोऽपि विशेष इति शङ्क्यम् पदान्ताद्वा इत्यस्य वैकल्पिकत्वं छे चेत्यस्य च नित्यत्वमिति विशेषस्य स्पष्टत्वात् इति चेत् सत्यम् पदान्तपदाद्योरिति वक्तव्यमिति वार्तिकस्य स्वीकारेण संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेकादेशस्य सिद्धवचनादिति भाष्यप्रामाण्येन पदान्तपदाद्योर्य आदेशस्तस्यैव तुकि कर्तव्येऽसिद्धत्वात्वाङ्गीकारात्। प्रेद्ध इत्यत्र पदान्तस्याकारस्य प्रोपसर्गघटकस्य इद्धघटकस्येकारस्य पदादेश्चैकादेश इति भवति तत्रासिद्धत्वम् विद्यालये इत्यत्र विद्यालय+इ इतिस्थितौ जातो य आदेशो गुणः स भसंज्ञकस्य विद्यालयघटकस्याकारस्य स्थाने जातः यश्च इकारः सोऽपि न पदादिरिति। अस्यापत्यम् इः कृष्णस्य इः कृष्णेः तस्य छलम् कृष्णेछलम् इत्यत्र कृष्णघटकाकारस्य पदान्तस्य व्यपदेशिवद्भावेन पदादे-रिकारस्य च स्थाने जातस्य गुणस्यासिद्धये तुग्ग्रहणं चरितार्थमिति तु न शङ्कनीयम् नान्तःपादमव्यपरे ६.१.११५ इतिसूत्रस्थस्य नचेङःपदान्तात्परोऽस्तीति भाष्यस्य तुग्ग्रहणस्य ज्ञापकत्व-प्रतिपादक प्रकृतसूत्रस्थस्य भाष्यस्य च प्रामाण्येन तस्यानभिधानात्।

यत्तु षत्वग्रहणमपि ज्ञापकम् । अन्यथा कोऽसिचदित्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति । तन्न । इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पद्द्वयसम्बन्धिवर्णद्वयापेक्षत्वेन उभयोः समत्वात् । एकादेशस्य परादिवत्त्वेनौसिचदित्यस्य पदत्वेन सस्य पदादित्वाभावान्न 'सात्पदाद्योः' इत्यनेन निषेधः । त्रैपादिकेऽन्तरङ्गे कार्यकालपक्षेऽपि बहिरङ्गपरिभाषायाः अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ॥

---

व्याडिसीरदेव-हरिभास्करादयस्तु तुग्ग्रहणमात्रस्य परिभाषाज्ञापकत्वमाहुः । पुरुषोत्तमदेवनीलकण्ठदीक्षितादयः सम्पूर्णस्य सूत्रस्य ज्ञापकत्वं वदन्ति । नागेशस्तु तुग्ग्रहणस्यैव ज्ञापकत्वमङ्गीकरोति । अतएव सम्पूर्णस्य सूत्रस्य ज्ञापकत्वं खण्डयितुमुपक्रमते यत्तुषत्वग्रहणमपि ज्ञापकमित्यादिना । अयं भावः, कोऽसिचत् इत्यत्रैकादेशस्य पदद्वयापेक्षत्वेन बहिरङ्गतया एकपदसापेक्षत्वेनान्तरङ्गे षत्वे कर्तव्येऽन्तरङ्गपरिभाषयैवा-सिद्धत्वेसिद्धे व्यर्थं सत् षत्वग्रहणमपि ज्ञापकमिति तत्खण्डयति तन्नेत्यादिना नागेशः—इणःपूर्वपदेत्यादिहेतुना । को इति पूर्वरूपैकादेशविशिष्टस्य अन्तादिवच्च ६.१.८५ इति पूर्वान्तवद्भावेन पदत्वम् ओसिचदित्यस्य तेनैव परादिवद्भावेन पदत्वम् अथवा एकदेशविकृतमनन्यन्वदित्यनेन सिचदित्यस्य पदत्वमिति इण एकपदसम्बन्धितया

---

किसी ने जो यह माना कि "षत्वतुकोरसिद्धः" में निर्दिष्ट केवल तुग्ग्रहण ही नहीं, किन्तु षत्व ग्रहण भी इस परिभाषा में ज्ञापक है। अन्यथा कोऽसिचत्" इत्यादि प्रयोगों में पदद्वय सम्बन्धी दो वर्णों की अपेक्षा होने के कारण बहिरङ्ग—एकादेश की असिद्धता हो जाने से इण् से पर नहीं होने के कारण ही षत्व की अप्राप्ति हो जाती तदर्थ किया गया 'षत्व' ग्रहण व्यर्थ ही होता। परन्तु उनका यह कथन ठीक नहीं है, यहाँ षत्व अन्तरङ्ग नहीं, उसे जिस 'इण्' की अपेक्षा है; वह 'इण्' पूर्व पद सम्बन्धी है। इसलिए यहाँ षत्व भी पदद्वय सम्बन्धी-वर्णद्वयापेक्षी होने के कारण बहिरङ्ग ही है । इसलिए एकादेश और षत्व दोनों समान रूप से बहिरङ्ग हैं। अतः अन्तरङ्ग परिभाषा से काम नहीं चल सकता। अतः षत्व ग्रहण आवश्यक है, न कि व्यर्थ होने से ज्ञापक। दूसरी बात यह है कि यहाँ एकादेश को परादिवद् भाव हो जाने 'ओसिचत्' को पद मानने पर ओकार में पदादित्व आता है; न कि 'सकार' में। इसलिए "सात्-पदाद्योः ८.३.१११ से निषेध नहीं होता। यद्यपि षत्व की अप्रवृत्ति शास्त्रीय कार्य नहीं है, वहाँ (अशास्त्रीय कार्य) में अन्तादिवच्च ६.१.८५ की प्रवृत्ति नहीं होनी चाहिए तथापि षत्व की अप्रवृत्ति में जो षत्व है; उस रूप में वह शास्त्रीय कार्य ही है। तीसरी बात यह है कि त्रैपादिक अन्तरङ्ग कर्तव्य में कार्यकाल पक्ष में भी बहिरङ्ग परिभाषा की प्रवृत्ति नहीं होती है, यह (पृ० २८०-८१) पहले बताया जा चुका है।

परिभाषार्थस्तु अचोऽन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्न । बहिष्पदेन बहिरङ्गम् । तस्य भावो बहिष्ट्वं बहिरङ्गत्वं तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः, न प्राप्तिरिति । असिद्धं बहिरङ्गमित्युक्त्वा नाजानन्तर्य्य इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्गे इत्यस्यानुवृत्तिसूचनात् । तेन पचावेदमित्यादौ न दोषः । अन्तरङ्गस्याच्स्थानिककार्यस्यैत्वस्यान्यानन्तर्यनिमित्तकत्वाभावात् ॥

---

आदेशप्रत्यययोः'' ८.३.५९ इति प्राप्तस्य षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षा तथैवास्ति यथा पूर्वरूपादेशस्य 'को' घटकौकारस्य असिचदितिघटकाकारस्य चापेक्षणाद्वर्त्तते पदद्वयसम्बन्धिवर्णद्वयापेक्षा इत्युभयोरपि बहिरङ्गत्वेनान्तरङ्गपरिभाषया एकादेशस्यासिद्धत्वाभावेन षत्वग्रहणस्य सूत्रे चारितार्थ्येन ज्ञापकत्वासम्भव इति भावः । ननु सात्पदाद्योः ८.३.१११ इतिनिषेधेनैव षत्वाभावसिद्धौ किं षत्वतुकोरसिद्ध इत्यसिद्धत्वसम्पादनद्वारेण षत्वाभावसम्पादनेनेत्याह—सात्पदाद्योरित्यादि । त्रैपादिकेऽन्तरङ्गे—पूर्वमुपपादितत्वादिति । एवञ्चान्तरङ्गपरिभाषाया अप्रवृत्या षत्वे कर्तव्ये एकादेशस्यासिद्धत्वाभाव इतिभावः । अनुवृत्तिरिति-विप्रतिषेधे परं कार्यम् १.४.२ इति

---

परिभाषा का अर्थ तो इस प्रकार है कि अच् से अन्य के अव्यवधान को निमित्त बनाकर प्रवृत्त होने वाले अन्तरङ्ग कर्तव्य में जात बहिरङ्ग की बहिष्ट्वप्रक्लृप्ति (असिद्धता) नहीं होती । बहिष्पद से बहिरङ्ग लिया जाता है, तस्य भावः 'बहिष्ट्वम्' का अर्थ है बहिरङ्त्व । बहिष्ट्वस्य प्रक्लृप्तिः बहिष्ट्वप्रक्लृप्तिः, बहिरङ्गत्व प्रयुक्त असिद्धत्व की प्रक्लप्ति याने प्राप्ति नहीं होती है । ''असिद्धम् बहिरङ्गम्'' यह कहकर ''नाजानन्तर्य'' यह कहूंगा इस भाष्योक्ति से, 'नाजानन्तर्य' इस परिभाषा में ''असिद्धम् बहिरङ्गमन्तरङ्गे'' इस परिभाषा से ''अन्तरङ्गे'' इस की अनुवृत्ति होने की सूचना मिलती है । परिभाषा मानने का ही फल है कि 'पचावेदम्' (लोट् उत्तम पुरुष द्विवचन के रूप 'पचाव' और 'इदम्' में गुणसन्धि करने पर बने हुए रूप) में दोष नहीं हुआ; क्योंकि 'नाजानन्तर्ये' यह अनुवृत्त 'अन्तरङ्गे' का विशेषण माना गया । यहाँ अन्तरङ्ग ''एत ऐ'' ३.४.९३ से 'एत्व' 'अच्'स्थानिक कार्य है पर उसमें अन्जानन्तर्य निमित्तकता नहीं है । इस लिए इस परिभाषा ने 'अन्तरङ्ग-परिभाषा' का निषेध नहीं किया, अतः अन्तरङ्ग (ऐत्व) कर्तव्य में बहिरङ्ग (गुण) की असिद्धता हो जाने से 'ऐत्व' नहीं हुआ । यदि ''अजानन्तर्ये'' यह बहिरङ्ग का विशेषण होता; तो 'पचावेदम्' में गुण बहिरंग है; वह अज्निष्ठान्यानन्तर्य निमित्तक भी है । इसलिए इस परिभाषा की प्रवृत्ति होने के कारण अन्त-परिभाषा' का निषेध हो जाता और फिर 'पचावेदम्' में ऐत्व हो जाता ।

जातस्य बहिरङ्गस्येत्युक्त्या अयजे इन्द्रं धियतीत्यादौ बहिरङ्ग-दीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एवेण्ङिशीनामाद्गुणः सवर्ण दीर्घत्वाच्छ्चङन्तस्यान्तरङ्गलक्षणत्वादित्यादि संगच्छते । अत एव 'ओमाङोश्च' इत्याङ्ग्र-

---

सूत्रे भाष्ये उच्यते "असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्युक्त्वा ततो वक्ष्यामि "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः इति । तेन पूर्वमागतस्यान्तरङ्गलक्षण इत्यस्यापरत्रानुवृत्तिः सूच्यत इतिभावः । तेन अजानन्तर्ये इति विशेषणस्यान्तरङ्ग इत्यत्रान्वय-स्वीकारेणेत्यर्थः । बहिरङ्गान्तरङ्गयोः कस्याप्येकस्य अज्निष्ठान्यव्यवधानशून्यविशेषणत्वाङ्गीकारे तु पचावेदमित्यत्र गुणस्यैकादेशस्य तथात्वेन नाजानन्तर्ये इति न्यायेन निषेधादसिद्धत्वं न स्यात् । तथास्वीकारे तु न दोषः 'एत ऐ' ३.४.९३ इति शास्त्रस्यान्तरङ्गत्वेन विवक्षितस्य अजन्यानन्तर्य निमित्तकत्वाभावात् । जातस्य बहिरङ्गस्यासिद्धत्वं नेत्युक्त्वा जातस्यैव बहिरङ्गस्यासिद्धत्वाभावोऽनया बोध्यते । तेन समकाल-प्राप्तबहिरङ्गस्थले नास्याः प्रवृत्तिः । अतएव 'अयजे इन्द्रम् इत्यत्र वाक्यसंस्कारपक्षे

---

जात बहिरङ्ग की असिद्धता नहीं होती है" ऐसा मानने का फल यह हुआ कि बाक्य संस्कार पक्ष में यज् धातु से लङ् के उत्तम पुरुष में इट् प्रत्यय, अट् शप् आदि होने पर अयज+इ, 'इन्द्र-अम्' ऐसी स्थिति में समकाल प्राप्त बहिरंग दीर्घ की असिद्धता हुई है, उसमें यह परिभाषा बाधक नहीं बनी । इसी तरह 'धियति में समकाल प्राप्त बहिरङ्ग-सार्वधातुक गुण-की असिद्धता हुई और इयङ् होने से रूप बना । जात बहिरंग की ही इससे असिद्धता मानने के कारण ही 'इण्-ङि-शीनाम् आद्गुणः, सवर्ण-दीर्घत्वात्' और 'शचङन्तस्य अन्तरङ्ग-लक्षणत्वात्' इत्यादि ग्रंथों की संगति बैठती है ।

इट् का उदाहरण है अयज+इ+इन्द्रम्, ङि० का उदाहरण वन+इ+इह है, शीका उदाहरण "सर्व+ई इह" है । यहाँ अयजे इन्द्रम्, वने इह, सर्वे इह बनना इष्ट है परन्तु वाक्यसंस्कार पक्ष में यज् धातु से लङ् आत्मनेपद उत्तम पुरुष के एकवचन में इट् प्रत्यय. अट् का आगम शप् विकरण करने पर बने हुए रूप 'अयज इ' का और इन्द्र+अम् की सिद्धि जब एक साथ करने लगेंगे, तो गुण और सवर्ण दीर्घ की प्राप्ति होगी । उन दोनों में से दीर्घ को बाधकर यह वार्तिक गुण का विधान करने के लिए बनाया गया है । इसी तरह सप्तमी एकवचन में वन इ+इह" यहाँ बने इह में भी दीर्घ को रोककर गुण करने के लिए वार्तिक आवश्यक है! सर्व शब्द के प्रथमा बहुवचन सर्व+ई+इह में भी दीर्घ को बाधकर गुण करने के लिए वार्तिक बनाया गया । वार्तिक में "सवर्ण में दीर्घत्वात्" में "ल्यब् लोपे कर्मण्यधिकरणे च" से पञ्चमी हुई है इसलिए उसका अर्थ है—।'सवर्णदीर्घत्वम् प्रबाध्य" । भाष्यकार ने 'अन्तरङ्गत्वात्' ही गुण हो जाने की बात कहकर वार्तिक का प्रत्याख्यान

**हणं चारितार्थम्। तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्य्यत्वेनान्तरङ्त्वाद्गुणे वृद्धिबाधनार्थम् । न चाक्षद्यूरित्यत्र यणि कृते**

---

यज्धातोःलङि आत्मनेपदस्योत्तमपुरुषैकवचने इटि इन्द्र शब्दादमि च कृते पूर्वभागे पूर्वोपस्थितिनिमित्तकत्वेनान्तरङ्गत्वाच्छपि अडादौ च कृते अयज इ+इन्द्र अम्इत्यत्र परत्वात्प्राप्तं सवर्णदीर्घं बाधित्वान्तरङ्गत्वादाद्गुणः सिद्धयति तदुक्तं भाष्ये विप्रतिषेधे परं कार्यम् १.४.२ इति सूत्रे इणङ्शीनामाद्गुणः सवर्णदीर्घत्वात् (सवर्णदीर्घत्वादित्यत्र ल्यब्लोपे पञ्चमी, सवर्णदीर्घं प्रबाध्येत्यर्थः)। अयज इन्द्रम्, 'अवप इन्द्रम्' इत्यत्र (इट उदाहरणे) 'वृक्ष इन्द्रम्' 'प्लक्ष इन्द्रम्' (ङेरुदाहरणे) त इन्द्रम् इत्यत्रच य इन्द्रम् इत्यत्र(शीत्यस्योदाहरणे)आद्गुणश्च प्राप्नोति सवर्णदीर्घत्वञ्च परत्वात् सवर्णदीर्घत्वं स्यात्। आद्गुणो भवत्यन्त-रङ्गतः। इति। यदि समकालप्राप्तबहिरङ्गस्य अन्तरङ्गपरिभाषाप्राप्तासिद्धस्याप्यनया निषेधःस्यात्तदानयान्तरङ्गपरिभाषाया निषेधादप्रवृत्या परत्वात्सवर्णदीर्घएव स्यादिति पूर्वोक्तवार्त्तिकं न संगच्छेत। नच सवर्णदीर्घः आद्गुण इत्यस्यापवादस्तथाच तस्यान्तरङ्गत्वाद्बाधः कथमुच्यते परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति (पं० ३९) दिशाऽपवादस्यान्तरङ्गादपि प्रबलत्वस्वीकारात् अतएव १ ४.२ सूत्रे भाष्येऽग्रे उच्यते "नवा सवर्णदीर्घत्वास्यानवकाशत्वात्" नवा एतदन्तरङ्गेणापि सिद्धयति, किं कारणम् सवर्णदीर्घत्वस्यानवकाशत्वात्। अनवकाशं

---

कर दिया। यह तभी संभव था जबकि 'नाजानन्तर्य' परिभाषा से 'अन्तरङ्गपरिभाषा का निषेध न हो। इसलिए यह कल्पना करना आवश्यक है कि इस परिभाषा की प्रवृत्ति वहाँ नहीं होती जहाँ जात बहिरङ्ग की असिद्धता के लिए अन्तरंग परिभाषा की प्रवृत्ति होती है। धियति में 'श' करने पर धि+अ+ति के परे रहते 'धि' में इकार को और "अदुद्रु अ त्" यहाँ 'त्' के परे रहते उकार को—पुगन्त—७.३.८६ से—लघु उपधा को गुणप्राप्त था। इसके लिए कहा गया 'धि' को अ के परे रहते और चङ् के परे रहते द्रु को जो इयङ् और उवङ् प्राप्त हैं; वे गुण को बाध कर पहले हो जायेंगे; फिर उपधा में इक् न होने के कारण गुण न होगा। इससे भी 'जातबहिरङ्गासिद्धि' में इसकी अप्रवृत्ति ही सिद्ध होती है। इसीलिए 'ओमाङोश्च ६.१.६५ यहाँ आङ् ग्रहण-चरितार्थ हुआ। 'आङ्' ग्रहण शिव+आ+इहि इस स्थिति में पर भी सवर्णदीर्घ को बाधकर धातु और उपसर्ग कार्य होने के कारण अन्तरङ्गगुण करने पर शिव+एहि इस स्थिति में प्राप्त वृद्धि को बाधने के लिए किया गया है। यदि जात बहिरङ्ग में ही इस परिभाषा की प्रवृत्ति न होकर समकाल प्राप्त बहिरंग में भी प्रवृत्ति हो तो शिव+आ+इहि में अन्तरंग परिभाषा का इससे निषेध हो जायगा और पहले दीर्घ और फिर गुण होने से शिवेहि बन ही जायगा आङ् ग्रहण व्यर्थ हो जायगा।

ऊठोऽसिद्धत्वाद्वलि लोपापत्तिरिति वाच्यम् । अचोऽन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये, कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति तत्र च कर्त्तव्ये नासिद्धत्वमित्येतदर्थात् ।

---

सवर्णदीर्घत्वमाद्गुणं बाधेत इति वाच्यम् 'अपवादो यद्यन्यत्र चरितार्थस्तर्ह्युत्सर्गेण बाध्यते इति सिद्धान्तात् सवर्णदीर्घस्य कुमारीहते दण्डाग्रम्: इत्यादौ चरितार्थत्वात् । यदि च कुमारीहते दण्डाग्रम् इत्यादावपि यणादेशगुणादेशयोः प्राप्त्यायणगुणाभ्यां सवर्णदीर्घस्य सर्वविषयव्याप्तेर्बाध्यंसामान्यचिन्तया तस्य सवर्णदीर्घस्य चारितार्थ्याभावादनकाशत्वादन्तरङ्गप्रबलत्वमुच्यते उच्यते च इण्ङिशीनामाद्गुणः संवर्णदीर्घत्वादिति वार्तिकस्यारम्भस्यावश्यता तदा जातबहिरङ्गस्थले परिभाषाप्रवृत्तिस्वीकारस्य न अग्रज "इन्द्रम्" इत्यादीनि प्रयोजनानि किन्तु धियति अदुद्रवत् इत्यादीनीत्यरुचेराह— **शचङन्तस्येत्यादि** । क्ङिति च । १.१.५ इति सूत्रे भाष्ये प्रोच्यते(यदि उपधारोरवीत्यर्थं क्ङिति चेति सूत्रे तन्निमित्तग्रहणं क्रियते शचङन्ते रियति पियति धियतीत्यत्र प्रादुद्रुवत् प्रासुस्रुवत् इत्यत्र च दोषो भवति(अर्थात् रि पि धि धातुभ्यः तुदादित्वाच्छे कृते रिअ+ति, पिअ+ति इति स्थिते तिपोऽङित्वात्पुगन्तलघूपधस्य चेति गुणः प्राप्नोति प्रादुद्रअ+त् इत्यत्र च कृतचङि च तिपि गुणः प्राप्नोति) "शचङन्तरङ्गलक्षणत्वात्" अन्तरङ्गलक्षणत्वा दत्रेयङुवङोः कृतयोरनुपधात्वाद् गुणो न भविष्यति इति । यदि समकालप्राप्तबहिरङ्गस्याप्यनयाऽसिद्धत्वाभावो बोध्येत तर्हि गुणस्य बहिरङ्गस्यासिद्धत्वबोधनमसङ्गतं स्यादिति भावः । अतएव जातस्यैव बहिरङ्गस्यासिद्धत्वाभावबोधनादेव ओमाङोश्च ६.१.९५ इत्यत्राङ्ग्रहणं चरितार्थम् । समानकालप्राप्तस्य बहिरङ्गस्याप्यसिद्धत्वाभावो भवत्यनयेति स्वीकारे तु शिव+आ+इहि इतिस्थिते बहिरङ्गभाषाया अनया निषेधे जातेऽन्तरङ्गमपि गुणं बाधित्वा परत्वाद्दीर्घे ततो गुणे शिवेहीति सिद्धौ सूत्रे आङ्ग्रहणं व्यर्थमेव स्यात् । न च अक्षद्यूरित्यादौ यणादेशे कृते 'लोपो व्योर्वलि ६.१.६६ इति वलिलोपापेक्षया ऊठो बहिरङ्गत्वेन वलिलोपापेक्षयाऽसिद्धत्वाद् वलोपापत्तिः, ऊठोऽसिद्ध्या वकारस्य तद्दृष्ट्या तत्र विद्यमानत्वादिति वाच्यम् अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये कृते च यदन्तरङ्गं प्राप्नोति तत्र च

---

"अक्षद्यूः" में ('अक्षदिव् क्विप्' उसका सर्वापहार, ऊठ् आदेश 'इकोयणचि' से यण् करने पर ऊठ् की असिद्धता होने पर 'लोपोव्योर्वलि' से लोप हो जायगा ऐसा नहीं कहना चाहिए क्योंकि परिभाषा का अर्थ इस प्रकार मानेंगे अच् से भिन्न आनन्तर्य निमित्तक अन्तरंग कर्तव्य रहने पर, तथा पूर्वोक्त प्रकार के अन्तरंग के करने पर जो अन्तरंग प्राप्त होता है, उसके कर्तव्य में बहिरंग की असिद्धता नहीं होती है । यहाँ अजानन्तर्य निमित्तक अन्तरंग-यण्-के करने के बाद वलिलोप रूपी अन्तरंग कार्य कर्तव्य में यण् की असिद्धता नहीं हुई । यदि असिद्ध बहिरङ्ग "इस परिभाषा को अनित्यमानकर" अक्षद्यूः" की सिद्धि करें; तब तो

**असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः । अत एव 'नलोपः सुप्' इति सूत्रे कृति तुग्ग्रहणं चरितार्थम् । अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्यामुनिमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव । मम तुक्यजानन्तर्य्यसत्त्वान्न दोषः ॥**

---

कर्तव्ये बहिरङ्गस्य नासिद्धत्वमित्यर्थस्वीकारेणादोषात् । **इयं परिभाषा न स्वीकर्तव्येति** दीक्षितमतमाह **असिद्धपरिभाषाया** अनित्यत्वेन तद्वारणे तु अस्याः "नाजानन्तर्य" इति परिभाषाया वैयर्थ्य तेनैव=परिभाषाया अनित्यत्वेनैव सिद्धेरिति भावः। अतएव नलोपः सुप् इति सूत्रे इति । नाजानन्तर्य इति परिभाषास्वीकारादेव 'नलोपः सुप्-स्वर०' ८.२.२ इति सूत्रे तुग्ग्रहण सफलम् । दीक्षितादिप्राचीना वैयाकरणा अक्षद्यूरित्यादौ वलिलोपाभावोऽन्तरङ्गभाषाया अनित्यत्वेन सम्पादितः एवञ्चान्तरङ्गपरिभाषाया अनित्यत्वादेव अक्षद्यूरित्यादौ यणादिप्रयोजनान्यथासिद्धया नाजानन्तर्य इति परिभाषा न कार्येति तेषां कथनं न युक्तम् 'नलोपः सुप्-स्वर'-इत्यत्र तुग् ग्रहणस्य तन्मतेन बैयर्थ्य प्रसङ्गात् । **अन्यथेति**-अनित्यत्वे वृत्रहभ्याम् इत्यादौ प्रवृत्य वेष्टसिद्धौ' नलोपः सुप्' इति सूत्रस्थं तुग्ग्रहणं व्यर्थ स्यात् । यो विध्यादिरनित्योमन्यते स इष्टसिद्धये प्रवर्तते एव, अनिष्टस्थलादेव च तस्य निवृत्तिःकल्प्यते । एबञ्च वृत्रहभ्यामित्यत्रान्तरङ्गपरिभाषायाः वृत्याः प्रतुकि कर्तव्येऽनयैव बहिरङ्गस्य नलोपस्यासिद्धत्व-

---

नाजानन्तर्य' परिभाषा व्यर्थ ही हो जायगी, 'अन्तरंग परिभाषा को अनित्य मानने से इस परिभाषा के फल की सिद्धि हो ही जायेगी । 'नाजानन्तर्य परिभाषा' की सत्ता मानी गयी है, इसलिए "नलोपः सुप्" ८.२.२ इस सूत्र में '-कृतितुक्" का किया गया ग्रहण चरितार्थ हुआ । "वृत्रहभ्याम्" में प्राप्त "ह्रस्वस्य पिति कृति तुक् ६.१.७१ से तुक् कर्तव्य में नलोप की असिद्धता करके ह्रस्वाभाव लाकर प्राप्त तुक् के निवारण के लिए 'कृतितुक्' का ग्रहण करते हैं। यदि यह परिभाषा न मानें और अन्तरंग परिभाषा की अनित्यता स्वीकार कर यदि इष्ट सिद्धि करना चाहें तो वृत्रहभ्याम् में अन्तरंगपरिभाषा को अनित्य मानने पर भी इष्ट सिद्धि के लिए उसकी प्रवृत्ति स्वीकार की ही जायगी; क्योंकि अनित्यता वहीं स्वीकार की जाती है; जहाँ प्रवृत्ति से अनिष्ट प्रयोग बनता हो । इसलिए अनित्य शास्त्र भी इष्टस्थल में प्रवृत्त होता ही है । अतः यहाँ 'वृत्रहभ्याम्' में इष्टस्थल में अनिवार्य प्रवृत्ति के कारण असिद्ध भाषा की प्रवृत्ति होने से ही नलोप की असिद्धता हो जाने से इष्ट रूप की सिद्धि हो ही जाती, 'नलोप' सूत्र में 'कृति-तुग् ग्रहण व्यर्थ हो जायगा । 'नाजानन्तर्य' परिभाषा मानने वालों को तो यह दोष नहीं होता; क्योंकि तुक् में अजानन्तर्य है, इसलिए इस परिभाषा से अन्तरङ्ग परिभाषा का निषेध हो जाता, इसलिए अन्तरङ्ग परिभाषा के द्वारा असिद्ध नलोप की असिद्धता के लिए (कृति तुग्) ग्रहण चरितार्थ हुआ ।

**न चैवं सति 'ह्रस्वस्य पिति' इति सूत्रस्थभाष्यविरोधः। तत्र हि ग्रामणिपुत्र इत्यत्रेको 'ह्रस्वोऽङ्य' इतिह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्। नाजानन्तर्य्य इत्यस्य सत्त्वे तत्र तदप्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्। तेन भाष्येणास्या अनावश्यकत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्॥**

---

सिद्धौ कृति तुग्ग्रहणं व्यर्थमेव स्यात्। **मम तु**=नाजानन्तर्ये इति परिभाषास्वींकर्तुर्मतेन तु। **न दोषः**=न तुग्ग्रहणवैयर्थ्यम् तुकि अजानन्तर्यसत्वादनयाऽन्तरङ्गपरिभाषायाः प्रतिषेधात् प्राप्तस्य तुको वारणाय कृतितुग्ग्रहणं सफलमिति भावः। इत्थमपरेषां मतमुक्त्वा परिभाषाया अस्वीकृतिरूपं स्वीयं मतमुपस्थापयितुमुपक्रमते **नचैवं सतीत्यादिना**। इत्थं हि ह्रस्वस्य पिति कृति तुक् ६.१.७१ इति सूत्रस्थं भाष्यम्—"इह तर्हि—ग्रामणिपुत्रः सेनानिपुत्रः इको ह्रस्वोऽङ्यो गालवस्य ६.३.६१ इति ह्रस्वत्वे कृते तुक् प्राप्नोति ग्रामणिपुत्रादिषु चाप्राप्तिः ग्रामणिपुत्रादिषु चाप्राप्तिः, किं कारणम् बहिरङ्गलक्षणत्वादेवेति। ह्रस्वस्य बहिरङ्गत्वं तु उत्तरपदनिमित्तकत्वेन तुगपेक्षया बहिर्भूतनिमित्तकत्वाद्बोध्यम्। अनावश्यकत्वबोधनादिति=ग्रामणिपुत्र इत्यत्र बहिरङ्गपरिभाषया भाष्ये तुग्वारितः। तेनानुमीयते यन्नाजानन्तर्यपरिभाषा नास्तीति। यदीयं परिभाषा स्यात्तदाऽनया अन्तरङ्गपरिभाषाया निषेधादप्रवृत्या भाष्यमसङ्गतं स्यात्। **एतज्ज्ञापकेन**=षत्वतुकोरसिद्धः ६.१.८६ इत्यत्र तुग्ग्रहणेन। **न्याय्यत्वात् इति**=यदा बहिरङ्गपरिभाषाया अनित्यस्वीकारेणैव अक्षद्यूरित्यादौ यण् वलिलोपाभावश्च सिद्धयतस्तदा नाजानन्तर्ये इति परिभाषां स्वीकृत्य अयजे इन्द्रम् पट्व्या मृद्व्या इत्यादावस्या अप्रवृत्तये जातबहिरङ्गत्वमात्रविषयिकैषेति कल्पनाया अक्षद्यूरित्यादौ वलिलोपनिवारणाय अजानन्तर्येऽन्तरङ्गे कर्तव्ये कृते चेत्याद्यर्थविशेषकल्पना गौरवादन्याय्या। लाघवाच्च बहिरङ्गपरिभाषाया अनित्यत्वकल्पनमेव न्याय्यमितिभावः। नाजानन्तर्ये इति परिभाषास्वीकर्तुर्मतेनापि यातेर्यङन्ताद् वरच्प्रत्यये यायाय वर इतिस्थिते अतोलोपे वलि लोपे यायावर इत्यत्रान्तरङ्गेऽन्तर्भूतनिमित्तके वलि लोपे कर्तव्ये बहिरङ्गस्य अतोलोपस्यासिद्ध्या वलि लोपानापत्तिभियाऽन्तरङ्गपरिभाषाया अनित्यत्वं स्वीकरणीयमेव। एवञ्च तेनैव सिद्धे

---

"यदि यह परिभाषा मानें तो "ह्रस्वस्य पिति" इस सूत्र के भाष्य के साथ विरोध पड़ेगा, "ग्रामणिपुत्रः" में "इको ह्रस्वोऽङ्चो गालवस्य" ६.३.६१ सूत्र से जब इकार को ह्रस्व किया गया तब, "ह्रस्वस्य पिति कृति तुक् ६.१.७१ से तुक् की आशंका करके भाष्यकार ने तुक् का निवारण बहिरंग-ह्रस्व की असिद्धता के द्वारा किया। यदि 'नाजानन्तर्य' परिभाषा भाष्यकार की दृष्टि में होती; तब तो इस परिभाषा से अन्तरङ्ग परिभाषा का निषेध हो जाता, फिर तो वहाँ बहिरंगासिद्धि मानना

अत एवा 'चः परस्मिन्' इति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्यानयाऽसिद्धत्वात्पूर्वयणादेशः साधितः। अत एवैषा परिभाषा भाष्ये पुनः क्वापि नोल्लिखिता। अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेऽस्या बहूनि प्रयोज-

---

नाजानन्तर्यपरिभाषा न कर्तव्यैति भावः। अतएवाचः परस्मिन् इति। परिभाषाया अस्वीकारादेव अचः परस्मिन् १.१.५७ इति सूत्रे भाष्ये पटु+ई+आ इति स्थिते परयणादेशस्य बहिरङ्गत्वेनासिद्धत्वात्पूर्वयणादेशः साधितः। यदीयं परिभाषा स्वीकृता स्यात्तदानया निषेधात्तत्र बहिरङ्गपरिभाषाऽ प्रवृत्तिः स्पष्टैव। इत्थं हि तत्रत्यं भाष्यम् इदंतर्हि प्रयोजनम् (स्थानिवद्भावस्य) पट्व्या मृद्व्या इति। परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति, ईकारयणा व्यवहितत्वात् ॥ स्थानिवद्भावाद्भवति। किं पुनः कारणं परस्य तावद् भवति न पुनः पूर्वस्य? नित्यत्वात्। नित्यः परयणादेशः, कृतेऽपि पूर्वयणादेशे प्राप्नोति, अकृतेऽपि। नित्यत्वात् परयणादेशे कृते पूर्वस्य न प्राप्नोति ॥ स्थानिवद्भावाद्भवति। एतदपि नास्ति प्रयोजनम् असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति। असिद्धत्वाद् बहिरङ्गलक्षणस्य परयणादेशस्यान्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति इति।

---

असंगत ही होता" यद्यपि ऐसा प्रश्न उपस्थित होता है तथापि; इस भाष्य से यह मानना चाहिए कि भाष्यकार की दृष्टि में यह परिभाषा अनावश्यक है। इस परिभाषा का जो ज्ञापक दिया गया है; उसको अन्तरंग परिभाषा की अनित्यता में ही प्रमाण मान लेना चाहिए। इसीलिए भाष्यकार ने "अचः परस्मिन्" १.१.५७ इस सूत्र के भाष्य में पट्व्या प्रयोग के सन्दर्भ में पटु+ई+आ ऐसी स्थिति में परयणादेश (बहिरंग) की असिद्धता करके अन्तरंग परिभाषा से पूर्वयणादेश (अन्तरंग कार्य) सिद्ध किया। इसीलिए देखते हैं कि यह परिभाषा भाष्य में फिर कहीं नहीं लिखी गयी। इसीलिए 'अन्तरङ्ग परिभाषा' की चर्चा करके विप्रतिषेध सूत्र में भाष्य में भाष्यकार ने कहा कि इस (अन्तरंग) परिभाषा के बहुत से प्रयोजन हैं, उन प्रयोजनों को देखते हुए यह परिभाषा हमें अवश्य करनी चाहिए, परिभाषा स्वीकार करने पर आने वाले दोषों का प्रतीकार भी 'सम्प्रसारणाच्च' ६.१.१०८ सूत्र के भाष्य में कहा। वह प्रतीकार और कुछ नहीं, केवल अनिष्टप्रवृत्ति स्थल में परिभाषा (अन्तरंग परिभाषा) का अनित्यताश्रयण ही है, यह ध्वनित होता है। सारांश यह है कि नाजानन्तर्य; परिभाषा अलग से नहीं माननी चाहिए। ग्रामणिपुत्रः" में अन्तरंग परिभाषा की प्रवृत्ति दिखाकर तुग् वारण करने वाले भाष्य ग्रन्थ से यही कल्पना करनी चाहिए कि यह परिभाषा नहीं है। यदि ऐसी कल्पना न करें तो (नाजानन्तर्य) परिभाषा की अप्रवृत्ति होने से उक्त भाष्य असंगत हो जायगा। 'षत्वतुकोरसिद्धः' के तुक् ग्रहण से बहिरङ्ग परिभाषा की अनित्यता ही माननी चाहिए। इसी से (अक्षद्यूः) की सिद्धि

नानि सन्ति तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं दोषेषु इत्युक्तं 'सम्प्रसारणाच्च' इति सूत्रे भाष्ये। प्रतिविधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥५२॥

---

विप्रतिषेधे परं कार्यम् १.४.२ इति सूत्रे भाष्यमित्थमस्ति :—अन्तरङ्गञ्च बलीयोभवतीति वक्तव्यम् प्रयोजनं × × × यणेकादेशेत्त्वोत्त्वानि गुणवृद्धिद्विवर्चनाल्लोपस्वरेभ्यः × × × वृद्धेर्यणादेशः द्यौकामिः, वृद्धिश्च प्राप्नोति, यणादेशश्च, परत्वाद् वृद्धिः स्यात् यणादेशोभवत्यन्तरङ्गतः × × × एतान्येतस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या ॥ × × × ननु चेयं च कर्तव्या असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । किं प्रयोजनम् ? पचावेदम् पचामेदम् । बहिरङ्गलक्षणगुणस्यान्तरङ्गलक्षणमैस्त्वं मा भूदिति । उभे तर्हि कर्तव्ये नेत्याह अनयैव (असिद्धं बहिरङ्गलक्षणमित्येतयेत्यर्थः) सिद्धम् । इहापि स्योनः स्योनेति असिद्धत्वाद्बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणो यणादेशो भविष्यति । यदि असिद्धं बहिरङ्लक्षणमन्तरङ्गलक्षणे इत्युच्यते अक्षद्यूः हिरण्यद्यूः । असिद्धत्वाद् बहिरङ्गलक्षणस्योठोऽन्तरङ्गलक्षणो यणादेशो न प्राप्नोति । नैष दोषः असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्युक्त्वा ततो वक्ष्यामि नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः । सा तर्हि एषा परिभाषा कर्तव्या न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं षत्वतुकोरसिद्ध इत्याह ।

---

हो जायगी, अर्थात् (अक्षद्यूः) में बहिरङ्गासिद्धि न होने से ही यण् और वलि लोपाभाव सिद्ध हो जायगा, "रामयोः" में अयादेश (अन्तरंग) की दृष्टि में बहिरंग "ओसि च" ७.३.१०४ की असिद्धता भी बहिरंग परिभाषा की अनित्यता के कारण ही नहीं होगी । 'रामेण' में गुण (अन्तरंग) की दृष्टि में 'इनादेश' की भी असिद्धता नहीं हुई । इतना ही नहीं अन्तरङ्ग परिभाषा के अनित्य होने के कारण ही 'शयाते' में अन्तरङ्ग अयादेश की अपेक्षा बहिरंग "शीङः सार्वधातुके गुणः" ७.४.२१ भी सिद्ध रहा । इन प्रयोगों में यद्यपि 'नाजानन्तर्य' परिभाषा से दोष का निवारण सम्भव था; तथापि "अयजे इन्द्रम्" 'पट्व्या' में "नाजानन्तर्ये" की प्रवृत्ति को रोकने के लिए यह भी निवेश करना आवश्यक होता है, कि "नाजानन्तर्ये" से केवल जात बहिरंग की असिद्धता का ही निषेध होता है । यह गौरव होता है । "अक्षद्यूः" में वलि लोप के निवारण के लिए पूर्व निर्देश के अनुसार अजानन्तर्य निमित्तक अन्तरंग कर्तव्य में और उसे किये जाने पर बहिरंगासिद्ध नहीं होता है ऐसा निवेश करना दूसरा दोष है । "नाजानन्तर्ये" परिभाषा मानने पर भी अन्तरंग परिभाषा की अनित्यता स्वीकार करनी ही पड़ती है । क्योंकि दीयते इति दाः, दीङ् धातु से विच्, "मीनाति मिनोति" ६.१.५० से आत्व, विच् का लोप, दा शब्द से शस् में 'आतो धातोः' ६.४.१४० से आ का लोप होकर 'दः' रूप बनता है । इसी प्रकार 'प्रद्यु सवोति' इति

इयं तर्हि परिभाषा कर्तव्या असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति । एषा च न कर्तव्या-आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति, यदयं वाह ऊठ् इति ऊठं शास्ति ।। तस्य (असिद्धं बहिरङ्गलक्षणमित्यस्य) दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावेकादेशात् + + + इत्यादि । सम्प्रसारणाच्च ६.१.१०८ इति सूत्रे भाष्यग्रन्थो यथा—प्रयोजनं पूर्वसवर्ण-पूर्वत्व-तहिलोप-टेन-ङेर्य-ङिस्मिन्-ङिणलौत्त्वमन्तरङ्गं बहिरङ्गलक्षणाद्वर्णविकारात् (भाष्यम्) पूर्वसवर्णः प्रयोजनम् । अग्नी अत्र वायू अत्र । पूर्वसवर्णश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकार आवादेशः । पूर्वसवर्णत्वं भवन्तरङ्गतः । पूर्वसवर्ण ।। पूवत्व । शकह्वर्थम् परिव्यर्थम् । पूर्वत्वं च प्राप्नोति । बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम् । पूर्वत्वं भवत्यन्तरङ्तः । पूर्वत्व ।। तहिलोप । अकार्यत्र, पचेदम् । तहिलोपौ प्राप्नुतः, बहिरङ्गलक्षणश्च वर्णविकारः सवर्ण दीर्घत्वम् । तहिलोपौ भवतोऽन्तरङ्गतः । तहिलोप ।। टेन । वृक्षेणात्र प्लक्षेणात्र इनादेशश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्ण दीर्घत्वम् इनादेशो भवत्यन्तरङ्गतः । टेन ।। ङेर्य । वृक्षायात्र, प्लक्षायात्र ङेर्यादिशश्च प्राप्नोति । बहिरङ्गलक्षणश्च वर्णविकारः—एङः पदान्तादति (६.१.१०९) इति परपूर्वत्वम् । ङेर्यादेशो भवत्यन्तरङ्गतः । ङेर्य ।। ङिस्मिन् । यस्मिन्निदम्, तस्मिन्निदम् । स्मिन्भावश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम् । स्मिन्भावो भवत्यन्तरङ्गतः । ङिस्मिन् । ङिणलौत्वम् । अग्नाविदम्, ययावत्र ङिणलौत्वं प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम् । औत्वं भवत्यन्तरङ्तः । ङिणलौत्व ।। नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाप्येतानि सिद्धानि । इदं तर्हि प्रयोजनम्—वृक्षा अत्र, प्लक्षा अत्र । पूर्वसवर्णश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः—अतो रोरप्लुतादप्लुते (६.१.११३) इत्युत्त्वम् । पूर्वसवर्णो भवत्यन्तरङ्गतः । नचावश्यमिदमेव प्रयोजनम् । आद्ययोगे (विप्रतिषेधसूत्रे इत्यर्थः) बहूनि प्रयोजनानि सन्ति (प्रतिपादितानि मयेतिशेषः) यदर्थमेषा परिभाषा (अन्तरङ्गपरिभाषेत्यर्थः) कर्तव्या । प्रतिविधेयं दोषेषु ।। अर्थात् दोषस्थलेषु परिभाषायाः अनित्यत्वमङ्गीकार्यम् इतिभावः ।

विप्रतिषेधसूत्रे नाजानन्तर्यपरिभाषायाः स्पष्टत उल्लेखोऽस्ति किन्तु अन्यत्र क्वापि पुनरुल्लेखो नास्त्यतोऽपि अस्या अभावो ध्वन्यते । मूलस्थं "पुनः" पदं साभिप्रायम् । श्री मच्छेषाद्रिसुधीकृते परिभाषाभास्करे तु "षत्वतुकोरसिद्ध इति सम्पूर्णसूत्रस्य ज्ञापकत्वं पुरुषोत्तमदेवादिस्वीकृतमेव समर्थितम् । तन्मतेन "एकादेशस्य पूर्वान्तत्वे षत्वस्यापि पदद्वयाश्रितत्वात् त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषा न प्रवर्तते इत्युक्तत्वाच्च षत्वग्रहणं न ज्ञापकमिति नागेशोक्तमसंगतम् एकादेशस्य पूर्वान्तत्वेन ग्रहणे तुकोऽपि पदद्वयाश्रितत्वेन बहिरङ्गत्वात्तुग्ग्रहणस्याप्यज्ञापकत्व-

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वाऽन्त-रङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युरत आह—

**अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते ।।५३।।**

---

प्रसङ्गात् । अथ अन्तादिवच्च (६.१.८५) इत्यतिदेशस्य कार्यार्थतया परत्वेन परा-दित्वमाश्रित्य तुग्ग्रहणस्य ज्ञापकत्वं समर्थ्यते, तर्हि षत्वेऽप्येवं वक्तुं शक्यम् । किञ्च षत्वे पूर्वान्तत्वाश्रयणे सात्पदाद्योः (८.३.१११) इति निषेधेन षत्वाभावसिद्धेर-सिद्धवचनमनर्थकं स्यात् । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाप्रवृत्तिर्वार्तिककृत्प्रभृति-सर्वग्रन्थकारसम्मता (अतएव नवा बहिरङ्गलक्षणत्वादिति वार्त्तिकं संगच्छते । कृत्स्न-सूत्रस्य ज्ञापकत्वं वदन् भाष्यकारोऽप्यत्रानुकूलः । वस्तुतस्तु उक्तज्ञापकेन बहिरङ्गपरि-भाषाया अनित्यत्वमेव ज्ञाप्यते । तेन अक्षद्यूरित्यत्र बहिरङ्गस्योठोऽसिद्धत्वेन यणि कृते वलोपो नेति (परिभाषासंग्रहे पृ० ४२३)

इति शिवम् ।। ५२

**अन्तरङ्गानपि ·········बाधते ५३**

**नन्वेवमिति**=ननु अन्तरङ्गपरिभाषास्वीकारे गोमान् प्रियो यस्येति विग्रहे **गोमत्** सु प्रियसु इत्यनयोः 'अनेकमन्यपदार्थे' २.२.२४ इति समासे

---

पशुसाः सन् धातु से विट् प्रत्यय, नकार को आत्व, दीर्घ पशुसा शब्द से शस् में पशुसः बनता है, इन रूपों की सिद्धि के लिए अन्तरंग परिभाषा की अनित्यता अवश्य स्वी-कार करनी चाहिए, अन्यथा अनैमित्तिक होने के कारण अन्तरंग 'आतोधातोः' से आलोप कर्त्तव्य में बहिरङ्ग मीनातिमिनोति' और विड्वनोः ६.४.४१ से विहित आत्व की असिद्धता हो जाने से आतो लोपः से 'आ' का लोप'' नहीं हो सकेगा । इसी प्रकार यङन्त 'या' धातु से वरच् प्रत्यय करने पर 'याया य वर' इस अवस्था में अतो लोप और यलोप होने से जो 'यायावरः' यह रूप बनता है उसमें भी बलमात्र निमित्तक होने के कारण अन्तरंग यलोप कर्तव्य में बहिरंग अतोलोप की असिद्धता होने से यलोप नहीं हो सकेगा । इसलिए अन्तरंग परिभाषा—की अनित्यिता माननी ही चाहिए । 'नाजानन्तर्य परिभाषा' से तो काम नहीं चल सकता; क्योंकि यहां अन्तरंग में अज्निष्ठान्या-नन्तर्य-निमित्तकत्व का अभाव है । इस तरह अन्तरंग परि-भाषा की अनित्यता हरहालत में आवश्यक है । जब अन्तरंग परिभाषा की अनित्यता से ही निर्वाह हो जाता है; तो 'नाजानन्तर्य' परिभाषा नहीं माननी चाहिए । यही नागेश का सिद्धान्त है । यदि यह मानें कि अन्तरंग परिभाषा की, अनित्य होने के कारण कहाँ कहाँ प्रवृत्ति नहीं होती है, इसका अनुगम करने या कुछ विषय निर्देश करने के लिए ही यह परिभाषा है, तो भी कोई हर्ज नहीं है । इति शिवम् ।।५२।।

प्रातिपदिकत्वे हल्ङ्यादिलोपस्य 'सुपो धातुप्रातिपदिकयोः' २.४.७१ इति लुकश्च प्राप्तौ पदद्वयनिमित्तकसमाससापेक्षत्वेन बहिरङ्ग लुकं बाधित्वान्तरङ्गत्वाद्धल्ङ्यादिलोपे प्रत्ययलक्षणेन सुविभक्तिमादाय 'उगिदचाम्'—७.१.७० इति नुम् स्यात्, वेधा देवो यस्येति वेधोदेव इत्यत्रात्वसन्तस्य च ६.४.१४ इति दीर्घश्च स्यादिति चेन्न अन्तरङ्गा००० इति परिभाषास्वीकारात्। नच गोमत् सु प्रिय सु इत्यवस्थायां यदा हलादिलोपः प्राप्तोति तदा लुकः प्राप्तिर्नास्ति। एवञ्च लुकं बाधित्वाऽन्तरङ्गत्वाद्धल्ङ्यादिलोप इति मूलमसंगतं तया जातस्य समानकालप्राप्तस्यैव वा बहिरङ्गस्यासिद्धत्व—स्वीकाराद् इति वाच्यम् अप्राप्तिमत्वरूपस्य बहिरङ्गत्वस्य सत्वेन तथाकथनसम्भवात्। हल्ङ्यादिलोप इति। लोपापेक्षया नुमः परत्वेन नुमेव प्राप्नोति. तथाच हल्ङ्यादिलोपापादनं न युज्यते मूल इति चेत्सत्यम् अपरनिमित्तकत्वेन लोपस्यान्तरङ्गत्वात् नुमस्तु परनिमित्तिकत्वेन बहिरङ्गत्वम्। नुमापत्तावपि दोषस्यैव सत्वेन दोषदानमात्रे तात्पर्येण" इदमेव इत्थमेवेति प्रतिपादने आग्रहाभावात्। नच 'गोमान्' इत्यादौ वचनसामर्थ्यात् अत्वसन्तस्येति पूर्वं दीर्घः पश्चान्नुम् संभवति उक्तं च तथा सिद्धान्तकौमुद्याम्। एवं च दीर्घादयःस्युरिति कथनौचित्ये नुमादयः स्युरिति कथनमयुक्तमिति वाच्यम् वचनसामर्थ्यात्तत्रोपधाग्रहणस्य पूर्वमात्रोपलक्षके तात्पर्यकल्पनेन नुमोऽनन्तरमपि दीर्घविधानेन तच्चारितार्थ्येन नुमादय इति कथनस्य सांगत्यनिर्वहणसंभवात्। अथवा नुमादयः स्युः दीर्घादयो वेत्यत्र नाग्रहः, परिभाषावतरणदान एव तात्पर्यम्। उभयथाऽपि परिभाषावतारो जायत एवेति।

परिभाषायामपिशब्द उच्यते मूषकेण दण्डोभक्षित इति कथनेन तद्बद्धस्यापूपस्य भक्षणमर्थात् सिद्धयतीति न्यायोदण्डापूपिकन्यायः। तेन दण्डापूपिकन्यायेन कैमुतिकन्यायेन वा पूर्वान् परान् नित्यांश्च विधीन् बहिरङ्गोलुग् बाधते इत्यर्थः सिद्ध्यति। अन्तरङ्गान् पूर्वपरनित्यबाधकानपि बाधते किमुत पूर्वपरनित्यानित्यर्थः। अपिना अन्तरङ्गान् तदपेक्षया दुर्बलांश्च विधीन् बाधते इत्येव सिद्ध्यति नतु अपवादविधीनपि

---

## अन्तरङ्गानपि·········लुग्बाधते—५३

यदि अन्तरङ्ग परिभाषा मानते हैं; तब 'गोमान् प्रियो यस्य' इस लौकिक विग्रह में 'गोमत् सु' और 'प्रिय सु' इस अलौकिक विग्रह में समास करके प्रातिपदिक संज्ञा करने के बाद प्राप्त "सुपो धातुप्रातिपदिकयो २.४.७१ से लुक् को दो पदों को निमित्त बनाकर होने वाले समास पर आश्रित रहने के कारण बहिरङ्ग होने से बाधकर अन्तरङ्गत्वात् हलङ्याब्भ्यो" से लोप होगा; फिर लोप में "नलुमताङ्गस्य" १.१.६३ की प्रवृत्ति नहीं होने के कारण प्रत्यय लक्षण से लुप्त सु को लाकर "उगिदचाम्" ७.१.७० सूत्र से नुमादि होने लगेगा, इसलिए परिभाषा मानते हैं कि अन्तरङ्गानपि विधीन् बहिरङ्गोलुग् बाधते' अर्थात् अन्तरङ्गविधियों को भी बहिरङ्ग लुक् बाधता है।

बाधते इत्यपि, तस्य निरवकाशतयान्तरङ्गस्यापि बाधकत्वात् । यथा ह्यः 'श्व' इत्यादौ परमपि अत्वसन्नियस्य चाधातोः ६.४.१४. दीर्घं बाधित्वा "अव्ययादाप् सुपः" २.४.८२ इति लुग् भवति । नित्यस्य बाधकत्वं यथा 'हेत्रपो' इत्यत्र । अत्र कृताकृतप्रसङ्गित्वाद् ह्रस्वस्य गुणः' ७.३.१०८ इति नित्यं गुणं बाधित्वा स्वमोर्नपुंसकात् इति लुक् । अन्तरङ्गस्य बाधकत्वोदाहरणं शोभना आपो यस्मिन् सरसि तत् स्वप् सरः इति । अत्र प्रतिपदोक्तत्वादन्तरङ्गमपि अप्तृन्तृच्०—६.४.११ इति दीर्घं बाधित्वा 'सुपो धातुप्रातिपदिकयोः' २.४.७१ इति लुग् भवति । यदि परिभाषायामपिशब्दनिवेशो न स्यात् तदा लुक्—अन्तरङ्गान् विधीन्—सर्वं वाक्यं सावधारणं भवतीति न्यायेन अन्तरङ्गानेव विधीन् बाधेत नान्यान् तथा च 'ह्य' इत्यादौ दीर्घादिरापद्येत ।

यत्तु वृहच्छास्त्रार्थकलाकारः २४७ तमे पृष्ठे प्राह—भाष्ये त्वपि शब्दघटितः पाठो नास्तीत्ययुक्तोऽयम्प्रकार इति । न च 'स्वमोर्नपुंसकात्' ७.१.२३ इति सूत्रे कैयटेनापिघटितः पाठः कथं कृत इति वाच्यम् मतान्तरपरतया तदुक्तिसौष्ठवात् इति तन्न गवेषणापरेण मया भाष्येऽनेकत्रापिघटितपाठ एवोपलभ्यते स्म यथा स्वमोर्नपुंसकात् ७.१.२३ इति सूत्रस्य प्रदीपे "केचित्वन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते इत्यत्रापिग्रहणान्नित्यानां च परेषां च लुका बाधनमिच्छन्तस्त्यदाद्यत्वं लुका बाध्यत इत्याहुरित्यत्रापिघटितः पाठ उपलभ्यते तथा प्रत्ययोत्तरपदयोश्च ७.२.९८ इति सूत्रस्य "एवं तर्हि सिद्धे सति (अन्तरङ्गत्वादेव त्वमादेशेसिद्धे) यत्प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तज्ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन् बाधित्वा लुग् भवतीति भाष्येऽपि दृश्यतेऽपिघटितः पाठः । तद्राजस्य बहुषु तेनैवास्त्रियाम् २.४.६२ इति सूत्रस्य भाष्यप्रदीपे" अन्तरङ्गानपि विधीन् सुपो धातुप्रातिपदिकयोः (२.४.७१) इत्ययं लुक् प्रत्ययोत्तरपदयोश्च (७.२.९८) इति ज्ञापकादस्यैव सम्भवाद् बाध्यते इति भावमुक्त्वा परिभाषाया अपिशब्दघटित्वं भाष्यसम्मतमेव साधितं नतु मतान्तररूपमिति । न यासयोः ७.३.४५ इति सूत्रभाष्यस्य कैयटेऽपि अन्तरङ्गांश्च विधीन् बहिरङ्गो लुग् बाधते नतु सुब्लुगेवेत्यत्राप्यर्थकश्चः प्रयुक्त एव ।

स्वमोर्नपुंसकात् ७.१.२३ इति सूत्रे स्वमोर्लुकृत्यदादिभ्यश्चेति वक्तव्यम् । इहापि यथा स्यात् । तद्ब्राह्मणकुलमिति । किं पुनः कारणं न सिद्ध्यति "कृते ह्यत्वे न लुग्भवेत्" । अत्वे कृते लुग्न प्राप्नोति । इदमिह संप्रधार्यम् । अत्वं क्रियताम् लुगिति । किमत्र कर्तव्यम् ? परत्वादत्वम् । नित्यो लुक् । कृतेऽप्यत्वे प्राप्नोत्यकृतेऽपि । अनित्यो लुक् नहि कृतेऽत्वे प्राप्नोति, अतोऽम् (७.१.२४) इत्यम्भावेन भवितव्यम् । तस्मात् त्यदादिभ्येति वक्तव्यम् । इत्युक्त्वा भाष्ये यस्य 'त्यदादिभ्यश्चेति वक्तव्यम् इति वार्तिकस्यावश्यकत्वमुक्तम् तदपिघटितपरिभाषापाठस्वीकारे व्यर्थं स्यात् अनेन परमपि 'त्यदादीनामः' ७.२.१०२ इति बाधित्वा स्वमोरितिलुक्संभवात् । "अपि" शब्दनिवेशाभावे तु अत्वस्यान्तरङ्गत्वाभावेनान्तरङ्गबाधकत्वप्रतिपादकस्यास्य न्यायस्याप्रवृत्या

**अत्र च** 'प्रत्ययोत्तरपदयोश्च' इतिसूत्रं **ज्ञापकम्**। त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन '-त्वमावेकवचने' इत्यनेन सिद्धे इदं व्यर्थं सदेतज्ज्ञापकम्।
ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत्— एवं तर्ह्यत्र्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः॥

---

त्यदाद्यत्वबाधासिद्ध्या तद्वार्तिकं सार्थकं भवति, एवं परिभाषायामपिशब्दनिवेशे लुक् परमपि बाधते इति सिध्यति। तथाच त्वं राजा भवतात् इत्यत्र परमपि तातङादेशं बाधित्वा 'अतो हेः' ६.४.१०५ इति लुक् स्यादिति चेच्छ्रूयताम् 'तद् ब्राह्मणकुलम्' इत्यादौ त्यदाद्यत्वेकृते स्वस्याप्रवृत्ति सम्भाव्य पूर्वं लुग् न स्यात्; अतः लुगर्थं वार्तिकमवश्यकरणीयम्, भवतात् इत्यत्र तु "ज्ञापकसिद्धं न सर्वत्र' इति न्यायेन "अन्तरङ्गानपि विधीन्" इति न्यायस्याप्रवृत्या दोषाभावः।
**अत्र च**=अन्तरङ्गानपि विधीन् इति परिभाषायामित्यर्थः। सिद्धे=त्वादेशे सिद्धे इत्यर्थः। **ज्ञापकम्** इति=त्वया कृतम् इतिलौकिके युष्मद् टा कृत सु इत्यलौकिके च विग्रहे लुकः पदद्वयसापेक्षसमासाश्रितत्वेन बहिरङ्गस्य पूर्वपदमात्रसापेक्षत्वेनान्त-

---

इस परिभाषा का ज्ञापक "प्रत्ययोत्तरपदयोश्च" ७.२.९८ यह सूत्र है। यदि यह परिभाषा न रहे तो 'त्वया कृतम्' त्वत्कृतम् में लुक् को बाधकर अन्तरङ्गत्वात् विभक्तिनिमित्तक 'त्वमावेकवचने' ७.२.९७ से 'त्व' आदेश होकर रूप बन ही जायगा, इस तरह सूत्र व्यर्थ होकर इस परिभाषा का ज्ञापक बनता है। "तव पुत्रस्त्वत्पुत्रः" इत्यादि में" तवममौ ङसि" ७.२.९६ से प्राप्त 'तव' आदेश को और मम पुत्रः मत्पुत्रः में 'मम' आदेश को बाधकर 'त्व' आदेश म आदेश करने के लिए "प्रत्ययोत्तरपदयोश्च' ७.२.९८ सूत्र आवश्यक है। इसलिए वह व्यर्थ होकर ज्ञापक नहीं हो सकता" ऐसा यदि कहें तो ठीक है "प्रत्ययोत्तरपदयोश्च" सूत्र में मपर्यन्तग्रहण की अनुवृत्ति को ही परिभाषा का ज्ञापक मानना चाहिए; ऐसा भाष्यकार का मत हैं। "प्रत्ययोत्तरपदयोश्च" ७.२.९७ सूत्र के भाष्य में अन्तरङ्ग होने के कारण लुक् से पहले 'त्वमावेकवचने' (७.२.९७) से त्व और म आदेश करके त्वत्पुत्रः और मत्पुत्र की सिद्धि बताकर "प्रत्ययोत्तरपदयोश्च" इस सूत्र को अन्तरङ्गानपि विधीन्—इस परिभाषा का ज्ञापक बताया गया फिर "तवममौ ङसि" ७.२.९६ तुभ्यमह्यौ ङयि ७.२.९६ आदि से "त्वमावेकवचने" की प्रवृत्ति में बाधा दिखाकर त्वत्पुत्रः 'त्वद्धितम्' आदि की सिद्धि के लिए 'प्रत्ययोत्तरपदयोश्च' की आवश्यकता दिखायी और अन्त में कहा—यर्त्तहि मपर्यन्तग्रहणमनुवर्तयति इत्यादि। अर्थात् मपर्यन्तानुवृत्ति ही इस परिभाषा में ज्ञापक है। यदि एकवचन में विहित अन्य आदेश हो जाय तो मपर्यन्त की अनुवृत्ति व्यर्थ हो जायगी।

रङ्गयोः त्वमयोः कर्तव्ययोरसिद्धत्वेन त्वमावेकवचने ७.२.९७ इति त्वमादेशयोः कृतयोः त्वत्कृतम् मत्कृतमित्यादिसिद्धौ प्रत्ययोत्तरपदयोश्च ७.२.९८ इति सूत्रं व्यर्थं सत् परिभाषां ज्ञापयति ।

**तवममादिबाधनार्थम् इति**—तव पुत्रस्त्वत्पुत्रः, मम पुत्रः मत्पुत्र इत्यत्र तवममादेशौ निरवकाशत्वेनापवादत्वात् त्वमावेकवचने ७.२.९७ इत्यस्य बाधकौ स्याताम् तुभ्यं हितं त्वद्धितं मह्यं हितं मद्धितमित्यत्र "तुभ्यमह्यौ ङयि" ७.२.९५ इति निरवकाशौ तुभ्यमह्यादेशौ तवममादेशयोर्बाधकौ स्याताम् अतस्तत्र तेषां बाधनाय प्रत्ययोत्तरपदयोश्च ७.२.९८ इत्यस्य चारितार्थ्याज्ज्ञापकत्वं न संभवतीति न शङ्क्यम् माभूत्तज्ज्ञापकम् मपर्यन्तानुवृत्तेरेव ज्ञापकत्वसंभवात् । तथाहि मपर्यन्तानुवृत्तिं विनापि उत्सर्गसमानदेशा अपवादा इति-परिभाषया 'तवममौ ङसि' ७.२.९७ इत्युत्सर्गो यत्र प्रवर्तते तत्रैवास्य प्रवृत्या मपर्यन्तस्यैव कार्यसम्भवे 'प्रत्ययोत्तरपदयोश्च ७.२.९८ इति सूत्रे भाष्यकृता कृता मपर्यन्तानुवृत्तिर्व्यर्था परिभाषां ज्ञापयति । यदि चेदानीमनुवृत्तिर्न स्यात्तर्हि ङसो लुका लुप्तत्वेन 'तवममौ ङसि' ७.२.९७ इत्यस्याप्रवृत्या उत्सर्गशास्त्रप्रवृत्तिस्थलाभावात् 'प्रत्ययोत्तरपदयोश्च' ७.२.९८ इत्यनेन सर्वस्यैवादेशः स्यात् । इत्थमनुवृत्तिरावश्यकीति स्वांशे चारितार्थ्यम् । अन्यत्र फलं क्वेति जिज्ञासायां गोमत्प्रिय इति गृहाण । उत्सर्गसमानदेशा अपवादा इत्यस्य किं ज्ञापकमिति चेत् तस्मिन्नणि च युष्माकास्माकौ ४.३.२ इत्यत्र 'तस्मिन्नणि चाकङ्' इत्याकङादेशविधानेन 'ङिच्च' १.१.५३ इत्यन्तादेशे युष्म+आक+अ इति स्थिते सवर्णदीर्घे यौष्माकइत्यादिसिद्धे युष्माकादयादेशविधानेन उत्सर्गसमानदेशा अपवादा इति ज्ञापयति । **मपर्यन्तानुवृत्तिरिति**-त्वदति इत्यादौ युष्मदस्मच्छब्दाभ्यां सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य इति आचारेऽर्थे क्विपि क्विपः सर्वापहारलोपे विभक्तिपरत्वाभावेन त्वमावेकवचने ७ २.९७ इत्यस्याप्रवृत्या प्रत्ययोत्तरपदयोश्च इत्यनेन प्रत्ययनिमित्तकत्वादेशार्थं, तत् करोति तदाचष्टे इति युष्मच्छब्दाण्णिचि त्वादयतीत्यादौ च सुप्परत्वाभावेन त्वमावेकवचने इत्यस्याप्रवृत्या त्वादयादेशार्थं च प्रत्ययोत्तरपदयोश्चेत्यत्र प्रत्ययग्रहणस्य चारितार्थ्येन तदंशेऽपवादत्वाभावात् उत्सर्गसमानदेशा अपवादा इति न्यायस्याभावेन तत्र सर्वस्य स्थाने प्राप्तस्यादेशस्य निवारणाय मपर्यन्तानुवृत्तिश्चरितार्थेति तस्या ज्ञापकत्वं न स्यादिति चेन्न सम्पूर्णसूत्रस्य ज्ञापकतापरकभाष्यप्रामाण्येन हलन्तेभ्योऽनभिधानेनाचारक्विपोऽभावकल्पनात्तादृशप्रयोगाणामभावात् । ननु सम्पूर्णसूत्रस्य ज्ञापकता तु भाष्ये एव खण्डिता सूत्रस्य तवममाद्यादेशबाधनाय साफल्योक्तेः—तथाहि भाष्यं-प्रत्ययोत्तरपदयोश्चेतिसूत्रे एवं दृश्यते—प्रत्ययोत्तरपदयोश्च (७.२.९८) किमर्थमिदमुच्यते न त्वमावेकवचने (७.२.९७) इत्येव सिद्धम् । न सिद्ध्यति किं कारणमे-

युष्मदादिभ्य आचारक्विप् तु न । सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्

कवचनाभावात् । एकवचन इत्युच्यते । नचात्रैकवचनं पश्यामः । प्रत्ययलक्षणेन । न लुमताङ्गस्य (१.१.६३) इतिप्रत्ययलक्षणस्य प्रतिषेधः । एवं तर्हीदमिह सम्प्रधार्यम् ? लुक् क्रियतामादेशाविति । किमत्र कर्तव्यम् ? परत्वादादेशौ । नित्यो लुक् । कृतयोरप्यादेशयोःप्राप्नोत्यकृतयोरपि । अन्तरङ्गावादेशौ । एवं तर्हि सिद्धे सति यत् प्रत्ययोत्तरपदयोस्त्वमौ शास्ति । तज्ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गो लुग् भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? गोमान् प्रियोऽस्य गोमत्प्रियः, यवमत्प्रियः, गोमानिवाचरति गोमत्यते, यवमत्यते । अन्तरङ्गानपि नुमादीन् बहिरङ्गो लुग्बाधते इति । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ? येऽन्य एकवचनादेशाः प्राप्नुवन्ति तद्बाधनार्थमेतत्स्यात् । तद्यथा—तव पुत्रस्त्वत्पुत्रः । तुभ्यं हितं त्वद्धितम् । मह्यं हितम्—मद्धितम् इति । यत्तर्हि मपर्यन्तग्रहणमनुवर्तयति । यद्यत्रान्य एकवचनादेशाः स्युः मपर्यन्तानुवृत्तिरनर्थिका स्यात् । इति । एवञ्च सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात् किमपि कल्पनमयुक्तमिति चेत् सत्यम् नागेशोऽपि भाष्यकृतः सम्पूर्णसूत्रस्य ज्ञापकताऽरुचिं जानाति अतोऽत्रोक्तस्य "सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्" इत्यस्य तात्पर्यम् तत्रत्य-मपर्यन्तानुवृत्तिज्ञापकतापरभाष्यप्रामाण्यात् ।। इति नेयम् ।

---

त्वमिवाचारति त्वदति, अहममिवाचरति मदति तथा त्वामाचष्टे त्वादयति, मामाचष्टे मादयति, यहाँ पर विभक्ति पर में नहीं है । इसलिए 'त्वमावेकवचने' ७.२.९७ की प्राप्ति नहीं है, इसलिए प्रत्यय को निमित्त बनाकर त्व और म आदेश के लिए सूत्र का प्रत्यय अंश चरितार्थ हो गया, इसलिए उस अंश के आधार पर वह अपवाद नहीं रहा, इसलिए 'उत्सर्गसमानदेशा अपवादाः' अर्थात् अपवाद उत्सर्ग के समान देश वाले होते हैं, इस न्याय की प्रवृत्ति हो नहीं सकती । इसलिए सर्वादेश के वारण के लिए 'मपर्यन्त' की अनुवृत्ति चरितार्थ हो गयी; फिर उसे ज्ञापक नहीं माना जा सकता, ऐसा प्रश्न नहीं उठाना चाहिए क्योंकि सम्पूर्ण सूत्र को ज्ञापक बताने वाले भाष्य को प्रमाण मान कर यह कल्पना करनी चाहिए कि युष्मदादि शब्दों से आचार क्विप् नहीं होता । यद्यपि सम्पूर्ण सूत्र की ज्ञापकता तो तभी खण्डित हो गयी जबकि तव ममादि आदेश विधायक बाधक सूत्रों को बाधन के लिए सूत्र की आवश्यकता बतायी गयी; तथापि नागेश की पंक्ति "सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्" का तात्पर्य तद्भाष्य-घटित-मपर्यन्तानुवृत्ति-ज्ञापकता पर भाष्य प्रामाण्यात्" में मानना चाहिए अर्थात् उस सूत्र के भाष्य में मपर्यन्तानुवृत्ति को ज्ञापक बताने के कारण यह मानना चाहिए कि युष्मदादि शब्दों से आचार क्विप् नहीं होता है ।

**'ह्रस्वनद्याप' इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च । एवमेवैकार्थकाभ्यां प्रातिपदिकप्रकृतिकणिचोऽप्यनभिधानं बोध्यम् । एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् ।**

---

हलन्तेभ्यश्चाचारक्विपोऽभावे 'ह्रस्वनद्यापः' ७.१.५४ इतिसूत्रस्य भाष्यमपि प्रमाणम् ।

तत्राशङ्कितम्—कास् प्रत्ययादाममन्त्रेलिटि ३.१.३५ इति विहितस्यामः नुट् कस्मान्न भवति ? तत उत्तरितम्—अननुबन्धग्रहणे न सानुबन्धकस्येति । ततः प्रोक्तम् "स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्यः—इहास्य ग्रहणं माभूदिति—ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थोऽनुबन्धः कर्त्तव्यः(अन्यथा मस्यान्त्यहल्त्वाद्धलन्त्यमितीत्संज्ञापत्तिः) नार्थः इत्संज्ञापरित्राणार्थेन, इत्संज्ञाकार्याभावादत्रेत्संज्ञा न भविष्यति । इदमस्तीत्कार्यम् मिदचोऽन्त्यात्परः (१.१.४७) इत्यचामन्त्यात्परो यथा स्यात् प्रत्ययान्तादयं विधीयते । तत्र नास्ति विशेषो । मिदचोऽन्त्यात्पर इति वा परत्वे, प्रत्ययः पर इति वा । यस्तर्हि न प्रत्ययान्तादिजादेश्च गुरुमतोऽनृच्छः ( ३.१.३६ ) इति । अत्राप्यास्कासोराम्वचनं ज्ञापकं नायमचामन्त्यात् परो भवतीति । कथं कृत्वा ज्ञापकम्? नह्यस्ति

---

"ह्रस्वनद्यापो नुट् १.७.५४ इस सूत्र के भाष्य को प्रमाण मानकर यह कल्पना की गयी है कि हलन्त से आचार क्विप् नहीं होता है । उस भाष्य से भी युष्मदादि शब्दों से आचार क्विप् का अभाव ही सिद्ध होता है । नुड् विधायक पूर्वोक्त सूत्र के भाष्य में पहले" कास्प्रत्ययादाम्" ३.१.९५ सूत्र से विहित आम् को नुट् क्यों नहीं होता है, इस प्रश्न का उत्तर देते हुए भाष्यकार ने कहा 'नुट्' उस आम् को होता है; जिसमें कोई अनुबन्ध नहीं लगा हुआ हो । यह 'आम' अकार अनुबन्ध वाला है, इसलिए निरनुबन्धकग्रहणे न सानुवन्धकस्य ग्रहणम्" (प० ८२) अर्थात् अनुबन्धरहित के ग्रहण में अनुबन्धसहित का ग्रहण नहीं होता। इस सिद्धान्त के आधार पर 'कास्प्रत्ययात्" से विहित आम को नुट् नहीं होता । इस समाधान के बाद भाष्यकार ने कहा तब तो आम में अकारानुवन्ध अवश्य जोड़ना चाहिए। इस पर बल देते हुए उन्होंने बताया, हाँ, अकारानुबन्ध तो मकार की इत्संज्ञा को रोकने के लिए भी करना चाहिए । अन्यथा 'हलन्त्यम्' १.३.३ से मकार की इत्संज्ञा हो जायगी । इस दूसरी आवश्यकता का खण्डन करते हुए भाष्यकार ने बताया कि मकार की इत्संज्ञा तो इसलिए भी नहीं होगी कि यदि मकार की इत्संज्ञा हो जाय तब तो, यह आम् मित् हो जायगा और "प्रत्ययः परश्च" को बाध कर "मिदचोऽन्त्यात् परः" १.१.४७ से अन्त्य अच् से पर होगा। ऐसी स्थिति में

विशेष आमचामन्त्यात् परे सत्यसति वा। अयमस्ति विशेषः। असत्यामि द्विर्वचनेन भवितव्यम् सति न भवितव्यम्? सत्यपि भवितव्यम्, कथं? आमस्तन्मध्यपतितत्वाद्धातुग्रहणेन ग्रहणात्। तदेतत्कासासोराम्वचनं ज्ञापकमेव नायमचामन्त्यात् परो भवतीति। ×× आममन्त्रे इति निर्देशः शकन्धुन्यायेनेति। अत्रत्ये भाष्ये कास्धातोविहितस्याम्प्रत्ययस्य मित्वे 'मिदचोऽन्त्यात् परः १.१.४७ इति अन्त्यादचः परत्वेन कृते का +आ+स् लिट् इत्यत्र सवर्णदीर्घे कास् लिट् इत्यस्यैव पर्यवसानतया आम्विधानस्य वैयर्थ्यात्, प्रत्ययान्तात् गोपाय इत्यादेर्विहितस्य अन्त्याचः परत्वेन प्रत्ययपरत्वेन वा कृते विशेषाभावेन मकारोच्चारणे सामर्थ्यमुक्त्वा उच्चारणसामर्थ्यान्मस्य नेत्त्वमिति भाष्यसिद्धान्तः। स न सगच्छेत; यदि हि हलन्तेभ्यः युष्मदादिभ्यः आचारक्विप् स्यात्। युष्मच्छब्दात् आचारक्विपि क्विपः सर्वापहारे धातुत्वे लिटि युष्मद् लिट् इत्यत्र यदि आम् प्रत्ययः परश्चेति नियमेन प्रकृतेः परः स्यात् तदा युष्मद्+आम् लिट् इति जायते "अचां मध्ये योन्त्यः तस्मादचः परःस्याच्चेत् युष्म्+आम्+द् लिट् इति स्यादिति विशेषस्य स्पष्टतया विशेषाभावादिति भाष्यकथनमसंगतं स्यात्। अतः कल्प्यते यत् हलन्तेभ्य आचारक्विबनभिधानान्न भवतीति। एवं ज्ञापकतास्वीकृतिपरकभाष्यप्रा-

---

कास् धातु से आम् विधान करना व्यर्थ हो जायगा; क्योंकि 'का' के आगे मकार इत् संज्ञा वाले आ के विधान से दीर्घ होकर कास् ही बनेगा। इसी तरह प्रत्ययान्त गोपाय आदि धातु से "प्रत्ययः परश्च" ३.१.१/२ के अनुसार 'आम्' को पर होकर विधान करने में और "मित्वात्" अन्त्यअच् से पर होकर करने में किसी प्रकार का फलभेद नहीं है। इस तरह मकारोच्चारणसामर्थ्यात् ही मकार की इत्संज्ञा नहीं होगी, तदर्थ अकारानुबन्ध लगाने की आवश्यकता का खण्डन भाष्य में किया गया। अगर हलन्त से आचार क्विप् हो तब तो 'युष्मद्' शब्द से आचार-क्विप् करने पर आम् यदि 'प्रत्ययः परश्च' के अनुसार होता है; तब 'युष्मद् आम्' बनता है और यदि मित् होने के कारण अन्तिम अच् से पर होता है; तो युष्माद् बनता है। ऐसी स्थिति में फलभेद स्पष्ट होते हुए भी भाष्यकार ने जो फलभेदाभाव बताया, इससे सिद्ध होता है कि हलन्त से आचार क्विप् नहीं हो। 'मपर्यन्तानुवृत्ति' को ज्ञापक बताने वाले भाष्य के प्रामाण्य से यह भी सिद्ध होता है कि एकार्थ बोधक युष्मद् और अस्मद् शब्द से प्रातिपदिक प्रकृतिक णिच् भी नहीं होता है। यदि युष्मद् या अस्मद् शब्द से 'त्वाम् आचष्टे' या 'माम् आचष्टे' इस विग्रह में णिच् हो तब 'मपर्यन्त' की अनुवृत्ति रहने पर त्वादयति मादयति बनता है और नहीं करने पर त्वापयति, मापयति। इस तरह फलभेद होने से पूर्वोक्त भाष्य असंगत हो जायगा। इस तरह वह मत भी निरस्त हुआ जहाँ यह माना जाता था कि णिजादि के परे रहते त्वादि आदेश के लिए प्रत्यय ग्रहण चरितार्थ है।

**ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था। न चोत्सर्गसमान-देशा अपवादा इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवादेशे सिद्धे तद-**

---

माण्यात् एकार्थकाभ्याम् युष्मदस्मच्छब्दाभ्यां प्रातिपदिकप्रकृतिकणिचोऽप्यनभिधानं कल्प्यते। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च इति णिचि त्वां मां वा आचष्टे इत्यर्थे त्वापयति, मापयति, सिद्धान्तकौमुद्यां नामधातुप्रक्रियान्ते मपर्यन्तस्य त्वमौ (प्रत्ययोत्तरपदयोश्च इत्यनेन)। पररूपात् पूर्वं नित्यत्वाट्टिलोपः। वृद्धिः पुक्॥ त्वादयति, मादयतीति तु न्याय्यम्, अन्तरङ्गत्वात्पररूपे कृते प्रकृत्यैकाच् ६.१.१६३ इति प्रकृतिभावादिति यदुक्तं दीक्षितेन तच्चिन्त्यमिति। अतएव मपर्यन्तस्य ७.२.९१ इति सूत्रे "अवधि-द्योतनार्थं तर्हि (यदि सर्वत्रैवान्तशब्दः सह तेन वर्तते तर्हि) परिग्रहणं कर्तव्यम् मान्तस्येतीयत्युच्यमाने (सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति न्यायेन युष्मदस्मदोर्मपर्यन्तभागस्येति वैयाधिकरण्येनान्वयासम्भवात् दान्तयोर्युष्मदस्मदोर्न स्यात् किन्तु) यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाःस्युः क्व च मान्ते युष्मदस्मदी ? युष्मानाचष्टे, अस्मानाचष्टे इति युष्मयतेरस्मयतेश्चाप्रत्ययः इति भाष्ये एकत्वार्थकाभ्यां युष्मदस्वदस्मद्भ्यां णिचमनभिधाय युष्मानाचष्टे इति बहुत्वार्थकाभ्यामेव प्रत्ययो दर्शितः इति। तदेतत्सर्वमाह—**ननु इत्यादिनाऽपास्तमित्यन्तेन** ग्रन्थेन।

**असिद्धवत्सूत्रस्थभाष्यसम्मतेनेति**=असिद्धवदत्राभात् ६.४.२२ इति सूत्रस्थं भाष्यं यथा "कानि पुनरस्य योगस्य प्रयोजनानि "प्रयोजनं शैत्वं धित्वे" शाभाव एत्वं

---

"मपर्यन्तस्य" सूत्र के भाष्य से ऐसा प्रतीत होता है युष्मद् शब्द से णिच् करना भाष्यकार को इष्ट था। भाष्यकार ने वहाँ बताया है कि यदि 'मपर्यन्यस्य' इस अधिकार में 'परि' ग्रहण न करें और सूत्र करें 'मान्तस्य' तो जहाँ मान्त युष्मदस्मद् शब्द की उपलब्धि होगी, वहीं सूत्र लगेगा, मान्त युष्मदस्मद्शब्द हैं कहाँ? इस जिज्ञासा की शान्ति के लिए भाष्यकार ने बताया कि "युष्मयतेरस्मयतेरप्रत्यये" अर्थात् प्रतिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" से णिच् करके टिलोप करने के बाद क्विप् प्रत्यय करने पर क्विप् का सर्वापहार लोप करने पर मान्त युष्म् और अस्म् की उपलब्धि हो सकती है।

यद्यपि इस भाष्य से युष्मद् अस्मद् से णिच् प्रत्यय और उससे क्विप् का होना सिद्ध होता है परन्तु दोनों भाष्यों में सामञ्जस्य बिठाने के लिए यह मानना चाहिए कि द्व्यर्थक और बहुत्वार्थक युष्मद शब्द से ही ण्यन्तप्रकृतिक क्विप् होता है एकार्थ प्रकृतिक युष्मदस्मद् शब्द से नहीं।

सर्वादेश के निवारण के लिए मपर्यन्त की अनुवृत्ति चरितार्थ है; अन्यथा त्वत्पुत्रः में "प्रत्ययोत्तरपदयोश्च" ७.२.९८ से सम्पूर्ण युष्मद् को त्व आदेश हो जाता, यदि यह कहें कि 'असिद्धवदत्राभात्' ६.२.२२ सूत्र के भाष्य से प्रमाणित उत्सर्ग-

**नुवृत्तिर्व्यर्थेति वाच्यम् । तस्य श्नमकजादौ व्यभिचारादिति चेत्—न । श्नमि मित्त्वेन बहुचि पुरस्ताद्ग्रहणेनाकचि प्राक् टेर्ग्रहणेन तस्य बाधेऽपि अत्रोत्सर्गस्य त्यागे मानाभावात् ।**

---

च धित्वे प्रयोजनम् एधि शाधीति । अस्तिशास्त्योरेत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति ॥ शाभावस्तावन्न प्रयोजयति । एवं वक्ष्यामि-शास् हौ-शा हाविति । यत्वभूतः सकार; तत्र सात् धित्वम्, 'धि च' ८.२.२५ इति सकारस्य लोपः । अथवा आ हौ इति वक्ष्यामि । एवमपि सकारस्य प्राप्नोति । उपधाया इति वर्तते । तत्रोपधाया आत्वे कृते सात् धित्वम् 'धि च' ८.२.२५ इति सकारलोपः । अथवा' न हौ 'इति वक्ष्यामि । तत्रेत्वे प्रतिषिद्धे सात् धित्वम् 'धि च' इति सकारलोपः । ''एत्वमपि लोपापवादो विज्ञास्यते न च सकारस्य लोपः प्राप्नोति ॥ अर्थात् 'श्नशोरल्लोपः' ६.१.१११ इत्यस्य लोपस्यापवादोऽकारस्य स्थाने एत्वं विधीयते । 'श्नसोरल्लोपः' इत्यस्य विषयार्थस्यानुवर्तनात् तेन लोपविषय एत्वं भवतीत्यर्थः सम्पद्यते इति कैयटोक्तदिशा उत्सर्गसमानदेशा अपवादा इति भाष्यस्वरसोऽत्र ध्वन्यते । **तदनुवृत्तिः**- मपर्यन्तानुवृत्तिरित्यर्थः । तव पुत्रस्त्वत्पुत्रइत्यादौ त्वमावेकवचने इति बाधित्वा 'तवममौ ङसि' ७.२.९६ इति तवादेशः प्राप्नोति, तस्य बाधनार्थं सूत्रं तु चरितार्थम् किन्तु उत्सर्गसमानदेशा अपवादा इति न्यायेन मपर्यन्तस्यैवादेशे सिद्धे मपर्यन्तानुवृत्तिर्व्यर्था सती परिभाषां ज्ञापयति इति सारः । नच यद्यन्नुवृत्तिर्व्यर्था तदानुवृत्तिर्माकारीति वाच्यम् अनुवृत्तिकरणपरकभाष्यप्रामाण्येनानुमितपाणिनीयकृतस्वरितत्वप्रतिज्ञाया वैयर्थ्यप्रसङ्गात् । न च श्नम्प्रत्ययः शपोऽपवादोऽपि अन्तिमादचः

---

समानदेशाः अपवादाः'' अर्थात् अपवाद के देश उत्सर्ग शास्त्र के समान होते हैं, इस न्याय से उत्सर्ग सूत्र 'त्वमावेकवचने' ७.२.९७ की तरह अपवाद 'प्रत्ययोत्तरपदयोश्च' ७.२.९८ से भी 'मपर्यन्त' को ही 'त्वम' आदेश होंगे; फिर अनुवृत्ति को व्यर्थ होकर ज्ञापक होने में कोई बाधा नहीं है, तो यह भी उपयुक्त नहीं होगा; क्योंकि उत्सर्ग के समान ही अपवाद के देश नहीं होते हैं, जैसे श्नम् और अकच् । श्नम्, शप् का अपवाद होकर भी शप् की तरह प्रकृति से पर में न होकर अन्तिम अच् के पर में होता है ।जैसे पचति यहाँ 'शप्' धातु के पर होता परन्तु भिनत्ति में उसका(शप् का) अपवाद ''श्नम्'' ''मिदचोन्त्यात् परः १.१.४७ के बल से द् से पूर्व और 'इ' से पर होता है । इसी तरह प्रातिपादिक से 'पर' होकर होने वाले 'क' प्रत्यय का अपवाद होते हुए भी 'अकच्' प्रत्यय सर्वनाम रूप प्रातिपदिक से पर न होकर सर्वनाम के टि से पूर्व होता है । इसलिए 'उत्सर्ग समानदेशा अपवादाः' को आधार बनाकर 'मपर्यन्तानुवृत्ति' को व्यर्थ सिद्ध करके ज्ञापक नहीं माना जा सकता । इस तरह पूर्वोक्त प्रश्न, कि मपर्यन्तानुवृत्ति चरितार्थ है फिर इस परिभाषा में वह ज्ञापक कैसे हुआ,

अत एव 'तस्मिन्नणि च' इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम् । अन्यथा आकङादेशमेव विदध्यात् । आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिः । अतस्तद्विधानमिदमेव च तज्ज्ञापकम् ।

---

परो भूत्वा भवति रुणद्धि इत्यत्र, शप् तु प्रकृतेः परीभूय भवति, एवं कप्रत्ययापवादोऽपि अकच् टेः प्राग् भवति, कस्तु प्रातिपदिकात् प्रकृतेः पर एवेति उत्सर्गापवादयोस्तुल्यदेशत्वं व्यभिचरतीति वाच्यम्, श्नमि मित्वेन रुधादिभ्यः श्नम् ३.१.७८ इति, विभाषा सुपो बहुच् पुरस्तात्तु ५.३.६८ इति बहुचि पुरस्ताद् ग्रहणेन अव्ययसर्वनाम्नामकच् प्राक्टेः ५.३.६१ इति अकचि प्राक्टे ग्रहणेन विशेषकारणमाश्रित्य तत्र तत्र उत्सर्गसमानदेशा अपवादा इत्यस्य बाधकल्पनेऽपि अन्यत्र तथा कल्पने प्रमाणाभावात् । न चासति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायेनात्र व्याकरणशास्त्रे श्नमादौ कृतेन मित्वादिना उत्सर्गसमानदेशा अपवादा इति न्यायस्याश्रयणाभाव एव ज्ञाप्यतामिति वाच्यम् "बाधकेऽसति" इत्युक्तेः, अत्र तु मपर्यन्तानुवृत्तेः ज्ञापकता—प्रतिपादकभाष्यमेव बाधकम्, येन मित्वादिना तस्य न्यायस्य शास्त्रेऽस्मिन्नभावो न ज्ञाप्यते किन्तु यत्र मित्वं तत्र तस्य प्रत्ययत्वेऽपि नोत्सर्गसमानदेशत्वमिति सविशे-

---

समूल सिद्ध होता है । इसके उत्तर में कहते हैं कि अपवाद का देश उत्सर्ग के समान ही होता है, यह एक साधारण सिद्धान्त है । जहाँ आचार्य यह चाहते हैं कि यह नियम न लगे; वहाँ वे विशेष यत्न करते हैं—जैसे कि 'श्नम्' में मकार की इत्संज्ञा की गयी है; इस यत्न विशेष से "मिदचोऽन्त्यात् परः" सूत्र की प्रवृत्ति होती है और श्नम्, शप् प्रत्यय का अपवाद होकर भी "प्रत्ययः परश्च" से पर में न होकर 'मिदचोऽन्त्यात् परः' से अन्तिम अच् से पर होता है। इसी तरह '।बहुच् पुरस्तात् होने के कारण यह पूर्व में होता है और यहाँ "उत्सर्गसमानदेशा अपवादाः" का त्याग होता है । इसी प्रकार अकच् विधायक सूत्र में "प्राक्टेः" (टि से पहले हो) कहा गया है । इसलिए उस सामान्य नियम का बाध होता है परन्तु "प्रत्ययोत्तरपदयोश्च" सूत्र में "उत्सर्गसमानदेशा अपवादाः" जैसे सामान्य नियम के त्याग के लिए कोई विशेष यत्न नहीं किया गया है । इसलिए यहाँ उसी से मपर्यन्त को आदेश हो ही जाता "मपर्यन्तस्य" की अनुवृत्ति को परिभाषा के ज्ञापन से कोई रोक नहीं सकता ।

यद्यपि नियम यह है कि असति बाधके प्रमाणानां सामान्ये पक्षपातः"—विपरीत युक्ति (बाधक) नहीं रहने पर प्रमाण को सामान्य मानना चाहिए । तब तो 'श्नम्' 'अकच्' और 'बहुच्' प्रत्ययों को अपवाद होते हुए भी उत्सर्ग से भिन्न देशीय देखकर इस शास्त्र में 'अपवाद' उत्सर्ग के समानदेशीय नहीं होते हैं, ऐसा नियम बनाया जा सकता था; परन्तु इस नियम का बाधक प्रमाण मौजूद है "तस्मिन्नणि च" ४.३.२. इस सूत्र से युष्माक और अस्माक आदेश विधान करना । यही प्रमाणित

षमेव ज्ञाप्यत इति। **अतएव**=उत्सर्गसमानदेशा इति न्यायस्य विद्यमानात्वादेव तस्मिन्नणि च युष्माकास्माकौ ४.३.२. इत्यनेन युष्मकाद्यादेशविधानं चरितार्थम्। अन्यथा आकङादेशविधानेनैव यौष्माकीण इत्यादिसिद्धेस्तद्व्यर्थं स्यात्। तथाच युष्मकाद्यादेशविधानम् उत्सर्गसमानदेशा इति न्यायं ज्ञापयति। ज्ञापिते तु 'तवकममकावेकवचने' ४.३.३. इत्यनेनाकङापवादयोस्तवकाद्यादेशयोः उत्सर्गसमानदेशा अपवादा इति न्यायेनान्त्यादेशत्वापत्तिनिवारणाय युष्मकादिविधानं स्वांशे चरितार्थम्। फलन्तु असिक्नी पलिक्नीति। अत्र ''छन्दसि क्नमेके' इति वार्तिकेन क्नम् विधीयते, स कस्य स्थाने स्यादिति सन्देहे उत्सर्गसमानदेशा इति न्यायेन वर्णादनुदात्तात्तोपधात्तो नः ४.१.३९ इत्युत्सर्गशास्त्रसमानदेशत्वनिर्णयात् तकारस्य स्थाने भवतीति निर्णीयते। यदि च वर्णादनु०० इत्यतस्तोऽनुवृत्या रूपसिद्धिरुच्यते तदा ''तृप् तृम्फ तृप्तौ अत्र नित्यं सिच् अतर्पीत्, इति स्पृशमृशेति सिज्विकल्पः पौषादिकस्यैव, अङपवादत्वाद् इति तुदादिप्रकरणस्थसिद्धान्तकौमुदीदिशा अताप्सीत्, अत्राप्सीत्, अतर्पीत्, अतृपत् इति फलमवगन्तव्यम्। **इदमेव**=युष्मकाद्यादेशविधानमेव। **तज्ज्ञापकमिति**=तस्य उत्सर्गसमानदेशा इति न्यायस्य ज्ञापकमित्यर्थः। **विरोधे**

---

करता है कि यहाँ 'उत्सर्गसमानदेशा अपवादा' यह मान्य है। 'युवयोः अयम्' 'युष्माकं वा अयम्' इस विग्रह में अण् और खञ् प्रत्यय करने पर इस सूत्र से 'युष्माक' आदेश होने पर यौष्मकः या यौष्माकीणः रूप बनते हैं। 'तव अयम्-तावकः' या तावकीनः में ''तवकममकावेक वचने' ४.३.३ से तवक' आदेश ही होता है; क्योंकि 'युष्माक आदेश द्वित्व और बहुत्व की विवक्षा में चरितार्थ हो गया उसे 'तवक' और 'ममक' आदेश अपवाद होकर बाधता है। यदि 'युष्माक' आदेश नहीं करके आकङ् आदेश करते तो 'ङिच्च' १.१.५३ इस नियम से 'दकार' को आदेश होकर सवर्णदीर्घ करने पर यौष्माकः इत्यादि सभी इष्ट रूपों की सिद्धि तो हो जाती किन्तु 'उत्सर्गसमानदेशा अपवादाः' इस न्याय से आकङ् आदेश के अपवाद स्वरूप तवक और ममक आदेश भी अन्त को ही होता। इस तरह 'तावक' आदि प्रयोगों की सिद्धि नहीं हो पाती। इसलिए 'आकङ् आदेश नहीं करके 'युष्माक' आदेश विधान करना यही सिद्ध करता है कि ''उत्सर्गसमानदेशाः अपवादाः'' यह मान्य है। इस न्याय के अभाव में 'तवकादि' आदेश अनेकाल् हैं। इसलिए सर्वादेश होने पर रूप सिद्धि हो ही जाती 'युष्माक' और 'अस्माक' आदेश विधान करना व्यर्थ ही होता। इसलिए युष्माक और अस्माक आदेश ही 'उत्सर्गसमानदेशा अपवादाः' का ज्ञापक है।

**यद्यपि विरोधे बाधकत्वमिति वार्त्तिकमतेऽयं न्यायो भाष्यकारस्तु विनापि विरोधं सत्यपि सम्भवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमस्तथापि युष्माकाद्यादेशविधानज्ञापित 'उत्सर्गः' स्वीक्रियत एवेति प्रकृते न दोषः । एतद्भाष्यमपि तत्स्वीकारे मानम् ॥**

=एकस्यानेककार्ययोगरूपे विरोध इत्यर्थः । **अयन्न्यायः** उत्सर्गसमानदेशा इति न्याय इति भावः । **विरोधं विनापि**=एकस्य युगपदनेककार्यरूपविरोधं विनापीत्यर्थः । **सत्यपि सम्भवे**=पूर्वोक्तविरोधाभावेऽपि । अतएव भवेत्' इत्यादौ भव+या+त् इतिस्थिते 'अतोदीर्घोयञि' ७.३.१० इति परमपि दीर्घं बाधित्वा इयादेशो जायते । 'आटिटत्' इत्यादौ द्वितीयस्यैकाचो द्वित्वं प्रथमस्यैकाचः द्वित्वं बाधते । 'सर्वेषाम्' इत्यादौ च सुट् नुटं बाधत इति । वार्तिकरीत्या उत्सर्गसमानदेशा इति नियमः फलति भाष्यकारमतव्याख्यातुः कैयटस्य मतेन यद्यपि नायं न्यायः फलति तथापि युष्मकाद्यादेशज्ञापितत्वादयं न्यायः शास्त्रेऽत्र स्वीक्रियत एव, फलितार्थादपि ज्ञापितार्थस्य प्राबल्यादितिभावः । भवेदित्यादौ व्यभिचारस्तु न धर्मिग्राहकमानेन न्याये तत्र तत्र तथा संकोचः करिष्यते यथा व्यभिचारो नापतेत् । उत्सर्गशास्त्रस्य प्रवृत्तौ यावदपेक्ष्यते तत्सर्वं यदि अपवादशास्त्रस्यापि प्रवृत्तावपेक्ष्येत तदैव उत्सर्गसमानदेशा अपवादा इति प्रवर्तेत इत्यादिसंकोचः करणीय इति भावः । **न दोष इति** । मपर्यन्तानुवृत्तिज्ञापकताप्रतिपादनासङ्गतिरूप दोषइत्यर्थः । **एतद् भाष्यम्**=मपर्यन्तानुवृत्तिज्ञापकत्वसाधकभाष्यम् । **अपिशब्दात्**=तस्मिन्नणि इतिसूत्रस्य युष्मकाद्यादेशोऽपि मानमिति । **एवञ्च**=उत्सर्गसमानदेशा इति न्यायस्य प्रकृतन्यायस्य स्वीकारे चेति भावः । त्वत्कृतम् इत्यादौ पूर्वं विभक्तिलुकि त्वमावेकेत्यस्याप्रवृत्तेः मपर्यन्तस्यादेशाय मपर्यन्तस्यानुवृत्तिः 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे चरितार्था ।

यद्यपि विरोध रहने पर बाधकता मानी जाती है यह माननेवाले वार्तिककार के मत से यह न्याय सिद्ध होता है; क्योंकि एक को दो कार्यों की प्राप्ति ही विरोध है । इस तरह दोनों कार्यों का देश समान ही ठहरता है । भाष्यकार तो बिना विरोध के भी बाध्यबाधक भाव मानते हैं । इसी लिए तो "सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम् कौण्डिन्याय तक्रम्" सभी ब्राह्मणों को दही दो किन्तु कौण्डिन्य को छाछ दो" इस उक्ति में ब्राह्मण होने के कारण कौण्डिन्य को भी दही मिलना चाहिए और कौण्डिन्य गोत्रीय होने के कारण उसे छाछ दी जा सकती है; परन्तु यह देखा जाता है कि उसे दही बिल्कुल नहीं दिया गया । इस तरह भाष्यकार विरोध के बिना केवल सम्भावना मात्र से शास्त्रों में बाध्यबाधक भाव मानते हैं । यह 'अनभिहिते' २.३.१ सूत्र में कैयट ने कहा । इसीलिए "भवेत्" में पर दीर्घ को बाधकर इयादेश हुआ, "उर्णुनाव" इत्यादि में द्वितीय एकाच् को किया गया 'द्विर्वचन' प्रथम एकाच् के द्विर्वचन

एवं च मपर्यन्तानुवृत्तिस्त्वत्वत्कृतमित्यादौ मपर्यन्तस्यादेशविधानार्था । तत्र तत्र चान्तरङ्गत्वात् 'त्वमौ'—इत्येव सिद्धे व्यर्था सैतज्ज्ञापिका । ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्य्यन्तस्यैवादेशार्थं सा चरितार्थेति तदाशयः ॥

यत्तु हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्य्यन्तासम्भवेन तदनुवृत्तिर्व्यर्था सती ज्ञापिकेत्युक्तं—तन्न । अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तद-

---

हरदत्तमतमुपन्यस्य खण्डयति 'यत्तु हर०० इत्यादिना । अयं भावः—अन्तरङ्गयोस्तवममादेशयोः प्रवृत्तौ प्रत्यये उत्तरपदे च मपर्यन्तासंभवात् तदनुवृत्तिः—मपर्यन्तस्येत्यस्यानुवृत्ति व्यर्था, तवादेशे मपर्यन्ताभावात् ममादेशे च व्यावर्तनीयाभावात् इत्थं सा व्यर्था भूत्वा परिभाषां ज्ञापयतीति हरदत्ताशयः तन्नेति नागेशः अन्तरङ्गादप्यपवादस्य बलीयस्त्वेन अपवादेन प्रत्ययोत्तरपदयोश्चेत्यनेन तवममौ ङसीत्यस्यान्तरङ्गस्य बाध्यत्वेन तद्विषये=प्रत्ययोत्तरपदयोश्चेति सूत्रविषये तवममौ ङसीत्यस्या-

---

का बाधक बना । "सर्वेषाम्" में सुट् को भी नुट् का बाधक माना गया । तब तो भाष्यकार के मत से यह न्याय फलित नहीं होता; तथापि 'युष्माक' 'अस्माक' आदि आदेशों के द्वारा ज्ञापित "उत्सर्गसमानदेशा अपवादाः" यह न्याय सभी मानते ही हैं । इसलिए 'मपर्यन्तानुवृत्त' को ज्ञापक मानने में कोई दोष नहीं है । "मपर्यन्तानुवृत्ति" को ज्ञापक बताने वाला भाष्य और 'युष्माक' 'अस्माक' आदेशों का विधान, दोनों "उत्सर्गसमानदेशाः अपवादाः" इस न्याय के स्वीकार में प्रमाण हैं । जब 'उत्सर्गसमानदेशाः अपवादाः' यह स्वीकार कर लेते हैं, तब मपर्यन्तानुवृत्ति जो कि त्वत्कृतम् इत्यादि में मपर्यन्त को आदेश विधान के लिए है; व्यर्थ होकर ज्ञापन करती है; क्योंकि अन्तरङ्गत्वात् "त्वमावेकवचने" से ही रूप सिद्ध हो जाता, वह अनुवृत्ति व्यर्थ होकर ज्ञापक बनती है । जब "अन्तरङ्गानपि" यह परिभाषा ज्ञापित हो गयी तब इसके विषय में तवादि की अप्राप्ति के कारण इसमें तदपवादत्व का अभाव हो गया, ऐसी स्थिति में 'मपर्यन्त' को ही आदेश करने के लिए वह (मपर्यन्त की अनुवृत्ति ) चरितार्थ हो गयी । यह ग्रन्थ का आशय है ।

हरदत्त ने कहा कि 'त्वत्पुत्रः-मत्पुत्रः' में अन्तरङ्गत्वात् यदि 'तव' और 'मम' आदेश हो जाय तो, तवादेश होने पर 'मपर्यन्त' के सर्वथा अभाव होने के कारण और मम आदेश होने पर सर्वत्र मपर्यन्त ही रहने के कारण व्यावर्त्य के अभाव होने से 'मपर्यन्तानुवृत्ति' व्यर्थ होकर परिभाषा ज्ञापित करती है; किन्तु उनका यह कथन ठीक नहीं है क्योंकि 'अन्तरङ्ग' को भी बलवान् होने के कारण अपवाद शास्त्र बाध लेता है । इसलिए अपवाद सूत्र 'प्रत्ययोत्तरपदयोश्च' के विषय में 'तवममौ ङसि' (अन्तरङ्गशास्त्र) की प्रवृत्ति नहीं हो सकती ।

**प्रवृत्तेः । वस्तुत इदं ज्ञापकं वार्तिकरीत्यैव । भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः ॥**

**इयं 'सुपो धातु' इति लुग्विषयैवेति केचित् । 'एङ्ह्रस्वात्सम्बुद्धेः' 'न यासयोः' इति सूत्रस्थाकरप्रामाण्येन लुङ्मात्रविषया । आद्ये हे त्रपु इत्यादावनेन**

---

प्रवृत्तेः । वार्तिकमते एकस्य कार्यद्वययोगरूपविरोधेएव बाध्यबाध्यकभावादुत्सर्गसमानदेशा अपवादा इति फलति । भाष्यमतेन तु सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम् कौण्डिन्याय तक्रमित्यादौ दधिदानादनन्तरं पूर्वं वा तक्रदानसंभवेन तक्रदानेन दधिदानस्य बाधस्वीकारात् तथाविधविरोधाभावेऽपि बाध्यबाधकभावस्वीकारेणास्य न्यायस्य फलितत्वं न संभवतीति सर्वमाह—**वस्तुतः इत्यादिना इत्याहु**—रित्यन्तेन ग्रन्थेन ।

वस्तुतोऽन्तरङ्गानपीति न्यायः ज्ञापकसिद्ध एव । अतएव लघुशब्देन्दुशेखरे 'भवतात्' इत्यत्र तातङं बाधित्वाऽनेन न्यायेन हेर्लुकं संभाव्य 'ज्ञापकसिद्धं न सर्वत्र' (प० १२६) इति समाधानं दत्तम् । अन्यथाऽस्य ज्ञापकसिद्धत्वाभावे कुतोऽस्य तेन न्यायेनासार्वत्रिकबोधनम् ? इयमेवारुचिरित्याहुरित्युक्तौ दृश्यते ।

**धर्मिग्राहकमानात्**=(धर्मःपरिभाषारूपः स अस्यास्तीति धर्मी=ज्ञापकशास्त्रं प्रत्ययोत्तरपदयोश्चेति तस्य प्रामाण्यात्) इदं सिध्यति यदियं परिभाषा सुपो धातुप्रातिपदिकयो २.४.७१ इति लुक एव प्राबल्यं बोध्यते त्वत्कृतमित्यादौ तं लुकमेव प्रबलं

---

वस्तुतः यह परिभाषा वार्तिककार के मत से ही ज्ञापित हो सकती है; क्योंकि वार्तिककार के मत में ही एक को दो कार्य की असंभावना रूप विरोध में ही बाध्य-बाधक भाव माना गया है । इसलिए वार्तिककार के मत में ही 'उत्सर्गसमानदेशाः अपवादाः' यह फलित होता है, उसके फलित होने पर ही यह परिभाषा ज्ञापित हो सकती है । भाष्यकार के मत में तो पूर्वोक्तविरोध के अभाव में भी बाध्यबाधक भाव माना गया है । इसलिए "उत्सर्गसमान" यह परिभाषा फलित नहीं होती और उसके बिना 'मपर्यन्तानुवृत्ति' व्यर्थ होकर ज्ञापिका नहीं हो सकती । इसलिए भाष्यकार के मत में यह परिभाषा वाचनिकी है । यह कुछ लोग कहते हैं ।

"भवतात्" में "अन्तरङ्गानपि" इस न्याय से तातङ् आदेश को बाधकर हि' के लुक् की आशंका करके भाष्यकार ने कहा कि ज्ञापकसिद्धं न सर्वत्र" ज्ञापकसिद्ध न्याय सब जगह लागू नहीं होता । इसलिए "अन्तरङ्गानपि विधीन्" यह न्याय यहाँ लागू नहीं होगा । इस भाष्य से ऐसा लगता है कि यह न्याय 'ज्ञापकसिद्ध' है, 'वाचनिक' नहीं । इसी विचार से नागेश ने "आहुः" कहा है ।

यह, सुपो धातुप्रतिपदिकयोः"से जहाँ लुक् की कि प्राप्ति होती है, वहीं लगती है यह किसी का मत है । 'एङ् ह्रस्वात् सम्बुद्धेः ६.१.६९ और "न यासयोः" ७.३.४५ इस सूत्र के आकर ग्रंथ के प्रमाण से यह सभी लुकों में लगती है । "एङ् ह्रस्वात्" सूत्र

लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम् । अन्त्येऽन्तरङ्गांश्च विधीन् सर्वोऽपि लुग्बाधते न तु सुब्लुगेव । अत एव सनीस्रंस इत्यादौ नलोपो न भवति । पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात् प्रागेव टापो लुक् । अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयट उक्तम् ॥

एतद्विरोधात्तद्राजस्ये'ति सूत्रे कैयटेनोक्तम् । अङ्गान तिक्रान्तोऽत्यङ्ग इत्यत्र

---

बोधयित्वा सूत्रस्य स्वांशे चरितार्थ्यात्, ज्ञापकस्य विशेषापेक्षत्वस्वीकारादिति केचित्—तन्न, एङ् ह्रस्वात् सम्बुद्धेः ६.१.६९ इति न यासयोः ७.३.४५ इति सूत्रस्थभाष्य-कैयटप्रामाण्येन सर्वविधस्य लुकः प्राबल्यमनेन बोध्यत इति प्रतीतेः । आद्ये—एङ् ह्रस्वादिति सूत्रे । सनीस्रस इति । अत्रान्तरङ्गमपि नलोपम् अन्तरङ्गानपीति न्यायेन बाधित्वा अच् प्रत्यये परे यङः यङोऽचि च २.४.७४ इतिलुकि, न लुमतेति निषेधान्नलोपो न भवति । तदुक्तं न यासयोः ७.३.४५ इतिसूत्रभाष्यस्य प्रदीपे कैयटेन—अन्तरङ्गांश्च विधीन् बहिरङ्गो लुग् बाधते न सुब्लुगेव । तथाच 'सनीस्रंस' इत्यादौ नलोपो न भवति पञ्चभिः खट्वाभिः क्रीतं पञ्चखट्वमित्यादौ टापा सहैकादेशो न भवति । अन्यथैकादेशस्यादिवद्भावादाब् ग्रहणेन ग्रहणाल्लुकि कृतेऽकारस्य श्रवणं न स्यात् ॥

---

में भाष्यकार ने कहा है कि 'हे त्रपु' में लोप को बाधकर इसी न्याय के बलसे लुक् होता है । "न यासयोः" सूत्र में भाष्यकार ने साफ बताया कि 'सभी लुक् अन्तरङ्ग विधियों को बाधते हैं; यही नहीं कि केवल सुप्लुक् ही अन्तरङ्ग विधियों को बाधे" । इसीलिए "सनीस्रंसः" में स्रंस् धातु से यङ् करने पर नलोप और यङ् का लुक् दोनों की प्राप्ति होनेपर 'अन्तरङ्ग नलोप' को बाधकर इस न्याय से यङ् का लुक हो गया । इसके बाद पुनः यङ् को प्रत्ययलक्षण से लाकर नलोप नहीं हुआ; क्योंकि "न लुमताङ्गस्य" १.१.६२ ने निषेध कर दिया । पञ्चभिः खट्वाभिःक्रीतः" "पञ्चखट्वः" यहाँ पर इसी न्याय से दीर्घ एकादेश के पहले ही टाप् का 'लुक्-तद्धितलुकि' १.२.४९ से लुक् हुआ । यदि इस न्याय का केवल सुप्लुक् ही विषय है ऐसा मानें तो अन्तरङ्गत्वात् पहले दीर्घ हो जाता और फिर टाप् का (आका) लुक्करने पर 'पञ्चखट्व' में अकार का अन्त में श्रवण नहीं हो सकता था । यह बात कैयट ने कही है ।

"तद्राजस्य बहुषु तेनैवास्त्रियाम्' २.४.६२ इस सूत्र में कैयट ने जो कहा कि यह न्याय केवल सुप्लुक् को ही बलवान् साबित करता है; वह तो टाप् के लुक् को बलवान् बनानेवाले पूर्वोक्त कैयट के स्वलेख से विरुद्ध होने के कारण केवल प्रौढि-वाद दिखाई पड़ता है ।

**सुपो लुकि बहुवचनपरत्वाभावात् 'तद्राजस्ये' ति लुक् न स्यादिति शङ्कापरभाष्य-व्याख्यावसरेऽन्तरङ्गानपीति न्यायेनायंलुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इति तत् प्रौढच ेति द्रष्टव्यम् । लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं वक्तुं युक्तम् ॥**

---

तद्राजस्य बहुषु तेनैवास्त्रियाम् २.४.६२ इति सूत्रस्य कैयटोक्तिरित्थमस्तिः— "अन्तरङ्गानपि विधीन् 'सुपो धातुप्रातिपदिकयोः (२.४.७१) इत्ययं लुक् प्रत्ययोत्तर-पदयोश्च (७.२.९८) इति ज्ञापकादस्यैवात्र संभवात् बाधते इति भावः । अयं भावः बहुष्वर्थेषु तद्राजस्य लुक् स्यात्, तदर्थकृते बहुत्वे नतु स्त्रियाम् इति तद्राजस्य २.४.६२ इति सूत्रस्य तात्पर्यम् । अत्र भाष्यकारः "बहुवचने परतो यस्तद्राजस्तस्य लुक् इत्यर्थे

---

'तद्राज' सूत्र का अर्थ है कि बहुत्व अर्थ में विद्यमान तद्राजसंज्ञक प्रत्यय का लुक् होता है किन्तु स्त्रीलिंग में नहीं होता है । वहाँ "बहुषु" का अर्थ बहुवचन परे रहते है; ऐसा मानकर भाष्यकार ने कहा कि अङ्गानां राजानः अङ्गाः तान् अङ्गान्अतिक्रान्तः अत्यङ्गः यहाँ यदि पदावधिक अन्वाख्यान करें तो 'अतिसुअङ्ग 'अण् शस्' इस स्थिति में "तद्राजस्य" २.४.६२ सूत्र से प्राप्त लुक् को एक पद की अपेक्षा होने से वह अन्तरङ्ग है । अपर निमित्त होने के कारण समासलुक् (२.४.७१) भी अन्तरङ्ग है, इस तरह अन्तरङ्गत्व समान होने पर भी परत्वात् समासलुक् हो जाने पर और प्रत्ययलक्षण (१.१.६२) का "न लुमताङ्गस्य १.१.६३" से निषेध हो जाने पर बहुवचन परत्व के अभाव के कारण "तद्राजलुक्" नहीं होगा; भाष्य में की गयी इस शङ्का के प्रतिपादक ग्रन्थ की व्याख्या करते हुए कैयट ने कहा कि "अन्तरङ्गानपि" इस न्याय से यह तद्राजलुक्, सुप्लुक् का बाधक होगा फिर इस समाधान का स्वयं खण्डन करते हुए कहा कि यह न्याय केवल सुब्लुक् को बलवान् बताता है। यह कैयट परस्परविरुद्ध होने के कारण उपेक्ष्य है, मान्य, या सिद्धान्त नहीं । इसे केवल प्रौढिवाद मानना चाहिए । प्रौढिवाद का तात्पर्य है वह वाद, जिससे केवल यह सूचित होता है कि वक्ता की ऊह (तर्क) शक्ति बड़ी प्रबल है । वह कुछ भी तर्क देकर तत्काल अपने पक्ष का समर्थन करके दिखा सकता है । भले ही वह तर्क तर्काभास हो; उसके द्वारा प्रस्तुत मत उसके मत से ही विरुद्ध क्यों न हो जाता हो । यहाँ युक्त समाधान तो यह होता कि लुक की अपेक्षा लुक् को बलवान् नहीं बनाया जा सकता । धर्मिग्राहक प्रमाण (परिभाषा का ज्ञापन जिस परिस्थिति में हुआ है उसमें छिपे तथ्य के) आधार पर यही सिद्ध होता है कि यह न्याय केवल लुक् से भिन्न कार्यों की अपेक्षा लुक् को बलवान् बताता है । त्वत्प्रियः" में लुक् से भिन्न हल्ङ्यादि लोप को ही लुक् के द्वारा रोकने का प्रयत्न हुआ है । इसलिए लुक् को लुग्भिन्न कार्यों से ही प्रबलता दिखाना इस न्याय का कार्य होना न्यायोचित है ।

अङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र पदावधिकान्वाख्याने अति सु अङ्ग शस् अण् इति स्थितौ एकपदापेक्षत्वेन तद्राजलुगन्तरङ्गः, अपरनिमित्तकत्वेन सामासिकलुगपि अन्तरङ्ग इत्थमन्तरङ्गत्वे तुल्येऽपि परत्वात् सुपो धातु...(२.४.७१) इत्यनेन सामासिके लुकि जाते न लुमताङ्गस्य (१.१.६३) इति प्रत्ययलोपे प्रत्ययलक्षम् १.१.६२ इति प्राप्तस्य प्रत्ययलक्षणस्य निषेधाद्बहुवचनपरत्वाभावेन तद्राजलुग्न स्यादिति प्राह। तत्र कैयटेन प्रथमम् अन्तरङ्गानपीति न्यायेन तद्राजलुक् सुपो धातुप्रातिपदिकयोरिति लुको बाधकः स्यादिति। तथाच बहुवचनपरतस्तद्राजप्रत्ययस्य लुगित्यर्थेऽपि न दोष इत्युक्त्वा पूर्वोक्तं वाक्यं लिखित्वा प्रकटीकृतं यदनेनान्तरङ्गानपि विधीनिति न्यानेन सुपो धातुप्रातिपदिकयोरिति लुक एव प्राबल्यं बोध्यते नतु लुङ्मात्रस्य धर्मिग्राहकमानेन तथाविधकल्पनाया एव सिद्धेः इयं कैयटोक्तिर्न यासयोः (७.१.४५) इतिसूत्रोक्तया ३५० तमे पृष्ठे मयोद्धृतया कैयटगिरा न संवदते। अतः प्रौढिवादमात्रपरतया नादरणीया स्ववचनविरोधात्। एङ्ह्रस्वादिति सूत्रस्थभाष्यविरोधाच्च एङ्ह्रस्वात्—६.१.६९ इति सूत्रस्थं भाष्यमित्थमस्ति—अपृक्तसम्बुद्धिलोपाभ्यां लुग् भवति, विप्रतिषेधेन। अपृक्तलोपस्यावकाशः। गोमान्, यवमान्। लुकोऽवकाशः त्रपु, जतु। इहोभयं प्राप्नोति, तद्ब्राह्मणकुलं, यद्ब्राह्मण कुलम्॥ सम्बुद्धिलोपस्यावकाशः। अग्ने, वायो। लुकः स एव। इहोभयं प्राप्नोति। हे त्रपु हे जतु। लुग् भवति विप्रतिषेधेन॥ स तर्हि विप्रतिषेधो वक्तव्यः। न वक्तव्यः। न वा लोपलुको र्लुगवधारणाद्यथानडुह्यत इति (वा० ६) न वार्थो विप्रतिषेधेन। किं कारणम्। लोपलुकोर्लुगवधारणात्। लोपलुकोर्हि लुगवधार्यते। लुग्लोपयणयवायावेकादेशेभ्यः। यथानडुह्यते इति। तद्यथा—अनड्वानिवाचरत्यनडुह्यते इत्यत्र लोपलुकोर्लुगवधार्यते॥

अत्र कैयटः—**हेत्रप्विति** लुकि कृते प्रत्ययलक्षणप्रतिषेधात् सम्बुद्धिगुणाभावः। इकोऽचिविभक्तौ(७.१.७३)इत्यत्रत्वज्ग्रहणस्य प्रयोजनं वक्ष्यते-इह किञ्चित्त्रपो' इति। ततो गुणेन भाव्यम्। **न वक्तव्य इति**। न व्याख्यातव्यः॥ कस्मादित्याह नवेति। 'अन्तरङ्गानपि विधीन् बाधमानो लुग् बलवान्' इत्यतुल्यबलेन लोपेन स्पर्धा नार्हतीति विप्रतिषेधो नोपन्यसनीयः। **अनडुह्यत इति**। सुलोपे सति प्रत्ययलक्षणेन नुमाभौ स्याताम् लुकि प्रत्ययलक्षणप्रतिषेधान्न भवतः॥ **मूले अयं लुक्**=तद्राजलुगिति भावः। सुब्लुक एव=नतु लुङ्मात्रस्येति तात्पर्यम्। तस्य कैयटस्य आशङ्कायाः(तदाशङ्कायाः)समाधानं त्वेवं वक्तुं युज्यते—**धर्मिग्राहकमानात्** (ज्ञापकपरिस्थितिसमकक्षतर्कात्) लुगन्यकार्यापेक्षयापीति। अथवा अन्तरङ्गनिमित्तविनाशकस्यैव लुकः प्राबल्यमनेन बोध्यते। तद्राजलुक् तु न सामासिकलुको निमित्तं विहन्ति। एवञ्च सामासिकलुगपेक्षया तद्राजलुकः प्राबल्यमनेन नैव शक्यते बोधयितुम्। तथाच ''अन्तरङ्गानपीति न्यायेनायंलुक् (तद्राजलुक्) सुब्लुको बाधकः स्यादिति कथनं तत्थ्यरहितमिति। **मूलेलुगपेक्षया**= सामासिकलुगपेक्षया। लुकः=तद्राजलुक इत्यर्थः। अनेन न्यायेनान्तरङ्गविनाशक-

**अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः ॥५३॥**

---

लुकः तत्प्रयोजकस्य समासस्य प्रातिपदिकत्वस्य च प्राबल्यं बोध्यते । तेन 'अर्णुहि' इति सिद्धम् । तनादिगणपठितात् ऋणु गतौ इत्यस्माद् धातो र्लोटि सिपि तस्य 'सेर्ह्यपिच्च' ३.४.८७ इति ह्यादेशे 'तनादिकृञ्भ्य उः' ३.१.७९ इत्युप्रत्यये ऋण्+उ+हि इति स्थिते उप्रत्ययमार्धधातुकं निमित्तं विधाय 'पुगन्तलघूपधस्य च' ७.३.८६ इति गुणे 'अर्णुहि' इति स्थिते हेर्लुग् न भवति "उतश्च प्रत्ययादसंयोगपूर्वात् ६.४.१०६ इत्यनेन, असंयोगपूर्वादेव प्रत्ययात् परस्य हेर्लुग्विधानात् । इह तु साम्प्रतं संयोगपूर्व-

---

यह न्याय अन्तरङ्ग के निमित्त को विनिष्ट करने वाले लुक् को बलवान् सिद्ध करता है । इसका फल है 'अर्णुहि' की सिद्धि । तनादि के ऋण् धातु से लोट्-लकार मध्यमपुरुष के एक वचन में 'सिप्' करने पर और सिप् के स्थान में 'हि' आदेश करने पर बीच में 'उ' प्रत्यय हुआ, उस 'उ' को निमित्त बनाकर लघूपधगुण हुआ; उस गुण (अन्तरङ्ग) को बाधकर इस न्याय से "उतश्च प्रत्ययात्" ६.४.१०६ सूत्र से हि का लुक् हो जाता; परन्तु हिलुक् नहीं हुआ, क्योंकि वह 'हिलुक्' गुण के निमित्त का विनाशक नहीं है । इसलिए यह न्याय नहीं लगा और अन्तरङ्गत्वात् जब गुण किया गया; तब असंयोगपूर्वक नहीं होने से 'हि' का लुक् नहीं हुआ ।

खैर, गोमत्प्रियः में जब हलङ्यादि लोप की प्राप्ति है उस समय 'सुपो धातु' २.४.७१ से लुक् की प्राप्ति ही नहीं है; फिर बाध्यबाधक भाव कैसे ? अथवा समास के बाद सुपो धातु०—२.४.७१ लुक् करने आयेगा उसके (समास के) पहले ही हल्ङ्यादि लोप की प्राप्ति है, वह क्यों नहीं हुआ ? तो इसका उत्तर यह है कि परिभाषा में 'लुक्' का अर्थ लुक्प्रयोजक समासादि भी है । इस तरह परिभाषा लुक् प्रयोजक (लुक् के निमित्त) समासादि को भी अन्य अन्तरङ्ग विधियों से बलवान् होना सिद्ध करती है । इसलिए लोप को बाधकर समास और प्रातिपदिकसंज्ञादि कार्य होंगे ।

इस परिभाषा से सम्बद्ध कुछ और विचार और जगह (उद्योत आदि में) लिखे गये हैं । इसी को दिखाते हुए लिखा गया है अन्यत्र विस्तरः" ।

वहाँ लिखा गया है कि यह परिभाषा सार्वत्रिक नहीं है । अर्थात् अनित्य है; क्योंकि "ज्ञापकसिद्धं न सर्वत्र" (१२६) अर्थात् जो बात ज्ञापकसिद्ध है; वह सर्वत्र लागू नहीं होती है ।

इसलिए 'न यासयोः' ७.३.४३ इस सूत्र का भाष्य संगत होता है । वहाँ का कैयट तो चिन्त्य ही है इत्यादि बातें उद्योत आदि में स्पष्ट रूप से बतायी गयी हैं ।

इति शिवम् ५३

**नन्वेवं सोमेन्द्रेऽन्तरङ्गत्वादा 'द्गुणे' पूर्वपदात् परेन्द्रशब्दाभावेन 'नेन्द्रस्य' इति वृद्धिनिषेधो व्यर्थः। अन्तादिवद्भावस्तु उभयत आश्रयणे निषिद्धः। किञ्च**

---

त्वमायातम्। अन्तरङ्गानपीति न्यायेनान्तरङ्गमपि गुणं बाधित्वा पूर्वं हेर्लुक् न भवति हे र्लुकोऽन्तरङ्गगुणनिमित्तविनाशकत्वाभावात्। गुणस्य निमित्तमिह उप्रत्ययस्तस्य विनाशो न उतश्चप्रत्ययादिति जायते। इत्थमन्तरङ्गनिमित्तविनाशकस्य लुकः प्राबल्यमनेन बोध्यत इति निवेशस्य फल 'मर्णुहि' इति। **तत्प्रयोजकस्य** अर्थात् लुक्प्रयोजकस्य समासस्य प्रातिपदिकत्वस्य च प्राबल्यबोधनस्य फलम् 'गोमत्प्रिय' इत्यादौ समासात् प्रातिपदिकत्वाच्च प्राक् हल्ङ्यादिलोपाभावः सोः। तेन दीर्घनुमादयो नेत्यवतरणविचारप्रसंगे निरूपितम्। अन्यथा 'गोमत्प्रिय' इत्यादौ लुकः प्रवृत्तिः समासादनन्तरं सम्भाव्यते, हल्ङ्यादिलोपश्चैकपदापेक्षत्वेनान्तरङ्गः समासात् प्रातिपादिकत्वाच्च प्रागेव प्रवृत्तः स्यात्। अनेन न्यायेन तु लुक एव बाधकत्वबोधनात् समासादीनां प्राबल्यबोधनं न स्यात्। अतः न्यायघटक लुक्पदं समासस्य प्रातिपदिकस्य च स्वप्रयोजनकत्वसम्बन्धेन सम्बन्धिनो बोधकमुपलक्षणमितियावत्। तेनानेन समासादीनामपि प्राबल्यबोधनात् हल्ङ्यादिलोपबाधकत्वं सिद्धचतीति। **अन्यत्र**=उद्योतादौ। **स्पष्टमिति**="अतएव" न यासयोः (७.३.४५) इति सूत्रस्थभाष्यसंगतिस्तत्रत्यप्रागुक्तकैयटस्तु चिन्त्य एवेत्यादि स्पष्टमुद्योतादावित्यर्थः। ५३।

**पूर्वोत्तरपदनिमित्त—एकादेशो न ५४**

सोमश्च इन्द्रश्चेति विग्रहे चार्थे द्वन्द्व इति द्वन्द्वे कृते समासत्वात् प्रातिपदिकत्वे सुपोर्लुकि अन्तरङ्गत्वाद् आद्गुण इति गुणे निष्पन्ने सोमेन्द्रशब्दे पूर्वपदस्य सोमस्य ततः परस्य चेन्द्रशब्दस्याभावेन "नेन्द्रस्य परस्य च ७.३.२२ इत्युत्तरपदस्येन्द्रशब्दस्य वृद्धिनिषेधो न स्यात्, पूर्वपदात् परस्येन्द्रशब्दस्य वृद्धि र्नेति तदर्थात। नच गुणै-

---

**पूर्वोत्तरपद.........न ५४**

'सोमेन्द्रौ यहाँ सोम और इन्द्र शब्दों को द्वन्द्व समास करने पर अन्तरङ्गत्वात् जब 'आद्गुण' ६.१.८६ से गुण हुआ; तब न कोई पूर्वपद है और न इन्द्र शब्द है इसलिए "नेन्द्रस्य परस्य च" ७.३.२२ से वृद्धि का निषेध नहीं होगा; क्योंकि पूर्वपद से पर इन्द्र शब्द का अभाव है। एकादेश विशिष्ट "सोमे" इसमें पूर्वान्तवद्भाव से पूर्वपदत्व लाने पर भी "न्द्र" शब्द ही उत्तर पद में बच जायगा; इसलिए उत्तरपद में इन्द्र शब्द के अभाव के कारण वृद्धि का निषेध नहीं होगा। पूर्वान्तवद् भाव से "सोमे" में पूर्वपदत्व और 'एन्द्र' में परादिवद् भाव से 'इन्द्र' शब्दत्व लाना तो सम्भव नहीं है; क्योंकि "उभयत आश्रयणे नान्तादिवत् (व्याडिवृत्ति ४४; पुरु ५१, सीर ६०) इस परिभाषा से पूर्वान्तत्व और परादित्व दोनों के आश्रयण में 'अन्तादिवच्च' ६.१.८५ सूत्र का निषेध हो जायगा।

**वृद्धिरप्यत्र न प्राप्नोति । अन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेन न्द्रशब्दस्यैकदेशविकृतन्यायेनोभयत आश्रयणे नान्तादिवदित्यस्याभावेन तदाश्रयणे चोत्तरपदत्वेपि तस्यानच्कत्वात्, एकस्यैकादेशेन परस्य नित्येन यस्येति**

---

कादेशविशिष्टे सोमे इत्यत्र 'अन्तादिवच्च' ६.१.८५ इति पूर्वान्तवद्भावेन पूर्वपदत्वमस्तु इति वाच्यम् तथापि इन्द्रशब्दस्याभावेन पूर्वपदात् पूर्वान्तवद्भावसाधितपूर्वपदत्वात् सोमे इत्यस्मात् परस्य इन्द्रशब्दस्याभावान्निषेधाप्राप्तेस्तादवस्थ्यात् । पूर्वान्तवद्भावेन 'सोमे' इत्यत्र पूर्वपदत्वम्, परादिवद्भावेन च 'एन्द्र' इत्यत्रेन्द्रशब्दत्वमपि' 'अन्तादिवच्च' ६.१.८५ इत्यनेन शक्यते सम्पादयितुम् "उभयत आश्रयणे नान्तादिवत्" (व्याडि प० ४४, पु० ५१, सी० ६१) इत्यस्य जागरूकत्वात् । किञ्च सोमे इत्यत्र पूर्वान्तवद्भावेन पूर्वपदत्वे तदेकारादौ एन्द्रशब्दे परादिवद्भावेन इन्द्रशब्दत्वे सम्पादितेऽपि पूर्वपदात् परस्य इन्द्रशब्दस्याभावान्निषेधाप्रवृत्तिरेवेति ।

**किञ्च वृद्धिरप्यत्रेति**=उभयत आश्रयणे नान्तादिवत् इति निषेधः अन्तवत्त्वादिवत्वोभयातिदेशे प्रवर्तते । अत्र उभयातिदेशः अन्तादिवच्चेति न करिष्यते किन्तु अन्तादिवच्चेति पूर्वान्तवद्भावमात्रं कृत्वा 'सोमे' इत्यत्र पूर्वपदत्वमानेष्यते एकदेशविकृतमनन्यवदतिन्यायेन 'न्द्र' शब्दे तदाश्रयणे (उत्तरपदत्वातिदेशाश्रयणे) उत्तरपदत्वसम्पादनेऽपि अच्त्वाभावाद् वृद्धिरप्यत्र न प्राप्नोति इन्द्रशब्दे आद्यस्य अचो गुणैकादेशापहारो जातः, परस्य (अन्त्यस्य) न्द्र-घटकस्य च यस्येति च ६.६.१४८ इति लोपो जातः इत्थमुत्तर पदे नास्ति कोऽप्यच्, यस्य वृद्धिः स्यात् । इत्थमत्र वृद्धेरेवाप्राप्त्या तस्या निषेधो व्यर्थं इति भावः । एकादेशविशिष्टस्य=एन्द्रेत्यस्येति भावः । अर्थात् 'एन्द्र' शब्दे एव परादिवद्भावेन उत्तरपदत्वमानेयम्, एकदेशविकृतमनन्यवत्

---

यदि यह कहें कि यहाँ हम "अन्तादिवच्च" ६.१.८५ सूत्र से पूर्वान्तवत् और परादिवत् दोनों अगर लाना चाहें; तब तो सचमुच "उभयत आश्रयणे" से निषेध हो जायगा; परन्तु बात ऐसी नहीं है, हम तो एकादेश विशिष्ट में अर्थात् "सोमे" में 'अन्तादिवच्च' से पूर्वान्तवद् भाव से पूर्वपदत्व लाना चाहते हैं और "एकदेशविकृतमनन्यवत्" (प० ३८) इस न्याय से 'न्द्र' शब्द को 'इन्द्र' शब्दवत् बनाने का विचार करते हैं। ऐसी स्थिति में 'अन्तादिवत्व' से दोनों भावों का आश्रयण नहीं होने से पूर्वोक्त परिभाषा की अप्रवृत्ति होने से वृद्धि-निषेध होने में कोई बाधा नहीं है; तो यह समझना चाहिए कि इस तरह करने में यहाँ वृद्धि की प्राप्ति ही नहीं है; क्योंकि वृद्धि तो अच् को होती है, यहाँ उत्तरपद "इन्द्र" में आदि इकार रूपी अच् का एकादेश से अपहार हो गया है न्द्र में जो 'अ' था उसका अण् को निमित्त बना कर 'यस्येति च' ६.४.१४८ सूत्र से किये गये लोप से, जो कि नित्य है, नाश हो गया है। अतः उत्तरपद में 'अच् ही नहीं है ।

**लोपेनापहारात् । न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्-सम्भव इति वाच्यम् । उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्राप्तेस्ताद्रूप्यानति-**

---

इति न्यायेन सोमशब्दे मान्ते पूर्वपदत्वमतिदेश्यम्, इत्थम् उत्तरपदेऽचः सत्वाद्वृद्धे-रस्ति प्राप्तिरिति चेच्छ्रूयताम् केवलमुत्तरपदत्वं तु अन्तादिवच्च ६.१.८५ इति नातिदेष्टुं शक्यते केवलस्योत्तरपदत्वस्याशास्त्रीयत्वात् । यद्यपि उत्तरपदाद्यच्त्वं शक्यते परादिवद्भावेनानेतुम् तस्य शास्त्रीयाच्घटितत्वेन शास्त्रीयत्वात् तथापि उत्तरपदाद्यज्त्वस्य वर्णमात्रवृत्तितया अतिदेशो न संभवति, ताद्रूप्यस्य वर्णमात्रवृत्ति-धर्मस्य वर्णमात्रवृत्तिघटितधर्मघटितस्य वा अतिदेशाभावात् । अन्यथा=ताद्रूप्यस्या-प्यतिदेशे खट्वशब्दाट्टापि सवर्णदीर्घे ततः भिसि खट्वा+भिस् इत्यत्र खट्वा शब्दे पूर्वान्तवद्भावेन अदन्तत्वेऽतिदिष्टे अतो भिस ऐस् ७.१.९ इत्यैस्त्वमापद्येत । ताद्रूप्य-स्यानेनातिदेशो न भवतीति स्पष्टतया प्रतिपादितम् अन्तादिवच्च ६.१.८५ इति सूत्रस्य भाष्ये-तथाहि "वर्णाश्रयविधौ च" वर्णाश्रयविधौ च नान्तादिवद् भवतीति वक्तव्यम् । किं प्रयोजनम् ? "प्रयोजनं खट्वाभिः जुहावास्या अश्व इति" । इह खट्वाभिः, मालाभिः—अतो भिस ऐस् भवतीत्यैस्भावः प्राप्नोति । नैष दोषः । तपर-करणसामर्थ्यान्न भविष्यति । अस्त्यन्यत् तपरकरणे प्रयोजनम् किम् ? कीलालपाभिः शुभंयाभिः । जुहाव—'आत औ णलः' (७.१.३४) इत्यौत्वं प्राप्नोति । अस्या अश्व इति एङः पदान्तादति (६.१.१०९) इति पूर्वत्वं प्राप्नोति । "न वाऽताद्रूप्यातिदेशात्" । न वा वक्तव्यम् । किं कारणम् ? अताद्रूप्यातिदेशात् । न हि ताद्रूप्यमतिदिश्यते । रूपाश्रया वा एते विधयः, अताद्रूप्यान्न भविष्यन्ति । अत्र कैयटः—कार्यमात्रमनेनाति-

---

यदि आप 'परादिवद्भाव' से एकादेशविशिष्ट में अर्थात् 'एन्द्र' शब्द में उत्तरपदत्व लाकर उत्तरपद में अच्त्व की संभावना बताना चाहेंगे तो वह भी संभव नहीं है, क्योंकि केवल उत्तरपदत्व तो परादिवद्भाव से लाया नहीं जा सकता, क्योंकि "उत्तरपदत्व" धर्म, शास्त्रीय कार्य नहीं है । अशास्त्रीय कार्य का अतिदेश 'अन्ता-दिवच्च' सूत्र से नहीं होता ।

उत्तरपदाद्यच्त्व का अर्थात् उत्तरपद के आदि में स्वर काअतिदेश किया जा सकता है; क्योंकि वृद्धि उत्तरपद के आदि अच् को होती है इस" उत्तरपदादचत्व" धर्म में अच्त्व भी आता है, अच्त्व तो शास्त्रीय तत्व है ही, इसलिए वह (उत्तरपदा-दचत्व) शास्त्रीय कार्य है, उसका अतिदेश हो सकता है, परन्तु "अन्तादिवच्च" सूत्र से यदि वर्णत्व व्याप्य धर्म का अतिदेश होता तभी उत्तरपदादचत्व लाया जा सकता था, परन्तु काश ! ताद्रूप्य का अतिदेश इस सूत्र से नहीं होता, ताद्रूप्य अर्थात्

**देशात् । अन्यथा खट्वाभिरित्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्टम् । अत एव पूर्वैषुकामशम इत्यादावन्तरङ्गत्वादाद् गुणे वृद्धिर्न स्यादित्या-**

---

दिश्यते, न तु रूपम् । विशिष्टरूपाश्रयाश्चैते विधयो नातिदिश्यन्ते । तुक्यसिद्धवचनं षत्वतुकोरसिद्धः ६.१.८६ इत्यत्र निर्दिष्टं) चास्यार्थस्य लिङ्गम् । यदि हि वर्णाश्रयो विधिरनेनातिदिश्येत, तदा-अधीत्य प्रेत्य-इत्यादावेकादेशस्य ह्रस्वं प्रति आदिवद्भावात्तुकः सिद्धत्वात्तुक्यसिद्धत्वं न ब्रूयात् इति । अतएव = ताद्रूप्यस्यातिदेशाभावादेव पूर्वेषुकामशम्यां भवःइत्यर्थे (पूर्व + इषुकामशमी + अण् इत्यत्र) पूर्वोपस्थितिकत्वात् अ + इ इत्यनयोः गुणेन्तरङ्गे परोपस्थितिकत्वाद् बहिर्भूतनिमित्तकत्वाच्च बहिरङ्गवृद्धेरसिद्धि विधाय प्रवृत्ते पूर्वेषुकामशमी अ इति स्थिते प्राचां ग्रामनगराणाम् ७.३.१४ इतिसूत्रेण दिशः परेषां ग्रामवाचिनां नगरवाचिनां चाङ्गानाञ्चावयवस्यादेरचोऽणि परे वृद्धिरित्यर्थकेन वृद्धिर्न स्यात् एकारस्योत्तरपदाद्यच्त्वाभावादित्याशङ्क्य अनेन न्यायेन = पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्यादेशो नेति अवतार्यमाणन्यायार्थकेन पूर्वोत्तरपदयोस्तावत्कार्यं भवति, नैकादेश इति न्यायेन गुणात्पूर्वमेव वृद्धिः सम्पादिता । तथाच अन्तादिवच्च ६.१.८५ इति सूत्रे भाष्ये प्रोक्तम् = "उत्तरपदवृद्धिश्चैकादेशात्" ४ उत्तरपदवृद्धिश्चैकादेशात् भवति विप्रतिषेधेन । पूर्वपदवृद्धे —रवकाशः । पूर्वैगर्तकः । एकादेशस्यावकाशः । दण्डाग्रम् । क्षुपाग्रम् । इहोभयं प्राप्नोति । पूर्वैषुकामशमः । उत्तरपदवृद्धिर्भवति विप्रतिषेधेन । "एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात्" १५ । एकादेशस्तु प्राप्नोति । किं कारणम् ? अन्तरङ्गबलीयस्त्वात् । अन्तरङ्गं बलीयो भवति । तत्र को दोषः ।। तत्र वृद्धिविधानम्" १६ तत्र वृद्धिर्विधेया । नैष दोषः आचार्यप्रवृत्तिर्ज्ञापयति-पूर्वपदोत्तरपदयोस्तावत् कार्यं भवति नैकादेश इति यदयं नेन्द्रस्य परस्य प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । इन्द्रे द्वावचौ तत्रैको यस्येति लोपेन ह्रियते अपर एकादेशेन । अनच्क इन्द्रः सम्पन्नः । तत्र को वृद्धेः प्रसङ्गः । पश्यति त्वाचार्यः पूर्वोत्तरपदयोस्तावत् कार्यं भवति नैकादेश इति ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति ।। इति ।

---

वर्णमात्र वृत्ति धर्म । इसीलिए "खट्वाभिः" में भिस् को ऐस् नहीं हुआ अन्यथा खट्व + आ ऐसी स्थिति में सवर्ण दीर्घ हुआ था । इसलिए जो एकादेश किया गया है यह पूर्वका अन्तवद् हो इस अर्थ के अनुसार पूर्वान्तवद्भाव के द्वारा 'खट्वा में' अदन्तत्व लाकर 'अतोभिस ऐस्' ७.१.९ से ऐस् हो जाता था । यह बात 'अन्तादिवच्च' ६.१.८५ सूत्र के भाष्य में स्पष्ट है । वहाँ "वर्णाश्रयेऽन्तादिवद्भावप्रतिषेधो वक्तव्यः" वर्णाश्रय में अन्तादिवद्भाव का प्रतिषेध हो, इस वार्तिक का खण्डन करते हुए भाष्यकार ने कहा कि इस प्रकार के किसी वार्तिक के निर्माण की आवश्यकता नहीं है, क्योंकि 'तान्द्रूप्य' का अर्थात् वर्णमात्र में रहने वाले धर्म का प्रति-

**शङ्कितम् । तदेकदेशमात्रस्य विकाराभावाच्च ॥**

**तदुक्तं भाष्ये-'इन्द्रे द्वावचावेको यस्येति लोपेनापहृतोऽपर एकादेशेन ततोऽ-**

---

**तदेकदेशमात्रस्येत्यादि**—एकदेशविकृतमनन्यवत् इति न्यायेन मान्ते सोम् इत्यत्र पूर्वपदत्वम् तेनैव न्यायेन एन्द्रशब्दे उत्तरपदत्वञ्चानीय वृद्धिः प्राप्नोति उत्तरपदाद्यच्त्वस्यार्थसमाजग्रस्तत्वेन तत्र विद्यमानत्वादिति न वाच्यम् एकदेशविकृतमित्यस्य'' सर्वं वाक्यं सावधारणं भवतीति न्यायेन एकदेशमात्रविकृतमित्यर्थः तथाच यदेकदेशमात्रविकृतं तदन्यवन्न भवतीत्येव तस्यार्थतया प्रकृते एकाररूपस्य विकारस्य पूर्वपरोभयदेशस्थविकारत्वेन एकदेशविकाराभावात्न्यायाप्रवृत्तेः एतदेवाह—**तदेक—विकाराभावाच्च** । तदेकदेशमात्रविकृतं तदन्यवन्नेति न्यायस्वरूपमिति तात्पर्यम् । अत्रार्थे प्रमाणमुपन्यस्यति—तदुक्तं भाष्ये इत्यादिना । भाष्यं च तन्मयात्रैवपरिभाषाविचारेऽनुपदमेवोद्धृ-

---

देश इस सूत्र से नहीं होता । ताद्रूप्य का अतिदेश न होने में प्रमाण हैं ''षत्वतुकोरसिद्धः'' ६.१.८६ का तुग्ग्रहण । तुग् ग्रहण इसलिए करते हैं कि ''अधीत्य'' में सवर्णदीर्घ करने के बाद तुग् हो । तुग्ग्रहण तुक् कर्तव्य में दीर्घ की असिद्धता कर देता है । इससे वहाँ ह्रस्व आजाने से ''ह्रस्वस्य पिति कृति तुक्'' से तुक् होता है । यदि इससे वर्णमात्रवृत्ति धर्म का (ताद्रूप्य का) अतिदेश हो, दो दीर्घ एकादेश को पूर्वान्त भाव करने से ह्रस्वत्व का अतिदेश 'अन्तादिवच्च' सूत्र से ही हो जाता, ''षत्वतुकोरसिद्धः'' में तुग् ग्रहण व्यर्थ हो जायगा । 'ताद्रूप्य' का अतिदेश नहीं होता है । इसलिए यह आशङ्का भाष्य में की गयी कि ''पूर्वेषुकामशमः'' में पूर्वेषुकामशम्याम् भवः इस अर्थ में अण् प्रत्यय करने पर अन्तरङ्गत्वात् गुण होने पर, एकार में उत्तरपदादचच्त्व के अभाव के कारण ''प्राचां ग्रामनगराणाम्'' ७.३.१८ से वृद्धि होगी ! क्योंकि वह सूत्र दिशावाची शब्द से पर नहीं होकर विद्यमान नगरवाची या ग्रामवाची शब्दों के आदि अच् को अण् के परे रहते वृद्धि करता है और उत्तर दिया गया कि गुण से पूर्व ही वृद्धि हो जायगी । इससे सिद्ध होता है कि ताद्रूप्य (वर्णमात्रवृत्ति धर्म) का अतिदेश करना 'अन्तादिवच्च' सूत्र के बलबूतेसे बाहर की वस्तु है ।

''सोम्+एन्द्र'' ऐसी स्थिति में सोम् शब्द में 'एकदेशविकृत' (परि० ३८) न्याय से पूर्वपदत्व और एन्द्र शब्द में उसी न्याय से उत्तरपदत्व लाकर वृद्धि प्राप्त होती है, उसको रोकने के लिए ''नेन्द्रस्य परस्य च'' ७.३.२२ सूत्र चरितार्थ हैं ऐसा भी नहीं माना जा सकता, क्योंकि एकार रूप विकार पूर्व और पर उभय देशस्थ है, इस लिए एकदेश में विकार नहीं होने के कारण एकदेशविकृतमनन्यवत्'' (प० ३८) यहाँ नहीं लगेगा । भाष्य में यह सब कुछ स्पष्ट कहा गया है कि इन्द्र शब्द में दो

नच्क इन्द्रशब्दः सम्पन्नस्तत्र वः प्रसङ्गो वृद्धेरि'ति। मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातोऽत आह—

**पूर्वोत्तरपदनिमित्त-कार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ।।५४।।**

तम्। न च मरुच्च इन्द्रश्चेति द्वन्द्वे मरुदिन्द्रावित्यत्र नेन्द्रस्येति निषेधश्चरितार्थ इति वाच्यम् तत्र "अजाद्यदन्तम्" २.२.३३ इत्यनेन अजादयदन्तत्वविशिष्टस्य इन्द्रशब्दस्यैव पूर्वप्रयोगेण इन्द्रमरुताविति रूपस्यैव सम्भवेन चारितार्थ्यसंभावनाया अभावात् अथवा इन्द्रस्य देवराजतया मरुतोऽभ्यर्हितत्वाद् अभ्यर्हितं (वा० २.२.३४/२) इति तस्य पूर्वनिपातः। एवं विष्णुशब्दस्येन्द्रशब्दस्य च द्वन्द्वेऽपि देवराजस्येन्द्रस्य उपेन्द्रापेक्षयाभ्यर्हितत्वाद् ध्यन्तादजाद्यन्तं पूर्वविप्रतिषेधेनेति वा पूर्वनिपाते इन्द्रविष्णू इति रूपस्यैव संभवात् विष्णिवन्द्राविति रूपस्यासम्भवात्तत्रापि वृद्धिनिषेधकसूत्रस्य चारितार्थ्यं न शक्यते वक्तुम् इत्थं नेन्द्रस्य परस्य च ७.३.२२ इति सूत्रं व्यर्थमिति चेन्न "पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न" इति परिभाषाज्ञापनेन तस्य चरितार्थ्यात् सोमस्तु शिवमौलिप्राप्तस्थानोऽभ्यर्हित इति तस्य पूर्वनिपातः। ज्ञापिते तु सोम+इन्द्र इत्यवस्थायां पूर्वोत्तरपदनिमित्तककार्याद् वृद्धितन्निषेधादिकात् पूर्वमन्तरङ्गस्य

---

अच् थे, एक को (द्र के आकार को) यस्येति लोप ने चुरा लिया और दूसरे को ('इन्द्र' के 'इ' को) गुण एकादेश ने समाप्त कर दिया। इस तरह 'इन्द्र' शब्द बिना अच् के बन गया, वहाँ वृद्धि की प्राप्ति ही कहाँ ?

मरुत् आदि हलन्त शब्द के साथ 'इन्द्र' शब्द को यदि द्वन्द्व करें तो मरुदिन्द्रौ में "नेन्द्रस्य परस्य च' के चरितार्थ होने की संभावना नहीं प्रकट करनी चाहिए; क्योंकि 'मरुत्' और 'इन्द्र' दोनों को द्वन्द्व करें तो 'इन्द्र' का "आजाद्यदन्तम्" २.२.३३ से पूर्व प्रयोग होगा। इसलिए 'इन्द्र' शब्द स्वयं पूर्वपद बन जायगा वह उतर पद में नहीं आयेगा; इसलिए 'इन्द्रमरुतौ' बनेगा, वहाँ निषेध चरिताथ नहीं हो सकता।

विष्णु और इन्द्र को द्वन्द्व करने पर "द्वन्द्वे घि" २.२.३२ से विष्णु के पूर्वप्रयोग होने पर 'विष्णिवन्द्रौ में' सूत्र के चरितार्थ होने की शङ्का नहीं करनी चाहिए "अभ्यर्हितं च" (वा० २.२.३४/२) से सर्व देवाधिष्ठाता देवता इन्द्र का ही पूर्व प्रयोग होगा। उपेन्द्र यह नाम ही सूचित करता है कि विष्णु इन्द्र से छोटा है। 'इन्द्र' यदि राष्ट्रपति है तो उपेन्द्र उपराष्ट्रपति। इसलिए अभ्यर्हित (अधिक समाननीय) इन्द्र का ही पूर्व प्रयोग होगा। इस तरह यह निषेध व्यर्थ होकर ज्ञापित करता है— "पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न" अर्थात् पूर्वपद और उत्तरपद को निमित्त बनाकर होने वाले कार्य से पहले अन्तरङ्ग एकादेश भी नहीं होता है। इसलिए 'सोमेन्द्र' में पहले गुण एकादेश नहीं होगा, फिर तो प्राप्तवृद्धि का

**अत्र च 'नेन्द्रस्य' इति निषेध एव ज्ञापक इ'त्यन्तादिवचच' 'विप्रतिषेधे परमि'ति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५४ ॥**

गुणैकादेशस्याप्रवृत्या निषेधश्चरितार्थः स्वांशे। अन्तादिवच्च ६.१.८५ इति सूत्रस्थं भाष्यमनुपदमेवोद्धतम् (३५७) तमे पृष्ठे। विप्रतिषेधसूत्रस्थं भाष्यन्तु इत्थमस्ति— विप्रतिषेधे परं कार्यम् १.४.२ "तस्य दोषः पूर्वोत्तरपदयोः वृद्धिस्वरावेकादेशात्। तस्यैतस्य लक्षणस्य दोषः पूर्वोत्तरपदयोर्वृद्धिस्वरादेकादेशादन्तरङ्गतोऽभिनिर्वृत्तान्न प्राप्नुतः। पूर्वैषुकामशमः। गुडोदकं तिलोदकम् उदकेऽकेवले ६.२.९६ इति पूर्वोत्तर-पदयोर्व्यपवर्गाभावात् स्वरो न स्यात्। नैष दोषः आचार्यप्रवृत्तिर्ज्ञापयति पूर्वोत्तरपदयो-स्तावत्कार्यं भवति नैकादेश इति यदयं "नेन्द्रस्य परस्य" इति प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम्? इन्द्रे द्वावचौ। तत्रैको यस्येति च इति लोपेनापह्रियते, अपर एकादेशेन, ततो ऽनच्क इन्द्रः सम्पन्नः, तत्र कः प्रसङ्गो वृद्धेः। पश्यति त्वाचार्यः पूर्वोत्तरपदयोस्तावत् कार्यं भवति नैकादेश इति। ततो नेन्द्रस्य परस्य प्रतिषेधं शास्ति। इति।

नेन्द्रस्य परस्य च" ७.३.२२ से निषेध करना आवश्यक है। "नेन्द्रस्य परस्य च" यह सूत्र ही इस परिभाषा का ज्ञापक है। यह 'अन्तादिवच्च' ६.१.८५ और "विप्र-तिषेधे परं कार्यम्" १.४.२ इन सूत्रों के भाष्य में स्पष्ट है।

'अन्तादिवच्च' ६.१.८५ सूत्र के भाष्य में "पूर्वैषुकामशमः,' के सन्दर्भ में जब यह कहा कि पूर्व+इषुकामशमी+अ ऐसी अवस्था में "**एकादेशप्रसङ्गस्त्वन्त-रङ्गबलीयस्त्वात्** (वा० १५) अर्थात् अन्तरङ्ग होने से पहले एकादेश (गुण) हो जायगा। इसलिए 'विप्रतिषेधे परं कार्यम्' से परत्वात् उत्तरपद वृद्धि पहले नहीं हो पायेगी। इसलिए "तत्र वृद्धि विधानम्" (वा० १६) अर्थात् वहाँ वृद्धि (उत्तरपद को वृद्धि) का अलग से विधान करना पड़ेगा। जिससे कि एकादेश से पहले वृद्धि हो सके। इस पर भाष्यकार ने कहा कि उत्तरपद की वृद्धि के लिए अलग से किसी विधिसूत्र के निर्माण की आवश्यकता नहीं है; क्योंकि "नेन्द्रस्य परस्य च" यह प्रतिषेध ज्ञापन करता है कि पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति अर्थात् पूर्वोत्तर पद निमित्तक कार्य जब तक नहीं हो जायगा; तब तक एका-देश नहीं होगा। "नेन्द्रस्य परस्य च" यह सूत्र कैसे ज्ञापक होगा इस जिज्ञासा के उत्तर में भाष्यकार ने बताया—कि इन्द्रे (इन्द्र शब्द में) द्वावचौ (दो अच् थे) तत्रैको यस्येति लोपन ह्रियते (उनमें एक का (न्द्र के आकार का) 'यस्येति च' इस सूत्र से अपहार हों गया) अपर एकादेशेन दूसरे का (इन्द्र के इ कार का) एकादेश से अपहार हो गया। वेचारा इन्द्र शब्द इस तरह स्वरहीन हो गया—'**अनच्क इन्द्रशब्दः सम्पन्नः**'। वहाँ वृद्धि की कोई प्राप्ति ही नहीं थी; फिर भी जो निषेध किया गया

पूर्वोत्तरपदनिमित्तकार्यं किमिति जिज्ञासायाम् यस्मिन् कार्ये लक्ष्यस्थित्यनुसारेण पूर्वपदमुत्तरपदं वा विषयो भवति तदपि गृह्येत यस्य विधायके सूत्रे निमित्तरूपेण पूर्वपदस्योत्तरपदस्य च निर्देशो भवेदित्यत्र नास्ति दुराग्रहः। अतएव परमश्चासावहम् इति विग्रहे परम+अस्मद् इत्यवस्थायाम् अन्तरङ्गोऽपि दीर्घैकादेशः अनया परिभाषया "त्वाहौ सौ" ७.२.९४ इत्यादेशात् प्राङ्न जायते; किन्त्वन्तरङ्गमपि दीर्घैकादेशं बाधित्वा अहादेशे ततो दीर्घे परमाहमिति सिद्ध्यति, नहि "त्वाहौ सौ" ७.२.९४ इत्यत्र पूर्वपदस्योत्तरपदस्य वा निमित्तरूपेण निर्देशोऽस्ति किन्तु परम+अस्मद् इति लक्ष्ये 'त्वाहौ सौ' इत्यस्य यन्निमित्तं तत् स्थित्यनुसारेण उत्तरपदमस्ति। एतावन्मात्रेण परिभाषायाः प्रवृत्तिर्जाता। एवमेकादेशपदेनापि सन्धिकार्यमात्रं गृह्यते। ननु केवलम् एकः पूर्वपरयोः ६.१.८४ इत्यधिकारपठितं पूर्वपरयोरुभयोस्थाने जायमानं गुणदीर्घाद्यादेशकार्यं ग्रहीतव्यमित्यत्रास्त्याग्रहः। तेन रात्रिमट इत्यत्र पचाद्यचि। रात्रि+अट इत्यवस्थायामन्तरङ्गोऽपि इकोयणचि ६.१.७७ इति यणादेशो रात्रेः कृति विभाषा ६.३.७२ इति मुमः प्राङ्न जायते। नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः (प० ५२) इति निषधेन तत्र निर्वाह इति न वाच्यम् तस्य न्यायस्य जातबहिरङ्गासिद्धिकारकान्तरङ्गपरिभाषानिषेधविषयत्वात् तस्यास्वीकाराच्च। नच प्रतिपदोक्तत्वेनापवादत्वान्मुम् इति वाच्यम् रात्रिञ्चरः रात्रिचर इत्यादौ तस्य चारितार्थ्येन प्रतिपदोक्तत्वरूपस्य प्राबल्यस्योपक्षीणत्वात् इति शिवम् ५४।

---

इससे सिद्ध होता है कि आचार्य अन्तरङ्ग भी एकादेश को बाधकर पहले पूर्वोत्तरपदनिमित्तक कार्य हो इस पक्ष में हैं इसीलिए "नेन्द्रस्य परस्य च" यह प्रतिषेध करते हैं।

'विप्रतिषेधे परं कार्यम्' १.४.२ इस सूत्र के भाष्य में" सूत्र का दोष गिनाते हुए वार्तिककार ने वार्तिक बनाया—तस्य दोषः पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशात्" इस लक्षण के मानने पर भी 'पूर्वैषुकामशमः' में अन्तरङ्ग होने के कारण एकादेश पहले हो जायगा, परत्वात् वृद्धि नहीं हो पायेगी। इसी तरह "गुडोदकम्" में अन्तरङ्ग गुण स्वर से पहले हो जायगा; फिर "पूर्वोत्तर पदयोः" "व्यपवर्गाभावात्" अर्थात् पूर्व और उत्तरपद की विभाग-रेखा नहीं बनने के कारण उदकेऽकेवले ६.२.९६ पूर्वपद को मिश्रार्थक समास में उदक रूप उत्तर पद के परे रहते अन्तोदात्त नहीं होगा इस तरह दिये गये दोष के निवारण का उपाय बताते हुए भाष्यकार ने आगे कहा कि "नेन्द्रस्य परस्य च" यह निषेध ज्ञापन करता है कि पूर्वोत्तर पद का कार्य पहले होता है, एकादेश नहीं—"पूर्वोत्तरपदयोस्तावत् कार्यं भवति नैकादेश इति यदयम् इत्यादि।

इति शिवम् ५४

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप् स्यादत आह—

**अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ।।५५।।**

'अदो जग्धिः' इति सूत्रे ति कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमित्य— 'दो जग्धि'रित्यत्र भाष्ये स्पष्टम् ।।५५।।

---

**अन्तरङ्गानपि······बहिरङ्गो ल्यब्बाधते—५५**

नन्वेवमपि=अन्तरङ्गपरिभाषाबाधकपरिभाषायाः पूर्वोत्तरपदेत्यस्याः स्वी-

---

**अन्तरङ्गानपि···ल्यब् बाधते—५५**

अन्तरङ्ग परिभाषा स्वीकार करने पर उसके प्रतिषेधक परिभाषाओं को मानने पर भी "प्रधाय" में अन्तरङ्गत्वात् "दधातेर्हिः ७.४.४२" से "हि" आदेश पहले हो जायगा; बाद में ल्यप् होगा; क्योंकि "समासेऽनञ्पूर्वे" ७.१.३७ को जिस समास की अपेक्षा है, वह समास दो पदों की अपेक्षा रखता है, इसलिए "समासेऽनञ्—पूर्वेक्त्वो ल्यप्" ७.१.३७ बहिरङ्ग है। इसी तरह 'प्रस्थाय' में "घुमास्था" ६.४.६६ से इत्व होनेपर ल्यप् होगा तो अनिष्ट रूप बन जायगा इसलिए परिभाषा मानते हैं—"अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" अन्तरङ्ग विधियों को भी बहिरङ्ग लुक् बाध लेता है।

"अदो जग्धिः" २.४.३६ इस सूत्र में "ति कृति" यही करने से काम चलता ल्यब् ग्रहण जो किया गया, वही इस परिभाषा का ज्ञापक है। "प्रजग्ध्य" में जग्ध् आदेश हो, इसलिए वहां ल्यप् का ग्रहण किया गया। यदि यह परिभाषा न हो तो प्र+अद्+क्त्वा ऐसी अवस्था में दो पदों की अपेक्षा रखने वाले समास की प्रतीक्षा करने वाले ल्यबादेश की अपेक्षा प्रथम उपस्थित होनेवाला जग्ध् आदेश, तादि कित को ही निमित्त बनाकर हो जाता; ल्यप् ग्रहण की क्या आवश्यकता थी ? परिभाषा मानने पर तो अन्तरङ्ग भी जग्धादेश को बाधकर ल्यप् हो जायगा। अतः तादि कित्व के अभाव में भी जग्धादेश विधान के लिए ल्यब् ग्रहण चरितार्थ हुआ। यह बात "अदोजग्धिः" सूत्र के भाष्य में स्पष्ट है।

प्रकृतिप्रत्ययनिमित्तक कोई भी कार्य ल्यप् के विषय में नहीं प्रवृत्त होता है, ल्यप् ग्रहण के द्वारा ऐसा ज्ञापित नहीं कराया जा सकता, ऐसा ज्ञापन करने पर अधीत्य में तुक भी न ही होगा। क्त्वा में रहनेवाले अनुबन्धों को निमित्त बनाकर होनेवाले कार्य ल्यप् के विषय में नहीं प्रवृत्त होते हैं; ऐसा ज्ञापन कराना भी उपयुक्त नहीं होगा, क्योंकि ऐसा माननेपर अनुभूय में गुण निषेध नहीं हो सकेगा, प्रोह्य में सम्प्रसारण और प्रमथ्य में नलोप का अभाव हो जायगा। अतः पूर्वोक्त परिभाषा ही ज्ञापित माननी चाहिए।

कारेऽपि । अन्तरङ्गत्वात् =ल्यप् पदद्वयसापेक्षं समासमपेक्षते इति स वहिरङ्गः,—समासेऽनञ्पूर्वेक्त्वो ल्यप् इत्युक्तेः । दधातेर्हिः ७.४.४२ इति विहितो हिस्तु एकपदापेक्षः तादौकिति दधाते हिःस्यादित्यर्थात्; अतःसोऽन्तरङ्गः ।

"अदोजिग्धः" इति सूत्र इति । अदो जग्धिर्ल्यप्तिकिति २.४.३६ इति सूत्रे ल्यब्ग्रहणाभावेऽपि प्रपूर्वकात् अद्धातोः क्त्वाप्रत्यये प्र अद् त्वा इति स्थिते पदद्वय-सापेक्षसमासापेक्षत्वेन बहिरङ्गं "समासेऽनञ् पूर्वेक्त्वो ल्यप्" ७.१.३७ इति ल्यपम-सिद्धंविधाय पूर्वं तादिकित्परत्वलक्षणे अदो जग्धादेशे ततो ल्यपि प्रजग्ध्येतिसिद्धे सूत्रे ल्यब्ग्रहणं व्यर्थं सज्ज्ञापयति—**अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते** इति । ज्ञापिते तु पूर्वं क्त्वो ल्यपि तादिकित्परत्वाभावेन ल्यब् न स्यादतः ल्यब्ग्रहणम् ल्यपि परे जग्धादेशविधानाय स्वांशे चरितार्थम् । फलमन्यत्र यथा प्रधाय प्रस्थाय इत्यादौ अन्तरङ्गमपि "दधातेर्हिः" ७.४.४२ इति हित्वमीत्वं च बाधित्वा ल्यब् भवति । अन्यथा अन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यपि जाते रूपासिद्धिः ।

अदो जग्धिरिति सूत्रे भाष्येऽस्याः परिभाषाया ज्ञापकत्वं फलादिकं च स्पष्टतः प्रातपादितं विलोक्यते तथाहिः—अदो जग्धिर्ल्यप्तिकिति २.४.३६ ल्यब्ग्रहणं किमर्थम् । न ति कितीत्येव सिद्धम् । ल्यपि कृते न प्राप्नोति । इदमिह संप्रधार्यम्-ल्यप् क्रियताम् आदेश इति । किमत्र कर्तव्यम् ? परत्वाल्ल्यप् । अन्तरङ्ग आदेशः । एवं तर्हि सिद्धे यल्ल्यब्ग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधत इति । किमेतस्य ज्ञापने प्रयोजनम् ? ल्यबादेश उपदेशिवद्वचनमनादिष्टार्थं भवति अर्थात् प्रधाय प्रस्थायेत्यादौ **हित्वादिष्वकृतेष्वेव ल्यब् यथा स्यात् (इत्यर्थोऽयं न्यायः)** कथं न प्राप्नोति इत्याह **बहिरङ्गलक्षणत्वात्** इति । एष एवार्थो व्याघ्र-भूतिनाप्युक्तः—

जग्धिविधिर्ल्यपि यत्तदकस्मात्
सिद्धमदस्ति कितीति विधानात्
हिप्रभृतींस्तु सदा बहिरङ्गो
ल्यब्भरतीति कृतं तदु बिद्धि (प्रदीपे)

**अकस्मादिति**=**निष्प्रयोजनमित्यर्थः । सिद्धमद** इति जग्धिविधानं सिद्धमित्यर्थः । ल्यब्भरतीति=ल्यबादेशो हरति-अपनयति बाधत इत्यर्थः । तदु इति—उशब्दो निपातोऽवधारणार्थः तद्विद्ध्येवेत्यर्थः । एष एवार्थः अत्र श्लोके प्रकटीकृतः—

जग्धौ सिद्धेऽन्तरङ्गत्वात् तिकितीति ल्यबुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥

ननु स्थानिवत्सूत्रेऽल्विधौ स्थानिवत्वाभावज्ञापकम् अदो जग्धिरित्यत्र ल्यब्ग्रहणमित्युक्तं भाष्ये अत्रत्वेत्थमुक्तमिति तयोर्मिथो विरोध इति चेत्सत्यम् यावता विना यदनुपपन्नं तस्य सर्वस्य ज्ञाप्यत्वं नह्येकेनैकमिति नियम इति कैयटेन तत्रैव प्रदीपे प्रोक्तत्वात् । इति शिवम् ५५ ॥

**नन्वेवमियायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह—**

**वार्णादाङ्गं बलीयो भवति ॥५६॥**

---

## वार्णादाङ्गं बलीयो भवति—५६

'इयायेत्यादौ इति=आदिशब्देन इयेषेत्यादिः संग्राह्यः। अयंभावः इण् धातोर्लिटितिपो णलादेशे द्वित्वेऽभ्यासत्वे इ+इ+अ इतिस्थिते उत्तरखण्डे 'अचोञ्णिति' ७.२.११५ इति वृद्धावायादेशे च कृते इ आय इतिस्थिते अभ्यासस्यासवर्णे ६.४.७८ इतीयङादेशे इयाय इति सिद्धयति। एवम् इष् धातोर्लिटस्तिपोणलि द्वित्वेऽभ्यासत्वे हलादिशेषे इ+इष्+अ इति स्थिते पुगन्तलघूपधस्य च ७.३.४६ इति गुणे इ+एष इति स्थितेऽभ्यासस्येयङि इयेष इति रूपम्। अत्र द्वित्वे कृते इ+इ+अ इत्यवस्थायामन्तर्भूतनिमित्तकत्वेन प्राप्तः सवर्णदीर्घोऽन्तरङ्गः, तदपेक्षया बहिर्भूतनिमित्तकत्वेन वृद्धिर्बहिरङ्गा। एवमियेष इत्यत्र णल्पर्यन्तनिमित्तकस्य लघूपधगुणस्य सवर्णदीर्घापेक्षया बहिर्भूतनिमित्तकत्वेन बहिरङ्गत्वं बोध्यम् एतदाह—अन्तरङ्गत्वादित्यादिना। अर्थात् यद्यन्तरङ्गपरिभाषा स्वीक्रियते तदा इयायेत्यादौ द्वित्वे कृते इ+इ+अ इति

---

'अदो जग्धिः—२.४.३६ सूत्र के भाष्य में कहा गया है कि ल्यप् ग्रहण नहीं करने पर भी तादि कित् मान कर ही 'प्र+अद् त्वा' ऐसी स्थिति में अन्तरङ्गत्वात् जग्धादेश हो जायगा; ल्यप् ग्रहण ज्ञापन करता है कि ल्यप् अन्तरङ्गकार्यों का भी बाधक होता है—

> "जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति, ल्यबुच्यते
> ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्। श्लो० वा०॥

इतिशिवम्—५५

## वार्णादाङ्गं बलीयः—५६

अन्तरङ्ग परिभाषा स्वीकार करने पर 'इयाय' 'इयेष' इत्यादि प्रयोगों की सिद्धि नहीं हो सकेगी; क्योंकि द्वित्व करने पर वृद्धि और गुण की अपेक्षा अन्तरङ्ग होने के कारण पहले सवर्णदीर्घ हो जायगा, फिर वृद्धि होने से आय और ईष, इस तरह का अनिष्ट प्रयोग बन जायगा। दीर्घ कर्तव्य में द्वित्व को बहिरङ्ग मानकर यदि असिद्धता हो जाती तो बात बन जाती परन्तु "नाजानन्तर्य" से निषेध होने से यहाँ अन्तरङ्ग परिभाषा नहीं लगेगी। अतः "इयाय" 'इयेष' इत्यादि की सिद्धि के लिए परिभाषा मानते हैं "वार्णादाङ्गं बलीयो भवति" वर्णसम्बन्धी कार्यों की अपेक्षा अङ्गसम्बन्धी कार्य बलवान् होता है। इस परिभाषा के द्वारा अन्तरङ्ग भी सवर्णदीर्घ को बाधकर पहले वृद्धि हुई, फिर क्रमशः आय् आदेश और इयङ् होकर 'इयाय' रूप बना। 'इयेष' में इस परिभाषा के बल से सवर्णदीर्घ को बाधकर लघूपधगुण हुआ; फिर इयङ् होकर 'इयेष' बना।

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः ॥

अभ्यासस्यासवर्णे इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्यां ज्ञापकम्। तद्धीषतुरित्यादावियङादिव्यावृत्त्यर्थम्। एतत्परिभाषाभावे त्वीषतुरित्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थम्। इयङुवङौ ह्यभ्याससम्बन्धनिमित्तकत्वाद्बहिरङ्गौ। न चेयङादिरपवाद इति वाच्यम्। येन नाप्राप्तिन्यायेनेयर्तीत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयादिति प्राञ्चः ॥

---

बहिरङ्गवृद्धिं बाधित्वान्तरङ्गत्वात्सवर्णदीर्घे तत इयङि इयायेत्यादिरूपासिद्धिरतः वार्णादाङ्गं बलीय इति परिभाषामवतारयति। दीर्घे कर्तव्ये द्वित्वस्य बहिरङ्गत्वादसिद्धत्वं तु न वाच्यम् नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः (५२) इतिनिषेधात्। अतएव आदतुरित्यादौ सवर्णदीर्घः सिद्धयति। न च इयायेत्यादौ बहिरङ्गासिद्धत्वस्य नाजानन्तर्य इति निषेधान्न दोष इति वाच्यम् तस्याः परिभाषाया जातबहिरङ्गत्वासिद्धत्वविषयत्वात् जातस्य बहिरङ्गस्य यत्र अन्तरङ्गपरिभाषयाऽसिद्धत्वं बोध्यते तत्रैव नाजानन्तर्यपरिभाषा प्रवर्तत इति तत्परिभाषाविचारपरिसरे(३२६) तमेपृष्ठे निरूपितमिति नास्ति पुनरुक्तेरावश्यकता।

---

इयङ् विधायक "अभ्यासस्यासवर्णे" ६.४.७८ सूत्र का असवर्ण ग्रहण इस परिभाषा में ज्ञापक है। असवर्ण ग्रहण इसलिए करते हैं कि सवर्ण के परे रहते "ईषतुः" इत्यादि स्थल में 'इ+इष्+अतुस्' ऐसी स्थिति में इयङ् न हो। यदि यह परिभोषा न रहे तब तो "इ+इष् अतुस्" इस स्थिति में अन्तरङ्गत्वात् पहले दीर्घ हो जाय; फिर सवर्ण के परे इयङ् की प्राप्ति ही नहीं रहती। अतः सवर्ण के परे रहते प्राप्त इयङ् की व्यावृत्ति के लिए किया गया 'असवर्णग्रहण' व्यर्थ होकर इस परिभाषा का ज्ञापन करता है। परिभाषा मानने पर इस परिभाषा के द्वारा दीर्घ का बाध हो जाता है, फिर इ+इष्+अतुस् इस स्थिति में इयङ् की प्राप्ति होती है, वह न हो; इसलिए 'असवर्णग्रहण' चरितार्थ हो जाता है।

दीर्घ की अपेक्षा 'इयङ्' 'उवङ्' बहिरङ्ग हैं; क्योंकि 'इयङ्' और 'उवङ्' विधायक शास्त्र 'अभ्यासस्यासवर्णे ७.४.७८ को अभ्यास और अभ्यास सम्बन्धी समुदायाङ्ग की अपेक्षा है। यह 'इयङ्' दीर्घ का अपवाद भी नहीं है; जिससे कि उसका बाध करे; क्योंकि "येनाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति (प० ५८) जिसकी अत्यन्त प्राप्ति (सर्वत्र प्राप्ति) रहने पर जो विधि आरम्भ करते हैं, यह विधि सर्वत्र-प्राप्त विधि की बाधिका बनती है, इस न्याय से इयङ् सकल लक्ष्यों में प्राप्त यण् का ही बाधक सिद्ध होता है, न कि दीर्घ का भी। यह प्राचीन आचार्य कहते हैं। अर्थात् प्राचीन आचार्य "अभ्यासस्यासवर्णे ६.४.६८ सूत्र के एकदेश 'असवर्ण' ग्रहण को परिभाषा का ज्ञापक मानते हैं।

**परे त्वेतत्परिभाषाभावेऽभ्यासस्येति सूत्रमेव व्यर्थम् । न चेयायेयेषेत्यादौ चरितार्थम् । तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तप्रवृद्धेश्च 'द्विर्वचनेची'ति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घापत्तेः ॥**

---

परिभाषायां वार्णादाङ्गं बलीय इति स्वीकृतायां तु इयायेत्यादौ न दोषः, वर्णसम्बन्धिकार्यात् सवर्णदीर्घात् अङ्गसम्बन्धिकार्यस्य वृद्धेरनया प्राबल्यबोधनादन्तरङ्गमपि सर्वणदीर्घं बाधित्वा वृद्धिः सिद्धयति । एवमियेष इत्यादौ लघूपधगुणोऽङ्गसम्बन्धिकार्यं वार्णसवर्णदीर्घं प्राबल्याद् बाधत इति ।

वर्णस्येदं वार्णम् तस्मात् वार्णात् वर्णसम्बन्धिकार्यात्=वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यकात् कार्यादिति यावत् आङ्गम् अङ्गस्येदमाङ्गम् अङ्गसम्बन्धिकार्यम्= अङ्गत्वावच्छन्नोद्देश्यताकं कार्यं=बलीयः बलवत्तरं भवतीति परिभाषार्थः । 'अचोञ्णिति' ७.२.११५ इतिवृद्धिराङ्गकार्यम् एवं लघूपधगुणोऽपि (७.२.८६) अङ्गमुद्दिश्य तयोर्विधानात् । सवर्णदीर्घश्च वार्णकार्यम् "अकः सवर्णे—६.१.१०१ इति सूत्रेण अकः सवर्णेऽचिपरे पूर्वपरयोः वर्णयोः स्थाने दीर्घैकादेशविधानेन तस्य वर्णोद्देश्यकविधेः वार्णत्वस्य स्पष्टत्वात् । अस्या ज्ञापकम्—अभ्यासस्यासस्यासवर्णे ६.४.७८ इति सूत्रस्थमसवर्णग्रहणम् । अत्र प्राचीननवीनयोर्मतभेदो दृश्यते । प्राञ्चः केवलमसवर्णग्रहणस्य ज्ञापकत्वमङ्गीकुर्वन्ति, नव्यास्तु सम्पूर्णमेव सूत्रं ज्ञापकमिति वदन्ति । प्रथममिह "प्राञ्च" इत्यन्तेन ग्रन्थेन प्राचां मतमुपन्यस्य पश्चात्स्वमतं (नव्यमतम्) प्रस्तौति नागेशः । प्राचां मतेन "अभ्यासस्य" इत्यस्य चारितार्थ्यम् इयेष इयायेत्यादावस्तीति न सम्पूर्णं सूत्रं ज्ञापकम् इति तात्पर्यम् तथाहि असवर्णग्रहणम् ईषतुरित्यादौ इयङो व्यावृत्यर्थं क्रियते किन्तु तदभावेऽपि इ+इष्+अतुस् इत्यवस्थायामन्तरङ्गत्वाद् बहिरङ्गमियङादेशं बाधित्वा सवर्णदीर्घेण ईषतुरित्यादिरूपसिद्धौ तत्सूत्रेऽभ्यासग्रहणं व्यर्थमेव । तदेव व्यर्थंभूत्वा परिभाषां ज्ञापयति वार्णादाङ्गं बलीय इति । नच इयङुवङौ कथं बहिरङ्गावित्याह **इयङुवङौह्यभ्याससम्बन्धिनिमित्तकत्वाद् बहिरङ्गौ ।** अर्थात् अभ्याससम्बन्धिभूतसमुदायाङ्गनिमित्तककार्यत्वेन तयोः सवर्णदीर्घापेक्षया बहिर्भूतनिमित्तकत्वादिति भावः । नच सवर्णदीर्घं बाधित्वाऽपवादत्वादियङ् स्यात् अपवादस्यान्तरङ्गादपि प्रबलत्वादिति वाच्यम् येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति (प० ५८) इति न्यायेन "इयर्ति" इत्यादौ सकले लक्ष्ये प्राप्तस्य यणोऽपवादत्वेऽपि सवर्णदीर्घापवादत्वस्य वक्तुमशक्यत्वात् । इति प्राचां मतम् । नव्यमतं स्वमतमाह—**परे तु इत्यादिना** सम्पूर्णसूत्रमेव वार्णपरिभाषां विना व्यर्थम् । अतः सम्पूर्णमेव सूत्रमस्या ज्ञापकम् न तु असवर्णग्रहणमात्रं यथा प्राञ्चोऽवगच्छन्ति ।

---

नागेश सम्पूर्ण सूत्र को ज्ञापक मानते हैं उनका तो कहना है कि इस परिभाषा के अभाव में 'अभ्यासस्यासवर्णे' यह पूरा सूत्र ही व्यर्थ हो जायगा । यदि

**न चेयर्तीत्यादौ तच्चरितार्थम् । तावन्मात्रप्रयोजनकत्वे उरित्येव ब्रूयात् । य्वोरित्यनुवर्तते । इणो यणिति साहचर्याद् व्याख्यानाच्च ऋधातोरेव ग्रहणम् । अर्ते-**

---

नच इयायेयेषेत्यादावभ्यासग्रहणस्य चारितार्थ्यमिति प्राचां मतं युक्तमिति वाच्यम् इयाय इत्यत्र द्वित्वात् पूर्वं प्रवृत्ताया वृद्धेः ऐ अ इत्यत्र दृष्टायाः, इयेष इत्यत्र पूर्वं प्रवृत्तस्य लघूपधगुणस्य एष अ इत्यवस्थायां कृतस्य द्विर्वचनेऽचि १.१.५६ इति रूपातिदेशेनापहारे अर्थात् वृद्धेः गुणाच्च पूर्वं यादृशं रूपमासीत् इकाररूपं तस्यानयनेन अथवा गुणवृद्धयो निषेधेन इ+अ, इष् अ इति जाते द्वित्वे कृते पुनः प्राप्तौ वृद्धिगुणौ बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घापत्तेः । अतः सम्पूर्णसूत्रस्यैव वैयर्थ्येन ज्ञापकत्वम् नच 'इयर्ति' इत्यादावियङादेशविधानाय सूत्रस्य चारितार्थ्यमिति वाच्यम् तावन्मात्रप्रयोजनकत्वे उरिति न्यासेनैव सिद्धेः । न च तथा न्यासे कृतेऽङ्गस्येत्यस्याचीत्यस्य च सम्बन्धेन ऋवर्णान्तस्याङ्गस्याचि परे इयङ् इत्यर्थे कर्तारावित्यादावियङापत्या फलभेदः स्यादिति वाच्यम् अचिश्नुधातुभ्रुवाम् ६.४.७७ इति सूत्रात् य्वोरित्यनुवर्त्य "उः" इति न्यासस्य" अर्तेरिवर्णस्येयङ् इत्यर्थकरणेनैव इयर्ति इत्यादिसिद्धौ सम्पूर्णस्य सूत्रस्य वैयर्थ्यस्य तादवस्थ्यात् । "उः" इति न्यासे उरिति ऋशब्दस्य षष्ठया रूपम् तथाच ऋवर्णस्य स्थाने य इकार इत्यर्थ एव लभ्यते नतु अर्तेरिवर्णस्येति तथाच इयर्ति इत्यत्र पूर्वम् 'उरत्' ७.४.६६ इत्यत्वे ततः अर्तिपिपर्त्योश्च ७.४.७७ इति अर्तेरभ्यासतया अकारस्य इत्वेऽपि तस्येकारस्य अकारस्थानिकतया ऋकारस्य स्थाने

---

यह कहें; कि सूत्र 'इयाय' 'इयेष' इत्यादि में चरितार्थ है; तो यह ठीक नहीं है; क्योंकि वहाँ भी पूर्व में प्रवृत्त वृद्धि और पूर्व में प्रवृत्त गुण का "द्विवर्चनेऽचि १.१.५९" से रूपातिदेश होने से अपहार हो जाने पर इ को द्वित्व होगा और द्वित्व करने पर पुनः प्राप्त वृद्धि और गुण को बाधकर अन्तरङ्गत्वात् सवर्णदीर्घ हो जायगा । इसलिए 'इयाय' और 'इयेष' में भी सूत्र के चरितार्थ होने की सम्भावना नहीं है । जुहोत्यादि गण पठित ऋ धातु के लट् प्रथम-पुरुष के एक वचन के बने हुए रूप 'इयर्ति' में जब "अर्तिपिपर्त्योश्च" ७.४.७७ सूत्र से अभ्यास को इकार आदेश होगा, तब इयङ् करने के लिए इस सूत्र के चरितार्थ होने की बात नहीं कहनी चाहिए; क्योंकि यदि ऋ धातु मात्र में इस सूत्र का उपयोग इष्ट होता तो "उः" यही सूत्र बनाते; उसमें "य्वोः" की अनुवृत्ति कर लेते "इणो यण्" के साहचर्य से अथवा व्याख्यान विशेष से ऋ, धातु ही लिया जाता प्रातिपदिक नहीं, तब अर्थ होता कि ऋ धातु के इवर्ण को इयङ् हो । अभ्यास को ऋ धातु के परे रहते इयङ् हो या ऋ धातु के अभ्यास को इयङ् हो यह अर्थ तो गौरव के कारण युक्त नहीं था । इस तरह "उः" सूत्र नहीं करके सामान्य सूत्र "अभ्यासस्यासवर्णे" जो बनाया गया वह व्यर्थ होकर परिभाषा का ज्ञापक होगा ।

रिवर्णस्येयङित्यर्थः। अभ्यासस्यार्ताविव्यभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम्। न च ए ऐ ओ औ शब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकं तथा ओण्धातोर्ण्वुलन्तादिच्छावयजन्तात्सन्युवोणकीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम्।

---

जातत्वाभावाद् 'उः' इति न्यासे इयङ् न स्यात्, एवञ्च इयर्ति इति न सिद्ध्येदिति न वाच्यम् इणो यण् ६.४.८१ इति सूत्रसाहचर्याद् ऋशब्दात् ङसि सिद्धेन उरिति पदेन ऋधातोरर्थात् अर्तेरेव ग्रहणात्। यदि च सूत्रान्तरसाहचर्यं न क्वाप्याकरे गृहीतमिति तद्ग्रहणमिह निर्मूलमित्युच्यते तर्हि व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् (प० १) इति न्यायेन इह व्याख्यानतो अर्तेरेव ग्रहणमिति समाधानं स्वीकर्तव्यम्। व्याख्यानञ्चात्र अचिश्नुधातुभ्रुवामित्यतो धातोरित्यनुवर्त्य तस्य च विशेष्यं विधाय उरित्यनेन संयोज्य ऋधातोरिवर्णस्येयङ् इत्येवंरूपं बोध्यम्। न च ऐ, ऐ, ओ, औ, शब्देभ्य आचारक्विपि, क्विपः सर्वापहारलोपे धातुसंज्ञायां लिटि द्वित्वेऽभ्यासत्वेऽभ्यासस्य ह्रस्वे इ+ए अ, इ ऐ अ, उ+ओ+अ, उ+औ+अ इति स्थितिषु इयङुवङ्विधानार्थं सूत्रं चरितार्थम् तेन इयाय, उवायेत्यादि सिद्ध्यतीति, एवं ओणृ अपनयने इत्यस्माद धातोः कर्तरि 'ण्वुलतृचौ' ३.१.१३३ इति-ण्वुल्प्रत्यये ओणकशब्दात् ओणकमिच्छतीत्यर्थे 'सुप आत्मनः क्यच्' ३.१.८ इति क्यचि "क्यचि च" ७.४.३३ इतीत्वे ओणकीय इत्यस्य धातुसंज्ञायां 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' ३.१.७ इति सनि 'सन्यङोः' ६.१.९ इत्यनेन यथेष्टमपरे नामधातूनामिति भाषावृत्युक्तवार्तिकनियमेन यथेष्टं नामधातुषु इति सिद्धान्तकौमुद्युक्त-वार्तिकनियमेन वा प्रथमस्यैकाचोऽर्थात् ओण् शब्दस्य द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वे 'उ+ओणकीय स' इति स्थिते उवङादेशार्थं सूत्रं चरितार्थमिति तेन सनः इटि धातुत्वे लटि तिपि उवोणकीयिषतीति सिद्ध्यतीति वाच्यम् षाष्ठप्रथमाह्निक-

---

ए, ऐ, ओ, औ, शब्दों से आचारक्विप् करके तदन्तसे लिट् लकार में द्वित्व, अभ्यास को ह्रस्व करने पर इ+ए+अ इत्यादि में 'इयङ्' करने के लिए सूत्र की सार्थकता नहीं बतायी जा सकती और न ओण् धातु से ण्वुल् प्रत्यय करके ओणक बनाकर उससे 'ओणकम् इच्छति' इस अर्थ में क्यच् प्रत्यय करके तदन्त से सन् प्रत्यय करने पर निष्पन्न रूप उवोणकीयिषति में इयङ् विधान के लिए भी सूत्र की आवश्यकता नहीं सिद्ध की जा सकती है; क्योंकि पूर्वोक्त प्रयोगों का अनभिधान हैं, ऐसे प्रयोग अभिहित नहीं है यह बात षष्ठ अध्याय के प्रथमाह्निक के अन्त के भाष्य के प्रमाण से अर्थात् "दाश्वान्"—६.१.१२ सूत्र के भाष्य के प्रमाण से सिद्ध होता है। 'दाश्वान्साह्वान्मीढ्वांश्च' ६.१.१२ सूत्र के भाष्य में कहा गया है कि यदय-मभ्यासस्यासवर्णे (६. ४.७८) इत्यसवर्णग्रहणं करोति तज्ज्ञापयत्याचार्यः—वार्णा-दाङ्गं बलीय इति। यदि पूर्वप्रयोगों का अभिधान होता तो वहाँ सूत्र सार्थक होने पर

**षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात् । अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वं न त्वदुक्तप्रयोगस्यैव दुर्लभत्वात् । एवं च संपूर्णसूत्रस्य ज्ञापकता युक्ता ॥**

---

स्थस्य दाश्वान्साह्वान्मीढ्वांश्च ६.१.१२ इति सूत्रमधिकृत्य कृतस्य भाष्यस्य प्रामाण्येन तेषामनभिधानकल्पनात् । तत्र हि "आचार्यप्रवृत्तिर्ज्ञापयति **वार्णादाङ्गं बलीयो भवतीति** यदयम् अभ्यासस्यासवर्णे (६.४.७८) इत्यसवर्णग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? नह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवतीत्युक्त्वा नैतदस्ति ज्ञापकम् । अर्त्यर्थमेतत्स्यादित्यादिना चारितार्थ्यमाशङ्क्य नैकमुदाहरणमसवर्णग्रहणं प्रयोजयतीति समाहितम् । पूर्वोक्तरूपाणामभिधानीयत्वे तत्र चारितार्थ्यसम्भवान्नैकमुदाहरणमित्यादिकथनं पतञ्जलेरसङ्गतमेव स्यादिति भावः । कास्प्रत्ययादाममन्त्रे लिटि ३.१.३५ इति सूत्रे प्रत्ययग्रहणमपनीय तत्स्थाने कास्यनेकाच आम्-वक्तव्य इति कास्यनेकाचश्चुलुम्पाद्यर्थम् इति प्रकृतसूत्रस्थभाष्यवार्तिकस्याशयमुपकल्प्य प्रत्ययग्रहणं भाष्ये प्रत्याख्यातमिति हरदत्तानुसारिणो भट्टोजिदीक्षितादयः । तेषां मतेनारम्भप्रत्याख्यानयोः फलभेदवारणायापि ए ऐ ओ औ इत्येतेभ्य आचारार्थकक्विप्प्रत्ययस्यानभिधानं कल्पनीयम् । अन्यथा सूत्रे कास्प्रत्ययादित्यत्र प्रत्ययग्रहणसत्वे एभ्यो लिटि आम् प्राप्नोति प्रत्ययान्तत्वात्, तत्प्रत्याख्याने वार्तिकेन अनेकाच्त्वाभावात्तन्न प्राप्नोतीति फलभेदः स्पष्टः। फलैक्ये प्रत्याख्यानं सम्भवति न तु फलभेदे इति तत्प्रत्याख्यानासंगतिः स्यात् । प्रत्याख्यानमसंगतं माभूदिति हेतोरेतेभ्य आचारक्विपोऽनभिधानं मन्तव्यमिति एषामनभिधाने कारणान्तरं मन्तव्यम् । उवोणकीयिषतीत्यत्र दर्शितं चारितार्थ्यं त्वसंभवमेव, 'यथेष्टं नामधातुषु' इति वार्तिकेन आद्यानां त्रयाणामन्यतमस्यैकाचो यद्द्वित्वं प्रतिपादितं तत्राप्यजादेस्त्वाद्येतरस्यैवेति नियमसत्वेन ओण् इत्यस्य द्वित्वासंभवेन पूर्वोक्तप्रयोगासंभवात् । आचार्यप्रवृत्तिर्ज्ञापयति—"वार्णादाङ्गं बलीयो भवति यदयमभ्यासस्यावर्णे इत्यसवर्णग्रहणं करोतीति भाष्येण असवर्णग्रहणस्य ज्ञापकतापरकं प्राचां मतमेव भाष्यानुकूलं मन्यते, नव्यमतं सम्पूर्णसूत्रस्य ज्ञापकता-

---

भाष्यकार ने जो ज्ञापकत्व सिद्ध किया है; वह असंगत हो जाता । दूसरी बात यह भी है कि भाष्यकार ने "**अर्त्यर्थमेतत् स्यात्**" कहकर ऋ धातु में जब सूत्र की सार्थकता दिखायी तब यह कहा गया कि नैकमुदाहरणं योगारम्भम् प्रयोजयति (एक उदाहरण को सामान्य सूत्र का प्रयोजन नहीं सिद्ध किया जा सकता) । यदि पूर्वोक्त प्रयोग शिष्टप्रयुक्त (अभिहित) होते तो अनेक उदाहरणों के मिलने की स्थिति में "एक उदाहरण" इत्यादि कहना गलत हो जाता है ।

"उवोणकीयिषति" तो बनेगा ही नहीं; क्योंकि "अजादेर्द्वितीयस्य" ६.१.२ इस नियम के अनुसार यहाँ द्वितीय एकाच् को ही द्वित्व होगा । इसलिए पूर्वोक्त प्रयोग का बनना असम्भव है । इस तरह सम्पूर्ण सूत्र की ज्ञापकता ठीक ही बतायी गयी है ।

**यद्यपि भाष्ये यदयमभ्यासस्यासवर्णे इत्यसवर्णग्रहणं करोतीति ग्रन्थेनासवर्ण-ग्रहणस्यैव ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवतीति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते। अग्रेऽपि नैतदस्ति ज्ञापक-मर्त्यर्थमेतत्स्यादित्यनेन सूत्रसार्थक्यमेव दर्शितम्। असवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्-व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्॥**

**न चाकृतव्यूहपरिभाषयेयेषेत्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति संभावनायाः सत्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं संपूर्णसूत्रस्य ज्ञापक-तेति वाच्यम्। तस्या असत्वात्। सत्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्ति-**

---

प्रतिपादकं तु न सम्भवते तेन भाष्येणेति तु न वाच्यम् नह्यन्तरेण गुणवृद्धी असवर्ण-परोऽभ्यासो भवतीति ज्ञापकताप्रतिपादनपरकभाष्येण सम्पूर्णसूत्रस्यैव ज्ञापकतासिद्धे-र्नव्यमतस्यैव भाष्यानुसारित्वात्। अतएव नैतदस्ति ज्ञापकम् अर्त्यर्थमेतत् स्यादित्या-दिना सम्पूर्णसूत्रस्यैव सार्थक्यं दर्शितम्।

यद्यसवर्णग्रहणस्यैव ज्ञापकत्व भाष्याभीष्टं स्यात्तदा तावन्मात्रस्य व्यावर्त्यम् प्रदर्श्य तावन्मात्रस्यैव सार्थक्यं स दर्शयेत्। असवर्णग्रहणस्य प्रमुखंफलं सवर्णे परतो न भवतीत्येव। तस्यैव ज्ञापकत्वे "नहि सवर्णदीर्घेकृते सवर्णपरोऽभ्यासो भवतीत्येव" वक्तुमुचितम्। उपक्रमापेक्षया उपसंहारग्रन्थस्य बलीयस्त्वात्सम्पूर्ण-सूत्रस्यैव ज्ञापकता लभ्यत इति भावः। न च'इयेष इयाय'इत्यादौ अकृतव्यूहाः पाणिनीया इतिपरिभाषया गुणात् पूर्वं सवर्णदीर्घप्राप्तिः यदि दीर्घो न स्यात्तदा गुणवृद्धी स्यातामिति संभा-वनायाः सत्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति तत्र चाभ्यासस्येत्यंशस्य चारितार्थ्यात् सम्पूर्णसूत्रस्य ज्ञापकता कथमिति वाच्यम् तस्याः अकृतव्यूहपरिभाषाया नव्यमतेना-

---

यद्यपि भाष्य में पहले लिखा गया है कि "अभ्यासस्यासवर्णे" में जो असवर्ण ग्रहण' करते हैं (वही ज्ञापन करता हैं) इससे असवर्ण ग्रहण की ही ज्ञापकता सिद्ध होती है, तथापि उस भाष्य के उपपादन ग्रंथ से (बिना गुणवृद्धि के असवर्ण परक अभ्यास हो नहीं सकता इस ग्रंथ से) सम्पूर्ण सूत्र की ही ज्ञापकता सिद्ध होती है। आगे भी" यह ज्ञापक नहीं हो सकता 'ऋ' धातु के लिए (इयर्ति इत्यादि में इयङ् करने के लिए यह सूत्र है" इत्यादि ग्रन्थ से भी सूत्र की ही सार्थकता दिखायी गयी। यदि असवर्ण ग्रहण मात्र इसका ज्ञापक होता, तो उसके ही व्यावर्त्य (प्रयोजन) को बताकर उसी की सार्थकता दिखायी जाती।

इयेष इत्यादि में "अकृतव्यूह" परिभाषा (प० ५८) से सवर्णदीर्घ की अप्राप्ति हो जायगी, क्योंकि यदि यहाँ दीर्घ न हो तो गुण होगा, इस सम्भावना के रहने के कारण परिभाषा की प्रवृत्ति हो सकती है, फिर तो 'इयेष' में सूत्र चरितार्थ हो जायगा। अतः सम्पूर्ण सूत्र की ज्ञापकता कैसे दिखायी गयी? यह प्रश्न नहीं

**योग्यकालोत्तरमेव तन्निमित्तविनाशबहिरङ्गविधेः प्राप्तिस्तत्रैवैतत्परिभाषाप्रवत्ति-स्वीकाराच्च । न चातरङ्गत्वाद् दीर्घेऽपीयायेत्यादौ पूर्वान्तवत्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे इयङ् विधानेन सूत्रं चरितार्थम् । न चाचिश्नु' इत्यनेन सिद्धिर्वृद्धिबाध-नार्थत्वादिति वाच्यम् । प्रत्यासत्याऽसवर्णपदेनाभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः ।**

---

सत्वात् । तस्याः सत्तास्वीकारेऽपि ज्ञापकतापरकैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्य-प्रवृत्तियोग्यकालोत्तरमेव तदन्तरङ्गनिमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैवैतत्-परिभाषाप्रवृत्तिस्वीकारेणादोषाच्च । इयेष इयाय इत्यादौ प्रकृते तु द्वित्वात्पूर्वमपि गुण-वृद्ध्योः प्राप्तिसत्वेन परिभाषाया अविषयत्वं स्पष्टमेव । नन्वियायेत्यादावन्तरङ्गत्वाद्-दीर्घेऽपि 'अन्तादिवच्च' ६-१-८५ इति पूर्वान्तवद्भावेनाभ्यासत्वात् स्वत इवर्णत्वाच्च णलोऽकाररूपेऽसवर्णेऽचि परे इयङ्विधानार्थं सूत्रमिदं चरितार्थम् ? नचाचिश्नुधातु-भ्रुवामित्यनेन सिद्धिः, तत्र ई अ इत्यवस्थायाम् इयङ् वृद्धिःइणो यण् इति च प्राप्ताः, इयङं यणं च बाधित्वा अचोञ्णिति ७-२-११५ इति परत्वात् प्रवृत्तायाः वृद्धेर्बाधनार्थं तस्यावश्यकत्वादिति चेन्न प्रत्यासत्या अर्थात् अभ्यासस्येति पदप्रत्यासत्त्या उत्तर-खण्डावगतेरुत्तरखण्डसम्बन्धिन्यसवर्णेऽचि इयङ् विधानात् णलोऽकारे परतः सूत्राप्राप्त्या

---

करना चाहिए; क्योंकि वह (अकृतव्यूह परिभाषा) है ही नहीं । नागेश ने इस परि-भाषा को निष्प्रयोजन और भाष्यानुक्त बताकर उसका खण्डन कर दिया है (देखिए परि० ५८ पर नागेश का मत) उस परिभाषा के रहने पर भी ज्ञापक बताने वाले पूर्वोक्त भाष्य के प्रमाण से यह मानना चाहिए कि जहाँ अन्तरङ्ग कार्य की प्रवृत्ति के योग्य काल के बाद ही तन्निमित्त विनाशक बहिरङ्ग विधि की प्राप्ति रहेगी; वहीं पर अकृतव्यूह परिभाषा की प्रवृत्ति होगी । 'इयेष' 'इयाय' में तो द्वित्व से पहले भी गुणवृद्धि की प्राप्ति है । इसलिए अकृतव्यूह परिभाषा की प्रवृत्ति नहीं होगी ।

यद्यपि अन्तरङ्गत्वात् दीर्घ होने पर भी "इयाय" इत्यादि में ई+अ ऐसी स्थिति में पूर्वान्तवद्भाव से अभ्यासत्व लाकर और स्वतः इवर्ण होने से असवर्ण णल् (अ)के परे रहते 'इयङ्' विधान करने के लिए यह सूत्र चरितार्थ है, "अचिश्नु" ६.४.७७ से तो 'इयङ्' सिद्ध नहीं था, उसे वृद्धि बाध लेती, यह इयङ् तो वृद्धि को बाध-कर होता है इस तरह चरितार्थ सा लगता है तथापि अभ्यासस्यासवर्णे सूत्र में प्रत्यासत्या (उपस्थित्या) असवर्ण पद से अभ्यास के उत्तरखण्ड सम्बन्धी असवर्ण अच् ही लिया जायगा अर्थात् "अभ्यासस्य" शब्द के द्वारा पहले पहल ऐसा ही लगता है कि असवर्ण अच् भी अभ्यास के उत्तरखण्ड का ही हो । यहाँ तो आप णल् के परे रहते इयङ् करना चाहते हैं । अतः 'णल् के परे रहते सूत्र को चरितार्थ नहीं दिखाया जा सकता ।

सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एव ॥

चारितार्थ्यप्रदर्शनासंभवात् । ननु यत्राकाङ्क्षा वर्तते तत्रैव प्रत्यासत्यार्थविशेषस्य कल्पना क्रियते यथा "सिद्धे शब्दार्थसम्बन्धे" इत्यत्र प्रत्यासत्या "भगवतः पाणिनेराचार्यस्य लक्षणं कथं प्रवृत्तम्" इति भाष्योक्तः प्रश्नो गम्यते ; इह तु अभ्यासस्येयङुवङौ भवतोऽसवर्णेऽचि इत्यर्थे आकाङ्क्षाया अभावादुत्तरखण्डसम्बधिनीत्यार्थाविगतेरभावएव युक्त इत्थं णल्यसवर्णेऽचि सूत्रमियङ्विधानाय चरितार्थमिति पूर्वोक्तं युक्तमेव, "नचाचिश्नुधातु ६-४-७७ इतीयङा सिद्धिः वृद्धिबाधनार्थत्वादित्यादिनापि सूत्रं वृद्धिबाधनार्थमित्युक्त्वा सूत्रस्य चारितार्थ्यं स्वयमेव दर्शितमिति तस्य कथं ज्ञापकत्वमिति चेन्न सूत्रवैयर्थ्यबलमाश्रित्यापरबाधकल्पनापेक्षया परिभाषाज्ञापनस्यैवौचित्यात् । इत्थं सूत्रस्य चारितार्थ्याभावात्संपूर्ण सूत्रमेव ज्ञापकमिति नव्यमतम् ।

इत्थं सम्पूर्णसूत्रज्ञापितेयं परिभाषा धार्मिग्राहकमानात् (अत्र धर्मी=परिभाषात्मकः, तद्ग्राहकं मानम्=अभ्यासस्यासवर्णे—६-४-७८ इति सूत्रं तस्मात्) आङ्गवार्णयोः समानकार्यित्वे एव (समानस्थानिताकत्वे एव) प्रवर्तत इति संकोचः

यदि यह कहे कि जहाँ आकाङ्क्षा रहती हैं, वहीं प्रत्यासत्या कोई कल्पना की जाती है जैसे "सिद्धे शब्दार्थसम्बन्धे" यहाँ सप्तमी ने आकाङ्क्षा जगायी; इसलिए "कथं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्" इसका अध्याहार किया जाता है; यहाँ तो अभ्यास के इवर्ण और उवर्ण को इयङ् और उवङ् हो असवर्ण अच् के परे रहते ऐसा अर्थ करने पर कुछ कमी या अपूर्णता नहीं रहती ; जिससे कि शाब्दबोध को पूर्ण बनाने के लिए "उत्तरखण्डसम्बन्धी" इस विशेषण का अध्याहार करके उत्तर खण्ड सम्बन्धी असवर्ण अच् के परे रहते ऐसा अर्थ किया जा सके। इसलिए अध्याहार नहीं होगा फिर तो सूत्र णल् रूप असवर्ण अच् के परे रहते 'इयङ्' विधान के लिए चरितार्थ है 'अचिश्नु'—६.४.७७ से तो इयङ् नहीं हो सकता, क्योंकि वृद्धि उस 'इयङ्' को बाध लेती है । अभ्यासस्यासवर्णे ६.४.७८ तो आरम्भ सामर्थ्यात् वृद्धि को बाध,—लेता है तो मेरी सलाह यह है कि वृद्धि शास्त्र के बाध की कल्पना की अपेक्षा परिभाषा का ज्ञापक मानना ही श्रेष्ठ है । यह नागेश का मत है ।

धर्मि (परिभाषा) के ग्राहक (ज्ञापक) प्रमाण अर्थात् 'अभ्यासस्यासवर्णे' इस सूत्र से यह सिद्ध होता है कि यह परिभाषा वही लगती है जहाँ अङ्ग सम्बन्धी और वर्ण सम्बन्धी दोनों प्रकार के शास्त्रों से किसी एक स्थान में ही कार्य प्राप्त होता है। जैसे 'इयाय' में इण् धातु से लिट् तिप् णल् आदेश और द्वित्व करने पर जब इ+इ+अ दीर्घ और वृद्धि शास्त्रों, जो क्रमशः वार्ण और आङ्ग विधि हैं; से एक ही इ को कार्य प्राप्त है । यह बात स्वरितो वानुदात्ते—८.२.६ सूत्र के भाष्य से ध्वनित होती है । वहाँ 'कुमार्यै' में "कुमारी+ए" इस स्थिति में अन्तरङ्ग होने के कारण

**यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्वे एवैषेति—तन्न । ज्ञापितेऽपीयायेये-षेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च ॥**

---

क्रियते । तेन गाते इति सिद्ध्यति । पूर्वोक्तसंकोचाभावे तु भौवादिकाद् गाङ्धातोर्लटि आतामादेशे टेरेत्वे शपि गा+अ=आते इति स्थितेऽनयापरिभाषयान्तरङ्गवार्णकार्यं सवर्णदीर्घं बाधित्वा 'आतोङितः, ७-२-८ इतीयादेशे गाते इति रूपासिद्धिः संकोचेकृते तु न दोषः अतोङ्गात्परस्य ङितामाकारस्य इय्स्यादित्यर्थे आङ्गकार्यस्य स्थानी आतेघटकाकारः वार्णकार्यस्य सवर्णदीर्घस्य च स्थानी गाघटकाकारः शपोऽकारश्चेत्युभय इत्याङ्गवार्णयोः समानस्थानित्वाभावात् परिभाषाया अप्रवृत्त्या पूर्वमन्तरङ्गत्वाच्छपा सह सवर्णदीर्घेकृते ङितामाकारस्य आतेघटकाकारस्य अतः परत्वाभावाद् आतोङितः इत्यस्याप्रवृत्तेः । नचाङ्गवार्णयोः समानस्थानित्वे एवैतत्प्रवृत्तिस्वीकारे वारिणीत्यादौ वारिशब्दस्य सतप्म्यैकवचनसिद्धरूपे नुमं बाधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्तिरिति वाच्यम् अङ्गनिष्ठोद्देश्यताकेऽङ्गाधिकारस्थे कार्ये एवास्याः प्रवृत्तिस्वीकारेणादोषात् । ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मस्यातिदेशाभावादन्तादिवच्चेति परादिवद्भावाभावादत्वस्यानतिदेशान्नात्र दीर्घेकृते आतोङित इति प्रवर्तते ।

---

यण् की प्रवृत्ति आडागम से पहले स्वीकार की गयी है । यह तभी सम्भव है जबकि 'वार्णादाङ्गम्'—यह परिभाषा यहाँ न लगे तभी तो वार्ण (वर्ण सम्बन्धी कार्य यण्) कार्य आङ्गकार्य (अङ्गसम्बन्धी कार्य आडागम) से पहले हो सकता है । इसलिए 'वार्ण' परिभाषा में पूर्वोक्त सन्निवेश करना चाहिए कि वार्ण परिभाषा तभी लगती है, जब कि आङ्ग और वार्ण दोनों शास्त्रों से विहित कार्य किसी एक ही स्थान में प्राप्त हो । 'कुमार्यै' में तो 'आट्' ए को करते हैं और यण् 'इ' को होता है । इस लिए आडागम कार्य के आङ्ग होने पर भी यह परिभाषा नहीं लगी । क्योंकि 'अङ्ग' को आडागम नहीं होता है, वह तो नद्यन्त अङ्ग से परे ङिद्वचन को (ङे ङसि आदि को) होता है यदि परिभाषा को अनित्य मानकर 'कुमार्यै' के भाष्य का उपपादन करें तो पूर्वोक्त संकोच व्यर्थ ही है । अपने मत के अनुसार संकोच बताकर अब प्राचीन वैयाकरणों के अनुसार किये गये संकोच रूपी सुधार का खण्डन करते हुए लिखते हैं—किसी ने जो यह कहा कि समाननिमित्तकत्व रूप समानाश्रय में ही यह परिभाषा प्रवृत्त होती है, वह मत ठीक नहीं है, क्योंकि यदि ऐसा 'समानाश्रय' यहाँ लें तो परिभाषा ज्ञापित होने पर भी 'इयाय' और 'इयेष' इत्यादि प्रयोगों की सिद्धि नहीं होगी और सूत्र की व्यर्थता पूर्ववत् बनी रहेगी । ''इयाय'' में वृद्धि का निमित्त णल् (अ) है; परन्तु वह 'अ' दीर्घ का निमित्त नहीं है । अतः यहाँ समाननिमित्तकत्व नहीं होने के कारण परिभाषा नहीं लगेगी और प्रयोग नहीं बनेगा । सूत्र भी व्यर्थ ही रह जायगा ।

**स्योन इत्यत्र तु वक्ष्यमाणरीत्याऽस्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्ग-त्वाद्यणादेशः ।**

---

नचात्र शपा सह सवर्णदीर्घे कृतेऽपि पूर्वस्मात्परस्य विधौ 'अचः परस्मिन् पूर्वविधौ' १-१-५७ इति स्थानिवद्भावादतः परत्वेन ङितामाकारस्य इय् स्यादेवेति वाच्यम् तत्र पञ्चमीसमासपक्षस्यानित्यत्वाभ्युपगमेन लक्ष्यानुरोधादिहास्वीकारात् । इत्थं स्व-संकोचमुक्त्वापरमप्राचीनसंमतम् "समाननिमित्तत्वरूपसमानाश्रयत्व एवेति संकोचं निरस्यति यत्तु-तन्नेत्यादिना । तथाहि तथासंकोचे इयायेत्यत्र सवर्णदीर्घवृद्ध्योः प्राप्तयोः समाननिमित्तकत्वाभावदस्याः परिभाषाया अप्राप्त्या इयायेत्यस्यासिद्ध्यापत्तेः सूत्रस्य चास्यां ज्ञापितायामपि चारितार्थ्याभावप्रसङ्गाच्च ।

नन्वेवं समाननिमित्तत्व एवैषा प्रवर्तते इतिसंकोचस्य फलं स्योन इत्यस्य सिद्धिः तत्र हि यणादेशगुणादेशयोः प्राप्तयोः समाननिमित्तत्वाभावादस्या अप्राप्त्या वार्णाद् यणादेशादाङ्गस्य पुगन्तेति गुणस्य प्राबल्याबोधनात् गुणापेक्षयान्तरङ्गत्वात् प्रथमं यणादेशः सिद्ध्यतीति परमप्राचीनास्तन्नव्यमतेन कथं सिद्ध्यतीति चेच्छ्रूयताम् अस्याः परिभाषायाच्छ्वोशूडनुनासिके च ६-४-१९ इति सतुग्निर्देशेनानित्यत्वज्ञापनात् स्योन इत्यादौ अस्या अप्रवृत्यान्तरङ्गत्वाद् गुणादेशमसिद्धं कृत्वा यणादेश एव पूर्वं भवतीति तत्सिद्धिः । एवञ्च स्योन इत्यत्र अस्याः परिभाषायाः याऽप्रवृत्ति-स्तस्याः कारणं न "समाननिमित्तकत्वरूपसमानाश्रयत्व एवेयं प्रवर्तते इतीदृशः कश्चन संकोचविशेषः किन्तु कारणमस्ति अस्या अप्रवृत्तेरनित्यत्वमिति नव्यानां तात्पर्यम् । तुग्ग्रहणेन यया रीत्याऽस्या अनित्यत्वं ज्ञाप्यते सा रीतिः परिभाषान्ते निरूप्यते नागेशेन तदुच्यते वक्ष्यमाणरीत्येति-तथाहि नङ्प्रत्ययान्ते प्रश्न इत्यादौ प्रछ धातोः छेचेति प्राप्तं वार्णं तुक्कार्यं बाधित्वा वार्णादाङ्गम् बलीय इत्यनया तुकः प्रागेव छ्वोरिति शादेशे तुकोऽप्राप्त्या च्छ्वोरित्यत्र सतुग्ग्रहणं व्यर्थं सत् परिभाषाया अनित्यत्वं ज्ञापयति । अनित्यत्वे ज्ञापिते तु प्रछ् इत्यवस्थायां पूर्वोपस्थितकत्वे-नान्तरङ्गत्वात्प्रथमं तुकि तस्य श्चुत्वे प्रच्छ् न इति जाते सतुकश्छस्यादेशाय च्छ्वो-

---

प्रश्न यह है कि यदि यह परिभाषा मानते हैं तो "स्योनः" कैसे बनेगा ? सिव् धातु से औणादिक 'न' प्रत्यय करने पर नित्यत्वात् गुण को बाधकर जब ऊठ् किया गया; तब 'सि ऊ न' ऐसी स्थिति में गुण को बाधकर अन्तरङ्गत्वात् यण् होता था और फिर गुण होकर स्योनः बनता था, परन्तु इस परिभाषा के द्वारा आङ्गकार्य गुण, यण् को बाध लेगा तो 'स्योनः' नहीं बनेगा ? ऐसा नहीं कहना चाहिए; क्योंकि यह परिभाषा अनित्य है । इसलिए इसकी यहाँ प्रवृत्ति नहीं होगी, फिर गुण को बाधकर अन्तरङ्गत्वात् यणादेश हो ही जायेगा । परिभाषा के अनित्य होने में प्रमाण ३७९ पृष्ठ पर दिया जाता है ।

**न चैवमपीयायेत्यादावियङ् दुर्लभस्तत्र कर्त्तव्ये वृद्ध्यादेः स्थानिवत्त्वेनासवर्ण इति प्रतिषेधादिति वाच्यम्। सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः। तच्च सामान्यापेक्षम्, अभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबंधकीभूतं स्थानिवत्त्वं नेति।**

---

रितिसतुङ्निर्देशः स्वांशे चरितार्थः तदभावे च तुकः श्रवणापत्तिः। अकृतव्यूह-परिभाषा तु नव्यमतेन नास्त्येव अतो न तया तुकोऽभावोभवितुमर्हतीति।

नच एवमपि (परिभाषायां ज्ञापितायामपि) इयाय इयेष इत्यादावियङ् दुर्लभ एव, अचः परस्मिन्निति वृद्धिगुणयोः स्थानिवत्त्वेन सवर्णपरत्वादसवर्ण इति प्रति-षेधादितिवाच्यम् अभ्यासस्यासवर्णे इति सूत्रारम्भसामर्थ्यात् स्थानिवत्त्वस्याप्य-प्रवृत्तिज्ञापनात्। तच्च ज्ञापनं सामान्यापेक्षम्-अभ्यासकार्ये कर्तव्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतम् (अभ्यासकार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेत्येवंरूपम्)। एवं चात्र वृद्धिगुणयोः स्थानिवत्वाभावेनासवर्णपरत्वादियङ् सुलभ इति।

ननु इयेथ इयर्ति इत्यादौ सूत्रस्य चारितार्थ्यम्, तत्र प्रथमे इण्धातोर्लिट् तस्य स्थाने सिपि तस्य थलि इ+थ इति स्थिते द्वित्वनिमित्तकस्याचोऽभावेन 'द्विर्वचनेऽचि' १-१-५९ इति निषेधाप्राप्त्या परत्वात्प्रथमं द्वित्वाद् गुणे ए थ इतिस्थिते ए इत्यस्य द्वित्वेऽभ्यासह्रस्वत्वे इ ए थ इत्यत्रासवर्णाच्परत्वादियङ् विधानाय सूत्रं

---

परिभाषा मानने पर भी 'इयाय' में "इयङ्" दुर्लभ ही है क्योंकि इयङ् कर्तव्य में वृद्धि का "अचः परस्मिन्" १.१.५१ से स्थानिवद्भाव होने पर सवर्ण अच् के परे आजाने से "असवर्ण" इसका प्रतिषेध लग जायेगा, ऐसा नहीं कहना चाहिए "अभ्यासस्यासवर्णे" इस सूत्र के आरम्भ के सामर्थ्य से यहाँ स्थानिवद्भाव नहीं होगा।

यद्यपि 'इयेथ' और 'इयर्ति' में सूत्र के चरितार्थ होने की संभावना है। 'इयेथ' में इण् धातु से लिट्, सिप्, सिप् के स्थान में थल् आदेश करने पर द्वित्व निमित्तक अच् के अभाव के कारण "द्विर्वचनेऽपि" १.१.५९ इसकी अप्राप्ति होने पर 'परत्वात् गुण करके 'ए' को द्वित्व होगा; तब अभ्यास को ह्रस्व करने पर 'इ ए थ' यहाँ उत्तरखण्ड स्थानिभूत अच् से पूर्व नहीं है। इसलिए "अचःपरस्मिन्"—से स्थानिवद्भाव की अप्रवृत्ति हो जायगी, अतः असवर्ण अच् परे होने के कारण 'इयङ्' आदेश चरितार्थ है। इस तरह इयर्ति में गुण से पहले अभ्यास को इत्व करने पर और उत्तर खण्ड को गुण करने पर उत्तरखण्ड को स्थानिवद्भाव करने पर भी असवर्ण अच्त्व में कोई कमी नहीं आयेगी, यहाँ भी सूत्र चरित-र्थ हो सकता है तथापि यदि ये दो ही प्रयोग इसके उदाहरण होते, तो 'अभ्यासस्यानिकि' या 'अभ्यासस्याय्वोः" इन न्यासों से ही कार्य चलता "अभ्यासस्यासवर्णे" इस सूत्र की व्यर्थता स्पष्ट ही है। अतः इसके ज्ञापक होने में कोई बाधा नहीं है।

**अत एवारतीत्यादौ यणादेशस्य स्थानिवत्वादभ्यासस्य 'ढ्रलोप इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । अरिरियादित्यत्र तु स्थानिवत्वेनेयङ् भवत्येव तस्य स्थानिवत्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् ।।**

---

चरितार्थम् । तेन इयेथ इति सिद्धयति, इयाय इयेष इत्यादौ यथा एकारस्य स्थानिवत्वेन सवर्णाच्परत्वं सम्भाव्यते तथात्र न शक्यते वक्तुम् एकारादेशस्य स्थानिभूतादच इकारात् पूर्वत्वेन दृष्टस्य विधिः कर्तव्यो नास्ति अर्थात् स्थानिवद्भावेन इकारमानीय यस्याभ्यासेकारस्येयङाभावकार्यं कर्तुमिष्यते सोऽभ्यासेकारः स्थानिभूतादच इकारात् पूर्वत्वेन दृष्टो नास्ति वृद्धिगुणविधानकालेऽभ्यास एव नासीत् किमुत अभ्यासेकारः । द्वित्वात्पूर्वमेव वृद्धिगुणयोः प्रवृत्या द्वित्वानन्तरं जायमानस्याभ्यासस्य कुतस्तदानीं सम्भवः । एवम् इर्यति इत्यत्र ऋ ऋ ति इत्यवस्थायामभ्यासस्येकारस्यार्तिपिपर्त्योश्च ७-४-७७ इतीत्वं प्राप्नोति उत्तरखण्डस्य च सार्वधातुकगुणः तत्र गुणात्पूर्वमेव प्रतिपदोक्तत्वादभ्यासस्येत्वे तत उत्तरऋकारस्य गुणेऽपि असवर्णाच्त्वस्यैव सत्वात्सूत्रं चरितार्थम् इति चेन्न एतावन्मात्रप्रयोजनस्याभ्यासस्यानणि इतिन्यासेनैव सिद्धेः सूत्रवैयर्थ्यस्य निर्बाधत्वेन स्थानिवद्भावाप्रवृत्तिरूपज्ञापनस्य युक्तत्वात् । इयेथेत्यादौ लिटि द्वित्वविधानस्य प्रतिपदोक्तत्वेन प्रथमं द्वित्वमेवेति

---

सूत्रारम्भ सामर्थ्यात् स्थानिवद्भाव की अप्रवृत्ति का ज्ञापन यहाँ सामान्यपेक्ष होगा; विशेषा-पेक्ष नहीं । सामान्यापेक्ष ज्ञापन यह होगा कि अभ्यास-कार्य कर्त्तव्य में अभ्यास के उत्तर खण्ड में किये गये आदेश को वैसा स्थानिद्वभाव, जिससे कि अभ्यास कार्य में रुकावट आती हो, नहीं होगा । इसलिये आरति में यणादेश को स्थानिद्दभाव नहीं हुआ । स्थानिवद्भाव न होने से "रोरि"२.३.१४. से लोप होने में कोई बाधा नहीं आती । 'ऋ' धातु से यङ्लुगन्त से लट् लकार में प्रथमपुरुष के बहुवचन में ऋ को अत् आदेश करने पर अभ्यास के ऋ को उरदत्व होने पर रपर का अभ्यास लोप होने के बाद रुक् का आगम करने के बाद ऋ को अत् हुआ । उत्तर-खण्ड में ऋ को रेफ यण् करने के वाद, रुक् के रेफ का "रोरि" से लोप और ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६.३.१११ से दीर्घ होकर "आरति" बनता है । यहाँ यदि पूर्वोक्त नियम नहीं होता तो यण् आदेश को स्थानिवद्भाव होकर 'ऋ आ जाता; फिर रेफ के पर में न होने से लोप और दीर्घ नहीं होता । परन्तु पूर्वोक्त नियम मानने के कारण स्थानिवद् नहीं हुआ । इसीलिये जिन्हें 'आरति' में स्थानिवद्भाव के भय से 'ढ्रलोप' ६.३.१११ से दीर्घ दुर्लभ दिखता था, उनके मत का कोई ज्यादा मूल्य नहीं रहा । दूसरी बात यह है कि यहाँ दीर्घ विधि कर्त्तव्य में "न पदान्त" १.१.५४ सूत्र से निषेध भी हो जाता है । "अरियियात्" में तो स्थानिवद्भाव से इयङ् हो ही जायेगा; क्योंकि वह स्थानिवत् ऐसा स्थानिद्भाव नहीं है; जो अभ्यास कार्य के होने में रोड़ा

मान्यानां मतेन तु ज्ञापकत्वं स्वतः सिद्धमेवेति ।

अतएव=इयङादेशे कर्तव्ये न स्थानिवत्त्वमिति विशेषापेक्षत्वं ज्ञापनस्यास्वीकृत्य अभ्यासकार्ये कर्तव्ये तदुत्तरखण्डादेशस्याभ्यासकार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति सामान्यापेक्षत्वस्वीकारादेव ऋधातोः सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ्वाच्य इति यङि तस्य यङोचि च २-४-७४ इत्यत्र चकारादच्प्रत्ययं विनापि लुकि तस्य प्रत्ययलक्षणत्वेन यङन्तत्वात् सन्यङोः ६-४-९ इति द्वित्वेऽभ्यासत्वे उरदत्वे 'रुग्रिकौ च लुकि' ७-४-९१ इति रुकि धातुत्वे झेः अदभ्यस्तादित्यदादेशे कृते अर् ऋ+अत् इति स्थिते ऋकारस्य यणि रेफे अर्+ र् अत् इत्यत्र 'रोरि' ८-३-१४ इति लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ६-३-१११ इति दीर्घे आरतीत्यत्र दीर्घः सिद्ध्यति अन्यथोक्तसामान्यापेक्षज्ञापनाभावे तु यणः स्थानिवद्भावेन रेफपरत्वाभावात् रोरीत्यस्य रेफलोपनिमित्तकरेफाभावेन ढ्रलोप इति दीर्घस्य चाभावेन रूपासिद्धिः । अथ च दीर्घविधौ 'न पदान्त' १-१-५८ इतिनिषेधेनापि तत्र दीर्घसिद्धौ .ढ्रलोप'— इति दीर्घो न स्यादिति कथनमपास्तमेव ।

अर्तेर्यङोलुकि द्वित्वेऽभ्यासत्वे तस्य उरदत्वे रिगागमे च कृते धातुत्वे लिङितिपि यासुटि अनुबन्धलोपे अरि ऋ यात् इति स्थिते ऋकारस्य 'रिङ् शयग्लिङ्क्षु' ७.४.२८ इति रिङि प्राप्तेऽभ्यासस्य च 'अभ्यासस्यासवर्णे ६.४ ७८ इतीयङि च प्राप्ते परत्वादृकारस्य रिङादेशे तस्य स्थानिवद्भावेनासवर्णाच्परत्वं सम्पाद्याभ्यासस्येवर्णस्येयङादेशो विधीयते । स्थानिवद्भावस्यानेन ज्ञापनेन निषेधो न जायते, तत्र ज्ञापनशरीरेऽभ्यासकार्यप्रतिबन्धकीभूतस्यैव स्थानिवत्वं नेति निवेशात् । अयं स्थानिवद्भावस्तु अभ्यासकार्यस्येयङःसाधको न तु बाधक इति तदाह—अरियियादित्यत्र ।

वस्तुतस्तु अरियियादित्यत्रान्तरङ्गत्वेन रिङादेशात्पूर्वमेवेयङादेशो न्याय्यः अन्यथात्र रिङादेशस्य 'लोपोव्योर्वलि ६.१.६६ इति यलोपे कर्त्तव्येऽचः परस्मिन्निति स्थानिवद्भावाप्राप्त्या रेफरूपवल्परत्वाद् यलोपः स्यात् । अर्थात् पूर्वं रिङादेशे स्वीकृते रिङादेशकाले इयङोऽभावाद् यकारस्यासत्त्वेन रिङादेशस्थानिभूतादृकाररूपादचः पूर्वत्वेन यकारस्य दृष्टत्वाभाबात् स्थानिवत्त्वाप्रवृत्तिः स्पष्टैव । रिङादेशात् पूर्वं यदीयङादेशः स्वीक्रियते तदा रिङादेशकाले यकारस्य विद्यमानत्वेन स्थानिभूतादचः पूर्वत्वेन दृष्टतया तस्य लोपविधौ स्थानिवद्भावः प्राप्नोतीति । एवञ्च ज्ञापनशरीरे तत्कार्यप्रतिबन्धकीभूतमिति निवेशो न कार्यस्तस्य निष्फलत्वात् । अथ च तन्निवेशे अचकाणदित्यादिरूपासिद्धिरप्यापद्यते । कण् निमीलने इति चौरादिकाद् धातोः णिचि उपधावृद्धौ धातुत्वे लुङस्तिपि अडागमे च्लेः णिश्रि इति चङि द्वित्वेऽभ्यासकार्ये- अचकाण् इ अत् इति स्थिते णौ चङ्युपधाया ह्रस्वः ७.४.१ इति ह्रस्वस्य काण्यादीनां वेति वार्तिकेन विकल्पेन विधानेन ह्रस्वाभावे णिलोपेऽचकाणदिति सिद्ध्यति । अत्राभ्यासस्य लघुपरत्वाभावेन सन्वद्भावाभावात् सन्यतः ६-१-९ इतीत्वं'दीर्घो लघोः ७.४.९४ इतिदीर्घश्च न भवतः । प्रतिबन्धकीभूतेति निवेशे तु अत्र स्थानिवत्त्वस्याभ्यासकार्य-

**इयं चाङ्गसम्बन्धिन्याङ्ग एवेति 'स्वरितो वा' इति सूत्रे भाष्ये। तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः॥**

---

साधकत्वेन 'अतः उपधायाः' ७.२.११६ इति वृद्ध्यादेशस्य स्थानिवत्त्वेन लघुपरकत्वानयनात् सन्वद्भावे तन्मूलकेत्वदीर्घयोः प्रवृत्या विकल्पपक्षेऽपि अचीकाणदित्यनिष्टरूपमापद्येत। इष्यते तु अचकाणदिति।

अभ्यासकार्ये इत्यनुक्तौ अभ्यासोत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेत्येतावन्मात्रोक्तौ णीञ् प्रापणे इत्यस्माद् धातोः लिटस्तसोऽतुसादेशे द्वित्वादिकार्ये नि नि+अतुस् इति स्थिते 'एरनेकाचोऽस'योगपूर्वस्य' ६.४.८२ इति यणि निन्यतुरित्यत्राभ्यासोत्तरखण्डस्याजादेशस्य यणः तत्कार्यस्य नलोपस्य प्रतिबन्धकीभूतस्थानिवत्वनिषेधात् 'अनिदिताम्' ६.४.२४ इति नलोपापत्तिः। अभ्यासकार्ये कर्त्तव्ये इत्युक्तौ सत्यां तु न दोषः नलोपस्याभ्यासोत्तरखण्डस्थकार्यत्वेनाभ्यासकार्यत्वाभावात्। अभ्यासकार्ये कर्त्तव्ये आदेशस्य तत्कार्यप्रतिबंधकीभूतं स्थानिवत्वं नेत्येतन्मात्रोक्तौं अभ्यासोत्तरखण्डेत्यादेशविशेषणानुवतौ वव्रश्चेत्यत्रापि अभ्यासकार्ये सम्प्रसारणनिषेधे कर्त्तव्ये आदेशस्य 'उरत्' ७.४.६६ इत्यत्त्वस्य स्थानिवत्वनिषेधापत्या 'न संप्रसारणे संप्रसारणम्' ६.१.३७ इति सम्प्रसारणनिषेधो न स्यात् सम्प्रसारणपरत्वाभावात्। निवेशे कृते तु न दोषः आदेशस्य उरत् इत्यत्वस्याभ्यासोत्तरखण्डगतत्वाभावेन निषेधाविषयतयास्थानिवद्भावप्रवृत्तेः सुलभत्वात्। तत्प्रतिबन्धकीभूतमित्यस्य निवेशस्य फलम् अरियियादित्यत्रे यङसिद्धिरिति मूलोक्तमनुपदमेव खण्डितं मया वस्तुतस्तु इत्यादिना। एतद्वचनस्य फलन्तु 'अचीकमत' इत्यादौ उत्तरखण्डे कृतस्योपधाह्रस्वस्य सन्वद्भावेत्वदीर्घयोःकर्त्तव्ययोः सतोः न स्थानिवद्भावः तस्य स्थानिवत्वे तु अभ्यासस्य लघुपरत्वाभावेन 'सन्वल्लघुनि ७ ४.९३ इति सन्वद्भावाप्राप्त्या इत्वदीर्घौ न स्याताम्। अभ्यासस्य सन्वद्भावे कर्त्तव्ये तदुत्तरखण्डे जातस्य ह्रस्वादेशस्य तत्कार्यप्रतिबन्धकीभूतस्य स्थानिवत्वस्य वचनेनानेन निषेधे तु न कश्चिद्दोषः।

धर्मिग्राहकमानादियं परिभाषा चाङ्गसम्बन्धिन्याङ्गे अर्थादङ्गनिष्ठोद्देश्य-

---

बने। धर्मिग्राहक प्रमाण से अर्थात् "अभ्यासस्यासवर्णे" इस सूत्र की स्थिति विशेष के आधार पर यह कहा जा सकता है कि यह परिभाषा उसी आङ्गकार्य को बलवान् बनाती है; जिस कार्य में अङ्ग को उद्देश्य बनाया गया हो और जो कार्य अङ्गाधिकार में पठित सूत्र के द्वारा विहित हो। यह बात स्वरितो वाऽनुदात्तेपदादौ" ८.२.६ सूत्र के भाष्य में स्पष्ट है। पूर्वनिर्दिष्ट सूत्र के भाष्य में यह कहा गया कि "कुमार्यै" में यण् के बाद आट् होगा। यद्यपि आट् विधि आङ्ग विधि है, परन्तु उसमें अङ्गनिष्ठ उद्देश्यताकत्व नहीं है, अर्थात् वह अङ्ग को नहीं होता है; किन्तु नद्यन्त अङ्ग से पर 'ङे' को होता है।

**इयं चानित्या 'च्छ्वोरि'ति सतुग्निर्देशात्। अन्यथाऽन्तरङ्गत्वात्पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥५६॥**

---

ताकेऽङ्गाधिकारस्थे कार्ये एव प्रवर्तते इत्येतत् स्वरितो वानुदात्ते पदादौ ८.२.६ इति-सूत्रभाष्याल्लभ्यते। तत्र हि कुमार्यै इदम् कुमार्या इदम् इत्यत्र आन्तर्यतः उदात्तस्य उदात्तायादेशो यथा स्यादित्येतदर्थम् एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्य इति वार्तिकं कृत्वोक्तम् नैतदस्ति प्रयोजनम् (अर्थात् कम् धातोः 'कमेः किदुच्चोपधायाः (सि० ४६२१ उणा०) इति सूत्रेण "अङ्गिमदिमन्दिभ्य आरन्" (सि० ४६१७ उणादि) इत्यनुवृत्तारन्प्रत्ययेनारन्प्रत्यये उत्वे आरनः कित्वाद्गुणाभावे 'कञ्जि-मृजिभ्यां चित् (सि० ४६२० उणादि) इत्यतश्चिदित्यनुवर्तनात् कमेः किदुच्चोपधाया इति चित्त्वे "चितः" ६.१.१६३ इत्यनेनान्तोदात्तत्वे निष्पन्नात् 'कुमार इत्यस्मात् 'वयसि प्रथमे' ४.१.२० इति ङीपि तस्य "अनुदात्तौ सुप्पितौ" ३.१.४ इत्यनेनानु-

---

"च्छ्वोःशूडननुनासिके च" ६.४.१९ सूत्र में तुक्सहित निर्देश के कारण यह परिभाषा अनित्य है। वहाँ सतुक्निर्देश इसलिए करते हैं कि प्रष्टा में "प्रच्छ ता" ऐसी स्थिति में तुग् विशिष्ट छ (च्छ) को शकार आदेश हो। यदि सतुग् निर्देश न करें तो अन्तरङ्गत्वात् "छे च" ६.१.७३ से तुक् हो जायगा और वह तकार, छकार के स्थान में शकार करने पर भी श्रूयमाण रह जायगा। यदि वार्ण परिभाषा अनित्य न हो; तब तो अन्तरङ्ग तुक् से पहले ही छकार को शकार हो जायगा फिर तुक् की अप्राप्ति होने से तुक् होगा ही नहीं। फिर सतुक् निर्देश व्यर्थ हो जायगा। वह सतुक् निर्देश ज्ञापन करता है कि 'वार्ण परिभाषा अनित्य है। जब 'वार्ण' परिभाषा अनित्य मानी गयी; तब तो 'वार्ण' परिभाषा का डर रहा नहीं; इसलिए अन्तरङ्गत्वात् तुक् हो ही जायगा; उस तुक् की निवृत्ति के लिए "च्छ्वोः' यह सतुक् निर्देश सार्थक हुआ। अनित्य का ही फल है कि 'स्योनः' की सिद्धि हुई; यह बताया जा चुका है।

इस पर शब्देन्दुशेखर में विस्तार से विचार किया है।

वहाँ कहा गया है कि "अकृत-व्यूह" (प० ५७) या "निमित्तापाये नैमित्ति-कस्याप्यपायः" (व्याडि--४० चान्द्र० ६३ पुरुषो० ११३, सीरदेव ९९) से छ, के विनाश की सम्भावना में 'तुक्' की पूर्व में अप्रवृत्ति या उत्पन्न तुक् की निमित्त छ के विनाश के बाद निवृत्ति मान लें; तब तो 'सतुग्' ग्रहण वार्ण-परिभाषा के अनित्य होने पर भी व्यर्थ ही है; यह नहीं कहना चाहिए 'सतुग्' ग्रहण उन दोनों के अनित्य होने का भी ज्ञापन करता है। इसीलिए तो कहा गया है—"यावता विनाऽनुपपत्तिस्तावत् सर्वं ज्ञापयति। अर्थात् सूत्र जितने के बिना या जब तक सफल नहीं होता उतना या तब तक ज्ञापन करता है। इति शिवम्. ५६.

दात्तत्वे भत्वे यस्येति च ६.४.१४८ इत्यकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः ३.२.१४६ इत्यनेन ईकारस्य उदात्तत्वे निष्पन्नात् कुमारीशब्दात् ङेप्रत्यये तस्य च अनुदात्तौ सुप्पितौ इत्यनेनानुदात्तत्वे कुमारी+ए इत्यत्र परत्वात् प्राप्तमाण्नद्याः ७.३.१११ इत्याडागमं बाधित्वान्तरङ्गत्वात्ः प्राप्तो यणनया वार्णादाङ्गबलीयः (प०५६) इति परिभाषया बाधितः स्यात्तदा आङ्गे आडागमे कार्ये जाते तस्य चानुदात्तत्वे 'आटश्च' ६.१.९० इति वृद्धौ तस्याश्चानुदात्तस्थानिकत्वादनुदात्तत्वे कुमारी+ए इति स्थिते यणि यणःपरस्याः विभक्तेः ''उदात्तस्थाने यो यण् हलपूर्वस्तस्मात् परा नदी शसादिविभक्तिश्चोदात्ता स्यादित्यकेन 'उदात्तयणो हल्पूर्वात्' ६.१.१७४ इति-सूत्रेणोदात्तत्वे तस्य च सपादसप्ताध्यायीस्थत्वादन्तोदात्तं पदं सिद्धमेवेति ''एकादेश-स्वरोऽन्तरङ्गः सिद्धो वक्तव्य'' इति वार्तिकं व्यर्थं स्यादिति मनसि निधाय प्रोक्तम्) एकादेशे कृते उदात्तयणो हल्पूर्वात् इत्युदात्तत्वं भविष्यतीति स्वशैलीभङ्ग्या बहु-निगद्य अन्ते व्यवस्थापितम् उभयोराट उदात्तस्य चानित्ययोः परत्वादाडागमः, आटि कृतेऽन्तरङ्ग एकादेशः इति। एवं चान्तरङ्गत्वात् पूर्वं यण् तत उदात्तयण इत्यनेन ङेविभक्तेरुदात्तो जातः अन्तरङ्गत्वात्। तत आट्। स चागमत्वादनुदात्तः। तत (एकादेश उदात्तेनोदात्तः) ८.२.५ इत्यनेनोदात्तत्वं भवति यद्यपि तथापि तस्य त्रिपादीस्थत्वेनासिद्धत्वादायादेशो न भवेदुदात्तः। अत उक्तम् भाष्ये **एकादेश-स्वरोऽन्तरङ्गः सिद्धो वक्तव्य** इति। अत्र भाष्ये एकादेशस्य यणोऽन्तरङ्गत्वा-दाडागमात् प्राक् प्रवृत्तिरुक्ता सोचितस्तदैव संगच्छते यदा वार्णपरिभाषाऽत्र न प्रवर्तेत। अतः परिभाषायां संकोचः क्रियते ''**इयं चाङ्गसम्बधिन्याङ्ग एव** अर्थात् अङ्ग-निष्ठोद्देश्यताकेऽङ्गाधिकारस्थे कार्ये एव प्रवर्तत इति। 'आण्नद्याः' ७.३.११२ इति विहितस्याडागमस्याङ्गत्वेऽपि अङ्गमुद्दिश्य स न विधीयत इत्यङ्ग-निष्ठोद्देश्यताक-कार्यत्वाभावात्तत्रैतस्याः परिभाषाया अप्रवृत्तेस्तद्भाष्योक्तो यणुत्तरमाडिति नास्माकं प्रतिकूलः। अस्या अनित्यत्वमनुपदमेव (३७४) तमे पृष्ठे प्रतिपादितमिति। अनित्यत्वस्य फलं स्योन इत्युक्तमेव। वस्तुतस्तु परिभाषाया अनित्यत्वादेव कुमार्यै इत्यत्राटः पूर्वम-प्रवृत्तिः सिद्ध्यति। अतएवाङ्गसम्बन्धिन्याङ्ग एवैषा प्रवर्तते इति कल्पना त्याज्यैव। अतएव 'वारिणी' इत्यादौ वार्णात्पूर्वसवर्णात् प्रागाङ्गं श्यादेशकार्यं सिद्ध्यति। अन्यथा श्यादेशस्य 'नपुंसकाच्च' ७.१.१९ इति विहितस्याङ्गोद्देश्यककार्यत्वाभावाद् वार्णा-दाङ्गमिति परिभाषाया अप्रवृत्या पूर्वसवर्णदीर्घात् प्रागप्रवृत्तिरापद्येत। नपुंसकाच्चे-त्यस्य वैयर्थ्यं तु न शङ्क्यम् हलन्तशब्दादौङि 'पयसी' इत्यादौ चारितार्थ्यादिति शिवम्॥ ५६॥

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणेऽपीटः श्रवणापत्तिरिति चेद्—अत्र केचित्—

## अकृतव्यूहाः पाणिनीयाः ५७

न कृतो व्यूहो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। भाविनिमित्तविनाशे इत्यध्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भावितेऽन्तरङ्गं नेति यावत्॥

---

### अकृतव्यूहाः पाणिनीयाः ५७

'अकृतव्यूहाः पाणिनीयाः' इयं परिभाषा व्याडि-शाकटायन-जैनेन्द्र-पुरुषोत्तमदेव-सीरदेवनीलकण्ठहरिभास्करशेषाद्रिभास्करकृतपरिभाषा-संसूचनादिग्रन्थे व्याख्यातोपलभ्यते। भोजसूत्रे हैमपरिभाषा-पाठेऽप्यस्योल्लेखो न्यायस्य दृश्यते। अत्र परिभाषेन्दुशेखरे मतत्रयमुपलभ्यत एतत्परिभाषाविषयकम्। कैयटेन दीक्षितेन चोभाभ्यामपीयं परिभाषाऽङ्गीक्रियते; किन्तु ताभ्यामस्यास्तात्पर्यं व्याख्याभेदमाश्रित्य पृथक्पृथगङ्गीक्रियते। कैयटोऽनया निमित्तापाये नैमित्तिकस्याप्यपायो भवतीति स्वीकरोति। निमित्तस्य विनाशे जातस्य कार्यस्यापि निवृत्तिर्भवतीति कैयटाभिप्रायः। भट्टोजिदीक्षितस्तु निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यमेवानया बाध्यत इति मन्यते। नागेशस्तु भाष्येऽस्या दर्शनाभावं प्रमाणीकृत्यैनां न स्वीकरोति परिभाषा-प्रयोजनं

---

### अकृतव्यूहाः पाणिनीयाः ५७

'सेदिवान्' में जैसे इट् होता है, वैसे ही 'सेदुषः' में भी पूर्वोपस्थितिकत्व रूप अन्तरङ्गत्वात् इट् होना चाहिए, इसके बाद सम्प्रसारण करने पर भी 'इट्' का श्रवण रह जायगा, इट् न हो; इसके लिए दीक्षितादि कुछ वैयाकरण एक परिभाषा मानते हैं; वह है ''अकृत-व्यूहाः पाणिनीयाः,'। ''अकृत-व्यूहाः की व्युत्पत्ति इस प्रकार हैः—न कृतः व्यूहः विशिष्टऊहः निश्चयः शास्त्र-प्रवृत्तिविषयो यैः''। अर्थात् पाणिनीय व्याकरण के पढ़ने-पढ़ाने वाले विद्वान् वैयाकरण, निमित्त के भावी विनाश को ध्यान में रखकर व्यूह याने विशिष्ट ऊह अर्थात् शास्त्रप्रवृत्ति विषयकनिश्चय नहीं किया करते हैं। ''भाविनिमित्तविनाशे'' का यहाँ अध्याहार किया गया है। पूर्वोक्त अध्याहार नहीं करें और जितना शब्द है, उतना ही अर्थ करें, तो सारे शास्त्र वेकार हो जायेंगे; क्योंकि यह परिभाषा सारे शास्त्रों की प्रवृत्ति को रोक देगी। इसीलिए अध्याहार करना जरूरी है। इस तरह फलितार्थ यह निकला कि जहाँ बहिरङ्ग शास्त्रों के द्वारा अन्तरङ्ग शास्त्रों के निमित्त के विनाश की सम्भावना बाद में हो, वहाँ अन्तरङ्ग शास्त्र नहीं लगता। ''सेदुषः'' में संप्रसारण विधायक बहिरङ्ग शास्त्र के द्वारा अन्तरङ्ग शास्त्र इडागम-के निमित्त वलादित्व के विनाश की संभावना बाद में शस्विभक्ति आने तथा भसंज्ञा होने पर है; अतः अन्तरङ्ग कार्य इडागम नहीं हुआ।

अत्र च ज्ञापकं 'समर्थानां प्रथमात्' इति सूत्रे समर्थानामित्ति। तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्। अन्यथान्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव। तत्र हि भाविन्याऽऽदिवृद्ध्या सवर्णाच्त्वविनाशः स्पष्ट एव॥

---

चान्यथा साधयितुं यतते। एतत्सर्वमिहोच्यते।

ननु पूर्वोपस्थितनिमित्तकमन्तरङ्गमित्यस्य मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोतीति लौकिकन्यायमूलकस्य स्वीकारे 'सेदुष' इत्यादावपि 'सेदिवान्' सेदिवांसावित्यादाविव क्वसोरन्तरङ्गे टि ततः 'वसोः सम्प्रसारणम्' ६.४.१३१ इति सम्प्रसारणे कृतेऽपि तस्येटः श्रवणापत्तिरिति चेदत्र दीक्षितादयः 'अकृतव्यूहाः पाणिनीयाः इति परिभाषां स्वीकृत्य पाणिनीया अकृतव्यूहा भवन्ति भाविनिमित्तविनाशे न कृतः विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैस्तादृशा भवन्तीति' भावि निमित्तविनाशे इत्यध्याहारपुरस्सरं व्याख्याय बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्संभाविते पूर्वमन्तरङ्गं न प्रवर्तते इति तत्तात्पर्यमङ्गीकृत्य 'सेद्वस्' इत्यवस्थायां वलादित्वरूपं शीघ्रोपस्थितं निमित्तमादाय प्रवर्तमानेन वसोः सम्प्रसारणमिति बहिरङ्गेन वलादित्वलक्षणस्येटो निमित्तस्य विनाशसंभावनायां पूर्वमेव न प्रवर्त्य दोषाभावं सम्पादयन्ति। निमित्तं वलादिलक्षणं भाविसम्प्रसारेण विनाशोन्मुखं दृष्टवा पाणिनीया अत्रेट्कार्यं न कुर्वन्तीति दीक्षितेन सिद्धान्तकौमुद्यां सारतयोक्तमेव। भाविनिमित्तविनाशे इत्यध्याहारस्तु कर्तव्य एव; अन्यथा पाणिनीयाः शास्त्रप्रवृत्तिं न कुर्वन्तीत्यर्थस्यैव शब्दमर्यादालभ्यतया सर्वेषां शास्त्राणामनया निषेधात्सकलशास्त्रवैफल्यापत्तिरिति। अत्र च=परिभाषायां कृतसन्धिकार्याणामित्यर्थकं 'समर्थानां

---

'समर्थानां प्रथमाद्वा' ४.१.८२ सूत्र में कथित "समर्थानाम्" का अर्थ है कृतसन्धि-कार्याणाम्। इसलिए तद्धित प्रत्यय "सूत्थित" आदि शब्दों से दीर्घ आदि सन्धि करने पर होता है। सूत्थितादि शब्दों से दीर्घादिसन्धि करने के बाद ही प्रत्ययोत्पत्ति हो पहले नहीं, इसी-लिए "समर्थानाम्" कहा गया है। यदि यह नहीं कहा गया होता; तो संधि करने के पहले ही 'सु+उत्थित' शब्द से 'अत इञ्' ४.१.९५ से 'इ' प्रत्यय होकर आदि अच् को वृद्धि और आवादेश करने से 'साबुत्थिति' बन जाता। इष्ट तो है कि सौत्थितिः" बने। अतः "समर्थानाम्" कहना आवश्यक है। यदि 'अकृतव्यूह' परिभाषा न माने; तो 'सु+उत्थित' इस अवस्था में अन्तरङ्गत्वात् पहले दीर्घ होगा ही और फिर प्रत्यय की उत्पत्ति होगी। अतः "समर्थानाम्" का ग्रहण व्यर्थ हो जायगा। जब परिभाषा स्वीकार करते हैं; तब भावी आदिवृद्धि से सवर्णाच्त्व के विनाश की संभावना के कारण इस परिभाषा से अन्तरङ्ग कार्य (दीर्घ) पहले नहीं होगा, और चाहते हैं कि दीर्घ पहले हो; इसलिए विशेष यत्न करते हैं अर्थात् सूत्र में "समर्थानाम्" कहते हैं।

**न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्यैकादेशे, कृते आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम् । तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः ।।**

---

प्रथमाद्वा' ४.१.८२ इति सूत्रस्थं समर्थानामिति पदं ज्ञापकम् समर्थानामिति पदं कृतसन्धिकार्येभ्यः प्रत्ययोत्पत्यर्थं क्रियते । परिभाषाया अस्या अभावे तु प्राप्तिमत्त्वरूपाद् अन्तरङ्गत्वात् कृतदीर्घादिसन्धिकार्येभ्य एव सूत्थितादिभ्यः स्वयमेव इञादितद्धित-प्रत्ययोपपत्तिसिद्धौ व्यर्थं सत् समर्थग्रहणं परिभाषां ज्ञापयति । ज्ञापितयान्तु इञ्-प्रत्ययोत्पत्त्यनन्तरं भाविन्या 'तद्धितेष्वचामादेः'७.२ ११७ इत्यादचचो वृद्ध्या सवर्णाचो विनाशसंभावनायां पूर्वम् 'अकः सवर्णेदीर्घः' ६.१.१०१ इत्यस्याप्रवृत्त्या सन्धि-विरहितात् सु+उत्थित इत्यस्मात् तद्धितोत्पत्तिवारणाय सूत्रे समर्थानामित्यस्य ग्रहणं चरितार्थम् । मूले=सवर्णाच्त्वविनाश इत्यत्र 'चोः कुः' ८.२.३० इति कुत्वाभावस्तु 'अल्पाच्तरम् २.२.३४ इति सूत्रवद् बोध्यम् । असंदेहाय तथा प्रयोगः, कुत्वे कृते सवर्णाक्त्वविनाश इति प्रयोगेऽको विनाश इत्यर्थोऽपि प्रतीयेत । वस्तुतस्तु सवर्णपदं विहायाक्त्वविनाश इत्येव वक्तुमुचितम् आदिवृद्ध्या सुघटकोकारस्यैव विनाशसंभावना तस्य च विनाशः 'अक' एव विनाश इति ।

नचैकादेशप्रवृत्तिसमये सु+उत्थित इत्यवस्थायाम् आदिवृद्धिर्न प्राप्तास्ति, दीर्घैकादेशे कृते वृद्धेः प्राप्तावपि सवर्णदीर्घेणैव तन्निमित्तविनाशस्य कृतत्वाद् वृद्ध्या सवर्णदीर्घनिमित्तविनाशाभाव इति वाच्यम् तद्द्वारैव अर्थात् वृद्ध्येकादेशविनाशद्वारेणैव सवर्णदीर्घस्य निमित्तविनाशसत्वेनादोषात् । अयं भावः बहिरङ्गेणान्तरङ्गनिमित्त-विशिष्टविनाशेऽस्याः प्रवृत्ति र्भवतीति स्वीक्रियते । वैशिष्ट्यं च स्वप्रतियोगिकत्व-स्वस्थानिकादेशप्रतियोगिकत्वैतदन्यतरसम्बन्धेन । तत्र प्रथमसम्बन्धः 'सेदुषः' इत्यादौ वर्तते द्वितीयश्च सौत्थितिरित्यत्रेत्यदोषः । नन्वन्तरङ्गसवर्णदीर्घदृष्ट्या बहिरङ्गाया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाशः, न च जातस्य तत्कालप्राप्तस्य बहिरङ्गस्यैवा-सिद्धिर्बहिरङ्गपरिभाषया विधीयते, वृद्धेश्चात्र इञ्प्रत्ययोत्पत्त्यनन्तरं भविष्यति काले प्राप्तेर्दीर्घापेक्षयाऽसिद्धत्वं न प्राप्नोतीति वृद्धेरसिद्धत्वोक्तिरसंगतेति वाच्यम् अन्तरङ्ग-प्रवृत्तिसमये उपस्थितस्य बहिरङ्गस्यासिद्धत्वमनया बोध्यते, अनुपस्थितस्याप्यसिद्धत्वे मानाभावान्नानुपस्थितस्याप्यसिद्धिः शक्यते बोधयितुम् । बहिरङ्गस्योपस्थितिश्च द्विधा संभाव्यते—अन्तरङ्गप्रापकतया, अन्तरङ्गप्रतिबन्धकतया च । तेन रूपेण चोपस्थितिः

---

यहाँ एकादेश (दीर्घ) प्रवृत्ति के समय वृद्धि की प्राप्ति नहीं है, इसलिए दीर्घ एकादेश बेखटके हो जायगा, आदेश (दीर्घ आदेश) कर देने पर वृद्धि की प्राप्ति रहने पर भी सवर्णाच्त्व रूप दीर्घैकादेश के निमित्त के विनाश का अभाव ही दिखाई पड़ता है; अतः यह परिभाषा नहीं लगेगी, ऐसा नहीं कहना चाहिए; क्योंकि यहाँ एकादेश विनाश के द्वारा सवर्णाच्त्व का विनाश माना जायगा ।।

न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम् । समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ॥

यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति, तन्न । असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य चान्तरङ्गे कर्त्तव्ये

---

प्रायः जातस्य अथवा तत्कालप्राप्तस्य बहिरङ्गस्यैव संभवति तत्फलितार्थपरकतयै-वोच्यते "जातस्य समकालप्राप्तस्य वा बहिरङ्गस्यासिद्धत्वं भवतीति, सौत्थितिशब्दे सु+उत्थित इत्यवस्थायां सवर्णदीर्घप्रवृत्तिप्रतिबन्धकाकृतव्यूहपरिभाषाप्रवृत्तिकारणी-भूतत्वाद वृद्धेः परिभाषाद्वारेण दीर्घप्रवृत्तिसमयेऽतत्प्रवृत्तिप्रतिबन्धकतयोपस्थिति-रस्त्येवेति तथोक्तेः सुवचत्वात् । अथ च अकृतव्यूहपरिभाषा "बहिरङ्गशास्त्रेण तव निमित्तविनाशः करिष्यतेऽतस्त्वया न प्रवर्तितव्यमित्यन्तरङ्गशास्त्रं निवेद्य तत्तत्र प्रवृत्तेर्विरमयतीत्यन्तरङ्गशास्त्रमेवास्या लिङ्गम्, लिङ्गस्य च यानि निमित्तानि तान्येव परिभाषाया निमित्तानि । अतोऽत्र अन्तरङ्गस्य सवर्णदीर्घस्य यौ द्वावुकारौ निमित्तम् तावेव अकृतव्यूहपरिभाषाया इति साप्यन्तरङ्गा, वृद्धेस्तु उत्तरकालसंप्रत्य-यात् पश्चादुपस्थित्या बहिरङ्गत्वम् एवञ्चान्तरङ्गायाम् अकृतव्यूहपरिभाषायां प्रवर्तयितव्यायां बहिरङ्गाया वृद्धेरसिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात्परिभाषा-दृष्ट्या वृद्धिशास्त्राभावात् वृद्धिकृतनिमित्तविनाशादर्शनादकृतव्यूहपरिभाषा नैवात्र प्रवर्तत इति चेन्न यावता विनानुपपत्तिस्तावत्सर्वं ज्ञापयतीति नियमेन समर्थग्रहणेन एतदकृतव्यूहपरिभाषाविषयेऽन्तरङ्गपरिभाषाया अप्रवृत्तेरपि ज्ञापनात् ।

यत्तु 'समर्थानां प्रथमाद्वा' ४.१.८२ इति सूत्रस्थसमर्थग्रहणेनान्तरङ्गपरि-भाषाया अनित्यत्वमेव ज्ञाप्यते नतु पूर्वोक्ताऽकृतव्यूहपरिभाषा । तथा च सु+उत्थित

---

"सौत्थिति" में वृद्धि की बहिरङ्गतया असिद्धता हो जायगी, इसलिए "अकः सवर्णे" ६.१.१०१ की दृष्टि में यहाँ उसके निमित्त का विनाश नहीं दिखाई देगा; ऐसा भी नहीं कहना चाहिए, "समर्थानाम्" के ग्रहण ने यह भी ज्ञापन किया है कि उसके विषय में अन्तरङ्ग परिभाषा की सर्वथा प्रवृत्ति न हो।

किसी ने कहा कि 'समर्थ'-ग्रहण से अन्तरङ्ग परिभाषा की अनित्यता ही ज्ञापित होती है, 'अकृत-व्यूह' परिभाषा नहीं, यह ठीक नहीं है, अन्तरङ्ग परिभाषा की अनित्यता मान लेने से वह कार्य नहीं हो पायेगा, जो 'अकृत-व्यूह' परिभाषा मानने से होता है । क्योंकि असिद्ध परिभाषा समकाल प्राप्त बहिरङ्ग की अन्तरङ्ग कार्य कर्त्तव्य में असिद्धता करती है । या पहले किये गये बहिरङ्ग-कार्य की अन्तरङ्ग-कार्य कर्त्तव्य में असिद्धता करती है वह अन्तरङ्ग कार्य हो जाने पर अर्थात् जात अन्तरङ्ग की बहिरङ्ग कर्त्तव्य में असिद्धता नहीं करती है । इसलिए 'सुत्थितादि' शब्द, अन्तरङ्ग परिभाषा का विषय नहीं है; क्योंकि यहाँ अन्तरङ्ग कर्त्तव्य नहीं है । अन्त०

ऽसिद्धत्वं बोध्यते। न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात् फलाभावाच्च। एवं च सूत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासम्भवात्॥

अन्तरङ्गानपि विधीनित्यादेरप्यस्यामेवान्तर्भावः॥

---

इत्यवस्थायामन्तरङ्गपरिभाषाया अनित्यत्वादप्रवृत्त्या पूर्वसवर्णदीर्घप्रवृत्तेरकृतसन्धेः सु+उत्थित इत्यस्मात् प्राप्तस्य तद्धितस्य वारणाय कृतसन्ध्यर्थकं समर्थग्रहणं स्वांशे चरितार्थमिति तन्न असिद्धपरिभाषया समकालप्राप्तस्य पूर्वं जातस्य च बहिरङ्गस्यान्तरङ्गे कर्तव्येऽसिद्धत्वं बोध्यते नतु जातेऽन्तरङ्गे बहिरङ्गस्यासिद्धत्वं बोध्यते मानाभावात् फलाभावाच्च। एवञ्च सु+उत्थित इति स्थितौ वृद्धेर्निमित्ताभावात् प्रवृत्त्यभावेन दीर्घस्य च निमित्तसद्भावात्प्रवृत्त्यान्तरङ्गपरिभाषासहकारमनपेक्ष्यैव दीर्घप्रवृत्तेःकृतसन्धिविधेरेव प्रत्ययोत्पत्तिसंभवात् समर्थग्रहणस्य चारितार्थ्याभावेनान्तरङ्गपरिभाषाया अनित्यत्वज्ञापनासंभवात्। दीर्घप्रवृत्तिर्नात्रान्तरङ्गपरिभाषाप्रवृत्ति-

---

रङ्ग दीर्घ यहाँ हो चुका है और बहिरङ्ग (वृद्धि) पीछे प्राप्त है। जात अन्तरङ्ग की असिद्धता मानने में न कोई प्रमाण है और न फल। इस तरह 'सूत्थित' आदि प्रयोग में 'सु+उत्थित' इस स्थिति में वृद्धि की प्राप्ति तो है ही नहीं, इसलिए दीर्घ की प्रवृत्ति हो जायगी। अन्तरङ्ग परिभाषा के बिना ही बेखटके दीर्घ की प्रवृत्ति होने से सन्धि कार्य करने पर ही प्रत्ययोत्पत्ति होगी। इस तरह समर्थग्रहण चरितार्थ नहीं होकर भी अन्तरङ्ग परिभाषा की अनित्यता का ज्ञापन नहीं कर सकता। यहाँ दीर्घ की प्रवृत्ति अन्तरङ्ग परिभाषा की आधीन नहीं है; जिससे कि परिभाषा की अनित्यता का ज्ञापन करके, स्वयं अप्राप्त दीर्घ की प्रवृत्ति के लिए समर्थ ग्रहण चरितार्थ हो सके।

"अन्तरङ्गानपि विधीन्" (परि० ५३) इत्यादि परिभाषाओं का इसी परिभाषा में अन्तर्भाव हो जायगा। 'गोमत्प्रियः' में 'गोमत्सु प्रिय सु' इस अवस्था में हल्ङ्यादिलोप के निमित्त सु का [कारण मात्र को यहाँ निमित्त माना जाता है] समास प्रयुक्त लुक् के द्वारा विनाश होने की संभावना है। इसलिए इसी परिभाषा के द्वारा पहले प्राप्त अन्तरङ्ग 'हल्ङ्यादि लोप' नहीं होगा। इस तरह "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" का कार्य अकृत-व्यूह परिभाषा से ही हो गया। प्रजग्ध्य में 'जग्ध' आदेश के निमित्त तादि कित्त्व का ल्यप् के द्वारा विनाश होने की संभावना है। इसलिए पहले जग्धादेश नहीं किया जा सकता। अतः ल्यप् के होने पर ल्यप् के परे रहते जग्धादेश करने के लिए 'अदो जग्धि':—२.४.३६ सूत्र में ल्यप् ग्रहण करना आवश्यक है। इस तरह "अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते" (प० ५५) इस परिभाषा का कार्य भी इसी परिभाषा से निकल जाने के कारण उसका भी अन्तर्भाव इसी परिभाषा में हो जाता है।

**एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम् । अत एव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न । अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्यभावादप्राप्त्या लोपस्यैवापत्तेः । अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति सम्भावना ॥**

---

मपेक्षते; तस्य प्रवृत्तौ नास्ति तत्काले कापि बाधा, यस्या निराकरणाय सवर्णदीर्घस्यान्तरङ्गपरिभाषाया अपेक्षा भवेत् । यदि सवर्णदीर्घप्रवृतौ परिभाषाप्रवृत्तिरपेक्ष्येत दीर्घप्रवृत्तिः परिभाषाधीना भवेत्तदैव तस्या अनित्यत्वज्ञापनेन सवर्णदीर्घाप्रवृत्तौ अप्राप्यस्य तस्य प्रवृत्तये समर्थग्रहणं स्वांशे चरितार्थं स्यात् तत्त्वत्र नास्तीति । तदुक्तं मूले **सुस्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन—ज्ञापनासम्भवादित्यनेन वाक्येन ।**

नचैषा परिभाषा यद्यस्ति तर्ह्यनयैव गोमान् प्रियो यस्येति लौकिकविग्रहे 'गोमत् सु प्रियसु' इत्यलौकिकविग्रहे गोमत्सु इत्यत्र हल्ङ्यादिलोपस्य निमित्तं सुः, (निमित्तपदेन कारणमात्रस्येह ग्रहणात्,) तस्य च समासोत्तरं 'सुपोधातुप्रातिपदिकयोः २.४.७१ इति लुका विनाशस्य भावित्वेन पूर्वमनया निषेधात् हल्ङ्यादिलोपाप्राप्त्या अन्तरङ्गानपि विधीन् (पं० ५३) इति परिभाषा व्यर्था, एवंप्रजग्ध्येत्यत्र जग्धादेशनिमित्तस्य तादिकित्त्वस्य क्त्वोऽल्यबादेशेन विनाशस्य भावितया तादिकित्त्वलक्षणस्य जग्धादेशस्यान्तरङ्गस्यापि ल्यबादेशात्पूर्वमनया निषेधादप्राप्त्या ल्यपि परे जग्धादेशविधानाय ल्यब्ग्रहणस्य चारितार्थ्येन 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' (प० ५५) इत्यत्र ज्ञापकत्वाभाव इति वाच्यम् अन्तरङ्गानपि विधीन् इत्यादेरस्या-

---

'अकृत व्यूह' परिभाषा की प्रवृत्ति में निमित्त के विनाश की संभावना भी निमित्त है । अर्थात् यदि अन्तरंग शास्त्र की प्रवृत्ति पहले न होती;तो बहिरङ्ग शास्त्र के द्वारा अन्तरंग के निमित्त का विनाश हो जाता । इस प्रकार की संभावना भी इस परिभाषा की प्रवृत्ति में निमित्त है । संभावना को निमित्त स्वीकार किया गया, इसलिए ''गोमद्दण्डी'' में हल्ङ्यादि लोप नहीं हुआ । पूर्वनिर्दिष्ट संभावना को अगर निमित्त नहीं मानते, और वस्तुतः भावी निमित्त विनाश को ही अगर परिभाषा की प्रवृत्ति में निमित्त मानते तो 'गोमत् सु और दण्डिन्सु'इस स्थिति में समास के पहले प्राप्त हल्ङ्यादिलोप काल में सामासिक लुक् की प्राप्ति नहीं होने के कारण लुक् न होकर हल्ङ्यादि लोप हो जाता, हल्ङ्यादि लोप होने पर सुविभक्ति के अभाव में अपहार्य (लुक् योग्य विभक्ति) के अभाव के कारण ही लुक् की अप्राप्ति होने से लोप ही हो जाता । अकृतव्यूहपरिभाषा तो लगती नहीं; क्योंकि यहां निमित्त विनाश भावी नहीं है । पूर्वनिर्दिष्ट संभावना को निमित्त मानने पर तो परिभाषा की प्रवृत्ति हो गयी; क्योंकि यहाँ ऐसी संभावना है ही कि यदि लोप न होता तो लुक् होता ।

'अल्लोपो'ऽन' इति सूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम् । तद्ध्यान इत्यादौ लोपवारणाय । अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यम् स्पष्टमेवेत्याहुः ॥

---

मेवान्तर्भावस्वीकारेणादोषात् । एतस्या अकृतव्यूहपरिभाषायाः अवृत्तौ च निमित्तविनाशसंभावनापि अर्थाद् यद्यन्तरङ्गशास्त्रं प्रथमं न प्रवर्तेत तदा बहिरङ्गशास्त्रेणान्तरङ्गनिमित्तविनाशः स्यादिति संभावनाऽपि निमित्तम् । यदि निमित्तविनाशस्य संभावनापि निमित्तं तर्हि निमित्तविनाशस्य तु सुतरां निमित्तत्वं सिद्ध्यति । निमित्तविनाशसंभावनाया निमित्तत्वे प्रमाणं तु समर्थानामित्यस्य ग्रहणमेव । अन्यथा परिभाषायां ज्ञापितायामपि साक्षान्निमित्तविनाशस्थले 'सेदुष' इत्यादौ अस्याश्चारितार्थ्यसंभवेन सौत्थितिरित्यादिस्थलेऽस्या अप्रवृत्तिरेवेति स्वांशे चारितार्थ्याभाव एव स्यात् । एतत्प्रवृत्तौ निमित्तविनाशसंभावनाया निमित्तत्वस्वीकारादेव गोमाँश्चासौ दण्डीतिविग्रहे कर्मधारयसमासे गोमद्दण्डीत्यादौ गोमत्सु दण्डिन् सु इत्यत्र हल्ङ्याब्भ्य इति सुलोपो न । निमित्तविनाशसंभावनाया निमित्तत्वास्वीकारे तु हल्ङ्यादिलोपप्राप्तिकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं (सुलोपोत्तरं) चापहार्यस्य सोरभावेन लुकोऽप्राप्त्या निमित्तविनाशस्य भावित्वाभावेन प्रकृतपरिभाषाया अप्राप्त्या लोपस्यैवापत्तेः । संभावनाया अपि निमित्तत्वे तु अत्रापि गोमद्दण्डीत्यादावपि यदि हल्ङ्यादिलोपो न स्यात्तदा सुपोधात्विति लुक्स्यादिति संभावनायाः सत्वात्परिभाषायाः प्रवृत्या हल्ङ्यादिलोपो न जायते समासादेः पूर्वमिति ।

---

संभावना को निमित्त मानने पर "अल्लोपोऽनः" में अत् में ह्रस्व अकार मात्र के ग्रहण के उद्देश्य से किया गया तपर करण व्यर्थ नहीं होगा, वह परिभाषा के अनित्यत्व के ज्ञापन के लिए चरितार्थ हो जायगा । वहाँ तपर करण इसलिए करते हैं कि "आनः" में लोप न हो । "आनः" यहरूप अन् धातु से 'क्विप्' प्रत्यय करने पर क्विप् के परे रहते "अनुनासिकस्य क्विझलोः क्ङिति" ६-४-१५ से दीर्घ करके 'आंन्' बनाकर उसे प्रातिपदिक संज्ञा करके 'शस्' विभक्ति में बनता है । तपरकरण के अभाव में 'आन्+अस्' इस स्थिति में 'आ' का लोप हो जाएगा । परन्तु इस परिभाषा की प्रवृत्ति जब पूर्वनिर्दिष्ट संभावना में मानते हैं, तो यहाँ भी यह संभावना है कि यदि दीर्घ न होता, तो लोप होता । इस संभावना के कारण यहाँ दीर्घ नहीं होगा, फिर तो लोप होगा ही । ऐसी स्थिति में तपरकरण का व्यावर्त्य (प्रत्युदाहरण) 'आन' हो नहीं सकता । अतः व्यर्थ होकर तपरकरण इस परिभाषा की अनित्यता ज्ञापित करता है । परिभाषा को अनित्य न मानें तो तपरकरण व्यर्थ हो जायगा । "अकृतव्यूहाः" का पूर्वोक्त विश्लेषण भट्टोजिदीक्षित आदि विद्वानों के अनुसार है ।

**'समर्थानामि'ति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते-अकृतव्यूहाः पाणिनीया इति। तेन पपुष इत्यादावन्तरङ्गत्वात् पूर्वम् कृतोपीडागमो निवर्तत इति वदन् न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति। निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत्। सूत्थितादिञि वृद्धौ दीर्घ-निवृत्तौ सावुत्थितिर्माभूदिति समर्थानामिति ॥**

---

ननु संभावनाया निमित्तत्वे 'अल्लोपोऽनः' ६.४.१३४ इत्यत्र तपरकरणं व्यर्थमिति चेत्तदाह—**अल्लोपोन इतिसूत्रस्थतपरकरणं तु** परिभाषाया अनित्यत्वज्ञापनेन चरितार्थम्। तद्धि तपरकरणम् अन् प्राणने इत्यस्माद् धातोः क्विपि 'अनुनासिकस्य क्विझलोः क्ङिति ६.४.१५ इत्युपधादीर्घे 'आन्' इत्यस्य कृत्तद्धितसमासाश्चेति प्रातिपदिकत्वे शसि भत्वे आकारस्य लोपवारणाय क्रियते। किन्तु-अकृतव्यूहपरिभाषयात्र लोपेनाकारविनाशसंभावनात्वेन अर्थात् यद्यत्र दीर्घो न स्यात्तदा लोपः स्यादिति दीर्घनिमित्तविनाशसंभावनायाः सत्वेन दीर्घाप्राप्त्या सत्यपि तपरकरणे लोपप्राप्तेर्दुर्वारत्वेन तपरकरणं व्यर्थमेव स्यात्। अतः तपरकरणं व्यर्थं सत् परिभाषाया अनित्यत्वं ज्ञापयति। ज्ञापिते त्वनित्यत्वे अस्या अप्रवृत्या आन्+अस् इत्यत्र

---

"समर्थानाम्" ४-१-८२ सूत्र के भाष्य की अपनी टीका (प्रदीप) में कैयट ने कहा कि समर्थ कथन के द्वारा 'अकृतव्यूहाः पाणिनीयाः' यह परिभाषा ज्ञापित होती है। इसलिए 'पपुषः' में अन्तरङ्गत्वात् पहले जो इडागम किया गया था; उसकी भी निवृत्ति हो जाती है। पा धातु से "लिटः कानज् वा' ३-२-१०६ 'क्वसुश्च' ३-२-१०७ से क्वसु प्रत्यय, 'लिटिधातोः" ६-३-८ से द्वित्व, अभ्यास-संज्ञा, अभ्यास को ह्रस्व करने पर 'पपा+वस्' बना, अब "वस्वेकाजाद्घसाम्" ७,२-६७ से इट्, आलोप, 'पपिवस्' से शस् विभक्ति में भसंज्ञा के बाद "वसोः सम्प्रसारणम्" ६-४-१३१ से सम्प्रसारण और 'सम्प्रसारणाच्च' ६-२-१०८ से पूर्व-रूप हुआ। कैयट के अनुसार पहले किए गये इडागम की इस परिभाषा से निवृत्ति हो गयी, फिर आलोप, षत्व और रुत्वादि कार्य होने पर 'पपुषः' बना। किये गये कार्य की निवृत्ति इस परिभाषा से हो, इसके लिए कैयट ने परिभाषा की नयी व्याख्या की। उसने कहा न कृतः व्यूहः विशिष्टस्तर्कः निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैः ते अकृतव्यूहाः। अर्थात् पाणिनीय व्याकरण के छात्र और विद्वान् निमित्त कारण के विनाश होने पर उस कारण को लेकर किये गये कार्यों की स्थिति-रूप, विशेष तर्क मानने वाले नहीं होते हैं। अर्थात् वे निमित्त कारण के विनाश हो जाने पर उस कारण को लेकर हुए कार्यों की स्थिति नहीं मानते हैं। सारांश यह है कि निमित्त के अपाय (विश्लेष, नाश) होने पर नैमित्तिक (तन्निमित्तक) कार्यों का भी अपाय हो जाता है। 'सूत्थित' शब्द से इञ्प्रत्यय करने पर वृद्धि करते समय इस परिभाषा के बल से दीर्घ की निवृत्ति होकर कहीं "सावुत्थितिः" नहीं

दीर्घेजाते लोपापत्तिवारणाय तपरकरणं चरितार्थं स्वांशे । अनित्यत्वफलन्तु भवकन्त-मतिक्रान्तोऽतिभवकानित्यत्राकचः श्रवणम् । यदीयमनित्या न स्यात्तर्हि सर्वनामत्वस्य यन्निमित्तमनुपसर्जनत्वं तस्य भविष्यता समासेन विनाशसंभावनायामनया परिभाषया भवकन्तमतिक्रान्तमित्यत्र भवकत् अम् अति इत्यत्र स्थितौ सर्वनामत्वनिषेधादकचो-ऽप्रवृत्या तस्य श्रवणं न स्यात् । अनित्यत्वे तु एतस्या अप्रवृत्या पूर्वं समासत्वेऽकचि तस्योपसर्जनत्वेऽपि श्रुतिः सिद्ध्यति । इत्थमत्र भट्टोजिदीक्षितादिमतमुपन्यस्तम् ।

अथ कैयटमतमाह—समर्थानामिति सूत्रे कैयटस्तु इत्यादिना मानाभाव इति तदाशय इति बोध्यमित्यन्तेन ग्रन्थेन ।। कैयटस्तु समर्थानामिति सूत्रे समर्थवचनेन इयं परिभाषा ज्ञाप्यते । तस्य वैयर्थ्यप्रतिपादनज्ञापनरीत्यां न कश्चन विशेषः सर्वं पूर्वमतवदेव । किन्तु परिभाषाया अर्थोभिन्नः । परिभाषयाऽनया 'पपुष' इत्यादौ कृतोऽहि 'वस्वेकाजाद्घसाम् ७.२.७६ इतीडागमो निवर्तते । अतएव 'पपिवान्' 'पपि-वांसा' वित्यादाविव स नात्र श्रूयते. जातस्य कार्यस्य निवृत्तिः कथमनया सिद्ध्यतीति चेदुच्यते सोऽस्या व्याख्याविशेषो येन कृतमपि कार्यमनया निवर्तत इति । इत्थमस्ति स व्याख्याविशेषः—न कृतो विशिष्टः ऊहस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थिति-रूपो यैस्ते पाणिनीया इत्यक्षरलभ्यार्थः । अत्र 'निमित्तकारणविनाशेऽपि'' इतिना-ध्याहृतं पदं पूर्वव्याख्यायां भाविनिमित्तविनाशे इतिवत् । किन्तु तर्कविशेषार्थकव्यूह-शब्दतात्पर्यलभ्य : तादृशव्यूहशब्दप्रसादादेव निमित्तकारणविनाशेऽपि कार्यस्थिति-रूपोऽर्थः लभ्यते इत्यध्याहाराद्यकरणजन्यलाघवम् । तेन निमित्तापाये नैमित्तिकस्या-प्यपाय इति फलितार्थः सिद्ध्यति । सूत्थितशब्दादिज्ञि वृद्धौ वृद्ध्या सवर्णदीर्घस्य निमित्तापाये जातस्य सवर्णदीर्घस्य नैमित्तिकस्यापि (कार्यस्यापि) परिभाषयानया निवृत्तौ सावुत्थितिरिति प्रयोगापत्तिवारणाय समर्थग्रहणम् परिभाषाज्ञापनानन्तरं स्वांशे चरितार्थम् । 'पपुष' इत्यादौ वलादित्वस्य निमित्तस्य 'वसोः सम्प्रसारणम्' ६.४.१३१ इति संप्रसारेण विनाशे 'पपिउस् अस् इतिस्थिते पूर्वं जातस्य नैमित्ति-कस्येटो निवृत्तिर्भवत्यनया परिभाषया; किन्तु सूत्थितात् कृतदीर्घसन्धेरिजि दीर्घरूपा-देशस्य वृद्ध्यां कृतायामपि, न तया वृद्ध्या सवर्णदीर्घनिमित्तविनाशः, दीर्घेणैव स्व-निमित्तयोर्ह्स्वयोरुकारयोः विनाशस्य कृतत्वात् । अथ च दीर्घस्य सवर्णह्रस्वोकार-द्वयजातत्वान्नैमित्तिकस्य वृद्ध्यैव विनाशात्परिभाषया वृद्धिविनष्टनैमित्तिकदीर्घ-विनाशस्याशक्यत्वात्सौवत्थिति नैव कथमप्यापद्यते, अपि च दीर्घविनाशेऽपि दीर्घेण हतस्य उकारद्वयस्यपुनरुज्जीवनं तथैव न संभाव्यते; यथा देवदत्ते हते तद्धन्तुर्हननेऽपि देवदत्तस्य पुनरुज्जीवनं न भवतीत्यर्थकेन 'हते देवदत्ते तद्धन्तरि हतेऽपि न देवदत्तस्य पुनरुज्जीवन'मिति प्रसिद्धेन' देवदत्तहन्तृहतन्यायेन पुनरुकारद्वयस्यागमनासंभवात् सावुत्थितिर्माभूदित्यत्र उकारश्रवणापत्तिदर्शनमसंगतमिति न वाच्यम् अस्या निमित्तापाये तत्प्रयुक्तकार्यविशिष्टः तत्कार्यरहितस्वरूपं प्राप्नोतीत्यर्थकरणंनादोषात् ।

**लोकन्यायसिद्धश्चायमर्थः। तथाहि लोके निमित्तं द्विविधं दृष्टम्-कार्यस्थिति-नियामकं तदनियामकं च। आद्यं यथा न्यायनये अपेक्षाबुद्धिस्तन्नाशे द्वित्वनाशाभ्युपगमात्। वेदान्तनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव। द्वितीयं यथा**

---

अत्र सवर्णदीर्घनिमित्तस्य वृद्ध्या विनाशे तन्निमित्तप्रयुक्तदीर्घकार्यविशिष्टः सूत्थितशब्दः तत्कार्यरहितं सौ+उत्थितिरितिस्वरूपं प्राप्नोतीति आवादेशे सावुत्थितिरित्यापादनस्य सुस्थत्वात्। तथाच समर्थग्रहणं कृतसन्धिकार्यादेव प्रत्ययोत्पत्तिरिति बोधनेन निमित्तापाय इत्यस्याप्रवृत्तिमिह बोधयति। तेन च सोत्थितिरित्यस्य सिद्धिः। यद्यपि भाविनिमित्तविनाशे नैमित्तिकस्यानुत्पत्तिरिति दीक्षितमतस्य निमित्तविनाशे सति जातस्य नैमित्तिकस्यापाय इति कैयटमतस्य चोभयोरपि ज्ञापकसिद्धत्वमस्ति तथापि कैयटमतस्य लौकिकन्यायसिद्धत्वमपीति वर्तते किमपि महत्वं तदाह—**लोकन्यायेत्यादिना तथाहि**—लोके निमित्तं द्विविधं दृष्टम् (१) कार्यस्थितिनियामकम् (२) तदनियामकञ्च। यस्य स्थितिपर्यन्तमेव कार्यं तिष्ठति तन्निमित्तं तत्कार्यस्थितिनियामकमुच्यते। कार्यस्थितिनियामकनिमित्तं यावत्तिष्ठति तावदेव कार्यं तिष्ठतीत्यर्थः। यथा यावत्पर्यन्तं तन्तुसंयोगः कारणं तिष्ठति; तावत्पर्यन्तमेव पटस्तिष्ठतीति तन्तुसंयोगः कार्यस्थितिनियामकं निमित्तं स्वीक्रियते, न्यायनये अपेक्षाबुद्धिः अयमेकः अयमेक इत्येवंरूपा कार्यस्थितिनियामकं निमित्तम्। तन्नये प्रथममयमेकः अयमेकः इत्याकाराऽपेक्षा बुद्धिर्जायते ततोद्वित्वसंख्योत्पत्तिः ततोपेक्षाबुद्धिनाशस्ततश्च द्वित्वनाश इति क्रमेऽपेक्षाबुद्धिरूपं निमित्तं कार्यस्थितिनियामकं यावत्पर्यन्तमपेक्षाबुद्धिस्तिष्ठति तावत्पर्यन्तमेव द्वित्वरूपकार्यस्य स्थितिरित्युक्तेः।

---

बन जाय; इसलिए "समर्थानाम्" यह कहा गया है। यह (कैयट की व्याख्या के अनुसार लभ्य) अर्थ लौकिक न्यायसिद्ध भी है। लोक में दो प्रकार के निमित्त देखे गये हैं। प्रथम वे निमित्त हैं, जिनके विनाश से उनसे उत्पन्न कार्य का भी विनाश हो जाता हैं। जैसे न्यायशास्त्र के अनुसार (नैयायिकों के मत में) अपेक्षा बुद्धि के नाश में द्वित्व का नाश माना गया है। न्यायशास्त्र यह मानता है कि यह एक है और यह एक है इस प्रकार की अपेक्षा पहले उत्पन्न होती है और फिर द्वित्व संख्या की उत्पत्ति होती है। अपेक्षा बुद्धि का नाश हो जाता है, तो द्वित्व का भी नाश हो जाता है। इस तरह न्यायशास्त्र के सिद्धान्त में अपेक्षा बुद्धिरूप निमित्त के नाश से नैमित्तिक द्वित्व का नाश देखा गया है। वेदान्त के सिद्धान्त के अनुसार जब तक प्रारब्ध कर्मरूप निमित्त है; तब तक संसार है और प्रारब्ध कर्म के नाश होने पर संसार का नाश हो जाता है। तात्पर्य यह है कि वेदान्त के अनुसार कर्म दो प्रकार के होते हैं+सञ्चित और प्रारब्ध। जो कर्म फल प्रदानोन्मुख न हो उसे प्रारब्ध कर्म कहते हैं ' संचित कर्म का ब्रह्म साक्षात्कार से नाश माना जाता है।

दण्डादि । तन्नाशेऽपि घटनाशादर्शनात् । । शास्त्रे लक्ष्यानुरोधाद्व्यवस्था । भावि-

---

तथा वेदान्तशास्त्रे वर्णितं प्रारब्धकर्म विक्षेपस्य संसारस्थिते र्नियामकं यतः यावत्पर्यन्तं प्रारब्धकर्म तिष्ठति तावत्पर्यन्तं संसारस्तिष्ठति तस्योपभोगेन विनाशे जाते तज्जन्यः संसारोऽपि नश्यति । इत्थं तदपि कार्यस्थितिनियामकं निमित्तम् द्वितीयमर्थात् तदनियामकं निमित्तं तद्भवति यस्य विनाशेऽपि कार्यस्थितिर्दृश्यते यथातन्तुवायः । तस्मिन् दिवंगतेऽपि तेन निर्मितस्य पटस्य स्थितिर्दृश्यते । दण्डादिकं निमित्तमपि कार्यस्थित्य-नियामकमेव । दण्डस्य विनाशेऽपि तज्जन्यस्य घटकार्यस्य स्थितिदर्शदात् । लोके शास्त्रे च द्विविधा अपि दृष्टान्ता दृश्यन्ते । अत्र च व्याकरणशास्त्रे यथा लक्ष्यं सिद्ध्येदनिष्टापत्तिश्च न भवेत्तथा व्यवस्थाऽङ्गीकार्या । तया व्यवस्थया लक्ष्यानुरोधात् क्वचित् हरिर्गच्छतीत्यादौ गच्छतीत्यनेन संहितायां

---

क्योंकि श्रुति कहती है कि क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । उस परावर (परब्रह्म) को देखने पर इसके (आत्मा के) कर्म क्षीण हो जाते हैं। प्रारब्ध कर्म का नाश तो भोग से ही होता है। जैसा कि कहा गया है करोड़ों सौ कल्पों में भी कर्म का बिना भोग किये क्षय नहीं होता । जब तक प्रारब्ध कर्म है; तब तक भोगात्मक संसार है, विक्षेप है। इस तरह हम देखते हैं कि न्याय और वेदान्त दोनों के सिद्धान्तों के अनुसार किये गये प्रतिपादनों में निमित्त को कार्यस्थिति का नियामक बताया गया है ।

**विशेष**=यद्यपि कर्म के तीन भेद वेदान्त में प्रतिपादित हैं :— (१) सञ्चित (२) क्रियमाण और (३) प्रारब्ध तथापि विजयाकार ने कर्म के जो दो ही भेद बताये हैं उसका कारण यह है कि कुछ कर्म ज्ञान से नष्ट हो जाते हैं और कुछ कर्म भोग से नष्ट होते हैं । इस तरह कर्म के ज्ञाननाश्यत्व और कर्मनाश्यत्व को देखकर विजयाकार ने कर्म के दो भेद लिखे हैं।

लोक में भी हम देखते हैं—कुछ निमित्त ऐसे हैं, जिनके नाश से उनके कारण बने हुए कार्यों का नाश नहीं होता । ऐसे निमित्त, कार्यस्थित्यनियामक निमित्त कहलाते हैं । जैसे दण्ड, कुम्हार आदि । दण्ड के नाश तथा कुम्भकार की मृत्यु हो जाने पर भी उसके द्वारा निर्मित घट का नाश नहीं देखा गया है ।

तन्तु (सूत) के फटने से कपड़ा फटा माना जाता है । इसलिए सूत को कार्य-स्थितिनियामक निमित्तमाना गया है । शास्त्र में लक्ष्य के अनुसार व्यवस्था होगी । कहीं निमित्त के विनाश होने पर नैमित्तिक का विनाश मान लिया जायगा । जैसेः— 'पपुषः' में संप्रसारण होने पर इट् का और ष्ठा में ष को 'स' होने पर ठ का । कहीं नहीं भी माना जायगा जैसेः—स्रंस् आदि धातु के क्विबन्त रूप 'स्रत्' इत्यादि में वलोप होने पर नलोप का विनाश नहीं हुआ । नकार लौट कर नहीं आया ।

**निमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चित् न्यायो नापि संप्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम् ॥**

---

जातायां विसर्गनिमित्तस्यावसानत्वस्य विनाशे 'खरवसानयोर्विर्जनीयः' ८.३.१५ इति विसर्गो न तिष्ठतीति अवसानत्वादेः कार्यस्थितिनियामकनिमित्तत्वं स्वीक्रियते। क्वचिच्च 'अतिभवकान्' इत्यादौ निमित्तनाशेऽपि कार्यस्थितिदर्शनादुपसर्जनत्वस्य कार्यस्थित्यनियामकनिमित्तत्वमित्यङ्गीक्रियते। अतएवात्र समासादनन्तरमनुपसर्जनत्वस्य सर्वनामसंज्ञानिमित्तस्य विनाशेऽपि न तन्निमित्तजन्यस्याकचो निवृत्तिरिति। लक्ष्यानुरोधस्य च तादृशव्यवस्थाभेदकारणत्वस्वीकारान्न दोषसंभवः। कार्यस्थितिनियामकनिमित्तस्य लोकशास्त्रसंमतत्वान्निमित्तापाये नैमित्तिकस्याप्यपाय इति कैयटमतस्य पूर्वमतापेक्षया किञ्चित् प्राशस्त्यमस्तीति विवक्षुर्लिखति नागेशः—निमित्तविनाशे भाविनि पूर्वमेव तन्निमित्तककार्यस्यानुत्पत्तिरिति भट्टोजिदीक्षितव्याख्यायां न कश्चिन्न्यायोऽस्ति न वा सम्प्रतिपन्नः (लोकसम्मतः) कोऽपि दृष्टान्तो वर्तते यथा किल कैयटमतेऽपेक्षाबुद्धिनाशाद्द्वित्वनाश इति न्यायो दर्शनसिद्धः, प्रारब्धकर्मभोगावधिः संसार इति वेदान्तदर्शनसिद्धश्च कार्यस्थितिनियामकनिमित्ततप्रतिपादको वर्तते यथा च तन्तुसंयोगरूपकारणनाशाल्लोके पटरूपकार्यस्थितेरभावो दृश्यते इति वर्तते

---

इस तरह "अकृतव्यूहाः पाणिनीयाः" का अर्थ निमित्त के अपाय में नैमित्तिक का अपाय हो, अर्थात् निमित्त कारण के विनाश में कार्य का विनाश हो; यह मानना शास्त्रानुकूल और लोक न्याय सिद्ध है। निमित्त का विनाश अगर होने वाला हो तो कार्य की पहले उत्पत्ति ही नहीं हो, इस प्रकार अर्थ मानने में न कोई लौकिक न्याय है और न कोई वादिप्रतिवादि सम्मत (प्रसिद्ध) उदाहरण है। यद्यपि "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" यह न्याय है; तथापि कैयट के ग्रन्थ का यहाँ इतना-सा ही तात्पर्य लेना चाहिए कि उसकी व्याख्या के अनुसार सिद्ध अर्थ लोक में दृष्ट है।

यद्यपि ज्ञापक सिद्ध अर्थ के लिए किसी दृष्टान्त की अपेक्षा नहीं है; तथापि "समर्थानाम्" के द्वारा जब लोक-सिद्ध अर्थ का ज्ञापन हो सकता है, और उस प्रकार के लोक सिद्ध अर्थ के ज्ञापन के बाद "समर्थानाम्" अपने आप में चरितार्थ हो सकता है; तो इसमें कोई तुक नहीं है कि वह लोक से नहीं सिद्ध होने वाला (लोकविरुद्ध) अपूर्व अर्थ का ज्ञापन करे। इस तरह कैयट का आशय यह हुआ कि 'अकृतव्यूहाः पाणिनीयाः' का अर्थ यह नहीं करना चाहिए कि भविष्य में यदि निमित्त के विनाश की संभावना हो, तो उस निमित्त को लेकर वर्तमान में कार्य नहीं करना चाहिए, किन्तु उसका अर्थ यह करना चाहिए कि निमित्त का विनाश हो जाने पर कृत कार्य की भी निवृत्ति हो जाय।

**परे तु सेदुष इत्यादौ पदावधिकेऽन्वाख्याने सेद्वस् अस् इति स्थिते इट्संप्रसा-**

---

कार्यस्थितिनियामकनिमित्ततावप्रतिपादको दृष्टान्तस्तथा **दीक्षतमते** नास्तीति भावः अतएव दीक्षितमतं कैयटमतापेक्षया दुर्बलमिति तात्पर्यम्। 'समर्थानां प्रथमाद्वा' ४.१.८२ इत्यत्र समर्थग्रहणस्य लोकसिद्धार्थज्ञापनेन चरितार्थ्यसम्भवे लोकसिद्धापूर्वस्य दीक्षिताभिमतार्थस्य ज्ञापकत्वे मानाभाव इति कैयटतात्पर्यम्।

'समर्थानाम्' ४.१.८२ इति सूत्रे भाष्यमित्थमस्तिः—अथैतत्समर्थग्रहणं नैव कर्त्तव्यं कर्त्तव्यं च। किं प्रयोजनम्। समर्थादुत्पत्तिर्यथास्यादसमर्थान्माभूत्। किं पुनः समर्थम्अर्थाभिधाने यत्समर्थम्। किं पुनस्तत्। कृतवर्णानुपूर्वीकं पदम्। सौत्थितिः वैक्षमणि-रिति अत्र **कैयटः**—कृतवर्णानुपूर्वीकमिति भाष्यप्रतीकमादाय प्राहः—तस्यैव लोकेऽर्थ-प्रतिपादनाय प्रयोगात्समर्थत्वम् इति भावः॥ **सौत्थतिरिति** प्रतीकमुपादाय कैयटः वदति स्मः-विभज्यान्वाख्याने सु+उत्थित इत्यस्मादपि प्रत्ययः स्यात्। ततश्च सावुत्थिति रित्यनिष्टप्रसङ्गो वार्णादाङ्गम् बलीय इति वृद्धिप्रसङ्गात्। नन्वन्तरङ्गत्वाद् वार्णेषु कार्येषु कृतेषु प्रत्ययो भविष्यति। एवं तर्ह्येतदनेन समर्थवचनेन ज्ञाप्यते। अस्तीयं परिभाषाकृतव्यूहाः पाणिनीया इति। तेन पपुषस्तस्थुष इत्यादि सिद्धं भवति। अत्रान्त-रङ्गत्वात् पूर्वम् कृतोऽपीडागम एतत्परिभाषावशान्निवर्तते। तत्र पपा वस् अस् इति स्थिते इट्च प्राप्नोति सम्प्रसारणं च तत्र सम्प्रसारणं बलीयः प्रतिपदविधानादिति तत्र कृते वलादित्वाभावादिण् नास्तीति सिद्ध पपुष इति।

वस्तुतस्तु न कृतो विरुद्ध ऊहो विनङ्क्ष्यतोऽपि निमित्तत्वेनाश्रयणं यैस्ते पाणि-नीया इत्यर्थः करणीयः। तेन सेदुष इत्यादौ भाषायां सद्वस० ३.२.१०८ इति लिटः स्थाने क्वसु प्रत्यये लिटि धातोरनभ्यासस्य ६-१-८ इति द्वित्वे 'अत एक हल्मध्य-६.४.१२० इत्यैत्त्वाभ्यासलोपयोः जातयोः सेद्वस् इति स्थिते प्रातिपादकत्वाच्छसि वसोः सम्प्रसरणम् ६.४.१३१ इति सम्प्रसारेण विनङ्क्ष्यतो वकारस्य निमित्तत्वेनानाश्रय-णाद्वलादिलक्षणस्येटोऽभावः सिद्धः। विनङ्क्ष्यतोऽनाश्रयणं च लोकसिद्धम्। लोके हि विनङ्क्ष्यतो वस्तुनोऽनाश्रयणं प्रसिद्धम्। अतएव माघः—

छायामपास्य महतीमपि वर्तमानामागामिनीं जगृहिरे जनतास्तरूपणाम्। सर्वो-ऽपि नोपगतमप्यपचीयमानं वर्धिष्णुमाश्रयमनागतमभ्युपैति (शिशुपा० ५।१४) इति। कार्यस्य भाविनि निमित्तविनाशे पूर्वमप्रवृत्तिज्ञापनं लघु भवति। निमित्तस्य विनाशो-ऽवश्यं भावीति ज्ञाने सत्यपि पूर्वम् कार्यम् प्रवर्त्य पश्चान्निमित्तापाये जाते जातस्य कार्यस्य विनिवर्तनं गुरु भवति। अत एवोच्यते 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर' मिति।

नागेशः स्वमतमुपस्थापयतिः—सेदुष इत्यादौ पदावधिकमन्वाख्यानं करिष्यते

---

नागेश यह परिभाषा नहीं मानते हैं। उनका कहना है कि "सेदुषः" की सिद्धि

रणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं संप्रसारणेवलादित्वाभावादिटः प्राप्तिरेव नेति

पदमवधिर्यस्मिन् तदन्वाख्यानं सिद्धिप्रकारः पदावधिकमन्वाख्यानमुच्यते—पदसमाप्ति-पर्यन्तं प्रकृतिप्रत्ययान् प्रस्थाप्य साधनिका कर्तव्या इति पदावधिकान्वाख्यानसिद्धान्तेन सद् धातो लिटः स्थाने 'भाषायां सद्वसश्रुवः' ३.२.१०८ इति क्वसुप्रत्यये प्राति-पदिकत्वे शसि 'लिटिधातोरनभ्यासस्य' ६.१.८ इति द्वित्वे अभ्यासत्वेऽत एक हल्-६.४.१२० इत्यभ्यासस्यात एत्वेऽभ्यासलोपे च, सेद् वस् अस् इति वसोः सम्प्रसारणम् ६.४.१३१ इत्यस्य 'वस्वेकाजाद्घसाम्' ७.२.६७ इतीडागमस्य चोभयोः प्रतिपदविधि-त्वेऽपि इडागमे कृतेऽकृतेऽपि च प्राप्तत्वेन कृताकृतप्रसङ्गितया नित्यत्वात् पूर्वं सम्प्रसा-रणे वलादित्वाभावादिटः प्राप्तिरेव नास्तीति परिभाषेयं प्रयोजनरहिता । यद्यपि मूले सम्प्रसारणस्यैव प्रतिपदविधित्वमुक्तं वसोरिति पदमुच्चार्य सम्प्रसारणविधानात् तथापि मया 'वस्वेकाजाद्घसाम्'७.२.६७ इत्यत्रापि वसोरिति पदस्य साक्षादुच्चारणा-त्तस्यापि प्रतिपदविधित्वमनुचिन्त्योभयोः प्रतिपदविधिसाम्येऽपि संप्रसारणस्य पूर्व-प्रवृत्तिकारणं नित्यत्वमुपन्यस्तम् । प्रतिपदविधित्वादित्यस्य "प्राप्तयोः" इत्यस्मात् प्राक् पाठयोजने नागेशमतेनाप्युभयोः प्रतिपदविधित्वं सिद्ध्यति किन्तु "यद्यपि प्रति-पदविधित्वम्" इत्यादिग्रन्थस्तथा योजने प्रतिकूलः । अतस्तथा पाठो न शक्यते कर्तुम् । नन्वेवमिडागमसम्प्रसारणविधायकसूत्रद्वये वसुशब्दस्य साक्षादुच्चारणा-दुभयत्र प्रतिपदविधित्वस्य सत्त्वात्संप्रसारणस्य प्रतिपदविधित्वमूलकबलवत्त्वप्रतिपादन-मयुक्तमितिवाच्यम् नियमशास्त्रस्येतरव्यावृत्तिमात्रप्रयोजनं भवतीति प्राचां मतम् तथाच 'वस्वेकाजाद्घसाम्' ७.२.६७ इति सूत्रस्य नियमार्थत्वेन "कृतद्विर्वचनानामेका-चामादन्तानां घसेश्च वसोरिट् नान्येषामितिसिद्धान्तकौमुद्याद्युक्तरीत्या बभूवानित्या-दाविड्व्यावृत्तिमात्रप्रयोजनत्वेन सेदिवानित्यादौ आर्धधातुकस्येड् वलादेः' ७.२.३५ इत्यनेनैवेड्विधानस्येहितत्वात्तस्य च वसुशब्दोच्चारणपूर्वकविधित्वाभावेन सम्प्रसारण-मात्रस्यैव प्रतिपदविधित्वात् । एवञ्च यस्य मतं खण्डनीयं तस्यान्यत्रोक्तंसिद्धान्त-मवलम्ब्यैव तत् खण्ड्यते चेदधिकप्रभावोत्पादकं भवतीति विचार्य नागेशेनात्र प्राचां

---

पदावधिक अन्वाख्यान (अर्थात् पदसंज्ञासम्पादक विभक्ति पर्यन्त के उच्चारण) से हो जायेगी । सेदिवस् बनाकर शस् विभक्ति नहीं लायेंगे किन्तु सद् से क्वसु करते ही प्रातिपदिक संज्ञा करके शस् लायेंगे । इस तरह द्वित्वादि के बाद 'सेद्वस् अस्' ऐसी स्थिति में भसंज्ञा होने से इट् और सम्प्रसारण दोनों की प्राप्ति होगी ; उनमें सम्प्रसारण प्रतिपद विधि है; क्योंकि "वसोः सम्प्रसारणम्" ६.४.१३१ में वसु का पदशः उच्चारण करके सम्प्रसारण का विधान है। इसलिए प्रतिपदविधि होने इडागम को बाधकर पहले सम्प्रसारण हो जायगा, अब वलादित्व के अभाव के कारण इट् की प्राप्ति ही नहीं रहेगी और सेदुषः की सिद्धि हो जायगी (अतः इस परिभाषा

तत्सिद्धिरिति 'समर्थानामि'ति सूत्रे कैयटेऽसिद्धव'त्सूत्रे च कैयटे स्पष्टमेव तत्।

---

मतमवत्नम्ब्यैव तथोक्तमिति मन्यताम्। प्रतिपदविधित्वात्पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेत्यर्थः समर्थानाम् ४.१.८२ इतिसूत्रस्य भाष्यस्य कैयटकृतप्रदीपटीकायां स्पष्टं प्रतिपादितः। तथाहि "पपा वस् अस्"इतिस्थिते इट् च प्राप्नोति सम्प्रसारणञ्च। तत्र संप्रसारणं बलीयः प्रतिपदविधानादिति। तत्र कृते वलादित्वाभावादिट् नास्तीति सिद्धं—पपुष इति॥

असिद्धवदत्राभात् ६-४-२२ इति सूत्रस्थ कैयटेऽपि प्रोक्तम् पपुष इति। ननु चान्तरङ्गत्वादिटा भाव्यम्। न च सम्प्रसारणे कृतेऽपीटो निवृत्तिः, निमित्ताभावे नैमित्तकस्याप्यभाव इत्यस्याः परिभाषाया भाष्यकारेणानाश्रयणात्। तथा च 'चौ' ६.३.१३८ इत्यत्रोक्तम्—'इहान्ये चौ प्रत्यङ्गस्य प्रतिषेधमारभन्ते, तदिहापि साध्यम्" इत्यकारस्य निवृत्तावपि यणाद्यादेशानिवर्तनाच्चैतदुक्तम्। तथाच 'छ्वोः'इत्यत्रोक्तम् —"अवश्यमत्र तुगभावार्थो यत्नः कर्त्तव्यः। अन्तरङ्गत्वाद्धि तुक्प्राप्तिः" इति कृतेऽपि शकारे कृतस्य तुकोऽनिवृतिं मत्वा चैतदुक्तम्। एवं तर्हि नित्यशब्ददर्शने प्रविभज्यावयवेषु कल्प्यमानेष्वन्तरङ्गबहिरङ्गभावो नास्तीति 'पपा वस् अस् इति स्थिते नित्यत्वादिटं बाधित्वा सम्प्रसारणं भवति, अल्विधित्वाच्च स्थानिवत्वाभावादिटोऽप्रसङ्गः। अथवा सम्प्रसारणं तदाश्रयं च कार्यम् बलीयो भवतीति—अत्र विषये पूर्वमिट् न प्रवर्तते॥ इति।

---

के मानने की कोई आवश्यकता नहीं है। यह 'समर्थानाम्' ४.१.८२ सूत्र के कैयट में स्पष्ट है। कैयट की अविकल वाक्यावली दुर्गा व्याख्या में (पृ० ३९३) पर उद्धृत है। वहाँ कैयट ने लिखा है कि 'पपा वस् अस्' इस स्थिति में इट् और सम्प्रसारण दोनों की प्राप्ति होगी उनमें प्रतिपद विधि होने के कारण सम्प्रसारण प्रबल माना जायेगा। इसलिए संप्रसारण पहले होगा। सम्प्रसारण करने पर वलादि आर्धधातुक का अभाव हो जाएगा। इस लिए इट् नहीं होगा और पपुषः' बन जायेगा। "असिद्ध वदत्राभात्" ६.४.२२ सूत्र के कैयट में भी यह स्पष्ट है। ६.४.२२ सूत्र का कैयट दुर्गा व्याख्या के इसी पृष्ठ पर उद्धृत है। वहाँ "पपुषः" में अन्तरङ्गत्वात् प्राप्त इट् का अभाव पदावधिक अन्वाख्यान के द्वारा ही सिद्ध किया गया है। कहा गया है कि शब्द नित्य है, पद में अवयव कल्पित हैं। उन कल्पित अवयवों में अन्तरंग-बहिरङ्ग की कल्पना ठीक नहीं है। इसलिए पपा वसस् इस स्थिति में इट् को बाधकर नित्यत्वात् सम्प्रसारण हो जायगा। सम्प्रसारण होने पर बलादित्व का अभाव हो जाने से इट् नहीं होगा। सम्प्रसारण को स्थानिवद्भाव करके वल्त्व को नहीं लाया जा सकता; क्योंकि वह अल्त्व-व्याप्य-धर्म है; उसको लाकर स्थानिवद्भाव करते समय "अनल्विधौ" बाधक होगा। अथवा सम्प्रसारण और तदाश्रयकार्य बलवान् होता है। इस

यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः । निरूपितं चैतद्बहुशः शब्देन्दुशेखरे ॥

---

ननु प्रतिपदविधित्वस्य बाधकत्वस्वीकारे कारणमस्ति तस्यानवकाशत्वम् अर्थात् प्रतिपदविधिस्तदैव बाधको भवति यदा हि सोऽनकाशः, "वसोः सम्प्रसारणम्' ६.४.१३१ इति सम्प्रसारणन्तु 'विदुष' इत्यादौ चरितार्थ्यान्नानवकाशः तत्र हि 'विदेः शतुर्वसुः' ७.१.३६ इति शतृप्रत्ययस्य स्थाने वसोर्विधानात्तस्यार्धधातुकत्वाभावादिट् न प्राप्नोतीति इडप्राप्तिविषये तस्य वसोः सम्प्रसारणमित्यस्य चारितार्थ्येनानवकाशरूपस्य बाधकताबीजस्याभावात्सम्प्रसारणं कथमिटः पूर्वं प्रवर्तते इति न वाच्यम् प्रतिपदविधेः सावकाशस्त्वेऽपि पूर्वप्रवृत्तै नियामकत्वं स्वीक्रियत एव, शीघ्रोपस्थितिकत्वात् । वस्तुतस्तु उभयोः प्रतिपदविधत्वे समानेऽपि सम्प्रसारणं नित्यत्वादिटं बाधते इति

---

लिए यहाँ सम्प्रसारण के विषय में पहले इट् नहीं होगा। इस तरह कैयट ने 'अकृतव्यूह' परिभाषा के बिना ही 'पपुषः' में इट् का अभाव बताया और उसके लिए पदावधिक अन्वाख्यान का सहारा लिया। इतना ही नहीं उसने वहाँ उपक्रम ग्रन्थ में यह भी बताया कि "पुपुषः" में अन्तरङ्गत्वात् पहले किये गये इट् की निवृत्ति "निमित्तापाये नैमित्तिकस्याप्यपायः" इस परिभाषा से नहीं हो सकती; क्योंकि पूर्वोक्तपरिभाषा को भाष्यकार ने स्वीकार नहीं किया है। इसीलिए "चौ प्रत्यङ्गस्य (अन्तरङ्गस्य) प्रतिषेधः" इस व्याकरणान्तर के नियम को 'प्रतीचः' की सिद्धि के लिए स्वीकार किया। क्योंकि भाष्यकार जानते थे कि "प्रतीचः" "प्रति+अञ्च्" अस् इस अवस्था में यदि यण् हो जायेगा, तो वह यण् अञ्च् के अकार के लोप के बाद भी नहीं हटेगा। इतना ही नहीं, "च्छ्वोः" यहाँ भाष्यकार ने कहा कि यहाँ तुक् के अभाव के लिए अवश्य यत्न करना चाहिए। अन्तरङ्गत्वात् तुक् प्राप्त होता है। भाष्यकार को डर था कि वह तुक् शकारादेश करने पर भी नहीं हटेगा; तभी तो उन्होंने 'अवश्यम्' कहा। इससे सिद्ध है कि "अकृतव्यूह परिभाषा" को कैयट ने भी स्वीकार नहीं किया है।

यद्यपि प्रतिपद विधित्व को बाधकता का बीज तब माना जाता है; जबकि प्रतिपद विधि अनवकाश हो। अर्थात् प्रतिपद विधि यदि अनवकाश रहती है; तभी वह बाधक बनती है; ऐसी स्थिति में "वसोः सम्प्रसारणम्" के अन्यत्र "विदुषः" में जहाँ कि इट् की प्राप्ति नहीं है, चरितार्थ होने के कारण सम्प्रसारण यहाँ (पपुषः में) इडागम का बाधक नहीं बन सकता; ऐसा लगता है; तथापि निरवकाश न होने के कारण उसे बाधक बनने में कुछ कमी आने पर भी पूर्व प्रवृत्ति में उसका प्रतिपद विधान नियामक होगा ही। अतः 'वसोः सम्प्रसारणम्' से इडागम के पहले सम्प्रसारण होने में कोई कसर नहीं दिखती। यह बात शब्देन्दुशेखर में कई जगह निरूपित हुई

**'समर्थानामि'ति सूत्रस्थसमर्थग्रहणं तु विषुण इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथाभ्रमवारणाय न्यायसिद्धार्थानुवाद एव ॥**

---

ज्ञेयम् । तदुक्तम्—**यद्यपि—तदाशय** इति वाक्येन ।

शब्देन्दुशेखरे स्वकीयेऽन्यस्मिन् ग्रन्थे निरूपितमेतत् बहुश इति स्मारयति—निरूपितं चैतदित्यादिना

यदि अकृतव्यूह परिभाषां विनैव भवता सेदुष इति साध्यते पदावधिकान्वाख्यानमनुसृत्य परिभाषा चेयं न स्वीक्रियते तदा सौत्थितिरित्यादावन्तरङ्गत्वाद्दीर्घे कृते एव प्रत्ययोत्पत्या समर्थानामिति व्यर्थमिति चेत्तदाह—'समर्थानाम् प्रथमाद्वा' ४.१.८२ इति सूत्रस्थं समर्थग्रहणन्तु विषु अच् इत्यवस्थायां विष्वगित्युत्तरपदलोपश्चाकृतसन्धेरिति वार्तिकेन अकृतसन्धेरेव विषु अच् इत्यस्माद् णप्रत्यये उत्तरपदस्याचो लोपे कृते निष्पन्ने विषुण इत्यदौ अकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथैवाकृतसन्धेः प्रत्ययविधानं स्यादिति भ्रमवारणाय । अतः समर्थग्रहणं न दोषवारणाय नाप्यपूर्वस्य कस्यचिदर्थस्य ज्ञापनायास्ति किन्तु तदन्तरङ्गबलवत्वबोधकन्यायसिद्धमर्थमेवानुवदति ।

---

है । "समर्थानाम्" सूत्र का समर्थग्रहण परिभाषा ज्ञापन के लिए नहीं है ; परन्तु वह विषुणः की तरह बिना सन्धि किये प्रत्यय न हो; इस बात को सूचित करने के लिए है । 'विषु अच्' इस अवस्था में "विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः (वा० २५७७ सि० कौ०) इस वार्तिक से बिना सन्धि किये ही 'ण' प्रत्यय होता है और उत्तरपद 'अच्' का लोप हो जाता है । जैसे यहाँ बिना सन्धि किये ही 'ण' प्रत्यय हो गया है; वैसे 'सौत्थितिः" वैक्षमाणिः' इत्यादि स्थलों में भी बिना सन्धि किये ही कहीं लोग भ्रमवश तद्धितप्रत्यय न कर दें, उनके इस भ्रम के निवारण के लिए अन्तरङ्ग परिभाषा से सिद्ध अर्थ को दुहराने या दूसरे रूप में सूचित करने के लिए 'समर्थानाम्' में समर्थ ग्रहण किया गया है । 'विप्रतिषेध' १.४.२ सूत्र के भाष्य में समर्थग्रहण की यह अन्तरङ्ग परिभाषासिद्धार्थानुवादकता ध्वनित हुई है । वहां "वैक्षमाणिः" इसको अन्तरङ्ग परिभाषा के उदाहरण के रूप में प्रस्तुत किया गया है । भाष्यकार ने 'वैक्षमाणिः' और 'सौत्थितिः' का हवाला देते हुए कहा कि यहां वृद्धि और दीर्घ एकादेश दोनों की प्राप्ति होने पर यद्यपि परत्वात् वृद्धि होनी चाहिए; परन्तु अन्तरङ्गत्वात् एकादेश पहले होता है और वृद्धि बाद में होती है । यदि समर्थग्रहण, जहां सन्धिकार्य हो गया हो ऐसे शब्दों से प्रत्ययोत्पत्ति के लिए होता है; तब तो अन्तरङ्ग के अभाव में भी प्रत्ययोत्पत्ति के लिए पहले ही एकादेश का होना आवश्यक था; फिर एकादेश को अन्तरङ्गाधीनत्व बताना भाष्यकार का असंगत ही हो जाएगा । मेरे विचार में तो समर्थग्रहण अन्तरङ्गता के कारण स्वयं सम्पन्न होने वाले अर्थ का अनुवादक है, वह कोई नई बात बताने के लिए नहीं है । इसीलिए कोई दोष नहीं हुआ ।

ध्वनितं,चेदं 'विप्रतिषेध'सूत्रे भाष्ये । तत्र हि वैक्षमाणिरित्यन्तरङ्गपरिभाषोदाहरणमुक्तम् ।।

**किञ्च विभज्यान्वाख्याने सु उत्थित अस् इ इति स्थिते वार्णादाङ्गम् बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम् । अत एवासिद्धवत्सूत्रे वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यं, पपुष इत्यादौ वसोः संप्रसारणे कृते आतो लोपो यथा स्यादिति भाष्ये उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारणे इटोऽप्राप्तावुस्निमित्तक एवातो लोप इति तदाशयः । अन्यथान्तरङ्गत्वादिटि तन्निमित्तक एवातो लोप इति तदसङ्गतिः ।।**

---

न्यायसिद्धार्थानुवादत्वं च समर्थग्रहणस्य यन्मयोक्तं तन्न मम कपोलकल्पितमपि तु भाष्यसम्मतम् । तथा च दृश्यताम् विप्रतिषेधे परं कार्यं १.४.२ इति सूत्रस्य ''प्रयोजनं यणेकादेशेत्वोत्त्वानि गुणवृद्धिद्विवर्चनाल्लोपस्वरेभ्यः '' इतिवार्तिकस्य भाष्यम्—"वृद्धेरेकादेशः—वैक्षमाणिः सौत्थितिः । वृद्धिश्च प्राप्नोत्येकादेशश्च । परत्वाद्वृद्धिः स्यात् एकादेशोभवत्यन्तरङ्गतः इति । यदि समर्थग्रहणं कृतसन्धिकार्यात्प्रत्ययोत्पत्यर्थमिति भाष्यकाराभिमतं स्यात्तर्हि अन्तरङ्गत्वाभावेऽपि प्रत्ययोत्पत्तेः पूर्वमेव सवर्णदीर्घरूपैकादेशस्य वि+ईक्षमाण इत्यत्र सु+उत्थित इत्यादौ चावश्यकत्वेन एकादेशस्यान्तरङ्गसाध्यत्वकथनमसङ्गतं स्यादतः ध्वन्यते यत् समर्थग्रहणं तदेवानुवदति यदन्तरङ्गन्यायः प्रतिपादयति ।

---

यदि आप कहें कि समर्थग्रहण से अन्तरङ्ग परिभाषा ज्ञापित हुई है । "वैक्षमाणिः" के सन्दर्भ में आए हुए भाष्य से तो यह सूचित हो सकता है कि 'अकृतव्यूह' परिभाषा तद्धित विधि में प्रवृत्त नहीं होती; तब तो "वैक्षमाणिः" यह उदाहरण अन्तरङ्ग परिभाषा का हो ही सकता है, इसलिए इस परिभाषा को न मानने का कोई प्रश्न ही नहीं उठता, तो ऐसा इसलिए नहीं कह सकते, क्योंकि यहीं "समर्थानाम्" सूत्र के प्रदीप में कैयट ने कहा है कि विभज्य अन्वाख्यान मानने पर 'सु+उत्थित अस् इ' इस स्थिति में वर्णादाङ्गम् बलीयः" इस न्याय से प्राप्त वृद्धि के वारण के लिए समर्थ ग्रहण है इस तरह समर्थग्रहण सार्थक है, वह परिभाषा का ज्ञापक नहीं हो सकता ।

समर्थग्रहण 'अकृतव्यूह' परिभाषा के ज्ञापन के मध्यम से सार्थक है 'वार्ण, परिभाषा कोई नई परिभाषा नहीं है, वह तो अकृतव्यूह परिभाषारूपा ही है, यदि ऐसा कहें तो वह कथन भी उचित नहीं है; क्योंकि 'असिद्धवत् सूत्र' के निम्नलिखित भाष्य से भी 'अकृतव्यूह' परिभाषा का अभाव ही सिद्ध होता है । 'असिद्धवदत्राभात्' ६.४.२२ सूत्र में कहा गया है कि "वसुसंप्रसारणमज्विधौ सिद्धम् वक्तव्यम्" अर्थात् अच् के परे रहते या अच सम्बन्धी विधि के कर्तव्य में 'वसुसम्प्रसा-

ननु समर्थग्रहणेन याऽकृतव्यूहपरिभाषा ज्ञापिता; सा तद्धितविधौ न प्रवर्तते इत्येव विप्रतिषेधसूत्रस्थेन पूर्वोक्तभाष्येण बोध्यताम्; एवञ्च वैक्षमाणिः सौत्थितिरित्यादौ अन्तरङ्गत्वादेवैकादेश इति युक्तं भाष्योदाहरणमिति वाच्यम् समर्थानाम् ४.१.८२ इति सूत्रे "अथैतत् समर्थग्रहणं नैव कर्तव्यम्, कर्तव्यञ्च। किं प्रयोजनम्? समर्थाद्रुत्पत्तिर्यथा स्यादसमर्थान्माभूदिति। किं पुनः समर्थम्? अर्थाभिधाने यत्समर्थम्। किं पुनस्तत्? कृतवर्णानुपूर्वीकम् पदम्,सौत्थितिः वैक्षमाणिरितिभाष्यव्याख्यावसरे कृतवर्णानुपूर्वीकस्यैव (कृतसन्धिकार्यस्यैव) लोकेऽर्थप्रतिपादनाय प्रयोगात् समर्थत्वमिति व्यवस्थाप्य सौत्थितिरित्यादौ (पदस्य) विभज्यान्वाख्याने सु+उत्थित इत्यस्मादपि प्रत्ययः स्यात्, ततश्च सावुत्थितिरित्यनिष्टप्रसङ्गः, वार्णादाङ्गम् बलीय इति वृद्धिप्रसङ्गाद् इत्यादिग्रन्थेन सु+उत्थित अस् इ इति पदस्य विभज्यान्वाख्यानपक्षे 'वार्णादाङ्गं बलीयः' (प०-५६) इति परिभाषया प्राप्त्या वृद्धेः वारणाय समर्थग्रहणमिति कैयटेन स्पष्टमुक्तम्। एतेन स्पष्टं प्रतीयते यत् पदस्य विभज्यान्वाख्यानेऽकृतसन्धेरपि प्रत्ययः स्यात्। तद्वारणाय कृतसन्धिकार्यादेव प्रत्ययविधानाय समर्थग्रहणस्य

---

रणम्' अर्थात् 'वसोः सम्प्रसारणम्' से किया गया सम्प्रसारण सिद्ध हो, असिद्ध नहीं। यह वार्तिक इसलिए मानना चाहिए कि 'पपुषः' में वसु को सम्प्रसारण करने के बाद उसके परे रहते "आतो लोपः" ६.४.६४ से आलोप हो जाय। पदस्य विभज्य अन्वाख्यान में पूर्ववत कैयट के अनुसार पहले सम्प्रसारण हो जाने से इट् की अप्राप्ति होने पर उस् निमित्तक ही 'आ' का लोप होता है यह उस भाष्य का आशय है। परिभाषा रहने पर कैयट के मत में निमित्त के अपाय में नैमित्तिक का अपाय मानने पर 'अन्तरङ्गत्वात्' इट् हो जाता, और इट् होने पर उसको निमित्त मानकर ही आलोप होता, फिर इस वार्तिक का निर्माण निरर्थक या असंगत हो जाता। अतः परिभाषा का अभाव ही मानना चाहिए।

यद्यपि दीक्षित के मत में 'पपुषः' इत्यादि में सम्प्रसारण के द्वारा वलादित्वरूप इट् के निमित्त के भावी विनाश के कारण पहले इट् की अप्रवृत्ति हो जाने पर सम्प्रसारण करने पर सम्प्रसारण निमित्तक ही आलोप हो सकता था, सम्प्रसारण की असिद्धता होने पर आलोप नहीं होता। इसलिए 'अकृतव्यूह' परिभाषा के रहने पर भी "वसुसम्प्रसारणमज् विधौ सिद्धं वक्तव्यम्" इस वार्तिक का आरम्भ करना आवश्यक ही है। कैयट के मत में भी पहले अन्तरङ्गत्वात् इट् होगा, उसको निमित्त मानकर आलोप किया जाएगा, फिर सम्प्रसारण होने पर सम्प्रसारण के द्वारा इडागम के निमित्त वलादि का अपाय होने पर इडागम निमित्तक आलोप का भी अपाय हो जायगा। अतः वहाँ भी सम्प्रसारण निमित्तक आलोप ही करना होगा; इसलिए सम्प्रसारण की सिद्धता के लिए वार्तिक का आरम्भ आवश्यक ही है।

चारितार्थ्येन तस्य ज्ञापकत्वासंभवः। अतएव विप्रतिषेध (१.४.२)सूत्रेऽन्तरङ्गम् बलीय' इत्यस्य सौस्थितिरिति वैक्षमाणैरिति प्रयोजनं भाष्योक्तं संगच्छते।

समर्थसूत्रे कैयटे तु "नन्वन्तरङ्गत्वाद् वार्णेषु कार्येषु कृतेषु प्रत्ययो भविष्यति एवं तर्ह्येतदनेन समर्थवचनेन ज्ञाप्यते—अस्तीयं परिभाषा अकृतव्यूहाः पाणिनीया इति। ततश्चान्तरङ्गत्वात्पूर्वं दीर्घाप्राप्त्या असन्धेरेव प्रत्यये प्राप्तवृद्धिवारणाय समर्थग्रहणस्य सार्थक्यमकृतव्यूहपरिभाषासत्वे स्वांशे चरितार्थत्वरूपमेव सिद्ध्यति; वार्णपरिभाषा तु अकृतव्यूहपरिभाषारूपैव तस्या अत्रान्तर्भावात्। एवञ्च न पूर्वोक्तेन कैयटग्रन्थेनाकृतव्यूहपरिभाषाया अभावः सिद्ध्यतीत्यरुचेः प्राह **अतएवासिद्धवत् सूत्रे इति।** अतएव=अकृतव्यूह परिभाषाया असत्वादेव पपुष इत्यादौ आतो लोप इटि च ६.४.६४ इति दृष्ट्याऽऽभीयस्य सम्प्रसारणस्यासिद्धत्वादातोलोपाभावे प्राप्ते तत्सिद्ध्यर्थं वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यमितिवार्तिकमुक्तं भाष्ये। पदस्य विभज्यान्वाख्याने पपा+वस्+अस् इतिस्थिते इट्संप्रसारणयोःयुगपत् प्राप्तौ प्रतिपदविधित्वात् प्रथमतः सम्प्रसारणसाधककैयटरीत्या पूर्वं सम्प्रसारणे इटोऽप्राप्तौ तन्निमित्तकलोपाप्राप्त्या उस्निमित्तक एवातोलोप इति तस्य भाष्यस्य तात्पर्यम्। तच्चाकृतव्यूहपरिभाषाऽस्वीकारे भज्येत अन्तरङ्गत्वादिटि तन्निमित्तक एवातो लोपे पूर्वोक्तभाष्यासंगतिः स्पष्टैव। पूर्वोक्तं भाष्यं तु दीक्षितकैयटमतयोरेव सुसंगतं भवति, ताभ्यामकृतव्यूहपरिभाषास्वीकारात्, तत्परिभाषानङ्गीकृतवतां भवतां मतेनैव तत्प्रतिकूलमापतति। तथाहि भट्टोजिदीक्षितेन इटोनिमित्तं वलादित्वरूपं भाविना सम्प्रसारेण विनाशोन्मुखं दृष्ट्वा पूर्वमेव पपुष इत्यादौ पपा वस् इति स्थिते इट् न करिष्यते तथाचेटोभावात्संप्रसारणे विहिते तन्निमित्तक एव आतो लोप इटि चेति लोपः शक्यते कर्तुम्, तस्य चासिद्धवदत्राभात् ६.४.२२ इत्यसिद्धत्वे लोपो न भवितुमर्हतीति परिभाषायां सत्यां वार्तिकमावश्यकम् इति। कैयटोऽपि निमित्तापाये नैमित्तिकस्यापायं स्वीकरोति। अतः पपुष इत्यादौ पूर्वमन्तरङ्गाज्जातस्यापि इटो वलादित्वस्य निमित्तस्य संप्रसारणेनापाये वलादित्वापायात् इटो ऽपाये च तन्निमित्तकस्य आलोपकार्यस्य चापायात् पपा उस् अस् इति स्थितौ जातायामुस्निमित्तक एवातो लोपो विधेयः, सम्प्रसारणस्य चासिद्धवदत्राभादित्यसिद्धत्वे आतो लोपाभावप्रसक्त्या तस्य सिद्धत्वाय वार्तिकं तन्मतेनारम्भणीयमेव। अकृतव्यूहपरिभाषामनङ्गीकुर्वतां भवतां मतेन तु अन्तरङ्गत्वादिटि तन्निमित्तक एवातो लोपे सिद्धे वार्तिकारम्भो व्यर्थ एव स्यादिति चेत्तर्हि अस्या परिभाषाया असत्त्वसाधकं प्रमाणं 'चौ प्रत्यङ्गस्य प्रतिषेध' इति वार्तिकं भाष्यकृता कृतं च तस्याप्रत्याख्यानमिति गृह्यताम्। यदीयं परिभाषा स्यात् तदानयैव 'प्रतीचा' 'दधीचा' इत्यादौ 'अचः ६.४.१३८ इति लोपेन अकारस्य विनाशे भाविनि पूर्वमन्तरङ्गस्यापि यणोऽप्रवृत्या तद्वार्तिकारम्भः वृथैव स्यात् भाष्यकारेण चाकृतव्यूहपरिभाषया तत्प्रयोजन-सिद्धिमुद्भाव्यावश्यं तत्प्रत्याख्यानं कृतं स्यात्, तच्च

**अत एव चौ प्रत्यङ्गस्य प्रतिषेध इति वचनं वार्त्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम्। प्रत्यङ्गमन्तरङ्गम्। अस्याम् परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव॥**

---

प्रत्याख्यानं न कृतम्। अतो ज्ञायते नैषा परिभाषा भाष्यकारवार्तिकाराभ्यां स्वीकृतेति। न च कथमुच्यते तद्वार्तिकं भाष्यकृता न प्रत्याख्यातमिति मया तु चौ ६.३.१३८ इति सूत्रे दृश्यते "इहान्ये आचार्याः—चौ प्रत्यङ्गस्य (प्रत्यङ्गशब्दोऽन्तरङ्गवाची—उद्योतः) प्रतिषेधमाहुः, तदिहापि साध्यम्। नैष दोषः। एतदेव ज्ञापयत्याचार्यः—न चौ प्रत्यङ्गं भवतीति, यदयं चौ दीर्घत्वं शास्ति॥ इति भाष्येण चाविति सूत्रेण चौ परे दीर्घविधानसामर्थ्यात् पूर्वं यणाद्यादेशाभावमुद्भाव्य वार्तिकं प्रत्याख्यातमेव। यणाद्यभावाय चाविति दीर्घविधानसामर्थ्यपर्यन्तानुधावनमपि अकृतव्यूहपरिभाषाऽभावमेव बोधयति। यदीयं परिभाषा स्यात्तदाऽनयैव यणाद्यादेशाभावे-सिद्धे सामर्थ्यपर्यन्तानुधावनं भाष्यकारस्य वृथैव स्यादिति न वाच्यम् दीर्घत्वसामर्थ्येन परिभाषैवैषांऽशतो ज्ञाप्यते इति भाष्यतात्पर्यकल्पनेन परिभाषासत्ताया एव लाभात्।

---

इसलिए परिभाषास्वीकार करने वालों के मत में पूर्वोक्त भाष्य से कोई विरोध नहीं होता है; तथापि परिभाषा के स्वीकार में "चौ प्रत्यङ्गस्य प्रतिषेधः" इस वचन का वार्तिककार के द्वारा बनाया जाना और भाष्यकार के द्वारा प्रत्याख्यान न करना; यह साबित करता है कि यह परिभाषा नहीं माननी चाहिए। 'प्रत्यङ्ग' का अर्थ अन्तरङ्ग है। इस तरह इसका अर्थ हुआ कि 'चौ' ६.३.१३८ सूत्र के विषय में अन्तरङ्ग का प्रतिषेध होता है। यदि अकृतव्यूह परिभाषा रहे तो "प्रतीचः" में 'प्रति अच् अस्' इस स्थिति में अकृतव्यूह परिभाषा से ही अन्तरङ्ग यण् कार्य, लोप के द्वारा भावी अकाररूप निमित्त के विनाश में नहीं होगा या होने पर भी उसकी निवृत्ति हो जाएगी; फिर इस वार्तिक के द्वारा यण् (अन्तरङ्ग) के प्रतिषेध की क्या आवश्यकता थी? इससे सिद्ध है कि यह परिभाषा नहीं है।

यदि आप इस वचन को अपूर्व वचन न मानकर अकृतव्यूह परिभाषा से सिद्ध होने वाले कार्य का अनुवादक मात्र मानकर कहें कि "अकृतव्यूहाः" से सिद्ध अर्थ का ज्ञापक होने के कारण ही भाष्यकार ने इसका प्रत्याख्यान नहीं किया, और यह सिद्ध करना चाहें कि इस वचन से परिभाषा का अभाव सिद्ध नहीं होता; तो "च्छ्वोः" ६.४.१९ सूत्र के उस भाष्य को लीजिए; जिससे इस परिभाषा का अभाव ध्वनित होता है। "च्छ्वोः" सूत्र में भाष्यकार ने कहा "प्रष्टा" इत्यादि स्थल में तुक् के अभाव के लिए अर्थात् तुक् के श्रवण को रोकने के लिए यत्न अवश्य करना चाहिए; क्योंकि अन्तरङ्गत्वात् तुक् प्राप्त होता है। यदि यह परिभाषा रहे तो दीक्षित के अनुसार तुक् के निमित्त छकार के भावी विनाश के कारण ही

**अत एव 'च्छ्वोरि'ति सूत्रेऽवश्यमत्र तुगभावार्थो यत्नः कार्योऽन्तरङ्गत्वाद्धि तुक् प्राप्नोतीति भाष्ये उक्तम् । एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नावश्यकत्वकथनमसङ्गतमिति स्पष्टमेव । न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः, अवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः ॥**

---

एवञ्च अकृतव्यूहपरिभाषाया असत्त्वे न किमपि प्रमाणमिति चेत्, न, 'च्छ्वोः शूडननुनासिके च' ६४.१९ इति सूत्रे सतुग्निर्देशस्यावश्यकरणीयताप्रतिपादकभाष्यस्यैव प्रमाणत्वात् । सतुङ्निर्देशाभावे 'प्रष्टा' प्रष्टु' 'प्रष्टव्यम्' इत्यादौ छमात्रस्य शत्वेऽपि पूर्वं जातस्य छकारनिमित्तकस्य तुकश्श्रवणमापद्येत । तन्निवृत्तये च्छ्वोरिति सूत्रे च्छ्वोरिति सतुङ्निर्देशरूपो यत्नोऽवश्यकर्तव्य इति भाष्यमस्याः परिभाषायाः सत्वे विरुद्धं स्यात् । अनयैव भाविनि छकाररूपनिमित्तविनाशे पूर्वम् तुकोऽप्राप्त्या जातस्य तस्य छकाररूपनिमित्तापाये निवृत्या तुकोऽश्रवणसिद्धौ "तुक् प्रसङ्गश्च" तुक् च प्रसज्येत । निवृत्तेऽपि वै क्ङिद्ग्रहणेऽवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः अन्तरङ्गत्वाद्धि तुक् प्राप्नोति इति भाष्ये तुकोऽभावाय सतुग्ग्रहणरूपयत्नस्यावश्यकरणीयताप्रतिपादनपरकं वाक्यमसंगतं स्यात् । नचैतस्याः परिभाषाया अनित्यत्वज्ञापनार्थं सतुग्ग्रहणमेतद्भाष्यञ्चास्तु इति वाच्यम् तथाकल्पनायामवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः इति भाष्याक्षरस्वारस्यभङ्गापत्तेः । तुको निवृत्तेरुपायो यदि सर्वथान्यो न स्यात्तदैव तथाकथनमुचितं स्यात् । उपायान्तरसत्त्वे यत्नस्यावश्यकरणीयताप्रतिपादनं न क्रियते साधारणेनापि लोकेन किमुत भाष्यकारेण तथा करिष्यते । अतः यत्नावश्यकरणीयता-प्रतिपादनेन ज्ञायतेऽस्या अभाव इति । परिभाषा-

---

तुक् का आगम न होता और कैयट के मत में तुक् होने पर भी छकार को शकार हो जाने पर तुक् के निमित्त के अपाय के कारण किये गए तुक् कार्य का भी अपाय आसानी से हो जाता; फिर भाष्यकार ने तुक् के अभाव के लिए यत्न करने की जो अत्यधिक आवश्यकता, 'अवश्य' शब्द के प्रयोग के द्वारा सूचित की, वह असंगत हो जाएगी । इस परिभाषा के रहते, भला; भाष्यकार को तुक् की निवृत्ति के लिए इतनी चिन्ता करने को क्या आवश्यकता थी ? अतः सिद्ध है कि यह परिभाषा नहीं मानी गई है ।

प्रष्टा में तुक् की निवृत्ति के लिए "च्छ्वोः शूडनुनासिके च" में किये गये सतुग्ग्रहणात्मक यत्न को यदि पूर्वोक्त परिभाषा की अनित्यता का ज्ञापक मानें; तो भी कल्याण नहीं है; क्योंकि भाष्य में प्रयुक्त 'अवश्य' शब्द के द्वारा जिस अवश्य कर्त्तव्यता की अभिव्यक्ति होती है; उसकी रक्षा परिभाषा की स्वीकृति में नहीं होती; क्योंकि जब परिभाषा से तुक् की निवृत्ति हो रही है; तब यत्न में अवश्य कर्तव्यता कहाँ रह जाती ? अतः इस परिभाषा का अभाव ही मानना चाहिए ।

**किञ्चानयैव प्रत्ययोत्तरपदयोश्च अदो जग्धिर्ल्यबित्यनयोश्चारितार्थ्येन तज्ज्ञापकवशाल्लुगल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत ॥**

---

सत्वे तु एतत्परिभाषारूपस्य तुकोनिवृत्तेरुपायान्तरस्य सत्वेन तथाकथनमसंगतं स्यात् । "आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्" (नाम धा०प्र०) इति वार्तिकेन आख्यानवाचकात् कृत्प्रत्ययान्ताद् द्वितीयान्ताण्णिच् स्यात् आचष्टे इत्यभिधेये, कृत्प्रत्ययस्य लुक्, कृत्प्रत्ययप्रकृतभूतधातोर्यादृशं रूपं धातुपाठे पठितं, तादृशस्य रूपस्य प्रत्यापत्तिः अर्थादादेशादिनिवृत्तिः, कारकं प्रकृतितुल्यम् चकारेण कार्यं च प्रकृतिवत् इत्यर्थकेन प्रकृतिप्रत्यापत्तिवचनेनाकृतव्यूहपरिभाषाऽनित्येति ज्ञाप्यते तद् वार्तिकं कंसवधमाचष्टे इत्यत्र कंसवधशब्दात् 'हनश्च वधः' ३.३.७६ इति विहितस्य अप्प्रत्ययस्य लुक्म्, अप्प्रत्ययसहकारिकारणजन्यवधादेशरूपविकार-परित्यागमूलकहन्प्रकृतिप्रत्यापत्तिं हेतुमण्णिचः प्रकृतेर्हन्त्यादेर्विद्यमानतादशायां हेतुमण्णौ यादृशं कारकं द्वितीयान्तं, यादृशं च कार्यं कुत्वतत्त्वादिकं तत्सर्वमाख्यानार्थक-णिच्यपि अतिदिश्य कंसं घातयतीति साधयति तत्र प्रकृतिप्रत्यापत्तिवचनं प्रकृति-वत्कारकविधानञ्च व्यर्थम् अकृतव्यूहपरिभाषयाऽप्प्रत्ययस्य भाविनि विनाशे तत्सहकृतकार्यस्य वधादेशस्याप्राप्त्या अथवा निमित्तस्य सहकारिरूपस्याप्प्रत्ययस्य निवृत्तौ नैमित्तिकस्य वधादेशस्यापि निवृत्या प्रकृतेः प्रत्यापत्तौ सिद्धायां निमित्तस्यापाये 'कर्तृकर्मणोः कृति २.३.६५ इति षष्ठ्या अपि निवृत्तौ द्वितीयान्ते कारके च सिद्धे प्रत्यापत्तिविधानमस्या अनित्यत्वं ज्ञापयति । तेन ज्ञापनेनास्या अनित्यत्वात्प्रष्टा इत्यादावप्रवृत्या प्राप्तस्य तुकः श्रवणरूपस्य दोषस्य निवारणाय "अवश्यमत्र तुग-भावार्थो यत्नः कर्तव्य इति कथनं भाष्यकारस्यादृष्टोपायान्तरस्य सुसंगतमेवेति चेत्तर्हि परिभाषाया अस्या अभावे प्रत्ययोत्तरपदयोश्चेति सूत्रस्यान्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति परिभाषाया भाष्यनिर्दिष्टा ज्ञापकता, अदोजग्धिर्ल्यप्तिकिति इति

---

इस परिभाषा के मानने पर एक बड़ी आपत्ति यह भी उपस्थिति होती है कि इस परिभाषा से त्व और म आदेश के निमित्त विभक्ति का सामासिक लुक् के द्वारा विनाश की संभावना में त्व और म आदेश की प्राप्ति 'त्वमावेकवचने' ७.२.९७ से नहीं रहने के कारण त्वत्पुत्रः इत्यादि में त्व और म आदेश करने के लिए 'प्रत्ययोत्तरपदयोश्च ७.२.९७ चरितार्थ हैं; इसी प्रकार 'प्रजग्ध्य' में ल्यप् आदेश के द्वारा तादि कित् के विनाश की संभावना में इस परिभाषा के द्वारा प्रतिषिद्ध जग्धादेश के लिए "अदो जग्धिर्ल्यप्तिकिति" २.४.३६ का ल्यप् ग्रहण भी आव-श्यक हैं; फिर भाष्य में उन दोनों की जो ज्ञापकता और अन्तरङ्ग की बाधकता बतायी गई है, वह खण्डित हो जायगी । अतः उस भाष्य के विरोध से बचने तथा उसकी रक्षा के लिए इस परिभाषा को दूर से ही नमस्कार करना चाहिए ।

**किञ्चैषा भाष्ये न दृश्यते। तदुक्तम 'सिद्धवत्'सूत्रे कैयटेन। निमित्तापाये नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृतानाश्रयणादिति ॥**

---

सूत्रे ल्यब्ग्रहणस्य अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते इति परिभाषाज्ञापकता च भाष्योक्तैव प्रमाणत्वेन गृह्यताम्। यदीयमकृतव्यूहपरिभाषा स्यात्तर्हि सामासिकलुका त्वाद्यादेशनिमित्तस्य सुपो विनाशे पूर्वमप्राप्त्या जातस्य वा त्वाद्यादेशस्य सुपो निमित्तस्य विनाशे निवृत्या त्वत्पुत्र इत्यादौ त्वाद्यादेशविधानाय सूत्रस्य चारितार्थ्येन तस्य ज्ञापकताप्रदर्शनमसंगतं स्यात्। एवमेवानया ल्यपा तादिप्रत्ययस्य विनाशे भाविनि तन्निमित्तस्य ल्यबादेशस्य पूर्वमप्राप्त्या अथवा प्र+अद्+त्वा इत्यत्रस्यायां जातस्य तादिनिमित्तकस्य ल्यपो क्त्वो निमित्तस्य ल्यबादेशानन्तरं विनाशे जाते निवृत्या जग्ध्यादेशार्थम् 'अदो जग्धि' रित्यत्र ल्यब्ग्रहणस्य चारितार्थ्येन तस्य भाष्योक्ता परिभाषाज्ञापकताऽसंगता स्यात्। अतः परिभाषेयं नाङ्गीकार्येति तात्पर्यम्।

यदि चान्तरङ्गानपि विधीन् इत्यादेरस्यामेवान्तर्भाव इति वदतां दीक्षितादीनां मतेनाकृतव्यूहपरिभाषाज्ञापनमुखेनैव तयोर्ज्ञापकता भाष्यकाराभीष्टेति स्वीकारे न भाष्यविरोध इति प्रोच्यते तर्हि अस्या परिभाषाया भाष्येऽदर्शनमेवाभावहेतुरिति मन्यताम्। यदीयं भाष्यकाराभिमता स्यात्तदास्याः क्वाप्युल्लेखो ऽवश्यं स्याद्भाष्ये। असिद्धवदत्राभात् ६.४.२२ इति सूत्रभाष्यस्य प्रदीपे कैयटेनापि निमित्ताभावे नैमित्तिकस्याप्यभाव इत्यस्याः परिभाषायाः भाष्यकारेणाश्रयणं न कृतमित्यङ्गीकृतम्। तथाहि-दृश्यताम् **प्रदीपः पपुष** इति। ननु चान्तरङ्गत्वादिटा भाव्यम्। नच सम्प्रसारणे कृतेऽिटो निवृत्तिः, निमित्ताभावे नैमित्तिकस्याप्यभाव इत्यस्याः परिभाषाया भाष्यकारेणानाश्रयणात्। तथा च 'चौ' इत्यत्रोक्तम् 'इहान्ये चौ प्रत्यङ्गस्य प्रतिषेधमारभन्ते तदिहापि साध्यम्' इत्यकारस्य निवृत्तावपि यणाद्यादेशानिवर्तनाच्चैतदुक्तम्। तथाच 'च्छ्वोः' इत्यत्रोक्तम्—अवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः, अन्तरङ्गत्वाद्धि तुक्प्राप्तिः इति कृतेऽपि शकारे कृतस्य तुकोऽनिवृत्तिं मत्वा चैतदुक्तम्। एवं तर्हि नित्यशब्ददर्शने प्रविभज्यावयवेषु कल्प्यमानेषु अन्तरङ्गबहिरङ्गभावो नास्तीति। पपा वस् अस् इति स्थिते नित्यत्वादिटं बाधित्वा सम्प्रसारणं भवति, अल्विधित्वाच्च स्थानिवत्त्वाभावादिटोऽप्रसङ्गः। अथवा सम्प्रसारणं तदाश्रयं च कार्यं बलीयो भवतीति—अत्र विषये पूर्वमिट् न प्रवर्तते॥ इति। अत्र कैयटे निमित्ताभावे नैमित्तिकस्याप्यभाव इत्यस्याः परिभाषाया भाष्यकृदनाश्रयणं स्पष्टमुक्तम्। तेन तदर्थिकाया अकृतव्यूहपरिभाषाया अप्यनाश्रयणं भाष्यकृतः सिद्धयत्येव। ''तथाच'चौ' इत्यत्रोक्तमित्या-

---

और सबसे बड़ी बात यह कि यह भाष्य में कहीं नहीं दिखती, इसकी कहीं चर्चा नहीं है। 'असिद्धवत्' ६,४.२२ सूत्र के भाष्य के प्रदीप में कैयट ने कहा है कि 'निमित्तापाये नैमित्तकस्याप्यपायः'' इस परिभाषा का भाष्यकार ने सहारा नहीं लिया है,

पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसम्बन्धे हरिः गच्छतीत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक् ॥५७॥

---

रभ्य पूर्वमिट् न प्रवर्तते इतिपर्यन्तको ग्रन्थोऽपि कैयटोक्तः परिभाषाया अभावमेव साधयति। अथ च तेन कैयटग्रन्थेन निमित्ताभावे नैमित्तिकस्याप्यभाव इत्यक्षरनिर्मित-स्वरूपायाः परिभाषाया भाष्यकृदनाश्रयणमेवोक्तं तच्च सत्यमेव नतु अकृतव्यूहाः पाणिनीया इतिस्वरूपायाः। अतएव समर्थानाम् ४.१.८२ इति सूत्रे कैयटेन स्पष्ट-मुक्तम् "एवं तर्ह्येतदनेन समर्थवचनेन ज्ञाप्यते—अस्तीयं परिभाषा—अकृतव्यूहाः पाणिनीया इति। तेन पपुषः तस्थुष इत्यादिसिद्धं भवति। अन्तरङ्गत्वात् पूर्वं कृतोऽपीडागम एतत्परिभाषाबलान्निवर्तते इति।

यदि च तत्रैव कैयटे "पपा वस् अस् इतिस्थिते इट् प्राप्नोति, सम्प्रसारणञ्च-तत्र सम्प्रसारणं बलीयः प्रतिपदविधानात् इति। तत्र कृते वलादित्वाभावादिट् नास्तीति सिद्धं=पपुष इति। परिभाषानाश्रयणे पपुष इत्यादिसिद्धेरुपायान्तरमपि दर्शितमिति नास्त्यस्याः परिभाषायाः स्वीकृतेरनिवार्यत्वं कैयटमतेनापीत्युच्यते चेत्, सत्यम्; पदावधिकान्वाख्यानमाश्रित्य पपुषः सौतिथतिरित्यादिप्रयोजनानामन्यथैव सिद्ध्या भाष्ये क्वापि कण्ठतः स्वरूपेणानुक्ताया अकृतव्यूहपरिभाषाया अस्वीकार एव ज्यायान्। हरिर्गच्छतीत्यादौ च वाक्यसंस्कारपक्ष एवाश्रयितव्यः। एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरमवलम्ब्य दोषदानमनुचितमितिरीत्या तं पदसंस्कारपक्षम्, यत्र किल पदानि संस्कृत्य प्रयुज्यन्ते, समाश्रित्य पूर्वं "हरिः" इति संसाध्य ततस्तस्य गच्छतीत्यनेन सम्बन्धे हरिः गच्छतीति स्यादिति दोषापादनं यद्यप्ययुक्तं तथापि दोष-

---

या इसे नहीं माना है। वाक्यसंस्कारपक्ष में "हरिः" इत्यादि में विसर्ग होने के बाद "गच्छति" के साथ सम्बन्ध करने पर "हरिः गच्छति" यही साधु प्रयोग है। अतः पदसंस्कार पक्ष में "हरिर्गच्छति" बनाने के लिए 'अकृतव्यूह' परिभाषा मानने की आवश्यकता नहीं है। अथवा ऐसी भी कल्पना की जा सकती है कि "हरिर्गच्छति" ऐसे प्रयोगों के विषय में सर्वदा वाक्यसंस्कारपक्ष का ही आश्रयण किया जाय पद संस्कार का आश्रयण न किया जाय। एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरमवलम्ब्य दोषदानमयुक्तम्" यह व्याकरण जगत् में प्रसिद्ध हैं। इसलिए पहले पदसंस्कारपक्ष में 'हरिः' बनाकर फिर गच्छति' के साथ जोड़ने पर विसर्ग के निमित्त अवसान के विनाश की सम्भावना में पहले ही विसर्ग न करने के लिए या किये हुए विसर्ग की भी अवसानत्व के हट जाने पर निवृत्ति के लिए 'अकृतव्यूह' परिभाषा की आवश्यकता नहीं है। वाक्यसंस्कारपक्ष में "हरि सु गम् ति" इस साधनिका में अवसान में रेफाभाव के कारण स्वतः विसर्गाभाव सिद्ध हो जाएगा।

दानदुर्ग्रहगृहीतैर्भवद्भिर्यदि तत्र तादृशो दोषो दर्शयिष्यते तर्हि पदसंस्कारपक्षे हरिः गच्छतीति विसर्गघटितरूपमेवेष्टमिति तस्यैव साधुत्वादिति नागेशस्य पातञ्जले महाभाष्ये कृतभूरिपरिश्रमस्य महाभाष्याक्षरस्वारस्यपालनप्रतिज्ञस्य सगर्वोक्तिः— हरिः गच्छतीत्येव साधु तद्विषये "एकतरपक्षेण लक्ष्यसिद्धाविति पूर्वोक्तन्यायबलात्तत्-पक्षस्यानाश्रयणं वेति ।

दीक्षितमतेनाकृतव्यूहपरिभाषासत्वे गच्छतीत्यादि शब्दस्य परसंयोजनेना-वसानविनाशे भाविनि पूर्वं खरवसानयोर्विसर्जनीय इति विसर्गाप्राप्त्या हरिर्गच्छतीति पदसंस्कारपक्षेऽपि जायते । कैयटमतेन "हरिः" इत्यत्र जातस्यापि विसर्गस्य गच्छतीत्यादिना सम्बन्धे जातेऽवसानस्य निमित्तस्यापाये प्रत्यापत्या हरिर्गच्छतीति भवति पदसंस्कार पक्षेऽपि । नागेशमतेन तु वाक्यं संस्क्रियते यस्मिन् तस्मिन् वाक्य-संस्कारपक्षे हरिशब्दात् सौ गम् धातोर्लटितिपि सोरुकारस्येत्संज्ञालोपे हरिस् गम् ति इत्यवस्थायां शपि अनुबन्धलोपे मकारस्य 'इषुगमियमां छः' ७.३.७७ इति छत्वे 'छे च' ६.१.७३ इति तुकि श्चुत्वे पूर्वखण्डे सकारस्य रुत्वे हरिर् गच्छतीत्यवस्थाया-मवसानत्वाभावेन विसर्गाप्राप्त्या हरिर्गच्छतीति यद्यपि भवति तथापि, पदसंस्कारपक्षे "हरिः" इति पदस्य पृथक्सिद्ध्या तस्य च पृथक्सिद्धिं गतेन गच्छतिपदेन सम्बन्धे अकृतव्यूहपरिभाषायाः असत्वे हरिः गच्छतीत्येव स्यात् । यदपि नागेशेन "हरिः गच्छतीत्येव साधु पदसंस्कारपक्षे" इत्युक्तं तन्न 'विसर्जनीयस्य सः' ८.३.३४ इति सूत्रस्थभाष्यविरोधात् । तत्र हि खरीत्यस्यानुवृत्यभावे 'विसर्जनीयस्य सः' ८.३.३४ इत्यत्र स्थानिमात्रं निर्दिष्टं न तु निमित्तविशेष इति मत्वा प्रोक्तम्" इह कस्मान्न भवति वृक्षः प्लक्ष इति । संहितायामिति वर्तते । एवमप्यत्र प्राप्नोति । किं कारणम् ? परः संनिकर्षः संहिता (१.४.१०९) इत्युच्यते स यथैव परेण 'परः सन्निकर्षः एवं पूर्वेणापि । एवं तर्ह्यनवकाशावसानसंज्ञा संहितासंज्ञां बाधिष्यते । अथवा संहिता-संज्ञायां प्रकर्षगतिर्विज्ञास्यते—साधीयो यः परः सन्निकर्ष इति । कश्च साधीयः ? यः पूर्वपरयोः ।

यद्येवानवकाशावसानसंज्ञां संहितासंज्ञा बाधतेऽथापि संहितासंज्ञायां प्रकर्ष-गतिर्विज्ञास्यते उभयथा दोषो भवति । इष्यन्ते इत उत्तरमवसाने संहिताकार्याणि, तानि न सिद्ध्यन्ति-अणोऽप्रगृह्यस्यानुनासिकः(८.४.५७) इति । एवं तर्ह्याचार्यप्रवृत्ति-र्ज्ञापयति-न सर्वस्य विसर्जनीयस्य सत्वं भवतीति यदयं खरवसानयोः विसर्जनीयः (८.३.१५) इत्याह इतरथा खरवासनयोः सो भवतीत्येव ब्रूयात् । तच्च लघु भवति विसर्जनीयस्य स इत्येतच्च न वक्तव्यं भवति । अवश्यं "शर्परे विसर्जनीयः"(८.३.३५) इत्यत्र प्रकृतिनिर्देशार्थं विसर्जनीयग्रहणं कर्त्तव्यम् । अथेदानीमपिरसान्निध्यार्थं पुरस्ता-दपक्रक्ष्यते—खरवसानयोः स इत्यत्रैव; एवमपि 'कुप्वोः क पौ च' ८.३.३७ इत्येवमा-दिनाऽनुक्रमणेन व्यवच्छन्नं भोभगोअघोअपूर्वस्य योऽशि (८.३.१७) इत्यत्र रुग्रहणं कर्तव्यं स्यात् । एवमप्येक विसर्जनीयग्रहणं व्याजो (आधिक्यादनृतत्वाद्वाऽपठनीयो)

भवति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यो ''न सर्वस्य विसर्जनीयस्य सत्वं भवतीति'' एवमनैकान्तिकं ज्ञापकम्, एतावज्ज्ञाप्यते ''न सर्वस्य विसर्जनीयस्य सत्वं भवतीति, तत्र कुत एतदिह भविष्यति वृक्षस्तत्र प्लक्षस्तत्रेति, इह न भविष्यति-वृक्षः प्लक्ष इति । एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति ''नास्य विसर्जनीयस्य सत्वं भवतीति यदयं शर्परे विसर्जनीय इत्याह । इति । अयमस्य भाष्यस्य सारांशः—विसर्जनीयस्य सः ८.३.३४ इति सूत्रे खरवसानयोर्विसर्जनीयः ८.३.१५ इतिसूत्रात् मण्डूकप्लुत्या खरीत्यस्यानुवृत्यभावेऽपि न दोषः, खरवसानयोर्विसर्गं विधाय तस्यानेन सत्वविधानादन्यतरस्मिन्नेव सत्वं भविष्यति यदि खरि परेऽवसाने चोभयोरपि सत्वं स्यात्तर्हि विसर्गविधानं व्यर्थं स्यात् खरवसानयोः स इत्युक्त्योभयत्र सत्वविधानेनैव सिद्धेः । तत्रान्यतरस्मिन् सत्वमिति स्वीकारपक्षेऽपि केवलस्य अवसाने जातस्य विसर्गस्य सत्वम् इति न स्वीकर्तुं शक्यते तथा सति 'शर्परे विसर्जनीयः' ८.३.३५ इति विसर्गविधानस्य वैयर्थ्यप्रसङ्गः । शरः खरन्तर्गततया तत्र खरवसानयोरिति जातस्य विसर्गस्य सत्वाप्राप्त्या विसर्गस्य स्वतः सिद्धेः । तथाच ''शर्परे विसर्जनीयः इति ज्ञापनात् खर्येव ''विसर्जनीयस्य सः इत्यस्य प्रवृत्तिसिद्धौ तत्र खरीत्यस्यानुवृत्तिरस्वीकृता । न च वासः क्षौमम् अद्भिः प्सातम् इत्यादौ जिह्वामूलीयोपध्मानीययोः प्राप्तयोर्बाधनार्थं शर्परे विसर्जनीयविधानं चरितार्थमिति वाच्यम् तावन्मात्रफलसिद्धये 'कुप्वो ≍ क ≍ पौ चाशरि' इति न्यासस्य पर्याप्तत्वात् । इत्थं भाष्ये खरीत्यनुवृत्तिः 'शर्परे विसर्जनीय' इत्यस्य ज्ञापकत्वस्वीकृत्या न कृता । यथा किल नागेशेन पदसंस्कारपक्षे हरिः गच्छतीत्यस्य साधुत्वं स्वीकृतं तथा यदि अवसानरूपनिमित्तस्य भाविनि नाशेऽपि तन्निमित्तकस्य विसर्गस्य पूर्वं प्रवृत्तिः स्वीक्रियेत अथवा अवसानत्वात् पूर्वं जातस्य विसर्गस्यावसानापायेऽपि निवृत्तिरनङ्गीक्रियेत तदा पदसंस्कारपक्षे पूर्वं कः इत्यादौ विसर्गमवसाननिमित्तकं कृत्वा त्सरुरित्यादिना पश्चात्सम्बन्धे कः त्सरुरित्यादौ सत्वाभावार्थं 'शर्परे—विसर्जनीयः' इति सूत्रस्य चारितार्थ्यसंभवाद् भाष्योक्तं तस्य ज्ञापकत्वप्रतिपादनं न सगच्छेत । हरिर्गच्छतीत्येव साधु इति नागेशकथनं न संगतं प्रतिभाति । अतः परिभाषाया अस्वीकारपक्षे एतद्विषये पदसंस्कारपक्षस्याश्रयणमेव स्वीकार्यम् । वाक्संस्कारपक्षे च हरिर्गच्छतीत्येव भवतीति न 'विसर्जनीयस्य सः' ७.३.३४ इति सूत्रस्थभाष्यविरोधः । न चैवं परिभाषास्वीकर्तॄणां मतेन परिभाषाया अनित्यत्वेन ''हरिः ओम्'' इत्यस्य कथंचित् सिद्धावपि एतद्विषये पदसंस्कारपक्षानाश्रयणमिति नागेशमतेन तु तस्य प्रयोगस्य का गतिरिति चेत् वैदिकसंप्रदायसिद्धशिक्षाकारवचनबलात् पुरुषएवेदं सर्वमित्यादौ सकारात्पूर्ववर्तिनोऽनुस्वारस्य 'ग्वङ्'' इत्युच्चारणविशेषवत्साधुत्वमङ्गीकार्यम् ।

वस्तुतस्तु अनुकम्पितो वागाशीर्दत्त इत्यर्थे वागाशीर्दत्त शब्दात् बह्वचो मनुष्यनाम्नष्ठज्वा ५.३.७८ इति ठच् प्रत्यये ठकारस्येकि एकाक्षरपूर्वपदानामुत्तर-पदलोपो वक्तव्यः (वा० २७६२ तद्धितः प्रागिवीयप्रकरणम् सि० कौ० तत्त्वबोधिनी पृ० ३७०) इति उत्तरपदस्य लोपे वाग् इक इत्यत्र 'यचि भम्' १.४.१८ इति भत्वे जाते तेन भत्वेन कुत्वजश्त्वनिमित्तस्य पदत्वस्यापाये नैमित्तिकस्य 'चोः कुः' ८.२.३० इति कुत्वस्य 'झलां जशोऽन्ते' ८.२.३ इति जश्त्वस्य च निवृत्तौ वाचिक इति सिद्ध्यति । अकृतव्यूहपरिभाषाऽस्वीकारे तयोर्निवृत्तेरपायाभावात् वागिक इति स्यात् । नचात्र भत्वे कर्तव्ये आशीर्दत्तस्य ठाजादौ परे लुप्तस्य अचः परस्मिन्— १.१.५७ इति स्थानिवद्भावाद् आशीर्दत्तस्य भत्वेऽपि वागित्यत्र गकारस्य भत्वं दुर्लभमिति वाच्यम् लोपस्यादेशस्येह अज्झलुभयस्थानिकतया अचः स्थानिकत्वा-भावात् स्थानिवत्त्वाप्राप्तेः । अतस्तत्सिद्धयेऽकृतव्यूहपरिभाषा स्वीकार्या । नच परिभाषास्वीकारे अनुकम्पितः षडङ्गुलिदत्त इति विग्रहे षडिक इति न सिद्ध्येत् तत्रापि जश्त्वस्यापायात् षषिक इत्यापद्यते इति वाच्यम अत्र षडङ्गुलिदत्तशब्दात् बह्वचो मनुष्यनाम्नष्ठज्वा ५.३.७८ इति ठच्प्रत्यये तस्येकि षषष्ठाजादिवचनात्-सिद्धम् इति वार्तिकप्रदर्शितरीत्या टाजादावूर्ध्वं द्वितीयादचः ५.३.८३ इति द्वितीया-दचः 'षड' इत्यस्मात् परत्वेन विद्यमानस्य ङ्गुलिदत्त इत्यस्य लोपे षड इत्यवस्थायां डघटकाकारस्य 'यस्येति लोपे तस्य च लोपस्य अचः स्थाने जातत्वाद्भत्वे कर्तव्येऽचः-परस्मिन्निति स्थानिवद्भावे ऽकारस्य भत्वेऽपि तेन ड् इतिव्यञ्जननिष्टस्य अन्तर्व-र्तिन्या विभक्त्या सिद्धस्य पदत्वस्य जश्वनिमित्तस्यापहाराभावादकृतव्यूहपरिभाषा-विषयत्वाभावेनादोषात् । नच वाचिक इत्यत्रेव'षडिक' इत्यत्रापि एकाक्षरपूर्वपदत्वात्कथं नोत्तरपदलोप इति वाच्यम् षषष्ठाजादिवचनात्सिद्धम् इत्यनेन सूच्यते यत् 'षषष्ठा-जादावूर्ध्वं द्वितीयादचः' (सि० २७६३) इति नूतनं वार्तिकम् एकाक्षरपूर्वपदाना-मुत्तरपद लोपो वक्तव्यः (सि० २७६२) इत्यस्य बाधकत्वेन स्वीकर्तव्यम् । तेन षडिक इत्यत्र प्राप्तस्योत्तरपदलोपस्य षषष्ठाजादावूर्ध्वं द्वितीयादचः इत्यनेन बाधात् उत्तर-पदलोपाप्राप्तेः । अथ चाकृतव्यूहपरिभाषाया अभावे 'ष्ठा' इत्यादौ 'धात्वादेः षः सः' ६.४.६४ इति षकारस्य सकारे कृते षकारनिमित्तकस्य ष्ठुना ष्टुरिति ष्टुत्व-

---

वस्तुतः यह परिभाषा माननी चाहिए। नहीं मानने पर कई दोष आखड़े होंगे—यथा ष्ठा गतिनिवृत्तौ से बननेवाले रूप 'स्थाता' और 'स्थानम्' में थकार का श्रवण नहीं होगा। इसलिए यह परिभाषा माननी चाहिए; जिससे कि ष्टुत्व के निमित्त भूत मूर्धन्यषकार के विनाश की सम्भावना में ष्टुत्व न हो या जात ष्टुत्व की भी निमित्त षकार के अपाय में निवृत्ति होकर नैमित्तिक टकार का भी अपाय हो जाय और थकार आजाय।

'विभाजयितृ' शब्द णिजन्त से तृच् प्रत्यय करने पर बना है। इस शब्द से "विभाजयितुर्णिलोपश्चाञ् च वाच्यः" (वा० २१९१ सि० कौ०) इस वार्तिक से अञ् प्रत्यय और णिलोप होने से आदि अच् की वृद्धि करने पर 'वैभाजित्रम्' बनता है। यदि यह परिभाषा न हो तो अन्तरङ्गत्वात् णिप्रत्यय को गुण और अयादेश करने पर 'अलोन्त्यस्य' १.१.५२ के बल से यकार मात्र का लोप (पूर्वोक्तवार्तिक से) होगा फिर 'वैभाजेत्रम्' जैसा अनिष्ट प्रयोग बनेगा। जब परिभाषा मानते हैं; तब तो गुण और अयादेश के निमित्त भूत णि का लोप के द्वारा विनाश की संभावना होने से पहले न गुण होगा और न अयादेश। अतः णि के इकार का ही लोप होगा और दोष नहीं होगा। 'यलोप' का विधान न करके णिलोप के विधान के लिए णिग्रहण करने के कारण पहले गुणायादेश नहीं होंगे, ऐसा तो नहीं कह सकते, क्योंकि णि से अतिरिक्त इनि आदि प्रत्यय से निष्पन्न 'विभाजिन्' प्रातिपदिक से आचार क्विप् करके तदन्त से तृच् प्रत्यय करने पर सिद्ध 'विभाजयितृ' से यलोप और अञ् प्रत्यय की उत्पत्ति के निवारण के लिए णिग्रहण करना आवश्यक है। इसलिए 'अकृतव्यूह' परिभाषा मानना ही निर्दुष्ट पक्ष है। परिभाषा मानने पर "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" तथा "अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते" इन दो परिभाषाओं के नहीं करने में लाघव भी होता है। अनेक कष्ट कल्पना भी नहीं करनी पड़ती है।

"हरिः ओम्" यह प्रयोग तो वैदिक सम्प्रदाय में प्रचलित होने के काहण परिभाषा की अनित्यता मानकर सिद्ध हो जायगा। परिभाषा के मानने का ही फल है कि अनुकम्पितः "वागाशीर्दत्तः—वाचिक;" में चकार का श्रवण हुआ। यहाँ ठच् प्रत्यय, उसको इक् आदेश करने पर जब 'आशीर्दत्त' का लोप हुआ, तब 'च' आ गया। "वृक्षो वृक्षः सिच्यते" यहाँ पूर्व खण्ड में "उत्व" विधि इसी परिभाषा की कृपा से हुई। अन्यथा यहाँ "सर्वस्य द्वे" से द्वित्व कर्तव्य में 'पूर्वत्रासिद्धम्' का "पूर्वत्रासिद्धीयमद्वित्वे" से निषेध हो जाने के कारण विसर्गान्तिकार्यो के करने पर 'सर्वस्य द्वे' से द्वित्व होता, फिर पूर्वखण्ड में रु के अभाव के कारण उत्व नहीं होता, और रूपसिद्धि नहीं होती। "पूर्वत्रासिद्धीयमद्वित्वे" को अनित्य मानकर पूर्वोक्तरूप की सिद्धि करने की अपेक्षा इस परिभाषा को मानकर आसानी से उक्त प्रयोग—जैसे अनेकों प्रयोगों की सिद्धि का मार्ग प्रशस्त करना ही अच्छा है। जब यह परिभाषा मानते हैं; तो पूर्व खण्ड में द्वित्व के कारण होने वाले अवसान भङ्ग और खर्परत्वाभाव के कारण विसर्ग कार्य पहले नहीं करते हैं, या किये गये विसर्ग की भी निमित्ताभाव के कारण निवृत्ति हो जाती है। इस तरह रु सम्बन्धी रेफ के आ जाने से उत्वादि की निष्पत्ति हो जाती है। अतः अकृतव्यूह' परिभाषा माननी ही चाहिए। इति शिवम् ॥५७॥

अन्तरङ्गादप्यपवादो बलीयान् । तत्रापवादपदार्थमाह—

**[1]येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥५८॥**

---

निष्पन्नस्य ठकारस्यापि निवृत्तौ स्थाता स्थास्यतीत्यादौ थकारश्रवणं भवति । एवं सुष्ठु हिनस्तीति सुहिन् इत्यादौ सुहिंस् इत्यस्मात् क्विपि तस्य सर्वापहारे प्रातिपदिकत्वात् सौ तस्य हल्ङ्यादिलोपे सकारस्य संयोगान्तलोपेन विनाशे जाते 'नश्चपदान्तस्य झलि' ८.३.२४ इति सकाररूपझल्निमित्तकस्यानुस्वारस्यापि निवृत्या नकारस्य श्रवणं जायते ।

विपूर्वकात् भज्धातोर्णिचि उपधावृद्धौ विभाजि इत्यस्य 'सनाद्यन्ताः' ३.१.३२ इति धातुत्वे 'ण्वुल्तृचौ' ३.१.३३ इति तृच्प्रत्यये 'आर्धधातुकस्येड्वलादेः' ७.३.३५ इतीटि गुणायादेशे निष्पन्नात् विभाजयितृ शब्दात् विभाजयितुर्धर्म्यमित्यर्थे विभाजयितुर्णिलोपश्च (४.४.४६ भाषावृत्ति वा० २) इति अञ्प्रत्यये णिलोपे आदिवृद्धौ ऋकारस्य यणि वैभाजित्रमिति सिद्ध्यति । अकृतव्यूहपरिभाषायां सत्यां तु अञ्-प्रत्यये जाते तत्संन्नियोगशिष्टेन लोपेन गुणादेशयो निमित्तस्य (कारणमात्रस्य निमित्तपदेनग्रहणात्) विनाशे भाविनि तयोः पूर्वमेवाप्रवृत्या लोपः सिद्ध्यति अथवा तया जातयोरपि तयोर्निवृत्या णिलोपः सिद्ध्यति । परिभाषाया अभावे तु अन्तरङ्गत्वाण्णेर्गुणायादेशयोः कृतयोः अलोन्त्यस्य इति यकारमात्रस्य लोपापत्तिः । एवञ्चाकृतव्यूहपरिभाषा कर्त्तव्या । तथाचान्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते इति परिभाषा च न कर्तव्या भवतीति लाघवमिति शिवम् । ५७ ॥

## येन नाप्राप्ते—५८

अन्तरङ्गविषयकप्राबल्याप्राबल्यनिरूपणानन्तरं "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इत्यत्रोत्क्षिप्तापवादस्य बलवत्तमत्वं प्रतिपादयितुमुपक्रमते । **अन्तरङ्गादप्यपवादो बलीयान्** इति । अन्तरङ्गापेक्षयापवादोऽधिकबलवान् भवति । तत्र कोऽपवादपदार्थ इति जिज्ञासायां प्राह येन **नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको**

---

१. विजयालङ्कृते प्राचीनसंस्करणद्वयेऽसावेवपङ्क्तिःपरिभाषास्पदेऽभिषिक्ता वर्तते । १९६८ ख्रिष्टाब्दप्रकाशिते संस्करणे च येन नाप्राप्ते इत्येव परिभाषास्थाने लिखिता वृहच्छास्त्रार्थकलाटीकाकृता तूभे अपि परिभाषात्वेनाङ्गीकृते । यद्यपि डा० डाण्डेकर प्रकाशिते पूना संस्करणेऽन्तरङ्गादप्यवाद इत्येव परिभाषा स्थाने पठिता तथापि व्याडिशाकटायनचान्द्रहैमपुरुषोत्तमपरिभाषापाठनीलकण्ठशेषाद्रिनाथपरिभाषावृत्तौ भोजराजसूत्रे च "येन नाप्राप्ते" इत्येषैव पठितेति मया पि सैव परिभाषात्वेन स्वीक्रियते । अभ्यंकरमहोदयेनापि तत्वादर्शाभिधव्याख्यायां तत्रापवादपदार्थमाहेत्यवतरणम्, परिभाषा तु **येन नाप्राप्ते**ति स्वीकृत्य येन नाप्राप्ते इत्येषैव परिभाषा रूपेण मुद्रापिता

**प्राप्त इति भावे क्तः। येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यकप्राप्तावित्यर्थः नञ्द्वयस्य प्रकृतार्थदाढ्र्यबोधकत्वात्। एवं च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छि**

---

**भवतीति**। प्राप्त इत्यत्र नपुंसके भावे क्त इति क्तः। न प्राप्तमप्राप्तम्। न अप्राप्तम् नाप्राप्तम् नाप्राप्ते निषेधार्थकस्य नशब्दस्य सुप् सुपेति अर्थात् सह सुपा २.१.३ इत्यत्र 'सह' इतियोगविभागेन नैकधेतिवत् **समासः। नञ् अप्राप्तशब्दस्य नञ्** २.२.६ **इति समासे** नञो 'नलोपो नञः' ६.२.७३ इति लोपे 'तस्मान्नुडचि' ६.३.७४ इति नुटि अनप्राप्तमित्यापत्तेः। येनेति कर्तरि 'कर्तृकरणयोस्तृतीया' २.३.१८ इति तृतीया। अत्र 'कर्तृकर्मणोः कृति' २.३.६५ इति षष्ठी न 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' २.३.६९ इति निषधात्। 'नाप्राप्ते' इत्यत्र एकस्य नञः द्वितीयस्य च नञर्थकस्य नकारस्य प्रयोगसत्वात् प्रकृतार्थदाढ्र्यबोधकत्वे यत्कर्तृकावश्यकप्राप्तावित्यर्थः। मूले **नञ्द्वयस्य**=नञर्थद्वयस्येत्यर्थः। अथवा पृषोदरादित्वान्नञो नलोपाभावः कल्प्यः। अत्र पक्षे नञ्द्वयस्येति यथोक्तमेव पर्याप्तम्, न तत्र लक्षणा। एवञ्च यत्कर्तृकावश्यकप्राप्तौ यो विधिरारभ्यते स विधिः,तस्य अवश्यप्राप्तस्य विधेर्बाधको भवति। यथा 'कर्मण्यण्' ३.२.१ इति सूत्रकर्तृकावश्यकप्राप्तौ सत्याम् 'आतोऽनुपसर्गे कः' ३.२.३ इति विधिरारभ्यते, स च कविधिः अवश्यप्राप्तस्याण्विधेर्बाधकः अपवादो भवतीति लक्षणसमन्वयः। यत्र यत्र गां ददातीत्यादौ कः प्राप्नोति तत्र तत्र सर्वत्र कर्मण्यण् ३.२.१ इत्यणः प्राप्तिरस्त्येव। अतः कर्मण्यणित्यस्यावश्यप्राप्तौ सत्यामारभ्यमाणः कविधिरनवकाशत्वादुत्सर्गस्याण्विधेर्बाधक इति निरवकाशो विधिरपवादः। सामान्येन कार्यविधायकः उत्सर्गः, विशेषेण च कार्यविधायकोऽपवाद इति सरलार्थः। एतदेव नव्यन्यायभाषया प्राह—एवञ्च विशेषशास्त्रोद्देश्येत्यादिना। विशेषशास्त्रोद्देश्यं चेदं

---

**येन नाप्राप्ते—५८**

अन्तरङ्ग से भी अपवाद शास्त्र बलवान् होता, यह "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" में कहा गया है। उसमें अपवाद पदार्थ बताते है, अर्थात्, यह समझाते हुए लिखते हैं कि अपवाद किसे कहते हैं? येन नाप्राप्ते...बाधको भवति"। प्राप्त में भाव में क्त प्रत्यय है। येन में कर्ता में तृतीया है। इसलिए "येन नाप्राप्ते" इसका यत्कृर्तृक आवश्यक प्राप्ति में "यह अर्थ है।" "आवश्यक" यह अर्थ इस तरह लब्ध हुआ "न प्राप्तम्" अप्राप्तम् नञ् समास हुआ; फिर न अप्राप्तम् नाप्राप्तम् द्वितीय नञ् समास में पृषोदरादित्वान् नञ् का लोप नहीं हुआ। "दो नञ्" प्रकृत अर्थ में दृढ़ता उपस्थित करता है। अतः आवश्यक अर्थ का लाभ हुआ। यत्कर्तृक आवश्यक प्राप्ति में जो विधि (सूत्र) प्रारम्भ करते हैं; वह उसका बाधक होता है। उस सामान्य शास्त्र का विशेष शास्त्र से बाध होता है; जिस सामान्य शास्त्र के उद्देश्य में विशेष शास्त्र का उद्देश्य प्रविष्ट रहता है।

न्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः। तदप्राप्तियोग्येऽ

विशेषधर्मावच्छिन्नमिति कर्मधारयः । तस्मिन् वृत्तिर्यस्येति बहुव्रीहिः । तादृशो यः सामान्यधर्मः इति कर्मधारयः तेनावच्छिन्नमुद्देश्यं यस्य तादृशस्य शास्त्रस्य विशेष शास्त्रेण बाध इति विग्रहः । यथा विशेषशास्त्रम् 'आतोनुपसर्गे कः ३.२.३ इति, तस्योद्देश्यं कर्मोपपदकानुपसर्गकादन्तधातुः, कर्मण्युपपदेऽनुपसर्गकादादन्ताद्धातोः क इति तदर्थात्; तद्विशेषधर्मावच्छिन्नमस्त्येव तत्रानुपसर्गकादन्तधातोरवेक्षणात् तस्मिन् कर्मोपपदकानुपसर्गकादन्तधातौ वृत्तिर्यस्य अर्थाद् वर्तमानः सामान्यधर्मः कर्मोपपदकधातुत्वधर्मः तेनावच्छिन्नमुद्देश्यं यस्य वर्तते तादृशं शास्त्रमस्ति कर्मण्यण् ३.२.१ इति शास्त्रं (कर्मण्युपपदे धातोरण्विधानात्) तस्य च'कर्मण्यण्' इति शास्त्र-स्य विशेषशास्त्रेण 'आतोऽनुपसर्गे क' इत्यनेन बाधो जायते इति लक्षणसमन्वयः । एवमेव 'अतो गुणे' ६.१.९७ इत्यनेन विशेषशास्त्रेण 'अकः सवर्णे दीर्घः' ६.१.१०१ इति सामान्यशास्त्रस्य बाधो जायते; तत्रापि विशेषधर्मावच्छिन्नं विशेषशास्त्रोद्देश्यम् गुणपरकोऽपदान्तोऽत्, तद्वृत्तिः सामान्यधर्मः अगव्यवहितपूर्वत्वावच्छिन्नमकत्वम्, तद-वच्छिन्नोद्देश्यताकं शास्त्रम् अकः सवर्णे दीर्घ' इतिशास्त्रम् अकोऽकि दीर्घविधानात्, तस्य विशेषशास्त्रेण अतो गुणः ६.१.९७ इत्यनेन 'भवन्ति' इत्यादौ बाधो जायते इति ।

इत्थं व्यापकत्वं बाध्यताबीजमिति सिद्धम् । व्याप्यत्वं च बाधकताबीजमिति तदाह=**तदप्राप्तियोग्ये । तस्य**=उत्सर्गशास्त्रस्य सामान्यशास्त्रस्येति यावत् **अप्राप्तियोग्ये** स्थलेऽचारितार्थ्यमेव अपवादशास्त्रे बाधकताहेतुरस्तीति । एतादृशं किमपि स्थलं नास्ति यत्र 'कर्मन्यण्' ३.२.३ इत्यस्य प्राप्ति र्नास्ति किन्तु 'आतोऽनुपर्गे कः' ३.२.३ इत्यस्य प्राप्तिर्भवेत् सर्वत्र गोदः 'कम्बलद' इत्यादावण् प्राप्तेः । 'कर्मण्यण्' इत्यस्य तु कुम्भकारः गोसम्प्रदाय इत्यादिर्विषयस्तादृशो

पंक्ति की शब्दानुसारिणी व्याख्या इस प्रकार है—विशेष शास्त्र का उद्देश्य जो विशेषधर्मावच्छिन्न, उसमें वृत्ति है जिसकी, ऐसा जो सामान्य धर्म, उससे अवच्छिन्न है उद्देश्य जिसका, ऐसे शास्त्र का विशेष शास्त्र से बाध होता है । जैसे "आतोनुपसर्गे कः" से कर्मण्यण् का बाध होता है; क्योंकि 'कर्मण्यण्' के व्यापक उद्देश्य में "आतोऽनुपसर्गे कः" का व्याप्य उद्देश्य प्रविष्ट है। अथवा यों कहिए कि "आतोऽनुसर्गे" का उद्देश्य विशेष धर्मावच्छिन्न है; क्योंकि क प्रत्यय का उद्देश्य अनुपसर्ग कर्म उपपदवाला आदन्त धातु ही है, उसमें वृत्ति है जिसकी ऐसा सामान्य धर्म है कर्म उपपदवाला धातु; उससे अवच्छिन्न उद्देश्य है जिसका, ऐसा शास्त्र है 'कर्मण्यण्' यह शास्त्र, उसका विशेष शास्त्र (आतोऽनुसर्गे कः) से बाध होता है । इसलिए 'गोदः' बनता है, 'गोदायः' नहीं । सामान्य शास्त्र की जहाँ प्राप्ति न हो,

**चारितार्थ्यं ह्येतस्य बाधकत्वे बीजम् । अत एवा [1]'यादय' इति सूत्रे गोपायिष्यतीत्या-दावायादीन्बाधित्वा परत्वात्स्यादयः प्राप्नुवन्तीत्याशङ्क्यानवकाशा आयादयः, गोपायतीत्यादावपि शप्स्यादिः प्राप्नोति । न च सति शप्यसति वा न विशेषः । अन्यदिदानीमिदमुच्यते नास्ति विशेष इति । यदुक्तमायादीनां स्यादिभिरव्याप्तोऽ-वकाश इति स नास्त्यवकाश इति भाष्ये उक्तम् । एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नास्तीति सममेव ।**

---

वर्तते यत्र 'आतोऽनुपसर्गे कः' इत्यस्य प्राप्तिर्नास्तीति । एतादृशमचारितार्थ्यमेव तस्य बाधकतां विदधातीति भावः । 'अकः सवर्णे दीर्घः' ६.१.१०१ इत्यस्याप्राप्तियोग्ये स्थलेऽचारितार्थ्यमेव 'अतो गुणे' ६.१.९७ इत्यस्य बाधकत्वहेतुः । 'पचन्ति' 'तुदन्ति' 'दीव्यन्ति' 'यः' 'स' इत्यादौ सर्वत्र, यत्र यत्र 'अतोगुणे' ६.१.९७ इति प्राप्नोति, तत्र तत्र 'अकः सवर्णे दीर्घः'६.१.१०१ इत्यस्य प्राप्तेः। अकः सवर्णे'-इत्यस्य विषयस्तु दैत्य+अरिरित्यादि 'रतोगुणे' इत्यनेनास्पृष्टो वर्तत इति न तस्य तदप्राप्तियोग्ये-ऽचारितार्थ्यम् ।

विचार्य दृश्यते चेदिदं बाधबीजं चतुर्विधं प्रतीयते । तत्र प्रथमः प्रकार उपरि वर्णितः—तदप्राप्तियोग्येऽचारितार्थ्यमित्येवंरूपः व्याख्यातश्च । एतादृशस्थले 'हि उत्सर्गशास्त्रस्योद्देश्येऽपवादशास्त्रस्य प्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन संकोचो विधीयते । तेन 'कर्मण्यण्' ३.२.१ इति शास्त्रस्य कर्मण्युपपदेऽनुपसर्गकादन्तेतरधातोरण् इत्यर्थ, सम्पद्यते । अतएव हल्ङ्यादिसूत्रस्थसुपदार्थे सम्बुद्धौ च, ७.३.१०६ इति शास्त्रस्य प्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन संकोचः क्रियते । तेन हे रमा+सु इत्यवस्थायां हल्-ङ्यादिलोपाप्रवृत्या सम्बुद्धौ च ७.३.१०६ इत्याप एत्वे एङ्ह्रस्वात्सम्बुद्धेः ६.१.६९

---

ऐसे स्थल में अचिरितार्थ होना ही अपवाद शास्त्र की बाधकता में बीज है । अतएव "आयादयः" ३.१.३१ सूत्र के भाष्य में कहा गया कि 'गोपायिष्यति में आयादि को बाधकर परत्वात् 'स्यादि' आदेश प्राप्त होते हैं" इस तरह की आशंका करके आयादि अनवकाश हैं, 'गोपायति' इत्यादि में भी शप् स्यादि प्राप्त होते हैं, शप् के होने या न होने पर यहाँ कोई विशेषता नहीं दिखती ? यह तो आप कुछ और बात कहते हैं कि विशेषता नहीं दिखती । मैंने तो कहा था कि आयादि का स्यादि से अव्याप्त अवकाश जो बताया जाता है, वह अवकाश नहीं है । इस भाष्य से व्याप्यत्वमात्र को बाधकता का बीज माना जा सकता है ।

---

१. अतएव आयादयः ३.१.३१ इत्यादिर्नास्त्यवकाश इति भाष्ये उक्तमित्यन्तो ग्रन्थः पुनःसंस्करणे तद्दानस्य चारितार्थ्यासम्भवादितिग्रन्थानन्तरं दृश्यते विजया-वृहच्छास्त्रार्थकलायुते च पुस्तके तदप्राप्तियोग्ये—ह्येतस्य बाधकत्वे बीजमित्यनन्तर-मिति ।

किञ्चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाधबोधनम् । अन्यथानवकाशत्वेनैव बाधे सिद्धे एतत्कथनस्यैव वैयर्थ्यापत्तेस्तक्रकौण्डिन्यन्यायप्रदर्शनस्यापि वैयर्थ्यापत्तेश्च । यथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः यथा चादेरपि प्रवृत्या चरितार्थेना'देः परस्ये'त्यनेना'लोऽन्त्यस्ये'त्यस्य बाधः ॥

---

इति सम्बुद्धिलोपो जायते । अत्र प्रमाणमुपन्यस्यति—अतएव आयादय इत्यादिना । द्वितीयं बाधकताबीजम् तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते-चारितार्थ्यम् । एतस्योदाहरणं तद्भवति यत्रोत्सर्गाप्राप्तियोग्यस्थलेऽपवादोऽचरितार्थो भवति किन्तूत्सर्गशास्त्रप्रवृत्तेरनन्तरं चरितार्थो जायते । एतादृशस्थलेऽपवादशास्त्रेणोत्सर्गशास्त्रस्योद्देश्ये स्वविहितकार्याश्रयातिरिक्तत्वेन सङ्कोचः क्रियते । यथा येषाम् सर्वेषामित्यादौ सर्वत्र 'ह्रस्वनद्यापो नुट्' ७.१.५४ इति नुट्शास्त्रप्राप्तिरस्तीति उत्सर्गाप्राप्तियोग्यस्थलेऽपवादशास्त्रस्य 'आमिसर्वनाम्नः सुट्' ७.१.५२ इत्यस्याचारितार्थ्यमस्ति । अथ

---

इस न्याय से सामान्य शास्त्र की प्रवृत्ति के बाद चरितार्थ होने पर भी विशेष शास्त्र के द्वारा सामान्य शास्त्र के बाध का बोध होता है । अन्यथा (व्याप्यत्वमात्र को यदि बाधकता का बीज नहीं माने, तब तो) अनवकाश होने से ही बाध सिद्ध हो जाता, यह सब कथन व्यर्थ हो जाता है और तक्रकौण्डिन्य न्याय का प्रदर्शन भी व्यर्थ हो जाता । सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम्, कौण्डिन्याय तक्रम्" अर्थात् सभी ब्राह्मणों को दही दो और कौण्डिन्य को छाछ" । इस कथन में कौडिन्य को दही नहीं दिया जाता, तक्र दान से दही दान का बाध होता है । यद्यपि दही देने के पहले या बाद में तक्र देने से तक्र दान वहाँ चरितार्थ है या तक्रदान के पहले या बाद में दही दिया जा सकता है । परन्तु तत्प्रवृत्युत्तर चरितार्थ होने की संभावना रहने पर भी यहाँ तक्र दान से जो दधिदान का बाध होता है,इससे सिद्ध है कि व्याप्यत्वमात्र बाधकता में बीज है ।

"लिटि धातोरनभ्यासस्य" ६.१.८ 'एकाचो द्वे प्रथमस्य' ६.१.१ अजादेर्द्वितीयस्य' ६.१.२ इन सूत्रों से लिट् में जब द्वित्व करते हैं; तो अजादि धातु के प्रथम एकाच् को "एकाचो द्वे प्रथमस्य इस सामान्य नियम से प्राप्त द्वित्व को बाधकर'अजादेर्द्वितीयस्य" से द्वितीय एकाच को ही द्वित्व होता है । अतएव 'ऊर्णुनाव' इत्यादि प्रयोगों में प्रथम एकाच को द्वित्व नहीं हुआ । यद्यपि यहाँ प्रथम द्विर्वचन के बाद द्वितीयद्विर्वचन सावकाश था; तथापि द्वितीय (एकाच्) द्विर्वचन से प्रथम (एकाच्) द्विर्वचन का बाध हो जाता है । जैसे कि "अलोन्त्यस्य" १.१.५२ से पहले यदि प्रवृत्त हो जाय तो 'आदेः परस्य'१.१.५४ चरितार्थ है तथापि वह 'अलोऽन्त्यस्य' का बाधक होता है । इसीलिए "उत्थानम्" में 'स्था' के सकार को ही पूर्वसवर्ण हुआ 'आ' को नहीं । वैसे तो स को होने के बाद आ को भी पूर्वसवर्ण हो सकता था । इसी बात को

**तदुक्तं 'मिदचोऽन्त्यात्' इति सूत्रे भाष्ये सत्यपि सम्भवे बाधनं भवतीति । अन्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवात् ॥**

---

चोत्सर्गशास्त्रस्य नुटः प्रवृत्तेरनन्तरं यदागमन्यायेन नुड्विशिष्टस्यामो ग्रहणेन ग्रहणात्सुटश्चारितार्थ्यमस्ति तथापि सुटा नुटो बाधात् सुडनन्तरं न नुड् भवति । तदुक्तं मूले **किञ्चानेन—तद्बाधबोधनमिति । तत्प्रवृत्युत्तरम्**=उत्सर्गप्रवृत्युत्तरम् । **अपिः** भिन्नक्रमः, चारितार्थ्येऽपीतियोज्यम् ।

**अन्यथेति**=व्याप्यत्वमात्रं बाधकताबीजमिति स्वीकाराभावे । **अनवकाशत्वेन**=वैयर्थ्येनेत्यर्थः **एतत्कथनस्यैव**=येननाप्राप्तिन्यायकथनस्यैव । उत्सर्गशास्त्रेण कार्ये कृतेऽपवादस्य चारितार्थ्येऽपि उत्सर्गबाधे फलं प्रदर्शयति-**यथा प्रथमद्विर्वचनस्येत्यादिना** अजादेर्द्वितीयस्येति द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधो भवति । अतएव उर्णुनावेत्यादौ न प्रथमस्यैकाचो द्वित्वम् । तत्र 'एकाचो द्वे प्रथमस्य' ६.१.१ इति प्रथमस्यैकाचो द्वित्वे कृतेऽपि 'अजादेर्द्वितीयस्य' ६.१.२ इत्यपवादस्य चारितार्थ्यमस्ति तथापि बाधो जात इति भावः । न च द्वितीयस्यैकाचो द्विर्वचनेन यत्प्रथमस्यैकाचोद्वित्वं बाध्यते, तत्र परत्वं हेतुर्नापवादत्वमिति चेत्तदा 'आदेरपि प्रवृत्या चारितार्थ्येनादेःपरस्येत्यनेनालोऽन्त्यस्येत्यस्य बाधः, तदुक्तं **मिदचोऽन्त्यात्परः** १.१.४७ इति सूत्रे भाष्ये 'नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति—असम्भवेऽपवादैरुत्सर्गा बाध्यन्तामिति ॥ किं तर्हि ? लौकिकोऽयं दृष्टान्तः लोके हि सत्यपि संभवे बाधनं भवति । तद्यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय इति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति 'इति' **अन्यथा**=सर्वथा चारितार्थ्याभावस्यैव बाधकत्वाङ्गीकारे ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात् दधिदानोत्तरं दधिदानात्पूर्वं वा तक्रदानस्य चारितार्थ्यात् । **अतएव**=व्याप्यत्वमात्रस्य बाधकबीजत्वस्वीकारादेव विषयभेदेऽपि बाध्य-बाधकभावो जायते । तेन आमो नुट् रादेशस्तु प्रकृतेरिति विषयभेदेऽपि 'अचिर ऋतः' ७.२.१०० इति रादेशेन नुटोऽपवादत्वाद् बाधनं भाष्ये शङ्कितम् ''न तिसृचतसृ' ६.४.४ इति ज्ञापकात् रादेशो नुटं न बाधते इति च समाहितं ''तृज्वत् क्रोष्टुः ७.१.९५ इति सूत्रे भाष्ये । तृज्वत् क्रोष्टुरिति सूत्रस्थं **भाष्य**मित्थमस्तिः--नुमचिरतृज्वद्भावेभ्यो

---

''मिदचोऽन्त्यात्'' १.१.४७ इस सूत्र के भाष्य में बताते हुए कहा गया कि सम्भव याने चरितार्थ रहने पर भी बाधन होता है। अन्यथा ब्राह्मणों को दही दें और कौण्डिन्य को तक्र'' यहाँ तक्रदान से दधिदान का बाध नहीं होगा, क्योंकि दधिदान के बाद या पहले तक्रदान के चरितार्थ होने की पूर्ण सम्भावना है। अतः सिद्ध है कि पूर्णतः चारितार्थ्याभाव ही बाधकता में बीज नहीं है ; किन्तु व्याप्यत्वमात्र को भी

अत एव विषयभेदेऽप्यपवादत्वम् । अत एवाचिरादेशेन नुटोप्यपवादत्वाद्बाधमाशङ्क्य न तिस्रितिज्ञापकेन समाहितं 'तज्वत्'सूत्रे भाष्ये । तेन विषयभेदेऽपवादत्वाभाव एव बोध्यत इति कश्चित्--तन्न । विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः ॥

---

नुट् पूर्वविप्रतिषेधेन वक्तव्यः । नुमोऽवकाशः त्रपूणि, जतूनि नुटोऽवकाशः—अग्नीनां, वायूनाम् । इहोभयं प्राप्नोति त्रपूणां जतूनाम् ।। अचिरादेशस्यावकाशः।तिस्रस्तिष्ठन्ति, चतस्रस्तिष्ठन्ति ।। नुटः स एव । इहोभयं प्राप्नोति । तिसृणां चतसृणाम् ।।··· नुड्भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वा नुड्विषये 'र'प्रतिषेधात्(वा० १२) नवैतद्विप्रतिषेधेनापि सिद्ध्यति—तिसृणां चतसृणामिति । कथं तर्हि सिद्ध्यति नुड्विषये रप्रतिषेधात् । नुड्विषये रप्रतिषेधो वक्तव्यः । "इतरथा हि सर्वापवादः" (वा० १३) इतरथा हि सर्वापवादो रादेशः। स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत । तस्मान्नुड्विषये रप्रतिषेधः (वा० १४) ।। तस्मान्नुड्विषये रादेशस्य प्रतिषेधो वक्तव्यः ।। न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—न रादेशो नुटं बाधत इति यदयं 'न तिसृचतसृ' ६.४.४ इति प्रतिषेधं शास्ति नामि दीर्घत्वस्य ।।

---

बाधकता का बीज मानते हैं ; इसलिए विषयभेद में अपवादत्व हुआ करता है । इसीलिए भाष्य में 'प्रियतिसृणाम्' में 'प्रिय तिसृ+आम्' इस स्थिति में "अचि र ऋतः" ७.२.१०० से नुट् के अपवादत्वात् बाध की आशङ्का करके 'न तिसृचतसृ' इस ज्ञापक का आश्रय लेकर समाधान दिया गया ।

"न तिसृचतसृ" ६.४.४ इस ज्ञापक से विषयभेद में अपवादत्वाभाव ही ज्ञापित होता है, यह किसी का मत है परन्तु यह मत ठीक नहीं है; क्योंकि ऐसा मानने पर भाष्यकार ने विषयभेद में बाध्यबाधकभाव स्वीकार करते हुए 'विन्मतोर्लुक्' ५.३.६५ से टिलोपमात्र का जो बाध स्वीकार किया है; वह असंगत हो जायगा । भाष्यकार ने 'प्रकृत्यैकाच्' ६.४.१६३ का प्रत्याख्यान करके प्रश्न उठाया कि 'स्रजिष्ठः' में (स्रग्विन्इष्ठः) इस स्थिति में विन्मतो र्लुक् से विन् का लुक् करने पर 'स्रज्' में 'टेः' ६.४.१५५ से टिलोप हो जायगा । इसका उत्तर देते हुए भाष्यकार ने कहा कि 'विन्मतोर्लुक् ५.३.६५ में जातिपक्ष का आश्रमण करके उसे इष्ठन् निमित्तक टिलोपत्वावच्छिन्नका (सकल टिलोप का) बाधक मान लेंगे । इसलिए 'स्रज्' में टिलोप नहीं होगा । इस तरह 'स्रज्' को टिलोप से बचाने के लिए किये गये प्रकृत्यैकाच्" सूत्र का भाष्यकार ने प्रत्याख्यान कर दिया । यदि विषय भेद में बाध्य-बाधक-भाव नहीं माना जाता; तो यहाँ बाध्य-बाधकभाव कैसे माना गया; क्योंकि टिलोप 'स्रज्' को प्राप्त है और लुक् होता है विन् का । टिलोप का विषय है स्रज् और लुक् का विषय है विन् ।

(अत्रापवादत्वेन नुड्बाधशङ्का न तु येन नाप्राप्तिन्यायेन, नुटः प्रवृत्युत्तरं रादेशाप्रवृत्तेरिति भैरवमिश्रः ।)

अयं भावः—विषयभेदेऽपवादत्वस्वीकारादेव अचि रादेशेन नुटो बाधमाशङ्क्य 'न तिसृचतसृ' इति ज्ञापकान्न बाधकत्वमिति भाष्येण ज्ञायते यद्विषयभेदेऽपि बाधकत्वं भवति। यदि विषयभेदेऽपवादत्वं भाष्यकाराभिमतं न स्यात्तदा स ज्ञापकत्वमाश्रित्य नापवादः (न बाधकत्वं) इति न वदेत् विषयभेदान्नापवाद इति इत्येव ब्रूयात्।

यत्तु कश्चित्तेन भाष्येण विषयभेदेऽपवादत्वाभाव एव बोध्यत इति तन्न विन्मतोर्लुका टिलोपमात्रस्य बाध इति भाष्यप्रामाण्येन विषयभेदेऽपि बाधकत्वसिद्धेः। तथाचोभयोर्भाष्ययोः सामञ्जस्यस्थापनाय पूर्वोक्तभाष्येणापि विषयभेदेऽपि बाधकत्वं भवतीत्येव कल्पनीयमिति भावः।

तथाच प्रकृत्यैकाच् ६.४.१६३ इति सूत्रे भाष्यकारेणोक्तम्:—'विन्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः स्रग्वितरः—स्रजीयान्। स्रग्वितमः—स्रजिष्ठः XXXX। ननु च विन्मतोर्लुक् टिलोपं बाधिष्यते। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्। असति खल्वपि सम्भवे बाधनं भवति। अस्ति च संभवो यदुभयं स्यात्। तथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते। एवं नस्तद्धिते ६.४.१४४ इत्येतमपि बाधेत। यतरो नौ ब्रह्मीयान्-ब्रह्मवत्तर इति। यत्तावदुच्यते कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्-इति। इदं तावदयं प्रष्टव्यः—यदि तर्हि विन्मतोर्लुङ्नोच्येत, किमिह स्यात् इति। टिलोप इत्याह। टिलोपश्चेत्, नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते, स तस्य बाधको भविष्यति। यदप्युच्यते असति खल्वपि सम्भवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात्—इति। सत्यपि संभवे बाधनं भवति। तद्यथा—ब्राह्मणेभ्यो दधि दीयताम् 'तक्रं कौण्डिन्याय' इति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि सम्भवे विन्मतोर्लुक् टिलोपं बाधिष्यते। यदप्युच्यते—यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते, एवं 'नस्तद्धिते' इत्येतमपि बाधेत। न बाधते। किं कारणं ? येन नाप्राप्ते तस्य बाधनम्। नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते। नस्तद्धिते इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च॥ इति।

अयं भावः यदि 'प्रकृत्यैकाच्' ६.४.१६३ इति सूत्रं प्रत्याख्यायते--तर्ह्यपि एष्वयमतिशयेन स्रग्वी इति विग्रहे इष्ठन् प्रत्यये कृते विन्मतोर्लुक् ५.३.६५ इति विनो लुकि स्रजित्यस्य सूत्राभावेन प्रकृतिभावाभावे 'टेः' ६.४.१५३ इति लोपः कथं नेति प्रश्नस्य पूर्वोक्तभाष्ये इदमुत्तरं दत्तं यत् स्रग्विन् इत्यत्र टेर्विनो 'विन्मतोर्लुक्' इति लुका लुकि जाते प्राप्तस्य स्रजष्टे लोपो न भविष्यति जातिपक्षाश्रयेण इष्ठन्निमित्तकस्य सर्वविधटिलोपस्य 'विन्मतोर्लुका' बाधेन टेरितिप्राप्तस्य विन्घटकस्य इनः स्रज्घटकस्य अजश्चोभयोरपि लोपस्य बाधात्। विषयभेदे बाधकत्वास्वीकारे

**यत्तु 'दयतेर्दिगि'ति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तं-तत्प्रौढ्या। ध्वनितं च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन।**

---

भाष्यमिदमसंगतं स्यात्, अपवादस्य 'विन्मतोर्लुक्' इत्यस्य विषयः विन् इति, टेर्लोपस्य विषयः स्रजुघटकोऽजिति, विषयभेदात्। भाष्यकारेण च विषयभेदेऽपि बाध्यबाधकभावो दर्शितः। अतो विषयभेदेऽपि स मन्तव्यः।

दयतेर्लिटि द्वित्वे (दयतेर्दिगि लिटि) ७.४.९ इति दिग्यादेशे च प्राप्ते विशेष-विहितेन दिग्यादेशेन द्वित्वशास्त्रस्य बाधः। अतो 'दिग्ये' इति सिद्ध्यति। नचैवं प्यायः पी ६.१-२८ लिट्यभ्यासस्य चक्षिङः ख्याञ् २.४.५४ इति पीख्याञोरपि विशेषविहितत्वात्ताभ्यां द्वित्वबाधः स्यादिति वाच्यम् तत्र लिटीति विषयसप्तमी, तेन लिङुत्पत्तेः प्रागेव तयोः प्रावृत्तत्वात्, द्वित्वं तु लिङुत्पत्तेरनन्तरं प्राप्नोतीति न द्वित्वेन तयोर्बाधप्रसङ्गः। दिग्यादेशविधौ तु लिटीति परसप्तम्येव, न तु विषयसप्तमी, लक्ष्या-नुरोधात् तदुक्तं वृत्तौ-**दिग्यादेशेन द्वित्वबाधनमिष्यते** इति। दयतेर्लिटि द्वित्वे प्राप्ते तद्बाधित्वा परत्वाद् दिग्यादेश इति तु नोक्तम्. परस्परलब्धावकाशयोरेव परस्य बलीयस्त्वात्। दिग्यादेशं विना द्वित्वस्य सावकाशत्वे ऽपि द्वित्वं विना दिग्यादेशस्य तदभावात् इति सिद्धान्तः।

---

कैयट ने "दयतेर्दिगि लिटि" ७.४.९ सूत्र के भाष्य में बताया कि द्वित्व के बाद दिगि आदेश चरितार्थ है। इसलिए अनवकाश नहीं होने के कारण दिगि आदेश के द्वारा द्वित्व का बाध नहीं होता है, यह मत "सत्यपि सम्भवे बाधनं भवति" इस मत से विपरीत पड़ता है और चरितार्थ होने पर भी बाधकता मानने वाले नागेश के मत से भी मेल नहीं खाता। परन्तु कैयट का यह मत केवल प्रौढिवाद है, अशुद्ध होने से अग्राह्य है। स्वयं कैयट ने पूर्वोक्त ग्रन्थ की निःसारता अपने तदुत्तर ग्रन्थ से अर्थात् उसके बाद लिखे ग्रन्थ से प्रगट कर दी है। दुर्गाव्याख्या में "दयतेर्दिगि"— ७.४.९ का भाष्य और कैयट उद्धृत है। वहाँ साफ दिखाई पड़ता है कि कैयट ने पहले दिगि आदेश को सावकाश बताया है। **तत्र द्विर्वचनस्यावकाशः पपाचेति, कृते द्विर्वचने दयतिसद्भावाद् दिग्यादेशः, अकृते तु उभयप्रसङ्गे परत्वाद्दिग्यादेशः।** इस प्रथम ग्रन्थ में कैयट ने दिग्यादेश को अनवकाश नही माना है किन्तु चरितार्थ माना है। किन्तु आगे के वाक्यों में उसने दिगि आदेश को अनवकाश (अचरितार्थ) बताया है—अनवकाशोदिग्यादेशः॥ पूर्वं सामान्यविशेषभावमनाश्रित्योभयोः सावकाश-त्वमुक्तम्।। इदानीं तु सामान्यविशेषाश्रयेण नाप्राप्ते द्विर्वचन आरभ्यमाणस्य दिग्या-देशस्यापवादत्वमुच्यते। अर्थात् दिग्यादेश अनवकाश है। पहले सामान्य और विशेष-भाव का आश्रयण नहीं करने के कारण दोनों को सावकाश बताया गया है और अब सामान्य और विशेष भाव का आधार लेकर द्विर्वचन की प्राप्ति रहने पर किये गये

**असम्भवे एव बाधकत्वं विरोधस्य तद्बीजत्वादिति वार्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि ॥**

---

यत्तु 'दयतेर्दिगि लिटि' ७.४.९ इतिसूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तं तत् **प्रौढ्योक्तम्**=अतथ्यं तदिति भावः। अतस्तस्य प्रामाण्यं नास्ति। तस्य तत्कथनमतत्थ्यमिति तदीयेनैवोत्तरग्रन्थेन ध्वन्यते। दृश्यताम् प्रथमं 'दयतेर्दिगि लिटि ७.४.९ इति सूत्रस्थं भाष्यं—तदनु तत्कैयटवाक्यं यत्र मिथो विरोधोऽस्ति। तथाहि भाष्यम्:—इह 'वदिग्येऽवदिग्याते, अवदिग्यिरे'—दिग्यादेशे कृते द्विर्वचनं प्राप्नोति; तत्र साभ्यासस्येति वक्तव्यम्। ननु च द्विवर्चने कृते साभ्यासस्य दिग्यादेशो भविष्यति। न सिद्ध्यति। किं कारणम्? दिग्यादेशस्य परत्वात् साभ्यासस्यादेशवचनम् (वा० १) दिग्यादेशः क्रियताम्, द्विर्वचनमिति परत्वाद्दिग्यादेशेन भवितव्यम्। तत्र साभ्यासस्येति वक्तव्यम्। एवं तर्हि दिग्यादेशो द्विर्वचनं बाधिष्यते। पुनः प्रसङ्गविज्ञानाद् द्विर्वचनं प्राप्नोति। पुनः प्रसङ्ग इति चेदमादिभिस्तुल्यम्। 'पुनः प्रसङ्ग' इति चेदमादिभिस्तुल्यमेतद्भवति। तद्यथा। अमादिषु कृतेषु पुनः प्रसङ्गाच्छिशीलुङ्नुमो न भवन्ति। एवं दिग्यादेशे कृते पुनः प्रसङ्गाद् द्विवर्चनं न भविष्यति। अथवा विप्रतिषेधे पुनः प्रसङ्ग इत्युच्यते विप्रतिषेधश्च द्वयोः सावकाशयोरिह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते॥

अत्र कैयटः वक्ति प्रथमम्—तत्र द्विर्वचनस्यावकाशः पपाचेति, कृते द्विर्वचने दयतिसद्भावाद् दिग्यादेशस्य (चारितार्थ्यम्) अकृते तु द्विर्वचने उभयप्रसङ्गे परत्वादिग्यादेश इति (अत्र द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यमुक्तं कैयटेन स्वीकृतं च यत् दिग्यादेशोनास्त्यनवकाश इति) तदनन्तरं तेनोक्तम्—अनवकाशोदिग्यादेशः॥ पूर्वं सामान्यविशेषभावमनाश्रित्योभयोः सावकाशत्वमुक्तम्। इदानीं तु सामान्यविशेषाश्रयेण नाप्राप्ते द्विर्वचने आरभ्यमाणस्य दिग्यादेशस्यापवादत्वमुच्यते॥ अत्र दिग्यादेशस्य निरवकाशत्वादपवादत्वं, तेनैवोक्तमिति स्वकथनविरोधात् उत्तरग्रन्थस्य च भाष्यानुकूलत्वात्पूर्वग्रन्थो दिग्यादेशस्य चारितार्थ्यसूचकः प्रौढोक्तिमात्रपरः अतथ्य एवेति भावः।

---

दिग्यादेश के आरम्भ को अपवाद कहा गया है। विरोध ही बाधकता में बीज है, इसलिए जहाँ ससम्भव होगा (सामान्य शास्त्र का समावेश सम्भव नहीं होगा, वहीं बाध्यबाधकभाव होगा, वार्तिककार का यह मत 'मिदचोन्त्यात् परः १.१.४७ सूत्र के भाष्य (सत्यपि सम्भवे बाधनं भवति) से दूषित होने के कारण उपादेय नहीं है और न वह लक्ष्यसिद्धि में उपयोगी है। तक्रकौण्डिन्य न्याय से तथा निरवकाशता के कारण जो बाध होते हैं वे सब ,येन नाप्राप्तिन्याय' के अन्तर्गत ही आ जाते हैं।

**तक्रकौण्डिन्यन्यायोऽपि तदप्राप्तियोग्येऽचरितार्थ्यविषयो विधेयविषय एव चेति 'तद्धितेष्वचामादेः' 'धातोरेकाचः' इत्यादिसूत्रेषु भाष्ये स्पष्टम् ॥ ५८ ॥**

---

(समावेशस्य) असंभवे एव बाधकत्वम्, विरोधस्य तद्बीजत्वात्, (बाधकत्वबीजत्वात्) इति वार्तिकमतं तु पतञ्जलिना ''सत्यपि संभवे बाधनं भवतीति 'मिदचोऽन्त्यात् परः' इति सूत्रस्य भाष्यं कुर्वता दूषितमिति । तद्वार्तिकम् न लक्ष्यसिद्ध्युपयोगि । भाष्यकारेण युक्त्या तन्मतं खण्डितम् यथोत्तरं मुनीनां प्रामाण्यमिति सिद्धान्तानुसारेण भाष्यकारमतस्य प्रामाण्यतमत्वात् ।

यदि विषयभेदे बाधः स्वीक्रियते तदा ब्राह्मणेभ्यो दधि दीयतां, कम्बलः कौण्डिन्यायेत्यादावपि बाधः आपद्यते कम्बलदानेन दधिदानस्य; अच च सुटा यासुड् न बाध्यते लिङो यासुट् तकारथकारयोः सुडिति विषयभेदादिति भ्वादिप्रकरणस्थसुट्तिथोरिति सूत्रस्थभट्टोजिदीक्षितग्रन्थविरोधश्च स्यादिति तु न वाच्यम् सजातीययोरेव बाध्यबाधकभावो भवति, दधितक्रे च भोजनव्यञ्जनत्वात्सजातीये, दधिकम्बलयोस्तु न तथा साजात्यमेकस्य भोजनोपयोगित्वादन्यस्य च शीतापहारकत्वात् । एवमेव समकालजातयोरेव बाध्यबाधकत्वमङ्गीक्रियते । अतएवाद्य ब्राह्मणाय दधि दीयताम् श्वः कौण्डिन्याय तक्रमित्यादौ न श्वस्तनतक्रदानमद्यतनदधिदानं बाधते तयो भिन्नकालभवत्वात् । ब्राह्मणत्वात् कौण्डिन्योद्य दीयमानं दध्यपि लभते, कौण्डिन्यत्वात् श्वो दास्यमानं तक्रमपि प्राप्नोति । एवञ्च 'यासुट् परस्मैपदेषूदात्तो ङिच्च' ३.४.१०३ इत्यत्र परस्मैपदेषु इतिविषयसप्तमीमाश्रित्य परस्मैपदविषये एव यासुड्विधीयते । तेन लिङ एव यासुट् भवति । 'सुट् तिथोः' ३.४.१०७ इत्यत्र तु तिथोरितिपरसप्तमी । येन तकारथकारयोः परयोः सुड्विधानेन लिङः स्थाने आदेशे कृते सुट् प्राप्नोतीति कालभेदान्न तयोर्बाध्यबाधकत्वमिति ।

तक्रकौण्डिन्यन्यायमूलको बाधः निरवकाशत्वेन बाधश्चोभावपि बाधौ येन नाप्राप्तन्यायबाध एवान्तर्भवतः इति तयोर्द्वयोरपि समानविषयत्वं प्रतिपादयति— **तक्रकौण्डिन्यन्यायोऽपि** । अपि शब्दान्निरवकाशत्वेन जायमानो बाधो गृह्यते । तेन

---

क्योंकि तक्रकौण्डिन्य न्याय के तक्रदान का विषय वह कौण्डिन्य ब्राह्मण है; जो पूर्ववाक्य के अनुसार दही पाने का हकदार है। इसलिए तक्रदान, दधिदान के अप्राप्ति योग्य विषय में चरितार्थ नहीं है; अतः सामान्य शास्त्र के अप्राप्तियोग्य विषय में विशेषशास्त्र का चरितार्थ नहीं होना ही बाधकत्व में वहाँ भी बीज है । साथ-साथ वह न्याय एकविधेय से दूसरे विधेय का बाध बताता है । तक्र कौण्डिन्य न्याय भी तदप्राप्तियोग्य में अचरितार्थविषयक और विधेयविषयक है । अतः समान विषय होने के कारण ''येन नाप्राप्ति'' के क्षेत्र में ही वह समाविष्ट है ।

तक्र कौण्डिन्य न्याय से जो बाध होता है उसमें सर्वत्र दधिदान की प्रसक्ति

तक्रकौण्डिन्यन्यायमूलको बाधो निरकाशत्वेन च यो बाधः; तौ तदप्राप्तियोग्ये-ऽचरितार्थ्यविषयकौ अर्थादुभयविधो बाधस्तत्रैव भविष्यति, यत्रोत्सर्गशास्त्रीयो विषयो व्यापकः,अपवादशास्त्रीयो विषयश्च व्याप्यो भवेदिति। एवमेव स बाधो बिधेय-विषयकः अर्थात् एककार्यविधायकेन शास्त्रेणापरकार्यविधायकस्य शास्त्रस्य बाधः। तत्रोभयोः कार्ययोः विधेयत्वे एव व्यापकोद्देश्यककार्यस्य व्याप्योद्देश्यककार्येण बाधः स्वीकृतः न तु एककार्यविधायकशास्त्रे उद्देश्यकोटिप्रविष्टया विधेयकोटिप्रविष्टया वा व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया बाधः तयोरुद्देश्यकोटि-प्रविष्टत्वेन विधेयत्वाभावात्। न चैवं "नेमौ रहौ कार्यिणौ द्विर्वचनस्य" इत्यादिना हयवरट् सूत्रे भाष्ये दर्शितो रत्वरूपव्याप्यधर्मावच्छिन्ननिमित्ततया यत्वरूपव्यापक-धर्मावच्छिन्नकार्यिताया बाधोऽसंगतः स्यात् इति वाच्यम् माठरपरिवेषणन्यायेन तादृ-शस्य बाधस्य समाधेयत्वात्। "सर्वे ब्राह्मणा भुञ्जताम्, माठरकौण्डिन्यौ परिवेवि-षाताम्" इति न्यायेनैव 'वावसाने' ८.४.५६ इत्यनेन चर्भिन्नस्य झल एव चर्त्वं विधीयते। अवसाने झलां चरो वेत्यनेन झलन्तर्गतत्वाच्चरः प्राप्तचर्त्वकार्यित्वस्य चर्त्वरूपविधेयतया बाधेन अवसाने चर्भिन्नानां झलां चरो वेति तदर्थे संकोचात्। अतएव 'रत्नमुष्' इति षकारान्ते चरन्तत्वात् चर्त्वाप्राप्त्या पूर्वं जश्त्वेन डकारे कृते 'वावसाने' ८.४.५६ इति चर्त्वेन टकारे रत्नमुट् इति, विकल्पे च रत्नमुड् इति। चर्भिन्नत्वेन संकोचाभावे तु तक्रकौण्डिन्यन्यायेन जश्त्वबाधेनानेन षकारस्यैव चर्त्वम् तच्चान्तरतम्यात्षकार एव। एवं च चर्त्वपक्षे रत्नमुष् विकल्पे च जश्त्वेन डकारे रत्नमुडिति। टकारघटितरुपस्येष्टस्यासिद्ध्यापत्तिः। माठरकौण्डिन्यन्यायश्चायमनित्यो, लक्ष्यानुरोधात्। तेन घिसंज्ञासूत्रस्योद्देश्ये इदन्ते घिशब्देतरत्वेन संकोचो न। तेन घि-शब्दस्यापि घिसंज्ञा सिद्ध्यति घेरिति च रूपं जायते।

तक्रकौण्डिन्यन्यायोऽपि तदप्रात्तियोग्येऽचरितार्थविषयो विधेयविषय एव चे ति मतं **तद्धितेष्वचा**०० ७-२-११७ इति धातोरेकाचः ३.१.२२ इत्यादिसूत्रेषु भाष्ये स्पष्टम्। तत्र तद्धितेष्वचामादेः ७.२.११७ इति सूत्रे भाष्ये यथाः—तद्धितेष्वचा-

---

है, अतः तक्रदान का कोई ऐसा स्थल नहीं बच पाया है; जहाँ दधिदान की प्राप्ति नहीं हो। इस तरह वह न्याय भी 'येन नाप्राप्ति' की तरह तदप्राप्तियोग्याचरितार्थ-विषयक है। तक्रदान भी विधेय है, और दधिदान भी। एक विधेय से दूसरे विधेय का बाध होता है। अतः वह न्याय भी येन नाप्राप्ति की तरह विधेयविषयक ही है।

"तद्धितेष्वचामादेः" ७.२.११७ सूत्र के भाष्य से इस बात की पुष्टि होती है कि तदप्राप्तियोग्येऽचरितार्थता" ही बाधकता में बीज है अर्थात् जो शास्त्र, जिस शास्त्र की अप्राप्ति में अचरितार्थ रहता है, वह उसका बाधक होता है, सर्वथा अचरितार्थ शास्त्र ही बाधक हो ऐसा नियम नहीं है। यहाँ यह प्रश्न उठाया गया कि

मादिवृद्धावन्त्योपधालक्षणप्रतिषेधः (१ वा०) तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः। क्रौष्ट्रः जागत इति। ननु चाचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते। कथमन्यस्योच्यमानान्यस्य बाधिका स्यात्। असंति खल्वपि संभवे बाधनं भवति। अस्ति च संभवो यदुभयं स्यात्॥

लोकविज्ञानात्सिद्धम् (वा० २) सत्यपि सम्भवे बाधनं भवति। तद्यथा ब्राह्मणेभ्यो दधि दीयताम् तक्रं कौण्डिन्यायेति। सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवहिापि सत्यपि संभवेऽचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते। विषम उपन्यासः। नाप्राप्ते दधिदाने तक्रदानमारभ्यते, तत्प्राप्त आरभ्यमाणं बाधकं भविष्यति। इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धावचामादिवृद्धिरारभ्यते सुश्रुत् सौश्रुतः इति। पुष्करसद्ग्रहणाद्वा (वा० ३) अथवा यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्योऽचामादिवृद्धावन्त्योपधालक्षणा वृद्धिर्न भवतीति।

अयं भावः—तृजन्तात् क्रोष्टुशब्दात्, वर्तमाने निपातिनात् 'जगत्' इत्स्माच्च ऋतोऽञ् इति अञ्, सम्बन्धेऽर्थे अण् प्रत्यये च कृते तद्धितेष्वाचाम् ७.२.११७ इत्यादेरचः उभयत्र वृद्धिः प्राप्नोति, पूर्वत्र च 'अचो ञ्णिति' ७.२.११५ इति अपरत्र 'अत उपधायाः' ७.२.११६ इति वृद्धिः प्राप्नोति। अत्र प्राचीनाः(परत्वात्)आदिवृद्धिरन्त्योपधावृद्धी बाधते इत्याहुः (सि० कौ० तस्यापत्यम् सू०) अपवादत्वादत्र बाध्यबाधकभावो न, सुश्रुतः अपत्यम् पुमान् 'सौश्रुत' इत्यत्र उपधावृद्धेरन्त्यवृद्धेश्चाविषये आदिवृद्धेश्चारितार्थ्यात् 'जगाद' इत्यादावुपधावृद्धिः सखायावित्यादौ चान्त्यवृद्धिश्च चरितार्थ्ये। अतः परयादिवृद्ध्या उपधावृद्धेरन्त्यवृद्धेश्च बाधः। नचादिवृद्धौ कृतायामकृता-

---

क्रोष्टुरयं 'क्रौष्ट्रः' जगतोऽयं जागतः में अण् प्रत्यय के परे रहते "तद्धितेष्वचाम्"—७.२.११७ से आदिवृद्धि करने पर 'अचोञ्णिति' ७.२.११५ से क्रौष्ट्रः में अन्तिम ऋकार को और 'अत उपधायाः' ७.२.११६ से जागतः में उपधा के अत् को वृद्धि क्यों नहीं होती है? पहले इसका यह समाधान दिया गया कि आदि वृद्धि अन्य वृद्धि और उपधावृद्धि को बाध लेती है। वाह, "तद्धितेष्वचाम्—आदि को वृद्धि करता है, 'अचोञ्णिति' अन्तिम अच् को और 'अत उपधायाः' उपधा को। इस तरह किसी और को (आदि को) कही गयी वृद्धि—'तद्धितेष्वचाम्'—वाली वृद्धि—किसी और के स्थान में—अन्त्य अच् और उपधा के स्थान में—विहित वृद्धि की बाधिका कैसे होगी? सम्भव नहीं रहने पर ही बाधन हुआ करता है, यहाँ तो यह सम्भव है कि दोनों हो जाँय तब बाध नहीं होगा। इसलिए "तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणप्रतिषेधः" यह वार्तिक बनाकर 'तद्धितेष्वचाम्' से आदि वृद्धि करने पर अन्त्य वृद्धि और उपधालक्षणवृद्धि का प्रतिषेध करना चाहिए।

याञ्च प्राप्त्या तयोर्नित्यत्वम् इति वाच्यम् आदिवृद्धेरपि तयोरिव कृताकृतप्रसंगित्वात् सर्वत्र नित्यत्वरूपबलस्य समत्वात्। नचादिवृद्धौ कृतायां कथन्नोपधावृद्धिरन्त्यवृद्धिश्चेति वाच्यम् अनुशतिकादिगणे "पुष्करसद्" इत्यस्य पाठसामर्थ्येनात्र विषये सकृद्गति (प० ४१) न्यायाश्रयणात्। अन्यथा 'पौष्करसादिः' इत्यत्र पुष्करसत् इत्यस्मादपत्यार्थे इञ् प्रत्यये प्रथममादिवृद्धौ ततश्चोपधावृद्धौ जातायां रूपे सिद्धेऽनुशतिकादिगणे पाठं विधाय अनुशतिकादीनाञ्च ७.३.२० इत्युभयपदवृद्धिप्रयासो व्यर्थः स्यात्। तेन ज्ञायते यत् परत्वादचामादिवृद्धौ जातायामन्त्यस्योपधाया वा वृद्धिर्न भवति, अर्थादादिवृद्ध्या सकृद्बाधिते ते पुनर्न प्रवर्तेते इति। अनेन ज्ञायते यत् तक्र-

---

इस पर भाष्यकार ने तक्रकौण्डिन्य न्याय का हवाला देकर यह सिद्ध कर दिया "सत्यपि सम्भवे बाधनं भवति" जैसे ब्राह्मण होने के नाते कौण्डिन्य को तक्रदान के पहले या बाद में दही दिया जा सकता है तथापि तक्रदान से दधिदान का बाध होता है, वैसे ही यहाँ दोनों प्रकार की वृद्धि के सम्भव होने पर भी आदि वृद्धि अन्त्य वृद्धि और उपधावृद्धि को बाध लेगी। इस पर भाष्यकार ने कहा—दिया हुआ दृष्टान्त ठीक नहीं उतरता। ब्राह्मण होने के नाते कौण्डिन्य को दधिदान का हक 'ब्राह्मणेभ्यो दधि दीयताम्" से अवश्य प्राप्त था, तब जो कहा गया "कौण्डिन्याय तक्रम्" इससे दधिदान का बाध हुआ। कोई कौण्डिन्य ऐसा (अब्राह्मण) नहीं था, जो दधिदान का विषय न होता और उस दधिदान के अविषय में तक्रदान चरितार्थ होता परन्तु यहाँ ऐसा नहीं है—'सुश्रुतः अयम्' 'सौश्रुतः' में न 'अचोञ्णिति' की प्राप्ति है और न अत उपधायाः की; क्योंकि यहाँ अन्त में अच् नहीं है और उपधा में अत् भी नहीं है' 'सौश्रुतः' में—दोनों वृद्धियों की अप्राप्ति के स्थल में—"तद्धितेष्वचामादेः" चरितार्थ है। इस तरह पूर्वसमाधान को अयुक्त मानकर 'क्रौष्टुः' 'जागतः' में अन्त्य वृद्धि और उपधालक्षण वृद्धि के निवारण के लिए एक दूसरा समाधान देते हुए भाष्य में लिखा गया कि अनुशतिकादि गण में 'पुष्करसत्' शब्द का जो पाठ किया गया है इससे भी सिद्ध होता है कि 'तद्धितेष्वचाम्' से आदि वृद्धि करने पर अन्त्य वृद्धि और उपधालक्षण वृद्धि नहीं होती है। वहाँ पाठ करने का प्रयोजन है कि "पुष्कर और सद्" दोनों (उभय) पदों में आदि वृद्धि होकर 'पौष्करसादि' प्रयोग बने। यदि आदि वृद्धि उपधा वृद्धि को नहीं बाधती तो 'तद्धितेष्वचाम्' से आदि वृद्धि होकर 'पौष्कर' बन जाता और उपधावृद्धि से सादि में वृद्धि हो जाती, फिर वहाँ (गण में) पाठ करने की क्या जरूरत थी। पाठ के द्वारा आचार्य ज्ञापित करते हैं कि आदि वृद्धि होने पर अन्त्य वृद्धि और उपधालक्षण वृद्धि नहीं होती है। यदि यहाँ तक्रकौण्डिन्य न्याय से बाध हो सकता तो भाष्यकार गणपाठसामर्थ्यमूलक समाधान क्यों देते ? इससे सिद्ध है कि तक्रकौण्डिन्य न्याय अचरितार्थ्यविषयक है, वह अचरितार्थ को ही बलवान् सिद्ध करता है।

कौण्डिन्यन्यायोऽचारितार्थ्यविषय एव। यदि स चारितार्थ्यविषयेऽपि स्यात्तदा तेन न्यायेनापवादमूलकबाधे सिद्धे पाठसामर्थ्यमूलकज्ञापकानुसरणप्रयासो भाष्यकृतो वृथा स्यादिति।

**धातोरेकाच इत्यादि सूत्रेषु भाष्ये इति।** अत्र। विषयाकाराः—अतद्गुणसंविज्ञानबहुव्रीहिणा नित्यं कौटि०, लुपसदचरेत्यनयोः संग्रह इत्यूचुः। तेन धातोरेकाच ३.१.२१ इति सूत्रे पूर्वोक्तविषयस्य चर्चाऽभावेऽपि न क्षतिरिति तेषामभिप्रायः। अतद्गुणसंविज्ञानबहुव्रीहेः समस्यमानपदार्थेतरपदार्थबोधकस्वभावाद्धातोरेकाचः इति समस्यमानपदार्थेतरपदार्थयो नित्यंकौटिल्ये गतौ ३.१.२२ लुपसदचर०० ३.१.२३ इतिसूत्रयोरित्यादिपदबोध्यत्वमिति तेषां तात्पर्यम्। किन्तु एतन्न युक्तं प्रतिभाति तथा सति **तद्धितेष्वचामादेरिति** सूत्रस्यापि बोध्यत्वं न स्यात्। तस्य समस्यमानपदार्थत्वात् अतोऽत्र तद्गुणसंविज्ञानबहुव्रीहिरेव। तेन तद्धितेष्वाम् इति धातोरेकाच् इति आदिनी येषामिति विग्रहः तेषु सूत्रेषु स्पष्टमित्येवास्य ग्रन्थस्य तात्पर्यं कल्प्यम्। नित्यं कौटिल्ये—लुपसदचर इति सूत्रयोः पृथग्भाष्यग्रन्थो न विद्यते। किन्तु धातोरेकाच् ३.१.२१ इति सूत्रभाष्यग्रन्थान्तर्गतमेव तयोर्भाष्यमुपलभ्यते। अतएव च "उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यम्" इति वार्तिके **उत्तरयोरिति** प्रोक्तम्। अतएव चास्य वार्तिकस्योद्योते नागेशेनोक्तम्—**उत्तरयोरिति** पदस्वरसाद्धातोरेकाच इति सूत्र एवेदं वार्तिकमिति लभ्यते। तेनेतः पूर्वं नित्यमित्यादि सूत्र द्वयोल्लेखः (नित्यंकौटिल्ये गतौ ३.१ २३ लुप सदचर जपजभदहदश गृभ्यो भावगर्हायाम् ३.१.२४ इति सूत्रद्वयोल्लेखः, लेखकप्रमादात् तत्राद्यविषयं नित्यग्रहणानर्थकमिति द्वितीयविषयं क्रियासमभिहारे चेति तथैव भाष्ये उदाहरणादिति सुधियो विभावयन्तु इति प्रायो **विजयाकारैरुद्योतग्रन्थमिममदृष्ट्वा पायगुण्डे**महोदयस्य परिभाषेन्दुटीकायां धातोरेकाच इति प्रतीकमादाय "यद्यप्यत्र (धातोरेकाच इत्यत्र) सूत्रे न किमपि भाष्ये उक्तम्; तथापि नित्यं कौटिल्ये, लुपसदेत्यत्रार्थतेभ्यः क्रियासमभिहारे यङा भवितव्यमिति प्रश्ने क्रियासमभिहारे च नैतेभ्य इत्युक्तमिति ग्रन्थो नागेशेन निर्दिष्टः प्रमादिलेखकलिखितोभाष्यग्रन्थश्च विलोकितः। तत्र धातोरेकाच इत्यत्र पूर्वोक्तविषयस्यानुल्लेखं प्रमादात् पृथगुल्लिखितोत्तरसूत्रद्वये च तस्य चर्चां दृष्ट्वा विजयाकारैर्नागेशग्रन्थोक्तस्येत्यादि पदस्य संगतयेऽतद्गुणसंविज्ञानबहुव्रीहिरिति कल्पितम्। किन्तु उद्योतग्रन्थेन स्पष्टं प्रतीयते यन्नागेशेन धातोरेकाच इति सूत्रान्तर्गतस्यैव नित्यंलुपसदेति भाष्यग्रन्थस्य सत्तामङ्गीकुर्वतोक्तम् "धातोरेकाच इत्यादिषु" इति। अतः पूर्वोक्ता अतद्गुणसंविज्ञानकल्पना नागेशासंमतेति।

तथाहि धातोरेकाच०० ३.१.२१ इति सूत्रस्थं भाष्यमित्थमस्ति—उत्तरयोर्योगयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणमनर्थकम्। नहि कुटिलं क्रामतीति चङ्-

क्रम्यत इति गम्यते ॥ अथैतेभ्यः क्रियासमभिहारे यङा भवितव्यम् । क्रियासमभिहारे च नैतेभ्यः ॥ (वा०) क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम् । भृशं जपति भृशं समिधो दहतीत्येव ॥

अत्र कैयटः—चङ्क्रम्यत इत्यस्माद्योऽर्थः प्रतीयते नासौ कुटिलं क्रामतीति वाक्येन शक्यः प्रतिपादयितुमिति तदर्थानभिधानादेव वाक्यं न भविष्यति । अर्थान्तरे च कौटिल्यमात्रप्रतिपादने वाक्यं निवारयितुमशक्यमिति नित्यग्रहणमनर्थकमित्यर्थः ॥ क्रियास००० । तक्रकौण्डिन्यन्यायेन कौटिल्यभावगर्हाभ्यां यङः क्रियासमभिव्याहारादाच्छिद्य स्वीकृतत्वादिति भावः ॥

---

'धातोरेकाचः—३.१.२२ सूत्र के भाष्य के कुक्षि- प्रविष्ट, 'नित्यं कौटिल्ये गतौ' ३.१.२३ और 'लुपसदचर'—३.१.२४ सूत्र के भाष्य के अनुसार यह सिद्ध होता है कि 'तक्रकौण्डिन्य' न्याय विधेयविषयक है अर्थात् इस न्याय की प्रवृत्ति वहीं होती है; जहाँ बाध्य और बाधक दोनों विधेय होते हैं । उद्देश्य कोटि में प्रविष्ट सामान्य और उद्देश्यात्मक विशेष्य के बीच यह नहीं जाता है ।

३.१.२२ के भाष्य में कहा गया कि उत्तरयोर्योगयोर्विग्रहेण विशेषासंप्रत्यन्नित्यग्रहणमनर्थकम् । नहि कुटिलं क्रामतीति चङ्क्रम्मत इति गम्यते ।......इत्यादि । (यहाँ का भाष्य, प्रदीप और उद्योत दुर्गा व्याख्या में (पृ०४२४ ,२५) उद्धृत है; वहीं उन्हें देखना चाहिए) ।

कैयटादि तक्रकौण्डिन्य न्याय की केवल विधेय विषयता स्वीकार नहीं करते हैं । वे भाष्य में लिखित "उत्तरयोः योगयोः" का अर्थ उत्तर सूत्र—नित्यं कौटिल्ये और लुपसदचर—करते हैं । उनके मत में प्रथम सूत्र में नित्य ग्रहण श्रूयमाण है और द्वितीय में अनुवृत्ति के द्वारा आता है । दोनों सूत्रों में नित्यग्रहण को भाष्यकार ने व्यर्थ बताया है । अपने मत के समर्थन में कैयट ने लिखा है कि विग्रह से उस विशेषता की प्रतीति नहीं हो सकती जो यङ् करने पर वृत्ति से होती है इसलिए वाक्य की निवृत्ति स्वतः सिद्ध हो ही जायगी । वाक्य की निवृत्ति के लिए किया गया नित्यग्रहण व्यर्थ है । इस मत को स्पष्ट करते हुए वह कहते है कि "चङ्क्रम्यते" इससे जिस विशेष अर्थ की प्रतीति होती है उसकी प्रतीति 'कुटिलं क्रामति' इस वाक्य से नहीं हो सकती । इसका कारण है अनभिधान । अर्थात् लोक या शास्त्र में 'चंक्रम्यते' के अर्थ में 'कुटिलं' क्रामति' का प्रयोग नहीं हुआ है । गतिकौटिल्य में ही यङ् हो, क्रियासमभिहार में न हो, इसलिए भी नित्यग्रहण की आवश्यकता नहीं है । तक्रकौण्डिन्य न्याय से विशेष विहित कौटिल्यार्थ से क्रियासमभिहार अर्थ का बाध हो जायगा (क्रियासमभिहारे च नैतेभ्यः (वा०)(क्रिया समभिहारे च नैतेभ्यो यङा भवितव्यम्, भृशं जयति ब्राह्मणः भृशं समिधो दहतीत्येव—भाष्य) की व्याख्या करते हुए प्रदीप में कैयट ने लिखा—तक्रकौण्डिन्यन्यायेन......स्वीकृतत्वादिति भावः ।

विधेयविषय एवेत्यत्र प्रमाणं धातोरेकाच ३.१.२१ इति सूत्रलिखितं नित्यं कौ०—लुपसदचर०० इति सूत्रविषयकं भाष्यमेव। कुटिलं क्रामतीति वाक्येन तस्यार्थस्य प्रतीति र्नभवति योऽर्थश्चङ्क्रम्यत इत्यस्मात्प्रतीयते । एवं गर्हितं जपतीत्यादि वाक्येनापि सोऽर्थो नावगम्यते यः किल जञ्जप्यते इत्यादिभ्यः प्रतीयते । कथं न प्रतीयतेऽइति चेत् अनभिधानरूपशब्दस्वभावादेवेति गृहाण। एवंच 'धातोरेकाच'—इत्यस्मादुत्तरयोः सूत्रयो 'नित्यं कौटिल्ये गतौ' इत्यत्र 'लुपसदचरे त्यत्र च नित्य ग्रहणं व्यर्थम्। "विग्रहेण विशेषासंग्रत्ययात्" अर्थात् वृत्तेः चङ्क्रम्यत इत्यस्य योऽर्थस्तस्य वाक्येन बोधाभावात्। नहि कुटिलं क्रामतीति वाक्येन कुटिलं गच्छतीत्यर्थकस्य 'चंक्रम्यते इत्यस्यार्थोगम्यते, येन वाक्यं स्यात् वृत्यर्थाभिधानसमर्थस्यैव विग्रहत्वात् । तेन कुटिलं क्रामतीति वाक्यं न भविष्यति। अतः स्वत एव वाक्यस्य प्रयोगाप्राप्त्या नित्यग्रहणमनर्थकम्। गतिकौटिल्ये एव यङ् स्यात् भावगर्हायामेव यङ् स्यात् न तु क्रियासमभिहारे इति नियममुखेन क्रियासमभिहारे पुनः पुनरतिशयेन वा क्रामतीत्यादौ यङ्वारणाय नित्यग्रहणमिति चेत्तदपि न "क्रियासमभिहारे च नैतेभ्यः" इति वर्तिके प्रयुक्तश्चकारः पूर्वोक्तवार्तिके प्रयुक्तस्य विशेषासंप्रत्ययादिति पदस्यानुवृत्यर्थः । तेन क्रियासमभिहारे एतेभ्य व्रजक्रमादिभ्यो लुपसदादिभ्यश्च यङा न भवितव्यम् विशेषस्य क्रियासमभिहारस्य वाव्रज्यते चंक्रम्यते लोलुप्यते इत्यादावप्रतीतेः । अतः क्रियासभभिहारे एतेभ्यः यङो निवृत्तिरपि न नित्यग्रहणफलमिति भाष्यस्य तात्पर्यम् ॥

केवल व्याप्यव्यापकधर्मावच्छिन्नयोर्बाध्यबाधकभावस्वीकारेऽनुकर्षणार्थश्चकारवैयर्थ्यं, गत्यर्थधातुत्व-धातुत्वयोः व्याप्यव्यापकभावादेव गत्यर्थधात्वतिरिक्तत्वेन (धातोरेकाच इत्यत्रत्ये) धातौ संकोचादेव तत्र क्रियासमभिहारे यङः प्रयोगाभावसिद्धेः केवले गतिकौटिल्ये च यङ्विधानेन इष्टप्रयोगसिद्धेः। भाष्यदर्शितस्य चकारस्यानुकर्षार्थत्वं यथा वृथा न भवेत् तथात्र किमपि कल्पनीयम् । तत्कल्पनञ्चेदमेव यत् तक्रकौण्डिन्यन्यायोविधेयविषयकः। अत्र तु गत्यर्थधातुत्व-धातुत्वे उद्देश्यकोटिप्रविष्टे यतो धातोरेकाच इत्यनेन हलादिधातुसामान्यात् यङ् विधीयते। अतस्तत्र हलादिधातुत्वस्यानुवादकोटिप्रविष्टत्वं स्पष्टम्। नित्यँ कौटिल्य इत्यत्रापि च गत्यर्थधातुमनूद्य यङ्विधानाद् गत्यर्थधातोरुद्देश्यकोटिप्रविष्टत्वमस्त्येव । इत्थमत्र तयोर्विधेयत्वाभावेन तक्रकौण्डिन्यन्यायाविषयतयाऽप्रवृत्या क्रियासमभिहारे सूत्रस्थनित्यग्रहणं विना यङ् कथं न स्यादिति चिन्ताग्रस्तेन भाष्यकारेण चकारस्य विशेषासम्प्रत्ययादिति पूर्ववार्तिकोक्तहेतोरनुकर्षणार्थत्वं दर्शितम्। अतः ज्ञायते तक्रकौण्डिन्यन्यायो विधेयविषयक इति विजयानुयायिनः परिभाषेन्दुशेखरस्यात्रत्यसांगत्यं स्थापयन्ति ।

वस्तुतस्तु अस्व तक्रकौण्डिन्यन्यायस्य केवलविधेयविषयतेति प्राचीनाः कैयटादयो न मन्यते नागेशश्चायं न्यायो विधेयविषय एवेति स्वीकरोति। स्वकीयमतसमर्थनाय पूर्वोक्तभाष्यस्य ४२४ तमे पृष्ठे उद्धृतस्य तात्पर्यमपि तयोर्मतेन पृथगाकलितं

वर्तते । तत्र कैयटः—उत्तरयो र्योगयोः=धातोरेकाच इति सूत्रादुत्तरं पठितयोः नित्यं कौटि०० लुपसदचर००० इत्यनयो नित्यग्रहणमित्यर्थः । नित्यग्रहणमनर्थकम् एकत्र श्रूयमाणमपरत्रानुवृत्याऽऽगतं नित्यग्रहणमित्यर्थः । नित्यग्रहणाभावेऽपि विग्रहेण विशेषासंप्रत्यात् वृत्या योऽर्थः प्रतीयते तस्य संप्रत्ययो वाक्येन न कर्तुं शक्यते इति वाक्यनिवृत्तिः स्वतः सिद्धा । तदुक्तम् प्रदीपे कैयटेन उत्तरयोर्योगयोरिति प्रथमं वार्तिकं टीकयता चक्रङ्म्यते इत्यस्माद्योऽर्थः प्रतीयते नासौ कुटिलं क्रमतीति वाक्येन शक्यः प्रत्याययितुमिति तदर्थानभिधानादेव वाक्यं न भविष्यति । नच गतिकौटिल्ये एव यङ् यथा स्यात् क्रियासमभिहारे मा भूदित्यर्थं नित्यग्रहणमिति वाच्यम्, तक्रकौण्डिन्य-न्यायेन विशेषविहितेन कौटिल्यार्थेन क्रियासमभिहारार्थस्य बाधात् । गत्यर्थधातुभ्यः कुटिलगत्यर्थे एव यङ् स्यान्न क्रियासमभिहारे इति सकलेष्टसिद्धेः, इत्यपि क्रिया-समभिहारे च नैतेभ्य इति वार्तिकं प्रदीपेन प्रकाशयता कैयटेनोक्तम्—तक्रकौण्डिन्य-न्यायेन कौटिल्यभावगर्हाभ्यां यङः क्रियासमभिहारादाच्छिद्य स्वीकृतत्वात् (क्रमा-दिगत्यर्थकलुपसदादिधातुभ्यश्च क्रियासमभिहारे यङोऽभावसिद्धेः) भृशं जपति भृशं समिधो दहतीति भाष्यमेवात्र मानम् । अत्रेदं बोध्यमवश्यं यदिह क्रियासमभिहार-कौटिल्येत्युभावप्यर्थौ द्योत्यौ वक्तव्यौ, न तु वाच्यौ । वाच्यत्वे तयोरेकस्यैव वाच्यत्वं स्यात् अभिधायास्तत्रैव प्रकरणादिना नियन्त्रणात् । एवञ्चोभयोरैककालिकत्वाभावेन बाधो न स्यात् । उभयोर्द्योत्यत्वे स्वीकृते तु समानकालत्वेन विवक्षासंभवाद् बाध्य-बाधकभावो युज्यत इति । एवञ्च पूर्वोक्तनियममुखेन क्रियासमभिहारे यङो व्यावृ-त्यै अपि न नित्यग्रहणस्यावश्यकता । एवञ्च तक्रकौण्डिन्यन्यायोऽविधेयविषयेऽपि प्रवर्तते इति कैयटेन स्वीकृतम् । नच तस्य न्यायस्य विधेयमात्रविषयकत्वादत्रोद्देश्य-विषये तस्य प्रवृत्तिः कथमिति वाच्यम् अस्मादेव भाष्यात्तस्योद्देश्यविषयेऽपि प्रवृत्तिर्भवतीति फलितत्वात् । यदि तक्रकौण्डिन्यप्रवृत्तिरुद्देश्यविषयेऽपि भवतीति स्वीक्रियते तर्हि पूजितो यः सुरासुरैरिति प्रयोगस्य का गतिः, 'मतिबुद्धि

---

यहाँ क्रियासमभिहार और कौटिल्य दोनों अर्थों को द्योत्यार्थ मानना चाहिए, वाच्यार्थ नहीं । वाच्यार्थ मानने पर किसी एक को ही वाच्य मान सकते हैं; क्योंकि अभिधा एक ही अर्थ में नियन्त्रित हो जायगी । इस तरह एक वाच्य अर्थ रहेगा, वह पूर्वकालिक होगा और दूसरा द्योत्य अर्थ अनन्तर कालिक । दोनों में समानकालिकता के अभाव के कारण बाध्यबाधकभाव नहीं होगा ।

इस प्रकार कैयट ने तक्रकौण्डिन्य न्याय की प्रवृत्ति अनुवादांश (उद्देश्यांश) में कराकर कौटिल्य अर्थ को क्रियासमभिहार अर्थ का बाधक स्वीकार करके उक्त न्याय की प्रवृत्ति अविधेय विषय में भी करायी । उद्देश्य विषय में तक्रकौण्डिन्य न्याय की प्रवृत्ति मानने पर 'पूजितो यः सुरासुरैः' यहाँ भूतकाल में क्त प्रत्यय नहीं होगा;

पूजार्थेभ्यश्च' ३.२.१८८ इति सूत्रेण पूजार्थधातुभ्यः वर्तमाने क्तप्रत्ययविधानेन'निष्ठा' २.२.३६ इति सूत्रे पूजार्थकधातुभिन्नधातो र्भूते निष्ठेत्याकारकसंकोचेन 'पूजित' इत्यत्र भूतार्थे क्तप्रत्ययो न स्यात्। अतस्तस्य विधेयविषयकत्वमेव स्वीक्रियताम्, तथा स्वीकृते तु न दोषः मतिबुद्धिपूजार्थेभ्यश्चेत्यत्रोक्तस्य मतिबुद्धिपूजार्थकधातुत्व-रूपविशेषधर्मस्य 'निष्ठा' सूत्रोक्तस्य धातुत्वरूपस्य सामान्यधर्मस्य चोद्देश्यकोटि-प्रविष्टत्वेन तयोर्विधेयत्वाभावान्न्यायाप्रवृत्तेरिति न वाच्यम् नित्यं कौटिल्ये इति सूत्रस्थ-नित्यग्रहणेन तस्य न्यायस्यानित्यत्वस्वीकारादिति प्राचीनमतम्।

नागेशस्तु तक्रकौण्डिन्यन्यायो विधेयविषयक इति स्वीकरोति। स च पूर्वोक्तं भाष्यमेवं निर्वक्ति-तथाहि "उत्तरयोर्योगयोर्विग्रहेण" इति वार्तिके योगयोरित्यस्य सूत्रयोरिति नार्थः किन्तूदाहरणयोरिति तदर्थः। युज्यते लक्षणमस्मिन् इत्यधिकरणे घञ्। सूत्रयोरित्यर्थस्तु न युज्यते 'लुपसदेति सूत्रे नित्यग्रहणाभावात्। न च तत्रापि तदनुवृत्या लभ्यत इति वाच्यम् ग्रहणपदस्वारस्यभङ्गापत्तेः। नह्यनुवर्तनं ग्रहणञ्च समानार्थके। अतोऽनुवृत्या लब्धस्य नित्यमित्यस्य कृते ग्रहणशब्दप्रयोगो न युज्यते भाष्यकारस्य तथाविख्यातशब्दशिल्पिनः। अतो योगयोरित्यस्योदाहरणयोरित्यर्थ एव

---

क्योंकि 'मतिबुद्धिपूजार्थेभ्यश्च' ३.२.१८८ सूत्र के उद्देश्यांश में निर्दिष्ट मति,बुद्धि और पूजार्थक धातुओं से वर्तमान काल में किये गये विधान विशेष से भूतकाल में निष्ठा के विधान का बाध हो जायगा। नवीन मत में तो दोष नहीं होता है; क्योंकि उद्देश्य के विषय में तक्रकौण्डिन्य न्याय की प्रवृत्ति को वह स्वीकार नहीं करता। इसका उत्तर प्राचीन वैयाकरण यह देते हैं कि नित्यं कौटिल्ये—सूत्र का नित्यग्रहण उस न्याय की अनित्यता का ज्ञापन करता है।

नागेश तो यह मानते हैं कि तक्रकौण्डिन्य न्याय विधेयविषयक है; उद्देश्य-विषयक नहीं। वह पूर्वोक्त भाष्य की व्याख्या विशेष प्रकार से करते हैं। उनके विचार में 'उत्तरयोर्योगयोः' में 'योग' का अर्थ 'सूत्र' नहीं है किन्तु 'उदाहरणयोः' है 'प्रयोगयोः' है 'युज्यते लक्षणमस्मिन्' इस विग्रह में अधिकरण में घञ् प्रत्यय करने से योग का अर्थ उदाहरण हो सकता है। 'सूत्रयोः' यह अर्थ यहाँ ठीक नहीं जँचता क्योंकि 'लुपसदचर—सूत्र में नित्यग्रहण नहीं है। यद्यपि वहाँ भी नित्य की अनुवृत्ति हो सकती है तथापि अनुवर्तन और ग्रहण को समानार्थक नहीं माना जा सकता। इस-लिए अनुवर्तन को ग्रहण नहीं कह सकते। इस तरह "उत्तरयोर्योगयोः" का अर्थ है लक्ष्ययोः उदाहरणों में। इस तरह भाष्य का तात्पर्य हुआ कि 'भृशं क्रामति' यहाँ और 'भृशं जपति दहति च' यहाँ, दोनों वाक्यात्मक उदाहरणों से 'चङ्क्रम्यते' तथा 'जञ्जप्यते-दन्दह्यते' के अर्थ की प्रतीति नहीं होती है। इसलिए वाक्य का प्रयोग यङ्-रूपवृत्यर्थ के बोध के लिए होगा ही नहीं; वाक्य के प्रयोग को रोकने के लिए किया गया नित्यग्रहण व्यर्थ है।

करणीयः। तथाच उत्तरयोः सूत्रद्वयलक्ष्ययोः भृशं क्रामति इत्यत्र 'भृशं दहति' जपतीत्यत्र च वाक्यरूपलक्ष्ययोर्विशेषासंप्रत्ययात् वृत्तेरर्थविबोधसामर्थ्याभावात् वाक्यं न स्यादित्यनर्थकं नित्यग्रहणम्। तदुत्तरमुक्तं वार्तिकं "क्रियासमभिहारे च नैतेभ्यः" इति वार्तिकं लुपसदचरेति सूत्रमात्रविषयम् न तु नित्यं कौटिल्य०० इति सूत्रविषयकमपि। लुपसदचरेति सूत्रमात्रस्य भृशं जपतीति भृशं दहतीत्युदाहरणदानेन तस्य वार्तिकस्य तत्सूत्रविषयत्वसिद्धेः। गत्यर्थकेभ्यस्तु क्रियासमभिहारे यङिष्ट एव। अन्यथा 'जङ्गमः' 'जङ्घा' 'चलाचलः' यायावर इत्यादौ क्रियासमभिहारे यङोऽप्राप्त्या रूपासिद्धिरापद्येत। "क्रियासमभिहारे च नैतेभ्यो यङ भवितव्यमिति द्वितीयवार्तिकव्याख्यानभूतस्य भाष्यस्य तात्पर्यन्तु तत्रत्यचकारेण विशेषासंप्रत्ययादिति प्रथमवार्तिकादनुवर्त्य "विग्रहेण=भृशं जपति भृशंदहतीत्यादिना वाक्येन प्रतिपाद्यस्य क्रियासमभिहारार्थस्य 'जञ्जप्यते' इत्यादिवृत्तेरसंप्रत्ययादबोधादेतेभ्यः—लुपसदादिभ्यो यङ न भवितव्यम् ('भृशं जपती'त्याद्यर्थविशेषस्य तादृशयङन्तादप्रतीतौ स नेति भाव इति-पायगुन्डे।) अतः क्रियासमभिहारे तेभ्यो यङ्निवृत्यर्थमपि तत्र नित्यग्रहणमनावश्यकम्

---

आगे लिखा गया वार्तिक—"क्रियासमभिहारे च नैतेभ्यः" यह वार्तिक—'लुपसदचर'—सूत्र पर ही लागू होता है "नित्यंकौटिल्ये"—यह सूत्र उसका विषय-प्रवृत्तिस्थल—नहीं है ; क्योंकि इस वार्तिक के जो दो उदाहरण—भृशं जपति, भृशं दहति—दिये गये हैं; वे 'लुपसदचर'— सूत्र से सम्बद्ध हैं; 'नित्यं कौटिल्ये' इस सूत्र से नहीं। गत्यर्थक धातुओं से तो क्रियासमभिहार में यङ् होना अभीष्ट ही है। तभी तो 'जङ्घा' 'जंगमः 'चलाचल': 'यायावरः' इत्यादि शिष्टप्रयोग सिद्ध होते हैं। "क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्" इस भाष्य का तात्पर्य यह लेना चाहिए कि विग्रह से—भृशं जपति भृशं दहति इत्यादि वाक्यों से—जिस क्रियासमभिहार रूप अर्थ विशेष का बोध होता है, उसकी प्रतीति 'जञ्जप्यते' इस वृत्ति से नहीं होती है। इसलिए "एतेभ्यः=लुपसदादिभ्यः यङा न भवितव्यम्" अर्थात् लुपसदादि से यङ् नहीं होगा। इस तरह "क्रियासमभिहारे च नैतेभ्यः" इस वार्तिक में भी चकार के बलसे पूर्ववार्तिकस्थ "विशेषासंप्रत्ययात्" की अनुवृत्ति करके पूर्वोक्त अर्थ करना चाहिए। इस प्रकार भाष्य का तात्पर्य निकाला कि क्रियासमभिहार में लुपसदादि से यङ् की निवृत्ति के लिए भी नित्यग्रहण करने की कोई आवश्यकता नहीं है। गत्यर्थक धातुओं से तो क्रियासमभिहार में यङ् करना इष्ट ही है "तभी तो" भृशं गन्ता हि जङ्गमः" इत्यादि कथन (कोश) सुसंगत होता है।

तक्रकौण्डिन्य न्याय से कौटिल्यार्थ के द्वारा क्रियासमभिव्याहार अर्थ का बाध नहीं हुआ; क्योंकि मैं (नागेश)उस न्याय की प्रवृत्ति वहीं मानता हूँ जहाँ सामान्य और विशेष दोनों विधेय हों ; यहाँ तो क्रियासमभिहार और कौटिल्य दोनों उद्देश्य हैं; विधेय नहीं।

गत्यर्थेभ्यस्तु भृशं गन्ता हि जङ्गम इत्यादिप्रयोगसाधनाय क्रियासमभिहारे यङ् इष्यत एव। एतेन ज्ञायते यत्तक्रकौण्डिन्यन्यायो विधेयविषय एवेति। नचैवं तक्रकौण्डिन्यन्याय स्याविधेये प्रवृत्तिसूचककैयटग्रन्थस्य ४२५ तमे पृष्ठे निर्दिष्टष्टस्य का—गतिरिति वाच्यम् तस्य भाष्यविरोधाद्धेयत्वस्य नागेशेनोद्योते स्पष्टीकृतत्वात् तथाहि चिन्त्यमिदं (तक्रकौण्डिन्यन्यायप्रवृत्ति दर्शकं कैयटवचनमिदम्—तक्रकौण्डिन्यन्यायेन कौटिल्य-भावगर्हाभ्यां यङः क्रियासमभिहारादाच्छिद्य स्वीकृतत्वादित्यादिरूपम् अशुद्धम्) विशेष विहितेन सामान्यविहितस्य बाध उत्सर्गापवादस्थले' तत्रैवायं दृष्टान्तो 'मिदचोन्त्यात्' १.१ ४७ सूत्रे भाष्ये उक्तो नहि विशेषानुवादेन सामान्यानुवादस्यबाधे दृष्टान्तो लौकिकोऽस्ति, नाप्येतद्विषये नियमेन तत्प्राप्तिरस्ति। तस्माच्चकारेण 'क्रियासमभिहारे चेत्यत्रापि 'विशेषासंप्रत्ययादित्यस्य संबन्धात् भृशं जपतीत्याद्यर्थविशेषस्य यङन्ताद-प्रत्ययादित्यर्थ इत्याहुः (उद्योते ३.१.२१, २२, २३ सूत्रस्थ क्रियास० इति वा०) नवीनमते ग्रहणपदस्वारस्यस्थापनं चकारकरणस्य सार्थक्यं जङ्गम इत्यादिप्रयोगसिद्धिश्च यथा जायते न तथा प्राचीनमते। यत्तूक्तं नित्यग्रहणं तक्रकौण्डिन्यन्यायानित्यज्ञापक-मिति तेन पूजित इति सिद्धिरिति तदपि न युक्तम् भूतकालवर्तमानकालप्रत्यययो-रेकस्मिन् काले प्राप्त्यभावेन तक्रकौण्डिन्यन्यायाविषयत्वात्। अतो नवीनमतमेव ग्राह्यम् इति।

(३) तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽचारितार्थ्यमिति तृतीयप्रकारकस्य बाधबीजस्य स्वरूपं मन्यते। उत्सर्गाप्राप्तियोग्येऽपवादस्याचारितार्थ्ये सति उत्सर्ग-शास्त्रीयकार्ये कृतेऽप्यचारितार्थ्यमिति भावः। अनेन अपवादशास्त्रेणोत्सर्गशास्त्रे स्व (अपवादशास्त्र) प्रवृत्तियोग्यार्थे स्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचः क्रियते। अत्र स्वस्य पूर्वं प्रवृत्तिरित्येव बाधः। बाधके प्रवृत्ते यद्युत्सर्गस्य प्राप्तिर्भवति; तदाभवत्येव। यथा रमायामित्यत्र रमा+इ इतिस्थिते याट् प्राप्नोति ङेराम् च प्राप्नोति। अत्र आपः परस्य ङेराम् इत्यस्य याडाप इत्यस्याप्राप्तियोग्यस्थले-ऽचारितार्थ्यमस्ति अथ च याटि कृतेऽप्यचारितार्थ्यमस्ति। अतः ङेराम् प्रथमं प्रवर्तते याटः। सा प्रथमवृत्तिरेवात्र याटो बाधत्वेन मता नतु वस्तुतो ङेरामा याट् बाध्यते। आमः प्रवृत्यनन्तरं च याटः प्राप्तिरस्तीति ङेराम्विधानानन्तरं याडपि जायते। तेन रमायामिति सिद्धम्—तदुक्तं क्वचित्तु सर्वथान०००-तत्रैव याडादयः इति। अथ

---

कैयट ने जो यहाँ "तक्रकौण्डिन्य न्याय" की प्रवृत्ति अविधेय में दिखायी है; वह गलत है। दधि और तक्र दोनों जहाँ विधेय हैं वही लौकिक दृष्टान्त इस न्याय में मूल है। अतः इस न्याय का स्थल वही मानना चाहिए; जहाँ दोनों सामान्य और विशेष=उत्सर्ग और अपवाद—में विधेयता हो। कैयट ग्रन्थ का खण्डन (३.१.२२ सूत्र के उद्योत में दिया गया है—उद्योत पृ० ऊपर उद्धृत है।

**क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वं यथा ङेरामो याडादिबाधकत्वम् । न हि याडादिषु कृतेषु ङेराम् प्राप्नोति । निर्दिश्यमानस्य व्यवधानात् । तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः । तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव । यथा तत्रैव याडादयः । अप्राप्तेप्तौ तु न, यथा पचेयुरित्यादौ दीर्घबाधके निरवकाशे इयादेशे दीर्घाभावः ॥५८॥**

**तदेतत् पठ्यते —**

---

यत्रापवादप्रवृत्युत्तरमुत्सर्गस्य प्राप्तिर्नास्ति तत्रोत्सर्गस्य न प्रवृत्तिः प्राप्त्यभावश्च तदपेक्षितनिमित्ताभावप्रयुक्त इति । यथा पचेयुरित्यत्र पच+यास्+उस् इति स्थिते 'अतो दीर्घो यञि' ७.३.१०१ इति दीर्घं निरवकाशत्वाद् बाधित्वा यास इयादेशे यञादिपरत्वाभावेन दीर्घाभाव एव भवति ।

(४) तदप्राप्तियोग्येऽचारितार्थ्ये सति अपवादशास्त्रप्रवृत्युत्तरमुत्सर्गशास्त्र-प्रवृत्तौ सत्यामपवादशास्त्रप्रणयनवैफल्यसंभावना चेत्येतत् चतुर्थस्य बाधबीजप्रकारस्य स्वरूपम् । अनेन चापवादशात्रेण स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्याश्रयाति-रिक्तत्वेन चोत्सर्गशास्त्रे संकोचो विधीयते । अतएव ज्ञानमित्यादौ ज्ञान+सु ज्ञान+अम् इति स्थिते पूर्वमतोऽम् ७.१.२४ इत्यमादेशः तदुत्तरं च नामो लुक् । स्वमोर्न० ७.१.२३ इत्यस्याप्राप्तियोग्येऽपवादशास्त्रस्य अतोऽम् इत्यस्य चारितार्थ्यं नास्ति, अमादेशे कृते यदि लुक् शास्त्रं प्रवर्तेत तदा अमृविधायकसूत्रप्रणयनस्य वैफल्प-सम्भावनास्ति इति भावः । इति शिवम्—॥ ५८ ॥

---

कहीं पर सर्वथा अनवकाश रहने पर ही बाधकता मानी जाती है। जैसा कि 'ङि' के स्थान में विधीयमान आम् याडादि का बाधक माना जाता है। क्योंकि याडादि के करने पर ङि को आम् नहीं प्राप्त होता है, निर्दिश्यमान में (नद्यन्त अङ्ग और ङि के बीच में) 'या' का व्यवधान आ जाता है। सूत्र आप् से पर ङित् को याट् करता है। यदि 'रमायाम्' में रमा+आम् ऐसी स्थिति में पहले याट् का आगम कर दें तो आप् और उससे पर ङि के बीच 'या' का व्यवधान आ जाता है। यहाँ आम् की जो पहले प्रवृत्ति हुई, उसी को बाध माना गया। ऐसा नहीं कि "आम्" ने याट् का सर्वथा बाध कर लिया और याट् कभी होगा ही नहीं। 'आम्' विधायक को केवल इतने मात्र से सन्तोष हो गया कि उसकी प्रवृत्ति पहले हो गयी। बाधक की प्रवृत्ति होने पर यदि उत्सर्ग की प्राप्ति है; तो उत्सर्ग होगा ही। जैसे कि "रमायाम्" में 'आम्'होने के बाद याट् का आगम होता है। बाधक की प्रवृत्ति होने पर यदि उत्सर्ग की प्राप्ति नहीं रहती ; तो उत्सर्ग नहीं प्राप्त होता जैसा कि "पचेयुः" 'पच+-या+उस्'ऐसी स्थिति में पच में अ को प्राप्त 'अतो दीर्घो यञि' ७.३.१० से प्राप्त दीर्घ को बाधकर जब 'अतो येयः' ७.२.८० से इयादेश हो गया फिर यञादि के पर में नहीं होने के कारण दीर्घ की प्रवृत्ति नहीं हुई ॥५८॥

**क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ॥५९॥**

अपवादशब्दोऽत्र बाधकपुरः ॥ तदुक्तं 'गुणो यङ्लुकोः' इत्यत्र भाष्ये-अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते। अजीगणत्। अत्र गणेरीत्वमपवादत्वाद्धलादिः शेषं (न)बाधते। न गणेरीत्वमपवादत्वाद्धलादिः शेषं बाधते। किं तर्ह्यनवकाशत्वादिति ग्रन्थेन। गण्रूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिः शेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य प्राप्तिरन्त्यहलोऽभावात्। अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम्। तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः। न च येन नाप्राप्तिन्यायेनापवादत्वमप्यस्य सुवचं, तस्य चरितार्थविषयताया उक्तत्वात्।

---

**क्वचिदपवादविषये······र्गोऽभिनिविशते ५९**

क्वचिदपवादविषयेऽपीत्यत्र अभिनिविशश्च १.४.४७ इत्याधारस्य कर्मत्वं तु न, 'सत्वे निविशते,' 'एष्वर्थेष्वभिनिविष्टानाम्'प्रकृतपरिभाषायाञ्च सप्तमीं दृष्ट्वा सम्प्रदानमन्यतरस्याम् १.४.४४ इति सूत्रादिह मण्डूकप्लुत्याऽन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्। क्वचिदपवादविषये ऽप्युत्सर्गस्य प्रवृत्तिर्भवतीति परिभाषाया अर्थः। प्रकरणेऽस्मिन्नपवादशब्दः बाधकार्थकः। तेनात्रापवादशब्दाद् बाधकमात्रं गृह्यते। अपवादशब्दस्य बाधकार्थकत्वे प्रमाणं गुणो यङ्लुकोः ७.४.८२ इति

---

यह इस रूप में पढ़ते हैं—कहते हैं—

**''क्वचिदपवादविषयेऽपि उत्सर्गोऽभिनिविशते'' ५९**

अपवाद शब्द यहाँ बाधकार्थबोधक है। यह बात 'गुणो यङ्लुकोः' ७.४.८२ इस सूत्र के भाष्य में बतायी गयी है। वहाँ कहा गया है कि ''अभ्यास विकार में अपवाद उत्सर्ग को नहीं बाधता है। जैसे—अजीगणत्। यहाँ गण धातु को विहित ईत्व अपवादत्वात् हलादि शेष को बाध लेता है। नहीं, नहीं, गण धातु को विहित ईत्व अपवादत्वात् हलादि शेष को नहीं बाधता किन्तु वह अनवकाशत्वात् उसे बाधता है। इस भाष्य ग्रन्थ से प्रगट होता है कि यहाँ अपवाद शब्द 'निरवकाशो बिधिरपवादः' इस अर्थ में नहीं आया है किन्तु सभी प्रकार के बाधकों के लिए आया है, यहाँ अपवाद बाधक का पर्याय है। गण् रूप जो अभ्यास उसके अन्तिम ण् को ईत्व हो, यदि ''ई च गणः'' ७.४.९७ का ऐसा अर्थ करें तो 'हलादिः शेष' ७.४.६० से ण् की निवृत्ति (लोप) होने पर ''ईच गणः'' अनवकाश हो जाता है, ईत्व करने पर तो हलादिः शेष की प्राप्ति ही नहीं है; क्योंकि यहाँ अन्त्य हल् नहीं है। इस प्रकार प्रश्न करके समाधान किया कि अभ्यास विकार में बाधबाधक भाव नहीं होता; तब ''हलादिः शेषः'' से ण् का लोप करने पर अवशिष्ट जो अन्त्य अकार है (ग में अ) उसे ही ईत्वविधानसामर्थ्यात् (ईत्व विधान व्यर्थ न हो जाय इसलिए) ईत्व होगा। इसलिए कोई दोष नहीं हुआ। जब कि निरवकाश स्थलों में भी 'येन नाप्राप्ति न्याय' से ही बाध होता है, क्योंकि वहाँ बाधक और अपवाद पर्याय—जैसे हैं, इस तरह निरवकाश स्थल में भी जो बाधक है; उसको भी अपवाद कहा जा सकता है, इस प्रश्न का उत्तर देते हुए लिखते हैं कि 'येन नाप्राप्ति न्याय'

'इको झल्' इत्यत्र भाष्येऽपि ध्वनितमेतत् । तत्र हि 'अज्झने'ति दीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद्गुणे बाधिते दीर्घोत्तरं गुणः स्याद्दीर्घविधानं तु 'मिनोतेः' दीर्घे कृते सनि मीमेत्यत्र मीग्रहणेन ग्रहणेऽर्थवत् तत्र पश्चात् प्राप्तगुणबाधनार्थमपि 'को झलि'ति कित्त्वमित्युक्तम् । अन्यथाऽपवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेः भाष्यस्य सूत्रस्य चासङ्गतिरिति स्पष्टमेव ॥

---

सूत्रस्थं भाष्यम् । तत्रहि "न वाभ्यासविकारेऽपवादस्योत्सर्गाबाधकत्वादिति वार्तिके तद्भाष्ये च 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते' इति स्वीकृतायां परिभाषायाञ्चापवादशब्दस्य बाधकार्थपरत्वसूचनात् । तत्र हि भाष्यग्रन्थ इत्थमस्तिः—गुणो यङ्लुकोः ७.४.८२ एचोर्यङि दीर्घत्वप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वम् (वा० १) ऐचोर्यङि दीर्घत्वं प्राप्नोति । डोढौक्यते, तोत्रौक्यते (कैयटे=ह्रस्वस्यावकाशः पपावित्यादि । 'दीर्घोऽकितः' ७.४.८३ इत्यस्यावकाशः कृतेऽकृते वा ह्रस्वत्वे पापच्यते

---

से भी चरितार्थ्य विषय में जो बाधक है उसी का अपवाद मानना सिद्ध होता है ॥ 'इको अल्' १.२.९ सूत्र के भाष्य से भी यही सिद्ध होता है कि "येन नाप्राप्त" का विषय वह है जहाँ अपवाद की प्रवृत्ति होने पर उत्सर्ग चरितार्थ हो जाता है । वहाँ भाष्य में कहा गया कि "इको झल्" यह सूत्र न करें तो भी "विभूषति" में गुण नहीं होगा; क्योंकि गुण को बाध कर 'अज्झनगमां सनि' ६.४.१६ से दीर्घ हो जायगा । क्योंकि दीर्घ गुण की प्राप्ति न रहने वाले किसी प्रयोग में चरितार्थ नहीं है । दूसरी बात यह कि गुण कर देने पर दीर्घ करने से कोई लाभ नहीं है, इसलिए गुण करने पर वह अचरितार्थ ही है । अतः दीर्घ के द्वारा गुण का बाध हो ही जायगा, 'इको झल्' सूत्र नहीं करना चाहिए । ऐसा प्रश्न करके बताया कि दीर्घ के बाद गुण न हो जाय ; इसलिए यह सूत्र है कि सन् को कित् करके 'क्ङिति च' १.१.५ से गुण का निषेध हो । यद्यपि दीर्घ के बाद गुण करने पर अजन्त को दीर्घ करना व्यर्थ हो जाएगा ; क्योंकि गुण होने पर ह्रस्व के गुण और दीर्घ के गुण में कोई भेद नहीं रहता तथापि दीर्घ विधान ह्रस्वान्त 'मि' धातु से सन् प्रत्यय करने पर "सनिमीमा" सूत्र से 'मी' मानकर इत्व करके 'मित्सति' इस प्रयोग की सिद्धि के लिए चरितार्थ है । अतः दीर्घ विधान सामर्थ्यात् गुण नहीं रुक सकता । अतः दीर्घ होने पर प्राप्त गुण को रोकने के लिए 'इको झल्' इस सूत्र से कित्व विधान आवश्यक है । यह 'इको झल्' सूत्र के भाष्य में कहा गया । निरवकाश और अपवाद पर्याय होते तो बुभूषति में भी अपवादत्वात् ही गुण का दीर्घ से बाध हो जाता फिर अपवादमूलक बाध होने के कारण उत्सर्ग शास्त्र की पुनः प्रवृत्ति होती ही नहीं थी, इस तरह दीर्घ के बाद प्राप्त गुण के अभाव के लिए भाष्य में बतायी गयी सूत्र की आवश्यकता असंगत हो जाती । इस लिए 'अपवादविषयेऽपि' का अर्थ बाधकविषयेऽपि' करना आवश्यक है ।

इति। डोढौक्यत इत्यादौ तु परत्वादौकारस्य दीर्घ औकार एव प्राप्नोति) इत्थं डौढौक्यत इत्यनिष्टापत्तिः, इष्यते तु पूर्वं ह्रस्वत्वं तत डुढौक्यत इति जाते गुणो यङ्लुकोरिति गुणेन डोढौक्यत इति भाष्याशयः। (भाष्यम्) ननु च ह्रस्वत्वे कृते दीर्घत्वं न भविष्यति न सिध्यति किं कारणं ह्रस्वाद्धि परं दीर्घत्वम्। ह्रस्वत्वं क्रियतां दीर्घत्वमिति। किमत्र कर्तव्यम् परत्वाद्दीर्घत्वेन भवितव्यम् (इत्थं परत्वात्प्राप्तस्य दीर्घत्वस्य निवारणाय भाष्ये प्रोक्तम् (भाष्यम्) न वा ऽभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् (वा०२) न वैष दोषः। किं कारणम् अभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात्। अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते इत्येषा परिभाषा कर्तव्या। अनया परिभाषया परत्वात् प्राप्तस्य दीर्घत्वस्य उत्सर्ग ह्रस्वत्वाबाधकत्वं सम्पादयता भाष्यकारेण अपवादशब्दस्य बाधकपरत्वं स्वीकृतमेव। अभ्यासविकारेषु अपवादा उत्सर्गान्न बाधन्ते इत्यत्र अपवादपदेन गृह्यते च दीर्घः सच न वस्तुतोपवादो निरवकाशत्वाभावात् किन्तु ह्रस्वबाधकः, परत्वात्। इत्थमत्र बाधकार्थेऽपवादशब्दप्रयोगः स्पष्ट इति सिद्धमिह प्रकरणेऽत्र च परिभाषायां बाधकार्थपरत्वमपवादशब्दस्य'। तदनन्तरं पुनर्भाष्ये प्रोक्तम् (भाष्यम्) कान्येतस्याः परिभाषायाः प्रयोजनानि ? "प्रयोजनं सन्वद्भावस्य दीर्घत्वम् (वा० २) अचीकरत्, अजीहरत्। सन्वद्भावमपवादत्वाद्दीर्घत्वं न बाधते "मान्प्रभृतीनां दीर्घत्वमित्वस्य (वा० IV)" मान्प्रभृतीनाँ दीर्घत्वमपवादत्वादित्वं न बाधते। "गणेरीत्वं हलादिशेषस्य" (वा० ५) गणेरीत्वमपवादत्वाद्हलादिशेषं न बाधते। इदमयुक्तं वर्तते। किमत्रायुक्तम् ? एचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धिपरं दीर्घत्वमित्युक्त्वा तत उच्यते—नवाऽभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वादिति। तस्याः परिभाषायाः प्रयोजनानि नामोच्यन्ते—प्रयोजनं सन्वद्भावस्य दीर्घत्वम्, मान्प्रभृतीनां दीर्घत्वमित्त्वस्य, गणेरीत्वं हलादिशेषस्येति च। न च सन्वद्भावमपवादत्वाद्दीर्घत्वं बाधते। किं तर्हि? परत्वात्। न खल्वपि मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्वं बाधते। किं तर्हि ? अन्तरङ्गत्वात्। न खल्वपि गणेरीत्वमपवादत्वाद्धलादिशेष बाधते। किं तर्हि ? अनवकाशत्वात्। एवं तर्हीयं परिभाषा कर्तव्या-अभ्यासविकारेषु बाधका न बाधन्त इति।

अत्र भाष्ये स्पष्टं दृश्यते यत्—अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधते इत्यस्य स्थाने तत्र तत्रोदाहरणेषु परत्वादिनिमित्तकानां बाधकानांमबाधत्वमात्रतात्पर्या :"अभ्यासविकारेषु बाधका न बाधन्ते बाध्यान्' इत्येव परिभाषा-स्वीकृता भाष्ये। अपवादा इत्यस्य बाधका इत्यर्थः उत्सर्गशब्दस्य च बाध्या इत्यर्थो भाष्ये स्पष्टः। अतएव चोच्यते "अभ्यासविकारेषु बाध्यबाधकभावोनास्तीति"। **तदुक्तमित्यस्य ग्रन्थेनै**त्यनेनान्वयः ई च गण इत्यस्यानवकाशत्वमुपपादयति—गण्-रूपा इति गणरूपाभ्यसान्त्यस्येत्यर्थके 'ई च गणः' ७.४.६७ इति सूत्रं निरवकाशम् सर्वत्र हलादिशेषेणान्त्यस्यापहारात्; ईत्वे कृते तु हलादिशेषः न प्राप्नोति अन्त्यहलो-

ऽभावात्। तथापि ईत्वं हलादिशेषं न बाधते अभ्यासविकारेषु अपवादा (बाधका) उत्सर्गान् बाध्यान् न बाधन्ते इति न्यायात् इति भावः। न गणेरीत्वमपवादत्वाद् हलादिशेषं बाधते, तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते चारितार्थ्यम् इत्येवंरूपस्यापवादत्वस्याभावादिति भावः। 'ई च गणः' ७.४.९७ इति सूत्रम् उत्सर्गस्य हलादिशेषस्याप्राप्तियोग्येऽचरितार्थमस्ति; किन्तु उत्सर्गहलादिशेषप्रवृत्युत्तरं तस्य चारितार्थ्यं नास्ति गणरूपाभ्यासाभावात्। अभ्यासविकारेषु चापवादा (बाधकाः) उत्सर्गान् (बाध्यान्) न बाधन्त इति न्यायेन अभ्यासविकारेषु बाधका न बाधन्ते इति न्यायद्वयफलितार्थपरेण अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति न्यायेन तत्र बाध्यबाधकाभावेन च साधितम् अर्थात् बाध्यबाधकभावाभावे पूर्वं हलादिशेषे गणरूपस्याभ्यासस्याभावेन सूत्रारम्भसामार्थ्यात् हलादिः शेष इतिलोपावशिष्टस्य गरूपाभ्यासान्त्यस्याकारस्येत्वे रूपसिद्धिरिति भावः। **तस्मिंश्च सति**=अभ्यासविकारे बाध्यबाधकभावाभावे च स्वीकृते सतीति भावः। **सामर्थ्यादिह** गणधातोर्योऽभ्यासस्तस्यान्त्यस्येत्वमिति वैयधिकरण्येनान्वयः स्वीकार्य इतिभावः न च णकारस्य लोपेऽपि आनुमानिकस्थान्यादेशभावमूलक स्थानिवत्त्वेन गकारे गणत्वं सम्पाद्यम् इति वाच्यम् अभ्यासस्यानर्थकतया तत्रानुमानिकस्थान्यादेशभावकल्पनायाः असंभवात्। 'भवतु' इत्यादौ तिपः शास्त्रीयार्थेन सार्थकतया तादृशस्थले एवानुमानिकस्थान्यादेशभावकल्पनाया अङ्गीकारात्। एकदेशविकृतन्यायस्याप्यक्तपरिमाणे (परिच्छिन्नपरिमाणे) अप्रवृत्या न तेन गकारे गणधातुरूपता सम्पादयितुं शक्यते पर्णैकन्यूनकेऽपि न लौकैरूप्यकत्वमङ्गीक्रियते इति हेतोः।

नच निरवकाशस्थलेऽपि येन नाप्राप्तिन्यायेनैव बाधो भवति, तेन च बाधकस्यैवापवादपदप्रतिपाद्यतया निरवकाशस्थलेऽपि यो बाधकस्तस्यापवादत्वकथनं युक्तमेवेति वाच्यम् तस्य चारितार्थ्यविषयताया उक्तत्वात् तेन न्यानेनापि चारितार्थ्यविषये यो बाधकस्तस्यैवापवादत्वस्य भाष्यसिद्धत्वात्। नचाभ्यासविकारेषु वैयधिकरण्यान्वयस्य स्वीकृतत्वाद् गणधातोरवयवस्याभ्यासस्येत्वमित्यर्थे कृते उत्सर्गहलादिशेषप्रवृत्यनन्तरम् 'ई च गणः' ७.४.९७ इत्यस्य चारितार्थ्यमस्तीति वाच्यम् अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति परिभाषाव्यापारानन्तरं हलादिशेषे गणरूपस्याभ्यास्याभावात् सूत्रवैयर्थ्येन सूत्रारम्भसामर्थ्यात् वैयधिकरण्यान्वयस्वीकारानन्तरं सूत्रस्य चारितार्थ्येऽपि ततः पूर्वमचारितार्थ्यस्यैव सत्वात् द्वितीयबाधबीजरूपस्य तस्य विषयाभावात्।

तस्य चारितार्थ्यविषयकत्वं पूर्वप्रतिपादितभाष्येणापि लब्धमस्ति इको झल् १.२.९. इति सूत्रे भाष्येऽपि च तद्ध्वनितम्। तत्र हि भाष्ये बुभूषतीत्यादौ गुणं बाधित्वा दीर्घे रूपसिद्धौ किद्विधानं व्यर्थम् दीर्घो हि अप्राप्तगुणस्थलेऽचरितार्थोऽस्ति, कृते गुणे दीर्घविधानेऽपि न किमपि दीर्घफलं दृश्यते इति गुणोत्तरमपि दीर्घोऽचरितार्थ

एव वर्तते इति तत्र बाधकताऽस्ति । नच दीर्घेकृते गुणः स्यात् तन्निषेधार्थं किद्विधानं चरितार्थमिति वाच्यम् दीर्घविधानसामर्थ्याद् गुणाभावसिद्धे यदि दीर्घे कृतेऽपि गुणः स्यात्तदा दीर्घविधानं व्यर्थम् ह्रस्वस्यापि गुणे कृते तादृशस्यैव रूपस्य संभावनास्ति, यादृशस्य दीर्घे कृते इति गुणेकृते दीर्घविधानस्य वैयर्थ्यमिति भावः । तथाच किद्विधानं व्यर्थमित्याशङ्क्य मिनोतेर्दीर्घे कृते 'सनि मी-मा०-७.४.५४ इ त्यत्र मी ग्रहणेन तस्य मिधातोरादानसम्पादनद्वारा मित्सतीति सनि रूपसिध्यर्थं दीर्घविधानं चरितार्थमिति गुणाभावाय 'इको झल्' १.२.९ इत्यत्र कित्वविधानमिति प्रोक्तम् । अन्यथा (अपवाद निरवकाशशब्दयोः समार्थत्वे) अपवादत्वादेव गुणस्य दीर्घेण बाधे सिद्धे सूत्रमनावश्यकं स्यात् सूत्रावश्यकत्वप्रतिपादकभाष्यं चासंगतं स्यादिति । एवं वर्तते तद्भाष्यम्:—

इको झल् १.२.९ किमर्थमिकः परस्य सनः कित्वमुच्यते ? "इकः कित्वं गुणो माभूत् (श्लोक वार्तिक १) इकः कित्वं क्रियते, गुणो माभूदिति । चिचीषति,तुष्टूषति-नैतदस्ति प्रयोजनम् । "दीर्घारम्भात् (श्लो. वा. १) दीर्घत्वमत्र बाधकं भविष्यति 'कृते भवेत्' (श्लो. वा. १) कृते खलु दीर्घत्वे गुणः प्राप्नोति । "अनर्थकं तु" (श्लो. वा. १ अनर्थकमेवं दीर्घत्वं स्यात् ।। नानर्थकम् । 'ह्रस्वार्थम्' (श्लो. वा. I) ह्रस्वानां दीर्घवचनसामर्थ्याद् गुणो न भविष्यति ।। भवेद् ह्रस्वानां दीर्घवचनसामर्थ्याद्गुणो न स्यात् ।। "दीर्घाणां तु प्रसज्यते" (श्लो. वा. १) दीर्घाणान्तु खलु गुणः प्राप्नोति ।। दीर्घाणामपि दीर्घवचन सामर्थ्याद् गुणो न भविष्यति ।। न दीर्घाणां दीर्घाः प्राप्नुवन्ति ।। किं कारणम् ? ।। नहि भुक्तवान् पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनश्मश्रूणि कारयति ।। सामर्थ्याद्धि पुनर्भाव्यम् श्लो.वा. १ सामर्थ्याद्धि पुनः प्रवृत्तिर्भविष्यति । भोजनविशेषा-च्छिल्पिविशेषाद्वा । दीर्घाणां पुनर्दीर्घत्ववचने न किञ्चित्प्रयोजनमस्ति । "अकृतकारि खल्वपि शास्त्रमग्निवत्"। अग्निर्यददग्धं तद्दहति ।। दीर्घाणामपि दीर्घवचन एतत्प्रयोजनं गुणो माभूदिति । "कृतकारि खल्वपि शास्त्रं पर्जन्यवत्" । तद्यथा पर्जन्यो यावदूनं पूर्णञ्च सर्वमभिवर्षति ।। यथैव तर्हि दीर्घत्वचनसामर्थ्याद्गुणो न भवति । एवमृदित्व-मपि न प्राप्नोति- चिकीर्षति जिहीर्षति ।। "ऋदित्वं दीर्घसंश्रयम्" । नाकृते दीर्घे ऋदित्वं प्राप्नोति । किं कारणम् ? ऋत इत्युच्यते ।। भवेद् ह्रस्वानां नाकृते दीर्घे ऋदित्वं स्यात्, दीर्घाणां तु खल्वकृतेऽपि दीर्घत्वे ऋदित्वं प्राप्नोति ।। "दीर्घाणां नाकृते दीर्घे" ।। दीर्घाणामपि नाकृते दीर्घत्वे ऋदित्वं प्राप्नोति । यदा दीर्घत्वेन गुणो बाधितः तत उत्तरकालऋदित्वं भवति ।। "णिलोपस्तु प्रयोजनम्" ।। इदं तर्हि प्रयोजनम् णिलोपो यथास्यात्—ज्ञीप्सति ।। क्वास्ता, क्व निपतिताः क्व कित्वं क्व णिलोपः । को वाभिसम्बन्धः—यत्सति कित्वे णिलोपः स्यात्, असतिकित्वे न स्यात् ? ।। एषोऽभिसम्बन्धः—यत्सति कित्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते । असति पुनः कित्वे नावकाशं दीर्घत्वं यथैव गुणं बाधते, एवं णिलोपमपि बाधेत । तत्र णिलोपस्यावकाशः—कारणा, हारणा । दीर्घत्वस्यावकाशः—चिचीषति, तुष्टूषति ।

यत्तु काञ्चनीत्यादावपवादमयड्विषयेऽप्यण् भवति क्वचिदपवादविषयेऽपीति न्यायादिति-तन्न। 'अण् कर्मणि च' इति सूत्रस्थभाष्याविरोधात्। तत्र हि अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थं गोदायो व्रजतीत्याद्युक्तम्। काञ्चनीत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिकोऽण् बोध्यः॥

---

इहोभयं प्राप्नोति—ज्ञीप्सति। परत्वाण्णिलोपः॥ असत्यपि कित्वे सावकाशं दीर्घत्वम्॥ कोऽवकाशः? ।: इस् भावः—निमित्सति, प्रमित्सति। मीनातिमिनोत्योर्दीर्घत्वे कृते मीग्रहणेन ग्रहणं यथा स्यात्॥ यथैव तर्हि असति कित्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते, एवं गुणोऽपि बाधेत। तस्मात्कित्वं वक्तव्यम्॥ इकः कित्वं गुणो माभूद् दीर्घारम्भात्कृते भवेत्। अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते॥ (श्लोक वा. १) सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम्। दीर्घाणांनाकृते दीर्घे णिलोपस्तु प्रयोजनम् (श्लो. वा. २) इति।

**काञ्चनीति** काञ्चनस्य कञ्चनस्य वा विकारः इयं यष्टिः काञ्चनीत्यादौ काञ्चनादि शब्दात्मय ड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ४.३.१३३ इत्यपवादमयड्विषयेऽप्यण् "प्राग्दीव्यतोऽण्" ४.१.८३ इत्यनेन जायते, क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायादिति केचिदाहुस्तन्न 'अण् कर्मणि च' ३.३.१२ इति सूत्रस्थभाष्यविरोधात्। तत्रहि प्रोक्तं भाष्येः—किमर्थमिदमुच्यते। नाविशेषेण कर्मण्यण् (३.२.१) इत्यण् कर्मणि विहितः स क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यति। "अणः पुनर्वचनमपवादविषयेऽनिवृत्यर्थम्" (वा. I) अणः पुनर्वचनं क्रियतेऽपवादविषयेऽनिवृत्तिर्यथा-

---

किसी ने "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिवशते" इसका उदाहरण "काञ्चनी" दिया और बताया कि यहाँ विकार अर्थ में 'मयट्' प्रत्यय अपवादत्वात् होना चाहिए और 'कञ्चनमयी' बनना चाहिए; परन्तु पूर्वोक्त न्याय से "शेषे ४.२.९२ सूत्र से विहित औत्सर्गिक अण् प्रत्यय होता है; परन्तु यह कथन 'अण् कर्मणि च ३.३.१२ इस सूत्र के भाष्य से विरुद्ध होने के कारण ठीक नहीं है। 'अण् कर्मणि च' ३.३.१२ सूत्र के भाष्य में कहा गया कि यहाँ अण् का दुबारा कथन यह सूचित करता है कि अण् की निवृत्ति अपवाद विषय में भी नहीं होती है। इसीलिए 'गाय देने वाला जाता है', इस अर्थ में "गोदायो व्रजति" बनता है। यहाँ गां ददातीति 'गोदायः' में "आतोऽनुपसर्गे कः" से कर्मण्यण् का अपवाद क प्रत्यय होना चाहिए परन्तु पूर्वोक्त ज्ञापन के अनुसार अपवाद 'क' प्रत्यय के विषय में भी अण् प्रत्यय हुआ। पूर्वोक्त कथन यदि ठीक होता तो "क्वचिदपवादविषयेऽपि" इस न्याय से ही पुनः अण् सिद्ध हो जाता वहाँ अण् ग्रहण व्यर्थ ही था। "काञ्चनी" में "काञ्चनेन निर्मिता" इस अर्थ में शैषिक अण् हुआ है। इस तरह यहाँ विकार अर्थ नहीं होने से मयट् की प्राप्ति ही नहीं है। 'काञ्चनी' में कञ्चनेन निर्मिता यह विग्रह भी संभव है।

**अत्रेदं बोध्यम्। येन नाप्राप्ते इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद्बाध्यम्, विध्यन्तराप्राप्तविषयाभावात्। इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते। अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति, विनिगमनाविरहात्॥**

---

स्यात्। गोदायो व्रजति, कम्बलदायो व्रजतीति॥ अस्मिन् भाष्येऽणः पुनर्वचनसामर्थ्यादपवादविषयेप्रवृत्तिरुक्ता। भवतां मतेन तु अनेन क्वचिदपवादविषये इति न्यायेनैवाणः-सिद्धौ पुनरणग्रहणस्य वैयर्थ्यं वज्रलेपायितमेवेति। न चैवं कथं काञ्चनीति सिद्ध्यतीत्युच्यते चेत् काञ्चनेन निर्मिता इति विग्रहे तत्र शेषे ४.२.६२ इत्यणि आदिवृद्धौ टिड्ढ...४.१.१५ इति ङीपि "यस्येति च" इति लोपे ६.४.१४८ काञ्चनीति।

लक्ष्यानुरोधाद् **बाध्यसामान्यचिन्तया** स्वविषये प्राप्तानां सर्वेषां बाध्यानां बाधः कथं सिद्ध्यतीत्याह—**येनेत्यस्य यदि स्वेतरेणेत्याद्यर्थः** इत्यादिना। यदि तु= **येन नाप्राप्ते** इत्यत्र येनेत्यस्य लक्षणेन कार्येण वार्थः तदा बाध्यविशेषचिन्ता सम्भवति लक्ष्यानुरोधादेव तदाह—यद्युदाहरणमस्ति इतिकथनमुदाहरणस्य प्राप्तिकाठिन्यं न

---

यहाँ यह जान लेना चाहिए कि "येन नाप्राप्ते" यहाँ 'येन' का तात्पर्य यदि अपने से इतर (भिन्न) लें; तब अपने विषय में अपने से भिन्न जो प्राप्त हैं वे सभी बाध्य होंगे। क्योंकि बाधक का विषय ऐसा कोई प्रयोग नहीं है जहाँ अन्य विधियों की प्राप्ति नहीं हो। इसी को बाध्यसामान्य चिन्ता' कहा करते हैं। यदि उदाहरण मिलता हो तो यह बाध्यसामान्यचिन्ता, 'अनवकाशत्वात्' जहां बाध्यबाधकभाव माना जाता है, वहाँ भी की जा सकती है।

"अकः सवर्णेदीर्घः"अचि र ऋतः ७.२.१००गुणदीर्घोत्वानामपवादः" इत्यादि प्रसिद्ध उदाहरणों के रहते'यद्युदाहरणमस्ति'यह कथन केवल उक्तिवैचित्र्यमात्र सूचित करता है। बात यह है कि "अकःसवर्णे दीर्घः"६.१.१०१ सूत्र'दैत्य+अरिः' में प्राप्त "आद्गुणः" ६.१.८७ को और श्री+ईशः, विष्णु+उदयः. होतृ+ऋकारः में प्राप्त 'इकोयणचि'६.१.७७ को बाध्य सामान्यचिन्ता से ही बाधता है वह कहता है कि मेरे विषय में जो जो प्राप्त हैं वे नहीं होंगे। इसी तरह 'अचि र ऋतः' ७.२.१०० सूत्र 'तिस्रस्तिष्ठन्ति'में ऋतो ङि—७.३.११० से प्राप्त गुण को,'तिस्रःपश्य' में 'प्रथमयोः पूर्वसवर्णः ६.१.१०२ से प्राप्त दीर्घ को, प्रियतिस्रः सम्पत्तिः" में 'ऋत उत्' ६.१.१११ से प्राप्त उत्व को बाध लेता है। यद्यपि 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' (प० ६१) इस न्याय से 'अचि र ऋतः' से दीर्घ और उत्व का ही बाध प्राप्त था गुण का नहीं; परन्तु बाध्यसामान्य चिन्ता के कारण वह अपने विषय में प्राप्त सभी विधियों का बाधक बना। इस तरह प्रसिद्ध उदाहरणों के रहते हुए भी "यद्युदाहरणमस्ति" यह कहना उक्तिवैचित्र्यमात्र सूचित करता है; उदाहरण का दुर्भिक्ष नहीं।

यदि तु येनेत्यस्य लक्षणेनेत्यर्थः कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता। अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेषचिन्ता सम्भवति यद्युदाहरणमस्ति ॥ ५९ ॥

तत्र येन कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेः तद्-बाधकत्वे निर्णीते किं शास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह—

---

सूचयति। बाध्यसामान्यचिन्ताया 'अकः सवर्णे दीर्घः' ६.१.१०१ इत्युदाहरणस्य प्रसिद्धेः, दीर्घविधायकशास्त्रेणानेन स्वविषये प्राप्तस्य सर्वस्य स्वेतरस्य आद्गुणः ६.१.८७ इकोयणचि ६.१.७७ इतिशास्त्रद्वयस्य बाधको भवतीति स्वीकारात्। एवमचि र ऋतः ७.२.१०० इति रभावः तिस्रस्तिष्ठतीत्यत्र ऋतो ङि ७.३.११० गुणस्य, तिस्रः पश्येत्यत्र प्रथमयोः ६.१.१०२ इति पूर्वसवर्णदीर्घस्य, प्रियतिस्रोधनम् इत्यत्र ऋत उत् ६.१.१११ इत्युत्त्वस्य स्वषिये प्राप्तस्य स्वेतरस्य गुणदीर्घोत्वविधा-यकस्य बाध्यसामान्यचिन्तया बाधकः। मध्येऽपवादन्यायेन यद्यपि रभावः दीर्घोत्त्वयो-रेव बाधकः सिद्ध्यति तथापि बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाधत इति भावः। बाध्यविशेषचिन्तया 'एत्येधत्यूठ् सु' ६.१.८९ इति वृद्धि र्यथा एङिपर रूपम् ६.१.९४ बाधते नतु 'ओमाङोश्च ६.१.९५ इति पररूपमिति अग्रिमपरिभाषा-निरूपणे निरूप्यते इति तस्याप्युदाहरणप्रसिद्धेः ॥ इति शिवम् ॥ ५९

## पुरस्तादप······नोत्तरान् ॥६०॥

अव+आङ् पूर्वकादिण् धातोरदादिकाल्लोटि सिपि शपोलुकि सिपः स्थाने ह्यादेशे अव+आ+इहि इति स्थिते 'आद्गुणः' ६.१.८७ इति गुणे अव+एहि इति स्थिते एत्येधत्यूठ्सु ६.१.८९ इति वृद्धिः प्राप्नोति, अन्तादिवच्च ६.१.८५ इति परादिवद्भावेन एहि इत्यस्य इण्त्वादेजादित्वस्य स्वतः श्रूयमाणत्वात्, एङिपररूपम् ६.१.९४ इति पररूपं प्राप्नोति, 'अन्तादिवच्चेति' गुणैकादेशस्य पूर्वान्तवद्भावेनाङ्त्वाद

---

यदि 'येन' का अर्थ 'लक्षणेन' मानें अथवा 'कार्येण' उसका अर्थ करें; तब बाध्य विशेष की चिन्ता मानी जायगी। अनवकाशत्वेन जहाँ बाध होता है वहाँ भी यह विशेष चिन्ता (विचार) तो करनी ही चाहिए कि बाधक शास्त्र किसे बाध कर चरितार्थ होता है? इसे या उसे। जिसे बाध कर वह चरितार्थ होता है उसका ही उसे बाधक होना चाहिए। इति शिवम् ५९

## पुरस्ताद—नोत्तरान्—६०

"येन नाप्राप्ते" में 'येन' का अर्थ यदि "कार्येण" करें तो पररूपतावच्छिन्न-कार्य की आवश्यक प्राप्ति रहने पर बनायी गयी वृद्धि सारे पररूपों की बाधिका सिद्ध होती है; ऐसी परिस्थिति में विशेषचिन्ता या विशेषविचार करते हैं कि किस शास्त्र के द्वारा विहित पररूप का वह बाध करेगी; इस प्रश्न के समाधान के लिए

## पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ६०

**अवश्यं स्वपरस्मिन् बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः आकाङ्क्षानिवृत्तेः । विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥६०॥**

---

ओमाङोश्च ६.१.९४ इति पररूपं च प्राप्नोति, तत्र येन नाप्राप्तिन्यायमाश्रित्य येनेत्यस्य लक्षणेन कार्येण वेत्यर्थकरणे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेः सकलपररूपकार्यस्य बाधकत्वे निर्णीतेऽपि केन शास्त्रेण विहितस्य पररूपस्य वृद्धिर्बाधिकेति बाधविशेषचिन्तायां **पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरा-निति** परिभाषया वृद्धिरेङि पररूपमिति विहितं पररूपमेव बाधते, न तु ओमाङोश्चेति विहितमपि । अत्र बीजमौचित्यं स्वभावो वा तदाह—**अवश्यं स्वेत्यादि** पुरस्तात् पठितेन बाधकेन परपठितशास्त्रमवश्यबाधनीयम् । यदा च सोऽव्यवहितपरविधिं बाधित्वा साफल्यमवाप्तुं शक्नोति तदा तदुत्तरान् विधीन् कथं बाधताम्—केन शास्त्रेण विहितं पररूपम् एत्ये...६.१.८९ इतिवृद्ध्या बाध्यतामित्याकारिकाया आकाङ्क्षाया एङि पररूपम् ६.१.९४ इति पररूपबाधनेन निवृत्तेः । तस्या बाधनाकाङ्क्षाया अभावेन तदुत्तरशास्त्रेण ओमाङोश्च ६.१.९५ इत्यनेन विहितं पररूपं कथं तया बाध्यताम् । यदा वृद्धिशास्त्रम् एङिपररूपम् इति बाधित्वा चारितार्थम् तदा समाप्तनिरवकाशबलां तां 'विप्रतिषेधे परं कार्यम्' १.४.२ इत्यनेन परं पररूपमोङाङोश्चेति बाधते । विप्रतिषेधशास्त्रबाधे प्रमाणाभाव इत्येतदस्यां परिभाषायां बीजम् इति शिवम् ॥६०॥

---

परिभाषा बनाते हैं—"**पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्**"। पुरस्तात्पूर्व में आया हुआ अपवाद, अव्यवहित विधि को बाधता है; उत्तरविधि को नहीं। बात यह है कि बाधक शास्त्र, अवश्य सामान्य शास्त्र का बाध करेगा। अपने से पर को बाधना जब निश्चित हो गया; तब वह प्रथमोपस्थित अव्यवहित को बाधेगा। उसको बाधकर जब अपवाद शास्त्र चरितार्थ हो गया, तब पीछे उपस्थित होने वाले उससे पर को भी बाधे; इसमें कोई युक्ति नहीं दिखती; औचित्य नहीं दिखता। अनन्तरविधिको बाधने के बाद बाध की आकांक्षा ही नहीं रही; जो वह उत्तर को बाधे। "विप्रतिषेधे परं कार्यम्" १.४.२ इस शास्त्र को बाध कर प्रवृत्त होने में कोई प्रमाण नहीं दिखाई देता।

इसलिए पुरस्तात् (पूर्व में पठित) अपवाद 'एत्येधत्यूठ्सु' ६.१.८९ से विहित-वृद्धि अनन्तरवर्ती 'एङि पररूपम्' ६.१.९४ से प्राप्त पररूप को ही बाधेगी; 'ओमाङोश्च' ६.१.९५से विहित पररूप को नहीं। इसलिए 'अवागच्छ' इस अर्थ में प्रयुक्त "अवेहि" में वृद्धि नहीं होगी; किन्तु 'ओमाङोश्च' से पररूप ही होगा। इति शिवम्. ६०.

नासिकोदरौष्ठजङ्घादन्तेत्यस्यौष्ठाद्यंशे ङीष्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किं विहितस्येत्याकाङ्क्षायामाह—

**मध्येऽपवादा पूर्वान् विधीन् बाधन्ते नोत्तरान् ।६१।**

तेनौष्ठादिषु पञ्चस्वसंयोगोपधादिति प्रतिषेध एव बाध्यते न तु सहनञ्विद्य-मानपूर्वाच्चेति । तेन'विद्यमानोष्ठा' इत्यादौ न ङीष् विकल्प्यते किन्तु नित्यनिषेधः एव । नासि० ४.१.५५ इत्यस्य सहनञ्० ४.१.५७ इत्यनेन परत्वाद्बाधात् । नासिकोदर···४.१.५५

---

**मध्येऽपवादा······नोत्तरान् ॥६१॥**

बाध्यविशेषचिन्तायाः फलितार्थपरां द्वितीयां परिभाषामवतारयति—मध्ये-ऽपवादा इति । अयं भावः 'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च' ४.१.५५ इत्यनेन नासिकादिशब्देभ्यः विकल्पेन ङीष् विधीयते । तत्र नासिकोदरयोः तुङ्गनासिकी, तुङ्ग-नासिकेत्यादौ 'पुरस्तादपवादाः' इति पूर्वोक्तेन न्यायेन ''न क्रोडादिबह्वचः ४.१.५६ इति बह्वज्लक्षणो निषेधो बाध्यते । ओष्ठादीनां पञ्चानां तु 'बिम्बोष्ठा' इत्यादौ 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' ४.१.५४ इत्यत्रासंयोगोपधादित्युक्त्या तत्पर्युदासान् ङीषो निषेधं दृष्ट्वा सूत्रेऽस्मिन् तेषां ग्रहणं क्रियते । तत एभ्यः पञ्चभ्यः प्राप्तस्य सर्वविधङीष्निषेधस्येदं सूत्रं बाधकमिति मत्वापि बाध्यविशेषचिन्तया केन शास्त्रेण विहितो निषेधोऽनेन बाध्यते इति जिज्ञासायाम् ''**मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरात्**'' इत्यनेन ओष्ठादिषु पञ्चसु बिम्बोष्ठी बिम्बोष्ठा इत्यादौ असंयोगोपधा-दिति निषेध एव बाध्यते नतु 'सहनञ् विद्यमानपूर्वाच्च' ४.१.५७ इति निषेधोऽपि ।

---

**मध्येऽपवादा—नोत्तरान् ६१.**

''नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च'' सूत्र ४.१.५५. नासिकादि शब्दों से विकल्प करके ङीष् विधान करता है । तुङ्गनासिकी तुङ्गनासिका में विकल्प से ङीष् होता है । बिम्बोष्ठी और बिम्बोष्ठा इत्यादि प्रयोग बनते हैं । यह सूत्र ओष्ठादि अंश में ङीष्निषेधत्वावाच्छिन्न का अर्थात् ङीष् के सभो निषेधकों का बाधक हैं; ऐसा जब सोचा गया तब जिज्ञासा हुई कि किस सूत्र से विहित ङीष् निषेध को बाधे इस जिज्ञासा में परिभाषा बनाते हैं—

''**मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्**'' ''मध्यमें आये हुए अपवाद पूर्ववर्ती विधियों को बाधते हैं; उत्तरवर्ती विधियों को नहीं'' । इसलिए बिम्बोष्ठी आदि प्रयोगों में ''स्वाङ्गच्चोपसर्जनादसंयोगोपधात्'' ४.१.५४ सूत्र में विद्यमान ''असंयोगोपधात्'' निषेध को ही यह सूत्र बाधेगा । 'सहनञ् विद्यमानपूर्वाच्च'४.१.५७ को यह नहीं बाधेगा; क्योंकि वह इससे उत्तरवर्त्ती है । वह तो 'असंयोगोपधात्' ४.१.५४ को ही परत्वात् बाधेगा । ''नासिकोदरोष्ठ—४.१.५५ सूत्र में भाष्यकार ने इसका उल्लेख किया है । उन्होंने कहा है कि नासिका और उदर शब्दों से दो प्रकार

मानलक्षण इति 'नासिकोदर' इत्यत्र भाष्ये स्पष्टम् । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥६१॥

ननु 'वाच्छन्दसि' इत्यनेन सेह्यपिच्चेत्यनन्तरस्यापित्वस्येव 'हेरपि' विकल्पः

---

सूत्रस्य भाष्ये सर्वमिदं स्पष्टम् । तथाहि—इह 'तावन्नासिकोदर' इति बह्वज्लक्षणश्च प्रतिषेधः प्राप्नोति सहनञ्विद्यमानपूर्वलक्षणश्च । 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इति । एवमियं विभाषा बह्वज्लक्षणं प्रतिषेधं बाधिष्यते सहनञ्विद्यमानलक्षणं न बाधिष्यते (तेन सहनासिकेत्येव) ओष्ठजङ्घादन्तकर्णशृङ्गाच्चेति संयोगोपधलक्षणश्च प्रतिषेधः प्राप्नोति सहनञ्विद्यमानलक्षणश्च । मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इति । एवमियं विभाषा संयोगोपधलक्षणं प्रतिषेधं बाधिष्यते 'सहनञ् विद्यमानपूर्वं न बाधिष्यते पूर्वोपस्थितस्य बाधस्य बाधेनोत्तरविधिबाधे नैराकाङ्क्ष्यादालस्यमस्या बीजम् इति शिवम् ॥६१॥

## अनन्तरस्य विधिर्वा......प्रतिषेधो वा ॥६२॥

सेह्यपिच्च ३.४.८७ इति विहिस्यापित्वस्येव हेरपि 'वाच्छन्दसि' ३.४.८८ इति विकल्पः स्यात् तथा नेटि ७.२.४ इति निषेधो यथा वदव्रजहलन्तस्याचः ७.२.३

---

के प्रतिषेध प्राप्त होते हैं:—(१) बह्वज लक्षण (न क्रोडादिबह्वचः ४.१.५६ सूत्र से) और (२) सहनञ्विद्यमान लक्षण (सहनञ्विद्यमानपूर्वाच्च" ४.१.५७ से) वहाँ यह सूत्र "पुरस्तादवाद" न्याय (प० ६०) से बह्वज् लक्षण निषेध को बाधेगा, सहनञ्विद्यमानलक्षण निषेध को नहीं बाधेगा। (प्रत्युत वह निषेध ही परत्वात् इसको बाध लेगा, तुङ्गनासिकी, तुङ्गनासिका' में 'न क्रोडादि' को बाधकर विकल्प से ङीष् होगा, सहनासिका और अनासिका में ङीष् नहीं होगा।

ओष्ठ, जङ्घा, दन्त, कर्ण और शृङ्ग शब्दों से भी दो प्रकार का प्रतिषेध प्राप्त होता है—(१) संयोगोपधलक्षण और (२) सहनञ्विद्यमान लक्षण। उनमें यह "नासिकोदर—सूत्र से विहित विभाषा ङीष्, मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते" इस न्याय से संयोगोपधलक्षण ङीष् को रोकता है, सहनञ् विद्यमान लक्षण प्रतिषेध को नहीं।

इस परिभाषा के स्वीकार करने का फल यह हुआ कि 'विद्यमानदन्ता' में "नासिकोदरोष्ठ"—से विकल्प से ङीष् नहीं हुआ।

पूर्वोपस्थित सूत्र को बाधकर चरितार्थ हो जाने के कारण बाधन की निराकांक्षता ही इस परिभाषा में बीज है। इति शिवम् ६१।

## अनन्तरस्य विधि र्वा—वा ६२

"वाच्छन्दसि" ३.४.८८ यह सूत्र लोट लकार के मध्यम पुरुष के एकवचन में विहित सिप् के स्थान में हि को विकल्प से 'अपित्' करता है। यह सूत्र "सेह्यपिच्च"

स्यात् । तथा 'नेटी'ति निषेधोऽनन्तरहलन्तलक्षणाया इव 'सिचिविद्धि-मृजिवृद्ध्यो-र'पि स्याद् । अत उक्तन्यायमूलकमेवाह—

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ६२**

अत एव 'संख्याव्ययादेरि'ति ङीब्ग्रहणं चरितार्थम् । तद्ध्यनन्तरस्य ङीषो विध्यभावाय । 'न क्तिवी'ति सूत्रे दीर्घग्रहणं च चरितार्थम् । तद्ध्यनन्तरस्यानुदात्तोप-

---

इत्यनन्तरोक्ताया वृद्धेर्भवति तथा 'सिचि वृद्धिः परस्मैपदेषु' ७.२.१ इति विहिताया 'मृजेर्वृद्धिः ७.२.११६ इति विहितायाश्च स्यादतः परिभाषामवतारयति "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति । वा शब्दो एवार्थकः । तेन अनन्तरस्यैव विधानं भवति प्रतिषेधोऽपि चानन्तरस्यैव भवतीति परिभाषार्थः । तेन वाच्छन्दसीत्यनेनानन्तरस्य (अव्यवहितस्य) अपित्त्वस्य विकल्पेन विधानं क्रियते । अतो हिर्न विकल्पेन विधीयते । एवं नेटि' ७.२.४ इति निषेधोऽपि अव्यवहितपूर्वेण 'वदव्रज-हलन्ताच्च' ७.२.३ इतिसूत्रस्थेन हलन्ताच्चेत्यनेन विहिताया वृद्धेरेव भवति न तु 'सिचि वृद्धिः' ७.२.१ इति विहिताया 'मृजेर्वृद्धि' ७.२.११४ इतिविहितायाश्चेति ।

---

३.४.८७ से विहित 'अपित्' का ही विकल्प से विधान करता है, क्योंकि 'अपित्' अनन्तर में अर्थात् अव्यवहित पूर्व में है । 'हि' की विधि को विकल्प नहीं करता ? इसके लिए परिभाषा है "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (किसी सूत्र से) अनन्तर का ही विधान होता है और अनन्तर का ही प्रतिषेध होता है । इसीतरह "नेटि" ७.२.४ यह सूत्र इडादि सिच् के परे रहते वृद्धि का निषेध करता है । यह निषेध अनन्तर सूत्र "वदव्रजहलन्तस्याचः" ७.२.३ से विहित वृद्धि का ही होता है किन्तु 'सिचि वृद्धिः परस्मैपदेषु' ७.२.१ और मृजेर्वृद्धिः' ७.२.११४ से विहित वृद्धि का नहीं होता; इसका भी कारण यही परिभाषा है—"अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" । इस परिभाषा के स्वीकार करने के कारण ही "संख्याव्यादेर्ङीप् ४.१.२६ में ङीप् ग्रहण चरितार्थ हो गया । ङीप् का ग्रहण अनन्तर के ङीष् के अभाव के लिए किया गया है । यदि यहाँ ङीप् नहीं कहते तो इस सूत्र से अव्यवहित पूर्ववर्ती सूत्र "बहुव्रीहेरूधसो ङीष्" ४.१.२५ सूत्र में विहित ङीप् का यहाँ भी विधान हो जाता, इसी डर से यहाँ ङीप् का ग्रहण किया गया । यदि दूरस्थ और व्यवहित विधि का विधान और प्रतिषेध संभव होता तो "संख्याव्ययादेः" मात्र सूत्र करने से दूरस्थ ऋन्नेभ्योङीप् ४.१.५ में दृष्टङीप् का विधान हो ही जाता; फिर ङीप् ग्रहण करने की क्या आवश्यकता शेष रह जाती । । जब यह परिभाषा मानी गयी तब तो यदि "संख्याव्ययादेः" मात्र सूत्र किया जायेगा तो इससे अनन्तर विहित "बहुव्रीहेरूधसो ङीष्" ४.१.२५ का हीविधान हो पायेगा । परन्तु चाहते हैं कि ङीप् का विधान हो । अतः ङीप् ग्रहण करते हैं ।

**देश-इत्यस्यैव निषेधाभावाय ॥ मध्येऽपवादा इतिन्यायाद्यपेक्षयाऽन्तरस्येति न्यायः प्रबल इति 'अष्टाभ्य' इति सूत्रे कैयटः ॥**

---

पूर्वस्मिन् परिभाषाद्वये यो न्यायः प्रोक्तस्तादृशन्याय एवास्या अपि मूलम् अर्थात् अनन्तन्तरस्य प्रथमोपस्थितत्वात्तद्बाधेन चारितार्थ्ये जाते व्यवहितस्य पश्चादुपस्थितस्य बाधे मानाभावः; चरितार्थेन तेन व्यवहितोत्तरबाधे निराकाङ्क्षतया न प्रवृत्यते । अतएव 'संख्याव्ययादे र्ङीप्' ४.१.२६ इतिसूत्रीयं ङीब्ग्रहणमनन्तरस्य 'बहुव्रीहेरूधसा—ङीष्' ४.१.२५ इति ङीषो बाधनाय कृतं चरितार्थम् । अस्या परिभाषाया अभावे 'ऋन्नेभ्यो ङीप्' ४.१.५ इत्यनेन विहितङीपा व्यवहितेन सम्बन्धे सिद्धे ङीब्ग्रहणं व्यर्थं स्यात् । परिभाषास्वीकारे तु ङीब्ग्रहणाभावेऽनन्तरस्य ङीष एवानेन विधानापत्तिरिति ङीब्विधानं स्वांशे चरितार्थम् । 'ङीपि अनुदात्तौ सुप्पितौ' ३.१.४ इति पित्वादनुदात्तो जायत इति ङीब्ङीषोर्विशेषः । 'न क्तिचि दीर्घश्च' ६.४.३९ इत्यनेन अनुनासिकस्य क्विझलोः क्ङिति ६.४.१५ इति विहितस्य दीर्घस्य 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' ६.४.३७ इति विहितस्यानुनासिकलोपस्य च निषेध इष्यते । तत्र 'वा ल्यपि' ६.४.३८ इत्यनेन अनुनासिकलोपविधानात् तस्य "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन प्रतिषेधे सिद्धेऽपि व्यवहितस्य 'अनुनासिकस्य क्विझलोः' ६.४.१५ इति दीर्घस्य प्रतिषेधो यन्तिरित्यादौ न स्यात् । इष्यते तु तस्यापि प्रतिषेधो यथा स्यात् । अतः न क्तिचि दीर्घश्चेत्यत्र द्वीर्घग्रहणं क्रियते । तेन यत्नेन च दीर्घस्यापि प्रतिषेधः सिद्ध्यतीति । यदीयं परिभाषा न स्यात् तदा सुदूरस्थितत्वाद् व्यवहितस्यापि दीर्घस्य निषेधे सिद्ध दीर्घग्रहणं व्यर्थं स्यात् । इत्थं ङीब्ग्रहणं दीर्घग्रहणञ्चस्यां ज्ञापकमिति ध्वन्यते । **कैयट इति** । अष्टाभ्य औश् ७.१.२१ इति सूत्रे भाष्ये यत्रास्याः परिभाषाया उल्लेखोऽस्ति **तत्रैव कैयटे** मध्येऽपवादा इति न्यायादनन्तरस्य विधिरिति न्यायस्यैतस्य प्रबलत्वमपि प्रतिपादितमस्ति । तथाच भाष्यम्—अष्टाभ्य औश् ७.१.२१ "औशधौ" ।

---

'न क्तिचि दीर्घश्च ६.४.३९ में दीर्घग्रहण भी परिभाषा के मानने पर ही चरितार्थ हुआ । दीर्घ ग्रहण यदि न करते तो यह सूत्र अनन्तर विहित ("अनुदात्तोपदेश' ६.४.३७ सूत्र विहित) अनुनासिक लोप का निषेध करता, किन्तु अभीष्ट तो यह है कि यह 'अनुनासिकस्य क्विझलोः क्ङिति' ६.४.१५ से विहित दीर्घ का भी निषेधक हो और 'तन्तिः' इत्यादि प्रयोग बने, अतः दीर्घग्रहण करते हैं । यदि यह परिभाषा न रहती तो दूरस्थ 'दीर्घ' का भी निषेध इससे दीर्घग्रहण के बिना ही हो जाता, ऐसी स्थिति में दीर्घग्रहण व्यर्थ हो जाता ।

"मध्येऽपवादाः" इस न्याय की अपेक्षा यह न्याय प्रबल है; यह 'अष्टाभ्य औश्' ७.१.२१ सूत्र में कैयट ने कहा, क्योंकि यह न्याय उस न्याय से पर है ।

औशघाविति वक्तव्यम् । किमिदमघाविति । अनुत्तरपद इति । किं प्रयोजनम् ? इह-माभूत् । अष्टपुत्र, अष्टभार्य इति । "अस्तु लुक्तत्र" । अस्त्वत्रौश्त्वम् लुग्भविष्यति षड्भ्योऽप्येवं प्रसज्यते । इहापि तर्हि प्राप्नोति । अष्टौ तिष्ठन्ति । अष्टौ पश्येति "अपवादः" । अपवादत्वादत्रौश्त्वं लुकं बाधिष्यते । इहापि तर्हि बाधेत । अष्टपुत्रः, अष्टभार्यः "यस्य विषये" । यस्य लुको विषय औश्त्वं तस्यापवादः "यो वा तस्माद-नन्तरः" (श्लो० वा० १) अथवानन्तरस्य लुको बाधकं भविष्यति । कुत एतत् ? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । अथेह कस्मान्न भवत्यौश्त्वम् ? अष्ट तिष्ठन्ति, अष्ट पश्येति । "आत्वं यत्र तु तत्रौश्त्वम्" । यत्रैवात्वं तत्रैवौश्त्वेन भवितव्यम् । कुत एतत् ? "तथाह्यस्य ग्रहः कृतः, तथा ह्यस्यात्वभूतस्य ग्रहणं क्रियते अष्टाभ्य इति । ननु च नित्यमात्त्वम् । एतदेव ज्ञापयत्याचार्यो विभाषात्वमिति यदय-यात्वभूतस्य ग्रहणं करोति अष्टाभ्य इति । इतरथा ह्यष्टन इत्येव ब्रूयात्

**"औशघावस्तु लुक् तत्र षड्भ्योऽप्येवं प्रसज्यते ।**
**अपवादो यस्य विषये यो वा तस्मादनन्तरः ॥१॥**
**आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ।**

अत्र भाष्ये "यो वा तस्मादनन्तरः" अथवानन्तरस्य लुको बाधकं भविष्यति । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ग्रन्थेन परिभाषेयं कण्ठर-वेणोक्ता दृश्यते । अत्रैव कैयटः "यो वा तस्मादिति प्रतीकमादाय लिखति—औशः षड्भ्यो लुगित्ययमनन्तरः, द्वितीयाध्यायविहितस्तु व्यवहितः । (अष्टाभ्य औश् ७-१-२१ षड्भ्यो लुक् ७.१.२२ इत्यनयोरष्टाध्यायीपाठसूचकाङ्केनाव्यवहितत्वं स्पस्टमेव । सुपो धातुप्रातिपदिकयोः २.४.७१ इति द्वितीयाध्यायपठितो लुक् अध्यायचतुष्टयव्यव-हित इति । अत औशा षड्भ्यो लुग् बाध्यते, न तु सुपो धातु''' इति लुगिति भावः कैयटस्य) पुनः कैयटो वक्ति—ननु मध्येऽपवादा इति द्वितीयाध्यायविहितस्यैव लुको बाधा प्राप्नोति, नैष दोषः । यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहित-संस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य युक्तो बाधः । इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुङ्महता यत्नेन स्मरणीयोऽनन्तरस्त्वनुभवनीय इति स एव बाध्यते । अथवा सत्यामसत्यां चोपलब्धौ प्रत्यासस्यानन्तरस्यैव बाधेन भाव्यम् । एतच्च लुकः समकक्षत्वमभ्युपगम्योक्तम् । भिन्नकक्षौ त्वेतौ लुकावेकस्य सर्वत्र प्राप्त्याऽपरस्य क्वचित्प्राप्त्या ॥

अत्र अनेकाध्यायव्यवहितेत्यादिकैयटग्रन्थेन मध्येऽपवादन्यायस्य दुर्बलत्वमनन-न्तरस्येतिन्यायापेक्षयेति स्पष्टमेव प्रतीयते । प्रत्यासक्तिमूलकत्वं चोक्तमेव ।

ननु अनन्तरस्यैव बाध इत्येव सिद्ध्यति "यो वा तस्मादनन्तर इति भाष्यात् । तथा च मध्येऽपवादा इत्यस्य दुर्बलत्वमनन्तरस्य विधिरित्यस्य च प्राबल्यं नानेन भाष्येण बोध्यते किन्तूभयोस्तुल्यत्वमेवेति प्रोच्यते चेत्तदापि न दोषो लक्ष्यानुरोधेन व्यवस्थायाः स्वीकारात् ।

प्रत्यासत्तिमूलकोयम् । लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम् । तत्र क्वचित्स्वरितत्वप्रतिज्ञानात्सामर्थ्येन वा बाध्यतेऽयं न्यायः । यथा 'टिड्ढे'ति सूत्रेण डापा व्यवहितस्यापि ङीपो विधिः । 'न षडि त्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः। इयं च 'शि सर्वनामस्थान' मित्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः ॥६२॥

---

नचानन्तरस्यैव विधिरिति स्वीकारे 'ऋन्नेभ्यो ङीप्' ४.१.५ इति सूत्रोक्तस्य ङीपो विधिः टिड्ढाणञ्...४.१.१५इत्यत्र न स्यात् 'डाबुभाभ्यामन्यतरस्याम्' ४.१.१३ इति डापा व्यवधानात्, एवं 'न षट्स्वस्रादिभ्यः' ४.१.१० इत्यादिना 'टावृचि' ४.१.९ इत्यनन्तरस्य टाप एव निषेधः नतु 'अजाद्यतष्टाप्' ४.१.४ 'ऋन्नेभ्यो ङीप्' ४.१.५ इति व्यवहितयोष्टाम्ङीपो रिति वाच्यम् तत्र तत्र क्वचित्स्वरितत्वप्रतिज्ञानात् (''प्रतिज्ञासामर्थ्येन' इत्यपि पाठः) सामर्थ्येन वाऽस्य न्यायस्य बाधस्वीकारात् ।

इयं च 'शि सर्वनामस्थानम् १.१.४२ इत्यादौ भाष्ये स्पष्टा । तत्र हि 'शि सर्वनामस्थानम्' १.१.४२ 'सुडनपुंसकस्य' १.१.४३ इति चेज्जसि शिप्रतिषेधः इत्यु-

---

इस न्याय प्रत्यासत्ति मूलक है । 'प्रत्यासत्ति' का यहां अर्थ है समीपस्थिति-अव्यवधानपूर्वक स्थिति । 'कुछ लोग आसत्ति' को शब्दबोध का कारण मानते हैं । 'हाँ' या 'न' का सम्बन्ध अव्यवहित उक्ति से हुआ करता है । अतः सूत्र के द्वारा विहित विधि या निषेध का सम्बन्ध अव्यवहित तत्व से हो, यह स्वाभाविक है । लक्ष्य के अनुसार व्यवस्था हुआ करती है । इसलिए लक्ष्य के अनुसार यह सब व्यवस्था की जायेगी । जहाँ तहाँ स्वरितत्व प्रतिज्ञा से यह न्याय बाधित होता है । अर्थात् व्यवहित अंश में भी स्वरितत्व प्रतिज्ञा करने पर तत्सामर्थ्यात् "स्वरितेनाधिकारः" १.३.११ इस सूत्र के द्वारा उस अंश की (व्यवहित अंश की) अनुवृत्ति हो जायगी । जैसे (टिड्ढाणञ्' ४.१.१५ सूत्र के द्वारा जिस ङीप् का विधान होता है, वह टाप् से व्यवहित है । तात्पर्य यह है कि 'ऋन्नेभ्यो ङीप्' सूत्र का अङ्क ४.१.५ है और 'टिड्ढाणञ्' का ४.१.१५ । बीच में डाप् विधायक सूत्र डाबुभभाभ्यामन्यतरस्याम् ४.१.१३ आता है फिर भी 'टिड्ढाणञ्' सूत्र से ङीप् का विधान होता है, 'न षट्स्वस्रादिभ्यः' ४.१.१० सूत्र से ङीप् और टाप् दोनों का निषेध होता है । यद्यपि 'न षट्स्वस्रादिभ्यः' सूत्रका अङ्क ४.१.१० है, इससे पूर्ववर्ती सूत्र टावृचि ४.१.९ है । इसतरह न' षट्स्वस्रादिभ्यः' सूत्र से अन्तर का अर्थात् 'टावृचि' का ही निषेध होना चाहिए; तथापि लक्ष्यानुसार व्यवस्था के कारण टाप् और ङीप् दोनों में स्वरितत्व प्रतिज्ञा की गयी । इसलिए इससे दोनों का निषेध हुआ । यह परिभाषा "शि सर्वनामस्थानम्" इत्यादि सूत्रों के भाष्य में स्पष्ट है ।

'शि सर्वनामस्थानम् १.१.४२ इस सूत्र के भाष्य में कहा गया है कि यदि 'शि सर्वनामस्थानम्' सुडनपुंसकस्य" इस प्रकार की सूत्र रचना करते हैं तो 'कुण्डानि

ननु दधतीत्यादावन्तरङ्गत्वादत्तादेशेऽल्लिविधौ स्थानिवत्त्वाभावाददादेशो न

क्त्वा कुण्डानि वनानि तिष्ठन्तीत्यत्र दोषमुद्भाव्य "नाप्रतिषेधात्" नायं प्रसज्य-प्रतिषेधः नपुंसकस्य नेति । किन्तर्हि पर्युदासीऽयम्—यदन्यन्नपुंसकादिति । नपुंसके न व्यापारः । यदि केनचित् प्राप्नोति, तेन भविष्यति । पूर्वेण च प्राप्नोति ॥ इत्येक-मुत्तरं दत्त्वा प्रोक्तम् "अप्राप्तेर्वा" । अथवा अनन्तरा या प्राप्तिः सा निषिध्यते । कुत एतत् ? "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति ॥

अष्टाभ्य औश् ७.१.२१ इत्यत्रत्यं भाष्यं यत्रेयं निर्दिष्टा ४४५ तमे पृष्ठे समुद्धृतमिति शिवम् ॥६२॥

## पूर्वं ह्यपवादाः.........उत्सर्गा ॥६३॥

वनानि तिष्ठन्ति' में जस् के स्थान में जो शि है; उसे सर्वनामस्थानसंज्ञा न होगी क्योंकि 'अनपुंसकस्य' यह सूचित करता है कि नपुंसक को न हो । इस पर कहा गया है कि "नाप्रतिषेधात्" यहाँ प्रसज्य प्रतिषेध नहीं है जिससे कि यह अर्थ निकाला जाता कि नपुंसक में न हो किन्तु यहाँ 'नञ्'पर्युदास द्योतक है । इससे यह अर्थ होगा कि नपुंसकलिङ्ग से भिन्न प्रातिपादिक से पर सुट् को सर्वनामस्थानसंज्ञा हो । "अनपुंसकस्य' यह नपुंसक लिङ्ग में निर्व्यापार रहेगा, किसी प्रकार की प्रतिषेधात्मक चेष्टा न करेगा, वह पूरी तरह उदासीन रहेगा । यदि नपंसक लिङ्ग में किसी सूत्र से सर्वनामस्थानसंज्ञा प्राप्त है, तो हो जायगी । यहाँ पूवसूत्र से ('शि सर्वनाम-स्थानम्') से प्राप्त है ही उससे सर्वनामस्थानसंज्ञा हो जायगी । इस तरह से 'कुण्डानि तिष्ठन्ति' में सर्वनामस्थान संज्ञा के न होने के प्रश्न का एक समाधान देकर आगे पतञ्जलि ने कहा—"अप्राप्तेर्वा" अर्थात् यह भी कह सकते हैं कि अव्यवहित प्राप्ति का ही प्रतिषेध होगा । अव्यवहित प्राप्ति तो 'सुट्' इस सूत्रांश से है "अनपुंसकस्य" यह अंश 'सुट्' से प्राप्त सर्वनामस्थान संज्ञा को ही नपुंसक में नहीं होने देगा; क्योंकि अनन्तरस्य वा भवति प्रतिषेधो वा" यह न्याय है । इस तरह भाष्यकार ने 'कुण्डानि तिष्ठन्ति' में सर्वनामस्थानसंज्ञा के लिए इस परिभाषा को स्वीकार किया है ।

"अष्टाभ्य औश्" ७.२.२१ सूत्र के भाष्य में भी यह परिभाषा कण्ठरव से कही गयी है । वहाँ यह प्रश्न उठाया गया कि 'अष्टौ' में 'औश्' आदेश 'षड्भ्योलुक्' ७.१.२२ से विहित लुक् को जैसे बाधता है वैसे "अष्टभार्यः" 'अष्टमार्गः' इत्यादि में 'सुपोधातु—२.४.७१ से विहित लुक् को क्यों नहीं बाधता इसका उत्तर भाष्य-कारने दिया—' यो वा तस्मादनन्तरः,' अर्थात् "अनन्तरस्य विधि र्वा भवति प्रति-षेधो वा" इस न्याय से औश् "७.२.२१" अनन्तर पठित षड्भ्योलुक् ७ १.२२ को बाधेगा' "सुपोधातु—२.४.७१ तो अत्यन्त व्यवहित है, उसे नहीं बाधेगा । इति शिवम् ६२ ॥

स्यादिति तद्वैयर्थ्यापत्तिरत आह—

## पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ।६३।।

---

धाधातो र्जौहोत्यादिकात् लटि झिप्रत्यये मध्ये जातस्य शपःश्लौ 'श्लौ' ६.१.१० इति द्वित्वेऽभ्यासत्वेऽभ्यासस्य ह्रस्वे 'अभ्यासे चर्चं' ८.४.५४ इति जश्त्वे दधा+झि इति इति स्थिते 'उभे अभ्यस्तम्' ६.१.५ इत्यभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' ७.१.४ इति झस्याति आतोलोपे दधतीति सिद्ध्यति । अत्र धा झि इत्यवस्थायां द्वित्वोत्तरजायमानाभ्यस्तसंज्ञासापेक्षस्यादभ्यस्तादित्यदादेशस्य विलम्बेनोपस्थितत्वात्तदपेक्षया चान्तादेशस्य शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वात् पूर्वं 'झोऽन्तः' ७.१.३ इत्यन्तादेशे रूपासिद्धिः, नचान्तादेशस्य स्थानिवत्त्वेन झत्वमानीय अदादेशः स्यादिति वाच्यम् अल्विधौ स्थानिवत्त्वाभावात् ''स्थानिवदादेशोऽनल्विधावित्यत्रानल्विधावित्युक्तेः सत्वादिति । एवञ्च अदभ्यस्तादिति सूत्रस्य वैयर्थ्यापत्तिः अतः-परिभाषा स्वीक्रियते—**पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा** इति । ननु सूत्राचारितार्थ्यकथनमिदमयुक्तम्, जक्षतीत्यादौ सूत्रस्य चारितार्थ्यात् तत्र हि जक्षित्यादयः षट् ६-१.६ इति षट्संज्ञायां द्वित्वस्य नास्त्यपेक्षा । अतोनिमित्तनिरपेक्षत्वेन झेरागमनात् प्रागेवाभ्यस्तसंज्ञायां, झौ तस्य समानकालमेवान्तादेशे अदादेशे च प्राप्ते-निरवकाशत्वेनान्तदेशं बाधित्वा अदादेशो जायते इति चेत्, उच्यते अन्तादेशे उपदेशिवद्भावस्वीकारेण झकारोच्चारणेन सहैवान्तादेशप्राप्त्याऽन्तादेशस्य पूर्वमेव प्रवृत्तेः सूत्रवैयर्थ्यकथनं सुवच एव । कार्यकालपक्षे तु अदादेशविधिपूर्वक्षण एवाभ्यस्तसंज्ञायाः प्रवृत्या जक्षतीत्यादावपि अदादेशनिमित्तभूताया जक्षित्यादयः षट् ६.१.६ इति विधीयमानाया अभ्यस्तसंज्ञायाः समकालमेवान्तादेशः प्राप्नोति, अदादेशस्तु ततः पश्चादिति अन्तादेशस्यानिवार्यत्वेन सूत्रवैयर्थ्यकथनं युक्तियुक्तमेव ।

---

### पूर्वंह्यपवादाः······पश्चादुत्सर्गाः ६३

'धा' धातु से लट् लकार के प्रथम पुरुष के बहुवचन में झि को, श्लु के परे धातु के द्वित्वादि के बाद अभ्यस्तसंज्ञा और 'अदभ्यस्तात्' ७.१.४ से 'अत्' होने पर दधति बनता है । वहाँ प्रश्न है कि अन्तरङ्गत्वात् ''झोऽन्तः'' ७.१.३ से 'झ' को अन्तादेश हो जायगा, क्योंकि द्वित्व के बाद होने वाली अभ्यस्तसंज्ञा को आधार बनाकर प्राप्त अदादेश की अपेक्षा अन्तादेश पहले प्राप्त है; इसलिए वह अन्तरङ्ग है । यदि झ् अल् नहीं होता, तो उसको स्थानिवद्भाव के द्वारा लाकर अदादेश किया जा सकता; परन्तु स्थानिवद्भाव का अनल्विधौ से निषेध हो जायगा, इस तरह 'अदभ्यस्तात्' सूत्र व्यर्थ हो जायगा । 'जक्षति' में अनैमित्तिक अभ्यस्तसंज्ञा 'जक्षित्यादयः' सूत्र से हो जायगी और वहाँ 'अदभ्यस्तात्' सूत्र चरितार्थ हो जायगा,

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चये उत्सर्गेण तत्तल्लक्ष्यं संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः ।

अभिनिविशन्ते इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । अपवादो यद्यन्यत्र चरितार्थइति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥६३॥

---

अभिनिविशन्त इत्यस्य बुद्धिमारोहन्तीत्यर्थः । एकं चादो लक्षणमिति लक्षणैकम् ''पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' २.१.४९ इति समासे एकशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे एकलक्षणमिति स्यादिति तु न शङ्क्यम् विशेषणं विशेष्येण बहुलम् २.१।५७ इत्यत्र बहुलग्रहणात्तादृशप्रयोगसिद्धेः । लक्षणैकं (केवलं लक्षणम्) चक्षुर्यस्य स लक्षणैकचक्षुष्क इत्युच्यते । लक्षणं सूत्रं तद्द्वारेणैव शब्दसाधुत्वमवगच्छन् हि अपवादविषयं पर्यालोच्य प्रथममपवादविषयत्वाभावनिश्चयं करोति तत उत्सर्गेणापवादविषयं परित्यज्य शब्दान् साधयति । अर्थात् उद्देश्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचं विधाय स शास्त्रं प्रवर्त्तयति । तथाऽकरणे प्रतिलक्ष्यं लक्षणोपप्लव इति सिद्धान्तानुसारेणोत्सर्गापवादयोरुभयोरप्युपप्लुत्या विकल्पापत्तिः स्यात् । श्री+ईश इत्यकः सवर्णे दीर्घः ३.१.१०१ इत्यपवादशास्त्रीयविषयातिरिक्तो यो विषयः सुधी+उपास्य इत्यादिस्तद्विषयकस्यैव 'इकोयणचि ६.१.७७ इत्युत्सर्गशास्त्रस्योपप्लवः । अपवादविषयपरित्यागपुरस्सरोत्सर्गशास्त्रस्योपप्लवकल्पनाभावे 'श्री+ईश' इत्येतद्विषयकस्योपप्लुतस्य यण्शास्त्रस्य वैयर्थ्यं माभूदिति पक्षे तस्यापि प्रवृत्तिस्वीकारेण पक्षे च दीर्घस्य च प्रवृत्तिस्वीकारेण विकल्पापत्तिः । न च दधतीत्यत्र अपवादो यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाधते (प० ६६) इत्यनेन न्यायेनापवादस्यादादेशस्यान्तादेशेन बाधस्तु न शङ्क्यः, अन्तादेशाप्राप्तिविषयेऽदादेशस्य चारितार्थ्याभावात् । इति शिवम् ॥६३ ॥

---

ऐसा नहीं मानना चाहिए, अन्तादेश में उपदेशिवद्भाव माना गया है, इसलिए वहाँ भी अन्तादेश की पहले ही प्रवृत्ति हो जायगी । अतः परिभाषा मानते हैं—**पूर्वं हि अपवादाः अभिनिविशन्ते पश्चादुत्सर्गाः ।**

पहले अपवाद की प्रवृत्ति होती है और बाद में उत्सर्ग की प्रवृत्ति होती है । लक्ष्य (शब्द) को देखकर लक्षण (सूत्र) की कल्पना करने वाले लक्ष्यैकचक्षुष्क कहलाते हैं। लक्ष्यैकचक्षुष्क शब्द में बहुव्रीहि समास है । लक्ष्य ही एक चक्षु है जिसका, लक्ष्यमेव एकं चक्षुर्यस्य । लक्षण (सूत्र) को देखकर लक्ष्य की कल्पना करने वाले लक्षणैकचक्षुष्क कहलाते हैं । लक्षणमेवैकं चक्षुर्यस्य स लक्षणैकचक्षुष्कः । इनमें लक्षणैकचक्षुष्क के लिए यह न्याय आवश्यक है । लक्षणैकचक्षुष्क के सामने उत्सर्ग और अपवाद दोनों किस्म के सूत्र हैं । वह पहले यह विचारता है कि अपवाद सूत्र

लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेस्तदाह—

**प्रकल्प्य चापवादविशयं तत उत्सर्गोऽभिनिविशते ॥६४॥**

---

**प्रकल्प्य चापवादविषयं............॥६४॥**

लक्ष्यैकं केवलं लक्ष्यं लक्ष्यमेवेत्यर्थः चक्षुर्यस्य स लक्ष्यैकचक्षुष्कः शास्त्रं विनैव लक्ष्यसाधुत्वज्ञानवानित्यर्थः, यतः स लक्ष्यैकचक्षुष्कः अतश्शास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्यैव उत्सर्गस्योपप्लवं कृत्वा तेन लक्ष्यं संस्करोति । स श्रीश इत्यत्र दीर्घमेव सदा पश्यति अतस्तद्विषयकं यण्शास्त्रं न कल्पयति । इत्थमपवादविषयं श्रीश इत्यादिकं परित्यज्योपप्लुतेनोत्सर्गेण इकोयणचीत्यादिना मध्वपास्य इत्यादिकं लक्ष्यं संस्करोति । ननु स तु लक्ष्यैकचक्षुष्कः तत्तल्लक्ष्यमेव साधुप्रयोगं करोतु किन्तस्यापवादोत्सर्गलक्षणेन । तथाच उत्सर्गेण लक्ष्यं संस्करोतीति

---

का विषय कहाँ-कहाँ है और इस पर्यालोचना के बाद जब उसे निश्चय हो जाता है कि यहाँ अपवाद शास्त्र की प्राप्ति नहीं है तो वहाँ वह उत्सर्ग की प्रवृत्ति कराकर उन-उन लक्ष्यों का संस्कार करता है । यदि अपवाद विषय का परित्याग करके उत्सर्ग की प्रवृत्ति न करायी जाय तो सर्वत्र विकल्प दोष हो जाय । क्योंकि तदर्थ कल्पित उत्सर्ग की प्रवृत्ति होने के साथ-साथ तदर्थ कल्पित अपवाद की भी प्रवृत्ति होगी । इस तरह दोनों की प्रवृत्ति के कारण विकल्प दोष हो जायगा । "अभिनिविशन्ते" का अर्थ है बुद्धि में आरूढ़ होते हैं अर्थात् आते हैं । पहले लक्षणैकचक्षुष्क वैयाकरणों की बुद्धि में अपवाद शास्त्र आते हैं । और फिर यदि अपवादशास्त्र का विषय नहीं रहा तो उत्सर्ग शास्त्र आते हैं । "दधति" में "अपवादो यद्यन्यत्र चरितार्थस्तर्हि उत्सर्गेण बाध्यते" इस न्याय की प्रवृत्ति नहीं होती; क्योंकि अपवाद (अदादेश विधायक) सूत्र, यदि अन्त आदेश के अप्राप्तिस्थल में कहीं चरितार्थ होता; तभी वह उत्सर्ग (अन्तादेश) से बाधा जाता । ऐसा है नहीं, अन्तादेश का कोई ऐसा अप्राप्तिस्थल नहीं; जहाँ कि अदादेश चरितार्थ हो । इति शिवम् ६३ ।

**प्रकल्प्य चापवाद······भिनिविशते ॥ ६४ ॥**

लक्ष्यैकचक्षुष्क की दृष्टि तो पहले लक्ष्य पर पड़ती है; लक्ष्य को देखकर वह तत्सिद्धि योग्य लक्षण की कल्पना करता है और उसकी प्रवृत्ति कराता है । इसलिए उसे अपवाद शास्त्र के पर्यालोचन के बिना ही लक्ष्य को देखकर यह ज्ञान हो जाता है कि कहाँ अपवाद शास्त्र की प्रवृत्ति होनी चाहिए और कहाँ उत्सर्ग शास्त्र लगने चाहिए । इसलिए अपवादशास्त्र की पर्यालोचना के बिना ही वह अपवाद के विषयों को छोड़ता जाता है और उत्सर्ग से लक्ष्य का संस्कार करता है । इस तरह उसे यद्यपि अपवाद शास्त्र के स्मरण की आवश्यकता नहीं है । तथापि लोकतोऽर्थ-

तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः । प्रकल्प्येत्यस्य परित्यज्येर्थः ।

अत एव 'प्रातिपदिकार्थ'सूत्रे भाष्ये इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादं तावत् प्रतीक्षत इत्यर्थकमुक्तम् ॥६४॥

---

कथनमसंगतमिति चेद्, उच्यते, "लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इति पस्पशाह्निकप्रोक्तेन भाष्येण शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तिकथनेन सूत्रस्मृतेरावश्यकत्वात् । तदाह—**प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिविशते इति ।**
ततः इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः । प्रकल्प्येत्यस्यार्थः परित्यज्येति । तत अपवादशास्त्रपर्यालोचनात् प्रागपि अपवादशास्त्रविषयं परित्यज्योत्सर्गोऽभिनिविशते बुद्ध्यारूढो भवतीति परिभाषार्थः। अतएव—द्वयोरपि परिभाषयोः सत्वादेव । प्रातिपदिकार्थसूत्रे भाष्ये इदं परिभाषाद्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादं तावत् प्रतीक्षते इत्यर्थइत्युक्तम् ।

तथाहि प्रातिपदिकार्थ...२.३.४६ इति सूत्रे भाष्ये शतृशानचोश्च निमित्तभावात्तिङभावस्तयोरपवादत्वात्" इति वार्तिकं व्याचक्षाणेन पतञ्जलिना प्रोक्तम् शतृशानचोश्च निमित्तभावात्तिङभावः क्व ? पचत्योदनं देवदत्त इति ॥ किं कारणम् तयोरपवादत्वात् । शतृशानचौ तिङपवादौ । तावत्र बाधकौ । नचापवादविषये उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिविविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयमुत्सर्गोऽभिनिविशते । न तावदत्र कदाचित्तिङादेशो भवति । अपवादौ तावच्छतृशानचौ प्रतीक्षते । इति ।

अत्र कैयटः—पूर्वं ह्यपवादा इति । इह दर्शनद्वयम्-सर्वविशेषस्वीकारेण वोत्सर्गस्य प्रवृत्तिः, कतिपयविशेषावगाहनेन वा । तत्र पूर्वस्मिन् दर्शने—उत्सर्गस्य विषयविभागाय पूर्वमपवादः प्रवर्तते, पश्चात्तद्विमुक्ते विषय उत्सर्गः । द्वितीये तु दर्शने—अपवादविषयं प्रकल्प्योत्सर्गः प्रवर्तते । इति ॥६४॥

---

प्रयुक्ते शब्दे शास्त्रेण धर्मनियमः क्रियते" (महाभाष्य पस्पशा) इस सिद्धान्त के अनुसार वह भी शास्त्र प्रक्रिया का स्मरण करते हुए शब्दप्रयोग इसलिए करता है कि वैसा करने पर ही धर्मोत्पत्ति होगी :—यही बात बताते हुए लिखते हैं :—

"प्रकल्प्य **चापवादविषयं तत उत्सर्गोऽभिनिविशते**" यहां 'ततः' में प्राक् शब्द के योग में पञ्चमी है । इसलिए उसका अर्थ है उससे अर्थात् अपवाद शास्त्र की पर्यालोचना से पहले । प्रकल्प्य का अर्थ 'प्रकृष्ट कल्पना करके' अर्थात् 'छोड़करके' यह है । अपवाद शास्त्र की पर्यालोचना के पहले ही (बिनाही) लक्ष्यैकचक्षुष्क की बुद्धि में उत्सर्ग अपवाद विषय को छोड़कर आता है ।

दोनों प्रकार की परिभाषा की स्वीकृति अभीष्ट थी । इसलिए प्रातिपदि-

एतन्मूलकमेव नवीनाः पठन्ति—

**उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति ॥६५॥**

---

**उपसञ्जनिष्यमाणनिमित्त...बाधते ६५**

**एतन्मूलकमेव**=वैयर्थ्यमूलकमेवेत्यर्थ इति विजयाकाराः। एतदुभयन्याय-फलितार्थमूलकमेवेत्यर्थोऽपि भवितुमर्हति। **नवीना** दीक्षितादयः। **उपसञ्जनिष्य-माणेति**। उपशब्दद्वयम् आसन्नार्थकम्। यस्यापवादस्य निमित्तमासन्ने, भविष्यति काले उत्पन्नं भवितुमस्ति; सोऽप्यपवादस्तमुत्सर्गं, यस्य निमित्तमासन्ने भूते उत्पन्नं

---

कार्थ सूत्र के भाष्य में दोनों का निर्देश करके भाष्यकार ने कहा कि जब तक कि अपवादशास्त्र की प्रतीक्षा नहीं कर लेता, उत्सर्ग, (प्रवृत्त) नहीं होता है।

"प्रातिपदिकार्थसूत्र (२.३.४७) के भाष्य में कहा गया है कि 'पचत्योदनं देवदत्तः' में तिङ् को बाध कर शतृ और शानच् ही होंगे। क्योंकि शतृ और शानच् तिङ् के अपवाद हैं। अपवाद के विषय में उत्सर्ग की प्रवृत्ति नहीं होती है इसलिए तो कहा गया है कि पहले अपवाद की उपस्थिति होती है; बाद में प्रवर्तयिता (प्रयोग की सिद्धि करने वालों) की बुद्धि में उत्सर्ग आता है। इस तरह तिङ् नहीं हो सकेगा। इस पर कहा गया कि "प्रकल्प्य चापवादविषयम्" अर्थात् अपवाद के विषय को छोड़कर उत्सर्ग की प्रवृत्ति होती है। तिङादेश शतृशानच् की प्रतीक्षा करता है और उनके विषय को छोड़कर प्रवृत्त होता है परन्तु यहाँ प्रथमा समानाधिकरण होने से शतृशानच् का विषय नहीं है। यहाँ कैयट ने बताया कि दो प्रकार की दृष्टि हो सकती है। १-सभी प्रकार के विशेषस्थलों की पर्यालोचना करके उत्सर्ग की प्रवृत्ति हो, २-कुछेक विशेषस्थलों का अवगाहन करके उत्सर्ग की प्रवृत्ति हो। इनमें प्रथम दर्शन में उत्सर्ग के विषयों का विभाग के लिए पहले 'अपवादों' का ज्ञान आवश्यक है पीछे अपवाद से निर्मुक्त स्थलों में उत्सर्ग लगेगा। दूसरे दर्शन में अपवाद के विषयों का परित्याग करके उत्सर्ग आयेगा। ये दोनों दर्शन लक्ष्यैकचक्षुष्क और लक्षणैकचक्षुष्क दर्शन ही हैं। इति शिवम् ॥६४॥

इन पूर्व निर्दिष्ट सिद्धान्तों को आधार बनाकर ही नवीन वैयाकरण कहा करते हैं—

**उपसञ्जनिष्यमाणनिमित्तोऽप्यपवादः उपसञ्जातनिमित्तमप्युत्सर्गं बाधते ६५**

उत्सर्गशास्त्र (सामान्य नियम) पहले बनाया जाता है। अपवाद शास्त्र (विशेष नियम) बाद में बनता है। इसलिए अपवादशास्त्र उपसञ्जनिष्यमाण निमित्त माना जाता है और अपवाद शास्त्र के पहले बनाया हुआ उत्सर्गशास्त्र उपसंजातनिमित्त-

यत्तु अभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेति प्रतीकमुपादाय यथा 'न संप्रसारणे

जातं बाधते । यथा दधतीत्यादौ धा भि इति स्थिते समुत्पन्ननिमित्तमप्युत्सर्गं 'झोऽन्तः' ७.१.३ इति शास्त्रं भाविनिमित्तकोऽपि 'अदभ्यस्तात्' ७.१.४ इत्यपवादो बाधते यद्यत्रोत्सर्गशास्त्रं प्रवर्तेत तर्हि निमित्ताभावादपवादशास्त्रं व्यर्थं स्यादितीदृशसंभावनायामुत्सर्गशास्त्रं प्रथमं न प्रवर्तते इति भावः । यत्रापवादशास्त्रप्रवृत्तियोग्यातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्ये संकोचेकृतेऽप्यवादशास्त्रं व्यर्थमेव तिष्ठति तत्र उत्सर्गशास्त्राप्रवृत्तिसंभावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसंभावनाविषयातिरिक्तत्वेनापि संकोच इति परमार्थः । अत्रापवादशब्दस्य निषेधपर्युदासापवादा इत्यर्थः । दैवादिकाद् रधधातोर्लिटस्तसोऽतुसादेशे 'रधिजभो रचि' नेट्यलिटि रधेः ७.१.६२ इति परत्वान्नुमि कृते सति संयोगसत्त्वेन 'असंयोगाल्लिट् कित्' १.२.५ इति कित्त्वाप्राप्त्या नकारलोपो न भवति । अत्र रध+अतुस् इत्यवस्थायां कित्त्वं न भवति, यद्यत्र कित्त्वं न स्यात्तदा नुमि कृते संयोगात् परत्वेनासंयोगादिति पर्युदासादसंयोगाल्लिट् किदिति कित्त्वं न स्यादिति संभावना वर्तते । अतोऽपसंजनिष्यमाणनिमित्तेनासंयोगोपधादिति पर्युदासेनोपसंजातनिमित्तस्य नुमः पूर्वं कित्त्वस्य बाधः । 'वागत्रे' त्यत्र ककारस्य 'अनचि च' ८.४.४७ इति द्वित्वं न, अत्रेत्यस्य योगादनन्तरमनचीति पर्युदासस्य सम्भाव्यतया अत्रेति योगात्पूर्वं द्वित्वस्य बाधात् । **अभ्यस्तसंज्ञासूत्रे कैयटेनेति** । उभे अभ्यस्तम् ६.१.५ सूत्रे भाष्ये प्रकल्प्य चेति प्रतीकमुपादाय कैयटेनोक्तम् यथा न सम्प्रसारणे सम्प्रसारणम्

माना जाता है । जिसकी प्राप्ति बाद में होने वाली है, ऐसा भी अपवाद शास्त्र, जिसकी प्राप्ति हो चुकी है, ऐसे भी उत्सर्ग शास्त्र को बाधता है । विजयाकार एतन्मूलकमेव का अर्थ वैयर्थ्यमूलकमेव मानते हैं और परिभाषा का तात्पर्य बताते हुए लिखने हैं जहाँ उत्सर्ग शास्त्र की प्रवृत्ति की संभावना से अपवादशास्त्र के व्यर्थ होने की संभावना हो; वहाँ उत्सर्ग शास्त्र की प्रवृत्ति नहीं होती है । जैसे "दधति"

अभ्यस्तसंज्ञा सूत्र (उभे अभ्यस्तम्) ६.१.७ में कैयट ने भाष्य की व्याख्या करते हुए "प्रकल्प्य च" इस प्रतीक को लेकर उदाहरण देते हुए बताया है कि जैसे "न संप्रसारणे" ६.१.३७ इस सूत्र के प्रामाण्य से पर यण् अर्थात् "युवन्" में 'व' को "श्वयुवमघोनामतद्धिते" ६.४.१३३ से पहले सम्प्रसारण हुआ और 'य' को बाद में संप्रसारण प्राप्त हुआ; जिसे कि न "सम्प्रसारणे सम्प्रसारणम्" ६.१.३७ ने निषेध किया । कैयट का तात्पर्य यह है कि युवन् अस् ऐसी स्थिति में यदि पहले प्रथम यण् (य) को "श्वयुव" सूत्र से सम्प्रसारण हो जाय और बाद में पर यण् (व) को हो तो 'न सम्प्रसारणे सम्प्रसारणं' व्यर्थ हो जायगा; अतः "प्रकल्प्य चापवादविषयम्" इस परिभाषा के बल से यहाँ, पर—यण् को पहले सम्प्रसारण हुआ;

**इति परस्य यणः पूर्वं संप्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध इत्युक्तम्—तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम् ।**

---

६.१.३७ इति वचनात् परस्य यणः पूर्वं सम्प्रसारणम् प्रवर्तते पूर्वस्य तु तन्निमित्तः प्रतिषेधः । यदि तु परस्य यणः पूर्वं न प्रवर्तते तदा पूर्वस्यापि प्रतिषेधो न स्यादिति अत्र 'मते प्रकल्प्ये' त्यस्य निर्माय=उत्पाद्येत्यर्थः अपवादपदस्य च निषेधार्थ उक्त एव । 'यून' इत्यत्र पूर्वस्य यणः सम्प्रसारणनिषेधाय परस्य यणः प्रथमं सम्प्रसारण-विधानमावश्यकमस्तीति कृत्वा यथा अपवाद—(निषेध)—विषयं निर्माय उत्सर्गः श्वयुवमघोनामिति परस्य यणः प्रथमं सम्प्रसारणं विदधातीति कैयटाशयः । परन्तु तन्मतं न युक्तम् न संप्रसारणे सम्प्रसारणम् ६.१.३७ इति सूत्रस्थभाष्यविरोधात् । तत्र हि कुत एतत् परस्य (प्रथमं सम्प्रसारणं) भविष्यति, न पूर्वस्येति सन्देहनिवारणाय प्रोक्तम् इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो-गम्यते । एतदेव ज्ञापयति परस्य भविष्यति (प्रथमं सम्प्रसारणम्) न पूर्वस्येति । इत्थं ज्ञापकत्वमाश्रित्य परस्य यणः प्रथमं सम्प्रसारणसम्पादनप्रयासो भाष्यकृतो व्यर्थः स्यात् । यदि हि 'प्रकल्प्ये चे' ति परिभाषयैव प्रथमं परस्य यणः सम्प्रसारणं शक्यते सम्पादयितुं तर्हि भाष्यकारेण ज्ञापकत्वाश्रयणप्रयासो नैव कृतः स्यादिति । प्रकल्प्ये-त्यस्य परित्यज्येत्येवार्थस्य युक्तत्वात् (उद्योते—६.१.३७) । प्रकल्प्येत्यस्य प्रकल्प-यितुमित्यर्थे कृते एव यून इत्यत्र सा परिभाषा शक्यते संगमयितुम् । तदेव न संभवति तुमर्थक्त्वाप्रत्ययार्थयोराकाशपातालवत् पार्थक्यात् । पूर्वकालिकक्रियातस्त्वा विधीयते

---

जिससे कि "न संप्रसारणे" से निषेध हो सके; परन्तु यहाँ परिभाषा नहीं लग सकती; क्योंकि उसका अक्षरार्थ यहाँ नहीं घटता । अपवादविषय को छोड़कर उत्सर्ग शास्त्र की प्रवृत्ति होती है यही तो परिभाषा का अक्षरार्थ है । "श्वयुव" से ही यहाँ पूर्व यण् को सम्प्रसारण प्राप्त है और उसी से पर यण् को । इस तरह यहाँ किसने किसका विषय छोड़ा यह प्रश्न बिना समाधान के रह जायगा । यदि यह कहें कि 'प्रकल्प्य का अर्थ' उत्पाद्य(निर्माय)यह है । अपवाद का अर्थ इस परिभाषा में निषध शास्त्र भी है; तब तो "न संप्रसारणे—" इस अपवाद (निषध) शास्त्र के लिए विषय का निर्माण करके उत्सर्ग की प्रवृत्ति हो" यह परिभाषार्थ यहाँ घट जाता है । इस तरह कैयट का मत ठीक दिखता है; परन्तु "न संप्रसारणे'— सूत्र का भाष्य इस मत के विपरीत पड़ता है । वहाँ भाष्यकार ने 'न संप्रसारणे— सूत्र को ज्ञापक बनाकर यह ज्ञापन कराया है कि पर 'यण्' को पहले संप्रसारण हो । यदि इस परिभाषा से काम चलता है तो भाष्यकार ज्ञापन का प्रयास क्यों स्वीकार करते और यह क्यों कहते कि इहेङ्गितेन निमिषितेन—एतदेव ज्ञापयति परस्य भविष्यति इति ।

यत्त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति तन्न। **अभिनिविशन्ते** अपवादविषयमित्यादिपदस्वारस्यभङ्गापत्तेः। पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च॥

यत्र त्वपवादो निषिद्धस्तत्रापवादविषयेऽप्युत्सर्गः प्रवर्त्तत एव। यथा वृक्षावित्यत्र 'नादिची'ति पूर्वसवर्णदीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वाभावाद् वृद्धिः प्रवर्तते।

---

उत्तरकालिकक्रियातश्च तुमुन्। खादित्वा गच्छति खादितुं गच्छतीत्यत्र तदर्थतारतम्यं स्पष्टमवगम्यते इति।

यत्तु अपवादवाक्यार्थं विना नोपसर्गवाक्यार्थः इति प्रकल्प्येत्यादिपरिभाषार्थं इत्याहु स्तदपि न, **अभिनिविशन्ते** अपवादविषयमित्यादीनां तत्र तत्र प्रोक्तानां पदानां स्वारस्यभङ्गापत्तेः। तथाकथितार्थकरणे **अभिनिविशन्ते** इत्यस्य लक्ष्यं प्रवेशविषयीकुर्वन्तीति शब्दार्थस्य बुद्धावारूढा भवन्तीति फलितार्थस्य च रक्षणं न संभवति, तथा अपवादविषयमिति पदस्वारस्यमपि भज्येत, यतः निर्वचनेऽस्मिन् नापेक्षते लक्ष्यज्ञानं लक्ष्यज्ञानं विना च कोऽपवादः क उत्सर्ग इति विषयनिर्धारणमसंभवम्। अतोऽपवादविषयेति पदस्वारस्यस्य भङ्गः स्पष्ट एव। वाक्यार्थबोधे वृत्त्यापदजन्यपदार्थोपस्थितिः कारणम्, सा यद्यस्ति तदा कः वाक्यार्थबोधं निवारितुं प्रभवति। अतः उत्सर्गवाक्यार्थबोधाभावोऽपवादवाक्यार्थबोधं विनेति कथनमयुक्तमेव।

'वृक्षौ' इत्यादौ 'वृद्धिरेचि' ६.१.८८ इति प्राप्तां वृद्धिं हन्तुमुद्यतस्यैव पूर्वसवर्णदीर्घस्य 'नादिचि' ६.१.१०४ इति निषेधः (हननं) जायते। अतः वृद्धिरहता

---

किसी ने उस परिभाषा का तात्पर्य बताते हुए लिखा कि अपवाद-शास्त्र के वाक्यार्थबोध के बिना उत्सर्गशास्त्र का वाक्यार्थ बोध नहीं होता है; यही परिभाषा का तात्पर्य है, यह मत भी ठीक नहीं है "पूर्वं हि अपवादा अभिनिविशन्ते" इत्यादि पदों से वैसा तात्पर्य नहीं निकलता। इसलिए पूर्वोक्त अर्थ करने में "अभिनिविशन्ते अपवादविषयम्" इत्यादि पदों के तात्पर्य का भङ्ग हो जायगा। वाक्यार्थ बोध में पद-जन्य पदार्थों की उपस्थिति कारण है। अपवाद-शास्त्र में आये हुए पदों का अर्थ जब ज्ञात हो गया, तब पदजन्यपदार्थोपस्थिति होगयी; अब वहाँ अपवाद शास्त्र के वाक्यार्थ का बोध न हो इस के लिए कोई प्रतिबन्धक कारण तो है नहीं; फिर वाक्यार्थबोध कैसे रुकेगा?

जहाँ अपवादशास्त्र का निषेध हो जायगा; वहाँ अपवाद के विषय में भी उत्सर्ग की प्रवृत्ति होती ही है। जैसे "वृक्षौ" में। वृक्ष+औ ऐसी स्थिति में अपवाद सूत्र ("प्रथमयोः पूर्वसवर्णः") का जब 'नादिचि' से निषेध हो गया तो उस निषेध के कारण प्रवृत्त न होने वाले पूर्वसवर्णदीर्घ ने वृद्धि को नहीं बाधा। अतः वृद्धि जो उत्सर्ग विधि है, हो ही गयी।

**अत एव तौ सदित्यादि संगच्छते। अत एव निर्देशाद् भ्रष्टावसरन्यायस्यात्र शास्त्रे नाश्रयणम्। ध्वनितं चेदमि' को गुण' इति सूत्रे भाष्य इति भाष्यप्रदीपोद्द्योते निरूपितम्॥**

---

एव वर्तते। अतः पूर्वसवर्णदीर्घनिषेधानन्तरं सा प्रवर्तत एव। अतोऽत्र देवदत्तहन्तृहत-न्यायस्य नास्ति विषयः। हते देवदत्ते तद्धन्तरि हतेऽपि देवदत्तो न जीवति इति तु तत्थ्यम्। देवदत्तं हन्तुमुद्यतमेव वधकं यदि कश्चिद् हन्यान्तर्हि देवदत्तो जीवत्येवेत्यपि तत्थ्यम्। अतः स न्यायस्तत्रैव प्रवर्तते यत्रापवादेनोत्सर्गस्य हननतुल्यो बाधो जातः। यत्र तु हननोद्यमतुल्यप्रवृत्तिमात्रमपवादस्य भवति ताञ्च प्रवृत्तिं बाधाद्धननसम-कक्षात्प्रागेव किमपि निषेधशास्त्रं वारयति तत्र जीवत उत्सर्गस्य प्रवृत्तिर्भवत्येव यथा वृक्षावित्यत्र। तदुक्तं **यत्र तु इत्यादिना**। वृक्षौ इत्यत्र वृक्ष+औ इत्यवस्थायाम् अप-वादः पूर्वसवर्णदीर्घः नादिचि ६.१.१०४ इति सूत्रेण निषिद्धः। अतः अपवादस्य

---

इसी लिए तौ सत् ३.२.१२७ में 'तौ' का निर्देश संगत हुआ। अन्यथा 'तौ' में वृद्धि नहीं हो पाती। इसी निर्देश के कारण भ्रष्टावसरन्याय का इस शास्त्र में आश्रयण नहीं लिया जाता। अवसर बार बार नहीं आता जो अवसर चूक गया वह फिर नहीं आता "समय चूक पुनि का पछिताने"। समय पर चूकनेवालों को पछताना ही पड़ता है और उस पछतावे से कोई लाभ नहीं होता। "वृद्धि-रेचि" ६.१.८८ का अवसर चला गया; फिर उसे दुबारा वृद्धि करने का चांस नहीं मिले ऐसी बात यहाँ नहीं मानी जाती। अथवा यों कहिये सूत्र में लिखित उद्देश्यों की पूर्ति जब तक अधूरी रहेगी; तब तक सूत्र की प्राप्ति रहेगी और जब तक सूत्र की प्राप्ति रहेगी, तब तक सूत्र को भ्रष्टावसर कैसे माना जा सकता है। यह बात इको गुणवृद्धी' सूत्र के भाष्य से स्पष्ट होती है 'इको गुणवृद्धी' १.१.३ में वृद्धिग्रहण का प्रयोजन बताते हुए भाष्यकार ने कहा कि यदि वृद्धिग्रहण नहीं करेंगे तो 'अभैत्सीत्' में "सिचि वृद्धिः" ७.२.१ से व्यञ्जन को वृद्धि हो जायगी। वृद्धिग्रहण करने पर तो यह सूत्र वहाँ इक् की उपस्थिति कर देता है इसीलिए दोष नहीं होता। इस पर आगे कहा गया कि वाह वहाँ तो 'वदव्रज—सूत्र से हलन्तलक्षणा वृद्धि 'सिचि वृद्धिः—को बाध लेगी। इसलिए अच् को ही वृद्धि होगी इस पर कहा गया कि ठीक, वहाँ दोष नहीं होगा; किन्तु 'अकोषीत्' में जहाँ कि हलन्तलक्षणा वृद्धि को 'नेटि' ७.२.४ निषेध कर देगा; वहाँ व्यञ्जन को वृद्धि न हो, इसलिए 'इको गुण'—सूत्र में वृद्धि ग्रहण करना चाहिए तो बताया कि 'नेटि' से 'सिचि वृद्धिः—'का भी प्रतिषेध हो जायगा। इस तरह हलन्तलक्षणा वृद्धि से बाधित सिचि वृद्धिः—की पुनः प्राप्ति दिखाना ही साबित करता है कि यहाँ भ्रष्टावसर न्याय नहीं माना जाता है। यह बात 'इको

अत्र देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं नेति न्यायस्य विषय एव नास्ति हते देवदत्त उन्मज्जनं न, देवदत्तहननोद्यतस्य तु हनने भवत्येवोन्मज्जनम् । प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किं तु हननोद्यमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्यैव निषेधात् ॥

---

विषयेऽपि 'वृद्धिरेचि' ६.१.८८ इत्युत्सर्गः प्रवर्तत एवेति भावः । अतएव 'तौ सत्' ३.२.१२७ इतिसूत्रस्थः 'तौ' इति निर्देशः संगच्छते । अवसरे भ्रष्टः सर्वदा पश्चात्तपति न कदापि साफल्यं लभते लोके, तथा शास्त्रेऽपि जायताम् अवसरे भ्रष्टो 'वृद्धिरेचि' ६.१.८८ इति विधिः सर्वकालाय भ्रष्टो भवतु कथं स पुनः प्रवर्तताम् इति न वाच्यम् 'तौ सत्' इति निर्देशेनैव यस्यावसरो भ्रष्टस्तन्न पुनरवसरं लभते इति न्यायस्य Time

---

सूत्र के भाष्य के प्रदीपोद्योत में बतायी गयी है । यहाँ "देवदत्तहन्तृहतन्याय" का अवसर ही नहीं है । देवदत्त के मारने वाले को मार डालने पर देवदत्त जीवित नहीं होता; यह एक वास्तविकता है । पर उसका विषय तौ सत्' नहीं है । "तौ सत्" की बात कुछ और है और न्याय का तात्पर्य कुछ और । देवदत्त के हन्ता ने यदि देवदत्त का काम तमाम कर दिया हो; तब यदि देवदत्त के हन्ता को प्राणदण्ड भी दिया जाय; तो भी देवदत्त नहीं जी सकता है; किन्तु देवदत्त का हन्ता देवदत्त को मारने ही वाला है, वह उसे मारने का प्रयास ही कर रहा है; इतने में ही यदि उस हत्या के उद्यम में प्रवृत्त उसको मार दिया जाय; तब तो देवदत्त बच ही जाता है । वृक्षौ या तौ में यही बात हुई है । यहाँ पूर्वसवर्णदीर्घ के द्वारा वृद्धि का हनन नहीं हुआ था, किन्तु जैसे हन्ता वध्य के हनन केलिए उद्यत होता है; उसी तरह यहाँ पूर्वसवर्ण दीर्घ' की प्राप्ति मात्र हुई थी; पूर्वसवर्ण दीर्घ वृद्धि को मारने के लिए प्रसक्ति रूप उदयम या प्रहार करने ही वाला था कि 'नादिचि' ने उसे निषेध कर दिया । इसलिए 'वृद्धिरेचि' जीवित ही बच गया और उसकी प्रवृत्ति बाद में हुई ' इस तरह "तौ सत्" इत्यादि निर्देश बन सका । प्रदीप में कैयट ने बताया कि वृद्धि और पूर्वसवर्ण दीर्घ में "अनन्तरस्य विधिः—इस न्याय से दीर्घ को ही 'नादिचि' निषेध करेगा फिर वृद्धि हो जायगी "संघौद्धौ" ३.३.८६ इस निर्देश के कारण । इस तरह प्रदीप में अवसरभ्रष्ट वृद्धि को पुनः अवसर दिया गया है । उद्योत में नागेश ने तो कहा ही है कि 'भ्रष्टावसर' न्याय (यहाँ) है ही नहीं "संघौद्धौ" इस निर्देश से यही सूचित होता है । इसीलिए "नान्तः पादमव्यपरे" (प्रकृत्यान्तः पादमव्यपरे) ६.१.११५ इस सूत्र में 'एङोऽति' का अनुवृत्त करके एङ् को अत् के परे रहते जो जो प्राप्त हो सबका निषेध हो, ऐसा अर्थ किया गया । अन्यथा दूसरे ने(पररूप ने) जब अयादि के अवसर को भ्रष्ट कर दिया था; तो उसके निषेध की क्या आवश्यकता थी ?

प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम् । स्पष्टं चेदं 'शेषा-द्विभाषा' इति सूत्रे भाष्ये । तत्र हि शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते

---

and tide do not come again इत्यर्थकस्य नात्र शास्त्र आश्रयणमिति ज्ञापनात् । भ्रष्टावसरन्यायस्य नात्र शास्त्रे आश्रयणमिति 'इकोगुणवृद्धी' १.१.३ इतिसूत्रे भाष्ये-ध्वनितम् प्रदीपोद्योते निरुपितं च कैयटनागेशाभ्याम् । तथाहि-तत्र वृद्धिग्रहणं किमर्थ-मिति प्रश्नसन्दर्भे 'अभैत्सीत् इत्यत्र इकोऽनुपस्थित्या व्यञ्जनस्य वृद्धिः स्यादिति भाष्याशयः । न च तत्र हलन्तलक्षणा वृद्धिः (वदव्रजहलन्तस्याचः ७.२.३ इति हलन्तलक्षणा वृद्धिः) तस्याः (सिचिवृद्धिरिति वृद्धेः) बाधिका भविष्यति (अतस्तत्र न व्यञ्जनस्य वृद्धिः किन्तु अच एव वृद्धिर्भविष्यतीति तत्र न दोषः इति वाच्यम्) यत्र तर्हि सा प्रतिषिध्यते—'नेटि' ७.२.४ इति 'अकोषीत्' 'अमोषीत्' । (अर्थात् अकोषीत् इत्यत्र हलन्तलक्षणा वृद्धिर्नेटीति प्रतिषिद्धा सिचि वृद्धिरिति वृद्धिं न शक्नोति बाधितुम् । अतः 'इको गुण' इत्यत्र वृद्धिग्रहणाभावे व्यञ्जनस्य वृद्धिः प्राप्नोति तां वारयितुं वृद्धिग्रहणं कर्तव्यम् इति भावः) ततः प्रोक्तम् (भाष्ये) सिचिवृद्धेरप्येष प्रतिषेधः । कथम् ? लक्षणं हि नाम ध्वनति भ्रमति मुहूर्तमपि नावतिष्ठते इति । अत्र भाष्ये भ्रष्टावसरस्य सिचिवृद्धिरिति विधेः पुनः प्राप्तिर्दर्शिता सा च 'सिचिवृद्धेरप्येष (नेटीति) प्रतिषेध' इति ग्रन्थेन वारिता । यदि भ्रष्टावसर-न्यायस्यात्र शास्त्रे आश्रयणं भवेत्; तर्हि हलन्तलक्षणया वृद्ध्या कुण्ठितप्रसरा; अतएव भ्रष्टावसरा 'सिचि वृद्धिः' पुनर्नैव प्राप्नुयात्; तस्याः सिचिवृद्धेरप्येष प्रतिषेध इत्यनेन प्रतिषेधदर्शनमसंगतं स्यात् । भगवान् पतञ्जलिः प्रतिषेधं करोति । अतो ध्वन्यते 'भ्रष्टावसरन्यायो नात्र शास्त्रे आश्रीयत इति ।

प्रदीपे तु प्रोक्तम्=यद्येवं वृक्षावित्यत्र 'नादिचि' ६.१.१०४ इत्यनेन पूर्व-सवर्णदीर्घे निषिद्धे वृद्धेरपि प्रतिषेधप्रसङ्गः, नैष दोषः 'संघोद्धौ' ३.३.८६ इत्यादे-र्ज्ञापकादनन्तरस्यैव (पूर्वसवर्णदीर्घस्यैव) 'नादिचि' ६.१.१०४ इति प्रतिषेधात् इति । अत्रप्रदीपे वृद्धेर्भ्रष्टावसरायाः पुनः प्रवृत्तिदर्शनाज्ज्ञायते यदत्र शास्त्रे भ्रष्टावसरन्या-यस्याश्रयणं नास्तीति । उद्योतेऽपि प्रोक्तम्=उक्तनिर्देशात् (संघोद्धौ इति निर्देशात्) भ्रष्टावसरन्यायस्तु नास्त्येव । अतएव नान्तः पादम् (प्रकृत्यान्तः पादम् ६.१.११५) इति सूत्रे एङोऽतीत्यनुवर्त्य एङोऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्व-निषेधकत्वं तस्योक्तं इति वदन्ति (परे) इत्युक्तम् ।

प्रतिपदविधित्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम् इदं शेषाद्विभाषा ५.४.१५४ इति सूत्रे भाष्ये स्पष्टम् । तथाहि:—किमर्थं पुनःशेषग्रहणं क्रियते । याभ्यः

---

प्रतिपदोक्त निरवकाश होने पर ही बाधक माना जाता है । यह बात 'शेषाद् विभाषा ५.४.१५४ सूत्र के भाष्य में स्पष्ट है । 'शेषाद् विभाषा' ५.४.१५४ में

बाधका भविष्यन्तीत्याशङ्क्यानवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इत्युक्तम् । क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्व प्रतिपदविधित्वेनापि । परनित्या-

---

प्रकृतिभ्यः समासान्तो विधीयते, ताभ्यः कब् माभूदिति (एतदर्थं शेषग्रहणं क्रियते) नैतदस्ति प्रयोजनम् ये प्रतिपदं विधीयन्ते ते तत्र बाधकाः भविष्यन्ति, । (इत्थं शेष-ग्रहणस्य प्रयोजनाभावः सिद्ध्यतीति क्षणं प्रतिपाद्य प्रोक्तम्) अनवकाशा हि विधयो बाधका भवन्ति सावकाशाश्च समासान्ताः (अनेन भाष्येण सिद्ध्यति यत् प्रतिपद-विधयोऽपि निरवकाशाः सन्तः एव बाधकाः) कोऽवकाशः ? विभाषा कप्, यदा न कप्, सोऽवकाशः।कपः प्रसङ्गे उभयं प्राप्नोति । परत्वात् कप् प्राप्नोति । तस्माच्छेषग्रहणं कर्तव्यम् इति ।

निरवकाशत्वाभावेऽपि क्वचित् प्रतिपदविधेः परनित्याद्यपेक्षया बलवत्त्वं यत्कैयटेन दर्शितं तस्य कारणं प्रतिपदविधित्वेन शीघ्रोपस्थितिर्जायते । सा च शीघ्रोप-स्थितिस्तस्य परनित्यादिभ्यः पूर्वप्रवृत्तिं प्रयोजयति । इत्थं पूर्वप्रवृत्तिप्रयोजकत्वरूपमेव बलवत्त्वं प्रतिपदविधाविति ज्ञेयम् । तदुक्तं 'प्रत्ययोत्तरपदयोश्च' ७.२.९८ इति सूत्रस्य भाष्यप्रदीपे कैयटेन—नित्यादप्यन्तरङ्गो बलीयाँस्तथा चोक्तं 'परनित्यान्तरङ्गविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इति । अत्रेदं बोध्यम्=यदि प्रतिपदविधित्वस्य विषयस्तक्रकौण्डिन्यन्यायस्य विषयस्तदा बाधो युक्तिसिद्धत्वा-त्सुवचा एव । यदि च तक्रकौण्डिन्यन्यायाविषयस्तदा अनवकाशत्वादेव बाधः । कैयटस्तु प्रतिपदविधित्वस्य बाधकत्वमुक्तवान् तत् कथमिति प्रश्ने सर्वान्तरङ्गापेक्षया प्रतिपदविधित्वस्य शीघ्रोपस्थितिकत्वमेव बलवत्त्वबीजमिति इष्टं भवतीति भावः । तथा च प्रतिपदविधित्वं शीघ्रोपस्थितिनिमित्तकत्वरूपमन्तरङ्गत्वमेव नान्यत् किमप्यपूर्वं

---

'शेषात्' का अर्थ है 'अनुक्तसमासान्तात्' । इसलिए "रम्यपथो देशः" इत्यादि प्रयोगों में अ प्रत्ययरूप समासान्त प्रत्यय उक्त होने के कारण कप् प्रत्यय नहीं होता है । इस पर भाष्यकार ने प्रश्न किया कि शेष ग्रहण यहाँ व्यर्थ है क्योंकि "ऋक्पूरब्धूः" इत्यादि सूत्रों से प्रतिपदोक्तत्वात् कप् प्रत्यय को बाधकर 'अ' प्रत्यय हो जायगा । 'ऋक्पूरब्धूः' ५.४.७४ इत्यादि सूत्रों में ऋच् आदि पदों का उच्चारण है । अतः ये शास्त्र प्रतिपद विधि हैं । जो प्रतिपद विहित हैं; वे प्रत्यय, बाधक हो जायेंगे; इस तरह आशङ्का करके भाष्यकार ने कहा कि अनवकाश अर्थात् जो कहीं चरितार्थ न हो, वे विधि ही बाधक होते हैं, समासान्त प्रत्यय तो 'कप्' के अभाव में सावकाश हैं अतः "शेषात्" ग्रहण करने की आवश्यकता है । इस भाष्य में स्पष्ट निर्देश है कि प्रतिपदविधि भी निरवकाश होने पर ही बाधक बनती है ।

कहीं ऐसा भी होता है कि प्रतिपदविधि अवकाश नहीं होती है, फिर भी

**न्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसंगे परबलीयस्त्वमिति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे कैयटेन पाठात् । अत एव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्व आकारप्रश्लेषाद्धल्ङ्यादिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वात्' इति लोपेन साधितम् ॥६५॥**

---

बाधनिमित्तमिति तात्पर्यम् । अतएव = निरवकाशत्वाभावेऽप्युक्तरीत्या प्रतिपदोक्तस्य बाधकत्वस्वीकारादेव हे रमे इत्यादौ रमा सु इत्यवस्थायां प्रतिपदोक्तत्वाच्छीघ्रोपस्थित्या पूर्वमेव 'सम्बुद्धौ च' ७.३.१०६ इत्येत्वे 'हल्ङ्याब्भ्यः' ६.१.६८ इत्यत्र आ आप् इतिप्रश्लेषेण आरूपादापः परस्य सोर्लोपविधानेन तेन सुलोपाप्राप्त्या कथं सुलोप इति प्रश्नस्य समाधानमेङ्ह्रस्वात् सम्बुद्धेः ६.१.६९ इति सुलोप इत्युक्तम् कौमुद्याञ्च एङ् ह्रस्वादिति प्रतीकमुपादाय प्रौढमनोरमायां दीक्षितैरिति । सिद्धान्तकौमुद्याञ्च 'एङ् ह्रस्वादिति' सम्बुद्धिलोपः इति प्रतीकं वर्तत एव । 'तेन समाहितम्' इत्यस्याजन्तस्त्रीलिङ्गे 'हेरमे' इत्यस्य सिद्धिप्रसङ्गीयम् एङ् ह्रस्वादिति प्रतीकमुपादाय प्रौढमनोरमायां दीक्षितैरिति शेषोऽभ्युपगन्तव्य इति । शिवम् । ६५

---

पर या नित्यादि शास्त्रों के साथ मुकाबला होने पर उन शास्त्रों की अपेक्षा शीघ्र उपस्थिति होने के कारण प्रतिपद विधि बलवान् मानी जाती है । इस तरह सिद्ध है कि प्रतिपदविधि में जो बाधकता आती है; वह शीघ्रोपस्थिति के कारण उसमें आयी हुई अन्तरङ्गता के अतिरिक्त अन्य कोई वस्तु नहीं है ।

पर नित्य अन्तरङ्ग और प्रतिपदविधि, इनमें विरोध आने पर और इनके एकसाथ प्रसङ्ग होने पर इनमें उत्तरोत्तर को अधिक बलवान् मानना चाहिए यह 'प्रत्ययोत्तरपदयोश्च' ७.२.९८ सूत्र में कैयट ने स्पष्ट कहा है । इसलिए "हे रमे" में यह प्रश्न उठाया गया कि रमा+सु ऐसी स्थिति में प्रतिपदोक्तत्वात् पहले ही "सुम्बुद्धौ च" ७.३.१०६ से एत्व हो जायगा फिर "हल्ङ्याब्भ्यः" ६.१.६८ से लोप नहीं होगा, क्योंकि सुम्बुद्धि 'आप्' से पर नहीं है । स्थानिवद्भाव से 'आप्' को तो लाया जा सकता है; परन्तु 'हलङ्यादि' सूत्र में "दीर्घात्" के प्रत्याख्यान के लिए 'आ+आप्' और 'ङी+ई' इस तरह आ और ई का प्रश्लेष करके सूत्र का अर्थ किया गया है कि 'आ' रूप जो आप् और ई रूप जो ङी; उससे पर 'सु' का लोप हो । इसलिए स्थानिवद्भाव से "आ" रूपता लानी होगी परन्तु "अनल् विधौ" के द्वारा निषेध होने से उसका लाना असम्भव है अतः "हेरमे" में सु का लोप "हल्ङ्याब्भ्यो" से नहीं हो सकेगा । इस तरह दीक्षित ने आशंका करके "एङ्ह्रस्वात्" ६.१.६९ के द्वारा सुलोप करके रूप की सिद्धि की ।

प्रौढमनोरमा में "एङ् ह्रस्वादिति सम्बुद्धिलोपः" इस प्रतीक पर निर्दिष्ट दीक्षित के पूर्वोक्त मत को कुछ वैयाकरण ठीक नहीं मानते । वे कहते हैं कि 'हे

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह—

**अपवादो यद्यन्यत्र चरितार्थस्तह्यन्तरङ्गेण बाध्यते ॥६६॥**

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात् । एवं च प्रकृतेऽन्तरङ्गेण

---

**अपवादोयद्यन्यत्र······बाध्यते ॥६६॥**

ननु वाक्संस्कारपक्षे अयजे इन्द्रम् इति वाक्यसंस्कारकाले यज् धातो र्लङि उत्तमपुरुषैकवचने इटि इन्द्रशब्दादमि च कृते शपि, अटि, अयज इ इन्द्र अम् इति स्थिते अ+इ इत्यनयो—र्गुणे इ+इ इत्यनयोः सवर्णदीर्घे च प्राप्तेऽन्तरङ्गत्वात्गुणे अमि पूर्वरूपे 'अयजे इन्द्रमिति सिद्ध्यति तन्न सिद्ध्येत् अन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधात् अपवादस्य चान्तरङ्गादपि प्रबलत्वम्य परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति परिभाषया बोधितत्वादिति चेन्न **अपवादो यद्यन्यत्र चरितार्थस्तह्यन्तरङ्गेण बाध्यत** इति परिभाषास्वीकारात् । परिभाषार्थः स्पष्टो न

---

रमे' में 'हल्ङ्यादिलोप' की अपेक्षा एत्व को प्रतिपदोक्त होने के कारण अन्तरङ्ग सिद्ध नहीं किया जा सकता । ऊपर कहा गया है कि अनवकाश न होने पर भी शीघ्रोपस्थिति के कारण प्रतिपदविधि बलवान् होती है इस तरह सिद्ध है कि पूर्वोक्त बलवत्ता के लिए सावकाशत्व अपेक्षित है । यहाँ तो 'एत्व' निरवकाश है । ऐसा कोई स्थल नहीं है; जहाँ 'हल्ङ्यादि' लोप की प्राप्ति न हो और सम्बुद्धौ च" ७.३.१०६ की प्राप्ति हो । इस तरह 'सत्यपि सम्भवे बाधनम्' इस न्याय से 'अपवादत्वात्' पहले एत्व होगा और हल्ङ्यादि लोप की अप्रवृत्ति हो जायगी यही समाधान 'हे रमे' में देना चाहिए । इति शिवम् ६५

**अपवादो यद्यन्यत्र·········बाध्यते—६६**

सभी जानते हैं कि "अकःसवर्णे दीर्घः" ६.१.१०१, "आद्गुणः" ६.१.८७ का अपवाद है । ऐसी स्थिति में वाक्यसंस्कारपक्ष में "अयजे+इन्द्रम्" में यज् धातु से लङ्लकार के उत्तमपुरुष के एकवचन में इट् लाने पर और इन्द्र शब्दसे अम् विभक्ति में पूर्वभाग में शप्, अट्, आदि करने पर अयज+इ इन्द्र अम् ऐसी स्थिति में गुण को बाधकर अपवादत्वात् सवर्णदीर्घ होना चाहिए, गुण का अपवाद माने गये सवर्णदीर्घ से बाध क्यों नहीं हुआ, इसका उत्तर देते हुए लिखते हैं "**अपवादो यद्यन्यत्र चरितार्थ**······" अपवाद यदि कहीं अन्यत्र चरितार्थ हो गया हो; तो वह अन्तरङ्ग के द्वारा बाधित होता है । अपवाद को जो बाधक माना गया है उसका कारण है अपवाद में निरवकाश का होना । अपवाद जब कहीं चरितार्थ हो गया, तब उसमें बाधकता का बीज निरवकाशत्व तो रहा नहीं, फिर वह बाधक कैसे बने ? इसी कारण से प्रस्तुत प्रयोग "अयजे इन्द्रम्" में अन्तरङ्ग

**गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यणगुणयोरपवादोऽपि बाध्यते। पूर्वोपस्थित-निमित्तकत्वरूपान्तरङ्गत्वविषय इदम् ॥**

---

व्याख्यासापेक्षः। निरवकाशत्वमेवापवादस्य प्राबल्यप्रयोजकम्। तदेव च तस्य बाधकत्वे बीजम्। यदि स चरितार्थस्तर्हि येनान्यच्छास्त्रमन्तरङ्गं बाध्यते तस्य बीजस्य (निमित्तस्य) अभावादन्तरङ्गं बाधितुं स नैव प्रभवेदिति लोकानुभवसिद्धोऽयं न्यायः। इत्थं दैत्य+अरिः इत्यादौ ययोरकारयोर्गुणैकादेशः प्राप्नोति तयोरेव सवर्णदीर्घैकादेश इति गुण.दीर्घैकादेशयोः समानाश्रयत्वेन तत्र समानाश्रयेऽन्तरङ्गपरिभाषाबाधनं विनैव येन नाप्राप्तिन्यायेन गुणं प्रबाध्य चरितार्थोऽपवादः सवर्णदीर्घविधिः असमानाश्रये अयजे+इन्द्रम् इत्यादौ अन्तरङ्गेण गुणेन बाध्यते; अत्र च गुणः जघटकाकारस्य प्रत्ययेकारस्य च प्राप्नोति, सवर्णदीर्घस्तु प्रत्ययेकारस्य इन्द्रघटकेकारस्येति व्याश्रयत्वं तयोः। व्याश्रयत्वादेव गुणोऽन्तरङ्गः, समानाश्रये च न कोऽप्यन्तरङ्गस्तत्रान्तरङ्गपरिभाषाबाधनं विनैव दीर्घश्चरितार्थः। अतोऽत्र तां परिभाषां बाधितुं न दृश्यते किमपि प्रमाणम् यच्च निरवकाशत्वरूपं बाधकताबीजमासीत्तच्च समानाश्रये क्षीणमेवेति तात्पर्यम्। किञ्चौत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने ऽपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचः करणीय इति नियमानुसारेण 'आद्गुणः' ६.१.८७ इति शास्त्रे उद्देश्यभूतोऽवर्णोऽवर्णान्यपरको ग्राह्यः अच्परत्वं च सवर्णावर्णभिन्नं ग्राह्यमित्येव सिद्ध्यति। तथाच अयजे इन्द्रम् इत्यादौ व्याश्रयत्वाद् गुणप्रवृत्तिर्निबाधैवेति नेयं परिभाषा किमपि नूतनमर्थं बाधयति किन्तु संकोचफलितार्थपरैवेति हृदयम्। अतएव पूर्वोपस्थितिनिमित्तकत्वरूपमन्तरङ्गं यत्र वर्तते तादृशान्तरङ्गविषयिकेयं परिभाषेति प्रोच्यते। तादृशान्तरङ्गस्थले अपवादशास्त्रीयव्याप्यविषयातिरिक्तत्वेन उत्सर्गशास्त्रीयायां व्यापकविषयतायां संकोचे कृतेऽपि उत्सर्गशास्त्रस्यापवादशास्त्रविषये प्रवृत्तियोग्यताऽवशिष्यत एव। यथा अयजे+इन्द्रम् इत्यादौ। अत्र 'आद्गुण' ६-१.८७ इत्यस्य सवर्णान्याव्यवहितपूर्वत्वविशिष्टादवर्णादचि परे पूर्वपरयोरेकः गुणादेश इत्येवंरूपेण संकोचे कृतेऽपि सवर्णाचोऽन्यः

---

गुण के द्वारा सवर्णदीर्घ अपवाद होते हुए भी बाधित हुआ। क्योंकि सवर्णदीर्घ समानाश्रय में जैसे दैत्य+अरिः श्री+ईशः, इत्यादि में चरितार्थ है। यहाँ गुण और दीर्घ दोनों का आश्रय दैत्य और अरिः का अ तथा श्री और ईशः का ई ही है। इसलिए समानाश्रय में चरितार्थ सवर्णदीर्घ यद्यपि यण् और गुण का माना हुआ अपवाद है तथापि 'अयजे इन्द्रम्' में बाधित हुआ। 'अयज+इ+इन्द्र अम्'' में तो गुण का आश्रय 'ज' का 'अ' और विभक्ति 'इ' है, दीर्घ का आश्रय प्रत्यय 'इ' और इन्द्र का 'इ' है इसलिए दोनों समानाश्रय नहीं हैं। यह न्याय जहाँ पूर्वोपस्थितिनिमित्तक अन्तरङ्ग है, वहीं लगता है।

यत्त्वागमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वादत एव ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डिन्यायेत्यादौ कम्बलदानेन न दधिदानबाध इति 'च्छ्वोः' इति सूत्रे कैयटः—तन्न। अपवादो नुग् दीर्घत्वस्येति 'दीर्घोऽकितः' इति सूत्रस्थभाष्यविरोधात् ॥६६॥

---

अयज+इ+इत्यत्रेकारः तदव्यवहितपूर्वत्वविशिष्टोऽवर्णः जघटकाकारोऽस्त्येव गुणः प्राप्नोत्येवेति। "च्छ्वोः" इति सूत्रे इति। प्रथमं च्छ्वोः ६.४.१९ इति सूत्रस्थं भाष्यं विलोक्यताम्—(भाष्यम्)अथ ऊडादिः कस्मान्न भवति। आदिष्टिद्भवतीति (आद्यन्तौ टकितौ इति) प्राप्नोति। कस्य पुनरादिः?—वकारस्य। अस्तु। वकारस्य का प्रतिपत्तिः? लोपोव्योर्वलि' ६.१.६६ इति लोपो भविष्यति। तत्र लोपो व्योर्वलीति लोपो भविष्यतीति प्रतीकमुपादाय कैयटेन प्रोक्तम्--"ननु नाप्राप्ते लोपे आरभ्यमाण ऊड् लोपस्य बाधकः प्राप्नोति। अत्र केचिदाहुः भिन्नजातीयकत्वादागमेनादेशो न बाध्यते यथा दधि ब्राह्मणेभ्यो दीयतां कम्बलः कौण्डिन्यायेति दघ्नः कम्बलो न बाधकः।•••इत्थमत्र कैयटेन स्पष्टमेवोक्तम् यत् आगमादेशयो र्न बाध्यबाधकभावो भिन्नफलत्वात्। अतएव ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डिन्यायेत्यादौ कम्बलदानेन न दधिदानस्य बाध इति तन्न अपवादो नुग् दीर्घत्वस्येति दीर्घोऽकित ७.४.८३ इति सूत्रस्थभाष्यविरोधात्। तत्र हि 'अकित' इति किमर्थमित्याशङ्क्य 'यंयम्यते' 'रंरम्यते' इत्यत्र नुकि कृते दीर्घाभावार्थमकिद्ग्रहणमिति प्रथमं समाधाय "अकित इति शक्यमकर्तुम्। कस्मान्न भवति 'यंयम्यते' 'रंरम्यत' इति? नुकि कृतेऽनजन्तत्वात्। (एवञ्चाकित इति व्यर्थम्) ततोऽकिद्ग्रहणस्य साफल्यं प्रदर्शयता प्रोक्तम् "तदन्ताग्रहणाद्वा" इति अर्थात् अकितः इत्यस्याभावे विशेषण विशेष्यभावस्य कामचारात् अजन्तस्याभ्यासस्य

---

कैयट ने जो यह कहा कि आगम और आदेश म बाध्यबाधकभाव नहीं होता है, अर्थात् न आगम आदेश का बाधक होता है और न आदेश ही आगम का बाधक बनता है; क्योंकि दोनों के फल अलग अलग होते हैं जहाँ आगम मित्र की तरह अङ्ग बनकर होता है, वहाँ आदेश शत्रु की तरह एक को स्थान भ्रष्ट करके उसके स्थान में होता है। इसलिए हम देखते हैं कि ब्राह्मणों को दही दो और कौण्डिन्य को कम्बल' ऐसा कहने पर कम्बलदान से दधिदान का अभाव नहीं होता; जैसा कि सभी ब्राह्मणों को दही दो और कौण्डिन्य को छाछ" कहने पर छाछदान से दधिदान का बाध हो जाता है। क्योंकि दधिदान और तक्रदान का एक फल है तृप्ति या क्षुधानिवृत्ति। कम्बल और दधि के फल तो अलग अलग हैं एक से शीतादि की निवृत्ति होती है और दूसरे से क्षुधा शान्ति। अतः कम्बलदान

नन्वजीगणदित्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिः शेषं बाधेत तत्राह—

**अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥६७॥**

---

दीर्घ इत्यर्थो न करिष्यते; किन्तु अभ्यासे योऽच् तस्य दीर्घ इत्यर्थः करिष्यते तथा-चाकिद्ग्रहणाभावे दीर्घः स्याद् यंयम्यत इत्यादौ तद्वारणायाकित इत्युच्यते; इत्थं तस्य सार्थक्यं प्रदर्श्य पुनः प्रोक्तं (नाप्राप्ते दीर्घे नुक आरम्भात्) अपवादो नुग् दीर्घ-त्वस्य। (तथाच दीर्घं प्रबाध्य नुकि दीर्घाभावे सिद्धे) एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाऽभ्यासविकारेषु बाधका न बाधन्त इति। अत्र भाष्ये नुगागमस्य दीर्घादेशबाधकत्वमुक्त्वागमादेशयोर्बाध्य-बाधकभावस्य स्पष्टतः प्रतिपादनात् पूर्वोक्तं कैयटमतं भाष्यविरुद्धमित्यसंगतमेवेति शिवम् ॥ ६६ ॥

**अभ्यास विकारेषु······नास्ति ॥६७॥**

ननु अजीगणत् इत्यादौ गणरूपस्याभ्यासस्येत्वमित्यर्थकस्य 'ई च गणः' ७.३.९७ इत्यस्य हलादिशेषेण णलोपे कृते गणरूपाभ्यासत्वाभावादचारितार्थ्येन निरवकाशत्वाद्धलादिशेषं बाधित्वा प्रवृत्तौ 'अलोन्त्यस्य' १.१.५२ इत्यनेन णकार-स्येत्वे गुणे अजेगणदित्यनिष्टापत्तिः ह्रस्वे कृते अजिगणदिति वा स्यादिति चेन्न अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति परिभाषास्वीकारेणादोषात्। अभ्यास-

---

जैसे दधिदान का बाधक नहीं होता; वैसे ही आगम या आदेश एक दूसरे का बाधक नहीं होता। यह बात "च्छ्वोः" ६.४.१९ सूत्र में कैयट ने कही है, परन्तु यह मत ठीक नहीं है; क्योंकि 'दीर्घोऽकितः' सूत्र में भाष्यकार ने कहा है कि नुक् दीर्घ का अपवाद होता है। यदि आगम और आदेश में परस्पर-बाध्य-बाधक भाव नहीं होता, तो नुगागम को भाष्यकार दीर्घादेश का अपवाद या बाधक कैसे बताते? अतः भाष्यविरुद्धतर्क होने के कारण कैयट का पूर्वोक्त मत अमान्य हैं। इति शिवम् ६६

**अभ्यासविकारेषु······नास्ति—६७**

निरवकाश विधि को अपवाद कहते हैं और अपवाद यदि सब से बलवान् होता है तो "अजीगणत्" में गण् रूप अभ्यास को इत्त्व करनेवाला "ई च गणः" ७.४.९७ सूत्र अपवाद हुआ; क्योंकि हलादिः शेषः से 'ण' का लोप होने पर "ई च गणः" निरवकाश हो जायगा। इस तरह "ई च गणः" यह सूत्र निरवकाशत्वात् "हलादि शेषः" को बाध लेगा और अलोन्त्यस्य १.१.५२ के बल से 'ण' को ईकार कर देगा इस तरह "अजीगणत्" यह रूप नहीं बनेगा, इस सम्बन्ध में कहते हैं—

'दीर्घोऽकितः' इत्यत्राकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा यंयम्यते इत्यत्र नुकि कृतेऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥

---

विकारविधायकेषु एकोऽन्यं न बाधते इति परिभाषार्थः। तेन हलादिशेषस्य ईत्वेन बाधाभावात्पूर्वं हलादिशेषेऽवशिष्टस्य गकारस्यैव गणरूपत्वमेकदेशविकृतन्यायेन स्वीकृत्य अलोन्त्यस्येति अकारेत्वे अजीगणदिति सिद्ध्यति । अस्या ज्ञापकं 'दीर्घोकितः' ७.४.८३ इतिसूत्रेऽकिद्ग्रहणम् तद्धि यंयम्यते, रंरम्यते, इत्यादौ नुकि कृते दीर्घाभावार्थं क्रियते। यदीयं परिभाषा न स्यात्तदा अकिद्ग्रहणाभावे दीर्घाप्राप्तियोग्येऽचरितार्थेन नुकोऽनवकाशत्वाद्दीर्घं बाधित्वा नुकि जातेऽनजन्तत्वादीर्घाप्राप्त्याऽकित इति ग्रहणं व्यर्थं स्यात् अतोऽकिद्ग्रहणं व्यर्थं सत् परिभ,षां ज्ञापयति । (ज्ञापकत्वप्रतिपादनपरकम् दीर्घोऽकितः ७·४.८३ इति सूत्रस्थं भाष्यं ४६४ तमे पृष्ठे निर्दिष्टम् तत्त एव द्रष्टव्यम्) ।

---

**"अभ्यासविकारेषु बाध्यबाधकभावो नास्ति"**। अभ्यास विकारों में बाध्य-बाधक भाव नहीं होता है। "दीर्घोऽकितः" ७.४.८३ इस सूत्र का 'अकिद्' ग्रहण इस परिभाषा का ज्ञापक है। अकिद् ग्रहण इस लिए करते हैं कि "यंयम्यते में नुक् करने पर कित् अभ्यास को दीर्घ न हो । यदि यह परिभाषा न रहे तो दीर्घ की जहाँ प्राप्ति नहीं हो, ऐसे किसी भी लक्ष्य में चरितार्थ नहीं होने के कारण अपवाद नुगागम दीर्घ को बाध कर प्रवृत्त हो जायगा, फिर अजन्त नहीं होने से दीर्घ की प्राप्ति है ही नहीं, उसके निवारण के लिए किया गया 'अकिद्' ग्रहण व्यर्थ हो जायगा। जब वह परिभाषा ज्ञापन कर लेता है, तब तो नुक् के पूर्व दीर्घ न हो जाय; इसलिए अकिद् ग्रहण करना आवश्यक हो जाता है। 'वाह, नुक् के पूर्व की हालत में तो अभ्यास 'अकित्' ही है, इसलिए अकिद् ग्रहण करने पर भी दीर्घ दुर्वार है' ऐसा नहीं कहना चाहिए; 'क्योंकि यहाँ यह संभावना है कि यदि दीर्घ न होता तो नुक् करने पर अकित् यह निषेध लग जाता। इस लिए इस संभावना के कारण 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवादः" इस न्याय से पहले दीर्घ नहीं होगा। यदि अकिद् ग्रहण न करें तो बाधक की संभावना भी नहीं है। इसलिए दीर्घ दुर्वार हो जायगा। इस तरह 'अकिद्' ग्रहण सार्थक हो जायगा। यद्यपि नुक् करने पर अजन्त नहीं होने के कारण दीर्घ की प्राप्ति स्वतः ही नहीं है, फिर उसके निवारण के लिए किया गया 'अकिद्ग्रहण' व्यर्थ ही दिखता है तथापि "जब तक व्यर्थ है तब तब ज्ञापन करता रहेगा' इस न्याय के अनुसार "दीर्घोऽकितः" में वैयधिकरण्यान्वय का भी ज्ञापन करेगा। इस तरह 'अकित् अभ्यासावयव अच् को दीर्घ हो इस अर्थ में प्राप्त दीर्घ के निवारण के लिए अकिद् ग्रहण सार्थक होजाता है।

ज्ञापितायान्त्वेतस्यामनया नुका दीर्घबाधे प्रतिपादिते नुकः पूर्वं दीर्घो माभूदिति कृत्वाऽकिद्ग्रहणम्। न च नुकः पूर्वमभ्यासस्याकित एव सत्त्वेन कृतेऽप्यकिद्ग्रहणे दीर्घो दुर्वार इति तद्ग्रहणं व्यर्थमेवेति वाच्यम् यद्यत्र दीर्घो न स्यात्तदा नुकि कृतेऽकित इति निषेधः स्यादिति संभावनायाः सत्वेन उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते (प० ६५) इति परिभाषया पूर्वं दीर्घाप्राप्तेः। अकित इत्यस्याभावे तु बाधकसंभावनाया अप्यभावाद्दीर्घो दुर्वारः स्यात्। इत्थमकित इत्यस्य स्वांशे सार्थक्यम्। न च नुकि कृतेऽजन्तस्याभ्यासस्याभावादेव दीर्घाऽप्राप्त्याऽकित इति व्यर्थमेवेति वाच्यम् यावता विनाऽनुपपत्तिः तावत् सर्वं ज्ञापयतीति न्यायेन अभ्यासविकारेषु वैयधिकरण्येनान्वय इत्यस्यापि ज्ञापनेनाभ्यासस्य योऽच् तस्य दीर्घो भवतीति सूत्रार्थतया नुकि कृतेऽप्यभ्याससम्बन्ध्यच्त्वस्य सत्वात्प्राप्तस्य दीर्घस्याभावायाकित इत्यस्य साफल्यात्। तेना'जीगणत्' इत्यत्र जघटकाकारस्य ईत्वं सिद्ध्यति। न चाकित इत्यनेन वैयधिकरण्यान्वय एव ज्ञाप्यताम्, माभूत्परिभाषा, तथा च नुकि कृतेऽभ्याससम्बन्धिनोऽचो दीर्घत्ववारणायाकित इति चरितार्थमिति वाच्यम् नुगतोऽनुनासिकान्तस्य ७.४,८५ इति नुग्विधायकसूत्रेऽत इत्यत्र तपरकरणेन नुकि कृते दीर्घाभावज्ञापनात् यदि नुकि कृते ऽपि दीर्घः स्यात्तदा ह्रस्वाकारान्तस्याभ्यासस्य नुग् विधानं व्यर्थं स्यादिति भावः। न च ह्रस्वः ७ ४.५९ इत्यनेनाभ्यासस्य ह्रस्वविधानात् सर्वत्राभ्यासे ह्रस्वस्यैव संभवात्तत्र तपरकरणं भूतपूर्वस्य ह्रस्वाकारस्य ग्रहणार्थं, तेन भाम् क्रोधे इत्यस्माद्यङन्तसिद्धरूपे 'बाभाम्यत' इत्यादौ ह्रस्वः ७.४.५९ इति ह्रस्वे कृतेऽपि 'बभाम्य' इत्यवस्थायां नानुनासिक इति तत्र तपरकरणस्य चारितार्थ्यात् तेन दीर्घबाधनासंभवात्। तथाच दीर्घे कृतेऽपि भूतपूर्वह्रस्वत्वमादाय नुकः प्रवृत्या तक्रकौण्डिन्यन्यायेन दीर्घस्य बाधेन कृते नुकि दीर्घाप्राप्त्याऽकिद्ग्रहणस्य वैयर्थ्येन परिभाषाज्ञापनसंभवात्। न चाकित इत्यनेन यावत्पर्यन्तं परिभाषा न ज्ञाप्यते तस्यामवस्थायामभ्यासविकारेषु बाध्यबाधकभावस्य सत्वात्तक्रकौण्डिन्यन्यायेन ह्रस्वं बाधित्वा 'बाभाम्यत' इत्यत्र प्राप्तस्य नुको व्यावृत्तये तपरकरणस्य चारितार्थ्येन तेन भूतपूर्वगतेराश्रयणे मानाभावेन कृते दीर्घेऽचरितार्थेन नुका दीर्घो बाधिष्यते ततश्च नुकि जाते दीर्घो माभूदित्यर्थमकिद्ग्रहणं चरितार्थमिति न तत्परिभाषां ज्ञापयितुं प्रभवतीति वाच्यम् 'वनीवच्यते' 'वरीवर्ति' इत्यादौ नीग्वञ्चु'...७.४.८४ इति रुग्रीकौ च लुकि' ७.४.९१ इति नीग्रीगादिना दीर्घस्य तक्रकौण्डिन्यन्यायेन शाश्वतिकबाधे जाते तत्रादोषात् यंयम्यत इत्यादिमात्रार्थकत्वे लाघवात् नह्येकमुदाहरणं योगारभ्भं प्रयोजयतीति न्यायाच्च दीर्घोऽनुक इति न्यासेनैव सिद्धेऽकित इत्यस्य व्यर्थस्य परिभाषाज्ञापकत्वे बाधाभावात्। न च छो छेदने इत्यस्माद्दैवादिकाद्धातो र्यङि 'आदेच उपदेशे'—६.१.४५ इत्यात्त्वे छा+य इत्यत्र द्वित्वेऽभ्यासस्य ह्रस्वे 'छे च' ६.१.७३ इति तुकि दीर्घाभावायाकिद्ग्रहणं चरितार्थमिति न तत्परिभाषाज्ञापकमिति वाच्यम् प्रत्यासत्याऽभ्यासमुद्दिश्य यः किद् विधीयते

**इयं च परान्तरान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका । तेनाचीकरत् मीमांसत इत्यादि सिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति । अन्त्ये मान्बधेतिदीर्घेणान्तरङ्गत्वादित्वस्य बाधः प्राप्तः ॥**

---

तदभावस्यैवाकित इत्यत्र ग्रहणमिष्टम् अथवा 'दीर्घोऽकितः' ७.४.८३ इति सूत्रे 'गुणो यङ्लुकोः' ७.४.८२ इति सूत्राद् यङ्लुकोरित्यनुवृत्या यङं यङ्लुकं च निमित्तीकृत्य जातस्य कितोऽग्रहणमेवात्रेष्टमिति चाच्छायत इत्यस्य प्रत्युदाहरणत्वाभावात् तद्व्यावृत्तयेऽकिद्ग्रहणं न चरितार्थमिति परिभाषाज्ञापने बाधकाभावात् । अत एव 'चाच्छायत इत्यत्र 'दीर्घोऽकितः' ७.४.८३ इत्यत्र तुकि कृतेऽपि दीर्घत्वम् जायत एव ।

द्वयोरभ्यासत्वावच्छिन्नोद्देश्यताकत्वे परिभाषेयं बाध्यबाधकभावाभावं बोधयति । अचीकरत् मीमांसते इत्यादि लक्ष्यसिद्ध्यनुरोधात् परान्तरङ्गादिबाधकानामपि अबाधकत्वमियं बोधयत्यभ्यासविकारेषु । अतएव कृधातोर्ण्यन्ताल्लुङि तिपि अडागमे च्लेश्चङि द्वित्वेऽभ्यासत्वे उरदत्वे रपरे हलादिशेषे चुत्वे अचकृ इ अत् इति स्थिते उत्तरखण्डे अचोञ्णिति वृद्धौ णौ चङीति उपधाह्रस्वे अचकर् इ अत् इत्यवस्थायाम् 'सन्वल्लघुनि—७.४.९३ इति सन्वद्भावस्य परत्वाद्दीर्घेण 'दीर्घो लघोः' ७.४.९४ इति विहितेन वाधो न जायते । एवं मीमांसते इत्यत्र मान् धातोः 'गुप्तिज्किद्भ्यः सन्' ३.१.५ मान्बधदानशान्भ्यो दीर्घश्चाभ्यासस्य ३.१.६ इति जिज्ञासार्थे सन्प्रत्यये सन्यङोः ६.१.९ इति द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वे म मान् स इत्यवस्थायां दीर्घेणान्तरङ्गत्वात् 'सन्यत' ७.४.७९ इतीत्वस्य बाधो न जायते । तेन पूर्वमित्वे ततो दीर्घे अनुस्वारे धातुत्वे लटि आत्मनेपदे तप्रत्यये एत्वे 'मीमांसते' इति सिद्ध्यति । यद्यत्र दीर्घेणेत्वस्य बाधः स्यात्तदा पूर्वमभ्यासस्य दीर्घे मा मान् स इति जातेऽत्वाभावादित्वाप्राप्त्या मामांसते इत्यनिष्टरूपमापद्येत ।

"इयं च परान्तरङ्गादिबाधकानाम्······बाधः प्राप्तः"

इति ग्रन्थे प्रमाणमस्ति 'गुणो यङ्लुकोः' ७.४.८२ इतिसूत्रस्य भाष्यम् तथाहि —"ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वम् १ एचोर्यङि दीर्घत्वं प्राप्नोति डोढौक्यते, तोत्रौक्यत इति । ननु च ह्रस्वत्वे कृते दीर्घत्वं न भविष्यति । न सिद्ध्यति । किं कारणम् ? ह्रस्वाद्धि परं दीर्घत्वम् । ह्रस्वत्वं क्रियताम् दीर्घत्वमिति । किमत्र कर्तव्यम् ? परत्वाद्दीर्घत्वेन भवितव्यम् ॥

---

यह परिभाषा, पर—अन्तरङ्गादि बाधकों को भी अबाधक सिद्ध करती है । इसलिए "अचीकरत्" और 'मीमांसते' इत्यादि प्रयोग सिद्ध हुए । "अचीकरत्" में 'दीर्घो लघोः, ७.४.९४ इस दीर्घ ने 'पर' होने के कारण सन्वद्भाव को बाधना चाहा था और दूसरे प्रयोग में (३.१.६) 'मान्बध' सूत्र विहित दीर्घ के द्वारा अन्तरङ्गत्वात् इत्व का बाध प्राप्त था । परन्तु इस परिभाषा से उनके बाध्यबाधक भाव का निषेध किया गया । इसलिए दोष नहीं हुआ ।

**यत्तु यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमिति 'अत एक—इति सूत्रे कैयटः—तन्न। नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधात्। मान्वधादीनां**

---

"न वाऽभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् २ न वैष दोषः। किं कारणम् ? अभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात्। अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इत्येषा परिभाषा कर्तव्या॥ कान्येतस्याः परिभाषायाः प्रयोजनानि ?"

"प्रयोजनं सन्वद्भावस्य दीर्घत्वन्" ३ अचीकरत् अजीहरत्। सन्वद्भावमपवादत्वाद् दीर्घत्वं न बाधते। (अत्रापवादत्वादित्यस्य परत्वादित्यर्थः) मान्प्रभृतीनां दीर्घत्वमित्त्वस्य ४ मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्वं न बाधते। (अत्रापवादत्वादित्यस्यार्थोऽन्तरङ्गत्वादिति)। "गणेरीत्वं हलादिशेषस्य ५ गणेरीत्वमपवादत्वाद्धलादिशेषं न बाधते। एतेनेयं परिभाषा परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिकेत्यत्र भाष्यमेव प्रमाणमिति ज्ञातव्यम्। एतच्च तत्रैवोक्तेन भाष्येणानेन स्पष्टतः प्रतिपादितम् तथाहि—इदमयुक्तं वर्तते। किमत्रायुक्तम्। ऐङोर्यङि दीर्घत्वप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वमित्युक्त्वा तत उच्यते—नवाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वादिति। तस्याश्च परिभाषायाः प्रयोजनानि नामोच्यन्ते—प्रयोजनं सन्वद्भावस्य दीर्घत्वम्, मान्प्रभृतीनां दीर्घत्वमित्त्वस्य, गणेरीत्वं हलादिशेषस्येति। न च सन्वद्भावमपवादत्वाद्दीर्घत्वं बाधते। किं तर्हि ? परत्वात्। न खल्वपि मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्वं बाधते। किन्तर्हि ? अन्तरङ्गत्वात्। न खल्वपि गणेरीत्त्वमपवादत्वाद्धलादिशेषं बाधते। किन्तर्हि ? अनवकाशत्वात्। एवं तर्हीयं परिभाषा कर्तव्या—अभ्यासविकारेषु बाधका न बाधन्त इति। सा तर्ह्येषा परिभाषा कर्तव्या। न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येषा परिभाषेति यदयमकित इति प्रतिषेधं शास्ति इति (भाष्यम्)।

कैयटमतं दूषयितुमुपक्रमते यत्तु **यत्रैकैकप्रवृत्त्युत्तरमपीत्यादिना**। अयं भावः अत एकहल्मध्येनादेशादेर्लिटि ६.४.१२० इति लिड्ग्रहणं पापच्यते इत्यादौ एत्वाभ्यासलोपाभावार्थमित्युक्त्वा तत्प्रयोजनखण्डनाय भाष्यकारेण प्रोक्तम्—दीर्घत्वमत्र बाधकं

---

"अत एक"—६.४.१२० सूत्र में कैयट ने जो यह कहा जहाँ एक-एक की प्रवृत्ति के बाद भी सबकी प्रवृत्ति होती हो वहीं इस परिभाषा की प्रवृत्ति होगी, वह ठीक नहीं; क्योंकि इसमें धर्मिग्राहक प्रमाण का विरोध दिखाई देता है। धर्मि ग्राहक (ज्ञापक सूत्र) की प्रवृत्ति के लिए निर्धारित परिस्थिति अननुकूल पड़ती है। "यंयम्यते" में नुक् करने के बाद दीर्घ की प्राप्ति नहीं होती है। अतः यदि यह कहेंगे कि जहाँ एक की प्रवृत्ति के बाद भी दूसरे की प्रवृत्ति होती हो; वहाँ यह न्याय लगता है; तो ज्ञापक सूत्र ही ऐसा नहीं है; जो नुक् की प्रवृत्ति के बाद

**दीर्घे कृते इत्वाप्राप्त्या 'गुणो यङ्लुकोः' इति सूत्रस्थभाष्योक्ततदुदाहरणासङ्गतेश्चेत्यन्यत्र विस्तरः ॥६७॥**

---

भविष्यति। नाप्राप्तेऽभ्यासविकारे एत्वमारभ्यते, तद्यथाऽसावन्यानभ्यासविकारान् बाधते एवं दीर्घत्वमपि बाधेत इति। अत्र कैयटः "अभ्यासविकारेषु बाधका न बाधन्त इत्येतत्तु यत्र सर्वेषां प्रवृत्तिस्तत्राश्रीयते। (अर्थात् यत्रैकैकप्रवृत्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवायं न्यायः यथा नर्नर्तीत्यादावुरदत्वे रुगादयः क्रियन्ते इतिभावः) यद्यपि कृते दीर्घत्वे (पापच् य इत्यवस्थायामुत्तरखण्डेऽतः सत्वादेत्वस्याभ्यासस्य पा इत्यस्य च लोपस्य प्राप्त्या) एत्वाभ्यासलोपप्रसङ्गः तथाप्येत्वाभ्यासलोपयोः कृतयोः (पेच् य इत्यवस्थायामभ्यासाभावाद्दीर्घस्याप्राप्त्या) दीर्घत्वाप्रसङ्ग इति विरुद्धत्वादबाधकत्वाभावः (अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति न्यायाप्रवृत्तेः) इति। इदं कैयटमतं नागेशाय न रोचते, धर्मिग्राहकमानविरोधात् (धर्मः अभ्यासविकारेषु बाध्यबाधकभावाभावबोधनम् तदस्ति अस्येति धर्मी अभ्यासविकारेषु......इतिन्यायस्तद्ग्राहकं यत् मानम् 'दीर्घोऽकितः' ७.४.८३ इत्यत्राकित इतिग्रहणस्य ज्ञापकत्वरूपं तद् विरुद्धं स्यादिति) अर्थात् यदि कैयटस्य मतमिदं स्वीक्रियेत तर्हि 'अकित' इत्यस्य परिभाषाज्ञापकता भज्येत यतः 'यंयम्यते' इत्यत्र नुकि कृतेऽजन्तत्वाभावाद्दीर्घस्य प्राप्त्यभावात् एकैकप्रवृत्युत्तरं सर्वेषां प्रवृत्तियोग्यता नास्तीति परिभाषेयं तत्र न प्रवर्तेत। 'इत्थमकित' इत्यस्य स्वांशे परिभाषाज्ञापनानन्तरमपि चरितार्थ्याभावेन ज्ञापकत्वं न

---

प्रवृत्त होता हो। यदि यह कहें कि कैयट की उक्ति में 'प्रवृत्ति' शब्द का अर्थ प्रवृत्तियोग्यता है। इसलिए यहाँ कैयट कहना चाहते हैं कि जहाँ एक की प्रवृत्ति के बाद दूसरे की प्रवृत्ति-योग्यता हो, वहीं यह न्याय लगेगा, यंयम्यते में नुक् के बाद अकित् निषेध रहने पर भी वैयधिकरण्यान्वय से दीर्घ की प्रवृत्ति की योग्यता है ही, इसलिए यहाँ किसी प्रकार का धर्मिग्राहक मान में कोई विरोध नहीं है; तो इसी अरुचि को मन में रखकर नागेश दूसरा दोष देते हैं कि मानबधादि को दीर्घ करने पर इत्व की प्राप्ति नहीं है, इस तरह एक के करने पर भी जहाँ दूसरे की प्रवृत्ति की योग्यता हो वहीं यदि यह न्याय लगे तो 'मीमांसते' में इस न्याय की प्रवृत्ति नहीं होनी चाहिए किन्तु भाष्यकार ने "गुणो यङ्लुकोः" ७.४.८२ सूत्र में इस न्याय के उदाहरण के रूप में "मीमांसते" का उल्लेख किया है, अतः पूर्वोक्त भाष्य से विरोध होने के कारण कैयट का पूर्वोक्त मत अमान्य है। यह सब अन्यत्र (उद्योतादि में) विस्तार के साथ कहा गया है। 'अत एकहल्मध्ये— ६.४.१२० सूत्र के उद्योत में कैयट के कथन को 'चिन्त्य' बताते हुए नागेश ने कहा है कि—'यंयम्यते' में नुक् करने पर अजन्तत्व के अभाव के कारण 'दीर्घोऽकितः' की प्राप्ति नहीं है; फिर 'दीर्घोऽकित'; को परिभाषा का ज्ञापक कहना असंगत हो जायगा

स्यादिति । अतः कैयटमतं चिन्त्यम् । न च एकैकप्रवृत्युत्तरं यत्र सर्वेषां प्रवृत्तियोग्यता तत्रैवेयं प्रवर्तते इत्येव कैयटतात्पर्यं स्वीक्रियताम् तथाच 'यंयम्यत' इत्यत्र नुकि कृते वैयधिकरण्येनान्वयस्वीकारेऽभ्यासस्य योऽच् तस्य दीर्घ इत्यर्थे दीर्घप्रवृत्तियोग्यता वर्तत एवेति न धर्मिग्राहकमानविरोधः किञ्च नुकि जातेऽप्यभ्यासस्यादन्तस्य नुग्-विधानेन सम्पूर्णस्याभ्यासस्य 'य' इत्यस्य कित्त्वेऽपि वैयधिकरण्यान्वयस्वीकारेणाभ्या-सस्य योऽच् अकित् तस्य दीर्घ इत्यर्थे दीर्घप्रवृत्तियोग्यताऽस्त्येवेति न धर्मिग्राहकमान-विरोध इति कैयटमतं कथमसङ्गतमिति वाच्यम् मानवधादीनां दीर्घे कृते मा मान् स इत्यवस्थायामभ्यासस्यातोऽभावेन 'सन्यतः' ७.४.७९ इतीत्वाप्राप्त्या 'गुणो यङ् लुकोः' इति सूत्रे भाष्येऽस्याः परिभाषायाः 'मीमांसते' इत्याद्युदाहरणदानस्यासंगत्यापत्तेः (भाष्यं तु ४६८ तमे पृष्ठे समुद्धृतम्) यत्रैकप्रवृत्युत्तरं सर्वेषां प्रवृत्तिस्तत्रैवेयं प्रवर्तत इति कैयटमतेन तु मीमांसते इत्यत्र मानवधेति दीर्घोत्तरमभ्यासस्य अतोऽभावेन सन्यत इति न प्रवर्तितुं प्रभवतीति प्रकृतपरिभाषा मीमांसत इत्यादौ न प्रवर्तेत । तथा च भाष्येऽस्यास्तदुदाहरणदानमसंगतमेवेति **अन्यत्र** विस्तरः उद्योतादौ विचारविस्तरो द्रष्टव्यः तत्रोक्तम् अत एक हल् ६.४.१२० इति सूत्रस्योद्योते—इदं (कैयटकथनं) चिन्त्यम् नुकि कृतेऽजन्तत्वाभावेन दीर्घाप्राप्त्या दीर्घोऽकितः ७.४.८३ इति धर्मिग्राहक-मानविरोधात् मानादीनां दीर्घे कृते इत्त्वाप्राप्त्या 'मीमांसते' इत्युदाहरणपर 'गुणो यङ्लुकोः' 'मानवध' इत्यादिसूत्रस्थभाष्यविरोधाच्च । तस्माज्ज्ञापकसिद्धस्यासार्वत्रि-कत्वेन (ज्ञापकसिद्धं न सर्वत्र परि० (१२६) अनित्यत्वात्तस्य (अभ्यासविकारेषु बाधका न बाधन्त इत्यस्य) अत्र (पापच्यते इत्यत्र) अनाश्रयणमिति भगवतो भाष्यकारस्या-भिप्रायः इति । शिवम् । ६७

---

इसलिए 'यत्रैकप्रवृत्युत्तरं सर्वेषां प्रवृत्तिस्तत्रैवेदम्" कैयट का यह कथन चिन्त्य है। 'मान्' धातु में दीर्घ करने पर ह्रस्व अकार के अभाव के कारण इत्व की अप्राप्ति है; कैयट के मत के अनुसार वहाँ यह परिभाषा नहीं लगनी चाहिए; परन्तु भाष्यकार ने 'मीमांसते' में इस परिभाषा की प्रवृत्ति करायी है। इसलिए भी कैयट का मत भाष्य के प्रतिकूल पड़ने के कारण 'चिन्त्य है।

'पापच्यते' में एत्व और अभ्यासलोप के निवारण के लिए 'अत एक, ६.४.१२० सूत्र में लिङ्ग्रहण करना चाहिए। इस बात का खण्डन करते हुए भाष्यकार ने कहा कि यहाँ "दीर्घोऽकितः" ७.४.८३ से विहित दीर्घ एत्वादि का बाधक होगा। इस भाष्य की उपपत्ति के लिए आवश्यक है कि वहाँ यह परिभाषा न लगे इसलिए कैयट ने 'यत्रैकप्रवृत्युत्तरम्' इस प्रकार की कल्पना की। नागेश का कथन है कि 'ज्ञापक सिद्धं न सर्वत्र' (परि० १२६) के कारण 'पापच्यते' में अभ्यासविकारे—इस परिभाषा की प्रवृत्ति नहीं होगी। अतः परिभाषा की अप्रवृत्ति के लिए पूर्वोक्त कल्पना, जो कि धर्मिग्राहकमानविरुद्ध और भाष्यविरुद्ध है, त्याज्य है। ६७

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपवादोऽसरूपापवादस्य विकल्पेन बाधकत्वात् । अत आह—

**ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥६८॥**

**ताच्छीलिकेषु—नास्ति ६८**

ननु कटकरणशील इत्यर्थे यथा तृन् ३.२.१३५ इत्यनेन तृन् भवति तथा ण्वुल्तृचौ ३.१.१३३ इति ण्वुलपि स्यात्, कर्तृसामान्ये विहितस्य ण्वुल्प्रत्ययस्य ताच्छील्यविशिष्टे कर्तर्यर्थेऽपि प्राप्तेः, न चापवादत्वात्तृन् ण्वुलो बाधक इति वाच्यम् वाऽसरूपोऽस्त्रियाम् ३.१.९४ इति सूत्रेणासरूपापवादस्य विकल्पेन बाधकत्वनिर्णयात् तथाच विकल्पेन ण्वुलपि स्यात् इति चेन्न **ताच्छीलिकेषु वासरूपविधिर्नास्तीति** परिभाषास्वीकारेणादोषात् । आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३.१.१३४ इत्यत आरभ्य भ्राजभास......३.१.१७७ इति सूत्रपर्यन्तं तच्छीलाधिकारः । तत्र वासरूप-विधिर्न प्रवर्तते इति परिभाषार्थः । तेनासरूपेणापि तृन्प्रत्ययेन ण्वुलोनित्यबाधः । अतो न विकल्पेन ण्वुल्प्रत्ययः कटकरणशील इत्यर्थे । 'निन्दहिंसक्लिशखादविनाश-परिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्' ३.२.१४६ इति सूत्रेण ण्यन्तविनाश-परिवादिकण्ड्वादियगन्तासूयभिन्नेभ्य एकाज्भ्यो वुञ् विधानमत्र ज्ञापकम् । अन्यथा

**ताच्छीलिकेषु-नास्ति—६८**

सामान्य कर्ता में विहित ण्वुल् ताच्छील्यविशिष्ट कर्ता में बेखटके हो सकता है । इस तरह तच्छीलाद्यर्थक 'तृन्' (३.२.१३५) के विषय में ण्वुल्तृचौ ३.१.१३३ से ण्वुल् प्रत्यय होने लगेगा । 'तृन्' ३.२.१३५ अपवाद है, इस लिए ण्वुल् का वह बाधक हो जायगा, ऐसा नहीं मानना चाहिए, "वासरूपोऽस्त्रियाम्" ३.१.९४ इस सूत्र के अनुसार असरूप अपवाद (जो अपवाद, समानरूपवाला नहीं है वह) विकल्प से उत्सर्ग का बाधक माना गया है । जैसे 'यत्' प्रत्यय तव्य प्रत्यय का विकल्प से बाधक होता है, इसलिए देयम् और दातव्यम् दोनों बनते हैं "यत्" में 'य' शेष रहता है और तव्य में 'तव्य' । इस तरह इन दोनों प्रत्ययों के रूप (आकृति) समान नहीं है, अतः यह 'यत्' असरूप अपवाद होने के कारण 'तव्य' का विकल्प से बाधक बनता है । इसी तरह ण्वुल् में 'वु' शेष रहता है और तृन् में 'तृ' । ये दोनों प्रत्यय, असमान-रूपवाले हैं । अतः 'तृन्' अपवाद होकर भी विकल्प से ही 'ण्वुल्' का बाधक होगा । इस तरह "कर्तुं शीलः" अर्थ में 'कर्ता कटान्' इस इष्ट प्रयोग की तरह 'कटानां कारक': यह अनिष्ट प्रयोग भी होने लगेगा । इसलिए परिभाषा बनाते हैं—

**"ताच्छीलिकेषु वासरूपविधिर्नास्ति"** ।

ताचछीलार्थक प्रत्ययों के विषय में वासरूपविधि नहीं हुआ करती है । अर्थात् वहाँ अपवादत्वात् नित्य बाध होता है ।

**ण्वुलि सिद्धे 'निन्दहिंसादि' सूत्रे णैकाज्भ्यो वुञ् विधानमत्र ज्ञापकम्, तत्र ण्वुल्वुञोः स्वरे विशेषाभावात्॥ ताच्छीलिकेष्विति विषयसप्तमी। तेन ताच्छीलिकैरताच्छीलिकैश्च वासरूपविधिर्नेति बोध्यम्।**

---

(अस्याः परिभाषाया अभावे ण्वुल्तृचौ ३.१.१३३ इति ण्वुलि तस्याकि निन्दकः (निन्दाशीलः) इति सिद्धे वुञ् विधानं व्यर्थं स्यात्। नच ण्वुलि कृते असूयकः इत्यस्यापि सिद्ध्या सम्पूर्णसूत्रमेव ज्ञापकमस्तु, एकाज्भ्यो निन्दादिभ्य एव विहितस्य वुञो ज्ञापकत्वप्रदर्शनं न्यूनमिति वाच्यम् 'निन्दक' इत्यादौ लित्स्वरञित्स्वरयोः विशेषाभावात् उभयथाप्याद्युदात्तत्वात् असूयतेस्तु ण्वुलि 'लिति' ६.१.१९३ इति प्रत्ययात् पूर्वमुदात्तं, वुञि तु 'ञ्नित्यादिर्नित्यम्' ६.१.१९७ इत्यादिरुदात्त इति विशेषस्य सद्भावात् असूयतिभिन्नानामेव ज्ञापकत्वमिति तथोक्तेः। नचैवम् असूयतिभिन्नेभ्यो वुञ्विधानमत्र ज्ञापकमित्यस्यैव वक्तव्यतया एकाच्भ्यो वुञ्विधानमत्र ज्ञापकमिति कथनं भ्रमजनकं ण्यन्तविनाशण्यन्तपरिवादिधात्वोरेकाच्त्वाभावेन ताभ्यां विहितस्य वुञो ज्ञापकत्वं न सिद्ध्येत् वस्तुतस्तु तयोर्विहितस्यापि वुञो ज्ञापकत्वमस्त्येव 'निन्दक' इत्यत्रेव 'विनाशकः' 'परिवादक' इत्यादावपि णिलोपे कृते लित्ञित्स्वरयोराद्युदात्तस्यैव संभवेन स्वरे विशेषाभावादिति वाच्यम् सत्यमेव तथोक्तेः भ्रान्तिजनकत्वात् असूयतिभिन्नेभ्यो वुञो विधानमत्र ज्ञापकमित्युक्तेः स्पष्टतया तथैव प्रतिपादनौचित्यात्।

परिभाषायां प्रयुक्ते ताच्छीलिकेषु इत्यत्र विषयसप्तमी। तेन ताच्छीलिकप्रत्ययविषये वासरूपविधिर्नेति परिभाषार्थे एकस्यापि ताच्छीलिकत्वेऽस्याः प्रवृत्तिर्जायते। अन्यथा द्वयोरपि ताच्छीलिकत्वे एवास्याः प्रवृत्त्या तृन् इति विहितस्य तृन्प्रत्ययस्य ताच्छीलार्थस्य निन्दहिंस······

---

ण्वुल् प्रत्यय करने से ही "निन्दकः" इत्यादि प्रयोग बन जाता था; "निन्दहिंस" ३.२.१४६—इत्यादि सूत्र से एकाच् धातुओं से वुञ् विधान करना ही इस परिभाषा का ज्ञापक है। निन्दक इत्यादि में ण्वुल् करने पर आद्युदात्त स्वर होता है और वुञ् करने पर भी वही स्वर होता है। इसलिए निन्दक इत्यादि एकाच् धातु वाले प्रयोगों में ण्वुल् और वुञ् में स्वर में कोई भेद नहीं है। 'असूयकः' में भेद है—यहाँ 'ण्वुल्' करने पर 'लिति' ६.१.१९३ से प्रत्यय से पूर्व को उदात्त होता है और 'वुञ्' करने पर 'ञ्नित्यादिर्नित्यम्' ६.१.१९७ से आदि उदात्त होता है। इसीलिए एकाच्धातुओं से विहित वुञ् विधान को ही ज्ञापक बताया गया है। "ताच्छीलिकेषु" में विषय सप्तमी मानी गयी है। इस तरह ताच्छीलार्थक प्रत्ययों के विषय में वासरूपविधि नहीं हो, यह इस परिभाषा का अर्थ है। इससे यह फलितार्थ निकला कि ताच्छीलार्थक और अताच्छीलार्थक प्रत्ययों में परस्पर 'वासरूपविधि' नहीं होती

नन्वेवं कम्रा कमनेत्याद्यसिद्धिर्नमिकम्पीति रेणानुदात्तेतश्च'हलादेरि' ति युचो बाधादिति चेत्—न । 'सूददीपदीक्षश्चे' त्यनेन दीपेर्युज्निषेधेनोक्तार्थस्या—नित्यत्वात् ।।६८।।

---

इत्यनेन बाधेऽपि ण्वुल्तृचाविति विहितस्य कर्तरिविहितस्य तृचो बाधो न स्यात् । इष्यते तु वुञा ताच्छीलिकेऽर्थे तृचोऽपि बाध इति । विषयसप्तमीस्वीकारेण ताच्छीलिकैरताच्छीलिकैश्च वासरूपविधिर्नेतिबोध्यम् । नन्वेवम् (ताच्छीलिकेषु वासरूपविधेरभावे) कम्रा, कमना युवतिः, कम्प्रा कम्पना शाखा इत्यादि न सिद्ध्येत् 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' ३.२,१६७ इति विहितेन रेण 'अनुदात्तेतश्च हलादेः' ३.२.१४९ इति युचो नित्यबाधात् इति चेन्न 'नमिकम्पि'···३.२.१६७ इति रेण युचो बाधादेव तदभावे सिद्धे ''सूददीपदीक्षश्च' ३.२.१५३ इत्यनेन दीपेर्युज्निषेधेन ताच्छीलिकेषु वासरूपविधिर्नास्तीत्यस्याऽनित्यत्वज्ञापनात् । तेनोक्त-न्यायाप्रवृत्या वासरूपविधिना रेणासरूपप्रत्ययेनोत्सर्गस्य युचो विकल्पेन बाधात् कम्रा कमनेत्यादिसिद्धेर्निर्बाधात् । 'निन्दहिंस'···३.२.१४६ इति सूत्रे भाष्ये ''निन्दादिभ्यो वुञ्वचनमन्येभ्यो ण्वुलः प्रतिषेधार्थम् (वा० २) तृजादिप्रतिषेधार्थं के (वा० ३) इति वार्तिकव्याख्यावसरे परिभाषेयमुक्तेति शिवम् ।।६८।।

---

है । यद्यपि ऐसा मानने पर 'कम्रा' और 'कमना' इत्यादि द्विविध प्रयोग नहीं बनने की संभावना-सी दिखाई पड़ती है; क्योंकि ''नमिकम्पि'' ३.२.१६७ इस सूत्र से विहित 'र' प्रत्यय के असरूप होते हुए भी उससे ''अनुदात्तेतश्च हलादेः'' ३.२.१४९ इस सूत्र से विहित युच् का विकल्प से नहीं, किन्तु नित्यबाध हो जायगा; तथापि इस दोष की संभावना तब बिल्कुल नहीं रहती; जब कि इस परिभाषा को अनित्य मान लिया गया । अनित्य मानने से इसकी प्रवृत्ति नहीं हुई । अतः असरूप अपवाद प्रत्यय (र प्रत्यय) के द्वारा विकल्प से युच् का बाध हुआ । अतः 'कम्रा' और 'कमना' युवतिः दोनों प्रयोग सिद्ध हुए । परिभाषा के अनित्यत्व का ज्ञापक 'सूददीप-दीक्षश्च' ३.२.१५३ इस सूत्र के द्वारा दीप् धातु से युच् प्रत्यय का निषेध है;—क्योंकि यदि वासरूपविधि न लगे तब तो 'र' प्रत्यय के द्वारा युच् का नित्य बाध हो ही जाय; फिर निषेध करने की क्या आवश्यकता थी । 'निषेध' किया है इससे सिद्ध है कि परिभाषा अनित्य है ।

''निन्दहिंस—३.२.१४७ सूत्र के भाष्य में 'निन्द' आदि धातुओं से 'वुञ्' का विधान करना अन्य धातुओं से ण्वुल् के प्रतिषेध के लिए है या तृच् आदि के प्रतिषेध के लिए है इन वार्तिकों की व्याख्या के समय इस परिभाषा का निर्देश है । इति शिवम् ६८

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञ्, इच्छति भोक्तुमित्यत्र लिङ्लोटा-वीषत्पानः सोमो भवतेत्य खल् प्राप्नोतीत्यत आह—

**क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥६९॥**

इदं च वासरूपविधेरनित्यत्वात्सिद्धम्। तदनित्यत्वे ज्ञापकं चार्हे कृत्यतृचश्चेति, तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधा मा भूदिति कृत्यतृचोर्ग्रहणं क्रियते इत्यन्यत्र विस्तरः।

---

**क्तल्युट्—विधिर्नास्ति ६९**

ननु ताच्छीलिकेषु वासरूपविध्यभावस्वीकारेऽपि हसितं छात्रस्य हसनम् इत्यादौ घञ्, इच्छति भोक्तुम् इत्यत्र लिङ्लोटौ, ईषत्पानः सोमो भवततेत्यत्र खल् प्राप्नोति 'वासरूपोऽस्त्रियाम्' ३.१.९४ इति सूत्रेणासरूपापवादप्रत्ययेन उत्सर्गस्य विकल्पेन बाधात् इति चेन्न क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति परिभाषा-स्वीकारात्। तेन वासरूपसूत्राऽप्रवृत्त्या अपवादेनोत्सर्गस्य नित्यं बाधेनोक्तदोषाभावात्। वासरूपविधेरनित्यत्वादियं परिभाषा फलति। तस्या नित्यत्वे ज्ञापकम्—'अर्हे कृत्य-तृचश्च' ३.३.१६९ इति सूत्रे कृत्यतृज्ग्रहणम्। तत्र हि समुच्चयार्थकचकारेण लिङ् यदि' ३.३.१६८ इत्यतः समुच्चितलिङा कृत्यतृचोर्बाधा माभूदिति कृत्यतृचोर्ग्रहणं क्रियते। यदि वासरूपविधिर्नित्यः स्यात्तदा विकल्पेन लिङा बाधेऽपि पक्षे कृत्यतृचोः सिद्धेस्तद्ग्रहणं व्यर्थं सत् वासरूपविधेरनित्यत्वं ज्ञापयति।

---

**क्त-ल्युट्-तुमुन् खलर्थेषु...नास्ति—६९**

परिभाषा नं० ६८ के मानने पर भी 'वासरूप—३.१.९४ सूत्र के बल से हसितं छात्रस्य हसनम् इत्यादि में घञ्, भोक्तुमिच्छति यहाँ लिङ् और लोट् और ईषत्पानः सोमो भवता में खल् प्रत्यय प्राप्त होगा, उनके निवारण के लिए परिभाषा मानते हैं।

**"क्तल्युट्-तुमुन्-खलर्थेषु वासरूपविधिर्नास्ति"**

क्त, ल्युट, तुमुन्-खलर्थक प्रत्ययों में वासरूप सूत्र की प्रवृत्ति नहीं होती है। यह वासरूप विधि के अनित्य होने से सिद्ध है। 'वासरूप' विधि के अनित्य होने में 'अर्हे कृत्यतृचश्च" ३.३.१६९ यह ज्ञापक है। वहाँ कृत्य और तृच् का ग्रहण इस उद्देश्य से करते हैं कि 'च' के द्वारा संग्राह्य लिङ् लकार, कृत्य और तृच् प्रत्ययों का बाधक न बन जाय। यदि वासरूप विधि नित्य हो तो असरूप अपवाद प्रत्यय होने के कारण वैकल्पिक ही बाध होगा; इस तरह एक पक्ष में कृत्य और तृच् प्रत्यय सिद्ध हो ही जायेंगे, उन दोनों का वहाँ ग्रहण व्यर्थ हो जायगा। वासरूप विधि" के अनित्य होने से ही इष्ट सिद्धि हो सकती है इस तरह दोनों परिभाषाओं (६८, ६९) का ज्ञापन प्रपञ्चार्थ है।

'वासरूप' सूत्रे भाष्ये स्पष्टा ॥६९॥

ननु श्वः पक्तेत्यत्र वासरूपविधिना लृडपि प्राप्नोति, कृते आदेशे वैरूप्यात्त—आह—

---

सिद्धान्त कौमुद्यामप्युक्तम्=प्रैषातिसर्गप्राप्तिकालेषु कृत्याश्च ३.३.१६३ इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्नेति ज्ञापयति तेन क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धम् इति ।

'वासरूपोऽस्त्रियाम्' ३.१.९४ इति सूत्रे भाष्येऽसौ स्पष्टा—तथाहि स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः (वा०) भाष्यम्=स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषा प्राप्नोति ॥ क्त—हसितं छात्रस्य शोभनम् । घञपि प्राप्नोति ॥ ल्युट्—हसनं छात्रस्य शोभनम् । घञपि प्राप्नोति ॥ तुमुन्—इच्छति भोक्तुम् । लिङ्लोटावपि प्राप्नुतः । खलर्थ—ईषत्पानः सोमो भवता। खलपि प्राप्नोति ॥ एवं तर्हि स्त्रियाः प्रागिति वक्ष्यामि । "स्त्रियाः प्रागिति चेत् क्त्वायां वा वचनम्" (वा०) स्त्रियाः प्रागिति चेत् क्त्वायां वावचनं कर्तव्यम् । आसित्वा भुङ्क्ते । आस्यते भोक्तुम् इत्यपि यथा स्यात् । अत्र कैयटः—"स्त्र्यधिकारस्य परस्तादपि वासरूपविधिर्भवति "अर्हे कृत्यतृचश्चेत्यत्र कृत्यतृज्ग्रहणेन तु तस्यानित्यत्वं ज्ञाप्यते । एतेन वासरूपविधेरनित्यत्वादेव सकलदोषोद्धार इति सूच्यत इति शिवम् ॥ ६९ ॥

## लादेशेषु वासरूपविधिर्नास्ति ७०

---

'वासरूपोऽस्त्रियाम्' ३.१.९४ इस सूत्र के महाभाष्य में परिभाषा का स्पष्ट उल्लेख है । वहाँ "यह कहा गया कि यदि सूत्र में 'अस्त्रियाम्' कहते हैं और 'स्त्रियां क्तिन्' ३.३.९४ आदि सूत्रों से स्त्रीलिंग में विहित प्रत्ययों में ही सूत्र का प्रतिषेध मानते हैं, तो क्त-ल्युट्-तुमुन् और खलर्थप्रत्ययों में वैकल्पिकप्रसक्ति हो जायगी । इस तरह "हसितं छात्रस्य शोभनम्" यहाँ क्त के साथ घञ् भी विकल्प से होगा । 'हसनं छात्रस्य शोभनम्' यहाँ भी ल्युट् के साथ-साथ विकल्प से घञ् होने लगेगा । 'इच्छति भोक्तुम्' में तुमुन् के साथ-साथ विकल्प से लिङ्लोट्, और 'ईषत्पानः सोमो भवता' में विकल्प से खलर्थ प्रत्यय होने लगेंगे । इन दोषों के निवारण के लिए यदि "स्त्रियाः प्राक्" अर्थात् 'स्त्रियां क्तिन्' ३.३.९४ से पहले वासरूपविधि मानें तो 'क्त्वा' प्रत्यय की वैकल्पिकता के लिए "क्त्वायां वा" इस प्रकार का वार्तिक बनाना पड़ेगा । अन्यथा 'आसित्वा भुङ्क्ते' 'आस्यते भोक्तुम्" ये नहीं बनेंगे । इसलिए 'स्त्रियाः प्राक्' यह नहीं कह सकते । इस पर कैयट लिखता है कि 'वासरूप-विधि 'स्त्रियाम्' इस अधिकार से आगे भी होती है परन्तु 'अर्हे कृत्यतृचश्च' यहां पर किये गये 'कृत्यतृच्' ग्रहण के कारण 'वासरूप विधि अनित्य है । इस तरह 'वासरूप' विधि की अनित्यता के कारण सारे दोषों का निवारण हो जायगा । इति शिवम् ६९।

## लादेशेषु वासरूपविधिर्नास्ति ॥७०॥

**आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः । अत्र च 'हशश्वतोर्लङ् च'**

---

श्वः पक्ता इत्यत्र वासरूपविधिना लृडपि स्यात् न च नानुबन्धकृतमसारूप्यम् (प० ८) इति परिभाषयाऽनुबन्धप्रयुक्तासारूप्याभावबोधनेन लुट्लृटोर्नास्ति कश्चन सरूपभेद इति वासरूपविध्यभावाल्लुटा लृटो नित्यबाधसिद्धौ न दोषः इति वाच्यम् तदादेशेषु तिबादिषु वैरूप्याभावेऽपि तिबाद्यादेशडादिकृतवैरूप्यस्य पक्ता पक्ष्यतीत्यादौ स्पष्टतः प्रतीतेर्वासरूपन्यायप्रवृत्तौ बाधाभावेन दोषसंभवात् । नच तदादेशयोः उत्सर्गापवादत्वाभावाद्वासरूपसूत्राप्रवृत्तिः अतएव हशश्वतोर्लङ् च ३.२.११६ इति लिड्विषये लङ्विधानं चकाराल्लिड्विधानञ्च न व्यर्थमिति वाच्यम् लकारेषु वासरूपसूत्राप्रवृत्तये नैषा परिभाषा क्रियते किन्तु तदादेशेषु वासरूपविधेरभावाय परिभाषारभ्यते, लिटः कानज्वा ३.२.१०६ इत्यत्र वाग्रहणमत्र प्रमाणम् यदि लादेशेषु उत्सर्गापवादत्वं न स्यात्तदा कानजादेशेन णलादेशस्य बाधाप्राप्त्या विकल्पबोधकं वाग्रहणं तत्र व्यर्थं स्यात् । अतएव परिभाषायां लादेशेषु इत्युच्यते, न तु लकारेष्विति । इत्थं लुडादेशलृडादेशयोः वैरूप्यदर्शनाद्वासरूपविधिप्रवृत्तौ बाधकाभावात् श्वः पक्ता इत्यादौ लृडपि स्यादत आह-लादेशेषु वासरूपविधिर्नास्ति आदेशकृतवैरूप्यवत्सु लकारेषु स नास्ति (वासरूपविधिर्नास्ति) इति परिभाषार्थः । अन्यथा (अस्याः परिभाषाया अभावे परोक्षे लिट् ३.२.११५ इति विहितेन लिटा लङः समावेश उभयोः णलाद्यादेशकृतम् 'इतश्च' ३.४.१०० तस्थस्थमिपाम्—३.४.१०१ इतीकारलोपतामाद्यादेशकृतं च वैरूप्यमादायासरूपयोः सिद्धे हशश्वतोर्लङ् च ३.८.११६ इति लङ्विधानं व्यर्थं स्यात् । अतो लङ्विधानमस्या ज्ञापकम् ।

---

### लादेशेषु वासरूपविधिर्नास्ति ७०

"श्वः पक्ता" में लुट् लकार होता है, वहाँ लृट् लकार भी 'वासरूपन्याय' से होना चाहिए, यद्यपि अनुबन्धरहित लुट् और लृट् में 'ल' रूपता आजाने से समानरूपता आ जाती है और समानरूपवाले अपवाद प्रत्ययों से उत्सर्ग प्रत्यय का नित्यबाध होता है; तथापि यहाँ लुट् और लृट् में उत्सर्गापवादता नहीं है, दूसरी बात, लुट् और लृट् के स्थान में तिप् और उसको डादि आदेश करने पर विरूपता आ जाती है। अतः असरूपप्रत्ययों में विकल्प से बाध होगा, तो श्वः पक्ता और श्वः पक्ष्यति दोनों रूप बनेगा । इसलिए यह परिभाषा मानते हैं—

**"लादेशेषु वासरूपविधिर्नास्ति"**

आदेश के कारण विरूपता प्राप्त लकारों में 'वासरूप विधि' नहीं होती है। "हशश्वतोर्लङ्' ३.२.११६ सूत्र से लङ् का विधान करना ही इस परिभाषा में

इति लङ्विधानं ज्ञापकम् । अन्यथा 'परोक्षे' इति लिटा लङः समावेशोऽसारूप्यात्सिद्ध इति किं लङ्विधानेन ॥

शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्ति 'लिटः कानज्वे' ति वाग्रहणं च कृतं—तज्ज्ञापयति—'वासरूप'—सूत्रेऽपवाद आदेशत्वा-

---

शत्रादिभिस्तिङां समावेशसिद्धये लटः शतृशानचावप्रथमासमानाधिकरणे ३.२.१२४ इत्यत्र नन्वोर्विभाषा इति सूत्रात् कृता विभाषानुवृत्तिः लिटः कानज्वा ३.२.१०६ इत्यत्र वाग्रहणञ्च परिभाषायां सत्यामेव सार्थकं भवति । "लादेशेषु" इत्यस्यादेशकृतवैरूप्यवत्सु' इत्यर्थकरणे च शतृविधायके विभाषानुवृत्तिः लिटः कान-ज्वेत्यत्रत्यं वाग्रहणं च प्रमाणम् । तज्ज्ञापयति=शतृविधायके विभाषानुवृत्तिकरणं लिटः कानज्वेत्यत्र वाग्रहणञ्च ज्ञापयतीत्यर्थः । ज्ञापनस्वरूपं प्रदर्शयति—वास-रूपसूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यते इति । एतत् कैयटादौ ध्वनितम् । 'तौ सत्' ३.२.१२७ इति सूत्रभाष्यस्य कैयटे ध्वनितमित्यर्थः । तत्र हि भाष्ये प्रोक्तम् "अथ यावेतावुत्तरौ शत्रानौ किमेतौ लादेशौ, आहोस्विदलादेशौ । (अर्थात् 'इङ्धार्योः शत्रकृच्छ्रिणि' ३.२.१३० 'पूङ्यजोः शानन्' ३.२.१२८ ताच्छील्यवयो-वचनशक्तिषु चानश् ३.१.१२९ इति शत्रानौ प्रत्ययौ किम् लटोनुवृत्या लकारादेशौ अथवा लटोऽनुवृत्यभावेन लकारस्थानेऽजायमानौ स्वतन्त्रौ प्रत्ययौ इति प्रश्नाशयः) कश्चात्र विशेषः । "उत्तरयोर्लादेशे वा वचनम्" (वा०) उत्तरयोर्लादेशे वा वचनं कर्तव्यम् । 'पवमानः' 'यजमानः' । 'पवते' 'यजते' इत्यपि यथा स्यात् । इति । अत्र

---

ज्ञापक है । यदि यह परिभाषा न होती; तो 'परोक्षेलिट् ३.२.११५ से विहित 'लिट्' के साथ स्वतः 'लङ्' का समावेश हो जाता; अलग 'लङ्' विधान करने से क्या लाभ ? क्योंकि लिट् और लङ् दोनों लकारों में उनके विलक्षण णलादि आदेशों के कारण वैरूप्य है ही । अतः लङ् विधान करने वाले आचार्यपाणिनि की यह इच्छा प्रगट होती है कि वे "लादेशों में वासरूपविधि" नही मानते थे । यदि "नानुबन्धकृत-मसारूप्यम्" "अनुबन्ध मूलक असमानरूपता नहीं मानी जाती है" इस न्याय के बल से लुट् और लृट् को समानरूपवाला प्रत्यय मानें, तब तो लृट् का नित्यबाध होगा । लादेशों में तो उत्सर्गापवादत्व है ही नहीं, इसीलिए वहाँ 'वासरूप विधि' नहीं होगी, ऐसा कहें तो ठीक, लकार में 'वासरूपविधि' के अभाव के लिए यह परिभाषा नहीं मानते हैं; किन्तु लादेशों में "वासरूपविधि के अभाव" के लिए परिभाषा स्वीकार करते हैं शतृशानजादि प्रत्ययों के साथ तिङ् प्रत्ययों के समावेश के लिए "लटः शतृ-शानचावप्रथमासमानाधिकरणे" ३.२.१२४ इस सूत्र में विभाषाग्रहण की अनुवृत्ति और "लिटः कानज्वा" ३.२.१०६ सूत्र में 'वा' ग्रहण जो किया है, वह ज्ञापित करता है कि 'वासरूप' सूत्र में अपवाद का तात्पर्य आदेशत्वानाक्रान्त प्रत्यय ही लिया

**नाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम्। तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव नतु पक्षे तिङ इति बोध्यम् ॥७०॥**

**ननु 'ङमो ह्रस्वाद्' इत्यादौ ङमः परस्याचोऽचि परतो ङम इति वेति सन्देहः स्यादत आह—**

---

भाष्ये प्रोक्तमुत्तरयोरिति प्रतीकमुपादाय "लादेशेषु वासरूपविधिर्नास्तीति उक्तत्वात् (पवमान यजमान इत्यत्र लटो नित्यबाधवारणाय वावचनं कर्तव्यम्) इति भाव इति कैयटोनोक्तम्। यदि वासरूप इत्यत्रत्यासरूपपदबोध्योऽपवाद आदेशत्वानाकान्तप्रत्ययरूपो न गृह्येत, तर्हि लादेशेषु वासरूपविधिर्नास्तीतित्युक्तपरिभाषाया लक्षणावृत्या आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थे कृतेऽपि प्रकृते तदप्रवृत्या "नास्तीत्युक्त्वात्" इति कैयटोक्तिरसङ्गता स्यात्। अतः वासरूपसूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्ययरूप एव गृह्यते। इति तया कैयटोक्त्या ध्वनितमिति मन्तव्यम्। ध्वनिते च तस्मिन् तत एव वासरूपविधेः प्रवृत्यभावो नतु परिभाषाबलादिति तदाशयस्य युक्तत्वं सम्पन्नम् इति

एतस्य ज्ञापस्य फलम् सदादिभ्यो धातुभ्यो भूतसामान्ये 'भाषायां सदवसश्रुवः' ३.२,१०८ इति क्वसुरेव जायते न तु पक्षे तिङोपीति। एतेन "आदेशकृतवैरूप्यवत्सु लकारेषु वासरूपविध्यभावेऽपि तदादेशेषु त्वसारूप्याद्वासरूपविधिः स्यादेव। तथासति निषेदिवान् इत्यत्र भाषायां सदवसश्रुवः ३.२.१०८ इति सूत्रेण भूतसामान्ये सदादिभ्यो विधीयमानो लिटः क्वसुस्तेन च तिङ्समावेशे ससादेत्यपि स्यादित्यपास्तमिति। निषसादेति प्रयोगस्तु वेत्यनुवृत्या सिद्ध्यतीति भावः। अतएव **भाषावृत्तौ** भाषायां सदवसश्रुवः ३.२.१०८ इत्यस्य सदादेः भाषायां लिटः क्वसुर्वा स्यादित्यर्थः कृतः उक्तं च पक्षे लुङ्लङ्लिटो विज्ञेया इति। शिवम् ॥७०॥

## उभयनिर्देशे......बलीयान् ७१

परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति परिभाषायाः साङ्गोपाङ्ग-

---

जाता है अर्थात् वही असरूप अपवाद, उत्सर्ग का विकल्प से बाधक होगा जो प्रत्यय होगा और आदेश बनकर न आया होगा यह बात 'तौ सत्' ३.२.१२७ के **प्रदीप** से ध्वनित होती है। इस ज्ञापन का फल यह हुआ कि सद् आदि धातुओं से सामान्यभूतकाल में 'क्वसु' प्रत्यय ही हुआ, पक्ष में 'तिङ्' नहीं हुआ। 'क्वसु' आदेश होने से ही प्रत्यय था। शतृ शानच् भी लट् के स्थान में आदेश होने से ही प्रत्यय हैं। अतः विभाषा की अनुवृत्ति नहीं करने पर "वासरूपविधि" की प्रवृत्ति नहीं होने से अपवादत्वात् उत्सर्ग का नित्य बाध हो जाता। विभाषा की अनुवृत्ति का ही नतीजा यह हुआ कि वहाँ शतृ-शानच् के विकल्प होने पर तिङ् भी हुआ। इति शिवम् ७०

## उभयनिर्देशे पञ्चमी—७१

"ङमो ह्रस्वादचि ङमुण्नित्यम्" ८.२.३२ इत्यादि सूत्रों में "ङमः" में

## उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥७१॥

**अचीति सप्तमीनिर्देशस्य मय उञ इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशोऽनवकाश इति तस्मादित्युत्तरस्येत्यस्यैव प्रवृत्तिः ।**

---

व्याख्यानानन्तरं तत्रत्येन बलीय इति साधर्म्येण स्मृतामुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति परिभाषां व्याख्यातुमुपक्रमते 'ननु' इत्यादिना । 'ङमो ह्रस्वादचि ङमुण्नित्यम्' ८.३.३२ इत्यादौ ङम इति पञ्चमी । तेन 'तस्मादित्युत्तरस्य' १.१.६७ इत्यस्य प्रवृत्या अव्यवहितपरस्योपस्थित्या अचीत्यस्य षष्ठीप्रकल्पनेन ह्रस्वात् परो यो ङम् तदन्तं यत् पदं तस्मात् परस्याचो ङमुट् इति सूत्रार्थः सिद्ध्यति । अचीति च सप्तमी । तेन 'तस्मिन्निति निर्दिष्टे पूर्वस्य' १.१.६६ इत्यस्य प्रवृत्याव्यवहितपूर्वस्योपस्थित्या ह्रस्वात्परस्थितङमन्तपदस्य ङमुट् इति सूत्रार्थः पर्यवस्यति । अनयोः कतरोऽर्थः कर्तव्य इति सन्देहे आह—**उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् इति ।** अचीति सप्तमीनिर्देशः 'मय उञो वो वा' ८.३.३३ इत्युत्तरसूत्रे चरितार्थः । अत्र मयः परस्य उञो विकल्पेन वादेशोऽचि परे विधीयते । अतः किम्वुक्तमिति सिद्धम् । 'ङम' इति पञ्चमीनिर्देशस्त्वनवकाशः । अतस्तस्मादित्युत्तरस्य १.१.६७ इत्यस्यैव प्रवृत्तिः । तेन ह्रस्वात्परो यो ङम् तदन्तं यत् पदं तस्मात्परस्याचो ङमुडित्यर्थे प्रत्यङ्-

---

पञ्चमीनिर्देश है । इसलिए 'तस्मादित्युत्तरस्य' १.१.६७ से अव्यवहित पर की उपस्थिति होती है । इस तरह ङम् से पर में विद्यमान अव्यवहित अच् को ङमुट् प्राप्त होता है, साथ-साथ 'अचि' में सप्तमी निर्देश है, अतः 'तस्मिन्निति निर्दिष्टे पूर्वस्य १.१.६६ की प्रवृत्ति होने के कारण अव्यवहित पूर्व की उपस्थिति होने से 'अच् से अव्यवहित पूर्व में विद्यमान ङम् को ङमुट् की प्राप्ति होती है । दोनों में कौन-सा अर्थ मानना चाहिए यह या वह, इस सन्देह की निवृत्ति के लिए परिभाषा बनाते हैं—"**उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्**" । पूर्व और पर दोनों निर्देश में पञ्चमीनिर्देश (तस्मादित्यु०) अधिक बलवान् माना जाता है । "ङमो ह्रस्वात्" ८.२.३२ सूत्र में निर्दिष्ट "अचि" में स्थित सप्तमी निर्देश "मय उञ" ८.२.३३ इस उत्तर सूत्र में चरितार्थ है, किन्तु "ङमः" का पञ्चमी निर्देश उत्तरार्थ नहीं होने से 'अनवकाश है । अतः अनवकाशत्वात् पञ्चमीनिर्देशमूलक "तस्मादित्युत्तरस्य" की ही प्रवृत्ति हुई । (इसलिए ह्रस्व से पर जो ङम्, तदन्त जो पद उससे अव्यवहित परवर्त्ती अच् को ङमुट् का आगम हो, यह अर्थ हुआ । इसलिए कुर्वन्+आस्ते इस स्थिति में नुडागम करने पर भी कुर्वन् का नकार पदान्त बना रहा । इसलिए उसको "पदान्तस्य" ८.४.३७ से निषेध होने के कारण 'णत्व' नहीं हुआ । यदि 'न्' को नुट् करते तो पदान्त में नुट् का नकार आता, कुर्वन् का नकार नहीं और उसे णत्व हो जाता ।

यत्र तु 'ङःसि धुडि'त्यादावुभयोरप्यचारितार्थ्यं तत्र 'तस्मिन्नि'ति सूत्रोपेक्षया 'तस्मादित्युत्तरस्ये' त्यस्य परत्वात्तेनैव व्यवस्था। एव-मुभयोश्चारितार्थ्येऽपि—यथामि सर्वनाम्न इत्यादौ। तत्रामीति सप्तमी 'त्रेस्त्रय' इत्यत्र चरितार्था। आदिति

---

ङात्मेति सिद्धम्। ङमन्तस्य पदस्य ङमुड्विधाने तु आद्यन्तौ टकितौ १.१.४६ इति ङमन्तपूर्वावयवत्वेन जाते दोषः स्यात्। यत्र तु 'ङः सि धुट्' ८.३.२९ इत्यादावुभयोः सप्तमीपञ्चमीनिर्देशयोरचारितार्थ्यं तत्र तस्मिन् १.१.६६ इतिनिर्देशापेक्षया तस्मादित्यु,त्तररस्य १.१.६७ इत्यस्य परत्वात् 'विप्रतिषेधे परं कार्यम्' १.४.२ इत्यनेन तस्मादित्युत्तरस्येत्यस्य बलवत्त्वबोधनात्तेनैव व्यवस्था। तेन सप्तम्याः षष्ठीप्रकल्पनेन डकाराव्यवहितपरस्य सस्य धुट् इत्यर्थे कृते सकलेष्टसिद्धिः। एवमेव यत्रोभौ सप्तमीपञ्चमीनिर्देशौ चरितार्थौ तत्रापि पञ्चमीनिर्देशस्य विप्रतिषेधसूत्रेण बलवत्तरबोधनात्तेनैव व्यवस्था भवति। अतएव 'आमि सर्वनाम्नः सुट्' ७.१.५२ इत्यत्र आमीति सप्तमीनिर्देशापेक्षया आदिति पञ्चमीनिर्देशस्य प्राबल्यं स्वीकृत्य अवर्णान्तात् परस्य सर्वनाम्नो विहितस्यामः सुडागम इत्यर्थः क्रियते। तत्र हेतुः आमीति सप्तमीनिर्देशस्य चरितार्थ्यं 'त्रेस्त्रयः ७.१.५३ इत्यत्र वर्तते आमि परे त्रेस्त्रयादेश इत्यार्थात् 'आत्' इति पञ्चमीनिर्देशस्तु 'आज्जसेरसुक्' ७.१.५० इत्यत्र चरितार्थः अवर्णात्परस्य जसेरसुक् इति तदर्थात्; उभयोश्चरितार्थयोरनवकाशत्वरूपबलरहितयोः कस्य प्राबल्यमिति जिज्ञासायां विप्रतिषेधे परं कार्यम् १.४.२ इति सूत्रेण तस्मिन्निति सूत्रापेक्षया

---

"ङःसि धुट्" ८.३.२९ इत्यादि में 'ङः का पञ्चमीनिर्देश और 'सि' का सप्तमीनिर्देश दोनों उत्तरार्थ नहीं है, उनका कहीं अन्यत्र प्रयोजन नहीं है, इस तरह दोनों जहाँ अचरितार्थ हैं; वहाँ भी पञ्चमीनिर्देश को ही बलवान् मानकर "तस्मादित्युत्तरस्य" १.१.६७ सूत्र से ही व्यवस्था माननी चाहिए; क्योंकि "तस्मिन्निति" १.१.६६ और तस्मादित्यु०--१.१.६७ इन दोनों सूत्रों में परसूत्र "तस्मादित्युत्तरस्य" है। "विप्रतिषेधे परं कार्यम्" १.४.२ से परकार्य होता है यह प्रसिद्ध ही है। इस लिए 'सि' में षष्ठी की कल्पना करके "ङःसि धुट्" का अर्थ हुआ—'डकार से पर सकार को धुट् हो विकल्पसे'।

जहाँ दोनों निर्देश चरितार्थ हों जैसे, "आमि सर्वनाम्नः सुट्" ७.१.५२ में, वहाँ भी परत्वात् "तस्मादित्युत्तरस्य" को बलवान् मानकर 'आमि' में षष्ठी के अर्थ में सप्तमी मानकर अवर्ण से पर और सर्वनाम से विहित जो आम् उसको सुट् हो, ऐसा ही अर्थ मानना चाहिए; क्योंकि वहाँ "आमि" में सप्तमी निर्देश "त्रेस्त्रयः" ७.१.५३ में अनुवृत्ति के लिए चरितार्थ है, और 'आत्' यह पञ्चमी निर्देश, जिस 'आज्जसेरसुक्' ७.१.५० सूत्र से यहाँ अनुवृत्त हुआ है, वहीं चरितार्थ हो चुका है। दोनों के चरितार्थ होने के कारण उनमें 'तुल्यबलत्व' है ही। इसलिए "विप्रतिषेधे

**पञ्चमी आज्जसेरसुगि' त्यत्र चरितार्थेति स्पष्टं 'तस्मिन्नि'ति सूत्रे भाष्ये कैयटे च ॥७१॥**

---

तस्मादिति सूत्रस्य प्राबल्यबोधनमेव। इदं 'तस्मिन्निति निर्दिष्टे पूर्वस्य' १-१-६६ इति सूत्रे भाष्ये कैयटे च स्पष्टम्।

तथाहि भाष्यम् यथा—"यत्रोभयं निर्दिश्यते किं तत्र पूर्वस्य कार्यं भवति। अहोस्वित् परस्येति ?" उभयनिर्देशे विप्रतिषेधात् पञ्चमीनिर्देशः"(वा०)उभयनिर्देशे विप्रतिषेधात् पञ्चमीनिर्देशो भविष्यति। किं प्रयोजनम् ? 'प्रयोजनमतो लसार्वधातुकानुदात्तत्वे' १……। बहोरिष्ठादीनामादिलोपे २…गोतो णित् ३…रुदादिभ्यः सार्वधातुके ४…आनेमुगीदासः ५…। आमि सर्वनाम्नः सुट् ६…। घेर्ङित्याण्नद्याः ७…याडापः ८…ङमो ह्रस्वादचि ङमुट् नित्यम् ९…ङम उत्तरस्याचः, अचि परतो ङम इति संदेहः॥ ङम उत्तरस्याच इति। (ततः पुनरुक्तं भाष्ये) "विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः' । विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तोयं विप्रतिषेधः सर्वत्रैवात्र कृतसामर्थ्या सप्तमी, अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति।

---

परं कार्यम्" १.४.२ की प्रवृत्ति में कोई बाधा नहीं होती है। यह सब 'तस्मिन्निति' १.१.६६ सूत्र के भाष्य और कैयट में स्पष्ट है।

तस्मिन्निति— १.१.६६ सूत्र के भाष्य में यह प्रश्न उठाया गया कि जहाँ सप्तमी और पञ्चमी दोनों निर्दिष्ट हैं; वहाँ पूर्व को कार्य होगा या परको ?। उत्तर दिया गया कि दोनों निर्देशवाले स्थलों में विप्रतिषेधात् अर्थात् 'विप्रतिषेधे परं कार्यम्' १.४.२ इस सूत्र से पञ्चमीनिर्देश को बलवान् माना जायगा। इसके बाद—"प्रयोजनमतो लसार्वधातुकानुदात्तत्वे" इत्यादि नौ वार्तिकों के द्वारा प्रयोजन बताकर भाष्यकार ने कहा कि पूर्वोक्त सूत्रों में (जहाँ कि प्रयोजन बताये गये हैं, उन ङमो ह्रस्वादचि—इत्यादि में) विभक्तिविशेषनिर्देश अर्थात् पञ्चमीनिर्देश अचरितार्थ है, इसलिए चरितार्थसप्तमी निर्देश के साथ उसका विप्रतिषेध अयुक्त है। (किन्तु सामर्थ्यात् पञ्चमीनिर्देश की बलवत्ता बताना ही युक्त है)।

इस भाष्य का विश्लेषण करते हुए **कैयट** ने कहा—कि तथाकथित सूत्रों में सप्तमी निर्देश कहीं पूर्वसूत्रों और कहीं उत्तर सूत्रों में अपकर्ष और अनुवृत्ति के लिए चरितार्थ होने से सावकाश है किन्तु बेचारा पञ्चमी-निर्देश निरवकाश है इसलिए 'सामर्थ्यात्' पर को कार्य का विधान करेगा। इससे सिद्ध है कि भाष्यकार जहाँ पञ्चमी निरवकाश है; वहाँ 'तस्मादित्यु०' से व्यवस्था करना चाहते हैं। 'ङःसि धुट्' में तो दोनों निर्देश अनवकाश है इसलिए कैयट ने "पूर्वोपात्तेषु सूत्रेषु" यह कहकर अपने कथन को सदोष होने से बचाया। इससे यह भी सूचित हो गया कि जहाँ दोनों

अत्र कैयटः विभक्तीति—पूर्वोपात्तेषु सूत्रेषु सप्तमीनिर्देशस्य क्वचित्पूर्वार्थत्वात् क्वचिदुत्तरार्थत्वात् सावकाशत्वात् । पञ्चमी तु निरवकाशेति परस्य कार्यित्वं बोधयिष्यति ।। एतेन यत्र निरवकाशा पञ्चमी तत्र तस्मादित्युत्तरस्येत्यनेन व्यवस्थेति सूचितम् । 'ङःसि धुट्' इत्यत्रोभयोरप्यनकाशत्वे तु परत्वेन व्यवस्थेति सूचनाय कैयटेन पूर्वोपात्तेषु सूत्रेषु इत्युक्तम् । एतेन उभयनिर्देशयोरनवकाशत्वे परत्वमूलकव्यवस्था भाष्यकैयटसंमतेति ध्वन्यते । एवमुभयोश्चारितार्थ्ये आमि सर्वनाम्न इत्यत्रापि परत्वाद् व्यवस्था । आदिति पञ्चम्याः पूर्वत्र आज्जसेरित्यत्र, आमीतिसप्तम्याः परत्र 'त्रेस्त्रयः' ७.१.५३ इत्यत्र चारितार्थ्यादित्यपि ध्वनितमेव भाष्येऽचरितार्थपञ्चमीविषयकसूत्राणामेवोल्लेखात्तत्रैव चाविप्रतिषेधोक्तेरिति शिवम् ।। ७१ ।।

इति डा० **हर्षनाथमिश्र**कृतायां दुर्गाख्यव्याख्यायां बाधबीजकथनं नाम द्वितीयं प्रकरणं समाप्तिमगात् ।। शिवम् ।।

---

निर्देश निरवकाश हैं; वहाँ भी कैयट परत्वमूलक व्यवस्था के पक्ष में है । इसी तरह दोनों निर्देश के चरितार्थ वाले स्थलों में ('आमि सर्वनाम्नः' इत्यादि सूत्रों में) भी 'परत्वात्' व्यवस्था होगी । 'आमि सर्वनाम्नः' सूत्र में अनुवृत्ति से लब्ध 'आत्' यह पञ्चमी 'आज्जसेरसुक्' में चरितार्थ हो चुकी है; 'आमि' की सप्तमी 'त्रेस्त्रयः' ७.१.५३ में चरितार्थ है ।

भाष्य में उन्हीं सूत्रों का उल्लेख है; जहाँ कि पञ्चमीनिर्देश अचरितार्थ है और वहीं विप्रतिषेध को अयुक्त बताया गया है । इसलिए और जगह विप्रतिषेध मानने में भाष्य बाधक नहीं है । इति शिवम् ७१

इति डा० **हर्षनाथ मिश्र** कृत हिन्दीभाष्य का द्वितीय प्रकरण—बाधबीजकथन-समाप्त हुआ ।।

---

# अथ शेषार्थकथन-प्रकरणम्

नन्व'तः कृकमी'ति सत्वमयस्कुम्भीत्यत्र न स्यात् कुम्भशब्दस्यैवोपादानादत आह—

**प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥७२॥**

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम् । अपिना केवलस्यापीत्यर्थः ॥

---

# अथ शेषार्थकथनप्रकरणम्

**प्रतिपदिक······ग्रहणम् ॥७२॥**

ननु कुम्भशब्दात् जातेरस्त्रीविषयादयोपधात् ४.१.६३ इति ङीषि यस्येतिलोपे कुम्भीति तस्य चायसः कुम्भीति विग्रहे षष्ठीसमासे सकारस्य रुत्वे विसर्गे अयः+कुम्भीत्यत्र "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' ८.३.४६ इति सत्वं न स्यात्, सूत्रे कुम्भशब्दस्यैवोपादानेन अयस्कुम्भ इत्यादौ सूत्रस्य प्रवृत्या चारितार्थ्येन कुम्भीरूपोत्तरपदे परे सूत्राप्राप्तेरिति चेत् न' **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषास्वीकारात्** ।

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे (प्रातिपदिकबोधकपदे उच्चारिते सति प्रत्यासत्या तेनैव पदेन लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणं (बोधः) भवति । अपि शब्दप्रयोगात् केवलस्य लिङ्गबोधकप्रत्ययरहितस्य ग्रहणं

---

**शेषार्थकथनप्रकरणम्**

"अतः कृकमिकुम्भ" ८.३.४६ सूत्र से सत्व होकर अयस्कुम्भी प्रयोग बनता है, पर वह नहीं बनेगा; क्योंकि सूत्र में "कुम्भ" शब्द का उपादान है "कुम्भी" का नहीं । इसलिए परिभाषा बनाते और कहते हैं ।

**प्रातिपादिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्—७२**

जहाँ समान्य रूप से या विशेष रूप से प्रातिपदिकबोधकशब्द का ग्रहण हो, वहाँ उस शब्द से केवल उसी शब्द का ग्रहण नहीं होता; किन्तु लिङ्ग बोधकप्रत्यय विशिष्ट उस शब्द का भी ग्रहण होता है । परिभाषा में 'अपि' शब्द का अर्थ है 'भी' । इसलिए लिङ्ग बोधक प्रत्यय रहित का भी ग्रहण होगा । अतः अयस्कुम्भः' और अयस्कुम्भी दोनों में सत्व होगा । यदि 'अपि' न कहते तो लिङ्गबोधक प्रत्यय विशिष्ट का ही ग्रहण होता और ऐसी स्थिति में 'अयस्कुम्भः' में 'सत्व' नहीं होता । सामान्यरूपेण प्रातिपादिकग्रहण में लिङ्गविशिष्ट के ग्रहण का उदाहरण "ङ्याप्प्रातिपदिकात्" ४.१.१ है । इसलिए 'युवतिः' में भी स्वादिप्रत्यय हुआ । विशेषरूपेण प्रातिपदिक ग्रहण में लिङ्ग विशिष्ट के ग्रहण का उदाहरण "अतः कृकमिकंसकुम्भ" ८.३.४६ सूत्र है । 'अयस्कुम्भी' में सत्व होना ही उसका फल है ।

**अस्याञ्च ज्ञापकं समानाधिकरणाधिकारस्थे 'कुमारः श्रमणादिभिः' इति**

---

तु सुतरां भवतीति परिभाषार्थः। तत्र सामान्यरूपेण प्रातिपदिकग्रहणं ङ्याप्प्रातिपदिकात् ४.१.१ इत्यत्र वर्तते। अत्र प्रातिपदिकग्रहणेन ऊङ्रूपस्त्रीप्रत्ययान्तस्यापि ग्रहणात्स्वादयो जायन्ते। अन्यथा प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्सूत्राप्रवृत्या स्वादयो न स्युः। कुमारीमाचष्टे कुमारयति इत्यत्र "प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च" ३.१.२५ (ग) इत्यनेन णिच् इष्ठवद्भावेन टिलोपादिरनयैव सिद्धयति वार्तिके सामान्यरूपेण प्रातिपदिकग्रहणसत्वात्। विशेषरूपेण प्रातिपदिकग्रहणस्योदाहरणं वर्तते 'अतः कृकमिकंसकुम्भ—८.३.४६ इति सूत्रम्। तत्र कुम्भकंसेति विशेषरूपेण प्रातिपदिकस्योपादानात् अस्याः प्रवृत्तौ 'अयस्कुम्भी' 'अयस्कसी' त्यादिप्रयोगे सत्वं सिद्धयति। अत इञ्' ४.१.९५ इत्यत्रात्पदस्यादन्तप्रातिपदिकबोधकत्वेऽपि न लिङ्गविशिष्टस्य रमागौरीत्यादेर्बोधकत्वम् सामान्यरूपेण विशेषरूपेण वा तत्र प्रातिपदिकबोधकपदग्रहणाभावात् अर्थात् प्रातिपदिकत्वतद्व्याप्यानुपूर्वीप्रकारेण प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं भवतीति परिभाषातात्पर्यम्। 'अत इञ्' ४.१.९५ इत्यत्रात्पदमदन्तत्वप्रकारेण बोधकम्। अदन्तत्वञ्च न प्रातिपदिकत्वरूपं तद्व्याप्यं वेत्यदोषः। ननु यत्र यत्र कुम्भत्वं तत्र तत्र प्रातिपदिकत्वमिति वर्तते कुम्भत्वं प्रातिपदिकत्वव्याप्यधर्मः तदनुपूर्वीप्रकारेण बोधकपदोपादाने परिभाषाप्रवृत्या अयस्कुम्भीत्यादि तु सिद्धयति किन्तु कुमारः श्रमणादिभिः २.१.७० इत्यत्र परिभाषेयं न प्रवर्तिष्यते कुमारत्वस्य प्रातिपदिकत्वव्याप्यधर्माभावात्। यतो हि 'कुमार क्रीडायाम्' इत्यत्र चुरादिगणपठितधातावपि कुमारत्वस्य सत्वेन यत्र यत्र प्रातिपदिकत्वं तत्र तत्र कुमारत्वम् यत्र यत्र प्रातिपदिकत्वाभावस्तत्र तत्र कुमारत्वाभाव इति व्याप्तेरभावः स्पष्ट एव। इत्थं परिभाषां ज्ञापयित्वाऽपि तत्र कुमारीशब्दग्रहणासंभवात् तस्य स्वांशे चारितार्थ्याभाव इति चेन्न यत्र परिभाषाप्रवृत्तिरिष्यते तत्रोपात्तपदेन तत्र योऽर्थोऽवगम्यते तस्मिन् अर्थे यदि प्रातिपदिकत्वव्याप्यो धर्मः प्रकारतयाऽवभासते तदा परिभाषेयं प्रवर्तत इति स्वीकारात्।

एवञ्च 'कुमारः श्रवणादिभिः' २.१.७० इत्यत्र कुमार इत्यत्र परिभाषाप्रवृत्तिरिष्यते तत्रोपात्तपदं कुमार इति तेन तत्र कुमारत्वपुंस्त्वादिविशिष्टकुमारार्थोऽवगम्यते, तस्मिन्नर्थे प्रादिपदिकत्वव्याप्यकुमारत्वप्रकारकधर्मो भासते तादृशधर्मप्रकारकापूर्वीबोधककुमारग्रहणेऽस्याः प्रवृत्तिः सुलभेति।

---

समानाधिकरणाधिकार में पठित "कुमारः श्रमणादिभिः" २.१.७० इस सूत्र में स्त्रीलिङ्ग 'श्रमणा' शब्द का पाठ इस परिभाषा का ज्ञापक है। तात्पर्य यह है कि समानाधिकरणाधिकार में पठित होने के कारण सूत्र का अर्थ करना पड़ेगा कि कुमार शब्द को श्रमणा आदि शब्दों के साथ समानाधिकरण रहने पर समास

**सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः । स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तदेतज्ज्ञापकम् ॥**

---

समानाधिकरणाधिकारस्थे कुमारः श्रमणादिः २.१.७० इति सूत्रे स्त्रीलिङ्ग-श्रमणादिशब्दपाठोऽस्या ज्ञापकः । इह गणे श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, तापसी, दासी, बन्धकी, अध्यापक; पण्डित; पटु; मृदु; कुशल; चपल निपुणशब्दाः पठ्यन्ते । अत्र श्रमणादिबन्धक्यन्तस्त्रीलिङ्गशब्दैः सह कुमारशब्दस्य समानाधि-करण्याभावात्समासाप्राप्त्या तेषां तत्र पाठो व्यर्थः सन् परिभाषां ज्ञापयति । ज्ञापि-तायान्तु कुमारशब्देन कुमारीशब्दस्यापि ग्रहणसम्भवात् कुमारी चासौ श्रमणा कुमारश्रमणेत्यादौ सामानाधिकरण्यात्समासविधानाय गणे तेषां पाठश्चरितार्थः । तदाह-कुमारीशब्दस्यैव सामानाधिकरण्यम् न तु कुमारशब्दस्येति तदेतज्ज्ञापकम् इति । अतएव 'युवा खलतिपलितवलिनजरतीभिः' २.१.६७ इत्यत्र जरतीग्रहणं चरितार्थम् । अन्यथा जरतीति स्त्रीलिङ्गेन युवेति पुल्लिङ्गस्य समानाधिकरण्याभावात्समासा-प्राप्त्या जरतीशब्दपाठो व्यर्थः स्यात् । परिभाषासत्वे त्वनया युवेत्यनेन युवतीत्य-स्यापि ग्रहणाद् युवतिः जरती युवजरतीत्यादौ समासविधानाय सूत्रे तस्य पाठः सफलः । न च युवतिः जरतीत्यत्रानन्वितार्थत्वप्रतीत्येदृशः प्रयोगो न युज्यत इति वाच्यम् युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपात् सामानाधिकरण्यस्यान्वितार्थस्य च सुसंगतेः । जरत्यां युवतीधर्मारोपे तु युवतीशब्दस्य विशेषणत्वे 'विशेषणं विशेष्येण बहुलम्'

---

होता है, और ऐसा समास समानाधिकरण तत्पुरुष होने के कारण कर्मधारय कहलाता है । यह अर्थ अटपटा सा दिखता है; क्योंकि स्त्रीप्रत्यय विशिष्ट श्रमणा शब्द के साथ कुमारी शब्द का ही सामानाधिकरण्य हो सकता है; कुमारशब्द के साथ नहीं । अतः इस अटपटापन को हटाने के लिए श्रमणा प्रव्रजिता कुलटा आदि स्त्रीलिङ्ग शब्दों का पाठ यह ज्ञापन करेगा कि प्रतिपदिक के ग्रहण में लिङ्ग-विशिष्ट का भी ग्रहण होता है । परिभाषा के ज्ञापित होने पर कुमार शब्द से कुमारी का भी ग्रहण हो सकता है । अतः यहाँ 'कुमारी चासौ श्रमणा' "कुमारश्रमणा" में समानाधिकरणता का उपपादन करने के लिए सूत्रस्थकुमार शब्द से 'कुमारी' शब्द का ग्रहण आसान हो गया । यद्यपि "कुमार क्रीडायाम्" (चुरादिगण) धातु भी है, इस तरह कुमारशब्द विशेष रूप से केवल प्रातिपदिकबोधक पद नहीं है; तथापि यहाँ परिभाषा की प्रवृत्ति हो जायगी; क्योंकि यहाँ समासप्रकरण में सुबन्त-कुमार शब्द ही लिया जायगा, और इस तरह सुबन्त कुमार शब्द से धातु की उपस्थिति नहीं होगी और प्रातिपदिक की ही उपस्थिति होगी । इसलिए परिभाषा मानने पर युवा खलति—२.१.६७ सूत्र का जरतीग्रहण चरितार्थ हुआ । 'युव' के ग्रहण से युवति का ग्रहण होकर युवतिश्चासौ जरती में समास हो सका ।

**इयं च 'द्विषत्परयोरि'त्याद्युपपदविधौ, समासान्तविधौ, महदात्त्वे, ञ्नित्स्वरे,**

---

२.१.५७ इति समासेऽपि पूर्वनिपातनियमसिद्ध्या जरतीग्रहणस्य वैयर्थ्यमेव स्यादिति लघुशब्देन्दुशेखरे नागेशः।

अच्प्रकरणे शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरूपसंख्यानम् (भाष्यवार्तिकम् सू० ३.२.९) इति वार्तिके घटात् पृथक् घटीग्रहणेन परिभायेयमनित्येति ज्ञाप्यते। घटग्रहणेन लिङ्गविशिष्टघटीशब्दस्यापि ग्रहणेन घटग्रह इतिवत्

---

यह परिभाषा अनित्य है। "शक्ति-लाङ्ग-लाङ्कुश" इस वार्तिक में घट से पृथक् घटी का ग्रहण इसके अनित्य होने में प्रमाण है। यदि यह परिभाषा नित्य होती तो घट के ग्रहण से घटी का ग्रहण भी हो जाता, फिर घट से पृथक् घटी का ग्रहण व्यर्थ था। वह व्यर्थ होकर परिभाषा की अनित्यता का ज्ञापन करता है। अनित्य होने के कारण यह जहाँ-जहाँ प्रवृत्त नहीं होती है, वे स्थल ये हैं—

१—"द्विषत्परयोस्तापे" ३.२.३९। यहाँ यह न्याय नहीं लगा। इसलिए "द्विषन्तपः" में जैसे खश् प्रत्यय होता है; वैसे "द्विषतीतापः" में खश् नहीं हुआ। अन्यथा 'द्विषत्' प्रातिपदिक से द्विषती का ग्रहण हो जाता और "द्विषतीतापः" यह प्रयोग नहीं बन पाता।

२—समासान्त विधि में भी यह परिभाषा नहीं लगती। इसीलिए "मद्राणां राज्ञी मद्रराज्ञी" यहाँ "राजाहःसखिभ्यष्टच्" ५.४.९१ से टच् प्रत्यय नहीं हुआ। यदि परिभाषा अनित्य न होती तो यहाँ 'राजन्' शब्द से राज्ञी का ग्रहण होजाता और टच् प्रत्यय होने से अनिष्ट रूप बन जाता।

३—'महत्' शब्द को जो आत्व किया जाता है; वहाँ भी लिङ्गविशिष्ट महती शब्द का ग्रहण नहीं होता। इसीलिए 'महती प्रिया यस्य' इस विग्रह में निष्पन्न "महतीप्रियः" में "आन्महतः समानाधिकरणजातीययोः" ६.३.४६ से 'महती' शब्द को आकारान्त आदेश नहीं हुआ। महतीप्रियः" में महती को "स्त्रियाःपुंवत्" ६.३.३४ से पुँवद्भाव नहीं हुआ; क्योंकि प्रियादि शब्दों के उत्तर पद में होने पर पुंवद्भ,व नहीं होता।

४—"ञित् स्वर" में भी यह परिभाषा अनित्य होने से प्रवृत्त नहीं होती। इसीलिए दक्षस्यापत्यं स्त्री इस अर्थ में 'दक्ष' शब्द से 'अत इञ्' ४.१.९५ से इञ् प्रत्यय करके आदि अच् को तद्धितेष्वचामादेःसे वृद्धि करने तथा भसंज्ञा करके 'यस्येति च' से 'क्ष' में स्थित अका लोप करने पर "दाक्षि" बना और उससे 'इतो मनुष्यजातेः' ४.१.६५ सूत्र द्वारा ङीष् करने पर बने हुए रूप 'दाक्षी' को ञित् प्रत्ययान्त शब्द 'दाक्षि' मान कर "ञ्नित्यादिर्नित्यम्" से ६.१.१९७ से आद्युदात्त नहीं हुआ।

**राज्ञः स्वरे ब्राह्मणकुमारयोः, बहोर्नञ्वदुत्तरपदभूम्नीत्यादौ समाससङ्घातग्रहणेषु**

घटीग्रह इत्यपि सिद्धे घटीग्रहणं व्यर्थं सत् परिभाषाया अनित्यत्वं ज्ञापयति। अनित्यत्वाद् यत्र यत्रेयं न प्रवर्तते तानि सर्वाणीह—

**परिगण्यन्ते—इयं च द्विषत्परयोरित्यादिना—**

क्व क्व न प्रवर्तन्त इति चेच्छ्रूयताम् (१) द्विषत्परयोस्तापे ३.२.३९ इत्याद्युपपदविधौ न प्रवर्तते अनित्यत्वात्। तेन द्विषन्तीं तापयतीति द्विषतीताप इत्यत्र 'द्विषत्परयोस्तापे' इति खच् न भवति। अन्यथा द्विषन्तप इतिवत् तत्रापि द्विषद्ग्रहणेन द्विषतीति लिङ्गविशिष्टस्यापि ग्रहणात् खच् स्यादिति भावः। २ समासान्तविधौ च न प्रवर्तते। तेन मद्राणां राज्ञी मद्रराज्ञीत्यादौ 'राजाहःसखिभ्यष्टच्' ५.४.९१ इति टच्प्रत्ययः समासान्तो न भवति। यदीयमनित्या न स्यात्तदानया राजन् इत्यस्य ग्रहणेन लिङ्गविशिष्टस्य राज्ञीत्यस्यापि ग्रहणात् मद्रराज इतिवत् मद्रराज्ञीत्यत्रापि टच् स्यात्। ३ महत आत्वविधावपि न प्रवर्तते। तेन महती प्रिया यस्येति विग्रहे बहु-

---

५—"आर्यो ब्राह्मणकुमारयोः" ६.२.५८ 'राजा च' ६.२.५९ से ब्राह्मण और कुमार शब्द के परे रहते राजन् शब्द को पूर्वपदप्रकृतिस्वर का विधान है। परन्तु वह स्वर 'राजब्राह्मणी' और 'राजकुमारी' में नहीं होता है। क्योंकि लिङ्ग-विशिष्ट परिभाषा के अनित्य होने के कारण पूर्वोक्त सूत्रों में ब्राह्मण के ग्रहण से ब्राह्मणी का और कुमार के ग्रहण से कुमारी का ग्रहण नहीं हुआ है। इसलिए 'राज्ञी एव ब्राह्मणी'—'राजब्राह्मणी' 'राज्ञी एव कुमारी-राजकुमारी' में 'राजब्राह्मणः' और 'राजकुमारः' की तरह आद्युदात्त स्वर नहीं हुआ।

६—'बहोर्नञ्वदुत्तरपदभूम्नि' ७.२.१७५ इत्यादि में समाससंघातग्रहणों में भी अनित्य होने के कारण यह परिभाषा प्रवृत्त नहीं होती। अर्थात् ऐसे बहुव्रीहि-समास में जहाँ उत्तरपदार्थबहुवचन हो और पूर्वपद में बहु शब्द हो, जैसेः—बहवो गोमन्तो यस्मिन् स बहुगोमान्, यहाँ पूर्वनिर्दिष्ट सूत्र से जैसेः—नञ्पूर्वपदवाले समास केलिए विहितअन्तोदात्तत्व का अतिदेश किया जाता है, वैसे—'बहवो गोमन्तो यस्यां-सा बहुगोमती नगरी' में अन्तोदात्तत्व नहीं होता। इस परिभाषा की प्रवृत्ति न होने के कारण "बहुगोमती" में उत्तरपदार्थगत बहुत्वार्थक बहुशब्द पूर्वक समासत्व नहीं आया; क्योंकि पूर्वनिर्दिष्ट सूत्र (बहोर्नञ्) में समाससंघात में इसकी प्रवृत्ति अनित्यत्वात् नहीं हुई।

"समाससंघातग्रहणेषु" शब्द के द्वारा किसी पृथक् (स्वतन्त्र) अप्रवृत्ति-स्थल का निर्देश नहीं किया गया है; किन्तु "बहोर्नञ्" इससे अन्वित अप्रवृत्ति स्थल का निर्देश ही इस शब्दसे किया गया मानना चाहिए। इसीलिए "बहुव्रीहे-रूधसोङीष्" ४.१.२५ इस सूत्रके भाष्य के साथ विरोध नहीं आया।

**च न प्रवर्तत इति 'ङ्याप्'सूत्रे भाष्ये स्पष्टम्। विभक्तिनिमित्तककार्ये च नेत्यपि तत्रैव ॥**

---

व्रीहिसमासे 'स्त्रियाः पुंवद् भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु' ६.३,३४ इति सूत्रेऽपूरणीप्रियादिष्वितिपर्युदासात् पुंवद्भावाप्राप्त्या गोस्त्रियोरिति ह्रस्वे महतीप्रिय इत्यत्र 'आन्महतः समानाधिकरणजातीययोः' ६.३.४६ इत्यात्वं न। अन्यथा महद्ग्रहणेन महतीति लिङ्गविशिष्टस्यापिग्रहणात्तत्राप्यात्वं स्याद् । ४ ञित्स्वरे ञित्प्रयुक्ते "ञ्नित्यादिर्नित्यम्" ६.१.१९७ इत्यनेनाद्युदात्तविधौ) न प्रवर्तते। तेन दाक्षिरित्यत्र 'अत इञ्' ४.१.९५ इतीञ्प्रत्ययान्ते यथादिरुदात्तो जायते तथा इतो मनुष्यजातेः ४.१.६५ इतिविहितङीष्प्रत्ययान्ते 'दाक्षी' इत्यत्र न। अन्यथा ञित्प्रत्ययान्तग्रहणेन लिङ्गविशिष्टङीषन्तदाक्षीत्यस्यापि ग्रहणात् तत्रापि ञित्स्वर आद्युदात्त आपद्येत। ५ राज्ञः स्वरे ब्राह्मणकुमारयोः, 'आर्यो ब्राह्मणकुमारयोः ६.२ ५८ राजा च ६.२.५९ इत्यनेन ब्राह्मणकुमारयोः परतो राजन् शब्दस्य कर्मधारये विधीयमानः पूर्वपदप्रकृतिस्वरः यथा 'राजब्राह्मणः' 'राजकुमारः' इत्यनयोः राजा एव ब्राह्मणः राजा एव कुमार इत्यर्थकयोर्भवति तथा राज्ञी एव ब्राह्मणी, राज्ञी एव कुमारी इत्यर्थकयो राजब्राह्मणी राजकुमारीत्यनयो र्न भवति। परिभाषाया नित्यत्वे तु ब्राह्मणकुमारग्रहणेन ब्राह्मणीकुमारीतिलिङ्गविशिष्टस्यापि ग्रहणात् तत्रापि कनिन्प्रत्ययान्तत्वादाद्युदात्तराजशब्दस्य प्रकृतिस्वरेणाद्युदात्तत्वमापद्येत। ६ समास-संघातग्रहणेषु चेयमनित्यत्वान्न प्रवर्तते। तेन उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यादित्यर्थकेन बहोर्नञ्वदुत्तरपदभूम्नि ६.२.१७५ इत्यनेन समासे उत्तरपदार्थगतबहुत्वबोधकबहुशब्दस्यपदत्वेपूर्वं ततः (तादृशबहुशब्दपूर्वपदात्) परस्य पदस्य, नञ्पूर्वपदसमासस्य नञ्सुभ्याम् ६.२.१७२ इति विधीयमानमन्तोदात्तत्वं यथा बहवो गोमन्तो यस्मिन् स बहुगोमान् ग्रामः इत्यत्रातिदिश्यते तथा बहवो गोमन्तो यस्यां सा बहुगोमती नगरी इत्यत्र नातिदिश्यते। यदीयमनित्या न स्यात्, उत्तरपदार्थगतबहुत्वा- र्थकबहुशब्दपूर्वपदक-समासत्वं बहुगोमतीत्यत्रानया सम्पाद्येहापि तथैवान्तोदात्तत्वं स्यात् यथा बहुगोमान् ग्राम इत्यत्र भवति।

अनित्यत्वावाच्च समाससंघातग्रहणेषु (यत्र हि समाससंघातस्य सम्पूर्ण-समासस्य ग्रहणं तत्र यथा बहोर्नञ्वदित्यत्र उत्तरपदपूर्वपदयोरुभयोरुपादानात्समास-संघातस्य ग्रहणं वर्तते उत्तरपदपूर्वपदयोरेवाविकलसमासत्वं समाससंघातत्वं च तिष्ठतीति) नेयं प्रवर्तते।

एतत्सर्वं ङ्याप्प्रातिपदिकात् ४.१.१ इतिसूत्रे भाष्ये स्पष्टम् तथाहिः—(वा०) ङ्याब्ग्रहणमनर्थकं प्रातिपदिग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् (भाष्यम्) ङ्याब्ग्रहणमनर्थकम् ॥ किं कारणम् १. प्रातिपदिकग्रहणे लिङ्गविशिष्ट-स्यापि ग्रहणात्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येषा परिभाषा

कर्तव्या । कः पुनरत्र विशेषः ? एषा वा परिभाषा क्रियते, ङ्याब्ग्रहणं वा ? अवश्य-मेषा परिभाषा कर्तव्या ।बहून्येतस्याः परिभाषायाः प्रयोजनानि ।। कानि ? (वा०) सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् । सर्वनामविधिः प्रयोजनम् । सर्वनाम्नःसुडिहैव स्याद्=येषाम्, तेषाम् ।। यासाम् तासाम् इत्यत्र न स्यात् ।। नैतदस्ति प्रयोजनम् अवर्णान्ताट्टाब् विधीयते । तत्रैकादेशेकृतेऽन्तादिवद्भावात्सुड् भविष्यति ।। इदं तर्हि प्रयोजनम्—'सर्वनाम्नस्तृतीया च' २.३.२७—इहैव स्यात् भवता हेतुना, भवतो हेतोरिति ' भवत्या हेतुना, भवत्या हेतोरित्यत्र न स्यात् । सर्वनाम ।। स्वरः 'कुसूलकूपकुम्भशालं बिले' ६.२.१०२ इहैव स्यात्—कुसूलबिलम् । इत्यत्र च न स्यात्कुसूलीबिलम् । स्वर ।। समास, 'द्वितीया श्रितादिभिः सह समस्यते—इहैव स्यात्—कष्टं श्रितः । कष्टं श्रिता=कष्टश्रितेत्यत्र न स्यात् ।। एतदपि नास्ति प्रयोजनम् । श्रित शब्दोऽकारान्तस्तत्रैकादेशे कृतेऽन्तादिवद्भावाद्भविष्यति ।। इदं तर्हि पूर्वसदृशेति २.१.३१ । इहैव स्यात् । पित्रा सदृशः पितृसदृशः । पित्रा सदृशी पितृसदृशीत्यत्र न स्यात् । समास ।। तद्धितविधि, 'अचित्तहस्तिधेनोष्ठक्' ४.२.४७ इहैव स्यात्—हस्तिनां समूहो हास्तिकम् ।। हस्तिनीनां समूहो हास्तिक-मित्यत्र न स्यात् ।। एतदपि नास्ति प्रयोजनम् । पुंवद्भावेनैतत्सिद्धम् ।। इदं तर्हि 'प्रमाणे द्वयसच्' ५.२.३७ । यथेह भवति—हस्तिद्वयसम्, हस्तिमात्रम् । एवं हस्तिनी-द्वयसम्, हस्तिनीमात्रमित्यपि यथा स्यात् । तद्धितविधि ।।

लुक्, "नेन्सिद्धबध्नातिषु च" ६.३.१९ इहैव स्यात्—स्थण्डिलशायी ।। स्थण्डिलशायिनीत्यत्र न स्यात् । लुक् ।। अलुक् "शयवासवासिष्वकालात्" ६.३.१८ इहैव स्यात्—ग्रामेवासी ।। ग्रामेवासिनीत्यत्र न स्यात् ।। (वा०) **मानिनि च** विधि-प्रतिषेधार्थम् ।। मानिनि च विधिप्रतिषेधार्थं प्रयोजनम्—विध्यर्थं तावत् "क्यङ्मा-निनोश्च" ६.३.३६ इहैव स्यात्—दर्शनीयमानी ।। दर्शनीयमानिनीत्यत्र न स्यात् ।। प्रतिषेधार्थमपि वक्ष्यति "स्वाङ्गाच्चेतोऽमानिनि" ६.३.४० तस्मिन् क्रियमाणे इहैव स्यात्—दीर्घमुखमानी ।। दीर्घमुखमानिनीत्यत्र न स्यात् ।। (वा०) प्रत्ययग्रहणोपचा-रेषु च । प्रत्ययग्रहणोपचारेषु च प्रयोजनम् "तृजकाभ्यां कर्तरि'-२.३.१५ इहैव स्यात्—अपां स्रष्टा ।। अपां स्रष्ट्रीत्यत्र न स्यात् । प्रत्यय ।। उपचार, "अतः कृकमि-कसकुम्भ' ८.३.४६ इहैवस्यात्—अयस्कुम्भः ।। अयस्कुम्भीत्यत्र न स्यात् ।। एता-न्येतस्याः परिभाषायाः प्रयोजनानि, यदर्थमेषा परिभाषा कर्तव्या ।। एतस्यां च सत्यां नार्थो ङ्याब्ग्रहणेन ।।

(ततः परिभाषायाः दोषानाह) (वा) अतिप्रसंग उपपदविधौ ।। उपपदविधा-वतिप्रसङ्गो भवति—"द्विषत्परयोस्तापेः"—यथेह भवति—'द्विषन्तप' इति ।। एव 'द्विषतीताप' इत्यत्रापि स्यात् ।। (वा०) यञिञोः फकि ।। यञिञोः फक्यतिप्रसङ्गो भवति । यथेह भवति—गार्ग्यायणः, दाक्षायणः ।। एवं गार्गेयो दाक्षेय इत्यत्रापि स्यात् ।। नैष दोषः ढगत्र बाधको भविष्यति" (वा०) समासान्तेषु चातिप्रसङ्गो भवति ।

"राजाहः सखिभ्यष्टच्" ५.४.९१ यथेह भवति—'मद्रराजः', एवं 'मद्रराज्ञी', 'कश्मीर-राज्ञीत्यत्रापि स्यात् ।। 'न वा भवति मद्रराजीति ।। भवति, यदा समासान्तादीकारः । लिङ्गविशिष्टग्रहणे तु ईकारान्तात्समासान्तः प्रसज्येत ।। तत्र को दोषः? पुंवद्भावष्टि-लोपश्च । तत्र मद्रराजीत्येवं रूपं स्यात् । मद्रराज्ञीति चेष्यते ।। (वा०) महदात्वे-प्रियादिषु ।। महदात्वे प्रियादिष्वतिप्रसङ्गो भवति । 'आन्महतः समानाधिकरण-जातीययोः' ६.३.४६ इति यथेह भवति—महान् प्रियोऽस्य महाप्रियः ।। एवं महती प्रियास्य महतीप्रिय इत्यत्रापि स्यात् ।। किमुच्यते प्रियादिष्विति ? यत्र पुंवद्भावः प्रतिषिध्यते ।। यत्र तु न प्रतिषिध्यते, भवितव्यमेव तत्रात्वेनेति ।। (वा०) ञ्नित्स्वरे ।। ञ्नित्स्वरेऽतिप्रसङ्गो भवति । "ञ्नित्यादिः" ६.१.१९७ उदात्तोभवतीति । यथेह भवति दाक्षिः, अहिचुम्बकायनिः ।। एवं दाक्षी, अहिचुम्बकायनीत्यत्रापि स्यात् ।। (वा०) राज्ञः स्वरे ब्राह्मणकुमारयोः ।। राज्ञः स्वरे ब्राह्मणकुमारयोरतिप्रसङ्गो भवति "राजा च" ६.२.५९ ब्राह्मणकुमारयोरिति । यथेह भवति—राजब्राह्मणः, राजकुमारः ।। एवं राजब्राह्मणी, राजकुमारीत्यत्रापि स्यात् ।। (वा०) समाससंघात-ग्रहणेषु च ।। समाससंघातग्रहणेषु चातिप्रसङ्गो भवति—"बहोर्नञ्वदुत्तरपदभूम्नि ६.२.१७५ यथेह भवति, बहुगोमान्, बहुयवमान् ।। एवं बहुगोमती, बहुयवमतीत्य-त्रापि स्यात् । किमुच्यते समाससंघातग्रहणेष्विति ? यदवयवग्रहणं प्रयोजनमेवैतस्याः परिभाषायाः कुसूलकूपकुम्भशालं बिले ।। कुसूलीबिलम् इति यथा । (पूर्वपदस्यात्र कार्यित्वं न तु संघातस्येति पूर्वपदान्तोदात्तत्वं भवत्येव ।।—इति कैयटः) (वा०) विभक्तौ चोक्तम् । किमुक्तम् न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति) ।। एतेऽस्याः परिभाषायाः दोषाः, एतानि च प्रयोजनानि स्युः ।। एते दोषाः समाः भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया । नहि दोषाः सन्तीति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम् ।। नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते । दोषा खल्वपि साकल्येन परिगणिताः (अन्यत्र दोषाभावादिति भाव,-इत्युद्योते ।) प्रयोजनानामुदाहरणमात्रम् । कुत एतत् नहि दोषाणां लक्षणमस्तीति ।। तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं च दोषेषु ।। इति ।। अच्प्रकरणे शक्तिलाङ्गलाङ्कुशेति वार्तिके घटग्रहणेनैव घटीग्रहणे-सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम् । तेनानिष्टविषये नोपतिष्ठते इति कैयटः प्रतिविधेयमिति प्रतीकमुपादाय प्रतिविधानोपायमुक्तवानिति) ।

विभक्तिनिमित्तककार्ये च नेयं प्रवर्तते इत्यपि ङ्याप्सूत्रभाष्ये उपरिलिखिते "विभक्तौ चोक्तम्" इत्यत्रोक्तमिति भावः । तेन यूनः पश्येत्यत्र यथा श्वयुव... ६.४.१३३ इत्यनेन संप्रसारणं भवति तथा युवतीः पश्येत्यत्र न भवति, परिभाषाया अनित्यत्वात्तत्राप्रवृत्तेः । अन्यथा युवग्रहणेन लिङ्गविशिष्टस्य युवतीशब्दस्यापिग्रहणात् सम्प्रसारणं स्यादिति भवाः ।

**तत्र समासान्तविधावयवग्रहणे एव न, समाससंघातग्रहणे तु प्रवर्तते एव। स्वरविधावेव समाससंघातग्रहणे तत्र दोषोक्तेः। 'बहुव्रीहेरूधस' इति सूत्रभाष्याच्च॥**

---

तत्र समाससंघातग्रहणेषु बहोर्नञ्वदित्यत्रैव परिभाषेयं न प्रवर्तते इत्युक्ते न सर्वं समाससंघातग्रहणं परिभाषयाः प्रवृत्तिविषयः किन्तु बहोर्नञ्वदिति स्वरविषयक-समाससंघातग्रहणमात्रं तस्या विषयः। तेनान्यत्र समाससंघातग्रहणेऽपि प्रवर्तत एव। अतएव बहुव्रीहेरूधसो ङीष् ४.१.२५ इतिसूत्रस्थभाष्यविरोधोऽपि न। एवं समासान्तविधौ याऽप्रवृत्तिरुक्ता; सा समासावयवग्रहणे राजादावेव। समासान्तविधावपि समाससंघातग्रहणे परिभाषा प्रवर्तत एव। तत्र पूर्वोक्ते भाष्ये समाससंघातग्रहणे स्वरविधावेव दोषोद्भावनात्। अतएव 'बहुव्रीहेरूधसो ङीष्' ४.१.२५ इति सूत्रे भाष्ये ऊधश्शब्दान्तबहुव्रीहित्वं ङीषन्ते (कुण्डोध्नीत्यत्र) समानीय कबापत्ति र्दशिताः तेन अतिशयितो भ्राता यस्याः सा अतिभ्रात्रीत्यत्र ऋदन्तोत्तरपदकबहुव्रीहिसमासत्वं ङीबन्ते समानीय 'नद्यृतश्च' ५.४.१५३ इति प्राप्तनित्यकपो 'वन्दिते भ्रातुः' ५.४.१५७ इत्यनेन निषेधो दर्शितः निषेधायापि यस्य पूजितार्थकभ्रातृशब्दान्तबहुव्रीहित्वस्य ङ्यन्तातिभ्रात्रीत्यत्रावश्यकताऽऽसीत्; सा पि चानयैव सम्पादिता। अतएव ज्ञायते समासान्तविधावयवग्रहे राजादावेव न प्रवर्तते इयमिति। समाससंघातग्रहणे-

---

समासान्तविधि में अप्रवृत्ति होने की जो बात कही गयी है, वह भी समासावयव राजादि शब्द तक ही सीमित है। इस संकोच से यह लाभ हुआ कि यह परिभाषा समासान्त विधि में भी समाससंघातग्रहण में प्रवृत्त होगी ही। इसीलिए ङीषन्त शब्द 'कुण्डोध्नी' में ऊधःशब्दान्त में बहुव्रीहित्व लाकर भाष्यकार ने 'कप्' प्रत्यय होने की आपत्ति दिखायी। इसीलिए 'अतिशयितो भ्राता यस्याः' सातिभ्रात्री; जिस महिला का भाई विलक्षण हो, उसे अतिभ्रात्री कहते हैं, यहाँ पर ङीबन्त में ऋदन्तोत्तरपदबहुव्रीहित्व (अतिभ्रातृशब्दत्व) लाकर भाष्यकार ने 'नद्यृतश्च' ५.४.१५३ से नित्यकप् की प्राप्ति दिखायी और बताया कि पूजितार्थक-भ्रातृशब्दान्त बहुव्रीहित्व को लाकर यहाँ "वन्दिते भ्रातुः" ५.४.१५७ से उसका निषेध हो गया। इसलिए वहाँ 'कप्' प्रत्यय नहीं होता। इस भाष्य से प्रतीत होता है कि समासान्त विधि में अवयव ग्रहण में राजादि में ही यह प्रवृत्त नहीं होती है।

६—विभक्तिनिमित्तककार्य में भी यह परिभाषा नहीं लगती इसीलिए 'बहुगोमती' (बहवो गोमन्तो यस्यां सा बहुगोमती नगरी में) "उगिदचां" से नुम नहीं हुआ। यह बात भी पूर्व बातों की तरह 'ङ्याप्" सूत्र के भाष्य में स्पष्ट है। स्वरविधि में ही समाससंघात ग्रहण में परिभाषा की प्रवृत्ति से दोष बताया गया है। इससे और 'बहुव्रीहेरूधसो ङीष्' के भाष्य से यही सिद्ध होता है कि समासान्त विधि में अवयव ग्रहण (राजादि) में प्रवृत्त नहीं होती है।

**एतावत्स्वेवानित्यत्वादप्रवृत्तिर्दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः ॥**

**नन्वेवं 'बहुव्रीहेरूधसो ङीष्' इति सूत्रस्थभाष्यासङ्गतिः । तत्र हि कुण्डो-**

---

ष्वपि बहोर्नञ्वदिति स्वरविधावेव न प्रवर्तते इति अतिभात्रीत्यादौ परिभाषायाः संचारस्य भाष्ये दर्शनात् ।

एतावत्स्वेवानित्यत्वादप्रवृत्तिः । दोषाः खल्वपि साकल्येन परिगणिताः'' इति ङ्याप् सूत्रे भाष्योक्तेः । (भाष्यञ्चोद्धृतमत्रैव) ।

ननु सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सत्येव (प्रातिपदिकत्वतद्व्याप्यानुपूर्वीप्रकारेण प्रातिपदिकग्रहणे सत्येव) अस्याः प्रवृत्ति-स्वीकारे बहुव्रीहेरूधसो ङीष् ४.१.२५ इति सूत्रस्थभाष्यासंगतिः, तत्र हि ऊधश्श-ब्दान्ते कुण्डोधस् इत्यत्र विद्यमानस्य बहुव्रीहित्वस्य कुण्डोध्नीत्यत्रानयनेन नद्यन्त-बहुव्रीहेः कप्स्यादित्यर्थे 'नद्यृतश्च' ५.४.१५३ इति कबापत्तिर्दर्शिता, तत् कबापत्ति-प्रदर्शनपरं भाष्यं न संगच्छते, नद्यन्तस्य बहुव्रीहित्वाभावात्, 'नद्यृतश्च' ५.४.१५३ इति सूत्रे सामान्यरूपेण विशेषरूपेण वा (प्रातिपदिकत्वतद्व्याप्यानुपूर्वीरूपेण) प्रातिपदिकबोधकपदाभावेन ''प्रातिपदिकग्रहण'' इति परिभाषाया अप्रवृत्तेः नद्यन्ते कुण्डोध्नीत्यत्रोधश्शब्दान्तनिष्ठबहुव्रीहित्वस्यानयनासंभवात्, नद्यन्तानां यः समासः, अर्थात् नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः यः बहुव्रीहिः समासस्तत्र कप्, इह तु ऊधस्-प्रकृतिकसुबन्तोत्तरपदको बहुव्रीहिः, नतु उध्नीरूपनद्यन्तप्रकृतिकसुबन्तोत्तरपदको

---

पूर्वनिर्दिष्ट ६ प्रकारके स्थलों में ही अनित्यत्वात् परिभाषा की प्रवृत्ति नहीं होती है । भाष्यकार ने स्पष्ट रूप में कहा है कि परिभाषा स्वीकार करने पर जो दोष हो सकते हैं; उन सब को गिना दिया है । वहाँ अनित्यत्वात् परिभाषा की अप्रवृत्ति मानी जा सकती है । लाभ इतने हैं कि गिनाये नहीं जा सकते हैं, और दोष अङ्गुलियों पर गिना दिये गये हैं । अतः अधिक लाभ देखकर परिभाषा माननी ही चाहिए । अविकल भाष्य 'दुर्गा' व्याख्या में पृष्ठ ४६० पर उद्धृत है । भाष्य का तात्पर्य ऊपर के हिन्दी भाष्य में आ ही गया है । उसकी पुनरुक्ति अनावश्यक है ।

सामान्यरूप से या विशेषरूप से (प्रातिपदिकत्व और तद्व्याप्यानुपूर्वी प्रकार से) प्रातिपदिक के ग्रहण में ही यदि यह परिभाषा लगे तो ''बहुव्रीहेरूधसो ङीष्'' ४.१.२५ इस सूत्र का भाष्य असङ्गत हो जाएगा । उस भाष्य में आपत्ति उठायी गई कि कुण्डोध्नी में 'नद्यृतश्च' ५.४.१५३ से 'कप्' प्रत्यय क्यों नहीं हुआ ? वह सूत्र नद्यन्त बहुव्रीहि से कप् प्रत्यय करता है; यहां जो कुण्डोध्नी शब्द नद्यन्त है, उसमें नद्यन्त बहुव्रीहित्व अर्थात् कुण्डोधस् शब्दत्व लाने के लिए ''लिङ्गविशिष्ट परिभाषा'' का ही सहारा अपेक्षित था । वह सम्भव नहीं है; क्योंकि 'नद्यृतश्च'

ष्नीत्यत्र 'नद्यृतश्चे'ति कबापादितो नद्यन्तबहुव्रीहे रित्यर्थात्, नद्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः। नद्यन्तानां यः समास इत्यर्थेन च परिहृतम्। नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इतीति चेत्-न। अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेपि पर्याप्तत्वमतिदिश्यते इत्याशयात् ॥७२॥

---

बहुव्रीहिरिति न कबापद्यते इति समाहितम् भाष्ये इति चेन्न अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यते इत्याशयकल्पनेनादोषात्। प्रातिपदिकत्वव्याप्यधर्ममात्रस्य

---

सूत्र में सामान्य रूप से या विशेषरूप से प्रातिपदिक बोधक पद का ग्रहण नहीं है। अतः इस परिभाषा की प्रवृत्ति नहीं होगी फिर कप् प्रत्यय की प्राप्ति की शङ्का निराधार दिखाई पड़ती है। अगर शङ्का की भी गयी, तो उसका सीधा समाधान यह देना चाहिए कि सामान्य या विशेष रूप से प्रातिपदिक बोधक पद का ग्रहण नहीं होने के कारण परिभाषा की प्रवृत्ति नहीं होगी; इसलिए नद्यन्त में बहुव्रीहित्व के अभाव से ही कप् की प्राप्ति नहीं होगी; परन्तु भाष्यकार ने और समाधान देते हुए कहा कि "नद्यृतश्च" की प्रवृत्ति वहां होती है; जहां नद्यन्तों में समास होता है। यहाँ तो समास करते समय न कोई नद्यन्त पद था और न ऋदन्त। अर्थात् ऐसे बहुव्रीहि समास में 'नद्यृतश्च' की प्रवृत्ति होती है; जहाँ उत्तर पद में नद्यन्त प्रकृतिक सुबन्त (पद) हो। इस तरह समाधानान्तर ढूंढ़ने से यह पता चलता है कि यहाँ लिङ्गविशिष्ट परिभाषा की प्रवृत्ति होती है; परन्तु आपने जैसा अर्थ माना है; उस अर्थ में परिभाषा की प्रवृत्ति नहीं हो सकेगी। इस तरह आपका पूर्वोक्त अर्थ भाष्य विरुद्ध होने के कारण असंगत दिखाई देता है। इसका समाधान देते हुए लिखते हैं कि इस परिभाषा के द्वारा स्त्रीप्रत्यय (टाप् डाप् चाप् ङीप् ङीष् ऊङ् ति) के समभिहार में उन प्रादिपदिकत्व और तद्व्याघ धर्मा के पर्याप्तत्व का अतिदेश होता है; जो कि स्त्रीप्रत्यय रहित में देखे गये हैं। अर्थात् इस परिभाषा की प्रवृत्ति के लिए यह आग्रह नहीं है कि जिस सूत्र में किसी आनुपूर्वी के द्वारा प्रातिपदिकत्व या तद्व्याघ धर्म का ग्रहण हो; वहीं यह लगे, किन्तु प्रातिपदिकत्व और तद्व्याप्य धर्ममात्र का ग्रहण अपेक्षित है।

यह परिभाषा स्त्रीप्रत्यय रहित में देखे गये प्रातिपदिकत्व या तद्व्याप्य धर्मो का स्त्रीप्रत्यय विशिष्ट में पूर्णतः मानने का आग्रह या विधान करती है। बहुव्रीहित्व प्रादिपदिकत्व व्याप्य धर्म है ही, 'नद्यृतश्च' से कप् प्रत्यय-विधान काल में बहुव्रीहित्व का आनयन इस परिभाषा से सम्भव था ही। इसलिए भाष्य के साथ कोई विरोध नहीं हुआ।

एतावत्स्वेवानित्यत्वादप्रवृत्तिर्दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः ॥

नन्वेवं 'बहुव्रीहेरूधसो ङीष्' इति सूत्रस्थभाष्यासङ्गतिः । तत्र हि कुण्डो-

---

ष्वपि बहोर्नञ्वदिति स्वरविधावेव न प्रवर्तते इति अतिभ्रात्रीत्यादौ परिभाषायाः संचारस्य भाष्ये दर्शनात् ।

एतावत्स्वेवानित्यत्वादप्रवृत्तिः । दोषाः खल्वपि साकल्येन परिगणिताः'' इति ङ्याप् सूत्रे भाष्योक्तेः । (भाष्यञ्चोद्धृतमत्रैव) ।

ननु सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सत्येव (प्रातिपदिकत्वतद्व्याप्यानुपूर्वीप्रकारेण प्रातिपदिकग्रहणे सत्येव) अस्याः प्रवृत्ति-स्वीकारे बहुव्रीहेरूधसो ङीष् ४.१.२५ इति सूत्रस्थभाष्यासंगतिः, तत्र हि ऊधश्श-ब्दान्ते कुण्डोधस् इत्यत्र विद्यमानस्य बहुव्रीहित्वस्य कुण्डोध्नीत्यत्रानयनेन नद्यन्त-बहुव्रीहेः कप्स्यादित्यर्थे 'नद्यृतश्च' ५.४.१५३ इति कबापत्तिर्दर्शिता, तत् कबापत्ति-प्रदर्शनपरं भाष्यं न संगच्छते, नद्यन्तस्य बहुव्रीहित्वाभावात्, 'नद्यृतश्च' ५.४.१५३ इति सूत्रे सामान्यरूपेण विशेषरूपेण वा (प्रातिपदिकत्वतद्व्याप्यानुपूर्वीरूपेण) प्रातिपदिकबोधकपदाभावेन "प्रातिपदिकग्रहण" इति परिभाषाया अप्रवृत्तेः नद्यन्ते कुण्डोध्नीत्यत्रोधश्शब्दान्तनिष्ठबहुव्रीहित्वस्यानयनासंभवात्, नद्यन्तानां यः समासः, अर्थात् नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः यः बहुव्रीहिः समासस्तत्र कप्, इह तु ऊधस्-प्रकृतिकसुबन्तोत्तरपदको बहुव्रीहिः, नतु उध्नीरूपनद्यन्तप्रकृतिकसुबन्तोत्तरपदको

---

पूर्वनिर्दिष्ट ६ प्रकारके स्थलों में ही अनित्यत्वात् परिभाषा की प्रवृत्ति नहीं होती है । भाष्यकार ने स्पष्ट रूप में कहा है कि परिभाषा स्वीकार करने पर जो दोष हो सकते हैं; उन सब को गिना दिया है । वहाँ अनित्यत्वात् परिभाषा की अप्रवृत्ति मानी जा सकती है। लाभ इतने हैं कि गिनाये नहीं जा सकते हैं, और दोष अङ्गुलियों पर गिना दिये गये हैं । अतः अधिक लाभ देखकर परिभाषा माननी ही चाहिए । अविकल भाष्य 'दुर्गा' व्याख्या में पृष्ठ ४६० पर उद्धृत है । भाष्य का तात्पर्य ऊपर के हिन्दी भाष्य में आ ही गया है । उसकी पुनरुक्ति अनावश्यक है ।

सामान्यरूप से या विशेषरूप से (प्रातिपदिकत्व और तद्व्याप्यानुपूर्वी प्रकार से) प्रातिपदिक के ग्रहण में ही यदि यह परिभाषा लगे तो "बहुव्रीहेरूधसो ङीष्" ४.१.२५ इस सूत्र का भाष्य असङ्गत हो जाएगा । उस भाष्य में आपत्ति उठायी गई कि कुण्डोध्नी में 'नद्यृतश्च' ५.४.१५३ से 'कप्' प्रत्यय क्यों नहीं हुआ ? वह सूत्र नद्यन्त बहुव्रीहि से कप् प्रत्यय करता है; यहां जो कुण्डोध्नी शब्द नद्यन्त है, उसमें नद्यन्त बहुव्रीहित्व अर्थात् कुण्डोधस् शब्दत्व लाने के लिए "लिङ्गविशिष्ट परिभाषा" का ही सहारा अपेक्षित था । वह सम्भव नहीं है; क्योंकि 'नद्यृतश्च'

ञ्नीत्यत्र 'नद्यृतश्चे'ति कबापादितो नद्यन्तबहुव्रीहेर्ह्रि त्यर्थात्, नद्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः। नद्यन्तानां यः समास इत्यर्थेन च परिहृतम्। नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इतीति चेत्-न। अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यते इत्याशयात् ॥७२॥

---

बहुव्रीहिरिति न कबापद्यते इति समाहितम् भाष्ये इति चेन्न अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यते इत्याशयकल्पनेनादोषात्। प्रातिपदिकत्वव्याप्यधर्ममात्रस्य

---

सूत्र में सामान्य रूप से या विशेषरूप से प्रातिपदिक बोधक पद का ग्रहण नहीं है। अतः इस परिभाषा की प्रवृत्ति नहीं होगी फिर कप् प्रत्यय की प्राप्ति की शङ्का निराधार दिखाई पड़ती है। अगर शङ्का की भी गयी, तो उसका सीधा समाधान यह देना चाहिए कि सामान्य या विशेष रूप से प्रातिपदिक बोधक पद का ग्रहण नहीं होने के कारण परिभाषा की प्रवृत्ति नहीं होगी; इसलिए नद्यन्त में बहुव्रीहित्व के अभाव से ही कप् की प्राप्ति नहीं होगी; परन्तु भाष्यकार ने और समाधान देते हुए कहा कि "नद्यृतश्च" की प्रवृत्ति वहां होती है; जहां नद्यन्तों में समास होता है। यहाँ तो समास करते समय न कोई नद्यन्त पद था और न ऋदन्त। अर्थात् ऐसे बहुव्रीहि समास में 'नद्यृतश्च' की प्रवृत्ति होती है; जहाँ उत्तर पद में नद्यन्त प्रकृतिक सुबन्त (पद) हो। इस तरह समाधानान्तर ढूढ़ने से यह पता चलता है कि यहाँ लिङ्गविशिष्ट परिभाषा की प्रवृत्ति होती है; परन्तु आपने जैसा अर्थ माना है; उस अर्थ में परिभाषा की प्रवृत्ति नहीं हो सकेगी। इस तरह आपका पूर्वोक्त अर्थ भाष्य विरुद्ध होने के कारण असंगत दिखाई देता है। इसका समाधान देते हुए लिखते हैं कि इस परिभाषा के द्वारा स्त्रीप्रत्यय (टाप् डाप् चाप् ङीप् ङीष् ऊङ् ति) के समभिहार में उन प्रादिपदिकत्व और तद्व्याप्य धर्मों के पर्याप्तत्व का अतिदेश होता है; जो कि स्त्रीप्रत्यय रहित में देखे गये हैं। अर्थात् इस परिभाषा की प्रवृत्ति के लिए यह आग्रह नहीं है कि जिस सूत्र में किसी आनुपूर्वी के द्वारा प्रातिपदिकत्व या तद्व्याप्य धर्म का ग्रहण हो; वहीं यह लगे, किन्तु प्रातिपदिकत्व और तद्व्याप्य धर्ममात्र का ग्रहण अपेक्षित है।

यह परिभाषा स्त्रीप्रत्यय रहित में देखे गये प्रातिपदिकत्व या तद्व्याप्य धर्मों का स्त्रीप्रत्यय विशिष्ट में पूर्णतः मानने का आग्रह या विधान करती है। बहुव्रीहित्व प्रादिपदिकत्व व्याप्य धर्म है ही, 'नद्यृतश्च' से कप् प्रत्यय-विधान काल में बहुव्रीहित्व का आनयन इस परिभाषा से सम्भव था ही। इसलिए भाष्य के साथ कोई विरोध नहीं हुआ।

ग्रहणं यत्रानुपूर्व्या भवेत् तत्रैवेयं परिभाषा प्रवर्तते इति नाग्रहः। तेन बहुव्रीहित्वस्य प्रातिपदिकव्याप्यत्वेन परिभाषाप्रवृत्तिः 'नद्यृतश्च' ५.४.१५३ इति कब्विधानकाले बहुव्रीहित्वानयनाय सम्भवतीति न भाष्यविरोधः।

बहुव्रीहेरूधसो ङीष् ४.१.२५ इति सूत्रे भाष्यं यथा—"ऊधसो नकारो लिङ्गाधिकारे वा० १" ऊधसो नकारो लिङ्गाधिकारे कर्तव्यः। इह मा भूत्। महोधाः पर्जन्य इति ॥ (अत्र कैयटः—ऊधसोऽनङ् (५.४.१३१) इति समासान्तप्रकरणे सूत्रमकृत्वा 'बहुव्रीहेरूधसो ङीष् नश्चेतिवक्तव्यम्। तत्रालोन्त्यस्येत्यन्तस्य नकारो ङीष्प्रत्ययश्च स्त्रियां भवतीत्यर्थो भवति। धनुषोऽनङिति समासान्तेषु पठितव्यम्। एवं च महोधाः पर्जन्यः, कुण्डोधो धैनुकमित्यनङ् न भवति ॥ इति)

(भाष्यम्) (वा०) न वा समासान्ताधिकारे स्त्रीग्रहणात् २ न वा लिङ्गाधिकारे नकारः कर्तव्यः। किं कारणम्? समासान्ताधिकारे स्त्रीग्रहणात्। समासान्ताधिकारे स्त्रीग्रहणं कर्तव्यम् ॥ (अत्र कैयटः समासान्तप्रकरण एवोधसोऽनङ्स्त्रियामिति वक्तव्यम्। तत्रैवावश्यं कर्तव्यम्। कप्समासान्तनिवृत्यर्थमित्यर्थः ॥) (भाष्यम्) (वा०) इतरथा हि कब्विधिप्रसङ्गः ३ इतरथा हि कब्विधिः प्रसज्येत ॥ कस्यां पुनरवस्थायां कप्प्राप्नोति। प्राङ् ङीषुत्पत्तेः। प्राक्तावन्न प्राप्नोति। किं कारणम्? नहि ङीष् विभाषा। उत्पन्ने तर्हि ङीषि प्राप्नोति। उत्पन्ने चापि न प्राप्नोति। किं कारणम्? नद्यन्तानां यो बहुव्रीहिरित्येवं तन्न चैष नद्यन्तानां बहुव्रीहिः प्रागेव तर्हि प्राप्नोति। ननु चोक्तं नहि ङीष्विभाषेति। यद्यपि न ङीष्विभाषा कप् तु विभाषा। कपोऽवकाशः। अन्यो बहुव्रीहिः। अयवकः, अव्रीहिकः। ङीषोऽवकाशः। विभाषा कब् यदा न कप् सोऽवकाशः। कुण्डोध्नी, घटोध्नी, कप्प्रसङ्ग उभयं प्राप्नोति परत्वात् कप्स्यात्। तस्मात्सुष्ठूच्यते-नवा समासान्ताधिकारे स्त्रीग्रहणादितरथा हि कब्विधिप्रसङ्ग इति।

यत्तु अतः कृकमिकंसकुभ इतिसूत्रे कुम्भश्च कुम्भी चेति कुम्भौ इति पुमान् स्त्रिया १.२.६७ इत्येकशेषेण निर्देशस्वीकारादेवायस्कुम्भीत्यादिसिद्धौ परिभाषायां फलाभाव इति तन्न ङ्यापप्रादिपदिकात्' ४.१.१ इत्यत्र प्रातिपदिकपदेन श्वश्रूकुर्वादिलिङ्गविशिष्टग्रहणाय कुमारीमाचष्टे कुमारयति इत्यादौ प्रातिपदिकाद्धात्वर्थे इति णिज्विधानाय च परिभाषाया आवश्यकत्वादिति शिवम्।७२।

---

"अतः कृ-कमि-कंस-कुम्भ—इस सूत्र में कुम्भश्च कुम्भी चेति कुम्भौ इस तरह 'पुमान् स्त्रिया' १.२.६७ से एकशेष मानने पर 'अयस्कुम्भः' और 'अयस्कुम्भी दोनों जगह सत्व की सिद्धि होही जाती, तो भी इस परिभाषा को निरर्थक नहीं मानना चाहिए; क्योंकि 'श्वश्रूः' 'कुरूः' 'युवतिः' इत्यादि प्रयोगों में 'ङ्याप्प्रातिपदिकात्' ४.१.१ सूत्र से प्रातिपदिक मानकर स्वाद्युत्पत्ति के लिए, और 'कुमारीमाचष्टे—कुमारयति' यहां 'प्रातिपदिकाद्धात्वर्थे से 'णिच्' विधान के लिए परिभाषा की अत्यन्त आवश्यकता है। इति शिवम् ॥ ७२ ॥

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि 'श्वयुवे'ति संप्रसारणं स्यादत आह—

**विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥७३॥**

---

**विभक्तौ लिङ्गविशिष्टाग्रहणम् ७३**

ननु 'प्रातिपदिकग्रहणे' लिङ्गविशिष्टस्यापि ग्रहणम्'' इति परिभाषायाः (प० ७२) स्वीकारे युवतीः पश्येति न स्यात् तत्र यूनस्तिः ४.१.७७ इति तिप्रत्ययेन सिद्धस्यापि युवतिशब्दस्याप्यनया युवशब्देन ग्रहणसम्पादनात् श्वयुवमघोनामतद्धिते ६.४.१३३ इति सम्प्रसारणापत्तेरिति चेन्न **विभक्तौ लिङ्गविशिष्टाग्रहणमिति** परिभाषास्वीकारात् विभक्तौ परतः विहितकार्यविधानाय प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्य ग्रहणं न भवतीति परिभाषार्थः । श्वयुवेति सूत्रेण श्वन् युवन् इत्यादीनां भसंज्ञकानां सम्प्रसारणं विधीयते, भसंज्ञा चात्र अजाद्यसर्वनामस्थाने परतो विधीयते । अतः अस्रूपाजाद्यसर्वनामस्थानरूपविभक्तौ परतो विहितसम्प्रसारणरूपकार्याय गृही-तस्य युवन्निति प्रातिपदिकस्य ग्रहणे लिङ्गविशिष्टस्य युवतीत्यस्यानया ग्रहणाभाव-बोधनान्न सम्प्रसारणापत्तिः । यदि च 'अल्लोपोऽन' ६.४.१३४ इति सूत्रादन इत्यप-कृष्य अन्नन्तानां भसंज्ञकानां श्वयुवमघोनामतद्धिते परे सम्प्रसारणमित्यर्थः मघवतः मघवता इत्यादौ सम्प्रसारणाभावाय क्रियते; तदात्र स्वत एव सम्प्रसारणाप्राप्ति-र्बोध्या । वार्तिककृताऽपि श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थ-

---

**विभक्तौलिङ्ग······ग्रहणम् ॥७३॥**

'यूनः पश्य' यहाँ जैसे ''श्वयुवमघोनाम्'' ६.४.१३३ से सम्प्रसारण होता है; वैसे 'युवतीः पश्य'' में भी हो जायगा; क्योंकि लिङ्गविशिष्टपरिभाषा से युवन् के ग्रहण से लिङ्गविशिष्ट ''युवति'' का भी ग्रहण हो जायगा । इसलिए परिभाषा मानते हैं:—**''विभक्तौ लिङ्गविशिष्टाग्रहणम्''** । विभक्तिनिमित्तक कार्यों में लिङ्ग-विशिष्ट का ग्रहण नहीं होता है । ''श्वयुव'' यह भसंज्ञक को सम्प्रसारण करता है । भसंज्ञा के लिए यादि अजादि कप्रत्ययावधि स्वादि प्रत्यय को परनिमित्त के रूप में माना गया है । इसलिए सम्प्रसारण कार्य विभक्तिपरनिमित्तक कार्य है; उसमें लिङ्ग-विशिष्ट का ग्रहण नहीं होगा । अतः 'युवतीः पश्य' में 'यूनः पश्य' की तरह सम्प्र-सारण नहीं होगा । ''विभक्तौ'' में विषय में सप्तमी है । इसलिए परिभाषा का अर्थ होगा कि विभक्तिविषयककार्यकर्तव्य में 'प्रातिपदिक ग्रहण' परिभाषा की प्रवृत्ति नहीं होती है । इसलिए यह परिभाषा विभक्ति को उद्देश्य बनाकर तथा विभक्ति को निमित्त बनाकर होने वाले कार्यों में प्रवृत्त होगी और इन कार्यों में लिङ्गविशिष्ट परिभाषा का निषेध हो जायगा । इसीलिए शुन्या और शुन्ये में ''उदात्तयणोहल्-पूर्वात्'' ६.१.१०४ से प्राप्त विभक्ति की उदात्तता का ''न गोश्वन्साववर्ण''—

मुत्युक्तम् । अतएव श्वयुवेति सूत्रे नकारप्रश्लेषं स्वीकृत्य वार्तिकफलमन्यथा साधनीयम् । तथाच नान्तानामेव श्वन् युवन् मघवन्—इत्येषां सम्प्रसारणं भवतीति स्वीकार आवश्यकः । अतएवानुमानिकस्थान्यादेशभावेनान्नन्तत्वानयनेनान्नन्तत्वात् प्राप्तं सम्प्रसारणं मघवत इत्यत्र निवारितं भवति । अतोऽन इत्यपकर्षणेन न निर्वाहः नकारप्रश्लेषे तु नान्तस्य भसंज्ञकस्य श्वन् युवन् मघवन् इत्यादेः सम्प्रसारणं विधीयते, नान्तत्वं चाल्त्वव्याप्यो धर्मः । स आनुमानिकस्थान्यादेशभावकल्पनेऽपि 'अनल्विधौ' १.१.५६ इति प्रतिषेधान्नानेतुं शक्यते । अतो 'मघवत' इत्यानौ न सम्प्रसारणप्राप्तिः । अतोऽन इत्यस्यापकर्षणेन मघवत इत्यत्र सम्प्रसारणवारणासंभवात् प्रत्याख्यातपूर्वोक्तवार्तिकफलैवयाय च पूर्वोक्तभाष्यस्य नकारप्रश्लेषे एव तात्पर्यमिति कल्प्यते । एवञ्च युवतीः पश्येत्यादौ युवतीतिलिङ्गविशिष्टस्य युवग्रहणेन ग्रहणसंसाधनेऽपि नान्तत्वस्य वर्णत्वव्याप्यधर्मस्यानयनासंभवेन सम्प्रसारणं सुतरां वारितं भवति । अतः 'विभक्तौ लिङ्गविशिष्टाग्रहणस्य फलं सुपथी, सख्यावित्यादिसिद्धिरूपं बोध्यम् । शोभनः पन्थाः यस्यां नगर्याम् इत्यत्र बहुव्रीहौ 'सुपथिन्' इत्यस्मात् ऋन्नेभ्यो ङीप् ४.१.५ इति ङीपि भस्य टेर्लोपः ७.१.८८ इति टिलोपे सुपथी नगरी इत्यत्र सौ परतो विहितमात्वम् 'पथिमथ्यृभुक्षामात् ७.१.८५ इति न भवति । एवं सखीत्यत्र सखिशब्दात् सख्यशिश्वीति भाषायाम् ४.१.६२ इत्यनेन ङीषि यस्येति लोपे सखीत्यत्र लिङ्गविशिष्टे सखिशब्दत्वमानीय सख्युरसम्बुद्धौ ७.१.६२ इतिणिद्भावः तन्मूला अचोञ्णिति ७.२.११५ इतिवृद्धिर्नेति ।

---

६.१.१८२ से निषेध नहीं हुआ । क्योंकि "उदात्तयणो हलपूर्वात्" से विहित स्वर और उसका 'गोश्वन्'—से प्रतिषेध विभक्तिसम्बन्धी कार्य हैं । बात यह है कि 'श्वन्' शब्द से गौरादित्वात् 'षिद्गौरादिभ्यश्च' ४.१.४१ से ङीष्' भसंज्ञा और सम्प्रसारणादि कार्य करने पर शुनी बनता है । उससे तृतीया एकवचन में 'शुन्या' और चतुर्थी एकवचन में 'शुन्ये' बनता है । यहाँ 'ङीष्' के स्थान में आदिष्ट यण् को लेकर 'उदात्तयणो हल्पूर्वात्' से विभक्ति (टा और ङे) को उदात्तत्व होता है । 'न गोश्वन्' से उसका निषेध नहीं हुआ । विभक्तिकार्य होने से इस परिभाषा ने 'लिङ्गविशिष्ट' परिभाषा का निषेध कर दिया । इसलिए 'श्वन्' के ग्रहण में 'शुनी' का ग्रहण नहीं हुआ ।

सखी शब्द से प्रथमा द्विवचन में बने हुए रूप 'सख्यौ' में "सख्युरसंबुद्धौ" ७.१.६२ से णिद्वद्भाव नहीं हुआ; क्योंकि यह भी विभक्तिसम्बन्धी कार्य है । यदि विभक्ति परक कार्य में ही निषेध स्वीकार करते तो यहाँ निषेध न होता और लिङ्गविशिष्ट परिभाषा के बल से णिद्वद्भाव हो जाता । "दीर्घाह्नी प्रावृट्" यहाँ पर ङीबन्त अह्नी शब्द में लिङ्गविशिष्ट परिभाषा से 'अहन्' शब्दत्व लाकर "अहन्" सूत्र से रुत्व नहीं हुआ । रुत्व कार्य को 'पदान्तत्व' चाहिए, पदान्तत्व के लिए पदसंज्ञा

स्पष्टा चेयं 'युवोरनाकौ' इत्यत्र भाष्ये। घटघटीग्रहणेन लिङ्गविशिष्टपरि-

श्वयुवमघोनामतद्धिते ६.४.१३३ इति सूत्रे परिभाषेयं निर्दिष्टा भाष्ये। तथाहि :- (वा.) श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् १ श्वादीनां संप्रसारणे नकारान्तग्रहणं कर्तव्यम्। किं प्रयोजनम्। अनकारान्तप्रतिषेधार्थम्। अनकारान्तस्य मा भूत्। मघवता, मघवते। तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यादिति ॥ यत्तावदुच्यते नकारान्तग्रहणं कर्तव्यमिति न कर्तव्यम् ॥ (वा०) उक्तं वा २ किमुक्तम्? "अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तदिति ॥ यदप्युच्यते "तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति यथेह भवति यूनः पश्यति, एवं युवतीः पश्येत्रापि स्यात्" इति। लिङ्गविशिष्टग्रहणे चोक्तम्। किमुक्तम्। "न वा विभक्तौ लिङ्गविशिष्टाग्रहणात्" इति। अथवा—उपरिष्टाद्योगविभागः करिष्यते "श्वयुवमघोनामतद्धिते" "अल्लोपः" अकारस्य च लोपो भवति। तत "अनः इत्युभयोः शेषः ॥ "अत्र कैयटः—युवतिशब्दो ऽप्यन्नन्तो न भवतीति तस्यापि सम्प्रसारणाभावः इत्याह"। **स्पष्टा चेयं** युवोरनाकौ ७.१.१ इत्यत्र भाष्ये—तथाहि "न वा विभक्तौ लिङ्गविशिष्टाग्रहणात् (वा १३) (उगिदचां सर्वनामस्थानेऽधातोर्झल इति) न वा वक्तव्यम्। किं कारणम्? विभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परिभाषा कर्तव्या कः पुनश्च विशेषः एषा वा परिभाषा क्रियेत झल्ग्रहणं वेति अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि। कानि? "प्रयोजनं शुनः स्वरे" (वा १४) यथेह भवति शुना शुनः एवं शुन्या शुन्या इत्यत्रापि प्राप्नोति ॥ "यूनः सम्प्रसारणे (वा० १५) यूनः सम्प्रसारणे प्रयोजनम्। यथेह भवति यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यात् ॥ 'उगिदचां नुम्विधौ" (वा १६) उगिदचां नुम्विधौ प्रयोजनम्। यथेह भवति-गोमान् यवमानेवं गोमती यवमतीत्यत्रापि स्यात् ॥ "अनडुहश्चाम्विधौ प्रयोजनम्" (वा० १७) अनडुहश्चाम्विधौ प्रयोजनम्" यथेह भवति अनड्वानित्येवमनडुहीत्यत्रापि स्यात् न वा भवत्यनड्वाहीति। भवत्यन्येन यत्नेन आमनडुहः स्त्रियां वेति। लिङ्गविशिष्टग्रहणादीकारान्तस्य प्राप्नोति ॥ "पथिमथोरात्वे प्रयोजनम्" (वा० १८) पथिमथोरात्वे प्रयोजनम्। यथेह भवति पन्थाः मन्थाः एवं पथी मथीत्यत्रापि प्राप्नोति। न केवलः पथिशब्दः स्त्रियां वर्तते। उपसमस्तस्तर्हि वर्तते। सुपथीति ॥ "पुंसोऽसुङ्विधौ" (वा० १९)पुंसोऽसुङ्विधौ प्रयोजनम्। यथेह भवति—पुमानेवं पुंसीत्यत्रापि स्यात्। न केवलः पुंशब्दः स्त्रियां वर्तते। उपसमस्तस्तर्हि वर्तते—सुपुंसीति ॥ "सख्युर्णित्वानङौ"। (वा०२०) सख्युर्णित्वानङौ प्रयोजनम्। यथेह भवति सखा सखायौ सखाय एवं सखी सख्यौ सख्य इत्यत्रापि प्राप्नोति ॥ "भवद्भगवदघवतामोद्भावे" (वा० २१) भवद्भगवदघवतामोद्भावे प्रयोजनम्। यथेह भवति भो, भगो, अघो इत्येवं भवति, भगवत्यघवतीत्यत्रापि

**भाषाया अनित्यत्वात्तन्मूलैवेत्यन्ये ॥७३॥**

**ननु तस्यापत्यमित्येकवचननपुंसकाभ्यां निर्देशाद्गार्ग्यो गार्ग्यावित्याद्ययुक्त-मत आह—**

---

स्यात् ॥ एतान्यस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या ॥ इति ॥

घटघटीग्रहणेनेति "अच्प्रकरणे शक्तिलाङ्गलाङ्कुशेति वार्तिके इति शेषः (अत्रत्यविचारः ४८६ तमे पृष्ठे दुर्गायां द्रष्टव्यः । इत्थं प्रातिपदिकग्रहणपरिभाषाया अनित्यत्वादेव विभक्तौ तस्या अप्रवृत्तिः सुतरां सिद्ध्यतीति न कापि नवीनेयं परि-भाषा किन्त्वनित्यत्वमूलैवैषेति भावः । इति शिवम् ॥ ७३

**सूत्रे लिङ्गवचनमतन्त्रम् ॥७४॥**

ननु तस्यापत्यम् ४.१.९२ इति सूत्रे अपत्यमिति एकवचनेन नपुंसकेन च निर्देशः, तस्येत्यपि एकवचनेन निर्देशोऽस्ति अतः गर्गस्यापत्यं पुमान् गार्ग्य इति

---

अपेक्षित है। पद संज्ञा विभक्ति सम्बन्धी कार्य है इसलिए परम्परया रुत्व भी विभक्ति सम्बन्धी कार्य होगया और इस परिभाषा ने लिङ्गविशिष्ट परिभाषा का निषेध कर दिया।

यद्यपि चित्रगवीणाम् में 'कुमति च' ८.४.१३ से णत्व करने के लिए "गवी" में कवर्गवदुत्तर-पद-घटित-समासत्व लिङ्गविशिष्टपरिभाषा से लाना आवश्यक है, जब कवर्गवदुत्तर-पद-घटितत्व लिङ्गविशिष्टपरिभाषा से लाया जायगा; तभी वहाँ तत्प्रकृतिक विभक्तित्व आ सकता है और तत्प्रकृतिक विभक्ति के आने पर ही 'कुमति च' से णत्व होगा। परन्तु "विभक्तौ लिङ्ग" इस परिभाषा से लिङ्गविशिष्टपरि-भाषा का निषेध हो जायगा; फिर णत्व नहीं होगा; तथापि णत्व ही तो करना है वह "अट्कुप्वाङ् नुम् व्यवायेऽपि च" ८.४.२ से हो जायगा।

किसी का मत है कि "शक्तिलाङ्गलाङ्कुश" में घट घटी के ग्रहण से लिङ्ग विशिष्ट परिभाषा अनित्य है और यह परिभाषा तन्मूलक ही हैं। 'यदि लिङ्ग-विशिष्ट' परिभाषा अनित्य न होती, तो 'घट' ग्रहण से 'घटी' का ग्रहण हो ही जाता, घट से पथक् घटी का ग्रहण वार्तिक में क्यों किया जाता ? इति शिवम् ॥७३॥

**सूत्रे लिङ्गवचनमतन्त्रम ॥७४॥**

"तस्यापत्यम्" ४.१.९२ सूत्र में "तस्य" में एकवचन का निर्देश है और "अपत्यम्" में नपुंसकलिङ्ग का निर्देश है। इसलिए गर्गस्य पुत्रः गार्ग्यः नहीं बनेगा, क्योंकि 'गर्गादिभ्यो यञ्' ४.१.१०५ में 'तस्यापत्यम्' का अधिकार आता है। इस लिए 'नपुंसक पुत्र' होने पर 'गार्ग्यम्' तो बनेगा परन्तु पुल्लिङ्ग "गार्ग्यः" नहीं बनेगा। इसी तरह "गर्गयोरपत्यम्" में 'गर्ग' में द्विवचन होने के कारण 'तस्य' के

**सूत्रे लिङ्गवचनमतन्त्रम् ॥७४॥**

**'अर्द्धं नपुंसक'मिति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ॥**

---

पुमर्थे यञ् प्रत्ययो दुर्लभः एवं गर्गयोरपत्ये पुमांसौ गार्ग्यावित्यत्रापि 'गर्गादिभ्योयञ्' ४.१.१०५ इति द्वित्वविशिष्टे पुमर्थे च यञ् प्रत्ययो दुर्लभ इत्यत आह=**सूत्रे लिङ्गवचनमतन्त्रम्** इति । सूत्रे निर्दिष्टं लिङ्गवचनमविवक्षितमस्तीति परिभाषार्थः । अर्थात् प्रवक्ता पाणिनिर्येन लिङ्गेन येन वा वचनेन किमपि सूत्रं व्यरचयत्तल्लिङ्गवचनविषय एव तत्सूत्रं प्रवर्ततामिति न तस्य तात्पर्यमिति भावः । तथाच लिङ्गवचनयोरतन्त्रत्वात् पुल्लिङ्गस्त्रीलिङ्गयो र्द्विवचनबहुवचनयोश्च सूत्रप्रवृत्तौ बाधाभाव इति । तेन गार्ग्यः, गार्गी, गार्ग्यौ गार्ग्या इत्यादयः सिध्द्यन्ति ।

अत्र ज्ञापकम्=अर्धं नपुंसकम् २.२.२ इति सूत्रस्थं नपुंसकग्रहणम् । यदीयं परिभाषा न स्यात्तदा अर्धमित्यत्र कृतस्य नपुंसकेन निर्देशस्य बलादेव नपुंसकेनार्धशब्देन समांशवाचिनैव समासः स्यात्तेन अर्धपिप्पलीत्यत्र समासः, ग्रामार्द्धं इत्यादौ पुल्लिङ्गेनार्धशब्देन च समासाभावः सिद्ध एव तथा च नपुंसकेनार्धशब्देन समासविधानार्थकृतं नपुंसकग्रहणं व्यर्थं सत् परिभाषां ज्ञापयति । परिभाषायां ज्ञापितायान्तु अर्धमिति लिङ्गस्याविवक्षितत्वेन पुल्लिङ्गार्धशब्देनापि समासः प्राप्नोति तद्वारणाय नपुंसकग्रहणं स्वांशे चरितार्थम् ।

---

एकवचन से उसका परामर्श नहीं हो पायेगा । अतः 'गार्ग्यौ' इत्यादि प्रयोग भी नहीं बन पायेगा । अतः परिभाषा मानते हैं—"सूत्रे लिङ्गवचनमतन्त्रम्" सूत्रों में लिङ्ग और वचन अविवक्षित हैं । सूत्र में आये हुए लिङ्ग और वचन की विवक्षा नहीं है । सूत्रकार की यह इच्छा नहीं है कि सूत्र में जिस लिङ्ग का निर्देश है; वही लिया जाय, उससे भिन्न नहीं, या जो वचन निर्दिष्ट है उससे अन्य वचन न लिया जाय; ऐसी बात भी नहीं है। ऐसी अवस्था में 'तस्य' के एक वचन और "अपत्यम्" के नपुंसक को आधार बनाकर यह नहीं मानना चाहिए कि द्विवचनादि और पुलिङ्गादि नहीं लिये जायेंगे ।

"अर्ध नपुंसकम्" २.२.२ सूत्र में नपुंसकग्रहण इस परिभाषा का ज्ञापक है । यदि यह परिभाषा न होती और सूत्र में निर्दिष्ट लिङ्ग विवक्षित होता तो "अर्धम्" में निर्दिष्ट नपुंसक लिङ्ग के कारण ही 'नपुंसक' ही अर्ध शब्द लिया जाता; फिर कण्ठरव से "नपुंसकम्" कहने की क्या आवश्यकता थी ? अतः जानते हैं कि सूत्रस्थ लिङ्ग और स्थालीपुलाकन्यायेन वचन भी अविवक्षित माने जाते हैं । "अर्धम्" यहाँ नपुंसक के रहते हुए भी नपुंसक का ग्रहण "द्विर्बद्धं सुबद्धं भवति" इस न्याय से नित्यनपुंसकत्व रूप अर्थ का बोधक होगा; ऐसा तो नहीं मानना चाहिए; क्योंकि

धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति तस्यापत्यमित्यत्र भाष्ये स्पष्टम् । अत ए'वाकडार'सूत्र एकेति चरितार्थमित्यन्यत्र विस्तरः ॥७४॥

---

ननु अर्धमिति नपुँसकनिर्देशेनैव नपुंसकस्यार्धशब्दस्य समासे सिद्धे पुनर्नपुंसकग्रहणात् द्विर्बद्धं सुबद्धं भवतीति न्यायात् नित्यनपुंसकस्यार्धशब्दस्यैव समासविधानार्थं तच्चरितार्थमिति न तज्ज्ञापकमिति चेन्न यद्यपि अमरकोशे भित्तं शकलखण्डं वा पुँस्यर्धोऽर्धं समेंऽशके (अमरको० काण्ड १ वर्ग ३ श्लो.१६) इत्यत्र समांशवाचिनोऽर्धशब्दस्य नित्यनपुंसकत्वमुक्तम् सिद्धान्तकौमुद्याञ्च भट्टोजिदीक्षितेन प्रोक्तम्-समांशवाच्यर्धशब्दो नित्यं क्लीबे (वर्तते) स प्राग्वत् अर्थात् एकत्वविशिष्टेनावयविना समस्यते इति । दीक्षितस्याशयं विवृण्वन् तत्त्वबोधिनीकारः प्राह-खण्डवाच्यर्घशब्दो न नित्यनपुंसकः-ग्रामार्द्धो, नगरार्द्ध इति यथा । समांसवाची तु नित्यनपुंसकः, स एवेह गृह्यते, पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे (२.२.१) इति पूर्वसूत्र एवार्धशब्दे पठनीयेऽर्धम्" (२.२.२) इति योगविभागेन निर्देशान्नपुंसकत्वे लब्धे पुनर्नपुंसकग्रहणात् यो नित्यनपुंसकलिङ्गः स एवार्धशब्द इह ग्राह्य इत्याशयेन व्याचष्टे-नित्यं क्लीबे स इति ॥ एतेन नपुंसकग्रहणं नित्यनपुंसकार्धशब्दस्य समासविधानार्थमिति

---

कोश में समानांशक-अर्ध-रूप-अर्थ के बोधक अर्ध शब्द को नपुंसक माना गया है तथापि एओङ् (प्रत्या०सू०३) सूत्र के भाष्य में 'अर्ध एकारः' 'अर्ध ओकारः' इत्यादि प्रयोगों में समांशवाचक अर्ध शब्द को भी पुल्लिङ्ग ही देखा गया है, इस तरह समांशवाचक अर्ध शब्द की नित्य नपुंसकता भी प्रामाणिक नहीं है तस्यापत्यमित्यादि सूत्रों में जो लिङ्ग और वचन का उपादान है;उसे धान्यपलाल न्याय से माध्यममात्र मानना चाहिए । जैसे केवल धान्य प्राप्ति की इच्छा रखने वाला व्यक्ति भी खेत से केवल धान्य ला नहीं सकता । इसलिए पुआल भी लाता है, इसी तरह केवल अपत्यादि अर्थ बताने की इच्छा रखने वाले आचार्य भी शब्द में बिना लिङ्ग संख्या लगाये किसी अर्थ का बोध नहीं करा सकते थे; इसलिए लिङ्ग और संख्या का उपादान किया है । इसलिए लिङ्ग-विशेष या संख्याविशेष का उपादान लिङ्ग या संख्या विशेष के बोध के लिए नहीं, किन्तु अर्थबोध में नान्तरीयक (अत्याज्य)माध्यम होने के कारण किया गया है । लिङ्ग के अतन्त्र होने में जैसे अर्ध-नपुंसक म् ''२.२.२ का नपुंसकग्रहण प्रमाण है उसी तरह वचन की अविवक्षा में आकडारादेका संज्ञा १.४.१ सूत्र का एकाग्रहण प्रमाण हैं । अन्यथा पदम् भम् इत्यादि संज्ञाओं में प्रयुक्त एकबचन से ही एक ही संज्ञा हो ऐसा अर्थ हो जाता है तदर्थ किया गया एका-ग्रहण व्यर्थ हो जायगा । इसी बात को मन में रख कर नागेश ने कहा है कि'इसलिए आकडारा देका संज्ञा,सूत्र में एका ग्रहण चारितार्थ हुआ । यह और जगह शेखर आदि में विस्तार से बताया गया है । इति शिवम् ७४

सिद्ध्यति तथापि नागेशमतेन" समांशवाचिनोऽप्यर्धशब्दस्य नित्यनपुंसकत्वं न सिद्ध्यति एओङ्, ऐऔच् (प्रत्याहारसूत्र ३.४) इत्यत्र भाष्ये समांशतात्पर्येणापि प्रयुक्तस्यार्धशब्दस्य "नैव हिलोके नान्यस्मिन् वेदेऽर्ध एकारोऽर्ध ओकारोस्ति" इत्यत्र पुल्लिङ्गदर्शनात्। एवञ्च नपुंसकग्रहणस्य नित्यनपुंसकार्धशब्दग्रहणस्वरूपप्रयोजनाभावात् उक्तपरिभाषाज्ञापकत्वे बाधाभावात्। अतएव तत्त्ववोधिन्यामुक्तम्—'अन्ये तु व्याचख्युः—'अर्धम्' इति निर्देशादेव नपुंसकत्वे सिद्धे नपुंसकग्रहणं 'सूत्रेषु लिङ्गनिर्देशो न विवक्षित "इति ज्ञापयितुम्। तेन तस्येदम् (४.३.१२०) इति लिङ्गत्रयेऽपि भवति इति"। लिङ्गविशेषसंख्याविशेषयोः सूत्रे उपादानं तु धान्यपलालन्यायेन नान्तरीयकतया पाणिनिना कृतं न तु तयोर्विवक्षार्थमिति तस्यापत्यम् ४.१.९२ इति सूत्रे भाष्ये स्पष्टम्। यथा केवलं धान्यार्थिना जनेन पलालं विना धान्यादानेच्छापूर्तेरभावात्पलालमप्यादीयते; तथा लिङ्गविशेषसंख्याविशेषबोधतात्पर्यरहितेनापि पाणिनिप्रभृत्याचार्येण लिङ्गसंख्ये विना शब्देन प्रातिपदिकार्थमात्रबोधस्यासंभवतया तयोरुपादानं कृतमिति भावः। नान्तरीयकतया = अविनाभावतया लिङ्गसंख्ये विना प्रातिपदिकार्थबोधस्यासंभवतया। भावे ३.३.१८ सूत्रे कैयटेन प्रोक्तम्—अन्तरशब्दो गहादिषु पठ्यते, स च विनार्थे वर्तते। अन्तरे भवमन्तरीयम्। तत्र नञ्समासे कृते पृषोदरादित्वाद् भाष्यकारवचनप्रामाण्याद्वा नलोपाभावः। ततः स्वार्थे कन् प्रत्ययः। तस्यापत्यम् ४.१.९२ इति सूत्रस्थं भाष्यमित्थमस्ति—"पुल्लिङ्गेनायं निर्देशः क्रियते एकवचनान्तेन च (अर्थात् तस्यापत्यमित्यत्र तस्येति निर्देशः पुल्लिङ्गेनैकवचनेन च क्रियते इति भावः यद्यपि नपुंसकेऽपि तस्येति भवति तथापि नपुंसकस्यापत्यासंभवादेवमुक्तम्)

तेन पुल्लिङ्गादेवोत्पत्तिःस्यात्, एकवचनान्ताच्च। स्त्रीनपुंसकलिङ्गाद् द्विवचनबहुवचनान्ताच्चेदं न स्यात्॥ (यथा सुमातुरपत्यं सौमात्रः, क्षत्रस्यापत्यं क्षात्रिरित्यादौ न स्यात्) (वा०) "तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात्" तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणम्, किं कारणम् तस्याविवक्षितत्वात्। नात्र निर्देशस्तन्त्रम्। कथं पुनस्तेनैव च नामनिर्देशः क्रियते, तच्चातन्त्रं स्यात्। तत्कारी च भवाँस्तद्द्वेषी च। नान्तरीयकत्वादत्र पुंलिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च। अवश्यं कयाचिद् विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः। तद्यथा-कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय तुषपलालान्युत्सृजति तथा कश्चिन्मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति। एवमिहापि नान्तरीयकत्वात्पुल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च। नह्यत्र निर्देशस्तन्त्रम्॥ अत्र कैयटः—(यद्यपि भाष्ये 'तद्धितार्थनिर्देश' इत्युक्त्वा तद्धितार्थनिर्देश एव लिङ्गवचनमविवक्षितमित्युक्तं तथापि) तद्धितप्रकरणादेवमुक्तम्। सर्वत्रैव हि शास्त्रेऽस्मि-

ननु 'भृशादिभ्यो भुव्यच्वेरि'ति विधीयमानः क्यङ् क्व दिवा भृशा भवन्तीत्यत्रापि स्यादत आह—

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥७५॥**

**नञ्युक्तमिवयुक्तं च यत्किंचिद्दृश्यते तत्र तस्माद्भिन्ने तत्सदृशेऽधिकरणे**

---

न्नान्तरीयकत्वादुपात्तं लिङ्गं संख्या च न विवक्ष्यते। क्वचित् संख्या तु विवक्ष्यते यथा सुप् सुपेति इत्यादि प्राह ॥

धान्यपलालन्यायमूलकत्वादियं युक्तिसिद्धेति भावः। अतएव=वचनस्यातन्त्रत्वादेव आकडारादेका संज्ञा १.४.१ इति सूत्रे एकेति चरितार्थम्। अन्यथा यचि भम् १.४.१८ इत्यत्र भमित्यत्र निर्दिष्टस्यैकत्वस्य विवक्षयैव एकसंज्ञासिद्धौ आकडारादेका संज्ञेति सूत्रमेकसंज्ञाविधानाय कृतं व्यर्थं स्यात्। अथवा आकडारात्संज्ञा इत्येव सूत्रं कर्तव्यम्। संज्ञेत्यत्र निर्दिष्टैकत्वविवक्षयैव एकस्या एव संज्ञायाः सिद्धौ एकेति कृतं व्यर्थं सज्ज्ञापयति सूत्रे वचनमतन्त्रमिति। इत्थं परिभाषोक्तस्य लिङ्गस्यातन्त्रत्वे अर्धं नपुंसकमित्यत्रत्यं नपुंसकग्रहणं प्रमाणम् वचनस्य चातन्त्रत्वे प्रमाणमाकडारादेका संज्ञेति सूत्रस्थमेकाग्रहणमिति दर्शितमिति। अन्यत्र=शेखरादौ ॥ इति शिवम् ७४

**नञिवयुक्तम्......ह्यर्थगतिः ७५**

ननु रात्रौ ये भृशाः नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थके क्व दिवा भृशा भवन्ति इत्यत्राच्व्यन्तत्वात् तथा क्यङ् कुतो न विधीयते यथा अभृशो भृशो भवति भृशायते इत्यादौ 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' ३.१.१२ इत्यनेन विधीयत इत्यत आह—'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति परिभाषाम्। नञ्युक्तमिवयुक्तं च यत्किञ्चिदृश्यते तत्र तस्माद्भिन्ने तत्सदृशेधिकरणे (द्रव्येपदार्थे)कार्यं विज्ञायते हि=यतः तथार्थगतिःतथार्थस्य गतिरवगतिर्बोधो जायते लोके। तथाहि=नञ्युक्तादब्राह्मणादिशब्दात् ब्राह्मणभिन्नब्राह्मणसदृशमानवार्थस्य प्रतीतिर्भवति

---

**नञिवयुक्तम्.........ह्यर्थगति ॥७५॥**

"भृशदिभ्यो भुव्यच्वेः" इस सूत्र से विधीयमान क्यङ् प्रत्यय 'क्व दिवा भृशा भवन्ति" में होना चाहिए क्योंकि यहाँ भृश शब्द च्व्यन्त से भिन्न है। इसलिए परिभाषा मानते हैं 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" नञ् और इव से युक्त पद स्वभिन्न और स्वसदृश अर्थ का बोध कराते हैं, क्योंकि ऐसे पदों से इसी प्रकार का अर्थावबोध हुआ करता है। अर्थात् नञ्-युक्त-पद और इव-युक्त-पद से स्वसादृश्य और स्व भेद इन दोनो सम्बन्धों से स्वविशिष्ट अर्थ का बोध होता है। नञ्पद और इवपद वहाँ तात्पर्य ग्राहक माने जाते हैं अब्राह्मणः और चन्द्र इव इत्यादि स्थलों में ब्राह्मणभिन्न-ब्राह्मणसदृश क्षत्रियादि का ही बोध होता है, पत्थर आदि का नहीं चन्द्रभिन्न और चन्द्रसदृश मुखादि की प्रतीति होती है,

द्रव्ये कार्यं विज्ञायते । हि यतस्तथार्थगतिरस्ति । न ह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति । अतश्च्व्यन्तसदृशेऽभूततद्भावविषये क्यङिति नो तद्दोषः ।

औषधेश्च विभक्तावप्रथमायामित्यादौ विभक्तिग्रहणं ह्येतन्न्यायसिद्धार्था-

---

लोके तथैव शास्त्रेऽच्वेरित्यादावपि च्व्यन्तभिन्नच्व्यन्तसदृशार्थबोधात् अभूततदभाव इत्यर्थलाभात् अभूततद्भावे एव क्यङ्प्रत्ययो विधीयते । अतः अभृशो भृशो भवतीत्यादौ क्यङ् प्रत्ययो जायते । क्व दिवा भृशाभवन्तीत्यादावभूततद्भावाभावान्न क्यङ् इति तात्पर्यम् । तदेव दर्शयति न ह्यब्राह्मणमानयेति प्रयुक्ते प्रयोज्यो लोष्टमानीय पालिताऽदेशो भवति । अतएव नञोऽभावमात्रं नार्थः । यद्यभावमात्रार्थःस्यात्तदा लोष्टे ब्राह्मणत्वाभावस्य सत्वात् प्रयोज्यः अब्राह्मणमानयेत्याज्ञप्तो लोष्टमानीय पालिताज्ञोऽवश्याङ्गीकरणीयः । न च तथा लोके क्वापि दृश्यते अतो ज्ञायते अब्राह्मणमानयेत्यादिवाक्ये प्रयुक्तस्य नञ्युक्तपदस्याब्राह्मणस्य लोकैः ब्राह्मणभिन्नब्राह्मणसदृशार्थोऽवगम्यत इति तथैव च्व्यन्तभिन्नच्व्यन्तसदृशार्थे विद्यमान भृशादिभ्यः क्यङ् इत्यर्थस्याच्विपदादवगमादभूततद्भावे क्यङ् भवतीति तात्पर्यं नोक्तदोष इति ॥

नचैवम् औषधेश्च विभक्तावप्रथमायाम् ६.३.१३२ इत्यत्र विभक्ताविति कथनं व्यर्थम् अप्रथमायामिति नञ्युक्तपदस्य प्रथमाभिन्नप्रथमासदृशविभक्तावित्यर्थस्योक्तन्यायेनैव लाभसंभवादिति वाच्यम् विभक्तिग्रहणस्योक्तन्यायसिद्धार्थानुवादकत्वमेवेति स्वीकारेणादोषात् । अतएव येन 'विभक्तिग्रहणमुक्तन्यायानित्यत्वज्ञापक' मित्युक्तं तन्मतमपि खण्डितम् । अनित्यत्वं तदैव कस्यापि न्यायस्य स्वीक्रियते यदाऽनित्यत्व-

---

लोष्ट आदि की नहीं । उसी तरह अच्वेः कहने से भी च्व्यन्तभिन्न और च्व्यन्तसदृश विषय में अर्थात् अभूततद्भाव विषय में ऐसा अर्थ लिया जायगा और उसी अर्थ में क्यङ् होगा । इस लिए कोई दोष नहीं हुआ । शब्द के अनुसार परिभाषा की व्याख्या इस प्रकार होगी नञ्-युक्त और इवयुक्त जितने पद (प्रयोग के रूप में) दिखाई देते हैं; वहाँ सब जगह उससे भिन्न उसके सदृश (अधिकरण) द्रव्य में कार्य होने का बोध होता है । 'हि' का अर्थ 'यतः, अर्थात् क्योंकि है, क्योंकि उसी प्रकार से (ऐसे शब्दों से ) अर्थ का बोध हुआ करता है ''अब्राह्मणमानय', इस प्रकार की आज्ञा देने पर कोई भी व्यक्ति लोष्ट (ठीकरी) लाकर सामने रखकर आज्ञा-पालक नहीं माना जाता । इस तरह शब्दस्वभाव सिद्ध पूर्वोक्त परिभाषा के बल से 'अच्वेः का अर्थ होगा च्व्यन्तभिन्न और च्व्यन्त सदृश अर्थात् अभूततद्भाव विषय । उसी अर्थ में क्यङ् होगा । इसलिए उक्तदोष नहीं होगा । ''तथाहि'' शब्द के द्वारा यह बताया गया है कि ऐसा अर्थ शब्द शक्ति के स्वभाव से ही निकल जाता है । इस लिए इस परिभाषा के ज्ञापक के बारे में चिन्तित होने की आवश्यकता नहीं है ।

यद्यपि इस न्याय के मानने से ''औषधेश्च विभक्तावप्रथमायाम्'' ६.३.१३२ में विभक्ति ग्रहण व्यर्थ हो जाता है क्योंकि '' अप्रथमायाम्'' में नञ् होने के कारण

**नवाद एव। एतेन विभक्तावित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः। अनित्यत्वे भाष्यसम्मतफलाभावात्। अतएव 'कर्त्तरि च' इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम्।**

---

स्वीकारस्य किमपि फलं भवेत्, अनित्यत्वस्य भाष्यसम्मतफलाभावेनानित्यत्व-स्वीकारो न युज्यते। उक्तन्यायस्य नित्यत्वादेव 'अकर्तरि च कारके संज्ञायाम् ३.३.१९ इत्यत्र कारके इति भाष्ये प्रत्याख्यातम्। तथाहि:—"**नञिवयुक्तमन्य-सदृशाधिकरणे तथा ह्यर्थगतिः**" नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थोगम्यते। तद्यथा 'अब्राह्मणमानय' इत्युक्ते ब्राह्मणसदृश पुरुषमानयति। नासौ लोष्टमानीय कृती भवति। एवमिहापि "अकर्तरि' इति कर्तृप्रतिषेधादन्य-स्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते। किं चान्यदकर्तृ कर्तृसदृशम्? कारकम्॥ उत्तरार्थं तर्हि कारकग्रहणं कर्तव्यम्—'परिमाणाख्यायां सर्वेभ्यः ३.३.२० कारके यथा स्यात्।......एतदपि नास्ति प्रयोजनम्। अत्राप्यकर्तरीत्येवानुवर्तिष्यते॥

इत्थं भाष्ये नञिवयुक्तन्यायं स्वीकृत्य सूत्रस्थं कारकग्रहणं प्रत्याख्यातम्। यदि हि 'औषधेश्चे' तिसूत्रस्थं विभक्तिग्रहणमुक्तन्यायानित्यत्वे ज्ञापकं स्यात्तदा तुल्यन्यायादत्रत्यकारकग्रहणस्यापि तथैव ज्ञापकत्वं वक्तुमुचितम्। अथवा यद्ययंन्यायोऽ-नित्यः स्यात्तदा भाष्ये साऽनित्येति प्रदर्श्य कारकग्रहणस्यावश्यकतां दर्शयेत्। नच तथा। अतोज्ञायते नायं न्यायोऽनित्योऽस्तीति।

---

उससे प्रथमाभिन्न और प्रथमासदृश विभक्ति ली जा सकती है पुनः 'विभक्तौ' कहने की आवश्यकता नहीं रह जाती है। इसी तरह अकर्तरि च करके संज्ञायाम्" ३.३.१९ में कारकग्रहण भी निरर्थक हो जाता है, क्योंकि अकर्तरि का "कर्तरि," पद, कर्तृभिन्न और कर्तृ सदृश का बोधक होकर 'कारक का प्रत्यायक हो ही जाता पुनः 'कारके' कहने की कोई आवश्यकता शेष नहीं रह जाती है; तथापि औषधेश्च विभक्तावप्रथमायाम् "में विभक्ति ग्रहण को इस न्याय से सिद्ध अर्थ का अनुवादक मान लेना चाहिए जैसे अनुवादक पूर्व सिद्ध अर्थ को दूसरे शब्दों में कहता हैं;उसी तरह "विभक्तौ" यह पद अप्रथमायाम्" के द्वारा जो अर्थ सिद्ध था; उसे शब्दान्तर से कहकर अधिक स्पष्ट करता है। इस तरह उसे व्यर्थ नहीं कहा जा सकता।

कुछ विद्वान् पूर्व निर्दिष्ट सूत्र के "विभक्तौ" पद को इस परिभाषा की अनित्यता का ज्ञापक मानते हैं परन्तु उनका कथन ठीक नहीं है;क्योंकि किसी नियम को अनित्य तब माना जाता है जबकि उसके अनित्य होने का कोई ऐसा फल हो जिसे भाष्यकार ने स्वीकार किया हो। इस परिभाषा को भी हम तब अनित्य मानते जब कि अनित्य होने का कोई भाष्यसमत फल होता। ऐसा नहीं होने के कारण "विभक्तौ" को परिभाषा की अनित्यता में ज्ञापक मानना युक्तियुक्त और सफल नहीं है। इसलिए "अकर्तरि च कारके संज्ञायाम्" में " कारक" ग्रहण को निरर्थक

**स्पष्टा चेयं 'भृशादिभ्य' इतिसूत्रे भाष्ये। अत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति। निरूपितं चैतन्मञ्जूषायाम् ।।७५।।**

---

स्पष्टा चेयं (परिभाषा) 'भृशादिभ्यः' ३.१.१२ इति सूत्रे भाष्ये। तथाहि—ननु चोक्तमिह कस्मान्न भवति क्व दिवा भृशा भवन्तीति। नञिवयुक्तमन्यसदृशाधिकरणे यथाह्यर्थगतिः। नञ्युक्तमिवयुक्तं वा यत्किञ्चिदिह दृश्यते तत्रान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते। तथा ह्यर्थो गम्यते। अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवति। एवमिहाप्यच्वेरिति च्विप्रतिषेधादन्यस्मिन्नच्व्यन्ते च्विसदृशे कार्यं विज्ञायते। किञ्चान्यदतोऽन्यदच्व्यन्ते च्विसदृशम्। अभूततद्भावः ।। इति ।।

ननु न्यायेनानेन नञ्युक्तं पदं भेदविशिष्टसादृश्यबोधकम् इवयुक्तञ्च सादृश्यविशिष्टभेदबोधकमिति सिद्धं भवति तत्रेवयुक्तस्य स्वसदृशबोधकत्वस्वीकारेणैव तत्सदृशस्य तद्भिन्नस्य च बोधः स्वतः एव सिद्ध्येत् सादृश्यस्य "तद्भिन्नत्वेसति तद्गतभूयोधर्मवत्त्वमितिलक्षणलक्षितस्य भेदघटितत्वादिति चेच्छ्रूयताम् सादृश्यमिह शास्त्रे तद्गतभूयोधर्मवत्त्वमात्रं गृह्यते न तु तद्भिन्नत्वे सतीति भेदघटितम् इत्यपि पूर्वस्मिन्न्याये प्रयुक्तेनान्यसदृशेत्यत्रत्यान्यपदेन सूच्यते। लोके सादृश्यस्य भेदाघटितत्वमपि दृश्यत एव—यथा "गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादौ। सादृश्यं चैतादृशं निरूपितन्मञ्जूषायां ग्रन्थकृता। अधिकं किमप्येतद्विषये जिज्ञास्यते चेन्मदीया मञ्जूषोद्घाटनीयेति भाव इति शिवम् ।। ७५

---

मानकर भाष्यकार ने प्रत्याख्यान कर दिया है। अतः वह भी इस न्याय के अनित्यत्व का ज्ञापक नहीं हो सकता। यह परिभाषा भृशादिभ्यः ३.१.१२ सूत्र के भाष्य में स्पष्ट है। क्व दिवा भृशाभवन्ति' (ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्ति में भृशादिभ्यः ३.१.१२ सूत्र से क्यङ् प्रत्यय क्यों नहीं होता है ऐसा प्रश्न उठाकर उत्तर दिया गया कि नञ्युक्त या इवयुक्त जो पद दिखाई देते हैं वे तद्भिन्न और तत्सदृश में कार्य का विधान करते हैं। इस तरह ब्राह्मणभिन्न ब्राह्मणसदृश मनुष्य अर्थ के बोधक अब्राह्मण शब्द की तरह अच्वि शब्द भी च्व्यन्त भिन्न च्व्यन्त सदृश अभूततद्भाव अर्थ में क्यङ् का विधान करेगा। यहाँ अभूततद्भाव अर्थ नहीं होने से दोष नहीं होगा। परिभाषा में अन्यसदृशाधिकरणे शब्द का प्रयोग है। इससे मालूम होता है कि वैयाकरणों के मत में सादृश्य का तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्" यह लक्षण मान्य नहीं है। क्योंकि यदि सादृश्य यहाँ भेदघटित होता तो सादृश्य कहने से ही "तद्भिन्न" का बोध हो जाता फिर परिभाषा में अन्यपद का समावेश क्यों किया जाता ?

यह बात 'मञ्जूषा में निपातार्थनिर्णयप्रकरण में इवार्थनिरूपण के सन्दर्भ में विस्तार से बतायी गयी है। इति शिवम्—७५

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाट्टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादत आह—

## गतिकारकोपपदानाम्.........सुबुत्पत्ते ७६ ॥

व्याजिघ्रतीति विग्रहे वि आङ् पूर्वकात् घ्राधातोः आतश्चोपसर्गे ३.१.१३६ इति कप्रत्ययः पाघ्राध्माधेट्दृशः शः ३,१.१३७ इति शस्तु संज्ञायां न भवति, उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २.१.५६ इत्यत्र व्याघ्रादिभिरिति निर्देशात् । 'आतो लोप इटि च' ६.४.६४ इत्याकारलोपे वि+आ+घ्र इति स्थिते यणि व्याङोर्घ्रशब्देन सुबुत्पत्तेः प्रागेव कुगतिप्रादयः २.२.१८ इति गतिसमासे व्याघ्र-इत्यस्य जातिवाचकत्वेन जातेरस्त्रीविषयादयोपधात्' ४.१.६३ इति ङीषि व्याघ्रीति । यद्यप्यत्रोपपदसमासोऽपि कर्तुं शक्यते, तथापि गतिग्रहणमाङो घ्रशब्देन समासे पश्चादाघ्रशब्देन विशब्दस्य समासार्थमावश्यकमेव । आङ्पूर्वकाद्घ्राधातोरत्र कप्रत्ययो विहितः । अत आङः उपपदत्वेऽपि विशब्दस्योपपदत्वाङ्गीकारासंभवात् । अन्त्ये तु आङोपपदसमास एव, 'आतश्चोपसर्गे' ३.१.१३६ इत्यत्रोपसर्गे इति सप्तमीनिर्देशेनोपपदत्वादित्याहुः ॥ एवमश्वेनाक्रायि इति विग्रहे अश्व टा 'क्रीत' इतिक्तान्तत्वेन कृदन्तस्य सुबुत्पत्तेः प्रागेव कर्तृकरणे २.१.३२ इति समासे प्रातिपदिकत्वाद् विभक्तिलोपे अश्वक्रीत इत्यस्य करणपूर्वकत्वात् 'क्रीतात्करणपूर्वात्' ४.१.५० इति ङीषि अश्वक्रीतीति सिद्ध्यति । एवं कच्छपीति कच्छेन पिबतीति विग्रहे 'सुपि स्थः' ३.२.४ इत्यत्र 'सुपि' इति योगविभागात् कः 'आतो लोपे कच्छ टा इत्यस्य प इत्यनेनानुत्पन्न-

## गतिकारकोपपदानाम्......सुबुत्पत्तेः ॥७६

उपपदमतिङ् २.२.१९ सूत्र से व्याघ्री और कच्छपी में वि+आ+घ्रा सु कच्छ भ्याम् पा सु को ही समास होगा, क्योंकि समासविधायक सूत्रों में सुबामन्त्रिते २.१.२ सूत्र से सुप् की और सह सुपा २.१.४ से सुपा की अनुवृत्ति होती है । इसलिए उपपदमतिङ्'का भी अर्थ होगा कि उपपद सुबन्त को तिङ्भिन्न सुबन्त के साथ समास हो । ऐसी स्थिति में उत्तरखण्ड में सुप् लाने के लिए स्वार्थ-द्रव्य-लिङ्ग-सङ्ख्याकारकाणां क्रमेणैवोत्पत्तिः इस सिद्धान्त के अनुसार कारक बोधक सुप् प्रत्यय लाने के पहले लिङ्ग बोधक प्रत्यय की अन्तरंगत्वात् पूर्वोपस्थिति होने के कारण लाना आवश्यक होगा . 'वि+आ+घ्र' कच्छ भ्याम् प इनमें जातिवाचकता नहीं होने के कारण "जातेरस्त्री— ४.१.६३ की प्राप्ति नही होने से टाप् प्रत्यय ही स्त्रीत्व बोधक प्रत्यय के रूप में होगा; फिर दीर्घ करने पर कच्छ भ्याम् पासु और वि आ घ्रासु को समासादि कार्य करने पर व्याघ्रा कच्छपा में अदन्त नहीं होने के कारण जातेरस्त्री ४.१.६३ की प्राप्ति होगी नहीं । इस तरह अनिष्ट रूप बन जायगा । अतः परिभाषा मानते हैं ।

## गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥७६॥

सुपैव समासे कच्छप इति जाते तस्य च जातिवाचकत्वात् ङीषि कच्छपीति सिद्ध्यति इति वर्तते वस्तुस्थितिः। परन्तु तत्तत्समासविधायकसूत्रेषु सुपेत्यस्यानुवृत्तस्य जागरूकत्वात्सर्वत्र सुबुत्पत्यनन्तरं कृदन्तशब्देन समासः स्यात्, सुबुत्पत्तिश्च लिङ्गबोधकप्रत्ययादनन्तरमेव स्यात् स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमेणैवोपस्थितिरिति सिद्धान्तात्। येन क्रमेणार्थोपस्थितिस्तेनैव क्रमेण तत्तदर्थनिमित्तककार्योत्पत्तेरौचित्यात्। असमस्तस्य वि+आ+घ्र इत्यस्य पृथक्स्थितस्य कृतसन्धेरपि व्या+घ्र इत्यस्य जातिवाचकत्वाभावान्ङीषोऽप्राप्त्या टापि ततः सुप्रत्यये व्या+घ्रा सु इत्यनयोः समासे कृतेऽपि व्याघ्रा इत्यस्य अदन्तत्वाभावाज्जातेरस्त्रीविषयादित्यस्याप्राप्त्या व्याघ्रीति न सिद्ध्येत्॥ एवम् अश्व टा क्रीत इत्यवस्थायां समासार्थस्य सुप उत्पत्तिसम्पादनाय प्रथमं लिङ्गबोधकस्य प्रत्ययस्यावश्यकतया इदानीञ्च करणपूर्वकक्रीतान्तशब्दत्वाभावेन 'क्रीतात् करणपूर्वात्' ४.१.५० इत्यस्याप्राप्त्या अगत्या टापि ततः सुपि अश्व टा क्रीता सु इत्यस्य समासे सुपोर्लुकि 'अश्वक्रीता' इत्यस्यादन्तत्वाभावेन ङीषोऽप्राप्त्या रूपासिद्धिः॥ कच्छपीत्यस्यापीयमेव दुर्गतिः। अत्रापि समासार्थमपेक्षणीयस्य सुबन्तत्वस्य सम्पादनाय यस्य सुप उत्पत्तेरावश्यकता, तस्याः सुबुत्पत्तेः प्राक् लिङ्गबोधकस्य कस्यापि प्रत्ययस्यावश्यकर्तव्यतया इदानीञ्च कच्छ टा प इत्यवस्थायां जातिबोधकत्वाभावेन जातेरस्त्रीविषयादितिङीषोऽप्राप्त्या अगत्या टापि ततः सुपि समासादौ जातेऽपि 'कच्छपा' इत्यस्यादन्तत्वाज्जातिलक्षणङीषोऽप्राप्त्या कच्छपीत्यस्यासिद्धिः। अतः कोऽपि तादृश उपायः करणीयः येन पूर्वत्र प्रयोगेषु सुबुत्पत्तेः प्रागेव कृदन्तैः समासः स्यात् स एवोपाय उच्यते—**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः**" इति परिभाषामवतारयता। नच उपसञ्जनिष्यमाणनिमित्तोप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते (परि० सं० ६५) इति न्यायस्य तत्रापि प्रवृत्तिः स्वीकृता यत्र उत्सर्गशास्त्रस्य प्रवृत्यभावसंभावनातोऽप्यपवादशास्त्रस्य प्रवृत्तिः सम्भाविताऽस्ति; एवञ्च कच्छपीत्यादौ यद्यत्र टापः प्रवृत्यभावः स्यात्तदा समासादिकार्यानन्तरं ङीष् स्यादिति संभावनायाः सत्वेनैतां परिभाषां विनापि

---

**"गतिकारकोपपदानां कृद्भिःसह समासवचनं प्राक् सुबुत्पत्तेः"**

गतिसंज्ञक कारक-बोधक और उपपदसंज्ञक शब्दों को कृदन्त शब्दों के साथ सुप् की उत्पत्ति से पहले ही समास होता है। अर्थात् गतिसंज्ञक, कारकबोधक और उपपदसंज्ञक शब्दों को सुप्प्रत्ययरहित कृदन्त के साथ ही समास करना चाहिए। इस न्याय के बल से वि+आ का सुप्प्रत्ययरहित घ्र के साथ ही समास हुआ। कच्छ भ्याम् का सुप्प्रत्यय रहित 'प' के साथ समास हुआ। इस प्रकार व्याघ्र और 'कच्छप' बना, ये दोनों जातिवाचक अदन्त प्रातिपदिक है ही। अतः जातेरस्त्रीविषयात्

'उपपदमि'ति सूत्रेऽतिङ्ग्रहणेन कुगतीत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुपेत्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्धेयम् ।

---

कच्छ्रांत्यादितिसद्धाववरणमसङ्गतमिति वाच्यम् उक्तन्यायस्येदमेव तात्पर्यं यत् भविष्यत्प्रवृत्तिकापवादशास्त्रविषयातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्ये संकोचः कार्य इति प्रकृते यदि टाब्रूपोत्सर्गशास्त्रीयोद्देश्ये जातिवाचकविषयातिरिक्तत्वेन संकोचेऽपि व्याघ्रेत्यस्य जातिवाचकत्वेन तत्र टापोऽप्राप्तावपि 'घ्र' इत्यस्य जातिवाचकत्वाभावेन संकोचितविषयेतरतया टाबापद्यत एवेति अवतरणस्य संगतेः । किञ्चोपसंजनिष्यमाणेति न्यायोऽचरितार्थापवादविषयो यथा 'दधती'त्यादौ । तत्र हि अचरितार्थापवादः अभ्यस्तादिति भोऽन्तं बाधतेऽनेन न्यायेन; इह तु 'जातेरस्त्रीविषयादयोपधात्' ४.१.६३ इत्यपवादत्वेन विवक्षितं शास्त्रं सिंहीत्यादौ चरितार्थमिति तन्न्यायो नेह प्रवर्तत इत्यवतरणं सुसंगतमेव ।

परिभाषायां ज्ञापकत्वं दर्शयति—'उपपदम्' इति सूत्र इत्यादिना 'उपपदमतिङ्' २.२.१९ इतिसूत्रेऽतिङ्ग्रहणाभावेऽपि सह सुपा २.१.४ इति सूत्रात् सुपेत्यनुवृत्त्या उपपदं सुबन्तं समर्थेन सुबन्तेन सह समस्यते इत्यर्थेन मा (भवान्) भूत् इत्यत्र 'माङि लुङ्' ३.३.१७५ इत्यत्र माङीति सप्तमीनिर्देशात् 'मा' इत्यस्य 'तत्रोपपदं सप्तमीस्थम्' ३.१.९२ इति उपपदत्वेऽपि 'भूत्' इत्यस्य सुबन्तत्वाभावेन समासाप्राप्त्याऽतिङ्ग्रहणं व्यर्थं सज्ज्ञापयति सुपेत्येतन्नेहानुवर्तते । इत्थमुपपदं सुबन्तं समर्थेन

---

४.१.६३ से ङीष् होने में कोई बाधा नहीं हुई। उपपदमतिङ्२.२.१९ इस सूत्र में किया गया अतिङ् ग्रहण उपपद अंश में इस परिभाषा का ज्ञापक हैं। यदि उपपदमतिङ् में सुपा की अनुवृत्ति हो तब तो अतिङ् के अभाव में भी अर्थ होगा कि सुबन्त उपपद, समर्थ सुबन्त के साथ समस्त होता है। ऐसा अर्थ करने पर "माभूत्" में "भूत्" शब्द को सुबन्त न होने के कारण ही उपपद 'मा' के साथ ('माङिलुङ्' ३.३.१७५ में सप्तमी निर्दिष्ट होने से माङ् उपपद है ) समास न होगा फिर वहाँ समास की निवृत्ति के लिए किया गया 'अतिङ्' ग्रहण व्यर्थ होकर ज्ञापन करेगा है कि "सुपा" की यहाँ अनुवृत्ति नहीं है। इससे सिद्ध हो गया कि सुबन्त उपपद का समर्थ के साथ समास हो। इससे परिभाषा का उपपद अंश सिद्ध हुआ। उपपदादि के साथ दो प्रकार के समर्थ शब्दों के मिलने की संभावना है—(१)कृदन्त(२)तिङन्त । सूत्रों में'अतिङ्' निर्देश के कारण तिङन्त नहीं लिया जा सकता। अतः कृदन्त ही लिया जायगा। इस लिए अर्थ होगा कि उपपदादि को कृदन्त के साथ सुबुत्पत्ति से पहले ही समास होगा परिभाषा में कृद्भिः का अर्थ 'कृदन्तैः'है, क्योंकि कृत् प्रत्यय है और प्रत्ययग्रहण में तदन्त का ग्रहण होता है। कुगति प्रादयः २.२.१८ सूत्र में योगविभाग करके'गति' भाग में भी 'अतिङ्' का अपकर्षण होने के कारण वहाँ भी उस अपकृष्ट अतिङ् द्वारा

सह नित्यं समस्यत इत्यर्थे मा भूत् इत्यत्र समर्थेन 'भूत्' इत्यनेन उपपदस्य माङः समासवारणायातिङ्ग्रहणं स्वांशे चरितार्थम् । तत्रोपपदमित्युपपदसंज्ञक-सुबन्तं द्विविधेनैव समर्थेन सहोपलब्धुं शक्यते तिङन्तरूपेण कृदन्तरूपेण च । तत्रातिङ्' इत्युक्तेः तिङन्तेन समासाप्राप्त्या कृदन्तरूप एव समर्थोऽव-शिष्टः । इत्थं सिद्धं यदुपपदस्य कृदन्तेन समर्थेन सह सुबुत्पत्तेः प्रागेव समासो भव-तीति । परिभाषाप्रतिपाद्यार्थत्रयेऽन्तिमोंशः सिद्धः । एवं गतेरपि कृद्भिः प्राक् सुबुत्पत्तेः समास इत्यादिमांशे ज्ञापकं 'कुगतिप्रादयः २.२.१८ इत्यत्र गतिग्रहणम् । तत्र हि 'गतिरिति योगं विभज्य कुप्रादयः सुबन्ताः सुबन्तेन समर्थेन समस्यन्ते इति प्रथमयोगस्यार्थं विधाय द्वितीययोगे'उपपदमतिङ्' २.२ १९ इति सूत्रादतिङ्ग्रहणमपकृष्य गतिश्च सुबन्तोऽतिङन्तेन समर्थेन समस्यते इत्यर्थः करणीयः, तत्रापि अतिङोऽपकर्षणं विनापि सुपेत्यस्यानुवृत्तिसत्वात् गतिश्च सुबन्तः समर्थेन सुबन्तेन समस्यते इत्यर्थकरणेनैवातिङन्तेन समासे सिद्धेऽतिङोऽपकर्षणं व्यर्थं सज्-ज्ञापयति सुपेत्येतन्नेहानुवर्त्तते । तेन गतेरपि तिङन्तभिन्नेन समर्थेन अर्थात् कृदन्तेन सुबुत्पत्तेः प्रागेव समासो भवतीति सिद्धम् । इत्थं परिभाषाप्रतिपाद्यार्थत्रये आदिमों-ऽशोऽपि सिद्धः । यद्यपीत्थं गत्युपपदयोरेव कृद्भिः सह समासवचनं प्राक्सुबुत्पत्ते-रित्येव लब्धं; तथापि प्रतिपाद्यत्रितयविषयिणीयं परिभाषा एकदेशानुमत्या कार-कांशेऽपि सिद्धेति स्वीक्रियते । एकदेशानुमत्या एकदेशे एकस्मिन् स्थाने स्थाल्यादौ स्थितेषु तण्डुलेषु एकं द्वौ वा तण्डुलौ अङ्गुल्यादिना सिद्धं सिद्धौ वेति विज्ञाय सर्वे तण्डुलाः सिद्धा ओदनतां गताश्चेति यथा निर्णीयते तथैव एकदेशे एकवाक्ये प्रतिपादि-तेषु बहुषु पदार्थेषु एकत्र द्वयोर्वा प्रमाणं प्राप्यान्यत्रापि प्रामाणं भवेदेवेत्याकारिका मत्यनुविधायिका या मतिः बुद्धिः (निश्चयात्मिका बुद्धिः) क्रियते सा एकदेशानुमति-रुच्यते; तया एकदेशानुमत्या स्थालीपुलाकन्यायेन परिभाषागतकारकांशोऽपि सिद्ध एवेति भावः ।

---

सुपा की निवृत्ति के ज्ञापन से परिभाषा का गत्यंश सिद्ध हो गया स्थाली पुलाकन्यायेन या एकदेशानुमति से परिभाषा में कारकांश भी जोड़ दिया गया है। अर्थात् जैसे रसोइया रसोई बनाते समय एक चावल के दाने को हाथ से दबाकर सीझा हुआ जानकर सभी चावल को सिद्ध समझता है। या यों कहिए कि रसोई के एक देश अर्थात् एक चावल के द्वारा जैसे वहां पूरे पाक के सिद्ध होने का अनुमान किया जाता है; उसी तरह यहाँ गति और उपपद भाग में पूर्वोक्त प्रमाणों को देखकर परिभाषा के कारक भाग को प्रमाणित मान लिया गया है। क्योंकि जैसे गति और उपपद को कृदन्त के साथ सुबुत्पत्ति से पहले समास होने के सिद्धान्त को बिना माने व्याघ्री और कच्छपी जैसे प्रयोग नहीं बनते; उसी तरह कारक को सुबुत्पत्ति से पूर्व कृदन्त के साथ

**तेनाश्वक्रीती सिद्धा। अन्यथा पूर्वं टाप्यदन्तत्वाभावात् 'क्रीतात् करणपूर्वा-दि'ति ङीष् न स्यात्॥**

**अस्या अनित्यत्वात् क्वचित्सुबुत्पत्यन्तरमपि समासो यथा सा हि तस्य धनक्रीतेति।**

---

'क्रीतात् करणपूर्वात्' ४.१.५० इति सूत्रं कारकांशे ज्ञापकं ज्ञेयम्। यदि कारकं कृदन्तेन सुबुत्पत्तेः प्राङ्न समस्येत; तदा करणपूर्वकक्रीतान्तादन्तप्रातिपदि-कस्याभावेन सूत्रमिदं व्यर्थमेव स्यात्। अश्वक्रीतेत्येतादृशकरणपूर्वकक्रीतान्तादन्त-शब्दस्य सिद्धये सुबुत्पत्तेः प्राक् समासविधानमावश्यकम्। अन्यथा स्वार्थद्रव्यलिङ्ग-संख्याकारकाणां क्रमेणोपस्थितिरिति नियमेन कारकबोधकप्रत्ययस्य सुप उत्पत्तेः प्राक् लिङ्गबोधकप्रत्ययोपत्तेरनिवार्यतया अश्व टा क्रीत इत्यवस्थायां करणपूर्वक-क्रीतान्तशब्दत्वाभावेन ङीषोऽप्राप्त्या टापि अदन्तत्वाभावेन सूत्राप्राप्त्या सूत्रं व्यर्थं स्यात्। व्यर्थं सज्ज्ञापयति कारकस्य कृद्भिः समासवचनं प्राक्सुबुत्पत्तेरिति। एव-ञ्चैकदेशानुमत्या यन्निर्णीतं तदवितथमभूत्। तदेतत्सर्वमाह—तेनाश्वक्रीती······ ङीष् न स्यात् इति। अस्या अनित्यत्वम् "अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकु-शङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः "८.३.९७" इति सूत्रे गोभूमि-द्वित्रिकुशेकुशङ्कुप्रभृतिशब्दग्रहणेन ज्ञाप्यते। यदीयं नित्या स्यात् तदा 'गोष्ठः' 'भूमिष्ठः' द्विष्ठः' 'त्रिष्ठः' कुशेष्ठः' 'कुष्ठः' 'शङ्कुष्ठः' 'अङ्गुष्ठः' इत्यादौ सुबु-त्पत्तेः प्रागेवानया समासे सम्पादिते 'स्थ' इत्यस्य पदत्वाभावेन सकारस्य पदादित्वा-

---

समास होने की बात को बिना स्वीकार किये "अश्वक्रीती" प्रयोग की सिद्धि नहीं हो सकती। परिभाषा में 'कारकांश' के निवेश के कारण अश्वक्रीती बना। "अश्वेना-क्रायि" इस विग्रह में अश्व टा और क्रीत को सुबुत्पत्ति से पहले समास करने पर निष्पन्न अश्वक्रीत शब्द में क्रीत शब्द को करणपूर्वक होने के कारण 'क्रीतात् करण पूर्वात्'से ङीष् होने से अश्वक्रीती बनता है। यदि यह परिभाषा न होती या इसमें 'कारक' का निवेश नहीं होता तो "क्रीत" शब्द से सुप् लाने पर ही समास होता। सुप्प्रत्यय लाने के लिए स्वार्थ द्रव्य-लिङ्ग-संख्याकारकाणांक्रमेणोत्पत्तिः' इस न्याय से कारक बोधक प्रत्यय सुप् की उत्पत्ति के पहले लिङ्गबोधक प्रत्यय का करना आवश्यक होता है। इस तरह अश्व टा क्रीत ऐसी स्थिति में करणपूर्वक क्रीत प्रातिपदिक का अभाव होने के कारण 'क्रीतात् करण पूर्वात् ४.१.५० की प्राप्ति नहीं होने से टाप् प्रत्यय होता; फिर सु विभक्ति आने पर समासादि करने से बने हुए "अश्वक्रीता" प्रातिपदिक में अदन्तत्व के अभाव से 'क्रीतात् करण पूर्वात्' से ङीष् नहीं होता और अश्वक्रीती शब्द नहीं बनता। इतना ही नहीं "क्रीतात् करणपूर्वात्" यह सूत्र भी व्यर्थ हो जाता। इस तरह परिभाषा में कारकांश के निवेश का प्रमाण इसी सूत्र को माना जाना चाहिए।

अन्ये त्वनित्यत्वे न मानं तत्राजादित्वाट्टाबित्याहुः । अत एव कुम्भकार-

भावात् 'सात् पदाद्योः' ८.३.१११ इति षत्वनिषेधाप्राप्त्या "आदेशप्रत्यययोः ८.३.५९ इत्यनेनैव षत्वसिद्धौ गोभूमिद्वित्रिप्रभृतीनां ग्रहणं व्यर्थं स्यात् ॥ अनित्यत्वात् क्वचिदिष्टस्थलेऽप्रवृत्तिर्जायते; तेन "सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी" इत्यत्र प्रयुक्तः 'धनक्रीता' इति शब्दः सिद्ध्यति । अत्र हि सुबुत्पत्तेरनन्तरं समासः, सुबुत्पत्तये च लिङ्गबोधकप्रत्ययोऽपेक्ष्यते; स च प्रत्ययः 'धन टा क्रीत' इत्यवस्थायां टाबन्यो न भवितुमर्हति करणपूर्वत्वाभावेन ङीषोऽप्राप्तेः । अतः टापि दीर्घे सुपि 'धन टा क्रीता सु' इत्यनयोः 'कर्तृकरणे कृता बहुलम्' २.१.३२ इति समासे सुपोः समासनिमित्तकप्रातिपदिकत्वाल्लुकि 'धनक्रीता' इति सिद्ध्यति अस्यामवस्थायां करणपूर्वकक्रीतान्तशब्दत्वेऽप्यदन्तत्वाभावेन न "क्रीतात् करणपूर्वात्" ४.१.५० इति ङीष् ॥

अन्ये तु परिभाषाया अनित्यत्वे यन्मानं दर्शितं तन्न तस्या अनित्यत्वे

"अम्बाम्ब गोभूमि" ४.३.९७ इस सूत्र में 'गो' और भूमि का ग्रहण, इस परिभाषा के अनित्य होने में ज्ञापक है। सूत्र में गो और भूमि का ग्रहण "गोष्ठः और भूमिष्ठः" में 'गो+स्थ' और 'भूमि+स्थ' ऐसी अवस्थामें मूर्धन्यादेश के लिए करते हैं, सूत्रकार का विचार है कि "स्थ" का सकार पदादि का सकार है, उसे 'आदेशप्रत्यययोः' ८.३.५९ से प्राप्त षत्व का "सात्पदाद्योः" ८.३.१११ निषेध कर देगा। परन्तु यदि यह परिभाषा नित्य हो तो यहाँ दोनों जगह 'सुपि स्थः ३.२.४ से 'क' प्रत्यय हुआ है; जो कि कृत्प्रत्यय है। इसलिए यहाँ "स्थ" में 'सुप्' जुड़ने के पहले ही परिभाषा के बल से समास होगा। 'स्थ' में 'सु' विभक्ति न आने के कारण उसे पदसंज्ञा नहीं होगी, 'स्थ' का 'स' पदादि का सकार नहीं माना जायगा, उसे "सात्पदाद्योः" ८.३.१११ से निषेध नहीं होगा; फिर "आदेशप्रत्यययोः" से निर्बाध षत्व हो ही जाता "अम्बाम्ब" सूत्र में गो और भूमि का ग्रहण व्यर्थ हो कर इस परिभाषा की अनित्यता का ज्ञापन करता है। इसलिए जहाँ कहीं सुबुत्पत्ति के बाद समास करने से इष्ट सिद्धि होती है; सुवहाँ बुत्पत्ति के बाद भी समास होता है। जैसे कि 'धनक्रीता" में, सुबुत्पत्ति के बाद समास हुआ, इसलिए सुबुत्पत्ति के पहले लिङ्गबोधक प्रत्यय के रूप में 'टाप्' हुआ उसके बाद 'सु' आया; तब समास हुआ। इसलिए अदन्त प्रातिपदिक नहीं होने के कारण "धनक्रीता" ही बना, अश्वक्रीती की तरह ङीष् नहीं हुआ।

कुछ लोग कहते हैं कि परिभाषा की अनित्यता में कोई प्रमाण नहीं है, "धनक्रीता" में तो अजादित्वात् टाप् हुआ है। तात्पर्य यह है कि "अम्बाम्ब-गोभूमि" में गोभूम्यादिग्रहण तो नियमार्थक है। पूर्वपद के अन्त में विद्यमान इण् से पर रहनेवाले स्थ सम्बन्धी सकार को यदि षत्व हो तो गोभूम्यादि शब्दसे पर रहने पर ही हो। इसीलिए "हृदिस्थः" में षत्व नहीं हुआ। "दधिसेचौ" में सुप

**इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव,षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्य 'मित्युपपदमि'ति सूत्रे भाष्ये स्पष्टम् । तत्र हि षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्त्तिकम् । अथ वा विभाषा षष्ठीसमासः । यदा न षष्ठीसमासस्तदोपपदसमास इति तत्प्रत्याख्यानं च यद्यप्युपपदसमासस्यान्त-**

---

मानं भवितु मर्हति, सूत्रे गोभूमिद्वित्र्यादिग्रहणस्य "पूर्वपदान्तेणः परस्य स्थसम्बन्धिनः सकारस्य षत्वं गोभूमिद्वित्र्यादिभ्यः परस्यैव नान्येभ्यः परस्येति-नियमार्थत्वात् । अत एव 'हृदिस्थ' इत्यादौ न षकारादेश इति । किञ्च 'दधिसेचौ' इत्यादौ सुबुत्पत्तेः प्राक् 'सेच्' इत्यस्य समासे प्रत्ययस्यैवाभावेन तल्लक्षणप्रयुक्तस्य पदत्वस्य सुतरामभावात् सेचावित्यत्रत्यसकारस्य षत्वाभावाय पदादादिः पदादिरिति पञ्चमीसमासाश्रयणस्य 'सात्पदाद्योः' ४.३.१११ इत्यत्रावश्यकतया गोष्ठभूमिष्ठद्विष्ठेत्यादावपि गोभूमिद्व्यादिपदात् परस्यादेः स्थगत-सकारस्य तेन षत्वनिषेधे प्राप्ते षत्वविधानाय गोभूद्व्यादिग्रहणस्य चारितार्थ्येन परिभाषाया अनित्यत्वे मानाभावेन नेयमनित्या । यच्चानित्यत्वे फलं दर्शितं 'धनक्रीतेति तदप्यन्यथासिद्धम्—"सा हि तस्य धनक्रीतेत्यस्य प्रामाणिकत्वे तस्याजादिगणे पाठं प्रकल्प्य तत्राजादित्वाट्टाप्प्रत्ययः साध्यः । अदन्तत्वादेव 'अजा' इत्यादौ टाप्सिद्धौ अजाद्युक्तिः ङीषो ङीपश्च बाधनार्थेति स्वीकारात् इत्याहुः ॥ 'कर्तृकरणे कृता बहुलम् २.१.३२ इत्यत्र कृतेन बहुलग्रहणेनाप्यत्र लक्ष्यानुरोधात् सुबुत्पत्तेरनन्तरं समासः शक्यते साधयितुमिति परिभाषाया अनित्यत्वं वृथा न कल्पनीयमिति कश्चित् ॥

अतएव=परिभाषायाः स्वीकारादेव=कुम्भकार इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः प्रागेव भवति का कथोपपदसमासस्य । न च महाविभाषेत्यधिकारात् षष्ठी-

---

की उत्पत्ति से पहले समास करने पर षत्व के अभाव के लिए "सात्पदाद्योः" में (पदात् आदिः परादिः)इस तरह पञ्चमी—समासमानना आवश्यक है । ऐसा मानने पर "गोष्ठः" में षत्व की निषेध-प्राप्ति होती है । अतः षत्व के विधान के लिए गोभूम्यादि-ग्रहण अपने आप में चरितार्थ है । अतः उसके द्वारा परिभाषा की अनित्यता का ज्ञापन हो नहीं सकता । इसलिए "धनक्रीता" में परिभाषा की प्रवृत्ति होने पर भी "अश्वक्रीती" की तरह जो ङीष् नहीं हुआ; इसका कारण है ङीष् और ङीप् सबको बाधने वाला अजादि में कल्पित आकृतिगणत्वात् पाठ ।

परिभाषा स्वीकार करने से ही 'कुम्भकारः' इत्यादि में कुम्भ अम् कृ से अण करने पर वृद्धयादि होने के बाद कुम्भ अम्+कार ऐसी स्थिति में "कर्तृकर्मणोः कृति २.३.६५ से षष्ठी होने पर जो षष्ठी समास हुआ; वह भी सुप् की उत्पत्ति से पहले ही । और महाविभाषा अधिकार के कारण षष्ठीसमास के अभाव (विकल्प) में उपपद समास मूलक एकार्थी भाव हुआ । इसलिए यहाँ वाक्य नहीं हुआ वस्तुतः 'कुम्भकार'—कुम्हार—एक संज्ञा है । वाक्य से (कुम्भं करोति

रङ्गत्वाभिप्रायकं न वा षष्ठीसमासाभावादुपपदसमास इति वार्त्तिककृतोक्तम्। तथापि तदुभयप्रत्याख्यानपरमथवेत्यादि भाष्यम्। परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तस्य कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात्॥

---

समासस्य वैकल्पिकत्वेन कुम्भस्य कार इति वाक्यमपि स्यादिति वाच्यम् षष्ठीसमासाभावपक्षे चोपपदसमासे कृते वाक्यस्यापत्तेरसंभवात्। एकार्थीभावः समास इत्यर्थः। इदं न मम कपोलकल्पितं किन्तु 'उपपदमतिङ्' २.२.१९ इति सूत्रस्थभाष्यसम्मतम्। तथाहि:—"षष्ठीसमासादुपपदसमासोविप्रतिषेधेन (वा० ३)" षष्ठीसमासादुपपदसमासो भवति विप्रतिषेधेन। षष्ठीसमासस्यावकाशो राज्ञः पुरुषो राजपुरुषः। उपपदसमासस्यावकाशः 'स्तम्बेरमः,' 'कर्णेजपः'। इहोभयं प्राप्नोति—'कुम्भकारो' 'नगरकारः'। उपपदसमासो भवति विप्रतिषेधेन॥ "न वा षष्ठीसमासाभावादुपपदसमासः" (वा० ४) न वार्थो विप्रतिषेधेन। किं कारणम्। षष्ठीसमासस्याभावादुपपदसमासो भविष्यति। कथम्। गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति समासवचनात्॥ अथवा विभाषा षष्ठीसमासो यदा न षष्ठी समासस्तदोपपदसमासो भविष्यति॥

अत्र "षष्ठीसमासादुपपदसमासो विप्रतिषेधेन" इति वार्तिकेन षष्ठीसमासोऽपि कारेत्यनेन सुबुत्पत्तेः प्रागेवेति लभ्यते। षष्ठीसमासस्य सुबुत्पत्तेः पश्चात् प्रवृत्ति-

---

से) संज्ञा का ज्ञान नहीं होता। अतः वाक्य नहीं होता है यह 'उपपदमतिङ्' सूत्र के भाष्य से स्पष्ट होता है। उस सूत्र के भाष्य में षष्ठी समास को विप्रतिषेध के कारण बाधकर उपपद समास हो ऐसा वार्तिक पढ़ा गया। दोनों समास अपने अपने उदाहरणों में चरितार्थ हैं। जैसे षष्ठीसमास 'राजपुरुषः' में चरितार्थ है और उपपदसमास "स्तम्बेरमः" में। 'कुम्भकारः' में दोनों की प्राप्ति होगी और "विप्रतिषेधे परं कार्यम्" १.४.२ से परकार्य—उपपदसमास—होगा, ऐसा वार्तिककार का तात्पर्य था। बाद में उसका खण्डन करते हुए कहा गया "अथवा विकल्प से षष्ठीसमास होता है। जब षष्ठी समास नहीं होगा; तब उपपद समास हो जायगा" इस तरह उस वार्तिक का प्रत्याख्यान कर दिया गया। इस प्रत्याख्यान-भाष्य से यही सूचित होता है कि 'कुम्भकार' यहाँ षष्ठी समास भी जो 'कार' के साथ होता है, सुबुत्पत्ति से पहले ही होता है। यदि षष्ठीसमास सुबुत्पत्ति के बाद हो, और उपपदसमास सुबुत्पत्ति के पहले हो तो उन दोनों की एक काल में प्राप्ति नहीं होने से, उन दोनों में 'विप्रतिषेधे परं कार्यम्' से बाध्यबाधक भाव दिखाना असंगत हो जायगा। यद्यपि वार्तिककार ने जो यह कहा कि षष्ठी समास के अभाव के कारण उपपद समास हो जायगा, वहाँ वार्तिककार का यह अभिप्राय था कि उपपद समास (इस परिभाषा से पूर्वोपस्थित होने के कारण अन्तरङ्ग है साथ-साथ षष्ठी समास को पश्चात् आने वाले सुप्त्वनिमित्तक बताकर बहिरङ्ग बताया तथापि "अथवा से लेकर तदोपपदसमासः" यहाँ तक का भाष्य

**एतनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम् । अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यार्थालाभाच्च७६॥**

---

स्वीकारे सुबुत्पत्तेः प्रागेव स्वीकृतप्रवृत्तेः उपपदसमासस्य पश्चात्स्वीकृतप्रवृत्तेः च षष्ठीसमासस्य भिन्नकालिकयोर्विप्रतिषेधकथनमसंगतं स्यात् । "अथवा विभाषा षष्ठीसमासः यदा न षष्ठीसमासः तदोपपदसमासः" इति तस्य वार्तिकस्य प्रत्याख्यानपरकभाष्येणापि 'कुम्भकार' इत्यत्र कुम्भ ङस् इत्यस्य कारेत्यनेन सुबुत्पत्तेः प्रागेव समास इति सिद्ध्यति । यदि षष्ठीसमासः सुबुत्पत्तेरनन्तरं स्यात्; तदा सुबुत्पत्तेः प्राग्भाव्युपपदसमासकाले षष्ठीसमासस्याप्राप्त्या उपपदसमासकाले षष्ठीसमास इति कथनमसंगतं स्यात् । उभयोःसमासयोः समानकालिकत्वसमकक्षत्वकथनञ्चैतदेव सूचयति यदिहषष्ठीसमासोऽपि उपपदसमासवदनुत्पन्नसुप्प्रत्ययैःकृद्भिरेव जायत इति ॥ न च "न वा षष्ठीसमासाभावादुपपदसमासः" इति वार्तिकेन तद्व्याख्यानपरक-"न वार्थो विप्रतिषेधेनेत्यादिभाष्येण चोपपदसमासस्य गतिकारकोप...सुबुत्पत्तेरिति परिभाषया सुबुत्पत्तेः प्रागेव प्राप्तिं दर्शयित्वा पूर्वोपस्थितिकत्वरूपमन्तरङ्गत्वं दर्शितम् तथा च पश्चात् प्राप्तिनिमित्तकबहिरङ्गत्वसिद्ध्यै षष्ठीसमासस्येह सुबुत्पत्तेः पश्चाद्भावित्वं स्वीकृतं भाष्ये इति तव मतेन तद् विसंवदत इति वाच्यम् 'अथवा' विभाषा षष्ठीसमासो यदा न षष्ठीसमासः तदोपपदसमास इति भाष्यस्य "षष्ठीसमासादुपपदसमासोविप्रतिषेधेनेति" नवा षष्ठीसमासाभावादुपपदसमास इति वार्तिकद्वयप्रत्याख्यानपरकस्य मम मतानुकूलविचारस्थापनात् ॥

परिभाषायां सामान्यतः कारकपदोपादानमस्ति; अतः कारकविभक्त्यन्तस्य

---

जो दोनों वार्तिकों (षष्ठीसमासादुपपदसमासो विप्रतिषेधेन" "न वा षष्ठीसमासाभावादुपपदसमासः") के प्रत्याख्यान के लिए लिखा गया है; यही सूचित करता है कि दोनों समासों की एक काल में प्राप्ति है ।

परिभाषा में "कारक" शब्द का उपादान है । वह कारकसामान्य का ही बोधक हो सकता है । इसलिए इस परिभाषा से यही तात्पर्य प्रगट होता है कि कारकविभक्त्यन्तपद का कृदन्त के साथ कोई भी समास हो, वह सुप् की उत्पत्ति से पहले ही होगा । इस तरह यह सोचना कि "गतिकारकोपपदानाम्" यह परिभाषा कारक या कारक विशेष के उपादान में ही प्रवृत्त होती है', निराधार या प्रमाणविरुद्ध है, क्योंकि 'षष्ठी' सूत्र में कारकविशेष का उपादान नहीं है । वहाँ परिभाषा की भाष्यनिर्दिष्टप्रवृत्ति से पता लगता है कि यह परिभाषा कारक या कारक-विशेष के उपादान में ही नहीं लगती है ।

दूसरी बात, इस परिभाषा की विधि सूत्र के साथ एकवाक्यता नहीं होती हैं, यह तो 'विप्रतिषेधशास्त्र' की तरह कार्य की व्यवस्थापिका है, इसलिए कारक तद्विशेषयोः 'उपादान एव" इस प्रकार का अर्थ नहीं निकला जा सकता है ।

कृद्भिः समासमात्रं सुबुत्पत्तेः प्रागेव भवतीति लभ्यते। अतएव कुम्भकार इत्यत्र षष्ठी-समासोऽपि सुबुत्पत्तेः प्रागेव भवतीति भाष्ये दर्शितम्। एतेन=उक्तभाष्येण षष्ठी-समासस्यापि सुबुत्पत्तेः प्रागेव विधानलाभेनेत्यर्थः। एषा गतिकारकोपपदानामिति परिभाषा कारकतद्विशेषयोरूपादान एव प्रवर्तते इति मतं परास्तम्, षष्ठीति सूत्रे कारकतद्विशेषयोरुपादानाभावेऽपि भाष्ये तत्र परिभाषां संचार्य तेन विधीयमान-समासोऽपि सुबुत्पत्तेः प्रागेव भवतीति ध्वननात्। अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत्कार्यव्यवस्थापकत्वेन कारकतद्विशेषयोः गत्युपपदत्तद्विषययो-र्वोपादाने एव प्रवृत्तिरित्यर्थलाभाच्च।

वस्तुतस्तु कारकतद्विशेषोपादाने एवेयं प्रवर्तते। यत्र समासविधौ कारकत्वतद्-व्याप्यधर्मावच्छिन्नबोधकं पदमुपात्तमस्ति; तत्र सुपेति नानुवर्तत इत्येव परिभाषार्थः। नचैवं 'षष्ठी' २.२.८ इति सूत्रे कारकतद्विशेषोपादानाभावेन "अथवा विभाषाषष्ठी-समासः, यदा न षष्ठीसमासस्तदोपपदसमास" इति भाष्यविरोध इति वाच्यम् षष्ठी-समासाभावपक्षे एकार्थीभावाभावेनोपपदसमासाप्राप्त्या तादृशभाष्यस्यैकदेश्युक्तत्वात्। अथ च "तदुभयप्रत्याख्यानपरम्" अथवेत्यादिभाष्यमिति मूलोक्तन्तु न युक्तम् "तर्त्रहि वक्तव्यं न वक्तव्यमित्यादेः सर्वत्राश्रितप्रत्याख्यानप्रकारस्येहानाश्रयणात्। कारकतद्विशेषोपादाने एव गतिकारकोपपदानामितिपरिभाषा प्रवर्तते इत्यत्र प्रमाणं 'ङ्याप्प्रातिपदिकात्' ४.१.१ इति सूत्रस्थं तद्भाष्यं यत्र किल कष्टं श्रिता इत्यत्र 'द्वितीयाश्रितातीतपतित'...२.१.२४ इति समासोऽन्तादिवच्च' ६.१.८५ इत्यन्तवद्-भावेन साधितः। तथाहि:—तत्र लिङ्गविशिष्टपरिभाषायाः प्रयोजनोदाहरणादानप्रस्तावे प्रोक्तम्—"द्वितीया श्रितादिभिः सह समस्यते। इहैव स्यात्—कष्टं श्रितः=कष्टं-श्रितः। कष्टं श्रिता=कष्टश्रितेत्यत्र न स्यात्॥ एतदपि नास्ति प्रयोजनम्। श्रित-शब्दोऽकारान्तस्तत्रैकादेशे कृतेऽन्तादिवद्भावाद् भविष्यति॥ यदि गतिकारकेति परि-भाषा कारकतद्विशेषोपादानाभावेऽपि प्रवर्तेत तदा द्वितीयाश्रितेति समासस्यापि 'श्रित' इत्यनुत्पन्नसुबन्तेनैव सिद्धे पूर्वोक्तभाष्यासंगतिः स्यात्॥ एवमेव ङ्याप्सूत्रे भाष्ये स्थण्डिलशायिनीत्यत्र "नेन्सिद्धबध्नातिषु च" ६.३.१९ इतिलुक्सिद्ध्यर्थं लिङ्ग-विशिष्टपरिभाषाश्रिता। एतदपि सूचयतिः—यत् गतिकारकेति परिभाषा कारक-तद्विशेषोपादने एव प्रवर्तत इति। अन्यथा गतिकारकेति परिभाषा सुबुत्पत्तेः प्रागेव समासे तत्रेनुपरकत्वाल्लुकि सिद्धे ततश्च स्थण्डिलशायिन् इत्यवस्थायां नान्तलक्षण-ङीपि रूपे सिद्धे लिङ्गविशिष्टपरिभाषोपन्यासमूलकसिद्धिप्रदर्शनप्रयासो भाष्यकृतो

---

वस्तुतस्तु कारक-विशेष के उपादान वाले समास-विधि में ही इसकी प्रवृत्ति होती है; यही पूर्व कथन का तात्पर्य लेना चाहिए। इसलिए टाप् प्रत्ययान्त "श्रिता" आदि शब्दों के साथ समास की सिद्धि के लिए 'द्वितीया श्रित' २.१.२४ सूत्र के भाष्य में 'अन्तवद्भाव' का सहारा लिया गया। अन्यथा इस परिभाषा से सुबुत्पत्ति के पहले ही समास हो जाने पर पश्चात् टाप् होता; फिर अन्तवद् का सहारा खोजना व्यर्थ का प्रयास होता। इति शिवम् ७६।

ननु 'उगिदचामि'त्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह—

**सांप्रतिकभावे भूतपूर्वगतिः ॥७७॥**

---

वृथा स्यात्। तथाहिः—"नेन्सिद्धबध्नातिषु च" इहैव स्यात्—स्थण्डिलशायी॥ स्थण्डिलशायिनीत्यत्र न स्यात्॥ (अत्रलुग्विधानं लिङ्गविशिष्टपरिभाषाप्रयोजनमिति) (ङ्याप् प्रा० ४.१.१ सूत्रभाष्यम्) ङ्याप् सूत्रे भाष्ये—ग्रामेवासिनीत्यत्र "शयवासवासिष्वकालात्" ६.३.१८ इत्यलुकः 'दर्शनीयां मन्यते आत्मानमिति दर्शनीयमानिनी कापि स्त्रीत्यत्र क्यङ्मानिनोश्च ६.३.३६ इति पूर्वपदस्य पुंवद्भावविधेः सिद्धये कृतो लिङ्गविशिष्टपरिभाषाऽऽश्रयणप्रयत्नोऽपि पूर्वोक्तार्थमेव सूचयति। अतः ङ्याप्सूत्रभाष्यप्रतिकूलार्थकमथवेत्याद्युपपदमतिङ् इतिसूत्रभाष्यमेकदेश्युक्तमिति शिवम्। ७६

**साम्प्रतिकाभावे भूतपूर्वगतिः॥ ७७॥**

"अञ्चु गतिपूजनयोः" इति भ्वादिपठितो धातुरुगितः। एवञ्च 'उगिदचां सर्वनामस्थानेऽधातोः" ७.१.७७ इति सूत्रेऽधातुग्रहणाभावे "प्राङ्" "प्राञ्चौ" इत्यादावुगित्त्वादेव नुम्सिद्धौ अञ्चतेर्ग्रहणेन "धातोश्चेदुगित्कार्यं तर्हि अञ्चतेरेवेति नियमादेव 'स्रत्' 'ध्वद्' इत्यादौ नुमोऽभावे सिद्धेऽधातुग्रहणं व्यर्थमिति चेन्न "**साम्प्रतिकाभावे भूतपूर्वगतिः**" इतिपरिभाषाज्ञापनेन तच्चारितार्थ्यात्। न चाञ्चतिग्रहणम् "यद्यञ्चतेरुगित्कार्यं क्रियते तर्हि नलोपिनोऽञ्चतेरेवेति" विशेषापेक्षनियमं विधाय चरितार्थम्, तथा च 'स्रत्' इत्यादौ नुमभावायाधातुग्रहणस्य चारितार्थ्यात्पूर्वोक्तपरिभाषाज्ञापकत्वं तस्य न सम्भवतीतिवाच्यम् 'नामि' ६.४.३ इत्यादिसूत्रस्थज्ञापकतापरकभाष्यप्रामाण्येन अञ्चतिग्रहणेन "धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवे"ति

---

**साम्प्रतिकभावे भूतपूर्वगतिः ॥७७॥**

"उगिदचां सर्वनामस्थाने ऽधातोः" ७.१.७७ इस सूत्र में यदि अधातुग्रहण न करें तो उगित्-धातुओं से भी नुम् हो जायगा। यदि उगित् धातुओं से भी नुम् हो ही जाय; तो अञ्च्, धातु से भी नुम् हो ही जाता था; फिर अञ्च् ग्रहण व्यर्थ होकर ज्ञापन करेगा कि "धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव" धातु से यदि उगित् कार्य हो तो केवल अञ्च् धातु को ही हो। इसलिए स्रंस् धातु के रूप स्रत् में नुम् नहीं होगा। इस ज्ञापन के बाद 'अधातु' ग्रहण न करने पर भी अञ्च् से भिन्न-धातुओं से नुम् का निवारण ही हो जायगा 'अधातु ग्रहण' व्यर्थ होकर ज्ञापन करता है कि साम्प्रतिकाभावे भूतपूर्वगतिः अर्थात् वर्तमानस्थिति में यदि कहीं किसी धर्म का अभाव हो तो उसे अतीत में ढूढ़ना चाहिए। यह परिभाषा, सूत्र में 'अधातु' आदि का कथन व्यर्थ न हो जाय इस प्रकार की सामर्थ्यमूलक कल्पना से सिद्ध होती है जैसे उगिद-

तत्तद्वचनसामर्थ्यान्न्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन

---

सामान्यापेक्षज्ञापनमेव कृतमिति निश्चयात् । किञ्च नकारवत्यञ्चतौ नुमि जातेऽपि 'हलन्ताच्च' १.२.१० इति सूत्रे यथा हल्ग्रहणं जातिपरम् तथा 'नश्चापदान्तस्य झलि' ८.३.२४ इत्यादावपि नकारग्रहणस्य 'वर्णग्रहणे जातिग्रहणम्' (हैमन्याय-६४) इतिन्यायेन जातिपरकत्वमङ्गीकृत्य नकारद्वयस्याप्यनुस्वारे विशेषाभावेन "अञ्चतेर्यद्युगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवेत्यत्र ज्ञापने फलाभावात् । अथ च "उगिदचाम्" ७.१.७७ इत्यत्र 'नपुंसकस्य झलचः' ७.१.७२ इत्यतो 'झलच इत्यनुवृत्या 'अचः परो यो झल्, तदन्तानामेवोगितां नुम् भवतीत्यर्थकरणेन नकारवत्यञ्चतौ नुमोऽप्राप्त्या "अञ्चते र्यद्युगित्कार्यमितीदृशनियमे फलाभावात् ।

**तद्वचनसामर्थ्यान्न्यायेति** । लोकेऽपि साम्प्रतिकाभावे भूतपूर्वस्याश्रयणं दृश्यते । तद्यथा कस्या अपि संस्थाया उद्घाटनादिकार्याय यदा वर्तमानो मन्त्र्यादिर्नोपलभ्यते तदा भूतपूर्वो मन्त्र्यादिस्तदर्थं प्रार्थ्यते इति । इत्थं लौकिकन्यायसिद्धेयम् उगिदचामिति सूत्रस्थाधातुग्रहणसामर्थ्यादिह शास्त्र आश्रीयते । तद्वचनसामर्थ्यन्यायेति चित्रप्रभासंमतः पाठः । सामर्थ्यरूपो यो न्यायस्तत्सिद्धेयमित्यर्थः । लोके यथा काकोड्डयनेऽपि काकवन्तो देवदत्तस्य गृहा इत्यत्र भूतपूर्वगतिराश्रीयते यथा वा वटवृक्षे नष्टेऽपि वटग्रामेति नाम्नः सार्थक्यं भूतपूर्वगत्या साध्यते तथा शास्त्रे । तत्त्वाभावे भूतपूर्वगत्या तद्व्यवहारः साध्यः । तत्तद्वचन सामर्थ्यात्तु तत्र तत्र प्रवर्तते इति नातिप्रसङ्ग इति भावः । **तत्सामर्थ्यादिति** । अधातुग्रहणसामर्थ्यादित्यर्थः । अधातुभूतपूर्वस्यापि=पूर्वस्मिन् काले योऽधातुरासीत्तस्यापि नुम् सिद्ध्यतीत्यर्थः । तेन गोमन्त-

---

चाम् ७.१.७७ सूत्र में अधातु ग्रहण-सामर्थ्यात् यह अर्थ माना गया कि भूतपूर्व अधातु के उगित् को भी नुम् होता है । इसलिए गोमान् इवाचरति इस विग्रह में गोमत् सु से क्विप् करके धातु संज्ञा करने के बाद क्विप् च ३.२.७६ से क्विप् करने पर गोमत् यद्यपि धातु बन चुका है तथापि भूतपूर्व अधातु होने के कारण ,नुम्' आदि होने से 'गोमान्' बना । अथवा गोमन्तमिच्छति इस विग्रह में इच्छार्थक क्यच् करने के बाद धातु संज्ञा होने पर बने हुए शब्द 'गोमत्य' से क्विप् करके अनुबन्धलोप अकारलोप और यलोप होने के बाद वलोप होने पर बने शब्द गोमत् को प्रातिपदिक संज्ञा करने पर "क्विबन्ता विजन्ता धातुत्वं न जहति प्रातिपदिकत्वमपि न मुञ्चति" इसन्याय से साम्प्रतिक अधातुत्व के अभाव में भी भूतपूर्व अधातुत्व को जो कि मत्वन्त में था लेकर नुम् हुआ और गोमान बना ।

लोक में भी भूतपूर्व गति का आश्रयण हुआ करता है-जैसे यदि किसी संस्था के उद्घाटन के लिए वर्तमान मन्त्री आदि उपलब्ध नहीं होते हैं तो भूतपूर्व मन्त्री को अवसर देते हैं ।

**गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः । 'नामि' इत्यादिसूत्रेषु भाष्ये स्पष्टा ॥७७॥**

---

मिच्छतीतिविग्रहे गोमत् अम् इत्यस्मात् 'सुप आत्मनः क्यच' ३.१.८ इति क्यचि, धातुत्वे, तदवयवस्य सुपो लुकि 'गोमत्य' इत्यस्मात् क्विपि अनुबन्धलोपेऽतोलोपे 'लोपो व्योर्वलि' ६.१.६६ इति यलोपे 'गोमत्' इत्यस्य कृदन्तत्वात् प्रातिपदिकत्वे सौ 'गोमत् स्' इत्यवस्थायां "क्विबन्ता विजन्ताश्च प्रातिपदिकत्वं न जहति धातुत्वमपि न मुञ्चन्ति" इति सिद्धान्तेन साम्प्रतिकाधातुत्वाभावेऽपि भूतपूर्वाधातुत्वम् (मतुबन्ते यदधातुत्वमासीत्तद्) आदाय नुम् सिद्ध्यति । अतएव 'प्रध्यौ' इत्यादौ भूतपूर्वधातुत्वमादाय 'एरनेकाचोऽसंयोगपूर्वस्य' ६.४.८२ इत्यनेन यण् जायते । 'नामि' ६.४.३ इत्यादिसूत्रेषु अर्थात् 'नामि' ६.४.३ इति सूत्रे "उगिदचाम्" ७.१.७० इति सूत्रे 'जुसि च' ७.३.८३ इति सूत्रे च भाष्ये स्पष्टा । तत्र प्रथमं नामि ६.४.३ इति सूत्रस्थं भाष्यं विलोक्यताम्—"किमर्थं नामः सनकारस्य ग्रहणं क्रियते, न आमि दीर्घ इत्येवोच्येत । केनेदानीं सनकारके भविष्यति । नुडयमाम्भक्त आम्ग्रहणेन ग्राहिष्यते । अत उत्तरं पठति ।

"आमि दीर्घ आमि चेत्स्यात् कृते दीर्घे न नुड् भवेत्" । नामि दीर्घ आमिचेत्स्यात् कृते दीर्घत्वे न नुट् स्यात् । अग्नीनाम् इन्दूनाम् । इदमिह संप्रधार्यम्, दीर्घत्वं क्रियताम् नुडिति । किमत्र कर्तव्यम् ? परत्वान्नुट् । नित्यं दीर्घत्वम् । कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि । नित्यत्वाद्दीर्घत्वे कृते ह्रस्वाश्रयो नुड् न प्राप्नोति ॥ एवं तर्ह्याहायं ह्रस्वान्तान्नुडिति, न च ह्रस्वान्तोऽस्ति, तत्र वचनाद् भविष्यति ॥

"वचनाद्यत्र तन्नास्ति" ॥

नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? यत्र दीर्घत्वं प्रतिषिध्यते—'तिसृणाम्', 'चतसृणामिति' ॥ नैतदस्ति प्रयोजनम् । इह तावच्चतसृणाम्

---

नामि ६.४.३ सूत्र के भाष्य में यह परिभाषा स्पष्ट हुई है । वहाँ नामि की जगह यदि आमि यह न्यास माने तो राम+आम् ऐसी स्थिति में पहले दीर्घ होने पर भी ह्रस्वनद्यापो नुट् सूत्र में ह्रस्वग्रहणसामर्थ्यात् भूतपूर्वह्रस्वान्तत्व के आश्रय से नुट् होने की बात भाष्यकार ने कही है । इससे स्पष्ट है कि भाष्यकार को साम्प्रतिकाभावे भूतपूर्वगतिः परिभाषा मान्य थी ।

'उगिदचाम्' ७.१.७० जुसि च ७.३.८३ सूत्रों के भाष्य में भी यह परिभाषा निर्दिष्ट है । इसलिए मूल में नामीत्यादि सूत्रेषु में आदि का उल्लेख किया गया है । इति शिवम्—७७

इति 'षट्चतुर्भ्यश्च' (७।१।५५) इत्येवं भविष्यति। तिसृणामिति त्रिग्रहणमपि तत्र प्रकृतमनुवर्तते। क्व प्रकृतम्। 'त्रेस्त्रयः' (७.१.५३) इति॥ एवं तर्हि—त्वं नृणां नृपते जायसे शुचिः॥ नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति। तत्र वचनाद्भूतपूर्वगति-विज्ञास्यते। ह्रस्वान्तं यद्भूतपूर्वमिति॥ उत्तरार्थं तर्हि सनकारग्रहणं कर्तव्यम्।

"नोपधायाश्च चर्मणाम्"।

नोपधाया नामि यथा स्यात्। इह मा भूत्—'चर्मणाम्' 'वर्मणामिति'॥

अस्य भाष्यस्योपसंहारे **कैयटः**—(नृणामितिमात्रस्य प्रयोजनत्वे नृनद्यापोनुडिति कथनमेव पर्याप्तम्) तदेवं वचनसामर्थ्याद्भूतपूर्वगत्या नुटः सिद्धत्वान्नार्थः सनकारनिर्देशेनेतिस्थिते प्रयोजनान्तरोपन्यासः—उत्तरार्थमिति प्राहः।

एवञ्चात्र "अग्नीनाम्" इत्यादौ नित्यत्वाद्दीर्घत्वे कृतेऽपि सूत्रेण ह्रस्वान्तान्नुड्विधानसामर्थ्याद्भूतपूर्वह्रस्वान्तत्वमादाय नुटं साधयता भाष्यकारेण परिभाषेयमङ्गीकृतेति स्पष्टम्।

उगिदचां सर्वनामस्थानेऽधातोः ७।१।७० इति सूत्रे भाष्येऽप्येषा स्पष्टतो निर्दिष्टा—तथाहिः

"अधातोरिति किमर्थम्? 'उखास्रत्' 'पर्णध्वत्'। अधातोरितिशक्यमवक्तुम्। कस्मान्न भवति 'उखास्रत्' 'पर्णध्वदिति'?

"उगित्यञ्चतिग्रहणात् सिद्धमधातोः" (वा० १)

उगित्यञ्चतिग्रहणादधातोः सिद्धम्। अञ्चतिग्रहणं नियमार्थं भविष्यति—अञ्चतेरेवोगितोधातोर्नान्यस्योगितोधातोरिति। इदं तर्हि प्रयोजनमधातुभूतपूर्वस्यापि यथा स्यात्। गोमन्तमिच्छति गोमत्यति गोमत्यतेरप्रत्ययो गोमानिति॥

अत्र **कैयटः**—क्विवन्ता धातुत्वं न जहतीति धातुरयमित्यञ्चतिग्रहणान्नियमार्थान्न स्यात् (गोमानित्यत्र नुमिति)। अधातुग्रहणात्तु भवति। तस्य ह्येतत्प्रयोजनमवस्थान्तरेऽपि यस्याधातुत्वं दृष्टं तस्य सम्प्रति धातुत्वेऽपि नुम् यथा स्यादिति। अथात्र (गोमानित्यत्र) कथं दीर्घत्वम्, यावताऽत्वसन्तस्य चाधातोरित्यधातोस्तद्विधीयते? उच्यते। अधातोरिति तत्र योगविभागः क्रियते। तत्र चासन्तस्येत्यनुवृत्याऽत्वन्तस्य पर्युदासाभाव इति।

जुसि च ७.३.८३ इति सूत्रे भाष्ये यथा—

"मिदेर्गुणः ७.३.८२ जुसि च ७.३.८३"इतीदृशसंहितापाठमस्वीकृत्य मिदेर्गुणोऽजुसि चेति संहितापाठं चाङ्गीकृत्य अजादौ उसि इगन्ताङ्गस्य गुणः स्यादित्यर्थं कृत्वा यदि 'चिनुयुः'इत्यादौ गुणोवार्यते तर्हि चक्रुरित्यत्रातिव्याप्तिः स्यादित्याशङ्क्यभाष्यकारेण प्रोक्तम्" एवं तर्हि शितीति वर्तते। एवमपि 'अजुहवुः' 'अबिभयु' रित्यत्र न प्राप्नोति। भूतपूर्वगत्या भविष्यति। इति॥ शिवम् ७७

**बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥७८॥**

अपिनाऽतद्गुणसंविज्ञानम् । तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः ॥

यत्र समवायसम्बन्धेन सम्बन्ध्यन्यपदार्थस्तत्र प्रायस्तद्गुणसंविज्ञानम् । अन्यत्र प्रायोऽन्यत् ॥

---

**बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥७८॥**

ननु चित्रगुर्वदतीत्यत्र गोर्वदनक्रियायां यथान्वयो न भवति तथा यदि "सर्वादीनि सर्वनामानि" १-१:२७ इत्यत्र सर्व आदि येषामिति बहुव्रीहौ सर्वशब्दस्यासंग्रहे तस्य सर्वनामसंज्ञानापत्त्या सर्वे, सर्वस्मै, सर्वेषामित्यादिरूपाणामसिद्धिः स्यादिति चेन्न "बहुव्रीहौ तद्गुणसंविज्ञानमपि" इति परिभाषास्वीकारत् । परिभाषोक्तेनापिशब्देनातद्गुणसंविज्ञानस्यापिसंग्रहः । तेनात्र शास्त्रे यत्र यत्र बहुव्रीहिसमाससिद्धः शब्दः प्रयुक्तस्तत्र तत्र लक्ष्यानुरोधादुभयविधव्यवस्था दृश्यते । उभयविधबहुव्रीहेः संग्रहस्येष्टत्वादेव परिभाषायामपिः प्रयुक्तः । अपिशब्दस्य प्रयोगाभावे "बहुव्रीहौ तद्गुणसंविज्ञानम्' इत्येव परिभाषाशरीरतया "सर्वं वाक्यं सावधारणं भवती"ति न्यायेन तद्गुणसंविज्ञानस्यैव स्वीकारात् 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' १.३.६६ इत्यत्र आम्प्रत्ययो यस्मादिति बहुव्रीहावतद्गुणसंविज्ञानास्वीकारेण आम्प्रकृतिग्रहणमिष्टमसंगृहीतं स्यात् । तथाच "आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम्" इत्यर्थासंभवादेधाञ्चके 'गोपायाञ्चकार' इत्यादाविष्टात्मनेपदपरस्मैपदव्यवस्था न स्यात् ।

---

**बहुव्रीहौ तदगुणसंविज्ञानमपि ॥७८॥**

'अपि शब्द' से अतद्गुणसंविधान का भी संग्रह हो गया । बहुव्रीहि में तद्गुण संविज्ञान और अतद्गुण-संविज्ञान दोनो होते हैं । तद्गुण में कर्मधारय समास है "ते गुणाः तद्गुणाः" । तेषां संविज्ञानं तद्गुणसंविज्ञानम् षष्ठी-समास हुआ । गुण का अर्थ है अवयव-पदार्थ । संविज्ञान का तात्पर्य है विशेष्य के साथ अन्वय । अर्थात् बहुव्रीहि समास में समस्यमान पदार्थो का विशेष्य के साथ अन्वय भी होता है । जहाँ अन्य पदार्थ, समासावयवपदार्थो का समवायसम्बन्ध से या संयोगसम्बन्ध से सम्बन्धी होता है वहाँ प्रायः (ज्यादातर) तद्गुण संविज्ञान होता है । मूल में प्रयुक्त समवायपद संयोग का भी उपलक्षण है । अतः समवाय का अर्थ समवाय और संयोग दोनों मानना चाहिए । जैसे लम्बकर्णमानय यहाँ अन्य पदार्थ पुरुष हैं उसका कर्णपदार्थ के साथ समवाय सम्बन्ध है क्योंकि अवयव और अवयवी के बीच जो सम्बन्ध होता है,उसे समवायसम्बन्ध माना गया है । यह बात सब जगह नहीं होती इसलिए 'प्रायः' कहा गया है । "लम्बकर्णो भोज्यताम्" दीर्घनेत्रो वदति' इत्यादि में समवायसम्बन्ध से सम्बन्धी होने पर भी यहाँ अतद्गुण संविज्ञान ही माना गया, क्योकि कर्ण और नेत्र का भोजन और वदन क्रिया में अन्वय नहीं होता ।

'तद्गुणसंविज्ञानपदार्थं व्युत्पादयति—**तेषां गुणानामित्यादिना**। अत्र गुणपदेन समासावयवीभूतपदार्थो गृह्यते, तेषामप्रधानत्वात्। सम्यक् विशेषेण च विज्ञानम् **संविज्ञानम्**। विशेष्यान्वयित्वमिति तदर्थः अर्थात् बहुव्रीहौ अवयवीभूतपदार्थानामपि विशेष्येऽन्यपदार्थेऽन्वयो भवति अपिना च न भवतीति परिभाषार्थः। अत्र व्यवस्थायां लक्ष्यानुसारि व्याख्यानमेव शरणम्॥

यत्र समवायसम्बन्धेन सम्बध्यन्यपदार्थस्तत्र प्रायस्तद्गुणसंविज्ञानम्। नित्य-सम्बन्धः समवायः। अयुतसिद्धयोर्यः सम्बन्धः स समवायः। ययोर्द्वयोर्मध्ये एकमवि-नश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। अतएव अवयवावयविनोर्गुणगुणिनोर्जाति-व्यक्त्योः क्रियाक्रियावतोः विशेषनित्यद्रव्ययोश्च यः सम्बन्धः स समवायः।

तदुक्तं मुक्तावल्याम्—एकादशकारिकायाम्—

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः॥११॥

एतादृशेन समवायसम्बन्धेन सम्बन्धीतरपदार्थः यत्र भवति तत्र प्रायेण तद्-गुणसंविज्ञानबहुव्रीहिर्भवति। यथा 'लम्बकर्णं पुरुषमानय' इत्यत्र कर्णपुरुषयो-रवयवावयवितया समवायसम्बन्धेन सम्बन्ध्यन्यपदार्थो वर्तते। अतस्तद्गुणसंविज्ञानो बहुव्रीहिः "प्रायः" इति मूले उक्तम्। तेन 'लम्बकर्णो वदतीत्यत्र' वदनक्रियायां कर्णस्यान्वयाभावेऽपि न क्षतिः॥ समवायपदञ्च संयोगस्याप्युपलक्षणमत्र। अतएव "लोहितोष्णीषा ऋत्विजश्चरन्ति" इत्यादौ उष्णीषऋत्विजोः संयोगसम्बन्धेऽपि तद्गुणसंविज्ञानत्वे न कापि क्षतिः॥ **अन्यत्र**=समवायसंयोगभिन्नसम्बन्धेन सम्बन्धी

---

जहाँ अन्यपदार्थ, अवयवपदार्थों का समवाय और संयोग इन दोनो सम्बन्धों को छोड़कर किसी अन्यसम्बन्ध से सम्बन्धी होगा, वहाँ प्रायः अतद्गुण-संविज्ञान बहुव्रीहि माना जाता है। जैसे 'दृष्टसागरमानय' चित्रगुमानय" यहाँ अन्यपदार्थ पुरुष का सागर तथा गाय के साथ न समवाय सम्बन्ध है और न संयोग, किन्तु इन दोनो से भिन्न दृश्यद्रष्टृभाव और स्वस्वामिभाव सम्बन्ध है। इसलिए पुरुष के साथ सागर या गाय को नहीं लाया जाता है। इसलिए ये उदाहरण अतद्गुणसंविज्ञान बहुव्रीहि के हैं।

यह बात भी सब जगह लागू नहीं देखी जाती। अतः यहाँ भी "प्रायः" शब्द का प्रयोग हुआ है। जैसे "तरुणवत्सां गां ददति" यहाँ अन्य पदार्थ गाय और वत्स में पूर्वनिर्दिष्ट दोनो सम्बन्धों से भिन्न जन्य-जनक-भाव सम्बन्ध होने पर भी तद्गुण-संविज्ञान ही है क्योंकि देते समय गाय के साथ वत्स भी दिया जाता है। इसी तरह "दृढसेनो राजा युध्यते" यहाँ पर अन्य पदार्थ राजा और अवयवपदार्थ सेना में समवाय और संयोग से भिन्न सम्बन्ध अर्थात् स्वस्वामिभाव सम्बन्ध है तथापि युधिक्रिया में राजा के साथ सेना का भी अन्वय देखा गया है।

**लम्बकर्णचित्रगू उदाहरणे । सर्वादीनि जक्षित्यादय इति चोदाहरणे ॥**

---

यद्यन्यपदार्थस्तदा प्रायोऽतद्गुणसंविज्ञानबहुव्रीहिः । यथा 'चित्रगुः' इत्यत्र स्वस्वामिभावसम्बन्धेनान्यपदार्थस्य सम्बन्धित्वे । अतएव 'चित्रगुः' पठतीत्यत्र पठनक्रियायां न गौरन्वेति ॥ अत्रापि प्रायोग्रहणं क्रियते तेन 'श्वेतवत्सां गां ददाती'त्यादौ गोर्वत्सस्य च जन्यजनकभावसम्बन्धेऽपि तद्गुणसंविज्ञानबहुव्रीहिः सिद्ध्यति ॥

लौकिकमुदाहरणं प्रत्येकम्—लम्बकर्णचित्रगू—इति क्रमश उक्त्वा सूत्रस्थमुदाहरणमाह—सर्वादीनि सर्वनामीति सूत्रस्थं 'सर्वादीनि' इति तद्गुणसंविज्ञानः बहुव्रीहेरुदाहरणम् 'अदः सर्वेषाम्' ७.३.१०० इत्यत्र सर्वेषाम् इतिनिर्देशात् । जक्षित्यादयः षट्' ६.१.६ इति सूत्रस्थं 'जक्षित्यादयः' इति अतद्गुणसंविज्ञानस्योदाहरणम् । तत्र 'जक्ष्' इति पृथक् पदम् षट्पदानुरोधात् । अन्यथा जक्षतेः संकलनेन सप्तसंख्यत्वापत्या षट्कथनमसंगतं स्यात् । इति आदिर्येषाम् इत्यतद्गुणसंविज्ञानबहुव्रीहिः । इति शब्देन च जक्षिरेव परामृश्यते । तेन 'जागृ निद्राक्षये,' 'दरिद्रा दुर्गतौ,' 'चकासृ दीप्तौ,' 'शासु अनुशिष्टौ,' 'दीधीङ् दीप्तिदेवनयो,' 'वेवीङ् वेतिना तुल्ये' इत्यादीनामदादिगणमटितानां षड्धातूनां जक्षतीति सप्तमस्य जक्ष् इति पृथक् पदेन संग्रहेण "षड् धातवोऽन्ये जक्षतीति सप्तमश्चाभ्यस्तसंज्ञका इत्यर्थः सिद्ध्यति ।

---

बहुव्रीहि में तद्गुणसंविज्ञान और अतद्गुण संविज्ञान दोनो मानने का फल यह हुआ कि 'सर्वादीनि' १.१.२७ में तद्गुण-संविज्ञान माना गया । यहाँ आदि का अर्थ अवयव है । इसलिए अवयव और अवयवी में समवायसम्बन्ध होने के कारण 'तद्गुण संविज्ञान' होने से सर्व शब्द को भी सर्वनाम संज्ञा हुई । यदि अतद्गुण संविज्ञान होता तो विश्वादि शब्द को ही सर्वनाम संज्ञा होती । जक्षित्यादयः षट् ६.१.६ में अतद्गुण संविज्ञान बहुव्रीहि है । वहाँ 'जक्ष्' पृथक् पद है । 'इति' शब्द शब्द पूर्वार्थ का वाचक होने से जक्ष् का ही परामर्श करता है। इत्यादयः में अतदगुण संविज्ञान बहुव्रीहि है । इसलिए 'इति' शब्द से परामृष्ट जक्ष् को छोड़कर जागृ दरिद्रा, शास्, चकास् दीधीङ्,वेवीङ् ये छः धातु लिए गये और सप्तम धातु जक्ष् भी लिया गया और इन सातों को अभ्यस्त संज्ञा हुई । इसलिए जक्षत्, जाग्रत्, दरिद्रत्, शासत्, चकासत् दीध्यत् और वेव्यत् इन रुपों में ' नाभ्यस्ताच्छतुः ७.१.७.४८ से नुम् का निषेध हुआ । यदि तद्गुण-संविज्ञान मानते तो जक्ष् सहित ६ धातु लिए जाते फिर वेव्यत् में नुम् का निषेध नहीं होता ।

इस तरह 'लक्ष्यानुरोधात्' जहाँ अवयवार्थ का अन्वय समासार्थविशेष्य के साथ विवक्षित हो; वहाँ 'तद्गुण संविज्ञान' होता है और जहाँ अवयवार्थ का अन्वय समासार्थ विशेष्य के साथ अभीष्ट न हो, वहाँ अतद्गुण संविज्ञान होता है यह व्यवस्था माननी चाहिए ।

**'सर्वनामसंज्ञा' सूत्रे भाष्ये स्पष्टा ॥७८॥**

---

'जाग्रत्' 'दरिद्रत्' 'चकासत्' 'शासत्' ,दीध्यत्' 'वेव्यत्' इत्यादिषु षट्सु 'नाभ्यस्ताच्छतुः ७.१.७८ इति नुम्निषेधः सिद्ध्यति जक्षत् इत्यत्रापि च। दीध्यत् वेव्यदित्यत्र व्यत्ययो बहुलम् ३.१.८५ इति व्यत्ययेन परस्मैपदत्वाच्छतृप्रत्ययः।

'सर्वादीनि सर्वनामानि' १.१.२७ इति सूत्रे भाष्ये इयं स्पष्टा। तथाहि भाष्यम्—सर्वादीनीति कोऽयं समासः। बहुव्रीहिरित्याह। कोऽस्य विग्रहः सर्व आदिर्येषाम्, तानीमानीति। यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति। किं कारणम्। अन्यपदार्थत्वाद् बहुव्रीहेः। बहुव्रीहिरयमन्यपदार्थे वर्तते। तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति। तद्यथाः—चित्रगुरानीयतामित्युक्ते यस्य ता गावो भवन्ति, स एवानीयते, न गावः। नैष दोषः। भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि। तद्यथा चित्रवाससमानय। 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति। तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति॥

मूले=विशेष्यान्वयित्वमित्यत्र विशेष्यान्वयिनान्वयित्वमित्यपि क्वापि पाठः।

जक्षित्यादयः षट् ६.१.६ इत्यत्र च भाष्ये दृश्यतेऽतद्गुणसंविज्ञानस्य चर्चा तत्र हि वार्तिककृता।

प्रोक्तम्="जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम्" तच्च खण्डयता तेनैवोक्तम् "अपरिगणनं वा गणान्तत्वात्" अर्थात् सूत्रे यत् षडित्युक्त्वा परिगणनं कृतं तन्न कर्तव्यम् अस्त्वागणान्तमभ्यस्तसंज्ञा। तत्रागणान्तस्याभ्यस्तसंज्ञायाम् स्वीकृतायां संभावितान् दोषान्निराकृत्य अन्ते प्रोक्तम् :—सप्तैवेमे धातवः पठ्यन्ते। जक्ष्—अभ्यस्तसंज्ञी भवति इत्यादयश्च षट्, जक्षित्यादयःषडिति।

अत्र कैयटः अथवेति प्रतीकमुपादाय प्राहः—नायं श्तिपा निर्देशः अर्थात् जक्षित्यादय इत्यत्र जक्षितीति श्तिपा निर्देशः नास्तीत्यर्थः। श्तिपि 'रुदादिभ्यः— ७.१.७६ इतीटि यद्रूपं तेनात्र निर्देशो नास्तीत्यर्थः। किं तर्हि ? 'जक्ष्' इति पृथक्

---

'सर्वादीनि सर्वनामानि' १.१.२७ सूत्र के भाष्य में पूर्वोक्त सारी बातें स्पष्ट रूप में कही गयी हैं। वहाँ अन्यपदार्थ प्रतिपादक बहुव्रीहि समास होने के कारण "सर्व आदि र्येषाम्" इस विग्रह में वर्तिपदार्थ होने के कारण सर्व शब्द को सर्वनामसंज्ञा न होने की समस्या का समाधान यह कह कर दिया गया कि बहुव्रीहि मे तद्गुण संविज्ञान भी होता है। उदाहरण में "चित्रवाससमानय, लोहितोष्णीषाः ऋत्विजः प्रचरन्ति" को उद्धृत किया गया। इन्हीं उदाहरणों के आधार पर संयोग सम्बन्ध को भी कहीं तद्गुणसंविज्ञान का नियामक सम्बन्ध माना गया। 'अतद्गुणसंविज्ञान' की चर्चा 'जक्षित्यादयः' ६.१.६ सूत्र के भाष्य और कैयट में की गयी। इसके लिए **'दुर्गा' व्याख्या** देखें—इति शिवम् ।७८।

ननु 'वदः सुपि क्यप् चे'ति चेनानुकृष्टस्य यतो ,भुवो भावे' इत्यत्राप्यनुवृत्तिः स्यादत आह—

## चानुकृष्टं नोत्तरत्र ॥७९॥

पदम् । 'इत्यादय' इत्यत्र इति शब्देन जक्षिः परामृश्यते । आदिशब्दश्च समीपवाची । तेन तत्समीपाः षडभ्यस्तसंज्ञा इति सप्तानामेवाभ्यस्तसंज्ञा सूत्रेण संगृहीतेत्यर्थः ॥ अत्रोद्योते प्रोक्तम् 'जक्षित्यादय' इत्यत्र अतद्गुणसंविज्ञानबहुव्रीहिणा जक्षेः परे षड् जक्षिश्चेति सप्तानां सिद्धाः संज्ञा इत्यर्थः ।।

'एकाचो द्वे प्रथमस्य' ६.१.१ इति सूत्रस्य भाष्येऽपि दृश्यते तत्र बहुव्रीहिनिर्देशे अनच्कस्य द्विर्वचनमन्यपदार्थत्वात् । तत्र बहुव्रीहिनिर्देशेऽनच्कस्य द्विर्वचनं प्राप्नोति । आटतुः आटुः । किं कारणम् ? अन्यपदार्थत्वाद्बहुव्रीहेः । अन्यपदार्थे बहुव्रीहिर्वर्तते, तेन यदन्यदचस्तस्य द्विर्वचनं स्यात् । तद्यथा चित्रगुरानीयतामित्युक्ते यस्य ता गावः सन्ति, स आनीयते, न गावः'' इत्याशङ्क्य समाहितम्—''सिद्धं तु तद्गुणसंविज्ञानात् पाणिनेर्यथा लोके'' सिद्धमेतत्—कथम् ? तद्गुणसंविज्ञानाद्भगवतः पाणिनेराचार्यस्य यथा लोके तद्यथा—लोके । शुक्लवाससमानय, लोहितोष्णीषा ऋत्विजः प्रचरन्ति इति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति । एवमिहापि ॥

''तद्गुणसंविज्ञानपदार्थं विवेचयन् कैयट आह-तस्य—अन्यपदार्थस्य गुणः विशेषणं तस्य संविज्ञानम् स वर्तिपदार्थो गुणो वा यस्य पदार्थस्य तस्य संविज्ञानम् इत्यादि ॥ शिवम् ॥ ७८ ॥

## चानुकृष्टं नोत्तरत्र ॥७९॥

ननु 'वदः सुपि क्यप् च' ३.१.१०६ इत्यत्र 'अचो यत्' ३.१.९७ इति सूत्रादनुकृष्टस्य यत्प्रत्ययस्य 'भुवो भावे' ३.१.१०७ इत्यत्राप्यनुवृत्तिः स्यादतः परिभाषा स्वीक्रियते—''चानुकृष्टं नोत्तरत्र'' । अर्थात् चकारेणानुकृष्टमुत्तरत्र नाधिक्रियते इति ।

---

## चानुकृष्टं नोत्तरत्र—७९

'वदः सुपि क्यप् च' ३.१.१०६ सूत्र में चकार के द्वारा 'अचो यत्' ३.१.९१ से ३.१.१०५ तक धारा प्रवाह रूप में अनुवृत्त यत् का अनुकर्षण होता है । उस अनुकृष्ट 'यत्' प्रत्यय की अनुवृत्ति भुवो भावे ३.१.१०७ सूत्र में भी होनी चाहिए, इस दोष के निवारण के लिए परिभाषा बनाते हैं—

''चानुकृष्टं नोत्तरत्र''

'चकार' के द्वारा अनुवर्तमान पद का सम्बन्ध उत्तरसूत्र के साथ नहीं होता है । सूत्र में 'च' के कारण जिसकी अनुवृत्ति मानी गयी है, उसका सम्बन्ध उत्तर-

णमुल्यनुवर्तमाने 'अव्ययेऽयथाभिप्रेते'ति सूत्रे पुनर्णमुल्ग्रहणमस्यां ज्ञापकम् । अन्यथा क्त्वा चेति वदेत् । तद्धि उत्तरत्रोभयोः सम्बन्धार्थम् । उदाहरणानि स्फुटानि ॥

---

अत्र ज्ञापकम् 'अव्ययेऽयथार्ऽभिप्रेताख्याने कृञः क्त्वाणमुलौ ३.४.५९ इत्यस्य स्थानेऽव्ययेऽयथाभिप्रेताख्याने क्त्वा चेति न्यासे कृतेऽपि चकारेण "स्वादुमि णमुल् ३.४.२६ इति सूत्राण्णमुलोऽनुकृष्टिसंभवे णमुलः पुनर्ग्रहणम् । तद्धि 'तिर्यच्यपवर्गे' ३.४.६०इत्याद्युत्तरत्र सूत्रेषु क्त्वाणमुलोरुभयोरनुवृत्यर्थं क्रियते । तेन उच्चैःकृत्य, उच्चैःकृत्वा, उच्चैःकारम् अप्रियमाचष्टे, नीचैःकृत्य, नीचैःकृत्वा नीचैःकारं प्रियं ब्रूते इत्यादावव्ययपूर्वककृञो यथा क्त्वाणमुलावुभौ भवतस्तथा तिर्यक्कृत्य, तिर्यक्कृत्वा तिर्यक्कारं गत इत्यादावपि जायेते । यदि चानुकृष्टस्योत्तरत्राप्यनुकृष्टिर्भवेत् तदा 'क्त्वा चेति' कथनेऽपि चेनानुकृष्टस्य णमुल उत्तरत्रानुवृत्तिसिद्धे णमुल्ग्रहणं पुनः कृतं व्यर्थंस्यात् ।

**उदाहरणानि स्फुटानि**='रङ्कोरमनुष्येऽण् च' ४.२.१००इति सूत्रे चकारेणानुकृष्टस्य 'काशिभ्यःष्फक्' ४.२.९९ इतिष्फको 'द्युप्रागपाग्......४.२.१०१ इत्यत्र सम्बन्धो न जायते । 'दिक्पूर्वपदाट्ठञ् च' ४.३.६ इत्यत्र चेन अर्धाद्यत् ४.३.४ इत्यतोऽनुकृष्टस्य यतो 'ग्रामजनपद'—४.३.७ इत्यत्र नानुवृत्तिः । सम्वत्सराग्रहायणाभ्यां ठञ् च ४.३.५० इत्यत्र चकारेण 'ग्रीष्मावरसम—४.३.४९ इत्यतोनुकृष्टस्य वुञो 'व्याहरति मृगः' ४.३.५१ इत्यत्र सम्बन्धाभावः । 'पितुर्यच्च' ४.३.७९ इत्यत्र 'ऋतष्ठञ्' ४.३.७८ इत्यतोनुकृष्टस्य ठञो 'गोत्रादङ्कवत्' ४.३.८० इत्यत्रासम्बन्धः ॥

---

सूत्र के साथ नहीं होता है । अव्यये "यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" ३.४.५९ सूत्र में क्त्वाणमुलौ के स्थान में 'क्वा' च करने से ही "चकार" से णमुल् का अनुकर्षण हो जाता, फिर किये गये णमुल् ग्रहण ने यह परिभाषा ज्ञापित की । णमुल् ग्रहण वहाँ इसलिए किया गया है कि उत्तरसूत्र 'तिर्यच्यपवर्गे' ३.४.६० में णमुल् की अनुवृत्ति हो सके । यदि 'चकार' से अनुकृष्ट का उत्तरसूत्र में भी सम्बन्ध सम्भव होता तो चानुकृष्ट 'णमुल्' की भी उत्तर सूत्र 'तिर्यच्यपवर्गे' ३.४.६०में अनुवृत्ति हो ही जाती फिर 'णमुल्' ग्रहण व्यर्थ ही होता । वह व्यर्थहोकर इस परिभाषा का ज्ञापन करती है । परिभाषा मानने पर तो 'णमुल्' ग्रहण चरितार्थ हो गया । यदि इस परिभाषा के रहते हुए 'णमुल्' ग्रहण नहीं करेंगे तो 'चानुकृष्ट णमुल्' का उत्तर सूत्र में सम्बन्ध नहीं हो सकेगा । अतः क्त्वाणमुलौ" में णमुल् कहना आवश्यक हो गया । "क्त्वाणमुलौ" कहने का इतना ही तात्पर्य था कि दोनों का उत्तरसूत्र में सम्बन्ध हो ।

**इदमनित्यम्। अत एव 'तृतीया च होरि'त्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तरान्तरेणेत्यत्र सम्बन्धः ॥**

---

**इदमनित्यमिति**—अनित्यत्वे प्रमाणम् "एकाजुत्तरपदे णः" ८.४.१२ इति सूत्रे 'रषाभ्यां नो णः समानपदे' ८.४.१ इत्यतो णानुवृत्त्यैव सिद्धे पुनर्णग्रहणम्। तद्धि 'प्रातिपदिकान्तनुम्विभक्तिषु च' ८.४.११ इति सूत्रे चकारेण 'वा भावकरणयोः' ८.४.१० इत्यतोऽनुकृष्टस्य 'वा' इत्यस्यासम्बद्धार्थम् क्रियते। "प्रातिपदिकान्तनुम्" इति सूत्रे आगतस्य णस्य 'एकाजुत्तरपदे' इत्युत्तरत्र सम्बन्धे स्वीकृते तत्र चेनानुकृष्टस्य 'वा' इत्यस्यापि सम्बन्धः स्यात्तद्वारणाय पुनर्णग्रहणम्। यदीयं परिभाषा नित्या स्यात्तदा तत्र चेनानुकृष्टत्वाद्वा' इत्यस्योत्तरत्र सम्बन्धाभावे सिद्धे तद्वारणाय कृतो 'ण' ग्रहणप्रयत्नो वृथा स्यात्। अतः पुनर्णग्रहणेनास्यानित्यत्वं ज्ञाप्यते। न चारम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्णग्रहणस्य स्पष्टार्थत्वमुक्तम्, न तेन परिभाषाया अनित्यत्वं शक्यते ज्ञापयितुमिति वाच्यम् आरम्भसामर्थ्यमूलकनित्यत्वसाधनप्रयासस्यैव तदनित्यत्वज्ञापनात्। अन्यथा परिभाषयैवानया चानुकृष्टस्य 'वा' इत्यस्योत्तरत्र सम्बन्ध वारणसम्भवे आरम्भे सामर्थ्यकल्पनपर्यन्तानुधावनं वृथा स्यात्। अनित्यत्वस्य फलमाह—**अतएव तृतीया च होः**" इति। अस्या अनित्यत्वादेव 'तृतीया च होश्छन्दसि २.३.३ इत्यत्र चकारेण 'कर्मणि द्वितीया' २.३.२ इत्यतोऽनुकृष्टाया द्वितीयाया "अन्तरान्तरेणयुक्ते" २.३.४ इत्युत्तरसूत्रे सम्बन्धो जायते ॥

---

उदाहरण स्फुट हैं। 'रङ्कोरमनुष्येऽण् च' ४.२.१०० इस सूत्र में चकार से अनुकृष्ट "कापिश्याः ष्फक्' ४.२.९९ से फक् की अनुवृत्ति 'द्युप्रागपाग्' ४.२.१०१ इस उत्तरसूत्र में नहीं हुई। 'दिक्पूर्वपदात्' ४.३.६ इस सूत्र में 'च' से अनुकृष्ठ 'अर्धाद्यत् ४.३.४ से यत् की अनुवृत्ति ग्रामजनपद— ४.३.७ में नहीं हुई। और उदाहरण 'दुर्गा' व्याख्या में दिये गये हैं।

यह परिभाषा अनित्य है। इसलिए लक्ष्यानुरोधात् जहाँ प्रवृत्ति होने से इष्ट प्रयोगों की सिद्धि होती है वहाँ परिभाषा की प्रवृत्ति होगी और जहाँ अप्रवृत्ति से इष्ट-प्रयोग सिद्ध होता है; वहाँ परिभाषा की प्रवृत्ति नहीं होगी; परिभाषा की अनित्यता में प्रमाण है—'एकाजुत्तरपदे णः ८.४.१२ का 'ण' ग्रहण। 'रषाभ्यां नो णः'८.४.१ सूत्र से 'एकाजुत्तरपदे'—८.४.१२ में 'ण' की अनुवृत्ति हो ही जाती वहाँ 'ण' ग्रहण इसलिए करते हैं कि 'प्रातिपदिकान्त'—८.४.११ इस सूत्र में चकार के द्वारा 'वा भावकरणयोः' ८.४.१० से अनुकृष्ट 'वा' का सम्बन्ध न हो जाय। 'प्रातिपदिकान्त' सूत्र में आये हुए 'ण' का सम्बन्ध यदि उत्तर सूत्र 'एकाजुत्तरपदे' में मानेंगे तो वहाँ 'च' से अनुकृष्ट 'वा' का भी सम्बन्ध हो जायगा इसी डर से वहाँ 'ण' ग्रहण किया गया। यदि यह परिभाषा नित्य हो तो इसी के द्वारा 'वा' की निवृत्ति हो जाती 'ण' ग्रहण व्यर्थ हो जाता। इस तरह प्रवृत्ति और निवृत्ति व्यवस्थित है।

**'लुटि च क्लृप' इति सूत्रस्थेनानुवृत्त्यर्थंसकलचकारप्रत्याख्यानेन विरुद्धेयम् ।**

'लुटि च क्लृपः'१.३ ९३ इति सूत्रे भाष्ये तत्र तत्र तत्तत्पदानामनुवृत्तये कृतः, सकलश्चकारः प्रत्याख्यातः । तेन प्रत्याख्यानेन ज्ञायते इयं परिभाषा न कर्तव्येति तद्भाष्यविरुद्धत्वात् । तथा च भाष्यम्—'लुटि च क्लृपः १.३.९३ । किमर्थश्चकारः ।' स्यसनोरित्येतदनुकृष्यते । यदि तर्हि नान्तरेण चकारमनुवृत्तिर्भवति, "द्युद्भ्योलुङि" (१.३.९१) इत्यत्रापि चकारः कर्तव्यो विभाषेत्यनुकर्षणार्थः । अथेदानीमन्तरेणापि चकारमनुवृतिर्भवतीहापि नार्थश्चकारेण । एवं सर्वे चकाराः प्रत्याख्यायन्ते ।। अत्र कैयटः—स्वरितत्वादनुवृत्या चकारशब्दप्रतिपाद्यस्यार्थस्य सिद्धत्वाद् भाष्यकारः सर्वानेव चशब्दान् प्रत्याचष्टे इति ।।

व्याख्यानादेवानुवृत्तिनिवृत्योर्निर्वाहाच्चकाराः व्यर्था इति भाष्याशयस्य नागेशेन स्वीकारात् ।

एतद्भाष्यं कैयटकृततद्व्याख्यानञ्चैतत्परिभाषार्थप्रतिकूले । परिभाषयानया चकारानुकृष्टस्योत्तरत्र सम्बन्धाभावरूपस्य प्रयोजनस्य प्रतिपादनात् ।।

---

सूत्रों में "चकार" दो प्रकार से निर्दिष्ट है । एक चकार वह है, जो विधेय घटित सूत्र से अव्यवहित सूत्र में विद्यमान है । दूसरा चकार उस प्रकार का है जो विधेय घटित सूत्र के व्यवहित सूत्र में स्थित है । इन दोनों प्रकार के चकार के प्रयोगों में जहाँ प्रथम प्रकार का प्रयोग है वहाँ इस परिभाषा की प्रवृत्ति नहीं होती, किन्तु जहाँ द्वितीय प्रकार के 'चकार' का प्रयोग है, वहाँ यह परिभाषा लगती है । इसलिए "तृतीया च होश्छन्दसि" २.२.३ सूत्र में 'च' के द्वारा आकृष्ट द्वितीया का 'अन्तराऽन्तरेण युक्ते, २.२.४ इस सूत्र में सम्बन्ध हुआ; क्योंकि वहाँ (तृतीया च होश्छन्दसि में) आया हुआ चकार प्रथम प्रकार का चकार है । क्योंकि वह 'कर्मणि द्वितीया' २.३.२ इस विधेय (द्वितीया) घटित सूत्र से अव्यवहित सूत्र 'तृतीया च होश्छन्दसि२.२.३ में विद्यमान है, अतः वहाँ परिभाषा की प्रवृत्ति नहीं हुई । 'वदः सुपि क्यप् च" ३.१.१०६ में जो 'चकार' है; वह यत् प्रत्ययरूप विधेयघटित "अचोयत्" ३.१.९७ इस सूत्र से अनेक सूत्रों के व्यवधान पर स्थित है अतः उससे गृहीत (परामृष्ट) 'यत्' का 'भुवोभावे' ३.१.१०७ सूत्र में सम्बन्ध नहीं माना गया । चानुकृष्ट की अनुवृत्ति और निवृत्ति में यही रहस्य है । इसी बात को बताते हुए नागेश लिखते हैं कि यह परिभाषा अनित्य है । इसलिए "तृतीया च होः" इस सूत्र में चकार के द्वारा अनुकृष्ट द्वितीया का भी "अन्तरान्तरेण युक्ते" यहाँ पर सम्बन्ध हुआ ।

"लूटि च क्लृपः १.१.९३ इस सूत्र के भाष्य में कहा गया है कि अनुवृत्ति के लिए सूत्रों में जो चकार किये गये हैं ये नहीं करने चाहिए । लक्ष्यानुसारी

व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः। 'कुलिजाल्लुक्खौ च' इतिसूत्रस्थभाष्यविरुद्धा च। तत्र हि 'द्विगोष्ठंश्चे'ति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य खोऽन्यतरस्यामित्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम् ॥७६॥

---

एषा 'कुलिजाल्लुक्खौ' च ५.१.५५ इति सूत्रस्थभाष्यविरुद्धा च। तथाहि भाष्यम्—'कुलिजाल्लुक्खौ च' ५।१।५५ "कुलिजाच्चेत्येव सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिंस्त्रिकभावात् ॥१॥ कुलिजाच्चेत्येवसिद्धे नार्थोलुक्खग्रहणेन। किं कारणम्? पूर्वस्मिंस्त्रिकभावात्। पूर्वस्मिन् योगे सर्व एष त्रिकोनिर्दिश्यते द्वयाढकी, द्व्याढकिकी, द्व्याढकीना॥

अत्र भाष्ये "कुलिजाल्लुक्खौ च" ५.१.५५ इति सूत्रे द्विगोःष्ठंश्च ५.१.५४ इति सूत्रात्ष्ठनस्तत्र चकारेण "आढकाचितपात्रात् खोऽन्यतरस्याम् ५.१.५३ इत्यतोऽनुकृष्टस्य खोऽन्यतरस्यामित्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति प्रत्याख्यातम्। तेन प्रत्याख्यानेनाप्यस्या अभाव एव गम्यत इति भावः।

अत्रायं विमर्शः अष्टाध्याय्यां च प्रयुक्तस्य चकारस्य द्वैविध्यं दृश्यते—( विधेयघटितसूत्राव्यवहितसूत्रस्थश्चकारः ( २ ) विधेयघटितसूत्रव्यवहितसूत्रस्थश्च। प्रथमे प्रकारे परिभाषेयं न प्रवर्तते, द्वितीये च प्रवर्तते। 'वदःसुपि क्यप् च' ३.१.१०६ इत्यत्रत्यश्चकारो यत्प्रत्ययरूपविधेयघटितात् 'अचोयत्' ३.१.९७ इतिसूत्रादनेकसूत्रव्यवहितो वर्तते। अतस्तत्रैतस्याः परिभाषायाः प्रवृत्त्या तस्य यतो 'भुवो भावे' ३.१.१०७ इत्यत्र सम्बन्धाभावः सिद्धः। "तृतीया च होश्छन्दसि"

---

व्याख्यान या स्वरितत्व प्रतिज्ञा से ही अनुवृत्ति और निवृत्ति हो जाने से निर्वाह हो जायगा; ऐसा मान कर भाष्यकार ने सभी चकारों का प्रत्याख्यान कर दिया। उस प्रत्याख्यान से इस परिभाषा का मेल नहीं खाता है। 'कुलिजाल् लुक्खौ च' ५.१.५५ सूत्र के भाष्य से भी यह परिभाषा विरुद्ध दिखाई देती है। भाष्यकार ने वहाँ के "लुक्खौ च" का प्रत्याख्यान करने के लिए "द्विगोष्ठंश्च ५.१.५४ से ष्ठन् के साथ-साथ वहाँ "चकार" के द्वारा अनुकृष्ट "खोऽन्यतस्याम्" की अनुवृत्ति भी स्वीकार की गयी। इसलिए सूत्रों में "चकार" के रखने की स्थिति में यह परिभाषा है। यदि चकार के प्रत्याख्यान करने वाले भाष्य ग्रन्थ का तात्पर्य यह मानें कि वह भाष्य अव्यवहित सूत्र के विधेय को समाविष्ट करने के तात्पर्य से प्रयुक्त चकार का ही प्रत्याख्यान सूचित करता है; तब तो व्यवहित विधेय के संग्राहक चकार वाले सूत्रों के क्षेत्र में इस परिभाषा का उपयोग संभव है और उस भाष्य के साथ भी इसका कोई विरोध नहीं है। क्योंकि दोनों के विषय भिन्न हैं। "कुलिजालुक्खौच' इस सूत्र का भाष्य भी विरुद्ध नहीं होगा; क्योंकि यह भाष्य भी अव्यवहित विधेय के परामर्शक चकार वाले सूत्र से सम्बद्ध है। इति शिवम् ॥ ७६ ॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद् व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह—

**स्वरविधौ व्यञ्जनमविद्यमानवत् ॥८०॥**

स्वरोद्देश्यके विधावित्यर्थः। 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इति

---

२.३.३ इति सूत्रस्थश्चकारस्तु द्वितीयेतिविधेयघटितसूत्रात् "कर्मणिद्वितीया" २.३.२ इत्यस्मादव्यवहितसूत्रस्थः। अतस्तत्रास्याः परिभाषाया अप्रवृत्या चानुकृष्टद्वितीयाया उत्तरत्र 'अन्तरान्तरेणयुक्ते' २.३.४ इत्यत्र सम्बन्धो जायते। इदमेवरहस्यमस्याः प्रवृत्यप्रवृत्योः। एवञ्च यदि 'लुटिक्लृपः १.१.९३ इति सूत्रस्थं चकारप्रत्याख्यानपरकं भाष्यमव्यवहितसूत्रस्थचकारविषयकमेवोच्येत; तदा व्यवहितसूत्रस्थचकारविषयिकेयं परिभाषा न ततो विरुद्धा भाष्यस्य परिभाषायाश्च विभिन्नविषयत्वात्। 'कुलिजाल्लुक्खौ च' ५.१.५५ इतिसूत्रस्यभाष्यमपि अव्यवहितसूत्रस्थचकारविषयकं व्यवहितसूत्रस्थचकारविषयिणी चेयं परिभाषेति न कोऽपि मिथोविरोध इति। शिवम् ७९।

**स्वरविधौ व्यञ्जनमविद्यमातवत् ॥८०॥**

ननु व्यञ्जनस्योदात्तानुदात्तत्वाद्यभावादन्तोदात्तादनुदात्तादेश्च यदुच्यते कार्यं तद्व्यञ्जनान्ताद्व्यञ्जनादेश्च न प्राप्नोति अतः परिभाषा स्वीक्रियते :—"**स्वरविधौ व्यञ्जनमविद्यमानवत्**"। अर्थात् स्वरोद्देश्यके (स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके) **विधौ** कर्तव्ये लक्ष्यस्थं व्यञ्जनमविद्यमानवद् भवतीत्यर्थः। लक्ष्ये विद्यमानमपि व्यञ्जनं स्वरोद्देश्यके विधौ कर्तव्येऽविद्यमानमिव जायत इत्यर्थः। 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" ६.२.१४२ इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः। "पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं (प्रकृतिस्वरादिकं) नेति तदर्थः। **अन्यथा**=

---

**स्वरविधौ व्यञ्जनमविद्यमानवत् ॥८०॥**

उदात्त अनुदात्त आदि, स्वर के धर्म माने गये हैं; व्यञ्जन के नहीं। इसलिए अनुदात्तादि और अन्तोदात्त से जो कुछ अञ् आदि प्रत्यय विहित हैं; वे व्यञ्जनादि और व्यञ्जनान्त से नहीं प्राप्त होंगे, इसलिए परिभाषा बताते हैं।

"**स्वरविधौ व्यञ्जनमविद्यमानवत्**" "स्वर विधौ" का अर्थ है स्वर को उद्देश्य करके होने वाली विधि। इस तरह सिद्ध हुआ कि स्वर को उद्देश्य करके होने वाली विधि अगर कर्तव्य रहे तो लक्ष्यस्थ व्यञ्जन अविद्यमानवत् हो जाते हैं। "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" ६।२।१४२ इस सूत्र में कथित पृथिव्यादि पर्युदास इसका ज्ञापक है। पृथिव्यादि वर्जित अनुदात्तादि उत्तरपद के परे रहते "देवता द्वन्द्वे च" ६।२।१४१ से उभय पदों को जो प्रकृति-स्वर विहित है, वह नहीं होता है, यह सूत्र का अर्थ है। यह "इन्द्राग्निभ्याम्" में प्रवृत्त होता है।

**सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः । अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥**

**धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अत एव शतुरनुमो नद्यजादी, अचः कर्तृयकीत्यादावजादी अच इत्यादेश्चारितार्थ्यम् । अत एव राजवती-**

---

परिभाषाया अभावे=पृथिव्यादीनां व्यञ्जनादित्वात् अनुदात्तत्वस्य च स्वरमात्रधर्मत्वादनुदात्तादित्वाभावेनैव द्यावापृथिवी जनयन्नित्यादौ प्रकृतिस्वराप्राप्त्या स पर्युदासो व्यर्थः स्यात् । स एव व्यर्थः सन्नस्या ज्ञापक इति भावः । ज्ञापिते तु ङीप्प्रत्ययान्तत्वात्पृथिवीत्यस्यादेः 'अनुदात्तौ सुप्पितौ' ३,१.४ इत्यनेनानुदात्तत्वे व्यञ्जनस्य च पकारस्यानेनाविद्यमानवद्भावेऽनुदात्तादित्वान्निषेधे प्राप्ते पर्युदासः सार्थकः ।

**धर्मी**, न्यायस्तद्ग्राहकं ज्ञापकम्, अपृथिवीत्यादिपर्युदासः तस्य मानादेव ज्ञायते यदियं परिभाषा स्वरोद्देश्यकविधिविषया । यथाविधिपरिस्थितौ परिभाषेयं ज्ञाप्यते; तादृशी परिस्थितिरस्याः परिभाषायाः प्रवृत्तौ निमित्तम् इति कल्पितव्यमौचित्यमूलकधर्मिग्राहकमानात् सा च परिस्थितिरस्ति स्वरोद्देश्यकविधिः=स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यकविधिः । अतस्तत्र कर्तव्ये परिभाषेयं प्रवर्तत इत्येव मन्तव्यम् । अत एव स्वरविधावित्यस्य स्वरोद्देश्यकविधावित्यर्थस्वीकारादेव 'शतुरनुमो नद्यजादी' ६.१.१७३ अचःकर्तृयकि ६.१.१९५ इत्यत्र अजादी अच इत्यादेश्चारितार्थ्यं जातम् । 'अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यादित्यर्थः'प्रथमस्य सिद्धान्तकौमुद्यामुक्तः । उपदेशे-

---

'द्यावा-पृथिवी' जनयन् में यह सूत्र प्रवृत्त नहीं होता । क्योंकि यहाँ उत्तर पद में पृथिवी शब्द है । यदि यह परिभाषा न रहे तो 'पृथिवी' आदि शब्दों के आदि में पकारादि रूप व्यञ्जन होने के कारण अनुदात्तादि उत्तर-पद नहीं रहने के कारण ही सूत्र की प्राप्ति होती ही नहीं थी, पृथिव्यादि उत्तर-पद में सूत्र की प्रवृत्ति को रोकने के लिए किया गया पृथिव्यादि पर्युदास व्यर्थ हो जायगा, वही व्यर्थ होकर परिभाषा का ज्ञापन करता है । धर्मि ग्राहक प्रमाण से ही यह सिद्ध होता है कि यह परिभाषा स्वर को उद्देश्य बनाकर होने वाली विधियों में प्रवृत्त होती है । धर्मी का अर्थ है न्याय, उसका ग्राहक अर्थात् ज्ञापक के प्रामाण्य से यह सिद्ध होता है कि—इस परिभाषा के ज्ञापक सूत्र का जो विषय है; वही इसका भी विषय होना चाहिए, ज्ञापक सूत्र का विषय स्वरोद्देश्यक विधि ही है । अतः धर्मि (परिभाषा) के ग्राहक (ज्ञापक) सूत्र के प्रमाण से 'स्वरविधौ' यह अर्थसिद्ध होता है । स्वरविधौ का अर्थ स्वरोद्देश्यक विधि है यह स्वीकार करने के कारण ही ''शतुरनुमो नद्यजादी'' ६.१.१७३ इस सूत्र में ''नद्यजादी'' यह कहना सार्थक हुआ और ''अचः कर्तृयकि'' ६.१.१९५ इत्यादि सूत्रों में ''अचः'' इत्यादि कथन की आवश्यकता हुई । नुम् रहित जो शतृप्रत्यय, तदन्त

**त्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तोऽवत्या इति स्वरो न। उदश्वित्वानित्यत्र ह्रस्वनुड्भ्यामिति मतुबुदात्तत्वं च नेत्याकरः॥**

ऽजन्तानां कर्तृयकि परे आदिरुदात्तो वेत्यर्थो द्वितीयस्य तत्रैवोक्तः। स्वरविधायकेऽपि विधौ व्यञ्जनस्याविद्यमानवद्भावे स्वीकृते तु एतत्सूत्रद्वयेऽपि कर्तव्ये व्यञ्जनस्याविद्यमानवद्भावापत्या अजादी इत्यस्य अच इत्यस्य च वैयर्थ्यं स्यादिति भावः। अतएव 'राजवती' त्यादौ "नलोपः सुप्स्वर'—८,२.२ इत्यनेन स्वरे कर्तव्ये नलोपस्यासिद्धत्वादन्वतीशब्दत्वाद्' अवती शब्दस्यान्त उदात्त इत्यर्थकेन 'अन्तोऽवत्याः ६.१.२२० इति उदात्तस्वरो न भवति। 'उदश्वित्वान्' इत्यत्र 'ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्त इत्यर्थकेन 'ह्रस्वनुड्भ्यां मतुप्' ६.१.१७६ इति मतुप उदात्तत्वं च न।

आकरः भाष्यमित्यर्थः। तथाच भाष्यम्—'अन्तोऽवत्याः' ६.१.२२०, ईवत्याः ६.१.२२१ किमर्थमिदमुभयमुच्यते न वत्या इत्येवोच्येत। वत्या इतीयत्युच्यमाने 'राजवती'त्यत्रापि प्रसज्येत। अथावत्या इत्युच्यमाने कस्मादेवात्र न भवति। असिद्धो नलोपस्तस्यासिद्धत्वान्नैषोऽवतीशब्दः। कस्तर्हि। अन्वतीशब्दः॥

यदि अन्तोदात्त हो तो उससे पर नदी और अजादि शसादिविभक्ति उदात्त होती है यह प्रथम सूत्र का अर्थ है। उपदेश में अजन्तों का आदि, कर्ता में विहित यक्परक हों तो उदात्त होता है यह द्वितीय सूत्र का अर्थ है। यदि यह परिभाषा स्वरविधायक विधि में भी लगे; तो इन दोनों सूत्रों के विषय में भी परिभाषा प्रवृत्त हो जायगी और व्यञ्जन आदि वाले शब्दों में भी व्यञ्जन के अविद्यमानवद् भाव हो जाने पर सर्वत्र अजादि और अजन्त ही दिखाई पड़ेंगे फिर 'अजादि' और अच् के ग्रहण की कोई आवश्यकता ही नहीं रह जाती। कोई विशेषण तब लगाया जाता है कि जब कि वैसा लगाना सम्भव हो, उस विशेषण के लगाने से किसी की निवृत्ति होती हो और वैसा विशेषण न लगाने से इष्ट अर्थ की प्रतीति न होती हो। जैसे "पीतम् वस्त्रमानय" यहाँ वस्त्र में पीत विशेषण लगाना इसलिए सम्भव है कि संसार में पीला वस्त्र देखा जाता है। नहीं लगाने से व्यभिचार है अर्थात् अभिप्रेत अर्थ की सिद्धि नहीं होती हैं, क्योंकि यदि "पीतं" न कहें तो कोई भी वस्त्र लाकर दे देगा जो कि अभिप्रेत नहीं है। यदि संसार में पीला ही वस्त्र होता, तो "पीतम्" कहने की कोई आवश्यकता नहीं थी, केवल 'वस्त्रमानय' कहने पर भी अन्यवस्त्रों के अत्यन्ताभाव में 'पीत वस्त्र' ही लाया जाता। इसी तरह जब इस परिभाषा के बल से स्वरविधायक विधि में व्यञ्जनों का अविद्यमानवद्भाव हो जायगा तब सर्वत्र अजादि या अजन्त शब्द ही मिलेंगे फिर इन दोनों पदों का वहाँ ग्रहण व्यर्थ हो जाता है, ये विशेषण किसी व्यञ्जनादि की व्यावृत्ति तो कर ही नहीं सकेंगे। अतः

**स्पष्टं चेदं 'समासस्ये'ति सूत्रे भाष्ये। 'उच्चैरुदात्त' इति सूत्रे कैयटस्त्वियमनावश्यकी समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह। तत्र भाष्येऽपि ध्वनितमेतत् ।।८०।।**

---

स्पष्टं चेदं 'समासस्य' ६.१.२२३ इति सूत्रे भाष्ये। परिभाषेयं 'समासस्य' ६.१.२२३ इति सूत्रे भाष्यकारेण स्पष्टतः प्रतिपादिता।। "समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम्"।। समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानं कर्तव्यम्। राजदृषत् ब्राह्मणसमित् ।।

"हल्स्वरप्राप्तौ वा व्यञ्जनमविद्यमानवत्"।।

अथवा हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीत्येषा परिभाषा कर्तव्या।। किमर्थमिदनुभयमुच्यते, न हल्स्वरप्राप्तावविद्यमानवदित्येवोच्येत, स्वरप्राप्तौ व्यञ्जनमविद्यमानवद् भवति—इति वा। द्विर्बद्धं सुबद्धं भवति।

उच्चैरुदातः १.२.२९ इति सूत्रस्य भाष्यप्रदीपे कैयटस्त्वाह "इयं परिभाषाऽनावश्यकी, समभिव्याहृताजुपरागाद् हलोऽप्युपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेरिति।, तथा च भाष्यम्—उच्चैरुदात्त- १.२.२९ नीचैरनुदात्तः १.२.३० किं षष्ठीनिदिष्टमज्ग्रहणमनुवर्तत उताहो न। किंचातः। यद्यनुवर्तते 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'त्येषा परिभाषा न प्रकल्पते। कथं हलो नाम स्वरप्राप्तिः स्यात्। एवं तर्हि निवृत्तम्। बहून्येतस्याः परिभाषायाः प्रयोजनानि।। अथ प्रथमा-

---

मानना यह चाहिए कि स्वर-विधौ का अर्थ स्वरोद्देश्यक बिधि है और वहीं यह परिभाषा लगती है, स्वर-विधायक विधि में नहीं। अतएव राजवती' इत्यादि प्रयोगों में स्वरविधि में "नलोपः सुप्स्वर"—४.२.२ से नलोप की असिद्धता करके 'अन्वती' शब्द के आजाने के कारण "न्तोऽवत्याः" ६.१.२२० से 'अवती शब्द के अन्त को उदात्तत्व नहीं हुआ। यदि यह परिभाषा यहाँ व्यञ्जन को "अविद्यमानवत्" कर देती तो 'न' के अविद्यमानवत् हो जाने से 'अवती' शब्द के आजाने पर अन्तोऽवत्याः" ६.१.२२० क्यों नहीं लगता?। "उदश्वित्वान्" में "ह्रस्वनुड्भ्यां मतुप्' ६.१.१७६ से मतुप् को उदात्तत्व नहीं हुआ। ह्रस्वान्त से पर और अन्तोदात्त नुट् से पर मतुप् को उदात्त हो यह इस सूत्र का अर्थ है। यदि यहाँ "तकार" का अविद्यमानवद्भाव हो जाता तो ह्रस्वान्त "उदश्वि" से पर मतुप् (वान्) को उदात्त हो जाता। "समासस्य" ६.१.२२३ सूत्र के भाष्य में इसका स्पष्ट उल्लेख है। "उच्चैरुदात्तः" १.२.२९ सूत्र में कैयट ने कहा कि यह परिभाषा अनावश्यक है। जैसे समीपस्थ जपाकुसुम के प्रतिबिम्ब से सफेद स्फटिक उपरक्त दिखता है; वैसे ही समभिव्याहृत उदात्तादियुक्त अच् के रंग से उपरक्त हल् भी उदात्तादिस्वरवान् प्रतीत हो जायगा। इस तरह पृथिव्यादि शब्द में पकारादि की अविद्यमानता किये बिना ही पृथिव्यादि शब्द अनुदात्ता-

निर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न। किञ्चार्थोऽनुवृत्या। बाढमर्थो यद्येते व्यञ्जनस्यापि गुणा लक्ष्यन्ते। ननु च प्रत्यक्षमुपलभ्यन्ते। इषेत्वोर्जेत्वा। नैते व्यञ्जनस्य गुणाः। अच एते गुणास्तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते। तद्यथा द्वयोरक्तयोर्वस्त्रयोः शुक्लं वस्त्रं तद्गुणमुपलभ्यते बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते। कुतो नु खल्वेतदच एते गुणास्तत्सामीप्यात्तु अजपि तद्गुण उपलभ्यते इति। अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति। अन्वर्थं खल्वपि निर्वचनम्। 'स्वयं राजन्ते स्वराः' 'अन्वग्भवति व्यञ्जनमिति'॥ अत्र कैयटः=स्वत एव हलोऽनुदात्तत्वं भवत्वनुदात्ताजुपरागवशाद्वा तदनुवादेन कार्यविधानेऽपि न दोषः। X X X X X X अथवा गतिरपि व्यञ्जेरर्थः। विविधं गच्छत्यजुपरागवशादिति व्यञ्जनमित्ययमर्थः पर्यायान्तरेण भाष्यकारेणाभिहितः। उपरागश्च पूर्वपराच्सन्निधानेऽपि परेणाचा हलो भवति न पूर्वेण॥

कैयटस्य मतमिदम् "अच एते गुणा" इत्यादिना भाष्येण ध्वनितमिति शक्यते तद्भाष्यं पूर्वोक्तं पठित्वा ज्ञातुम्।

नच व्यञ्जनस्योदात्तत्वादिवदवभासेऽपि तत्र वस्तुत उदात्तत्वादेरभावेन न तत्कार्यं कर्तुं शक्यते; मृगमरीचिकायां जलावभासेऽपि स्नानादिवत्; परिभाषासत्वे त्वनया अविद्यमानवत्वबोधनात् स्थानिवद्भावादिस्थल इव शास्त्रबलात्तत्कार्यं सिद्ध्यतीति परिभाषास्वीकार आवश्यक इति वाच्यम् पृथिव्यादिपर्युदासेनाहार्यात्मिकातिदेशादिवत् अवभासस्याप्याहार्यात्मकस्य शास्त्रप्रवृत्तिप्रयोजकत्वस्वीकारादिति भाष्याशयात् इति शिवम्। ८०।

---

दि अवभासित होंगे। उनकी निवृत्ति के लिए पर्युदास आवश्यक है। "उच्चैरुदात्तः" सूत्र के भाष्य से यह बात ध्वनित होती है। भाष्य में कहा गया है कि अच् के ये गुण हैं; किन्तु उसके समीप में रहने के कारण व्यञ्जन भी इन (उदात्तादि) गुणों से अनुरक्त बन जाता है।

यद्यपि पूर्वदृष्टान्त से व्यञ्जन उदात्तादिस्वरवान् अवभासित होंगे, उनमें सचमुच उदात्तत्वादि धर्म नहीं आ जायगा; तथापि पूर्वनिर्दिष्ट 'पृथिव्यादि' पर्युदास को ज्ञापक मानकर इस शास्त्र में आहार्य (आरोपित=वस्तुतः, असत् किन्तु किसी कारण से प्रतीत) ज्ञान को भी शास्त्र की प्रवृत्ति में उसी प्रकार कारण माना जा सकता हैं जैसा कि अतिदेश स्थल में अतिदेश शास्त्र के कथन को आधार मानकर वहाँ अविद्यमान धर्म भी शास्त्र की प्रवृत्ति और निवृत्ति में कारण बनता है। ऐसा मानने से कार्य चल जायगा। इति शिवम् ८०

नन्वेवमपि राजदृषदित्यादौ समास इत्यन्तोदात्तत्वं षकाराकारस्य न स्यादत आह—

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥८१॥

अस्याश्च 'यतोऽनाव' इति सूत्रे नौप्रतिषेधो ज्ञापकः। नाव्यमित्यत्रादिर्नकारो

---

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥८१॥

ननु स्वरोद्देश्यकविधौ व्यञ्जनस्याविद्यमानवद्भावेऽपि 'राजदृषत्' इत्यादौ 'समासस्य' ६.१.१२३ इत्यन्तोदात्तत्वं षकाराकारस्य न स्यादत आह—"हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्" इति। स्वरविधायकसूत्रेण हलः स्वरप्राप्तौ तस्य हलः (व्यञ्जनस्य) अविद्यमानवद्भावो भवतीत्यर्थः। 'समासस्य' ६.१.१२३ इति सूत्रेण समासान्ततया 'राजदृषत्' इत्यत्र तकारस्य हलः उदात्तस्वरप्राप्तौ तस्याविद्यमानवद्भावेन षकाराकारस्य स स्वरः सिद्ध्यतीति भावः।'यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विनेत्यर्थके 'यतोऽनावः' ६.२.२१३ इति सूत्रे निर्दिष्टो नौप्रतिषेधोऽस्या

---

हल्स्वरप्राप्तौ ............॥८१॥

माना कि पूर्व परिभाषा के बल पर स्वरोद्देश्यक विधि में व्यञ्जनों के अविद्यमानवत् हो जाने से पूर्वोक्त दोष नहीं होंगे परन्तु राजदृषत्' में 'समासस्य' ६.१.१२३ इस सूत्र में 'षकार' के अकार को समास के अन्त में विद्यमान नहीं होने के कारण अन्तोदात्तत्व नहीं होगा; क्योंकि वह स्वरोद्देश्यक विधि नहीं है; किन्तु समासोद्देश्यक स्वर-विधि है। अतः पूर्वोक्तपरिभाषा से व्यञ्जन अविद्यमानवत् नहीं होगा, इसलिए कहते हैं :—"हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्"

हल् को यदि स्वर प्राप्त हो; तो व्यञ्जन अविद्यमानवत् हो जाता है। स्वरविधायक सूत्र के उद्देश्यदल में प्रविष्ट हल् को स्वरविधान कर्तव्य रहने पर व्यञ्जन विद्यमान होते हुए भी अविद्यमान की तरह माना जाता है।

"दो स्वर वाले यत्प्रत्ययान्त शब्द का आदि उदात्त हो 'नौ' शब्द को छोड़ कर" इस अर्थ को प्रतिपादित करने वाले "यतोऽनावः" ६.२.२१३ सूत्र का 'नौ' प्रतिषेध इस परिभाषा का ज्ञापक है। "अनावः" प्रतिषेध इसलिए करते हैं कि "नाव्यम्" में आद्युदात्त न हो। इस परिभाषा के अभाव में उस प्रतिषेध की कोई आवश्यकता नहीं है। "नाव्यम्" में जो आदि में "नकार" है; व्यञ्जन होने के कारण वह उदात्तस्वरवान होने की योग्यता नहीं रखता, जो 'ना' में आकार है, वह स्वर योग्य होते हुए भी आदि नहीं है। इस तरह 'यतः' सूत्र की स्वतः अप्राप्ति है। फिर 'अनावः' प्रतिषेध करने की क्या आवश्यकता थी। किन्तु आचार्यपाणिनि तो समझते थे कि ',हल्स्वरप्राप्तौ" व्यञ्जनमविद्यमानवत् होता है। अतः 'नकार' के अविद्यमानवत् होने पर 'आ' को उदात्त न हो जाय। इसलिए प्रतिषेध करना आवश्यक था।

न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः ॥

न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम् । तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः ॥ स्पष्टा चेयं 'समासस्य' इति सूत्रे भाष्ये ॥८१॥

---

ज्ञापकः । यदीयं परिभाषा न स्यात्तदा नाव्यमित्यत्र य आदि र्नकारः न स उदात्तस्वरयोग्यः, उदात्तस्याज्धर्मत्वात्, यश्चाकारोऽच्त्वात्स्वरयोग्यो नासावादिरिति तस्य स्वत एव स्वराप्राप्त्या "अनाव' इतिप्रतिषेधोऽनर्थकः स्यात् । स एव व्यर्थः सन् परिभाषां ज्ञापयति । ज्ञापितायान्तु नकारस्याविद्यमानवद्भावेन आकारस्यैव आदित्वादनाव इत्यस्याभावे उदात्तः स्यात् । तद्वारणाय 'अनाव' इत्यस्य ग्रहणं स्वांशे चरितार्थम् । न च व्यञ्जनस्योदात्तत्वादियोग्यताऽभावेऽपि उदात्तत्वादिगुणविशिष्टोऽन्तरतमोऽच् व्यञ्जनस्य स्थाने आदेशोऽनेन सूत्रेण क्रियतामिति, तथा च नायोग्यतेति वाच्यम् तथा सति नाव्यमित्यस्याज्द्वयघटितत्वात् 'यतोऽनाव' इति प्रवर्वते यद्यनेन उदात्तत्वादिगुणविशिष्टस्यापरस्यान्तरतमस्याचो विधानं स्यात्तदा तृतीयस्याप्यचो जातत्वेन निमित्तभूतस्य द्व्यच्कत्वस्य विनाशः स्यादिति उपजीव्यविरोधस्यानौचित्यमिति कृत्वाऽऽद्युदात्तत्वाप्राप्त्या नौग्रहणस्य वैयर्थ्यमिति परिभाषाज्ञापने बाधाभावात् ।

---

माना कि व्यञ्जन में उदात्त कहलाने की योग्यता नहीं है, किन्तु यतोऽनावः' इत्यादिसूत्रों से व्यञ्जन के स्थान में उदात्तत्वादि गुण विशिष्ट अन्तरम अच् आदेश किया जा सकता है; इस तरह यदि "अनावः' नहीं कहेंगे तो आदिनकार ही उदात्तगुण विशिष्ट अन्तरतम अच्रूप आदेश हो जायगा, इस तरह 'अनावः' चरितार्थ है वह ज्ञापक नहीं हो सकता । इसके उत्तर में कहते हैं कि ऐसा मानने पर उपजीव्य विरोध लगेगा । उपजीव्य वह कहलाता है जो किसी के आश्रय में उत्पन्न होता है और फलता है । जिसके कारण जन्म पाता है वह उपजीवक होता है । जैसे पिता है—उपजीवक और पुत्र है उपजीव्य । सिद्धान्त यह है "पितुरुत्पन्नः पुत्रः पितरं न हन्यात्" पिता से उत्पन्न होने के कारण पुत्र को चाहिए कि वह पिता को न मारे । मारता है तो वह कार्य उपजीव्य—विरोध कहलाता है । यहां यदि यतोऽनावः से 'न' के स्थान में उदात्तत्व गुण विशिष्ट अच् आदेश किया जायगा तो "नाव्य" शब्द तीन अच् का हो जायगा । इस तरह जिस दो अच् के कारण 'यतः" यह सूत्र यहां प्रवृत्त हो पाया था, उसका विनाश स्पष्ट है । अतः उपजीव्य विरोध के कारण पूर्वनिर्दिष्ट सूत्र से आद्युदात्तगुणवान् अच् का विधान नहीं हो सकेगा । इस तरह अचरितार्थ 'अनावः' की ज्ञापकता बनी रही ।

यह परिभाषा 'समासस्य' ६.१,२२३ इस सूत्र के भाष्य में स्पष्ट है । वहाँ

ननु 'पूरणगुणे'ति निषेधस्तव्यत्यपि स्यात्, । 'दिव औत्' इत्यौत्वं 'दिवेः क्विप्य'पि स्यात् । तथा 'यतोऽनावः' इति स्वरो ण्यत्यपि स्यात् । 'ऋदृशोऽङि गुणः' इति चङ्यपि स्यात् । अत आह—

---

'समासस्य' ६.१.२२३ इति सूत्रे भाष्ये परिभाषैषा स्पष्टा तत्र हि ५३२ तमे पृष्ठे अस्यामेव टीकायामुद्धृतं वाक्यकदम्बमुक्त्वा 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्यस्याः प्रयोजनानि च "प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः" इत्यादिना प्रतिपाद्योपसंहारे प्रोक्तम्—

अस्तु तर्हि 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीति' ततः पुनरुक्तम् "यदप्युच्यतेऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्-व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्याचार्यप्रवृत्तिर्ज्ञापयति सिद्धं तद्भवति व्यञ्जनादेर्व्यञ्जनान्ताच्चेति यदयं नोत्तरपदेऽनुदात्तादावित्युक्त्वा, पृथिवीरुद्रपूषमन्थिष्विति प्रतिषेधं शास्ति ॥ सा तर्ह्येषा परिभाषा कर्तव्या । न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं यतोऽनाव ६.१.२१३इति नावः प्रतिषेधं शास्ति ॥ एषा=हल्स्वरप्राप्तावित्येषेत्यर्थः ।

इति शिवम् ८१ ।

**निरनुबन्धकग्रणे न सानुबन्धकस्य ॥८२॥**

**तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥८३॥**

ननु पूरणगुणसुहितार्थसदव्ययगुणसमानाधिकरणेन २।२।११ इति षष्ठीसमासनिषेधस्तव्यान्तशब्दयोगे विहितस्तव्यदन्तशब्दयोगेऽपि स्यात्, तकारस्य लक्ष्येऽविद्यमानतया तव्यरूपस्य तत्रापि सत्त्वात्, दिव औत् ७।१।८४ इति विहितौत्त्वं क्रीडाद्यर्थपठितदिवुधातोः क्विपि अक्षद्यूरित्यत्रापि स्यात्, तत्रत्योकारस्यानुबन्धस्य

---

भाष्यकार ने स्पष्ट शब्द में कहा 'आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषा (हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येषा) यदयं 'यतोऽनावः' ६.१.२१३ इति नावः प्रतिषेधं शास्ति ॥ अर्थात् 'यतोऽनावः'सूत्र का नौशब्द—प्रतिषेध यह ज्ञापित करता है—हल् को अगर स्वर प्राप्त होता हो तो हल् (व्यञ्जन) अविद्यमानवत् माना जाय । इति शिवम् । ८१ ।

**निरनुबन्धकग्रहणे—८२**

**तदनुबन्धकग्रहणे--८३**

'तव्यत्' में किया गया तकारानुबन्ध लक्ष्य 'में' दिखाई नहीं पड़ता । इसलिए 'पूरणगुण' २।२।११ के द्वारा होने वाला निषेध 'तव्य' की तरह 'तव्यत्' प्रत्यय करने पर भी होने लगेगा । "दिव औत्" ७।१।८४ से विहित 'औत्' क्रीडादि अर्थ में पठित 'दिव' धातु से क्विप् करने पर भी प्राप्त होगा; क्योंकि "दिवु" धातु में किया गया उकारानुबन्ध लक्ष्य में कहीं दिखाई ही नहीं देता । "यतोऽनावः"

**निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥८२॥**
**तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम् ॥८३॥**

**'वामदेवाड्ड्यड्ड्यौ इति सूत्रे ड्यड्ड्ययोर्डित्त्वमनयोर्ज्ञापकम् । तद्धि 'यय-**

---

लक्ष्येऽविद्यमानतया दिवरूपप्रातिपदिकत्वस्य तत्रापि सत्वात् ॥ यतोऽनावः ६।१।२१३ इत्यनेन विहित आद्युदात्तो यथा "युञ्जन्त्यस्य काम्या" इत्यत्र ण्यन्तात्कमेः "अचो-यत्" ३।१।९७ इतियत्प्रत्ययनिष्पन्ने काम्येत्यत्र भवति तथा "ईड्यो नूतनैरुत" इत्यत्र ण्यत्यपि स्यात्, ऋदृशोऽङि गुणः ७।४।१६ इत्यनेनाङि विहितो गुणश्चङ्यपि स्यात् (यद्यपि ऋवर्णान्ताद् दृशेश्च चङो विधानाभावादिदं कथनमसंगतं प्रतिभाति तथापि 'ऋदृशोऽङि गुणः ७।४।१६ इत्यतोङीत्यनुवृत्या 'श्वयतेरः' ७।४।१८ इत्यनेन श्विधातोरङि विहितः 'अ' आदेशः अश्वत् इत्यत्र यथा भवति तथा अशिश्वियत् इत्यत्र "विभाषाधेट्श्व्योः" ३।१।४९) इतिविहिते चङ्यपि स्यात् इति तस्य तात्पर्ये स्वीकृते तदसांगत्यं दूरीभवतीति न दोषः) इत्थं पूर्वोक्तदोषनिराकरणाय परिभाषाद्वयं स्वीक्रियते—

निरनुबन्धक ग्रहणे इति तदनुबन्धक ग्रहणे इति च । वामदेवाड्ड्यड्ड्यौ ४।२।९) इति सूत्रे ड्यड्डितोर्डित्वकरणमनयोर्ज्ञापकम् । तद्धि डित्वं 'ययतोश्चातदर्थे' ६।२।१५६ इत्यत्र तयोर्ड्यतो ड्यस्य चाग्रहणार्थं क्रियते । तेन 'ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात् परस्यान्त उदात्त इत्यर्थकेन 'ययतोश्चातदर्थे' ६।२।१५६ इत्यनेन "अवामदेव्यम्" इत्यत्रान्तोदात्तो न भवति किन्तु

---

६।१।२१३ से विहित आद्युदात्त स्वर ण्यत्—प्रत्यय करने पर भी होना चाहिए, क्योंकि अनुबन्ध लोप होने पर 'यत्' और 'ण्यत्' में कोई विलक्षणता शेष नहीं रह जाती । "ऋदृशोऽङि गुणः" ७।४।१६ इस सूत्र से विहित गुण जैसे 'अङ्' के परे रहते होता है, वैसे 'चङ्' के परे रहते भी होना चाहिए, इस दोष के निवारण के लिए कहते हैं—

**"निरनुबन्धकग्रहणे न सानुबन्धकस्य"—८२**
**"तदनुबन्धकग्रहणे नातदनुबन्धकस्य"—८३**

अनुबन्धरहित का ग्रहण रहने पर अनुबन्ध सहित का ग्रहण नहीं होता है । जहाँ अनुबन्ध विशेष का ग्रहण है; वहाँ उस अनुबन्ध से रहित का ग्रहण नहीं होता । "पूरणगुणसुहितार्थसदव्ययतव्य" २।२।११ इस सूत्र में 'तव्य' में अनुबन्ध रहित का ग्रहण है । इसलिए वहाँ तकारानुबन्ध वाले 'तव्यत्' का ग्रहण नहीं होगा । 'ण्यत्' में अनुबन्ध विशेष (णकार) का ग्रहण है । इसलिए णकारानुबन्ध रहित यत् का ग्रहण नहीं होगा । इसलिए यतोऽनावः" सूत्र का विषय 'ण्यत्' प्रत्यय नहीं बनेगा । "वामदेवाड्ड्यड्ड्यौ" ४।२।९ सूत्र में 'ड्य' और 'ड्यत्' दोनों जगह

तोश्चातदर्थे' इत्यत्र तयोरग्रहणार्थम् । नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः । एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति ॥

तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः ।

एते च प्रत्ययाप्रत्ययग्रहणसाधारणे 'दिव औत्' इत्यादौ सञ्चारितत्वात् ॥

---

'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" ६।२।२ इति अव्यये नञ्कुनिपातानाम् वा० ६।२।२१ इत्यव्ययपूर्वपदप्रकृतिस्वर एव। यदीमे परिभाषे न स्याताम् तर्हि ययतोश्चातदर्थे ६।१।१५६ इति विधीयमानमुत्तरपदान्तोदात्तत्वम् अवामदेव्यशब्देऽपि स्यादेव, डकारे लुप्ते यद्रूपत्वानपायात्। इत्थं डित्करणं व्यर्थं सत् परिभाषे ज्ञापयति। ज्ञापिते तु परिभाषाद्वये निरनुबन्धकेन 'य' इत्यनेन सानुबन्धकस्य डचस्य ग्रहणं न, तेन तकाररूपेणानुबन्धेन विशिष्टस्य यतो ग्रहणेन तदनुबन्धेतरानुबन्धकस्य (तकारभिन्नडकारानुबन्धकस्य) डयतो ग्रहणं च न जायते इति अवामदेव्ये दोषाभावः। न च टिलोपार्थं डित्वम्, यस्येति च ६।४।१४८ इति लोपेन सिद्धेः।

निर्गतोऽनुबन्धो यस्मात् "निरादयः क्रान्ताद्यर्थे पञ्चम्या (सू० कुगतिप्रादयः

---

डकारानुबन्ध का निर्देश इन दोनों परिभाषाओं में ज्ञापक है। 'डित्व' इसलिए किया गया है कि "ययतोश्चातदर्थे" ६।२।१५६ में इन दोनों का ग्रहण नहीं हो 'अवामदेव्यम्' में अन्तोदात्त न हो। यदि ये दोनों परिभाषाएँ न हों; तो ययतोश्चातदर्थे" में "डयडयत्" के ग्रहण को रोकने के लिए कोई उपाय नहीं होने से 'डित्' करण व्यर्थ ही हो जायगा।

नञ् से पर में विद्यमान यप्रत्ययान्त और यत्—प्रत्ययान्त उत्तरपद का अन्त उदात्त होता है। यह 'ययतोश्चादर्थे' इस सूत्र का अर्थ है। "अवामदेव्य" शब्द में 'ययतोश्चातदर्थे' ६।२।१५६ की प्रवृत्ति नहीं होती है किन्तु "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' ६।२।२ इस सूत्र से अव्यय पूर्वपद में प्रकृति स्वर ही होता है। यदि यह परिभाषा न रहती; तो 'डय' और 'डयत्' में यकार मात्र के अवशेष रहने के कारण उनका ग्रहण दुर्वार हो जाता, फिर 'डित्' करण व्यर्थ हो जायगा। अन्तिम परिभाषा का अर्थ यह है कि तन्मात्र अनुबन्ध के ग्रहण में वह और उससे अन्य अनुबन्धों का जहाँ ग्रहण हैं; उनका ग्रहण नहीं होता।

यह परिभाषा प्रत्यय और अप्रत्यय दोनों में समानरूप से प्रवृत्त होती है। 'प्रत्यय' इसका ज्ञापक है। इसलिए प्रत्यय में प्रवृत्त होना स्वाभाविक है और "दिव औत्" सूत्र में 'दिवु' धातु के विषय में इसकी भाष्यकार ने प्रवृत्ति दिखायी है; इस लिए 'अप्रत्यय' में भी यह प्रवृत्त होती है।

**वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्ट'मौङ आप' इत्यत्र भाष्ये। येनानुबन्धेन सानु-**

२।२।१८ वा० ५) इति समासः, निरनुबन्ध एव निरनुबन्धकः तस्य ग्रहणे सानुबन्ध-कस्य (अनुबन्धेन सह सानुबन्धः स एव सानुबन्धकस्तस्य) ग्रहणं न भवति तेन "पूरणगुण" इत्यत्र तव्यग्रहणे न सानुबन्धकस्य तव्यतो ग्रहणम्। अतएव स्वकर्तव्य-मित्यत्र समासो भवत्येव॥

प्रथमपरिभाषार्थः सरलः अतो व्याख्यानस्यानावश्यकत्वमुत्प्रेक्ष्य द्वितीय-परिभाषार्थमाह—तन्मात्रानुबन्धकग्रहणे इत्यादिना। तन्मात्रानुबन्धकग्रहणे स चान्य-श्चानुबन्धो यस्य तस्य ग्रहणं न भवतीति द्वितीयाया अर्थः॥

एते उभे अपि परिभाषे प्रत्ययेऽप्रत्यये चोभयत्र प्रवर्तेते, प्रत्ययस्य ज्ञापकत्वा-दप्रत्यये 'दिव औत्' ७।१।८४ इत्यत्राप्रत्यये च भाष्यकारसंचारितत्वात्॥

वर्णग्रहणे चैते न प्रवर्तेते। अत एव 'अधीते' इत्यत्र अधि+इ+ते इत्य-वस्थायाम् अकः सवर्णे दीर्घः "६।१।१०१ इति दीर्घः सिद्धचति 'अक' इत्यत्र निरनुबन्धस्य इकारस्य ग्रहणात् सानुबन्धकस्य इङोऽनयाऽग्रहणे दीर्घो न स्यात्। अत्र प्रमाणम् "औङ आपः" इति सूत्रस्थम् "**अथवा वर्णग्रहणमिदम् (औङ इति) भवति नचैतद्व-वर्णग्रहणेषु भवत्यननुबन्धकग्रहणे न सानुबन्धकस्येति।**

अत्र च कैयटः—अथवेति प्रतीकमादाय औङ इति वर्णमात्रं निर्दिश्यते। ङकारस्त्वसंदेहार्थो नानुबन्धार्थः, ऋदोरप् (३।३।५७) इत्यत्र यथा दकारः। अङ्गा-क्षिप्तश्च प्रत्यय औकारेण विशेष्यत इत्यौकारान्तस्य शीभावो विधीयमानोऽप्यन्त-वद्भावात्केवलस्याप्यौकारस्य प्रवर्तते। प्रत्ययस्य चानुबन्धभावाभावाभ्यां निरनुबन्ध-कपरिभाषा व्यवस्थां करोति न वर्णस्य इति॥

अनेन कैयटग्रन्थेन भाष्येण च वर्णग्रहणेऽनयोरप्रवृत्तिः स्पष्टैवेति॥

---

'वर्णग्रहण में यह दोनों परिभाषाएँ नहीं लगती हैं यह बात "औङ आपः" ७।१।१८ सूत्र के भाष्य में स्पष्ट है। इसीलिए 'अधीते' में ङित् ईकार के परे रहते भी दीर्घ हुआ। यदि वर्णग्रहण में भी निरनुबन्ध के ग्रहण में सानुबन्ध का ग्रहण नहीं होता तो "अकः सवर्णे दीर्घः ६।१।१०१ के निरनुबन्ध अर्थात् ङकारानुबन्ध रहित इकार वर्ण के ग्रहण में इङ् अध्ययने का ङकारानुबन्ध सहित इकार नहीं लिया जाता और वहाँ दीर्घ नहीं होता। "औङ आपः" ७।१।१८ सूत्र के भाष्य में प्रश्न उठाया गया कि "औङ आपः" सूत्र की प्रवृत्ति द्वितीया द्विवचन में नहीं होगी, क्योंकि निरनुबन्ध 'औ' के ग्रहण में टकारानुबन्ध सहित औकार का ग्रहण नहीं होगा और इसका समाधान यही कह कर किया गया कि वर्णग्रहण में इस परिभाषा की प्रवृत्ति नहीं होती है।

बन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारण एवैषा धर्मिग्राहकमानात्। तेन 'जश्शसोरित्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम्। एवमन्त्या अन्यतरानुबन्धोच्चारणे एव। तेन 'वनो र चे'त्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धिः ॥

---

धर्मी न्यायः तद्ग्राहकं=ज्ञापकसूत्रं तस्य मानात् साहश्यरूपान्मानादेतत् सिद्धयति यद्—येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारणे एव एषा (प्रथमा परिभाषा) प्रवर्तते 'ययतोश्चातदर्थे' ६।२।१५६ इत्यत्र 'य' इत्यस्य ङकारेण सानुबन्धकत्वं यत्' इत्यस्य च ङकारेण द्व्यनुबन्धकत्वं तस्यानुच्चारणमस्तीति परिभाषायाः प्रवृत्या ड्यतो ग्रहणाभावः सिद्धः। तेन 'जश्शसोः' ७।१।२० इत्यत्र नैषा (निरनुबन्धकग्रहणे इत्येषा न) प्रवर्तते, तत्र शकारानुबन्धस्योच्चारणात्। तत्र निरनुबन्धकत्वात्तद्धितशस एव ग्रहणं स्यादिति तु न वाच्यम् तस्याः पूर्वयुक्त्या अप्रवृत्तेः। तद्धितशसो ग्रहणन्तु तत्र जसः साहचर्यादपि शक्यते वारयितुम्। एवं द्वितीयाऽपि अन्यतरानुबन्धोच्चारण एव प्रवर्तते। तेन अङि परे विधीयमानः "श्वयतेरः" ७।४।

---

जिस अनुबन्ध के कारण कोई, अनुबन्धवाला बना हो, या जिस अनुबन्ध के कारण द्व्यनुबन्धकता आयी हो; उसके अनुच्चारण में ही यह परिभाषा लगती है। धर्मि (परिभाषा) के ग्राहक (ज्ञापक) सूत्र के प्रमाण (परिस्थिति) से यही सिद्ध होता है। यहाँ ड्यप्रत्यय डकार अनुबन्ध के कारण अनुबन्धवान् बना है, और ड्यत् प्रत्यय डकारानुबन्ध के कारण दो अनुबन्ध वाला बना है, "ययतोश्चातदर्थे" में उन अनुबन्धों का अनुच्चारण है; वहाँ ये परिभाषाएँ नहीं लगतीं। इस 'वामदेवाड्ड्यड्ड्यौ' सूत्र से ज्ञापित परिभाषा भी उसी परिस्थिति में लगेगी, जिस परिस्थिति में कि उसने परिभाषा ज्ञापित की है। अतः सिद्ध हुआ कि जिस अनुबन्ध को लेकर सानुबन्धकता आयी हो या, जिस अनुबन्ध के कारण द्व्यनुबन्धकता आयी हो; उसके अनुच्चारण में ही परिभाषाओं की प्रवृत्ति हो। इसलिए "जश्शसोः" ७।१।२० इस सूत्र में यह परिभाषा (निरनुबन्ध ग्रहण परिभाषा) नहीं लगती, क्योंकि यहाँ शकारानुबन्ध का उच्चारण है अनुच्चारण नहीं। निरनुबन्ध होने के कारण तद्धितशस् का ही वहाँ ग्रहण होगा, ऐसा कहना ठीक नहीं हैं। जस् के साहचर्य से वहाँ तद्धित शस् नहीं लिया जा सकता। इसी प्रकार अन्तिम परिभाषा दो में से एक (अन्यतर) अनुबन्ध के उच्चारण में ही लगेगी। इसीलिए किसी प्रकार के अनुबन्ध का उच्चारण नहीं होने के कारण "वनो र च" ४।१।७ सूत्र में 'वन' के ग्रहण में ङ्वनिप् क्वनिप् वनिप् का ग्रहण सिद्ध हुआ। 'श्वयतेरः' ७।४।१८ सूत्र अङ् के परे रहते अकार का विधान करता है और 'अश्वत्' बनता है 'अशिश्वियत्' में चङ् है इसलिए अङ् के परे रहते विहित 'अकार' चङ् के परे रहते नहीं हुआ।

एकानुबन्धकग्रहणे सम्भवतीत्यर्थो न भाष्यादिसम्मत इत्यन्यत्र विस्तरः ॥८३॥

---

१८ इत्यकारः अशिश्वयत् इत्यत्र चङि न जायते। तेन 'वनो र च' ४।१।७ इत्यादौ 'वन' इत्यनेन ङ्वनिप्क्वनिप्वनिपां ग्रहणं सिद्ध्यति, तत्र कस्यचिदनुबन्धस्यानुच्चारणात्।

व्याडिपुरु०सीरदेवादिना "एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य" इत्यपि परिभाषाऽङ्गीकृता (व्या० ४६ पुरु० ३७ सीरदेवकृतबृहत् परिभाषा सं० ५१) इति तन्न भाष्यासंमतत्वात्।

यदीदृशी कापि परिभाषा स्यात्तदा "वसोः सम्प्रसारणम्" ६।४।१३१ इत्यत्र उकाररूपस्यैकस्यानुबन्धस्य ग्रहणसत्त्वाद् 'वसु' ग्रहणेन "विदेः शतुर्वसुः" ७।१।३६ इति सूत्रविहितस्य वसोरेव ग्रहणं स्यात् लिटः कानज् वा, क्वसुश्च" ३।२।१०६—१०७ इति क्वसोर्द्व्यनुबन्धकस्य ग्रहणं न स्यात्तथाच विदुषीत्यादिसिद्धावपि "सेदुषः" निषेदुषीत्यादि न सिद्ध्येत्।

अन्यत्र=बृहच्छब्देन्दुशेखरादाविति चित्रप्रभायाम् टीकायाम्।

वामदेवाड्ड्यड्ड्यौ ४।२।९ इति सूत्रभाष्येऽनयोर्ज्ञापकता इत्थं प्रदर्शिता वर्तते—वामदेवाड्ड्यड्ड्यौ ४।२।९ किमर्थो डकारः। डितीति लोपो यथ स्यात् (६।४।१४३) नैतदस्ति प्रयोजनम् यस्येति लोपेनाप्येतत् सिद्धम् (६।४।१४८)॥ एवं तर्हि सिद्धे सति यद्यतौ डितौ करोति तज्ज्ञापयत्याचार्यो भवत एते परिभाषे 'अननुबन्धकग्रहणे न सानुबन्धकस्य" तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणमिति। किमेतस्य ज्ञापने प्रयोजनम्। अवामदेव्यमित्येतत् सिद्धं भवति॥

सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ।
ग्रहणं मा तदर्थे भूद् वामदेव्यस्य नञ्स्वरे॥

दिव औत् ७।१।८४ इत्यत्र भाष्ये परिभाषायाः संचारणं मूले प्रोक्तम्, तद्यथा=दिव औत् ७।१।८४ "दिव औत्त्वे धातुप्रतिषेधः" १ दिव औत्त्वे धातोः

---

सीरदेव ने इस सन्दर्भ में एक तीसरी परिभाषा लिखी है। वह है—"एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" (सीरदेव परि० बृहद्वृत्ति ५१)। इसका अर्थ है कि एक अनुबन्ध वाले शब्द से, दो अनुबन्ध वाले का ग्रहण नहीं होता है। यह मत भाष्य विरुद्ध होने के कारण त्याज्य है। यदि यह मत मानें तो 'वसोः सम्प्रसारणम्' ६।४।१३१ में उकार रूप एक अनुबन्ध वाले 'वसु' के ग्रहण से दो अनुबन्ध वाले 'क्वसु' प्रत्यय का ग्रहण नहीं होगा फिर "निषेदुषीमासनबन्धधीरः" में सम्प्रसारण नहीं होगा।

इति शिवम्॥८३॥

——:०:——

ननु कुटीर इत्यादौ स्वार्थिकत्वात् स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिः । अप्कल्पमित्यत्र नपुंसकत्वैकवचनयोरनुपपत्तिश्चेत्यत आह—

---

प्रतिषेधो वक्तव्यः । अक्षद्यूरिति । अधात्वधिकारात् सिद्धम् । अधातोरिति वर्तते । क्व प्रकृतम् उदिगचां सर्वनामस्थानेऽधातोः (७।१।७०) ।

अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषः २ अधात्वधिकारात् सिद्धमिति चेन्नपुंसके दोषो भवति । काष्ठतङ्क्षि, कूटतङ्क्षि । नपुंसकस्य झलचः (७।१।७२) अधातोरिति प्रतिषेधः प्राप्नोति ।।

उक्तं वा ३

किमुक्तम् । अननुबन्धग्रहणे हि न सानुबन्धकस्येति ।।

इति शिवम् ।।८३।।

——:०:——

**अथ क्वचित्स्वार्थिकाः ... अतिवर्तन्ते ।।८४।।**

ह्रस्वा कुटी कुटीरः इत्यत्र कुटीशमीशुण्डाभ्यो रः ५।३।८८) इति स्वार्थे रप्रत्ययो भवति तत्र च न्यायप्राप्तत्वात् (औचित्यात्) स्वार्थिकानां प्रकृतितो लिङ्गवचनानि अनुवर्तन्त इति कृत्वा कुटीशब्दगतस्त्रीलिङ्गत्वेन भाव्यमिति पुंस्त्वानुपपत्तिः, एवम् ईषदूना आपः अप्कल्पमित्यत्रापि "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः"

---

**क्वचित् स्वार्थिका······न्यतिवर्तन्ते ।।८४।।**

"प्रत्यय" इस महासंज्ञा का कुछ न कुछ अर्थ अवश्य अभिप्रेत रहा होगा । अन्यथा टि घु घि आदि की तरह छोटी संज्ञा ही करते । इसलिए "प्रत्याययति स्वीयमर्थम्" भाष्य की इस व्युत्पत्ति से प्रत्यय का कुछ न कुछ अपना अर्थ होना चाहिए । जहाँ शास्त्र के द्वारा कोई विशेष अर्थ नहीं कहा गया है, वहाँ अर्थ की जिज्ञासा उपस्थित होने पर उपस्थित प्रकृति के अर्थ से ही प्रत्यय की अर्थवत्ता मानी जायगी । प्रकृति के अर्थ में विशेषण के रूप में जुड़े हुए लिङ्ग और संख्या का अनुवर्तन भी प्रत्यय को करना होगा । इस तरह औचित्यात् यह सिद्ध हो गया कि स्वार्थिक प्रत्यय के लिङ्ग और वचन प्रकृति के लिङ्ग और वचन के अनुसार होंगे । इस तरह कुटीरः में 'कुटीशमीशुण्डाभ्यो रः' ५।३।८८ से स्वार्थ में किये गये 'र' प्रत्यय का लिङ्ग प्रकृति कुटी के अनुसार स्त्रीलिङ्ग ठहरता है । इसलिए "कुटीरः" में पुंल्लिग होना टेढ़ी खीर है, "इसी तरह ईषदूना आपः" अप्कल्पम् में 'ईषदसमाप्तौ"—५।३।६७ से कल्पप् प्रत्यय हुआ है । वहाँ नपुंसक और एकवचन का होना सर्वथा असंभव हो जायगा; क्योंकि 'कल्प' प्रत्यय की प्रकृति "आपः" शब्द नित्यस्त्रीलिङ्ग और बहुवचन हैं । इसलिए कहते हैं :—

**क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ॥८४॥**

णचः स्त्रियाम्' इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका । अन्यथा कर्म-

---

५।३।६७ इति कल्पप्प्रत्यये प्रकृतिगतेन लिङ्गेन (स्त्रीलिङ्गेन) भाव्यमिति नपुंसकत्वानुपपत्तिरिति चेन्न क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति परिभाषास्वीकारात् ।

क्वापि स्वार्थिकाः प्रत्यया अपि प्रकृतिगतलिङ्गवचनान्यतिक्रम्य वर्तन्ते । अर्थात् स्वार्थे जातप्रत्ययान्तशब्दादपि तदेव लिङ्गं वचनं च न भवतः यत् किल स्वार्थिकप्रत्ययस्य प्रकृतेरासीदिति परिभाषार्थः । तेन 'कुटीर' इत्यत्र प्रकृतिलिङ्गाद् भिन्नं लिङ्गम् पुस्त्वं सिद्धम् । अप्कल्पम् इत्यत्र तु प्रकृत्यप्शब्दस्य स्त्रीलिङ्गात् बहुवचनाच्चान्ये नपुंसकलिङ्गैकवचने सिद्धे । 'प्रत्यय' इति महासंज्ञाकरणात्तस्या-न्वर्थसंज्ञात्वमङ्गीकार्यमेव । तथाच 'प्रत्याययति स्वकीयमर्थमिति प्रत्यय' इति भाष्ये स्वकीयपदोपादानेन तस्य सर्वत्रार्थः अपत्यादिर्वर्तते । यत्र च शास्त्रेणार्थविशेषो नोक्तस्तत्र कोऽर्थस्तस्येति जिज्ञासायामुपस्थितत्वात्प्रकृतेरर्थेनैव तस्यार्थवत्त्वमङ्गीकार्यम् प्रकृत्यर्थविशेषणयोर्लिङ्संख्ययोरपि तत्रान्वय इति प्रकृतेरेव लिङ्गं संख्या च तादृशप्रत्ययान्तादुचिते; तथापि सति प्रमाणे प्रकृत्यर्थलिङ्गसंख्याभिन्नयोरपि लिङ्ग-संख्ययोर्बोधकत्वं स्वार्थिकानामपीति कृत्वा परिभाषायां क्वचिदित्युक्तम् । प्रकृतित इति षष्ठचन्तात् 'इतराभ्योऽपि दृश्यन्ते ५।३।१४ इति तसिल्प्रत्ययः वचनं=संख्या । अतिवर्तनं परित्यागः तेन क्वापि स्वार्थिकाः प्रत्ययाः प्रकृते लिङ्गसंख्ये परित्यजन्ति इति परिभाषार्थः । वस्तुतस्तु प्रकृतित इत्यत्र 'भुवः प्रभवः' १।४।३१ इति पञ्चमी । तस्यास्थाने तसिल्, तेन स्वार्थिकाः प्रत्ययाः क्वचित् प्रकृतितः भूतानि लिङ्गवचना-न्यतिक्रम्य वर्तन्ते इत्यर्थेऽपि न कोऽपि दोषः । 'कुटीर' इत्यत्र एकार्थीभावस्तु रप्रत्यया-र्थस्याल्पत्वस्य कुटीरूपार्थेऽन्वयात् स्वार्थपर्यवसायिनां पदानामेकार्थीभवनरूपैकार्थीभावात्

---

क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचननान्यतिवर्तन्ते" अर्थात् कहीं स्वार्थ (प्रकृति के अर्थ) में होंने वाले प्रत्यय भी प्रकृति के लिङ्ग और संख्या को छोड़ देते हैं, उनका उल्लंघन करते हैं। "प्रकृतितः" में तसि प्रत्यय 'इतराभ्योऽपि दृश्यन्ते' ५।३।१४ से षष्ठचन्त से हुआ है। वचन का अर्थ, संख्या है। 'अतिवर्तन' का अर्थ त्याग है । "णचः स्त्रियामञ्" ५।४।१४ सूत्र में कथित "स्त्रियाम्" ग्रहण इस परिभाषा का ज्ञापक है । णच् प्रत्यय 'स्त्रीलिङ्ग' में ही विहित है; क्योंकि सूत्र है :—कर्मव्यतिहारे णच् स्त्रियाम्" ३।३।८३ इसलिए णजन्त से किया जाने वाला अञ् प्रत्यय "स्त्रियाम्" कथन के बिना भी पूर्वोक्त युक्ति से स्त्रीलिङ्ग में ही होगा । इस तरह सूत्र में कथित "स्त्रियाम्" का ग्रहण उक्त परिभाषा का ज्ञापक बनता है ।

**व्यतिहारे 'णच् स्त्रियाम्' इति स्त्रियामेव विधानात्किं तेन ॥ स्पष्टा चेयं बहुज्वि-धायके भाष्ये ॥८४॥**

---

सम्पाद्यः । 'यावक' इत्यत्र यद्यपि प्रकृत्यर्थातिरिक्तस्य कस्याप्यर्थस्याप्रत्ययात् परस्परान्वयाभावादेकार्थीभवनत्वं नास्ति; तथापि यावरूप एवार्थः प्रत्ययेनापि महासंज्ञाबलात् प्रतीयते इत्यङ्गीकृत्य तस्यैवार्थस्य प्रकृत्या विशेषणतया प्रत्ययेन च विशेष्यतयोपस्थितत्वाद् भिन्नत्वं परिकल्प्य प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वयेनैकार्थीभावः साध्यत इति न दोषः ॥

णचः स्त्रियामञ् ५।४।१४ इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका । अन्यथा (परिभाषाया अभावे) कर्मव्यतिहारे णच् स्त्रियाम् ३।३।४३ इति णच् स्त्रियामेव विधीयते । तत्र स्त्रियामिति कथनं विनापि अञ्प्रत्ययस्य च स्वार्थिकत्वादौचित्या-दौत्सर्गिकप्रकृत्यर्थगतस्त्रीलिङ्गत्वे सिद्धे स्त्रियामिति कथनं व्यर्थं सत्परिभाषां ज्ञाप-यति । परिभाषायां ज्ञापितायां तु परिभाषयानया प्रकृत्यर्थभिन्नलिङ्गत्वे प्राप्ते इष्टे स्त्र्यर्थे विधानलाभाय स्त्रियामित्ति स्वांशे चरितार्थम् ॥

---

"बहुच् विधायक सूत्र (विभाषा सुपो बहुच् पुरस्तात्तु ५।३।६८) सूत्र के भाष्य में यह परिभाषा स्पष्ट है । वहाँ कहा गया है कि यह बहुच् प्रत्यय प्रकृति के स्वार्थ में विहित है; स्वार्थिकप्रत्यय प्रकृति के लिङ्ग और वचनों का अनुसरण करते हैं । इसलिए "बहुतृणं नरः" बन ही जायगा सूत्र में जो 'तु' ग्रहण किया गया है वह ज्ञापन करता 'स्वार्थिक प्रत्यय, लिङ्ग वचन का अतिक्रमण भी करते हैं । ज्ञापन का प्रयोजन बताते हुए भाष्यकार ने कहा—गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूः में प्रकृति (पुंल्लिङ्ग गुड, नपुंसकलिङ्गतैल और पयः) के लिङ्ग से भिन्न स्त्रीलिङ्ग का प्रयोग हो सका ।

'ईषदसमाप्तौ कल्पब्'—५।३।६७ सूत्र के भाष्य में भी कहा गया कि प्रकृत्यर्थ में यदि 'कल्पप्' आदि प्रत्यय मानेंगे तो गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पय-स्कल्पा यवागूः इत्यादि में स्त्रीलिङ्ग की अनुपपत्ति हो जायगी ? नहीं होगी, क्योंकि 'णचः स्त्रियामञ्—५।४।१४ में जो 'स्त्रियाम्' कहा गया है वह ज्ञापन करता है—कि **स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानि** । "अच्छा, ऐसा मानने पर तो बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना, बहुपयो यवागूः में पुंल्लिङ्ग और नपुंसकलिङ्ग की सिद्धि नहीं होगी; इस पर भाष्यकार ने कहा—"नातिवर्तन्ते" अर्थात् वे प्रकृति के लिङ्ग और वचनों का अतिक्रमण नहीं भी करते हैं । इससे परिभाषा का 'क्वचित्' अंश सिद्ध हो गया ।

"णचः स्त्रियामञ्" ५।४।१४ सूत्र के भाष्य में भी यह परिभाषा ज्ञापक और फल के साथ निर्दिष्ट है ।

इति शिवम् ॥८४॥

—:०:—

**ननु सुपथी नगरीति 'युवोरनाकावि'ति सूत्रभाष्योदाहृते 'इनः स्त्रियाम्' इति कथ्स्यादत आह—**

---

बहुच् विधायके (विभाषा सुपो बहुच् पुरस्तात्तु ५।३।६८ इति सूत्रे) भाष्येऽसौ स्पष्टा। तथाहि—"स्वार्थिकोऽयं (बहुच्प्रत्ययः) स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥ एवं तर्हि सिद्धे सति यत् 'तु' ग्रहणं करोति तज्ज्ञापयत्याचार्यः "**स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानीति**। किमेतस्य ज्ञापने प्रयोजनम्? गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत् सिद्धं भवति ॥

"ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" ५,३।६७ इति सूत्रभाष्येऽपीयं निर्दिष्टा तथाहि—"ननु चोक्तं प्रकृत्यर्थे (प्रकृत्यर्थे कल्पबादयो भवन्तीति स्वीक्रियते) चेत् (गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यावगूरित्यादौ) लिङ्गचनानुपपत्तिः। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—**स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानीति** यदयं "णचः स्त्रियामञ् (५।४।१४) इति स्त्रीग्रहणं करोति। यद्येतज्ज्ञाप्यते—बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना, बहुपयो यवागूरिति, अत्रापि प्राप्नोति। नाप्यतिवर्तन्ते ॥

अनेन भाष्येण **क्वाचित्कत्वं** सिद्धयति इति। णचः स्त्रियामञ् ५।४।१४ इति सूत्रभाष्येऽपीयं निर्दिष्टा तथाहि—णचः स्त्रियामञ् ५।४।१४ ॥ 'स्त्रीग्रहणं किमर्थम्? न स्वार्थिकोऽयम्? स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते। एवं तर्हि सिद्धे यत् स्त्रीग्रहणं करोति तज्ज्ञापयत्याचार्यः—स्वार्थिका अतिवर्तन्तेऽपि लिङ्ग्वचनानीति। किमेतस्य ज्ञापने प्रयोजनम्? गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यावगूरित्येतत् सिद्धं भवति ॥ अत्र भाष्ये ज्ञापकत्वं फलञ्च दर्शिते।

इति शिवम् ॥८४॥

——:०:——

**अथ समासान्तविधिरनित्यः ॥८५॥**

ननु युवोरनाकौ ७।१।१ इति सूत्रे भाष्ये "विभक्तौ लिङ्गविशिष्टाग्रहणमित्यस्याः परिभाषायाः प्रयोजनानि परिगणयता भाष्यकृता प्रोक्तम् "पथिमथोरात्त्वे (वा० १८) पथिमथोरात्त्वे प्रयोजनम्। यथेह भवति पन्थाः एवं पथि मथीत्यत्रापि प्राप्नोति। न केवलः पथिशब्दः स्त्रियां मर्तते। उपसमस्तस्तर्हि वर्तते सुपथीति ॥

---

**समासान्तविधिरनित्यः—८५**

"शोभनाः पन्थानो यस्यां नगर्याम्" इस विग्रह में "अनेकमन्यपदार्थे" २।२।२४ से सु और पथिन् जस् को समास करने पर 'सुपथिन्' शब्द बनता है। यहाँ "ऋक्पूरब्धूः पथामानक्षे" से 'अ' प्रत्यय प्राप्त था, परन्तु "न पूजनात्, स्वतिभ्यामेव" ५।४।६९ से उसका निषेध हो गया। सुपथिन्' शब्द से 'ऋन्नेभ्यो ङीप् ४।१।५ से

## समासान्तविधिरनित्यः ॥८५॥

'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तत्वायांश्वादिषु राजन्शब्दपाठोऽस्यां

---

अत्र सुपथीति रूपं शोभनाः पन्थानो यस्याम् नगर्यामिति विग्रहे बहुव्रीहिसमासे सुपथिन् इत्यस्मात् ऋन्नेभ्यो ङीप् ४।१।५ इति ङीपि भत्वात् 'भस्य टेर्लोपः' ७।१.८८ इति टिलोपे कृते सुपथीति सिद्ध्यति। अत्र 'न पूजनात्' ५।४।६९ इति निषेधात् "ऋक्पूरब्धूःपथामानक्षे" ५।४।६९ इत्यप्रत्ययो न॥ "न पूजनात्" ५।४।६९ इति निषेधस्य बहुव्रीहौ सक्थ्यक्ष्णोः ५।४।११३ इत्यतः प्रागेव "प्राग्बहुव्रीहिग्रहणं कर्तव्यमिति वार्तिकोक्त्या नियमनात् "इनः स्त्रियाम्" ४।४।१५२ इत्यस्य तन्निषेधक्षेत्रबहिर्भूतत्वात् 'सुपथिन्' इत्यवस्थायाम् "इनः स्त्रियाम्" इति कप् समासान्तः स्यादिति चेन्न **समासान्तविधिरनित्य** इति परिभाषावतारात्।

सुपथीत्यत्र 'पथिमथि'—७।१।८५ इत्यात्त्वं थोन्थ ७।१।८७ इति न्थादेशश्च लिङ्गविशिष्टपरिभाषया (प० सं० ७२) न भवतः, विभक्तौ लिङ्गविशिष्टाग्रहणमिति (प० सं० ७३) निषेधात्॥

अस्या ज्ञापकः—"प्रतेः परेंऽश्वादयोऽन्तोदात्ता इत्यर्थकेन प्रतेरंश्वादयस्तत्पुरुषे ६।२।१९३ इति सूत्रेण 'प्रतिराजा' इत्यादावन्तोदात्तत्वाय अंश्वादिषु (अंशु,

---

ङीप्' भसंज्ञा तथा "भस्य टेर्लोपः" ७।१।८८ से टिलोप करने पर सुपथी नगरी प्रयोग सिद्ध होता है। यहाँ "इनः स्त्रियाम्" ५।४।१५२ से "सुपथिन्" ऐसी अवस्था में कप् प्राप्त होता है, उसके निवारण के लिए परिभाषा मानते हैं:—"**समासान्तविधिरनित्यः" समासान्तविधियाँ अनित्य होती हैं** लक्ष्यानुरोधात् वे कभी नहीं भी लगती हैं। 'इनः स्त्रियाम्' ५।४।१५२ से प्राप्त 'कप्' का निषेध "न पूजनात्" ५।४।६९ से नहीं हो सकता; क्योंकि "प्राग् बहुव्रीहिग्रहणं कर्तव्यम्" इस वार्तिक ने "न पूजनात्" के क्षेत्र को "बहुव्रीहौ सक्थ्यक्ष्णोः" ५।४।११३ तक सीमित कर दिया है। "इनः स्त्रियाम्" ५।१।१५२ उस क्षेत्र के बाहर है। इसलिए न पूजनात्" से उसका निषेध नहीं हो सकता है।

प्रतेरंश्वादयस्तत्पुरुषे" ६।२।१९३ इस सूत्र से प्रतिपूर्वक राजन् शब्द को अन्तोदात्तत्व विधान के लिए किया गया अंश्वादि गण में राजन् शब्द का पाठ इस परिभाषा का ज्ञापक है। यदि समासान्त विधि नित्य होती तो, 'प्रतिराजन्' में "राजाहःसखिभ्यष्टच्" ५।४।९१ से नित्य टच् होता और टच् प्रत्यय में चित्त्व होने के कारण चितः ३।१।१६३ से अन्तोदात्तत्व हो ही जाता; अंश्वादि गण में राजन् शब्द का पाठ व्यर्थ होकर परिभाषा का ज्ञापन करता है।

परिभाषा के ज्ञापन के बाद तो इस परिभाषा से 'टच्' का अभाव हो जाता; तब अन्तोदात्तत्व की सिद्धि के लिए अंश्वादिगण में 'राजन्' शब्द का पाठ स्वांश में चरितार्थ हो गया।

**ज्ञापकः । अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन ॥ 'द्वित्रिभ्यां पाद्न्मूर्द्धसु' इति स्वरविधायके भाष्ये स्पष्टेयम् ॥८५॥**

---

जन, राजन्, उष्ट्र, खेटक, अजिर, आर्द्रा श्रवणा, कृत्तिका, अर्धपुर इत्यंश्वादिः) राजन् शब्दपाठः । अन्यथा राजाहःसखिभ्यष्टच् ५।४।९१ इति टचि, तस्य चित्त्वात् 'चितः' ६।१।१६३ "चितः सप्रकृतेर्बह्वजकजर्थम्" (वा० ६।१।१६३) इत्यन्तोदात्तत्वे सिद्धे तस्य पाठो व्यर्थः स्यात् । व्यर्थः सन् स "समासान्तविधेरनित्यत्वं" ज्ञापयति ! परिभाषायां ज्ञापितायान्तु अनया टचोऽभावादन्तोदात्तस्य सिद्धये स पाठश्चरितार्थ इति ।

द्वित्रिभ्यां पाद्न्मूर्धसु ६।२।१९७ इति स्वरविधायके भाष्ये स्पष्टेयम् । तथापिः—किमिदं द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणमाहोस्विन्नकारान्तग्रहणम् । कश्चात्र विशेषः ? "द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानं कर्तव्यम्" (वा० १) द्विमूर्धा, त्रिमूर्धा ॥ अस्तु तर्हि नकारान्तग्रहणम् । "नकारान्तेऽकारस्य" (वा० २) नकारान्तेऽकारान्तस्योपसंख्यानं कर्तव्यम् । द्विमूर्धः, त्रिमूर्धः ॥ "उदात्तलोपात् सिद्धम्" (वा० ३) अस्तु तर्हि नकारान्तग्रहणम् । अन्तोदात्तत्वे कृते लोप उदात्तनिवृत्तिस्वरेण सिद्धम् ॥ × × ×
अन्तोदात्तत्वे कृते समासान्तष्टिलोपः, टिलोपे कृत उदात्तनिवृत्तिस्वरेण सिद्धम् ॥

युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेन नकारान्तग्रहणेन भवितव्यम् यावता मूर्धस्वित्युच्यते । यद्यकारान्तग्रहणं स्यान्मूर्धेष्विति ब्रूयात् । सैषा समासान्तार्था विचारणा । एवं तर्हि ज्ञापयत्याचार्यो विभाषा समासान्तो भवति इति ॥

---

'द्वित्रिभ्यां पाद्न्मूर्धसु' ६।२।१९७ इस स्वरविधायक सूत्र के भाष्य में यह परिभाषा स्पष्ट है । "मूर्धसु" में नकारान्त प्रकृति का निर्देश है अकारान्तप्रकृति का नहीं तभी तो 'मूर्धसु' हुआ है । यदि अकारान्तप्रकृतिक निर्देश होता तो मूर्धेषु लिखा जाता । भला, यह आप कहते हैं द्वि और त्रि शब्द से पर में "द्वित्रिभ्यां षः मूर्ध्नः" ५।४।११५ से "ष प्रत्यय" (समासान्त) होता है वह विकल्प नहीं है फिर द्वि और त्रि से पर समास में 'मूर्ध' शब्द ही मिलेगा 'मूर्धन्' नहीं । इस पर भाष्यकार ने कहा कि "समासान्त विधि अनित्य है, इसलिए नकारान्त मिल सकता है ।

कैयट ने भी कहा कि 'समासान्त' नित्य होता तो कार्यविशेष में उत्पन्न होने वाले सन्देह के निवारण के लिए और प्रक्रम भङ्ग से बचने के लिए समासान्त करके ही उच्चारण करते वैसा (मूर्धेषु) नहीं करके 'मूर्धसु' किया गया है । इसलिए जानते हैं कि समासान्तविधि अनित्य होती है ।

इति शिवम् ८५

—:०:—

**ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति। ततश्च लुक् स्यात्। तथोपादास्तेत्यत्रात्वे कृते 'स्थाघ्वोरिच्चे'तीत्वं प्राप्नोत्यत आह—**

**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥८६॥**

---

अत्र कैयटः—सैषा समासान्तार्था विचारणेति प्रतीकमादायाह—यदि नित्यः समासान्तः स्याद् तदा कार्यिविशेषसन्देहव्यावृत्तये प्रक्रमाभेदाय वा समासान्त एवोच्चार्येत। तदनुच्चारणात्तु समासान्तस्यानित्यत्वं ज्ञाप्यते इत्यादि ॥

इति शिवम् ॥८५॥

——:०:——

**सन्निपातलक्षणो विधिः—८६**

यद्यपि "विंशत्याद्याः सदैकत्वे" २।६।८३ इत्यमरकोशात् शतमित्येव भाव्यम्, तथापि शतत्रयाभिप्रायके शतञ्च शतञ्च शतञ्चेत्येकशेषेण शतानीति बहुवचनं संभवति। तत्र शतशब्दाज्जसि तस्य जश्शसोः शिः' ७।१।२० इति श्यादेशे 'नपुंसकस्य झलचः' ७।१।७२ इति नुमि 'सर्वनामस्थाने चासम्बुद्धौ' ६।४।८ इति दीर्घे 'शतान्+इ इति स्थिते 'मिदचोऽन्त्यात्परः' १।१।४७ इति नुमः पूर्वसमुदायान्त्यावयवत्वेन विधानात् 'ष्णान्ता षट्' १।१।२४ इति नान्तसंख्यावाचितया षट्संज्ञा स्यात् ततश्च 'षड्भ्यो लुक्' ७।१।२२ इति लुक् स्यात्। एवमेव 'उपादास्त' इत्यत्र उपपूर्वकाद् 'दीङ्क्षये इत्यस्माद् धातो र्लुङि च्लेः सिचि "मीनातिमिनोतिदीङां ल्यपि च' ६।१।५० इत्यात्वे 'दाधाघ्वदाप्' १।१।२० इति घुत्वे स्थाघ्वोरिच्च १।१।१७ इतीत्वमापद्यत इति चेन्न "**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य**" इति परिभाषास्वीकारात्। नच विभक्तिसापेक्षतया नुमः अन्तरङ्गषट्संज्ञां प्रत्यसिद्धतया 'शतानीति न परिभाषावतारफलमिति वाच्यम् संज्ञायाः अपि तदेव निमित्तं, यत्किल तत्संज्ञानिमित्तक-

---

**सन्निपातलक्षणो······तद्विघातस्य ॥८६॥**

"शतञ्च शतञ्च शतञ्च" इस विग्रह में एकशेष करने पर शत शब्द से बहुवचन होना सम्भव है। अतः शत शब्द से जस् या शस् में नपुंसकलिङ्ग में शि आदेश करने पर जब "नपुंसकस्य झलचः" ७।१।७२ से नुम् हुआ; तब दीर्घ करने पर शतान्+इ ऐसी स्थिति में "ष्णान्ता षट्" १।१।२४ से षट् संज्ञा और 'षड्भ्यो लुक्' ७।१।२२ से जस् शस् के स्थानापन्न इ का लुक् प्राप्त होता है। उप पूर्वक दीङ् धातु से लुङ् में त करके अडागम बीच में च्लि के स्थान में सिच् करने पर "मीनातिमिनोतिदीङां ल्यपि च" ६।१।५० से आत्व करने पर उपादास्त रूप बनता है। यहाँ आत्त्व करने के बाद 'दाधा घ्वदाप्' १।२।२० से घुसंज्ञा करके "स्थाघ्वोरिच्च" १।२।१७ से इत्व की प्राप्ति होती है इसलिए परिभाषा मानते हैं—"**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य**"।

दो के सम्बन्ध को सन्निपात करते हैं, लक्षण का अर्थ यहाँ निमित्त किया

**सन्निपातो द्वयोः सम्बन्धस्तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तम् ।।**

**उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा । अत एवात्र सन्निपातशब्देन**

---

विधेर्निमित्तमिति सिद्धान्तेन षट्संज्ञाया अपि लुग्निमित्तकविभक्तिसापेक्षत्वेन बहिरङ्गत्वात्, "उपदेशे षान्ता नान्ता च संख्यावाचिनः षट्संज्ञका" इत्यर्थे प्राचा स्वीकृते न दोष इति वाच्यम् "उद्देशश्च प्रातिपदिकानां नोपदेश' इति भाष्येण प्रातिपदिकस्योपदेशाभावात् ।

द्वयोः सम्बन्धस्सन्निपातस्तन्निमितो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तं भवतीति परिभाषार्थः ।।

उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा । उपजीवयतीत्युपजीव्यः । उपपूर्वकाण्यन्तात् जीवधातोः "कृत्यल्युटो बहुलम् ३।३।११३ इति बहुलग्रहणात्कृत्यप्रत्ययस्य बाहुलकत्वबोधकात् कर्तरि 'अचो यत्' ३।१।९७ इति यत्प्रत्ययः 'उपजीवयितेत्यर्थः; तस्य विरोधः विनाशकव्यापारस्तस्य अयुक्तत्वम् "उपजीविता उपजीवयितुर्विनाशं न

---

गया है । तद्विघातस्य में तत्, पद से 'सन्निपात' का परामर्श हुआ है, विघात का अर्थ विघातक किया गया है । इस तरह परिभाषा का अर्थ निकला कि दो के जिस सम्बन्ध के कारण जो विधि उत्पन्न होगी वह विधि उस सम्बन्ध के विघातक का निमित्त (कारण) नहीं बनेगी । "शतानि" में शत+और इ के बीच जो अजन्त नपुंसकाङ्गाव्यवहितोत्तर सर्वनामस्थानत्व है; उसी सम्बन्ध के कारण नुम् हुआ वह नुम् 'इ' का लुक् करके उस सम्बन्ध के विघातक "षड्भ्यो लुक्" और षट् संज्ञा का निमित्त नहीं बनेगा । इसी तरह 'उपादास्त' में "मीनातिमिनोति" ६।१।५० सूत्र से आत्व इसलिए हुआ था कि सिच् अकित् होने के कारण एच् का निमित्त था वही आत्व 'स्थाघ्वो' के द्वारा उस सिच् को कित्त्व करने तथा इत्व करने में निमित्त नहीं होगा; क्योंकि इत्व और कित्व द्वारा अकित् (सिच्) अव्यवहित पूर्वत्व सम्बन्धेन जायमान आत्व, उस सम्बन्ध के विघातक शास्त्र का निमित्त नहीं बनेगा । जब तक सिच् अकित् है तब तक वह एच् का (गुणादि का) निमित्त है 'एच्' का निमित्त होने के कारण यहाँ मीनातिमिनोति' ६।१।५० से आत्व सिच् को कित् बनाकर कित् के परे क्ङिति च' १।१।५ से गुणादि का निषेध करके सिच् के एज्निमित्तत्व का विघातक नहीं बनेगा।

उपजीव्य (जीवनदाता उपजीवयिता) के साथ विरोध करना लोक और शास्त्र दोनों दृष्टियों से अयुक्त माना गया है । इस परिभाषा में उसी औचित्य पर आधारित "पितुरुत्पन्नः पुत्रः पितरं न हन्यात्" यह न्याय ही मूल है । "उपजीव्य' शब्द की व्युत्पत्ति है "उपजीवयति" इति उपजीव्यः ण्यन्त से कर्ता में यत् हुआ है।

**न पूर्वपरयोः सम्बन्ध एव किं तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते । अत एव**

---

कुर्यात्, पितुरुत्पन्नः पुत्रः पितरं न हन्यादिति न्याय एवास्या मूलम् इति भावः । अथवा उपजीवयितुं योग्यः उपजीव्यः कर्मण्येव यत् । उपजीवयतीति उपजीवकः । उपजीव्यः पुत्रः उपजीवकः पिता । जन्यो जनकस्य, पाल्यः पालकस्य हननं न कुर्यात् इति भावः 'शतानि' इत्यादौ नुमः उपजीव्या=उपजीवयित्री=विभक्तिः 'इ' रूपा सर्वनामस्थाने परे तस्य विधानात्; तस्या विनाशो लुक् तत्कर्त्री षट्संज्ञा सा नुमा न कर्तव्येति षट्संज्ञां प्रति नुमोऽनिमित्तत्वम्, एवम् उपादास्त इत्यत्र मीनातिमिनोतिदीङां ल्यपि चेत्यात्त्वम् एज् (गुण) निमित्तकेऽकिति सिचि जायते एतादृशमकित्सिचमुपजीव्य जातमात्त्वं घुसंज्ञामुखेन स्थाघ्वोरिच्च १।२।१७ इत्यनेन तस्य कित्त्वस्य विनाशकार्येकित्व-विधानेऽनिमित्तम् भवतीति न कित्त्वमित्वञ्चेति न दोषः । न च कित्त्वमकित्त्व-विनाशकमिति कृत्वा तन्नास्तु, इत्वं तु स्यादेव तत्रोपजीव्यविरोधाभावादिति वाच्यम् कित्वेत्वयोः सन्नियोगशिष्टतया सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः (प० ८७) इति परिभाषया इत्वाप्राप्तेः । शतानीत्यत्र अजन्ताङ्गाव्यवहितोत्तरत्वं सम्बन्धः शत+इकाररूपे सर्वनामस्थाने च वर्तते तेनाजन्ताङ्गव्यवहितोत्तरसर्वनाम-त्वसम्बन्धनिमित्तको विधिर्नुम्, तं सन्निपातं यो विहन्ति तस्य लुक्प्रयोजकषट्संज्ञा-विधेरनिमित्तं जायत इति लक्षणसमन्वयः ।

---

यद्यपि 'यत्' प्रायः कर्म और भाव में ही होता है; तथापि "कृत्यल्युटो बहुलम्" ३।३।११३ में प्रयुक्त "बहुलम्" की माया से कर्ता में भी वह हो सकता है । इस तरह उपजीव्य का अर्थ है जिलाने वाला, उसके साथ उपजीवक को विरोध नहीं करना चाहिए यह एक औचित्य सिद्धान्त पर आधारित न्याय है वही इस परिभाषा में मूल है । 'शतानि' में नुम् को जीवन देनेवाली विभक्ति 'इ' सर्वनामस्थान है, उसका विघातक लुक् है, लुक्, जनक व्यापार षट् संज्ञा है, इसलिए वह नुम् लुक् जनक षट्संज्ञा में निमित्त नहीं बनेगा । 'उपादास्त' में आत्व को जीवन देने वाला एज् निमित्तक---अकित् सिच् है वह आत्व घुसंज्ञा के द्वारा "स्थाघ्वोरिच्च" १।२।१७ से उस अकित्व के विघात में निमित्त नहीं बनेगा ।

माना कि कित्व अकित्व का विनाशक है, इसलिए कित्व मत कीजिए किन्तु "इत्व" होने में तो कोई विरोध नहीं लगेगा, ऐसा नहीं मानना चाहिए कित्त्व का जब इस परिभाषा के द्वारा निषेध हो गया, तो कित्त्व सन्नियोगशिष्ट (कित्त्व के साथ साथ विहित) इत्व भी नहीं होगा । क्योंकि "सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" (प० ८७) है । उपजीव्यविरोध का अनौचित्य ही जब इस परिभाषा में मूल माना गया; तब इस परिभाषा में सन्निपात का तात्पर्य न केवल पूर्व और पर का सम्बन्ध लिया गया; किन्तु विशेषणविशेष्यसन्निपात भी लिया

**ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वेऽपि पिति कृतीति तुग्न प्रातिपदिकाजन्तत्वसन्निपातेन जातस्य ह्रस्वस्य तदविघातकत्वात्। तुक्यजन्तत्वविघातः स्पष्ट एव।**

---

अतएव=उपजीव्यविरोधस्यानौचित्यमूलकत्वादेवात्र परिभाषाशरीरे सन्निपातशब्देन न पूर्वपरयोः सम्बन्ध एव गृह्यते, सन्निपातशब्दस्य तत्र सर्वविधनिमित्तार्थकत्वात् सर्वविधनिमित्तविरोधे उपजीव्यविरोधस्य सत्वात्। अतएव ग्रामं नयतीति—ग्रामणि कुलम् इत्यत्र ग्रामपूर्वकान्नीधातोः क्विपि "अग्रग्रामाभ्यां नयतेर्णो वाच्यः" (सि० कौ० पूर्वकृदन्त ३।१।६१ सू० वा०) इति णत्वे प्रातिपदिकत्वे सौ तस्य लुकि "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्रस्वे ग्रामणि इत्यत्र क्विपः प्रत्ययलक्षणेनानयनात्तस्य च पित्कृत्त्वात् ह्रस्वस्य पिति कृति तुक् ६।१।७१ प्राप्तस्तुग् न भवति, प्रातिपदिकाजन्तत्वसन्निपातेन (प्रातिपदिकस्याजन्तेन सह यो विशेष्यविशेषणभावः) (योऽभेदसम्बन्धः) तद्रूपसन्निपातेन (निमित्तेन) जातस्य ह्रस्वस्यौचित्यात्ताद्दशस्य प्रातिपदिकाजन्तत्वसन्निपातस्याविघातकत्वात्। उपजीव्यस्य (उपजीवयितुः) प्रातिपदिकाजन्तत्वसन्निपातस्य विनाशम् उपजीविता ह्रस्वो न कुर्यादित्यस्यैवौचित्यात्। अथवा उपजीव्यः ह्रस्वः प्रतिपदिकाजन्तत्वसन्निपातस्योपजीवकस्य विनाशं नैव कुर्यादौचित्यविरोधात्। तुकि कृते तस्य कित्त्वात् "आद्यन्तौ टकितौ" १।१।४६) इत्यनेन ह्रस्वान्ततया विधानेनाजन्तप्रादिपदिकत्वस्य विघातः स्पष्टः॥ न च 'यदागम' परिभाषया (प० सं० १२) अजन्तप्रातिपदिकत्वं सम्पाद्यतामिति न तद्विघात इति वाच्यम् तया तुग्विशिष्टे प्रातिपदिकत्वमेव शक्यते सम्पादयितुम् न तु अजन्तत्वमपि, वर्णग्रहणे तस्या अप्रवृत्तिरिति सिद्धान्तस्य तत्परिभाषाविचारे प्रतिपादितत्वात्। अतएव मूले प्रोक्तम्—तुक्यजन्तविघातः स्पष्ट इति। पूर्वापरसम्बन्धस्यैव ग्रहणेऽत्र पूर्वापरसम्बन्धरूपसन्निपातविघाताभावाद् भाष्यासंगतिः स्पष्टैव। नचान्तरङ्गे तुकि कर्तव्ये नपुंसकत्वरूपार्थाश्रयत्वेन बहिरङ्गस्य ह्रस्वस्यासिद्धत्वान्न दोष इति वाच्यम् अर्थकृतबहिरङ्गत्वस्याश्रयणं न भवतीति सिद्धान्तस्य अन्तरङ्गपरिभाषाविमर्शप्रकरणे

---

गया। इसलिए ग्रामं नयति यत् कुलम्—तत् कुलम् ग्रामणि कुलम्" यहाँ "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ से ह्रस्वता करने के बाद प्रत्यय लक्षण से पित् कित् (क्विप्) को लाकर 'ह्रस्वस्य पिति कृति तुक्' ६।१।७१ से तुक् नहीं हुआ। क्योंकि अजन्त प्रातिपदिक था इसीलिए तो ह्रस्व हुआ वही ह्रस्व तुक् के द्वारा अजन्तत्व का विघातक कैसे बन सकता है। तुक् होने से अजन्त प्रातिपदिकत्व रूप विशेषण-विशेष्य सन्निपात का विघात हो जायगा। तुक् होने पर अजन्तत्व का विघात स्पष्ट ही है। "यदागमाः" (पा० १२) इस न्याय से तुक् विशिष्ट में प्रातिपदिकत्व तो लाया जा सकता है किन्तु उस न्याय से तुक् विशिष्ट में अजन्तत्व नहीं लाया जा सकता, क्योंकि 'वर्णग्रहण' में वह परिभाषा प्रवृत्त नहीं होती। तुक् कर्तव्य में

**न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयासिद्धत्वमर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात् । किं च षत्वतुकोरसिद्ध इत्येतद्बलात् कृति तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः ॥**

**सर्वविधसन्निपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादि-**

---

(पृ० २६५) प्रोक्तत्वात् । किञ्च "षत्वतुकोरसिद्धः" ६।१।८६ इति सूत्रे तुग्ग्रहणात् "नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" ८।२।२ इत्यत्र तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तिबोधनात् अन्यथा बहिरङ्गपरिभाषयैव एकादेशस्य दीर्घस्यासिद्धत्वाद् "अधीत्य" इत्यत्र तुकि सिद्धे तुकि कर्तव्ये एकदेशस्यासिद्धत्वविधानं व्यर्थं स्यादित्यादि 'नाजानन्तर्यपरिभाषानिरूपणसमये प्रोक्तमेव । एवमेव वृत्रहभ्यामित्यदौ "बहिरङ्गपरिभाषयैव नलोपस्यासिद्धत्वे सिद्धे "नलोपः सुप्"—सूत्रे कृति तुग्ग्रहणं व्यर्थं स्यात् । सर्वविधसन्निपातग्रहणादेव वर्णाश्रयः (वर्णनिमित्तकः) प्रत्ययो वर्णविचालस्य (वर्णविनाशस्य) अनिमित्तं स्यादिति परिभाषादोषनिरूपणावसरे वार्तिककृत उक्तिः, दाक्षिरितिभाष्योक्तमुदाहरणञ्च संगच्छेते । दाक्षिरित्यत्र दक्षस्यापत्यमित्यर्थे दक्षशब्दात् 'अत इञ्" ४।१।६५ इतीञि यस्येति च ६।४।१४८ इत्यकारलोपे निमित्तं न स्यादिति तदभिप्रायः । समाधानं च 'प्रतिविधेयं च दोषेषु" इति शब्देन कृतम् । पूर्वपरसम्बन्धस्यैव सन्निपातत्वेऽत्र तस्यासत्त्वेन दोषाभावाद्दोषदानपरः स ग्रन्थोऽसंगतः स्यादिति भावः । नचैवं "नहि प्रत्ययः पूर्वपरसन्निपातनिमित्तकः । स एव च सन्निपातशब्देन गृह्यते इति मत्वा न प्रत्ययः सन्निपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैव ("प्रत्ययस्य सन्निपातनिमित्तकत्वाभावं स्वानभीष्टमपि स्वीकृत्यैव) अङ्गसंज्ञा तर्ह्यनिमित्तं स्यादिति भाष्यासंगतिरिति

---

ह्रस्व की असिद्धता "असिद्धं बहिरङ्गमन्तरङ्गे" (प० ५१) से नहीं माननी चाहिए, क्योंकि अर्थकृत वहिरङ्ग का आश्रयण नहीं होता है यह बात "असिद्धं बहिरङ्गमन्तरङ्गे" के निरूपण के समय कही जा चुकी है । अथवा "षत्वतुकोरसिद्धः" ६।१।८६ इस सूत्र के बल से और "नलोपः सुप्स्वर" ८।२।२ इस सूत्र में "कृति तुग्ग्रहण" करने के कारण यह माना जायगा कि तुग् विधि में बहिरङ्ग परिभाषा की प्रवृत्ति नहीं होती है । अन्यथा बहिरंग परिभाषा से ही असिद्धता हो जाती पूर्वनिर्दिष्ट दोनों सूत्रों के द्वारा असिद्धता का विधान क्यों किया जाता ?

सब प्रकार के सन्निपातों ग्रहण होता देखकर ही वार्तिककार का परिभाषा के दोषों का वर्णन करते समय यह कहने का साहस हुआ कि वर्णाश्रय अर्थात् वर्णनिमित्तक प्रत्यय वर्ण के नाश (लोप) का अनिमित्त हो जायगा । "दाक्षिः" 'अत इञ्' ४।१।६५ से इञ् प्रत्यय इसलिए हुआ वि प्रातिपदिक अदन्त था, उस इञ् प्रत्यय को अदन्तत्व के विघातक शास्त्र "यस्येति च' ६।४।१४८ से विहित लोप में निमित्त नहीं होना

त्येतत्परिभाषादोषनिरूपणावसरे वार्त्तिककृतोक्तम् । न हि प्रत्ययः पूर्वपरसन्निपात-निमित्तकः । स एव च सन्निपातशब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपात-निमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तर्ह्यनिमित्तं स्यादित्येकदेशिनोक्तमिति-

---

वाच्यम् तस्यैकदेश्युक्तत्वेनादोषात् । अत्र "न प्रत्ययः सन्निपातनिमितकः" इति कथनम् "अङ्गसंज्ञा तर्ह्यनिमित्तं स्यादिति स्वाशयान्तरवर्णनस्य चैकदेश्युक्तत्वं बोध्यम् । एवञ्च "वर्णाश्रयः प्रत्ययः" इत्यादिना यद्दूषणं दत्तम्, तदेव युक्तम् तस्याशयान्तर-कल्पनमयुक्तम् इति । यदेदमेकदेशिकथनं तदा सन्निपातशब्देन विशेष्यविशेषणभाव-सन्निपातस्य ग्रहणमिति सिद्धान्तिमतं सिद्धत्येवेतिभावः । एकदेश्युक्तत्वं कथमित्याह-किञ्चैवं शैवः इति । किञ्चैवम्=कुतो ह्येवं सतीत्यर्थः । "वर्णाश्रयः प्रत्यय" इत्यत्र वर्णाश्रय इति प्रत्ययविशेषणं शैवः गार्ग्यः वैनतेय इत्यादि व्यावृत्यर्थमुक्तम् । शैव इत्यत्राणप्रत्ययः शिवादिभ्योऽण् ४।१।११२ इति जायते । गार्ग्य इत्यत्र गर्गादिभ्यो यञ् भवति वैनतेय इत्यत्र विनताया अपत्यमित्यर्थे स्त्रीभ्यो ढक् ४।१।१२० इति ढक् जायते । इमे सर्वे प्रत्ययाः शिव-गर्ग-स्त्रीप्रत्ययान्तशब्दानाश्रित्य जायन्ते अतो नेमे वर्णाश्रयाः । अङ्गसंज्ञा तर्हि अनिमित्तं स्यादित्युक्तिर्यद्येकदेशिनो न स्यात्तर्हि शैव गार्ग्य इत्यादौ वर्णं निमित्तमकृत्वा जायमाना ये प्रत्यया अण्यञ्ढगादयस्तन्निमित्तिका अङ्गसंज्ञा प्रकृतिघटकवर्णनाशे निमित्तं न स्यात् यस्येति लोपे हि अणादिप्रत्यया-व्यवहितपूर्वत्वमदन्तस्याङ्गसंज्ञाया यन्निमित्तं तन्नश्यतीति तात्पर्यम् । यथा शैव

---

चाहिए। यदि पूर्वापर सम्बन्ध को ही सन्निपात मानें तो यहाँ उसके अभाव के कारण परिभाषा की प्रवृत्ति नहीं होनी चाहिए । अदन्तप्रातिपदिकरूप विशेषण-विशेष्यभाव सम्बन्ध में परिभाषा की प्रवृत्ति दिखाना यही साबित करता हैं कि यहाँ पूर्वापर सम्बन्ध ही सन्निपात नहीं है और अन्य सम्बन्ध भी सन्निपात पद ग्राह्य है । यद्यपि आगे भाष्य में कहा गया है कि प्रत्यय पूर्वपर सम्बन्ध निमित्तक नहीं होता । वही पूर्वपर सम्बन्ध ही यहाँ सन्निपात शब्द से लिया गया है, इसी अभिप्राय से यह कहा कि प्रत्यय पूर्वपर सन्निपात निमित्तक नहीं है। इस शङ्का में प्रत्यय को अपने सिद्धान्त के प्रतिकूल होते हुए भी सन्निपात निमित्तक नहीं मानकर जिस भाष्यकार ने यह कहा कि तब अङ्गसंज्ञा लोप में अनिमित्त हो जायगी वह भाष्यकार एकदेशी है सिद्धान्ती नहीं, अतः उस भाष्य के विरोध का भय नहीं करना चाहिए। तात्पर्य यह है कि प्रथम दोष देते समय "प्रत्ययः सन्निपातनिमित्तकः" इस का तात्पर्य जो "अङ्गसंज्ञा तर्हीत्यादि" वाक्य के द्वारा यह निकाला गया कि वर्णाश्रयप्रत्ययनिमित्तक अङ्गसंज्ञा प्रकृति में स्थित वर्ण के नाशक यस्येति लोप के प्रति अनिमित्त हो जायगी "यह कथन एकदेशी की उक्ति है। वार्तिककार का वर्णाश्रयः प्रत्ययः वर्णविचालस्यानिमित्तम्" इस वार्तिक के द्वारा

**न तद्भाष्यविरोधः। किं चैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम्॥**

---

इत्यादौ तथैव दाक्षिरित्यत्रापि अङ्गसंज्ञाया अनिमित्तत्वात्तत्तात्पर्यकत्वे वर्णाश्रय इति प्रत्ययविशेषणं व्यर्थं स्यात्। अतः "वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तमिति भाष्यस्य अङ्गसंज्ञा तर्हि अनिमित्तं स्यादित्याशयः न सिद्धान्तिनः, किन्तु एकदेशिन एव। न च "न प्रत्ययः सन्निपातनिमित्तक इति कथमेकदेश्युक्तिरितिवाच्यम् सिद्धान्तिना तस्य समाधानाय न कापि व्यग्रता दर्शिता, न च तस्य समाधानं कृतमिति तस्योपक्षणीयत्वप्रतीतेः।

वस्तुतस्तु "तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य" इति यद् वार्तिकम् "कृन्मेजन्तः १।१।३९ इति सूत्रस्थभाष्योक्तं वार्तिकम् तस्यायमर्थः—'अत इञ्' ४।१।९५ इत्यदन्तप्रातिपदिकसम्बन्ध निमित्तक इञ् दाक्षिरित्यत्र 'यस्येति च' ६।४।१४० इति लोपस्यनिमित्तं स्यादिति। यत्तु भाष्यम्—'न प्रत्ययः सन्निपातलक्षणः। अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात्' इति तत् काक्वा योजनीयम्। तथाहि—अत्र सन्निपातशब्देन पौर्वापर्यसम्बन्ध एव गृह्यते इति केचिद्वदन्ति, तदनेन भाष्येण दूष्यते। 'प्रत्ययः किं सन्निपातलक्षणो न भवति' इति काकुः भवत्येवेत्यर्थः। "अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् ?"

---

दोष देना ठीक ही था और इस दोष दान से यह भी स्पष्ट झलकता है कि परिभाषा में सन्निपातशब्द से विशेषणविशेष्यभाव भी लिया जाता है। शैवः गार्ग्यः वैनतेयः इत्यादि में भी वर्ण का बिना आश्रय लिए 'शिवादिभ्योऽण्' ४।१।११२ गर्गादिभ्यो यञ् ४।१।१०५ 'स्त्रीभ्योढक्' ५।१।१२० से अणादिप्रत्यय होता है वह भी परिभाषा के दोष क्षेत्र में परिगणित न हो जाय इसीलिए "वर्णाश्रयः" कहा गया। यदि "प्रत्ययः वर्णविचालस्यानिमित्तम्" कहते तो 'शैवः' भी दोष दान का विषय बन जाता।

परन्तु "अङ्गसंज्ञा तर्हि अनिमित्तं स्यात्" इस मत के अनुसार तो "शैवः" इत्यादि में वर्ण का आश्रयण न करके विहित जो प्रत्यय अणादि है उनको निमित्त बनाकर की जाने वाली अङ्गसंज्ञा शिव आदि शब्द के अकार के लोप में निमित्त नहीं बनेगी। लोप होने पर तो अंगसंज्ञा का निमित्त प्रत्ययाव्यवहितपूर्व—अदन्त नष्ट हो जाता है। यदि यह माने कि भाष्यकार दाक्षिः में अङ्गसंज्ञा को लोप का अनिमित्त बताना चाहते थे तो 'शैवः' इत्यादि में भी वह आपत्ति दी जा सकती थी; फिर "वर्णाश्रयः" यह क्यों कहा गया ? इस से सिद्ध है कि अङ्गसंज्ञा को अनिमित्त बनाना भाष्यकार नहीं चाहते थे। इस तरह पूर्वोक्त भाष्य एकदेशी की उक्ति है।

क्योंकि प्रत्ययाव्यवहित पूर्वत्वरूप अदन्तत्व वहाँ अङ्गसंज्ञा में निमित्त है।

ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथंचिद्-बहिरङ्गपरिभाषयापि वारणं संभवतीति 'कृन्मेजन्त' इत्यत्र 'ह्रस्वस्य पिति' इति

---

इति काकुः अङ्गसंज्ञापि निमित्तं भवत्येवेत्यर्थः। अयं भावः—पौर्वापर्यमेवात्र सम्बन्ध इति न निर्बन्धः, संकोचे मानाभावात्। तथात्वे वार्तिकोक्तदूषणासांगत्यं स्यात्। न चाङ्गसंज्ञाया निमित्तत्वाभावो वार्तिककृत्तात्पर्यविषय इति वाच्यम्, तस्याः सन्निपातलक्षणत्वाभावात्। अङ्गसंज्ञायाः सन्निपातलक्षणत्वे 'शैवः' 'गाङ्गेयः' इत्यादौ "यस्येति च" ६।४।१४० इति लोपो न स्यात्। ततश्च "वर्णाश्रयः प्रत्ययो वर्णविचालस्य (१।१।३९ सूत्र० महा० वा०) इति वार्तिके वर्णाश्रयग्रहणमनर्थकं स्यात्। प्रत्ययपदस्य चाङ्गसंज्ञायां लक्षणा च करणीया स्यात्। न च मुख्यार्थयोगे सम्भवे लक्षणा युज्यते इति काक्वा योजनं च भाष्ये बहुत्र दृश्यते। यथा—अस्ति पुनरपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवतीति। अस्तीत्याह (१।१।३ वा० १० महाभा०)। अस्ति चेह कश्चित् पुरुषारम्भः?। अस्तीत्याह (१।१।४६ महाभा०) एवम् वेह कश्चित् पुरुषारम्भः? अस्तीत्याह ॥ कः स्वरूपविधिर्नाम (महाभा० १।१।५६ वा० १) इत्यादौ।

न च ग्रामणि कुलमित्यादौ बहिरङ्गपरिभाषया तुको वारणासम्भवे तत्र तया तुग्वारणपरकं भाष्यं विरुद्धं स्याद् भवतः अथ च विशेष्यविशेषण-सन्निपातस्याप्यत्र सन्निपातपदेन ग्रहणेऽनयैव तुग्वारणसभवे बहिरङ्गपरि भाषया तुग्वारणपरकं भाष्यमसंगतं स्यादिति वाच्यम् ग्रामणिकुलम् इत्यादौ "इको ह्रस्वोऽङ्यो गालवस्य" ६।३।६१ इत्युत्तरपदनिमित्तके ह्रस्वत्वे यथा-कथंचित् "नाजानन्तर्ये"ति परिभाषां (प० सं० ५२) विस्मृत्य बहिरङ्गपरि-

---

इस तरह अंगसंज्ञा अपने उपजीव्य अदन्तत्व विघातक शास्त्र में निमित्त नहीं बनेगी। इस तरह नहीं कहकर "वर्णाश्रयप्रत्ययः" इत्यादि कथन व्यर्थ था, अतः सिद्ध है कि वह उक्ति एक देशी की है।

"न प्रत्ययः सन्निपातनिमित्तकः" यह कथन एकदेशी का है, यह बात इससे भी सिद्ध होती है कि उसका कोई समाधान नहीं दिया गया। समाधान नहीं देने की चेष्टा से उस भाष्य की हेयता सिद्ध होती है।

"ग्रामणिकुलम्" यहाँ "इको ह्रस्वः"—६।३।६१ से ह्रस्व करने पर बहिरङ्ग परिभाषा से तुक् का वारण यदि सम्भव नहीं था तो वहाँ उस परिभाषा के द्वारा तुक् का वारण भाष्यकार ने कैसे किया है, क्या आप को भाष्य-विरोध की कोई चिन्ता नहीं है? 'ग्रामणिकुलम्' और 'ग्रामणिपुत्रः' इत्यादि में जहाँ उत्तरपद को निमित्त मानकर ह्रस्वता की जाती है वहाँ "नाजानन्तर्ये" (परि० ५२) परिभाषा का स्मरण न आने के कारण या उस परिभाषा की अनित्यता स्वीकार करने पर

**सूत्रे चैकदेशिना तया परिभाषया तुग्वारितो भाष्ये । अत एव परिभाषाफलत्वेनेद-मुक्तं 'कृन्मेजन्त' इति सूत्रे वार्तिककृतेति केचित् ॥**

**सन्निपातलक्षणविधित्वमस्या लिङ्गम् । स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः**

---

भाषयाऽपि वारणं कर्तुं शक्यते इत्येव तस्य कृन्मेजन्तः' १।१।३९ इति सूत्रोक्तस्य 'ह्रस्वस्य पिपि कृति तुक्' ६।१।६१ इति सूत्रोक्तस्य च भाष्यस्य तात्पर्यात् । तद्-भाष्यस्य च एकदेश्युक्तत्वेन प्रामाण्याभावात् "नाजानन्तर्यपरिभाषाया विस्मरणमेव न केवलं तद्भाष्यस्यैकदेश्युक्तत्वं साधयति किन्तु कृन्मेजन्त १।१।३९ इति सूत्रे भाष्ये वार्तिककृतः ग्रामणि कुलमित्यस्य सन्निपातपरिभाषाफलत्वेनोपादानमपि तस्यैक-देश्युक्तत्वसाधकम् । अतएव=बहिरङ्गपरिभाषाया अप्रवृत्तेरेव, 'सन्निपात'परि भाषायां च विशेष्यविशेषणसन्निपातस्य ग्रहणादेव कृन्मेजन्तः १।१।३९ इतिसूत्रे वार्तिककृता 'ग्रामणिकुलम्' 'ग्रामणिपुत्र' इत्यत्र तुग्वारणं सन्निपातपरिभाषाफल-त्वेन प्रोक्तं नतु बहिरङ्गपरिभाषाफलत्वेनेति केचित् । इट किट कटी गतौ (भ्वा० ३२१) इत्यत्र प्रश्लिष्टस्य 'ई' धातोः क्विपि नपुंसकह्रस्वत्वे 'इ' कुलम् इत्यादौ तुग्वारणाय सन्निपातपरिभाषैव यदैक उपायस्तदा तुग्वारणविषये बहिरङ्गपरि-भाषायास्तत्रापि ग्रामणि कुलमित्यादौ संचारप्रयासो वृथा न करणीय इति वार्तिक-कारस्य तात्पर्यमिति ॥

सन्निपातलक्षणविधित्वमस्या लिङ्गम् । **लिङ्गं** नाम बीजम् हेतुर्वा । **सन्निपातलक्षणविधित्वम्**=सन्निपातनिमित्तकशास्त्रत्वम् इत्यर्थः । स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्त-

---

जैसे तैसे बहिरङ्ग परिभाषा से भी वारण हो सकता है, यह मान कर कृन्मेजन्तः" १।१।३९ इस सूत्र में और "ह्रस्वस्य पिति कृति" ६।१।७१ इस सूत्र में एकदेशी ने उस परिभाषा के द्वारा तुक् का वारण किया । वस्तुतः वहाँ बहिरङ्ग परिभाषा की प्रवृत्ति असंभव जानकर ही अन्तरङ्ग परिभाषा के फल को गिनाते समय "कृन्मेजन्तः" सूत्र के भाष्य में वार्तिककार ने ग्रामणिकुलम् और ग्रामणिपुत्रः को अन्तरङ्ग परिभाषा के फल के रूप में नहीं गिनाया, यह कोई कहते हैं ।

जबकि "इट किट कटी गतौ" (भ्वा० ३२१) में प्रश्लिष्ट ई धातु से क्विप्, नपुंसक में ह्रस्व सु प्रत्यय, सु का लुक् करने पर "इ कुलम्" बनता है यहाँ प्राप्त तुक् को रोकने के लिए 'सन्निपातपरिभाषा' ही शरण है तब 'ग्रामणिकुलम्' यहाँ पर उसी से तुक् का वारण करना चाहिए बहिरंगपरिभाषा का आश्रय ठीक नहीं है यही वार्तिककार का तात्पर्य है ।

सन्निपात लक्षण विधित्व (सन्निपातनिमित्तक शास्त्रत्व) इस परिभाषा की प्रवृत्ति में लिङ्ग याने चिह्न हैं । अर्थात् दो के सम्बन्धविशेष को निमित्त बनाकर प्रवृत्त होने वाले शास्त्र जहाँ होंगे; वहाँ इसकी उपस्थिति होगी । अपनी प्रवृत्ति

**सन्निपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ॥**

मिति परिभाषायाः फलितार्थः । यथा 'शतानि' इत्यत्र नुमः प्रवृत्तेः प्राक् नुम्शास्त्रस्य निमित्तभूतः सन्निपातः सर्वनामस्थानाव्यवहितपूर्वाजन्ताङ्गरूपः सन्निपातः तस्य सन्निपातस्य विघातकं शास्त्रं लुङ्मुखेन षट्संज्ञाशास्त्रं तत्प्रति नुमनिमित्तमभूदिति षट्संज्ञाऽभावः सिद्धः । इत्थं सन्निपातनिमित्तकविधित्वं नपुंसकस्य झलचः ७।१।७२ इति शास्त्रत्वं लिङ्गं दृष्ट्वा तत्रेयं प्रवर्तत इति भावः । ननु "मिदचोऽन्त्यात् परः" १।१।४७ इति नुमः अजन्तसमुदायान्त्यावयवत्वेन विधानात्, न स सर्वनामस्थानाव्यवहितपूर्वकाजन्तत्वसन्निपातविघातक इति स्वातिरिक्तशास्त्रस्येति निवेशस्य किं फलमिति चेत्, श्रूयताम्, समुदायभक्तेनापि नुमा प्रातिपदिकनिष्ठस्याजन्तत्वस्य विघातो भवत्येव । अतएव नान्तप्रातिपदिकत्वमङ्गीकृत्य तत्रोपधादीर्घः "सर्वनाम-

होने के पहले, अपनी प्रवृत्ति के लिए निमित्त भूत जो सन्निपात है उसके विघातक अपने से भिन्न शास्त्र का स्वयं निमित्त नहीं होता है; यही इस परिभाषा का फलितार्थ है । 'शतानि' में नुम् प्रवृत्ति के पहले, नुम् की प्रवृत्ति के लिए निमित्त बनने वाला सन्निपात है अजन्ताङ्गाव्यवहितोत्तर सर्वनामस्थानत्व, उस सन्निपात का विघातक स्वातिरिक्त शास्त्र है लुक् शास्त्र द्वारा इ सर्वनामस्थान का विघातक षट्संज्ञाशास्त्र, नुम् उस षट् संज्ञा का निमित्त नहीं बनेगा । "स्वातिरिक्त शास्त्र" यह विशेषण इसलिए लगाया गया, कि नुम् अजन्ताङ्गाव्यवहितोत्तरसर्वनामस्थान का स्वयं भी विघातक है, तथापि परिभाषा नुम् को न रोके ।

यद्यपि "यतोऽनावः" ६।१।२१३ सूत्र में यह कहा गया है यदि इस सूत्र से उदात्त गुण विशिष्ट अच् का विधान करने पर 'नाव्य' में तीन अच् के आ जाने से "यतोऽनावः" में निमित्त माने गये 'द्वयच्त्व' का विनाश हो जाने से उपजीव्य विरोध होगा; यह बात ५३५ पृ० पर कही गयी है; इससे तो यही लगता है कि स्वयं भी स्वयं के निमित्तका विघातक नहीं होता है तब तो स्वातिरिक्त सम्बन्ध विघायकस्य" में 'स्वातिरिक्त का निवेश भाष्य विरुद्ध प्रतीत होता है तथापि, उसका तात्पर्य यह लेना चाहिए, जिस स्वनिमित्त के विनाश के बिना जिसकी प्रवृत्ति नहीं होती; उस निमित्त से भिन्न जो सन्निपातविघातक शास्त्र; उसमें अनिमित्त होता है । जैसे "सुपि च" ७।३।१०१ यह शास्त्र अपने निमित्त अदन्तत्व के विनाश के प्रति निमित्त ही है ? अदन्त के विनाश के बिना वह चरितार्थ ही नहीं होगा । इसलिए जिस अदन्तत्व रूप निमित्त के विनाश के बिना 'सुपि च' चरितार्थ नहीं है उसका विनाश उपजीव्य विरोध में नहीं गिना जायगा । 'यतोऽनावः' ६।१।२१३ सूत्र तो 'कांम्या' में चरितार्थ है । इसलिए उसे 'सुपि च' की श्रेणी में नहीं रखा जा सकता ।

स्थाने चासम्बुद्धौ'' ६।४।८ इति सम्पाद्यते। अतस्तद्विघातकस्येत्यत्र स्वातिरिक्त-शास्त्रस्येति संकोचः करणीय एव

अयं भावः—व्याकरणशास्त्रमिदं साधुत्वज्ञानविषयकम् । अतएवोच्यते ''साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरिति (वाक्यपदीयम् कारिका) अत 'इको यणचि' ६।१।७७ इत्यादिना शास्त्रेण स्वविधेयघटितस्य साधुत्वं बोध्यते अन्यस्य चासाधुत्वं प्रत्याय्य। अत एव 'सुधी उपास्यः सुध्यूपास्य इत्यादीनामसाधुत्वं स्वीक्रियते। किन्त्वेवमेव स्वीकारे परिनिष्ठितस्य अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकाना-क्रान्तस्यापि ''सुध्युपास्यः'' इति विसर्गान्तरूपस्य इको यणचीत्यस्याविधेयेन विसर्गेण घटितत्वादसाधुत्वापत्तिः स्यात्। अथवा 'उदिते जुहोति' 'अनुदिते जुहोति' इत्यादाविव शास्त्रद्वयाप्रामाण्यापत्तिभिया पर्यायापत्तिः स्यात्। अतः 'इको यणचीत्यादिना' ''मदुत्तरप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साधु'' इति बोधयता स्वोत्तरप्रवृत्तिमच्छास्त्रायानुज्ञाप्यवश्यमेव दातव्या। तथाच स्वोत्तरप्रवर्तिष्यमाण-शास्त्रान्तरबोधितासाधुत्वासमानाधिकरणरूपमेव साधुत्वमिह ग्राह्यम्।

सन्निपातपरिभाषया च ''मदीयसन्निपातविघातातिरिक्तत्वेन मदुत्तरप्रवृत्ति-मता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साधु'' इति स्वोत्तरप्रवृत्तिमत्तत्च्छास्त्र-वाक्यार्थे संकोचो बोध्यते। यथा ''शतानि'' इत्यत्र नुम्शास्त्रं स्वोत्तरप्रवृत्तिमत्षट्-संज्ञाशास्त्रेण यस्य सर्वनामस्थानविभक्तेर्जसः लुकं विधाय 'शता' इत्यस्य साधुत्वं बोध्यते, तन्नुमः सन्निपातविघातकमेवेति न 'शता' इत्यस्य साधुत्वम्। ''कष्टाय क्रमणे'' इत्यत्र कष्टायेतिनिर्देशात्परिभाषाया अनित्यत्वबोधनविषये तु 'ङेर्यः' ७।१।१३ इत्यस्यानुज्ञावाक्यघटकस्वसन्निपातविघातकवाक्यार्थे ''सुपि च'' ७।३।१०२ इत्येतदतिरिक्तत्वेन संकोचः कार्यः तथाच 'ङेर्य इति बोधयिष्यति यत् सुपिचेत्येत-दतिरिक्तमदीयसन्निपातविघातकातिरिक्तेन मदुत्तरप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्विति। तत्तच्छास्त्रातिरिक्तत्वेन संकोचोऽनित्यविषये सर्वत्र कार्यः। एतद्ध्वनितं स्वातिरिक्तशास्त्रस्येति संकोचं कुर्वता नागेशेनेति ॥

नचैवं हलः ''यतोऽनावः'' ६।२।२१३ इत्यनेनोदात्तगुणविशिष्टाचो विधाने द्व्यच्त्वापत्या यतोऽनाव इति स्वरविधौ निमित्तभूतस्याद्व्यच्त्वस्य विनाशेन उपजीव्य-विरोधः स्यादित्युक्तं दुर्गायां टीकायाम् (पृ० ५३५) इत्थं स्वस्यापि स्वनिमित्त-विधायकतया प्रवृत्तौ सन्निपातपरिभाषाप्रवृत्तिर्दर्शिता तथाच ''स्वातिरिक्तशास्त्रस्य'' इति संकोचोऽसंगत इति वाच्यम् यस्य स्वनिमित्तविनाशं विना न प्रवृत्तिस्तदति-रिक्तशास्त्रस्येति तात्पर्यकल्पनेनादोषात्। यथा 'सुपि च' ७।३।१०२ इति शास्त्रं स्वनिमित्तादन्तत्वस्य विनाशं प्रति निमित्तमेव भवति, तद्विनाशं विना तस्य वैयर्थ्य-प्रसङ्गात्। यतोऽनाव इति तु न तथा व्यर्थं 'काम्या' इत्यादौ चारितार्थ्यात् ॥

**नन्वेवं रामायेत्यादौ 'सुपि चे'ति दीर्घानापत्तिरदन्ताङ्गङेसन्निपातेन जातस्य यादेशस्य तदविघातकत्वात्। न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्। आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः। किं चान्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते**

---

ननु 'रामाय' इत्यादौ 'सुपि च' ७।३।१०२ इति दीर्घो न स्यात् अदन्ताङ्गाव्यवहितोत्तरत्वसम्बन्धेन (अदन्तङेसन्निपातेन) जातस्य 'ङेर्यः ७।१।१३ इति यादेशस्यादन्तविघातकदीर्घं प्रत्यनिमित्तत्वात्, न च यादेशं प्रति यञादिसापेक्षदीर्घस्य बहिरङ्गत्वेनासिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपितासिद्धत्वेऽपि (आतिदेशिकसन्निपातविघाताभावेऽपि) वस्तुतो दीर्घेणादन्तत्वस्य विघातसत्त्वेन सन्निपातपरिभाषाप्रवृत्तौ बाधकाभावात्। किञ्चान्तरङ्गे कर्तव्ये जातस्य समकालप्राप्तस्य च बहिरङ्गस्यासिद्धत्वमित्येवान्तरङ्गपरिभाषानिरूपणे सिद्धान्तितम्। अतः ऽन्तरङ्गे यादेशे कृते तं प्रति दीर्घस्य बहिरङ्गस्यासिद्धत्वबोधनं तया न शक्यतेकर्तुम्। न च 'ङेर्य' इत्यस्य जातत्वात्तादृशमन्तरङ्गं प्रति दीर्घस्यासिद्धत्वं मा भूत्, किन्तु सन्निपातलक्षणविधित्वस्य परिभाषालिङ्गतया "ङेर्य' इत्यन्तरङ्गशास्त्रलिङ्गिकायाः तत्स्थायाश्च सन्निपातपरिभाषाया अन्तरङ्गत्वात् तस्याश्च जातत्वाभावात् तां

---

इस परिभाषा के स्वीकार करने पर रामाय इत्यादि में दीर्घ नहीं होगा, क्योंकि अदन्ताङ्गाव्यवहितोत्तरत्वसम्बन्धेन 'ङे' के स्थान में जायमान "ङेर्यः" से यादेश को दीर्घ के द्वारा अदन्तत्व के विघात में निमित्त नहीं होना चाहिए। यदि यह कहें कि यञादित्व की अपेक्षा रखने वाला दीर्घ बहिरङ्ग होने के कारण यादेश के प्रति असिद्ध रहेगा, इसलिए यादेश को सन्निपात विघात का ज्ञान ही नहीं है, अर्थात् यादेश की दृष्टि में यहाँ सन्निपात विघात है ही नहीं, इसलिए दीर्घ होने में यह परिभाषा बाधक नहीं बन सकती तो यह कथन गलत होगा, यहाँ दीर्घ की आरोपित (बुद्धि कल्पित) असिद्धता भले ही हो गयी हो, परन्तु वस्तुतः दीर्घ के द्वारा अदन्तत्व का विघात तो हो ही रहा है, इसलिए सन्निपातपरिभाषा की प्रवृत्ति हो ही जायगी, फिर दीर्घ नहीं होना चाहिए।

वाह! आपने यहाँ आरोपित (बुद्धि कल्पित) तत्त्व को नगण्य ठहरा दिया, यह तो आँख में धूल झोंकना है, अतिदेश शास्त्रों के द्वारा व्याकरणशास्त्र में आरोपित बुद्धि उत्पन्न करके न जाने कितने कार्य किये गये हैं, 'रामाय' में 'य' में सुप्त्व आरोपित ही तो है तो क्या आप उसे सुप् समझ कर उसके परे दीर्घ नहीं करते? इस तरह आरोप के बल पर विहित अन्य कार्यों की तरह यदि आरोपित—असिद्धता दीर्घ की हो जाती है तो सन्निपात परिभाषा की प्रवृत्ति नहीं होगी, और दीर्घ होना निर्बाध हो जायगा।

**तस्यासिद्धत्वे मानाभावः । किं चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात्तत्रैतस्यातिव्याप्तिपरकृन्मेजन्त' इति सूत्रस्थभाष्यासङ्गतिः । सन्निपातस्याशास्त्रीयत्वा-**

---

सन्निपातपरिभाषामन्तरङ्गां प्रति दीर्घस्य बहिरङ्गस्यासिद्धत्वं बोध्यताम् तथाच परिभाषादृष्टयात्र दीर्घाभावाद् यादेशनिमित्तस्याक्षुण्णतया दीर्घं प्रति यादेशस्यानिमित्तत्वं नानया बोध्येतेति वाच्यम् एवमातिदेशिकसन्निपातविघाताभावमादाय यद्येतस्या अप्रवृत्तिः स्वीक्रियेत तदा 'हे गौरि' इत्यादौ सम्बुद्धिलोपेऽपि स्थानिवद्भावेन ह्रस्वनिमित्तसन्निपातविघाताभावात्तत्रैतस्यातिव्याप्तिदानपरकं कृन्मेजन्तः १।१।३९ इति सूत्रस्थं भाष्यं न संगच्छेत । यदि चोच्यते व्याकरणसूत्रेष्वपठितत्वेन सन्निपातस्याशास्त्रीयत्वान्न 'हेगौरीत्यादौ' स्थानिवत्त्वम् तर्ह्यसिद्धत्वमपि तस्याशास्त्रीयत्वात्कथमिति समानपर्यनुयोगविषयः, अशास्त्रीयेऽसिद्धत्वाप्रवृत्तिरिति 'ईदूदेद्द्विवचनम्' १।१।११ इति सूत्रे कैयटेन स्पष्टमुक्तम्— तथाहि=["प्लुतभावी प्रकृत्या—इत्येवमेतद्विज्ञायते" इति भाष्यस्थं 'प्लुतभावीति प्रतीकमुपादाय] स कथयति प्लुतो भावी यस्य सः, प्लुतभावी स्थानी प्रकृतः, तस्यैव प्रकृतिभावः ॥ ननु प्लुतस्यासिद्धत्वात् स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते ? नैष दोषः । प्लुतोऽस्य भावीति बुद्ध्या प्रकल्पननेतत् । न च तत्र (बुद्धिप्रकल्पने) प्लुतस्यासिद्धत्वम्, अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात् ।। अत्र=उद्योतकारः=बुद्ध्या प्रकल्पनमिति प्रतीकमादाय प्राह—शास्त्रीये कार्येऽसिद्धत्वम् । न चायं व्यवहारः शास्त्रीयं कार्यमितिभावःकृन्मे जन्त इत्यत्राप्युद्योतकारः प्राह— तया (बहिरङ्ग परिभाषया) शास्त्रीय कार्यस्याऽसिद्धत्वेऽपि लौकिके सन्निपातेऽसिद्धत्वाभावादिति ।

---

"ऐसा अवश्य होता यदि यहाँ बहिरंग परिभाषा की प्रवृत्ति हो पाती । परन्तु यहाँ तो अन्तरंग परिभाषा का विषय ही नहीं है । क्योंकि उस परिभाषा के द्वारा अन्तरंग कर्तव्य में बहिरङ्ग की असिद्धता होती है; किन्तु उससे अन्तरङ्ग कार्य के हो जाने पर बहिरङ्ग की असिद्धता हो, इसमें कोई प्रमाण नहीं हैं ।

यदि यह कहें कि अन्तरंग "ङेर्यः" ७।१।१३ कार्य किया जा चुका है, उसके प्रति बहिरङ्ग दीर्घ की असिद्धता करना बहिरङ्ग परिभाषा के बलबूते के बाहर है, तो रहे, मैं तो सन्निपात परिभाषा की दृष्टि में दीर्घ की असिद्धता करके 'सन्निपात' परिभाषा की दृष्टि में यह सिद्ध करना चाहता हूँ कि यहाँ सन्निपात का विघात नहीं है, इस तरह सन्निपात परिभाषा यहाँ 'य' को दीर्घ के प्रति अनिमित्तत्व सिद्ध नहीं करेगी और दीर्घ हो जायगा, तो ऐसा नहीं कहना चाहिए क्योंकि आतिदेशिक सन्निपात विघाताभाव (अतिदेश के बल से कल्पित

न्नात्र स्थानिवत्त्वमिति चेत्तर्ह्यसिद्धत्वमपि कथमिति विभावय। अशास्त्रीयेऽसिद्धत्वाप्रवृत्ते'रीदूदेत्' इति सूत्रे कैयटेन स्पष्टमुक्तत्वात्। एवं च पूर्वत्रासिद्धीयेऽपि

---

एवञ्च पूर्वत्रासिद्धीयेऽपि कार्ये (त्रैपादिकेऽपि कार्ये) कर्तव्ये सन्निपातपरिभाषाप्रवृत्ति र्भवत्येवेति चेन्न 'कष्टाय क्रमणे' ३।१।१४ इत्यत्र कष्टायेति दीर्घनिर्देशेन एतस्या अनित्यत्वज्ञापनात् ॥

अत्र विचार्यते—**पूर्ववासिद्धीयेऽपि कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति** यदुक्तं तत्केवलमस्यास्त्रिपाद्यां प्रवृत्तौ नास्ति किमपि बाधकमितिबोधनायैवोक्तम्, नास्यास्तत्रप्रवृत्तौ किमपि फलं दृश्यते। अथ च प्रवृत्तौ दोष एव 'दुग्धं' दोग्धा' इत्यादौ घं निमित्तीकृत्य जायमानस्य 'झषस्तथोर्धोऽधः' ८।४।२० इति धादेशस्य जश्त्वं प्रत्यनया त्रिपाद्यां प्रवृत्तया अनिमित्तत्वबोधनात् रूपासिद्धेः। किञ्चैवं" मय उञो वो वा" ८।३।३३ इत्यस्य त्रिपाद्यां विधानं तत्र "वो" इति सार्धद्विमात्रात्मकोच्चारणं च व्यर्थं स्यात्। सूत्रे वग्रहणं तस्य च त्रिपाद्यां विधानं क्रियते किम्वुक्तमित्यत्रानेन विहितस्य वकारादेशस्य "मोऽनुस्वारः" ८।३।२३ इत्यनुस्वारे कर्तव्येऽसिद्धत्वार्थम्। अन्यथा

---

सन्निपात के विघाताभाव) को लेकर यदि यह (सन्निपात) परिभाषा प्रवृत्त न हो तो हे 'गौरि' में सन्निपात परिभाषा की अनिष्ट-प्रवृत्ति के कारण जो अतिव्याप्ति-दोष दिखाया गया है, उस अतिव्याप्ति दोष को दिखाने वाला "ङ्मेजन्तः" १।१।३९ सूत्र का भाष्य असंगत हो जायगा। वहाँ कहा गया है कि हे "गौरि" में ह्रस्व को सम्बुद्धि लोप का अनिमित्त होना चाहिए। यदि आतिदेशिक सन्निपात विघाताभाव में यह परिभाषा न लगे तो यहाँ सम्बुद्धि का लोप होने पर भी उसे स्थानिवद्भाव के द्वारा लाने पर ह्रस्व निमित्तक सन्निपात का आरोपित विघाताभाव होने से परिभाषा की प्रवृत्ति नहीं होगी फिर 'कृन्मेजन्तः' सूत्र का भाष्य विरुद्ध हो जायगा क्योंकि हे 'गौरि' में इस परिभाषा की प्रवृत्ति उस सूत्र में दिखायी गयी है।

सन्निपात अशास्त्रीय तत्त्व है शास्त्रबोधिततत्त्व नहीं है इसीलिए उसे लाने के लिए हे 'गौरि' में स्थानिवद्भाव नहीं होगा, यदि आप वहाँ के लिए ऐसा कहते हैं तो "रामाय" में दीर्घ की असिद्धता करके सन्निपातत्व को भी बरकरार नहीं दिखाया जा सकता। क्योंकि अशास्त्रीय कार्य कर्तव्य में असिद्धता की प्रवृत्ति नहीं होती है, यह बात 'ईदूत्' १।१।११ सूत्र में कैयट ने स्पष्ट कही है। कैयट ने वहाँ साफ कहा है कि बुद्धिप्रकल्पन में असिद्धता नहीं होती है; क्योंकि बुद्धिप्रकल्पन—इसे प्लुत होने वाला है, इस प्रकार की कल्पना—अशास्त्रीय है और अशास्त्रीय कार्य में 'असिद्धं बहिरङ्गम्" यह परिभाषा नहीं लगती है—यही उस कैयट का तात्पर्य है। इस तरह 'रामाय' में सन्निपात को सुरक्षित दिखाने के लिए "असिद्धं बहिरङ्गमन्तरङ्गे" से दीर्घ की असिद्धता

**कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत् — न। कष्टायेति निर्देशेनैतस्या अनित्यत्वात् ॥**

---

'इको यणचि' ६।१।७८ इत्यस्यानन्तरं 'मय उञो वा'' इतिन्यासेनैव निपातएकाजनाङ् १।१।१४ इति प्रगृह्यसंज्ञामूलकस्य प्रकृतिभावस्य बाधेन वैकल्पिके वादेशे किम्वुक्तमित्यत्र त्रिपाद्यां प्रवृत्तया सन्निपातपरिभाषयाऽनुस्वारे कर्त्तव्ये वस्यानिमित्तसाधनाच्चानुस्वाराभावेऽनायाससिद्धे वकारग्रहणं वादेशस्य च त्रिपाद्यां विधानं व्यर्थमेव स्यात् । अतस्त्रिपाद्यामस्याः प्रवृत्तेरभाव एव स्वीकार्य इति वस्तुस्थितिः ।

रामायेत्यस्य सिद्धिसम्बन्धिशङ्काप्रकरणे 'सन्निपातपरिभाषा त्रिपाद्यां प्रवर्तते नवेति विचारः कथमुत्थित इति चेत् "बहिरङ्गपरिभाषया रामायेत्यत्र दीर्घस्यासिद्धया न सन्निपातविघात इति शङ्काप्रकरणे स्मृता बहिरङ्गपरिभाषा । सा तु षाष्ठी त्रिपाद्यां न प्रवर्तते । सन्निपातपरिभाषायाः का स्थितिः ? सा तत्र प्रवर्तते न वेति बुद्धिरेव तादृशं वाक्यं लेखयामासेत्युत्तरं गृहाण ।

कष्टायेति निर्देशो नास्या अनित्यत्वज्ञापकः, 'सुपि च' ७।३।१०२ इत्यत्र "अतो दीर्घो यञि'' ७।३।१० इत्यतो यञीत्यनुवृत्या तत्र यञीति यकारेण प्रत्याहाराश्रयणसामर्थ्याद्दीर्घसिद्धेः । अतः "न यासयोः'' ७।३।४५ इत्यत्र "यासयोः'' इति निर्देशोऽनित्यत्वज्ञापकत्वेनाङ्गीकार्यः । अन्यथानया ओस्विभक्त्यवहितपूर्वत्वसन्निपातेन जातस्य "त्यदादीनामः'' ७।२।१०२ इत्यत्वस्य तथाकथितसन्निपातविघातकं टाप्प्रत्ययं प्रत्यनिमित्तत्वबोधनान्निर्देशासंगतिः स्यात् ।

आतिदेशिकसन्निपाताविघातमादाय सन्निपातपरिभाषाया अप्रवृत्तौ हे गौरीत्यत्र नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यादिति शङ्कापरभाष्यासंगतिः, सम्बुद्धिलोपस्य स्थानिवद्भावेन ह्रस्वनिमित्तसन्निपाताविघातादिति यदुक्तमुपरि मूले तदपि न युक्तियुक्तम् प्रतिभाति । स्थानिवत्सूत्रं हि स्थानिकार्यमादेशे अतिदिशति, न तु स्थानिनमपि संनिधापयति येन सन्निपातविघातो न स्यात् ॥ अस्तु, प्रकृतमनुसरामः ।

---

नहीं हो सकती, फिर तो सन्निपातविघातक दीर्घ कर्तव्य में "यादेश" को यह दीर्घ का अनिमित्त घोषित कर देगी फिर 'रामाय' में दीर्घ कैसे हुआ ? इस प्रश्न का समाधान परिभाषा को अनित्यमानकर ही किया जा सकता है । "कष्टाय क्रमणे'' ३।१।१४ सूत्र में 'कष्टाय' इस निर्देश से सन्निपातपरिभाषा अनित्य मानी गयी है । "न यासयोः'' ७।३।४५ सूत्र में 'यासयोः' यह निर्देश भी सन्निपात परिभाषा के अनित्य होने का प्रमाण है । अन्यथा ओस् विभक्ति के अव्यवहित पूर्व में होने के कारण जो 'त्यदादीनामः' ७।२।१०२ से अत्व हुआ है, वह टाप् के द्वारा उसका विघातक कैसे होगा ? फिर कैसे निर्देश बनेगा ?

**यथोः सन्निपातस्य विघातकं शास्त्रं तयोः सन्निपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः। अत एव दाक्षिरित्यत्राकारान्तप्रकृतीञ् सन्निपातनिमित्ताङ्गसंज्ञाऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितं 'कृन्मेजन्त' इति सूत्रे भाष्ये न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेत्युक्तमस्ति ।।**

---

यथोः सन्निपातस्य विघातकं शास्त्रं तयोः सन्निपातनिमित्तकविधावुपादानमपेक्षितमिति नाग्रहः । अत एव दाक्षिरित्यत्राकारान्तप्रकृतीञ्प्रत्ययसन्निपातनिमित्तकाङ्गसंज्ञाऽनया परिभाषया 'यस्येति च' ६।४।१४८ इत्यल्लोपस्य निमित्तं न स्यादित्याशङ्क्य परिभाषाया अनित्यत्वेन समाहितं 'कृन्मेजन्तः' १।१।३९ इति भाष्ये । नह्यङ्गसंज्ञाविधावदन्तस्याङ्गसंज्ञेत्युक्तमस्ति । यथो सन्निपातस्य विघातकं शास्त्रं तयोः सन्निपातनिमित्तकविधावुपादान एव परिभाषायाः प्रवृत्तिस्वीकारे पूर्वोक्तशङ्कासमाधाने निर्मूले स्यातामिति भावः ।

वस्तुतस्तु "यथोः सन्निपातस्येत्यादि कथनमप्ययुक्तमेव, यथोः सन्निपातस्य विघातकं शास्त्रं तयोः सन्निपातनिमित्तकविधौ वस्तुस्थित्या निमित्तत्वे त्यदादिभिः सन्निपातनिमित्तकत्यदाद्यत्वस्य तद्विघातकैसं प्रति निमित्तत्वाभावापत्तेः ऐस्विधेर्वृक्षैरित्यत्र चरितार्थत्वात् । शब्दोपात्तत्वविवक्षणे तु त्यदादिविभक्तिसन्निपातस्यैव अत्वं प्रति शब्दोपात्तनिमित्तत्वेन भिसोऽशब्दोपात्ततया ऐसस्तद्विघातकेऽपि न विरोधः । "अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात्" इति भाष्यं तु काक्त्वानुपदमेव योजितम् इति न तद्विरोधोऽपि । न चानित्यत्वेन समाधानं युक्तम् तथा सत्यङ्गमात्रस्य येन नाप्राप्ति-

---

जिन दो के सन्निपात (सम्बन्ध) का विघातक शास्त्र हो, उन दोनों का सन्निपात निमित्तक विधि में उपादान (कथन) होना ही चाहिए ऐसा आग्रह नहीं है। यदि पूर्वोक्त दुराग्रह होता तो 'रामाय' में ही इस परिभाषा की प्रवृत्ति दिखाई जा सकती क्योंकि वहाँ 'राम और ङे' दोनों के बीच अदन्ताङ्गाव्यवहितत्वसम्बन्ध है, "सुपि च" ७।३।१०२ शास्त्र उस सम्बन्ध का विघातक है, सन्निपात निमित्तक विधि "ङेर्यः" ७।१।१३ में उन दोनों का उपादान है । लेकिन 'दाक्षिः' में इसकी प्रवृत्ति से दोष की संभावना नहीं दिखाई जाती । "कृन्मेजन्तः" १।३।३९ सूत्र के भाष्य में भाष्यकार ने कहा कि अकारान्त प्रकृति और इञ् प्रत्यय के सन्निपात के कारण होने वाली अङ्गसंज्ञा इस परिभाषा के कारण अल्लोप में निमित्त नहीं हो सकेगी, और बाद में इसका समाधान परिभाषा को अनित्य मानकर किया । अङ्गसंज्ञा सूत्र में कहीं यह नहीं कहा गया है कि अदन्त को अङ्गसंज्ञा हो । इस तरह सिद्ध है जिन दो के सम्बन्ध का विघातक शास्त्र हो उन दोनों के सन्निपात निमित्तक विधि में उपादान हो ही, तभी यह परिभाषा लगे, ऐसा कोई प्रतिबन्ध या दुराग्रह यहाँ नहीं है ।

**न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपर-भाष्यासङ्गतिः। अनया परिभाषया लुग्मा भूत्, अव्ययत्वं तु स्यादेव। लुका हि तदीयसन्निपातस्य विघातो नाव्ययसंज्ञया, संज्ञाफलं त्वकच् स्यादिति वाच्यम्। एतदुदा-**

---

न्यायेन सन्निपातपरिभाषापवादतया जरसादेशादौ (अतिजरैरिति भवितव्यम् सन्निपातपरिभाषया इत्यादिना) तत्संचारणपरभाष्य विरोधात् इति ॥

'कुम्भं करोतीति—कुम्भकार' इत्यत्र कुम्भ अम पूर्वकात् कृधातोः कर्मण्यण् ३।२।१ इति अणि वृद्धौ कृद्योगे कर्तृकर्मणोः कृति २।३।६५ इत्यमः स्थाने षष्ठी तेन 'कुम्भ ङस् कार' इत्यलौकिकविग्रहे "गतिकारकोप०—(परि०भा० सं० ७६) इति सुबुत्पत्तेः प्रागेव कारेत्यनेन 'उपपदमतिङ् २।२।१९ इति समासे समासत्वात् प्रतिपदिकत्वे सुपो लुकि कुम्भकार इत्यस्मात् भ्यस्विभक्तौ 'बहुवचने झल्येत्' ७।३।१०३ इत्येत्वे कुम्भकारेभ्य इति सिद्धयति। अत्र कुम्भकारेत्यत्र कारघटका-

---

"कुम्भकारेभ्यः और आधये" में "कृन्मेजन्तः" १।१।३९ से प्राप्त अव्यय-संज्ञा का निवारण भाष्यकार ने सन्निपात परिभाषा के द्वारा किया है। "कुम्भकार" के रेफ में जो अकार है; वह "कर्मण्यण्" ३।२।१ से किया हुआ अण् का ही अकार है, यह अण् प्रत्यय कृत् प्रत्यय है, जब उस 'अ' को बहुवचने' झल्येत्' ७।३।१०३ से एत्व हुआ, तो 'कुम्भकारे' एजन्तकृत् हो गया उसे "कृन्मेजन्तः" १।१।३९ से अव्यय संज्ञा प्राप्त है, इसी तरह आङ् पूर्वक धा धातु से "उपसर्गे घोः किः" ३।३।९२ से किप्रत्यय होकर "आधि" बना है उसके चतुर्थी एकवचन में घिसंज्ञा और घेर्ङिति ७।३।१११ से गुण करने पर जब "आधे ए" बना; तब 'कृन्मेजन्तः' से अव्ययसंज्ञा प्राप्त हुई। अव्ययसंज्ञा होने पर 'अव्ययादाप् सुपः' से सुप् का लुक् प्राप्त हुआ, इस पर भाष्यकार ने कहा भ्यस् और ए के कारण ही तो यहाँ एकार आया है, वही एकार भ्यस् और ए के विनाश (लुक्) का कारण नहीं हो सकता। यह भाष्य तो सरासर गलत दिखाई पड़ता है, इस परिभाषा से लुक् का निवारण करना तो ठीक था; क्योंकि लुक् से उनके सम्बन्ध का विनाश होता है, अव्ययसंज्ञा से तो कोई प्राचीन सम्बन्ध नहीं बिगड़ता, इसलिए अव्ययसंज्ञा तो हो ही जानी चाहिए, अव्ययसंज्ञा का फल क्या होगा, यदि आप यह जानना चाहें, तो फल के रूप में अकच् को ले सकते हैं—"अव्ययसर्वनाम्नामकच् प्राक् टेः" ५।३।७१ सूत्र में अव्यय का उल्लेख स्पष्ट है, 'अकच्' 'टि' के पहले होता है, वह तन्मध्यपतितन्याय से प्रकृति के अन्तर्गत ही परिगणित होता है। इसलिए उसके होने से भी विभक्ति और प्रकृति के सन्निपात—अव्यवहितत्व—का विघात नहीं होता। इस तरह भाष्यकार ने जो अव्ययसंज्ञा का वारण इस परिभाषा के द्वारा किया, वह असंगत दिखाई पड़ता है, यदि असंगत दिखाई पड़ता है, तो इस परिभाषा के उदाहरण

हरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात् ॥ एतेनात्राकच् स्यादित्यपास्तम् ।

न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेप्यकजेकवाक्यतापन्ना स्या-

---

कारस्य अणोऽकाररूपस्य कृत्त्वात् तस्यैत्वे कृते स्थानिवत्त्वेनैकारस्यापि कृत्त्वात् 'कृन्मेजन्त' १।१।३९ इत्यनेन कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यादित्यकेनाव्ययसंज्ञायामकजापत्तिः, एवम् आङ्पूर्वकात् धा' धातोः "उपसर्गे घोः किः" ३।३।९२ इति 'कि' प्रत्यये आतोलोप इति च ६।४।६४ इत्याकारलोपे आधि इत्यत्र उपपदमतिङ् २।२।१९ इति समासे प्रातिपदिकत्वे ङे विभक्तौ घिसंज्ञायाम् 'घेर्ङिति' ७।३।१११ इति गुणे आधे ए इति स्थिते किप्रत्ययस्य कृत्त्वात् तत्स्थाने जातस्य गुणादेशेनैकारस्यापि स्थानिवत्त्वेन कृत्त्वात् एजन्तकृत्तया 'कृन्मेजन्तः' १।१।३९ इत्यव्ययसंज्ञायामकजापत्तिः, नच सन्निपातपरिभाषयाऽव्ययसंज्ञा न भविष्यतीति वाच्यम् परिभाषया 'अव्ययापदाप्सुपः २।४।८२ इति लुकः सन्निपातपातविघातकस्य वारणसंभवेऽपि तदीयसंनिपाताविघातिकाया अव्ययसंज्ञाया वारणासंभवात् अव्यय संज्ञाफलेनाकचा तन्मध्यपतितेन च प्रत्ययाव्यवहितपूर्वत्वरूपसन्निपातविघाताभावात् इति चेच्छ्रूयताम् एतदुदाहरणपरकभाष्यप्रामाण्येन साक्षात् परम्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्तमिति परिभाषार्थस्वोकारेणादोषात् । अव्ययसंज्ञा अकज्द्वारापि तं सन्निपातमवश्यमेव विहन्ति यः कुम्भकार+भ्यः इत्यवस्थायाम् आधि+ए इत्यवस्थायाञ्चासीत् । यः एकारो विभक्त्यवहितादन्तत्वसन्निपातादुत्पन्नः यश्च ङेविभक्त्यवहितेदन्तसन्निपाताज्जातः स लुक् द्वारा परम्परासम्बन्धेन तं सन्निपातमुपजीव्यविरोधात् कथं नाशयिष्यति । इत्थमेत्वमत्र स्वनिमित्तस्य विभक्ते लुग्द्वारा परम्परया विघातकाव्ययसंज्ञाया निमित्तं न भवतीति भावः ।

---

के रूप में "कुम्भकारेभ्यः" इत्यादि के उल्लेख से कुछ और तात्पर्य भाष्य का निकालिए, वह यह है कि साक्षात् या परम्परा सम्बन्ध से अपने निमित्तस्वरूपसन्निपातविघातक का स्वयम् अनिमित्त हो जायगा । इस तरह जो यहाँ अव्ययसंज्ञा होगी और उसका फल अकच् होगा ऐसा कहते थे, वे परास्त हो गये । क्योंकि अव्ययसंज्ञा 'अकच्' के द्वारा उस स्वरूप का उस कलेबर का—उस शकलसूरत का—विनाश अवश्य करती है जो कुम्भकार+भ्यः, आधि+ए इस अवस्था में थी ।

कार्यकाल पक्ष में जितने विधिसूत्र होते हैं उतने ही संज्ञासूत्र होते हैं और संज्ञा शास्त्र का विधि शास्त्र के साथ एकवाक्यता होती है, इस तरह कार्यकाल पक्ष में लुक् शास्त्र के साथ एकवाक्यतापन्न अव्ययसंज्ञा तो हो ही जायगी ऐसा नहीं कहना चाहिए अकज् विधायक सूत्र के साथ एक वाक्यतापन्न अव्ययसंज्ञा अन्तरंग है,

**दिति वाच्यम् । अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात् । लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गोभयोरपि शब्दतः सुबाश्रयत्वात् ॥**

**न यासयोरिति निर्देशाच्चैषाऽनित्या तेन नातिप्रसङ्गः । स्पष्टा चेयं 'क्रन्मेजन्त' इति सूत्रे भाष्ये ॥**

---

**एतेन**=अव्ययत्वाभावेन । यदाव्ययत्वस्यैवाभावः तदा अकज् स्यादिति कथनमपास्तमेवेत्यर्थः ।

कार्यकालपक्षे यावन्ति विधिसूत्राणि भवन्ति; तावन्ति संज्ञासूत्राण्यपि भवन्ति तथाच तत्र पक्षे लुक्शास्त्रैकवाक्यतापन्नाया अव्ययसंज्ञाया बाधेऽप्यकच्छास्त्रैकवाक्यतापन्नाव्ययसंज्ञा तु स्यादेवेति न वाच्यम् अकच्छास्त्रैकवाक्यतापन्नाव्ययसंज्ञाया अन्तरङ्गत्वेन तद्दृष्टचा बहिरङ्गस्य एत्वस्य गुणस्य चासिद्धत्वात् लुगेकवाक्यतापन्नाव्ययसंज्ञा तु गुणादितो नान्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात् ।

**न यासयोः ७।३।४५ इति निर्देशाच्चैषाऽनित्या**=अनित्यत्वं कथमिति ५६२ तमे पृष्ठे प्रोक्तम् ।

इयं परिभाषाक्रन्मेजन्त १.१.३९ इतिसूत्रस्य भाष्येस्पष्टिता । तथाहि क्रन्मेजन्तश्चानिकारोकारप्रकृतिः'' (वा० १) क्रन्मेजतश्चानिकारोकारप्रकृतिरितिवक्तव्यम् । इह माभूत्—आधये—आधेः, चिकीर्षवे—चिकीर्षोरिति ॥ अनन्यप्रकृतिरिति वा (वा० २) अथवा अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम् ॥

---

उसके प्रति बहिरंग एत्व गुणादि की असिद्धता हो जायगी । लुक् के साथ एक वाक्यताप्राप्त अव्ययसंज्ञा तो अन्तरंग नहीं है, क्योंकि एत्व और गुणादि की तरह वह भी शब्दतः सुबाश्रयी है । इसलिए लुगेकवाक्यतापन्ना अव्ययसंज्ञा कर्तव्य में बहिरंग गुणादि की असिद्धता नहीं होती है ।

"न यासयोः" ७।३।४५ इस निर्देश को देखकर ऐसा लगता है कि यह (सन्निपात) परिभाषा अनित्य है । यत् शब्द के स्त्रीलिङ्ग प्रथमा एकवचन के रूप या और तत् शब्द के प्रथमा एकवचन के रूप "सा" का अनुकरण करके 'यासा' शब्द बना है और उसी का षष्ठी द्विवचन में बना हुआ रूप "यासयोः" है । इसका अर्थ है "यत् तत् शब्द के स्त्रीलिंग में 'क' से पूर्व विद्यमान 'अ' को इत्व नहीं हो । न "यासयोः" के स्थान में "न यत्तदोः" सूत्र करने से भी काम चल सकता था, ऐसा निर्देश सन्निपातपरिभाषा के अनित्यत्व ज्ञापन के लिए ही किया गया है । 'या' और 'सा' में "त्यदादीनामः" ७।१।१०२ से जो अत्व हुआ है वह विभक्त्यव्यवहित पूर्वत्व सम्बन्ध से हुआ है अर्थात् विभक्ति से पूर्व में यत् और तत् विद्यमान है । इसीलिए यहाँ अत्व हुआ है, वह अत्व इस परिभाषा के बल से से उक्त सम्बन्ध (सन्निपात) के विघातक टाप् के प्रति अनिमित्त हो जायगा, तो अदन्तत्वाभाव के कारण टाप् नहीं होगा, और टाप् नहीं होने पर यासा नहीं बनेगा,

किं पुनरत्र ज्यायः ? अनन्यप्रकृतिरिति वचनमेव ज्यायः। इदमपि सिद्धं भवति कुम्भकारेभ्यो नगरकारेभ्य इति ।। तर्त्तहि वक्तव्यम् ? "न वा सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति" (वा० ३) न वा वक्तव्यम् । किं कारणम्" ? सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति । एषा परिभाषा कर्तव्या ।। कः पुनरत्र विशेषः—एषा वा परिभाषा क्रियेत, अनन्यप्रकृतिरिति वोच्येत ? अवश्यमेषा परिभाषा कर्तव्या बह्न्येतस्याः परिभाषायाः प्रयोजनानि ।।

कानि पुनस्तानि ? "प्रयोजनं ह्रस्वत्वं तुग्विधेग्रामणिकुलम्" (वा० ४) ग्रामणिकुलम्, सेनानिकुलम्, इति । ह्रस्वत्वे (इको ह्रस्व इति ह्रस्वत्वे) कृते ह्रस्वस्य पिति कृति तुग् भवतीति तुक् प्राप्नोति । 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति । नचैतदस्ति प्रयोजनम् । बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक् । "असिद्धं बहिरङ्गमन्तरङ्गे" ।। "नलोपो वृत्रहभिः" (वा० ५) वृत्रहभिर्भ्रूणहभिरिति अत्र नलोपे कृते ह्रस्वस्य पिति कृति तुग्भवतीति तुक् प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघता स्येति न दोषो भवति ।। एतदपि नास्ति प्रयोजनम् । असिद्धो नलोपः । तस्यासिद्धात्वान्न भविष्यति ।

"उदुपधत्वमकित्त्वस्य निकुचिते" (वा० ६) उदुपधत्वमकित्त्वस्यानिमित्तम् क्व ? 'निकुचिते' । निकुचितमित्यत्र नलोपे कृते (कुञ्चेर्भावे क्तप्रत्ययः अनिदिताम् ६।४।२४ इति नलोपः) 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम् १।२।२० इति अकित्त्वं प्राप्नोति । "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति । एतदपि नास्ति प्रयोजनम्—अस्त्वत्राकित्त्वम् 'न धातुलोप आर्धधातुके' १।१।४ इतिप्रतिषेधो भविष्यति ।। "नाभावो यञि दीर्घत्वस्यानिमित्तम् ।। क्व ? 'अमुना' । नाभावे कृते 'अतोदीर्घो यञि' ७।३।१०१ 'सुपि च' ७।३।६०२ इति दीर्घत्वं प्राप्नोति "सन्निपात—तद्विघातस्य" इति न दोषो भवति ।। एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत् न मुटाऽऽदेशे इति । "आत्त्वं कित्त्वस्योपादास्त" (वा० ८) आत्त्वं कित्त्वस्यानिमित्तं स्यात् । क्व ? "उपादास्तास्य स्वरः शिक्षकस्येति" । आत्त्वे कृते "स्थाघ्वोरिच्च" १।२।१७ इतीत्वं प्राप्नोति । "सन्निपात—तद्विघातस्य" इति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । उक्तमेतत्—दीङः प्रतिषेधः स्थाघ्वोरित्त्वे" इति ।। "तिसृचतसृ ङीब्विधेः" (वा० ९) "तिसृचतसृत्वं ङीब्विधेरनिनित्तम्" । क्व ? तिस्रस्तिष्ठन्ति । तिसृचतसृभावे कृते ॠन्नेभ्यो ङीप् इति ङीप् प्राप्नोति । 'सन्निपा—तद्विघातस्य' इति न दोषो भवति ।। एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—न तिसृचतसृभावे कृते ङीब्भवतीति । यदयं न तिसृचतसृ" ६।४।४ नामि दीर्घत्वस्य प्रतिषेधं शास्ति ।। इमानि तर्हि प्रयोजनानि—शतानि—सहस्राणि । नुमि कृते "ष्णान्ता षट्" १।१।२४ इति षट्संज्ञा प्राप्नोति । "सन्निपातलक्षणो विधिरनिमित्तं तदविधातस्य" इति न दोषो भवति ।। शकटौ-पद्धतौ । अत्त्वे ('अच्च घेः' ८।३।११९ इति इकारस्यात्त्वे) कृते 'अतः' इति टाप् प्राप्नोति ।

अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि—वर्णाश्रयः प्रत्ययो वर्ण-

"सन्निपात—तद्विघातस्य" इति न दोषो भवति ॥ इयेष-उवोष। गुणे कृते "इजादेश्च गुरुमतोऽनृच्छः" ३।१।३६ इत्याम् प्राप्नोति । "सन्निपात—तद्विघातस्य" इति न दोषो भवति ॥ इति ॥ इत्थमियं परिभाषा कृन्मेजन्तः १।१।३९ इति सूत्रे स्पष्टं निर्दिष्टा।

अस्या अनित्यत्वे यानि फलानि तान्यपि तत्रैव भाष्ये प्रोक्तानि । तथाहि—"तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य" (वा० ११) तस्यैतस्य (सन्निपातलक्षणस्य) दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्" क्व ? "अत इञ् दाक्षिः प्लाक्षिः । न प्रत्ययः सन्निपातलक्षणः । अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् (अत्र कैयटः—सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः । तत्र वर्णविचालस्यानिमित्तं स्यादिति अङ्गसंज्ञाद्वारेणेत्यर्थः । अत्र केचित्—वर्णाश्रय इति व्याचक्षते । तेनात्रेयाद्युदाहरणम् ॥ अन्ये त्ववर्णाश्रय इत्यकारप्रश्लेषमाहुः) (अत्र नागेश उद्योते—परे तु वार्तिकस्यायमाशयः—निमित्तनिमित्तिनोः सम्बन्धवत् विशेषणविशेष्ययोः सम्बन्धोऽपि सन्निपातः । एवञ्च प्रातिपदिकस्यादन्तत्वसम्बन्धनिमित्तः प्रत्ययस्तद्विघातस्यानिमित्तमिति ॥ इममाशयमजानानः शङ्कते—न प्रत्यय इति (भाष्ये) ॥ एकदेश्युत्तरयति—अङ्गसंज्ञातर्हीति । युक्तं चैतत् । उपजीव्यविरोधस्यान्याय्यत्वं हि एतन्न्यायमूलम् । तस्य च प्रकृतेऽपि सत्त्वात् । अतिप्रसङ्गस्तु त्वयेव मयाऽप्यनित्यत्वेन सुशकवारणः । अतएव ग्रामणि कुलम् इत्यादौ नपुंसक ह्रस्वत्वे तुग् न उपजीव्यस्य प्रातिपदिकाजन्तत्वसम्बन्धस्य विघातात् ॥ बहिरङ्गपरिभाषयाऽसिद्धत्वं तु न, तस्य तत्त्वाभावात् । शैवो गाङ्गेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्या वर्णाश्रय इत्यंशस्य वार्तिके वैयर्थ्यापत्तेश्चेत्याहुः) ॥

"आत्वं पुग्विधेः क्रापयति" (वा० १२) आत्वं पुग् विधेरनिमित्तं स्यात् ॥ क्व ? क्रापयति ॥ "पुक् ह्रस्वत्वस्यादीदपत्" (वा० १३) पुक् ह्रस्वत्वस्यानिमित्तं स्यात् ॥ क्व ? अदीदपत् ॥ "त्यदाद्यकारष्टाब्विधेः" (वा० १४) त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात् ॥ क्व ? यासेति ॥ "इड्विधिराकारलोपस्य पपिवान्" (वा० १५) इड्विधिराकारलोपस्यानिमित्तं स्यात् क्व ? पपिवान् तस्थिवान् इति । "मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ॥ (वा० १६) मतुब्विभक्त्युदात्तत्वं पूर्वविघातस्यानिमित्तं स्यात् ॥ क्व ? अग्निमान्—वायुमान् परमवाचा—परमवाचे इति ॥ "नदीह्रस्वत्वं सम्बुद्धिलोपस्य" (वा० १७) । नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यात् । क्व ? नदि कुमारि, ब्राह्मणि किशोरि, ब्रह्मबन्धु इति । ह्रस्वत्वे कृते "एङ् ह्रस्वात् सम्बुद्धेः" ६।१।६९ इति सम्बुद्धिलोपो न प्राप्नोति ॥ मा भूदेवम् ङ्यन्तात् (हल्ङ्याब्भ्य इति) इत्येवं भविष्यति (तत्र कैयटः—हल्ङ्यादिसूत्रे दीर्घग्रहणमदृष्ट्वेदमुच्यते । तत्र कृतेऽपि ह्रस्वत्वे स्थानिवद्भावाद् भविष्यतीति भावः ॥ ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते, तस्याङ्याबन्तत्वात् ॥) न सिद्ध्यति ।

दीर्घादित्युच्यते, ह्रस्वान्ताच्च न प्राप्नोति ॥ इदमिह संप्रधार्यम् । ह्रस्वत्वं क्रियतां, सम्बुद्धिलोप इति । किमत्र कर्त्तव्यम् ? परत्वाद् ह्रस्वत्वम् ॥ नित्यः सम्बुद्धिलोपः । कृते ह्रस्वत्वे प्राप्नोति, अकृतेऽपि ॥ अनित्यः सम्बुद्धिलोपः । न हि कृते ह्रस्वत्वे प्राप्नोति ॥ किं कारणम् ? सन्निपातलक्षणोविधिरनिमित्तं तद्विघातस्येति ॥ एते दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया ॥ नहि दोषाः सन्तीति परिभाषा न कर्त्तव्या, लक्षणं वा न प्रणेयम् । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते ॥ दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् ॥ कुत एतत् ? न हि दोषाणां लक्षणम् (एकरूपतात्मकम्) अस्ति । (उपलक्षकरूपं नास्तीति उद्योते) तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्तव्या । प्रतिविधेयं च दोषेषु ॥ कृन्मेजन्तः १।१।३९ ॥

यद्यपि प्रयोजनानि नव, दोषा अष्टौ तथाप्यल्पान्तरत्वात् समत्वोक्तिः अथवा कष्टायेत्यस्यापि दोषेषु परिगणनाद्दोषाणामपि नवत्वेन समत्वमुपपादनीयम् । यद्यपि कष्टायेत्यस्य दोषेषु परिगणकं वार्तिकमिदानीं भाष्यपुस्तके नोपलभ्यते; तथापि "कष्टायेति यादेशो दीर्घत्वस्य" इत्याकारकग्रन्थो भाष्यपुस्तकेषु भ्रष्ट इति कल्पनीयम् अत एव "प्रतिविधेयं च दोषेषु" इत्यत्रत्यं प्रतिविधेयमिति प्रतीकमादाय कैयटः "कष्टायेति ज्ञापकाद्यशब्दे भविष्यति" इत्युक्तवान् । मन्ये, कैयटेन "कष्टायेत्यस्य दोषेषु परिगणकं वार्तिकं दृष्टमासीत् ॥ तादृशवार्तिकस्य कालान्तरे लेखकप्रमादात् भ्रष्टत्व (निर्देशाभाव) स्वीकाराच्च "दोषाः खल्वपि साकल्येन परिगणिताः" इत्यत्रोक्तेन साकल्यार्थेन न विरोधः इति ।

पूर्वोक्ते भाष्ये ये दोषा परिभाषाया उक्ता तएव नागेशेनात्र परिभाषाया अनित्यत्वस्य फलत्वेन प्रोक्ताः ।

१—वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं—यथा दाक्षिः । अत्र प्रातिपदिकस्यादन्तत्वसम्बन्ध (सन्निपात) निमित्तः प्रत्ययस्तद्विघातस्य अदन्तत्वं यो

---

यासा नहीं बनने पर "यासयोः" यह निर्देश असंगत हो जायगा । यह निर्देश सूचित करता है कि सन्निपात परिभाषा अनित्य है । इसीलिए अतिव्याप्ति दोष नहीं हुआ । जहाँ परिभाषा की प्रवृत्ति से अनिष्ट प्रयोग बनने की संभावना हो; वहाँ उसकी प्रवृत्ति होना अतिप्रसङ्ग कहलाता है । उसका निवारण परिभाषा को अनित्य मान कर किया गया । "कृन्मेजन्तः" सूत्र के भाष्य में यह परिभाषा स्पष्ट हुई है । इसके अनित्य होने के फल भी वहीं भाष्य में गिनाये गये हैं जैसे :—

(१) वर्णाश्रय प्रत्यय वर्ण के विचाल (लोप) का अनिमित्त हो जायगा 'दाक्षिः में अदन्त होने के कारण उत्पन्न 'इञ्' प्रत्यय 'यस्येति' लोप से अलोप करने में निमित्त नहीं बनेगा, यह दोष होगा ।

**विचालस्यानिमित्तम् दाक्षिः । आत्वं पुग्विधेः क्रापयति । पुग्ह्रस्वत्वस्य अदीदपत् ।**

---

विहन्ति तं यस्येति चेतिलोपविधि प्रत्यनिमित्तमिति परिभाषास्वीकृतौ दोषः प्रतिविधेयञ्च (दोषोद्धारोपायश्च) यासयोरिति निर्देशेन परिभाषाया अनित्यत्वज्ञापनरूपः इति नागेशः । कैयटस्तु प्रतिदोषं पृथक् पृथक् प्रतिविधेयमुक्तवान् । तद्यथा विधानसामर्थ्यादाङ्गो वर्णविचालो भविष्यतीति ।

२—**पुगविधेः क्रापयतीति** डुक्रीञ् द्रव्यविनिमये इत्यस्मात् णिचि वृद्धौ क्रै+इ इत्यवस्थायां 'क्रीङ्जीनां णौ' ६।१।४८ इत्यात्वे पुकि धातुत्वादिकार्ये क्रापयतीति सिद्ध्यति । अत्र क्रै+इतीदृश प्रकृतिप्रत्यययोरव्यवहितपूर्वापररूपः सन्निपातः आत्वनिमित्तम् । तस्य च सन्निपातस्य पुका विघातसत्वादात्वं पुग्विधेरनिमित्तं स्यादिति दोषदातुरभिप्रायः अङ्गस्य यः आकारः तस्य भक्तः पुक् इति पुकमवयवभक्तं मत्वा दोषोपन्यासः । यदि च 'आद्यन्तौ टकितौ' १।१।१६ इत्यनेन टित्कितौ समुदायभक्तत्वेन विधीयेते इत्युच्यते तदा पुकि जातेऽपि णिजव्यवहितपूर्वत्वविशिष्टाङ्गस्य सत्त्वान्नात्र दोष इति कैयटः । नागेशस्तु पुकोऽङ्गभक्तत्वेऽप्यत्र दोषदानं समर्थयन्नाह—परे तु पुकोऽङ्गभक्तत्वेऽपि न क्षतिः, यादृशयोः सन्निपातः पुग्निमित्तं तस्य विघातसत्वात् । **यदागमा** इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसन्निपातस्याभावात् । अत्र चेदमेव भाष्यं मानम् । ह्रस्वत्वं तुग्विधेरित्यादि च । सिद्धान्त्याशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्याहु । प्रतिविधेयञ्चात्र कैयटेनोक्तम्—आकारन्तभक्तः पुग्न व्यवधायकः (आकारान्तस्याङ्गस्यावयवीभूतेन पुका सन्निपातविघाताभावं दृष्ट्वा परिभाषात्र स्वयमेव न प्रवर्तते तस्याप्रवर्तनमितिसकारणकथनमेव प्रतिविधेयमिति भावः ।

३ **पुग्ह्रस्वत्वस्य । अदीदपत्** ।। इति ण्यव्यवहितपूर्वत्वविशिष्टाकारसन्नि-

---

(२) आत्व पुक् विधि का अनिमित्त हो जायगा जैसे 'क्रापयति' में क्री धातु से णिच् करने पर क्रीङ्जीनां णौ" ६।१।४८ से णिच् के अव्यवहित पूर्व में रहने के कारण सम्पन्न 'आत्व' पुक् का अनिमित्त हो जायगा; क्योंकि पुक् होने पर णिच् और धातु के बीच पकार आजायगा और णिच् के जिस अव्यवहित पूर्व में होने के कारण 'आत्व' हुआ था, पुक् उस अव्यवहितपूर्वत्व का विनाश कैसे करेगा ?

(३) पुक् ह्रस्वत्व का अनिमित्त हो जायगा । जैसे "अदिद्रपत्" में द्रा धातु से 'णिच्' पुक् करके धातुसंज्ञा, लुङ् लकार अट् 'च्लि, च्लि, को चङ्, द्वित्व, अभ्याससंज्ञा हलादिशेष, सन्वद्भाव और सन्यतः से इत्व करने पर अदिद्राप्+इ+अत् बना, "णौ चङ्युपधाया ह्रस्वः" ७।४।१ से ह्रस्वता हुई और णिलोप होने पर 'अदिद्रपत्' बना । यहाँ आकार के कारण आया हुआ पुक्, उपधासंज्ञा का निमित्त बनकर उसी आकार को ह्रस्व करने मे निमित्त नहीं होगा ।

**त्यदाद्यकारष्टाब्विधेः यासेति । इड्विधिराकारलोपस्य पपिवान् । ह्रस्वनुड्भ्यां मतुप्, अन्तोदात्तादुत्तरपदात् इति मतुविभत्युदात्तत्वं पूर्वनिघातस्य अग्निमान्, परमवाचा ।**

पातेन जायमानः पुक् तस्य सन्निपातस्य विघातकं ह्रस्वं प्रत्यनिमित्तं स्यात् । नच ह्रस्वस्य चङ्परणिनिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्कथमत्र परिभाषाप्राप्तिरिति वाच्यम् एतद्भाष्यप्रामाण्येनानयाऽसिद्धस्यापि निवृत्तिस्वीकारात् । किंच तथा शास्त्रीयकार्येऽसिद्धत्वेऽपि । लौकिके सन्निपातेऽसिद्धत्वाभावात् (उद्योते १।१।३९ वा० सं० १३) अनित्यत्वाच्चैतत्सिद्धयतीति भावः ।

**कैयटस्तु** प्रतिविधेयं वदन्नित्थं लिलेख—**अदीदपदिति** लिङ्गाद् ह्रस्वः । यदयं "मारणतोषण—(घटादिः) इति जानातेर्मित्त्वमुपधाह्रस्वत्वार्थम् शास्तिज्ञपयति अजिज्ञपदिति तज्ज्ञापयति पुकि कृते उपधाह्रस्वत्वं भवतीति । नहि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति इति ।

४—**त्यदाद्याकारष्टाब्विधेः—या सेति** ॥ विभक्त्यव्यवहित पूर्वत्वविशिष्टयत्तच्छब्दरूपत्यदादिसन्निपातेन जायमान आकारादेशस्तत्सन्निपातविघातकं टापं प्रत्यनिमित्तं स्यात् । न यासयोरित्यत्र या सा इति निर्देशेन परिभाषाया अनित्यत्वज्ञापनात् समाधानम् । कैयटस्तु "न यासयोः" इति लिङ्गादाप् भविष्यतीत्याह ।

५—**इड्विधिराकारलोपस्य । पपिवान्** इति पा धातो लिटि तस्य "लिटः

---

(४) त्यदादीनामः ७।२।१०२ से होने वाला अत्व जिस विभक्त्यव्यवहित-पूर्वत्व सन्निपात के कारण हुआ था, वह टाप् के द्वारा उसका विघातक नहीं बनेगा जैसे या और सा में और 'न यासयोः' में ।

(५) इड् विधि आकार लोप का निमित्त नहीं बनेगी । जैसे "पपिवान्" में पा धातु से लिट् लकार के स्थान में क्वसु प्रत्यय करने पर द्वित्वादि होने के बाद "वस्वेकाजाद्घसाम्" ७।२।६७ सूत्र से जो इट् आत्व को निमित्त मानकर हुआ है, वही इट् "आतो लोप इटि च" ६।४।६४ से आलोप में निमित्त बने; यह उचित नहीं है ।

(६) मतुप् विभक्त्युदात्तत्व पूर्वनिघात का अनिमित्त हो जायगा जैसे 'अग्निमान्' 'परमवाचा' में अन्तोदात्तत्व को निमित्त बनाकर होने वाला मतुप् विभक्ति का उदात्तत्व "अनुदात्तं पदमेकवर्जम्" ६।१।१५८ इस सूत्र की प्रवृत्ति के द्वारा अन्तोदात्तत्व का विघातक नहीं होगा । तात्पर्य यह है कि 'अग्निमान्' परमवाचा में "ह्रस्वनुड्भ्यां मतुप्" ६।१।१७६ सूत्र से ह्रस्वान्त अन्तोदात्त अग्नि शब्द से पर मतुप् को उदात्त हुआ, मतुप् के उदात्त होने पर 'अनुदात्तं पदमेकवर्जम्" ६।१।१५८ इस नियम के अनुसार मतुप् के अतिरिक्त सभी उदात्त, अनुदात्त में बदल गये । यह नहीं होना चाहिए क्योंकि जिस "अग्नि' में इकार के उदात्त ने मतुप् को उदात्त बनाया, उसी उदात्त का विघात मतुप् करे यह उचित नहीं हैं ।

**नदीह्रस्वत्वं संबुद्धिलोपस्य, नदि कुमारीत्यादि । यादेशो दीर्घत्वस्य कष्टाय । इतो-**

---

कानज्वा क्वसुश्च ३।२।१०६/१०७ इति क्वसुः 'लिटि धातोरनभ्यासस्य' ६।१।८ इति द्वित्वेऽभ्यासत्वे ह्रस्वे पपा वस् इति स्थिते 'वस्वेकाजाद्घसाम्' ७।२।६७ इतीटि 'आतो लोप इटि च' ६।४।६४ इत्याकारलोपे पपिवस् इत्यस्य प्रातिपदिकसंज्ञायां सौ "उगिदचाम् ७।१।७० इति नुमि "सान्तमहतः" ६।४।१० इति दीर्घे हल्ङ्यादि लोपे सकारस्य संयोगान्तलोपे 'पपिवान्' इति सिद्ध्यति । अत्र 'वस्वेकाजाद्घसामिति सूत्रेण आकारन्तधातुं निमित्तीकृत्य इट् जायते स एवाकारं कथं लोपयिष्यतीति परिभाषादोषः । समाधानन्तु परिभाषाया अनित्यत्वाद्दोषाभाव इति ।

कैयटस्तु प्रतिविधेयमित्थमाह—पपिवानिति । वस्वेकाजादित्ययं नियमः, इटो नत्वपूर्वोऽयं विधिरिति आकारस्य लोपः । न "वस्वेकाजादि"त्यनेनात्र इड् विधीयते । क्रादिनियमादार्धधातुकस्येडित्येवेट् सिद्ध इति नेडाकारान्तसन्निपात-निमित्तक इति परिभाषाया अप्रवृत्तिसम्पादनायेदृशप्रयासलक्षणं प्रतिविधेयमुक्तवान् ।

६-७—**ह्रस्वनुड्भ्यां मतुप्** ६।१।१७६ **इति मतुब्** विभक्त्युदात्तत्वं पूर्वनिघात-स्य । **अग्निमान् परमवाचा** इति ।।

ह्रस्वनुड्भ्यामित्यत्रान्तोदात्तत्वानुवृत्तेः अन्तोदात्तत्वं निमित्तं विधाय अग्नि-मानित्यादौ मतुप उदात्तत्वं विधीयते एवमन्तोदात्तादुत्तरपदादित्यनेनान्तोदात्तं निमित्त-मधिकृत्य परमवाचेत्यत्र विभक्तेरुदात्तत्वं क्रियते । तत्र प्रथमस्य "ह्रस्वान्तादन्तो-दात्तान्नुटश्च परो मतुबुदात्त" इत्यर्थः । द्वितीयस्य च नित्याधिकारविहितसमासा-दन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिविभक्तिरन्तोदात्ता वा स्यात् इत्यर्थः । इत्थं यमन्तोदात्तं निमित्तीकृत्योदात्तत्वं विधीयते मतुपः विभक्तेश्च स एव मतुब्विभक्त्युदात्तः अनुदात्तं पदमेकवर्जम् ६।१।१५८ इति सूत्रप्रवर्तनमुखेन तस्यान्तो-दात्तस्य विघातकं न स्यात् इति परिभाषादोषः । अनित्यत्वमेव च समाधानम् । कैयटस्तु=अग्निमानित्यादौ अनुदात्तं पदमेकवर्जमिति परिभाषा स्वरविषया सन्निपात-परिभाषां बाधते इत्याह ।

८—**नदीह्रस्वत्वं सम्बुद्धिलोपस्य—नदि कुमारीत्यादि**

सम्बुद्ध्यव्यवहितपूर्वत्वविशिष्टदीर्घेकारान्तरूपनद्यन्तसन्निपातेन जायमानो नदीह्रस्वः (अम्बार्थेति ह्रस्वः) एङ्ह्रस्वादिति विहितं सम्बुद्धिलोपं प्रत्यनिमित्तं स्यात् । इति परिभाषादोषः । अनित्यत्वाद् दोषाभावः ।

अत्र कैयटः प्रतिविधेयमाह="एङ् ह्रस्वात्" ६।१।६९ इत्यत्रापि गुणात् सम्बुद्धेरिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात् सन्निपातपरिभाषाभावः दर्वीत्यत्र छन्दसि गुणाभाव पक्षे छान्दसो लुग् भविष्यतीति ।

ऽन्यत्र प्रवृत्तिरेव, दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरित्यन्यत्र विस्तरः ॥८६॥

---

९ यादेशो दीर्घत्वस्य कष्टायेति ।

अदन्ताङ्गङेसन्निपातेन जातस्य 'ङेर्यः' ७।१।१३ इति यादेशस्य सुपि च ७।३।१०१ दीर्घ प्रत्यनिमित्तत्वमिति दोषः । परिहारस्तु 'कष्टाय क्रमणे' ३।१।१४ इत्यत्र कष्टायेति निर्देशेन तस्या अनित्यरूपः ।

कैयटस्तु कष्टायेति ज्ञापकाद्यशब्दे दीर्घो भविष्यति । प्रतिविधेयेषु **कष्टायेति ज्ञापकाद्यशब्दे** दीर्घो भविष्यतीत्यस्य द्वितीयं स्थानं दृश्यते कैयटग्रन्थे । अतः दोषपरिगणनवार्तिकेषु यादेशो दीर्घत्वस्य कष्टायेति लेखकप्रमादाद्भ्रष्टस्य कैयटदृष्टस्य वार्तिकस्यापि द्वितीयमेव स्थानं तथापि नागेशेन तस्यान्ते उल्लेखः कृतः । स्वयं साक्षाद्दृष्टत्वात् ॥

**इतोऽन्यत्रेति** इतः=पूर्वोक्तेभ्यो नवभ्यः स्थलेभ्योऽन्यत्र प्रवृत्तिरेव दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः सकलानां दोषाणां परिगणनस्योक्तत्वात् ।

ननु "इतोऽन्यत्रेत्यत्र 'अतो रोरप्लुतादप्लुते' ६।१।११३ इति उत्वमतः परस्य रो रेफस्य क्रियते । इत्यमत्वं निमित्तं कृत्वा जायमानमुत्वं गुणद्वारेण तस्यातो विघातकं न स्यादिति रूपासिद्धिरिति चेत्सत्यम् 'एचोऽयवायावः' ६।१।७८ इत्यादि निर्देशेन सन्धिकार्येऽप्यनित्यत्वकल्पनात् । न चैवं रामाणा-

---

(७) नदी संज्ञा के कारण होने वाले "अम्बार्थनद्योर्ह्रस्वः" ७।३।१०७ से ह्रस्वत्व को सम्बुद्धि लोप का निमित्त नहीं होना चाहिए सम्बुद्धि को पर निमित्त मानकर हुआ ह्रस्व स्वयं, उस सम्बुद्धि का "एङ् ह्रस्वात् सम्बुद्धेः" ६।१।६९ से लोप कराने में अनिमित्त हो जायगा; फिर 'नदि', 'कुमारि' आदि में सम्बुद्धि लोप नहीं होगा ।

(८) "ङेर्यः" ७।१।१३ से किया गया यादेश 'सुपि च' ७।३।१०२ से दीर्घ विधान में निमित्त नहीं होगा । 'ङे' के पूर्व में स्थित जिस अदन्तत्व के रहने के कारण 'यादेश' हुआ था वही यादेश अपने उपजीव्य अदन्तत्व के विघात में (दीर्घ करने में) निमित्त नहीं बनेगा । इन प्रयोगों में यह परिभाषा अनित्य होने के कारण नहीं लगती है, इनसे 'अतिरिक्त सर्वत्र इनकी प्रवृत्ति होती ही है । क्योंकि भाष्यकार ने कहा है कि दोष पूरे के पूरे गिना दिये गये हैं । भाष्य में जो दोष गिनाये हैं उनमें—"यादेशो दीर्घत्वस्य" नहीं गिनाया गया है । परन्तु कैयट के ग्रन्थ से ऐसा लगता है कि उसने भाष्य में 'यादेशो दीर्घत्वस्य' देखा था । कालान्तर में वह पाठ भ्रष्ट हो गया होगा ।

मित्यत्र दीर्घो न स्यात् ह्रस्वान्ताङ्गाव्यवहितपरत्वविशिष्टाम्सन्निपातेन जातस्य नुटः नाम्परत्वमूलकं 'नामि' ६।४।३ इति दीर्घं प्रत्यनिमित्तत्वात्, एवं 'सर्वेषाम्' इत्यादौ अवर्णान्तपरत्वेन जायमानःसुट् झलादित्वसम्पादनद्वारा 'बहुवचने झल्येत्' ७।३।१०३ इत्येत्वं प्रत्यनिमित्तं स्यात् एत्वे कृतेऽवर्णान्तत्वस्य विघातः स्पष्ट इति वाच्यम् 'यथासख्य मनुदेशः समानाम्' १।३।१० इत्यत्र 'समानाम्' इत्यत्र दीर्घनिर्देशेन नामीत्यस्यारम्भसामर्थ्यात् परिभाषाया बाधात् ''अदः सर्वेषाम्' ७।३।१०० इत्यत्र सर्वेषामिति निर्देशेन सुटचेत्त्वे तस्या अनित्यत्वकल्पनात् ।

ननु इतोऽन्यत्रापि अप्रवृत्तिदर्शनात् ''इतोऽन्यत्र प्रवृत्तिरेवेति नागेशकथनम-युक्तमिति चेत् सत्यम्, अयुक्तमेव । बाभ्रवीयाः मण्डवीया इत्यत्रापरिगणितस्थले-ऽपि सन्निपातपरिभाषाया अप्रवृत्तेरिष्टत्वात् । अतएव 'अचः परस्मिन्'—१।१।५७ बाभ्रवीया इति भाष्यप्रतीकमुपादाय 'सन्निपातपरिभाषाया अनित्यत्वाद् यशब्द-सन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यते'' इति कैयटेनोक्तम् ॥ ''दोषाः खल्वपि•••इति भाष्यन्तु दोषाल्पत्वाभिप्रायम् ।

नागेशेन यद्यप्यत्र ज्ञापकत्वं न दर्शितम्—तथापि ज्ञापकत्वजिज्ञासायां 'न तिसृचतसृ' ६।४।४ इति सूत्रमस्या ज्ञापक बोध्यम् । परिभाषाया अभावे

---

यद्यपि 'रामाणाम्' और सर्वेषाम् में भी इस परिभाषा की प्रवृत्ति होती है और दोष होता है उसका निवारण 'समानाम्' अदः सर्वेषाम् इस निर्देश से किया जाता है । अतः ''इतोऽन्यत्र प्रवृत्तिरेव'' कथन गलत लगता है; तथापि इस भाष्य का तात्पय सिर्फ इतना ही मानना चाहिए कि परिभाषा मानने में लाभ अधिक है और दोष कम । इसीलिए ''बाभ्रवीयाः'' इत्यादि अपरिगणित स्थलों में भी 'सन्निपात' परिभाषा की अप्रवृत्ति मानी गयी । इस पर विस्तार से विचार अन्यत्र (उद्योत में) किया गया है ।

कोई परिभाषा का अर्थ इस तरह मानते हैं कि सन्निपात लक्षण विधि (सन्निपात निमित्तक विधि) तद्विघातस्य अर्थात् तद्विघातकशास्त्र के प्रति अनिमित्त हो जाता है । अर्थात् असिद्ध होता है । 'न तिसृचतसृ' ६।४।४ यह सूत्र इस परिभाषा का ज्ञापक हो सकता है । परिभाषा के अभाव में 'तिसृ+नाम्' इस स्थिति में 'ऋन्नेभ्यो ङीप्' ४।१।५ से ङीप् होने पर ''न तिसृचतसृ'' यह सूत्र व्यर्थ हो जायगा । वही व्यर्थ होकर इस परिभाषा का ज्ञापन करता है । परिभाषा ज्ञापित होने पर तो 'न तिसृचतसृ'' यह निषेध सार्थक हो गया । क्योंकि तिस्रादेश विभक्ति के जिस अव्यवहित पूर्वत्व सन्निपात से हुआ है, उसके विघातक ङीप् के प्रति वह अनिमित्त हो जायगा । इसलिए ङीप् नहीं होगा, फिर प्राप्त 'नामि' ६।४।३ से दीर्घा-देश के वारण लिए ''न तिसृचतसृ'' यह निषेध सार्थक हो गया । ''न षट् स्वस्रादि-

**ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ द्विगोर्लुगित्यणो लुकि लुक्तद्धित इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिरत आह**

तिसृ+नाम् इति स्थिते 'ऋन्नेभ्यो ङीप्' ४।१।५ इति ङीपि 'न तिसृचतसृ' इति दीर्घनिषेधकं सूत्रं व्यर्थं स्यात्। व्यर्थं सत् तत्सूत्रं सन्निपातपरिभाषां ज्ञापयति। परिभाषाज्ञापनानन्तरं विभक्त्यव्यवहितपूर्वत्वसन्निपातेन जातस्य तिस्रादेशस्य तद्विघातं ङीपं प्रत्यनिमित्तत्वान्न ङीबिति दीर्घवारणाय सूत्रं स्वांशे चरितार्थम् 'न षट्स्वस्रादिभ्यः' ४।१।१० इति ङीब्निषेधेन प्राप्तस्य दीर्घस्य वारणार्थं 'न तिसृ' इति सूत्रं चरितार्थमिति न तत् परिभाषाज्ञापकमिति तु न वाच्यम् स्वस्रादिषु तिसृचतसृशब्दपाठस्यानार्षत्वात्। अतएव 'कृन्मेजन्त' १।१।३९ इति सूत्रे भाष्ये उक्तम् आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृशब्दान् ङीप् भवति यदयं न तिसृचतस्रिति नामीति प्रतिषेधं शास्ति इति। भाष्यपङ्क्तिरियं ५६७ तमे पृष्ठे उद्धृता। अन्यत्र=उद्योतादौ विस्तरः।

सिद्धान्तकौमुद्याः नामि ६।४।३ इति, जराया जरसन्यतरस्याम् ७।२।१०१ एच इग् ह्रस्वादेशे १।१।४८, अभ्यासस्यासवर्णे ६।४।७८ इत्यादिसूत्रेषु परिभाषेयं निर्दिष्टा। भाष्ये च 'आमः' २।४।८१, "इजादेश्च—३।१।३६ प्रज्ञाश्रद्धार्चाभ्यो णः ५।२।१०१, नञो जरमरमित्रमृताः ६।३।११६ अतोल्रान्तस्य ७।२।२ इति सूत्रेषु निर्दिष्टेयं परिभाषा। कृन्मेजन्त' इति तु अस्या मूलं स्थानमिति पूर्वमेवोक्तमिति।

इति शिवम् ॥८६॥

—:o:—

**सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ८७**

भ्यः'' ४।१।१० से तो तिसृ नाम् इस स्थिति में ङीप् का निषेध नहीं होगा; क्योंकि स्वस्रादि गण में "तिसृचतसृ" शब्द का पाठ अनार्ष है ऋषि सम्मत नहीं है। इसी लिए "कृन्मेजन्तः" १।१३९ सूत्र के भाष्य में भाष्यकार ने कहा कि 'तिसृचतसृ' शब्द से ङीप् इसलिए नहीं होता है कि "न तिसृ चतसृ" यह "नामि" से प्राप्त दीर्घ का निषेध करता है। यदि स्वस्रादि गण में "तिसृ चतसृ" शब्द का पाठ भाष्यकार सम्मत होता; तो भाष्यकार सीधे कहते कि 'न षट् स्वस्रादिभ्यः' से निषेध होने के कारण ङीप् नहीं हुआ, ज्ञापक का सहारा व्यर्थ में क्यों लेते ?

'कृन्मेजन्तः' १।१।३९ सूत्र के भाष्य के अतिरिक्त 'आमः' २।४।८१, 'इजादेश्च'—३।१।३६, प्रज्ञा श्रद्धा—५।२।१०१ अतो ल्रान्तस्य ७।२।२ इन सूत्रों में इस परिभाषा का उल्लेख हुआ है,

इति शिवम् ॥८६॥

—:o:—

**सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः—८७**

## सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥८७॥

**अत्र च 'बिल्वकादिभ्यश्छस्य लुक्' इति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि छमा-**

---

'पञ्चेन्द्राण्यो देवता अस्य' इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' २।१।५१ इति समासे समासत्वात् प्रातिपदिकसञ्ज्ञायां विभक्त्योर्लुकि गुणे पञ्चेन्द्राणी इत्यस्मात् "सास्य देवता" ४।२।२४ इति जातस्य 'अण्प्रत्ययस्य द्विगोर्लुगनपत्ये' ४।१।८८ इति लुकि "लुक्तद्धितलुकि" १।२।४९ इतिस्त्रीप्रत्ययस्य ङीषो लुक्यपि "इन्द्रवरुण—" इति विहितस्यानुकः श्रवणापत्तिरिति चेन्न "सन्नियोगशिष्टान्यतरापाये उभयोरप्यपायः" ८७ इति परिभाषास्वीकारेण सन्नियोगशिष्टयोः (सहविहितयोः) ङीषः आनुकश्चोभयोरन्यतरस्य (एकस्य) ङीषः "लुक् तद्धितलुकि" १।२।४९ इति लुकापाये उभयोरप्यपायात् ।

अन्यतरशब्दः स्वभावाद्द्विविषये निर्धारणे वर्तते । तत्स्वारस्याच्च सन्नियोग योगशिष्ट्योरित्युचितम् । उभयोरिति द्विवचनमपि तदैव संघटते । इत्थं सन्नियोगशिष्टयोरन्यतरस्य एकस्यापाये जाते उभयोरप्यपायः विश्लेषो भवतीति परिभाषार्थः : द्विवचनस्थाने आर्षवचनत्वाद्बहुवचनं व्यत्ययेन साध्यम् । अथवा सन्नियोगशिष्टौ च सन्नियोगशिष्टौ चेति सन्नियोगशिष्टाः "सरूपाणाम्"—इत्येकशेषः । एवमन्यतरश्चान्यतरश्चान्तरश्चेत्यन्यतरे । तेषामपायोऽन्यतरापायः । प्रत्येकं सन्नियोगशिष्टद्वयस्या-

---

पञ्च इन्द्राण्यो देवता अस्य'—पांच इन्द्राणियाँ जिस मंत्र की देवता है—उस मन्त्र को 'पञ्चेन्द्रः' कहते हैं । यहाँ पञ्चन् जस् और इन्द्राणी जस् से तद्धितार्थ में द्विगु हुआ है, फिर "सास्य देवता" ४।२।२४ सूत्र से अण् हुआ, उस अण् का "द्विगोर्लुगनपत्ये" ४।१।८८ से लुक् हो गया, "लुक् तद्धितलुकि १।२।४९ से स्त्रीप्रत्यय (ङीप्) का लुक् होने पर भी आनुक् का श्रवण होने लगेगा इस दोष के निवारण के लिए परिभाषा मानते हैं :—

**"सन्नियोगशिष्टानामन्तरापाये उभयोरप्यपाय."** जहाँ दो या दो से अधिकों का एक साथ अभिधान है, विधान है, उनमें एक के अपाय (नाश या विश्लेष) होने से अन्य सब का भी अपाय हो जाता है । इस शास्त्र में दो से अधिक विधेयों का कहीं भी एक साथ विधान नहीं है, इसलिए परिभाषा का यही अर्थ करना चाहिए कि दो सन्नियोग शिष्टों में से एक का विश्लेषण होने पर या एक का किसी कारण वश गायब होने पर दोनों गायब हो जाते हैं । परिभाषा में "सन्नियोग शिष्टानाम्" में बहुवचन कहा गया है और आगे 'अन्तरापाये' में अन्यतरशब्द का प्रयोग किया गया है, जिसका कि अर्थ है दो में से एक । इसका आपस में ताल मेल नहीं बैठता । बहुत संनियोगशिष्टों में एक का अपाय यदि विवक्षित होता तो अन्यतम शब्द कहना चाहिए था बहुतों में एक का वाचक शब्द 'अन्यतम' ही है । "उभयोर-

न्यतरशब्देनान्वयः। तथाच न काचिदनुपपत्तिः। न च यावतामेकशेषः क्रियेत; ततोऽवशिष्टानां ग्रहणानापत्तिरिति वाच्यम् परिभाषासंचारविषयत्वेष्टा यावत्यः सन्नियोगशिष्टद्वय्यः तासां सर्वासामेकशेषस्वीकारेण सर्वासां सन्नियोगशिष्टद्वयीनां स्वीकारात् ॥

छप्रत्ययभिन्नप्रत्ययस्य बिल्वकशब्दोच्चारणपूर्वकविधानरूपप्रतिपदोक्तत्वाभावात् छग्रहणाभावेऽपि प्रतिपदोक्तत्वाल्लक्षणप्रतिपदोक्तपरिभाषया (प० सं० ११४) बिल्वकशब्दोच्चारणपुरस्सरविहितस्य प्रत्ययस्य लुगिति तात्पर्यस्य सिद्धया छस्यैव लुक्सिद्धौ बिल्वकादिभ्यः छस्य लुक् ६।४।१५३ इति सूत्रस्थं छग्रहणमस्याः परिभाषाया ज्ञापकम् । ज्ञापितायान्तु छग्रहणाभावे प्रत्ययस्य लुका सह कुकोऽपि निवृत्तिः स्यादुभयोः सन्नियोगशिष्टत्वात् । अतः छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्यर्थं छग्रहणं स्वांशे चरितार्थम् । बिल्वकादौ नडाद्यन्तर्गणस्था बिल्वप्लक्षवेणुवेतसादय एव कृतकुगागमा निर्दिष्टाः । "नडादीनां कुक् च" ४।२।९१ इत्यत्र धिन्विकृण्व्योर च ३।१।८० इतिवत् शब्दक्रमेण प्रथमं कुग्विधीयते ततश्छप्रत्ययः। तेन बिल्वा यस्यां सन्ति सा बिल्वकी इत्यत्र "नडादीनां कुक् च" ४।२।९१ इति कुकि छप्रत्यये च तस्य ईयादेशे बिल्वकीया इति । तस्यां भवा इत्यर्थे अण्प्रत्यये बिल्वकादिभ्यश्छस्य लुक् ६।४।१५३ इति छस्य लुकि आद्यचो वृद्धौ बैल्वका इति सिद्धयति । सूत्रे छग्रहणं क्रियते । अतएव छमात्रस्य लुग्भवति कुको निवृत्तिर्न भवतीति परिभाषाज्ञापनानन्तरं छग्रहणं स्वांशे चरितार्थम् ।

---

प्यपाय" में "उभयोः" का प्रयोग है । इससे सूचित होता है कि "सन्नियोगशिष्टानाम्" में बहुवचन की विवक्षा नहीं है, किन्तु द्विवचन की ही विवक्षा है । पूर्वोक्त अटपटापन को दूर करने तथा दो सन्नियोग शिष्टों में से एक के अपाय होने पर दोनों का अपाय हो जाता है, इस प्रकार का अर्थ करने के लिए परिभाषा की व्याख्याविशेष रूप से की जाती है । सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च इति सन्नियोगशिष्टाः तेषाम् सन्नियोगशिष्टानाम् । अन्यतरश्च अन्यतरश्च अन्यतरश्चेति अन्यतरे तेषामपायः अन्यतरापायः । इस तरह तीन द्विवचनान्त सन्नियोग शिष्ट शब्दों का एक शेष करने पर प्रत्येक द्विवचनान्त सन्नियोग शिष्ट का प्रत्येक अन्यतर पदार्थ के साथ अन्वय करने पर यह अर्थ निकल आयेगा कि दो सन्नियोग शिष्टों में एक के अपाय होने से दोनों का अपाय हो । इस तरह की व्याख्या के द्वारा परिभाषा के पदार्थों में तालमेल बिठाया गया ।

वस्तुतः "कंसवधमाख्यत्—कंसमजीघतत्" जैसे प्रयोगों में "आख्यानात् कृतः'—इस वार्तिक से एक साथ कृत् का लुक्—'हन्' प्रकृति की प्रत्यापत्ति और प्रकृतिवत् द्वितीयाकारक का विधान करते हैं। इसलिए दो से अधिक कार्यों का एक साथ विधान मिलता है । वहाँ भी इस परिभाषा से काम चलने की स्थिति

**ग्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम् । कृतकुगागमा नडाद्यन्तर्गण-बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन ॥**

**न चैवमपि छग्रहणं व्यर्थं' कृतकुगागमानुवादसामर्थ्यादिव तदनिवृत्तिसिद्धेः । अन्यथा बिल्वादिभ्य इत्येव वदेत्, लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम् । ततोपि प्रतिपदोक्तत्वेन 'बिल्वादिभ्योऽणि'ति विकारार्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात् ॥**

---

न च ज्ञापितेऽपि पूर्वोक्तन्याये छग्रहणं व्यर्थमेव, बिल्वकादिभ्यो लुगिति न्यासकरणेन छस्यैव प्रतिपदोक्तत्वाल्लुक्सिद्धेः; कुको निवृत्तिस्तु न बिल्वादिभ्य इत्येव वक्तव्ये कृतकुगागमानुवादसामर्थ्यात कुकोऽनिवृत्तेरिति वाच्यम् ततोऽपि प्रति-पदोक्तत्वेन प्रथमोपस्थितस्य बिल्वादिभ्योऽण् ४।३।१३६ इति विहितस्य विकारार्थकस्य प्रत्ययस्य (अणः) लुगापत्तिवारणाय कुगनुवादस्य चारितार्थ्यादुक्तरीत्या कुको निवृत्ते-रसिद्धेः ।

---

पैदा हो और उस वार्तिक का निर्माण इस परिभाषा के अनित्य होने में प्रमाण हो इसलिए बहुवचन का प्रयोग ठीक ही है । इसलिए 'उभयोः' का अर्थ 'मुख्यतदितरयोः' करना चाहिए । इस प्रकार अर्थ होगा कि बहुत से सन्नियोग शिष्टों में "अन्यतरस्य" उभयोरेकस्य = मुख्यस्य अपाये द्वयोरप्यपायः" अर्थात् मुख्य के अपाय होने पर मुख्य और साथ साथ विहित कार्य समूहों का अपाय हो जाता है । "बिल्वकादिभ्यश्छस्य लुक्" ६।४।१५३ इस सूत्र का 'छ' ग्रहण इस परिभाषा का ज्ञापक है वह 'छ' ग्रहण इसलिए करते हैं कि 'छ' मात्र का लुक् हो 'कुक्' की निवृत्ति इस 'छ' के साथ नहीं हो । "बिल्वकादिभ्यो लुक्" ऐसा करने पर भी प्रतिपदोक्तत्वात् अर्थात बिल्वक शब्द का उच्चारण करके विहित प्रत्यय का ही लुक् होता, और ऐसा प्रत्यय 'छ' प्रत्यय ही था, पुनः छग्रहण जो किया गया उससे यह सिद्ध होता है कि 'छ' का ही लुक् हो, इस तरह 'छ' ग्रहण करने का उद्देश्य यह सिद्ध होता है कि 'कुक्' की निवृत्ति नहीं हो । इससे परिभाषा की सत्ता सिद्ध होती है ।

"बिल्वकादिभ्यश्छः" में बिल्वकादि शब्द से जिनका निर्देश हैं, वे नडाद्यन्तर्गण में पठित बिल्वादि ही है उनमें कुगागम और कर दिया गया है। परिभाषा मानने पर भी छग्रहण व्यर्थ ही रहा, क्योंकि कुगागम करके बिल्वकादि शब्द बना कर सूत्र में निर्देश करने के सामर्थ्य से ही कुक् का लुक् रुक जायगा, यदि कुक् का लुक् हो ही जाय तो बिल्वादिभ्यः यही कहते । "बिल्वादिभ्यः" इतना ही करने पर बिल्वादि शब्द से विहित अन्य प्रत्ययों का भी लुक् हो जायगा, ऐसा सन्देह नहीं करना चाहिए, "बिल्वादिभ्यः" इतना कहने पर भी "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" (प० ११४) इस परिभाषा

समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्याय-सिद्धापीयम् ॥

यत्तु णाविष्ठवदित्यनेन पुंवत्त्वविधानमेतदनित्यज्ञापनार्थम् । अन्यथैतयती-त्यादौ टिलोपेनैव ङीपि निवृत्ते सन्नियोगशिष्टपरिभाषया नस्यापि निवृत्त्यैतयतीत्या-दिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति 'टेरि'ति सूत्रे कैयटः—तन्न । इडबिडमाचष्टे एडबिडयतीत्यौ पुंवत्त्वस्यावश्यककत्वात् ॥

---

समुच्चयार्थकचशब्दयोगे तु विधेययोः समुच्चयः अर्थात् साहित्यं (सहभावः) प्रतीयते । तच्च विधेययोः समानकालिकत्वसमानदेशत्वरूपम् । तादृशयोः विधे-ययोर्विधायकेन सूत्रेण समुच्चितयोरेव तयोः साधुत्वं बोध्यते । तयोः समान-कालिकत्वसमानदेशत्वस्यैव साधुत्वबोधनात् एकस्यापायेऽपरस्य स्थितौ च समान-कालत्वस्य समानदेशत्वस्य चाभावेनासाधुत्वापत्तेरपरो निर्गच्छतीति परिभाषेयं न्याय-

---

के बल से यह माना जायगा कि बिल्वादिशब्द का उच्चारण करके विहित जो प्रत्यय है; उसी का लुक् हो, इसीलिए 'छ' का ही लुक् होगा 'छ' से अतिरिक्त प्रत्ययों के लुक् के कारण अतिप्रसङ्ग या अतिव्याप्ति दोष नहीं होगा । इस तरह परिभाषा मानने पर भी 'छ' ग्रहण यद्यपि व्यर्थ-सा लगता है; तथापि वह सार्थक इसलिए है कि नडाद्यन्तर्गतबिल्वकादि शब्दों में कुगागम विशिष्टों के पाठ के कारण बिल्वक शब्द की उपस्थिति की अपेक्षा 'बिल्वादिभ्योऽण्' से बिल्व शब्द की उपस्थिति शीघ्र होगी । इसलिए अतिशय प्रतिपदोक्त बिल्वादिभ्योऽण्" इस सूत्र से विकारार्थक अण् की लुगापत्ति के निवारण के लिए कुगागमानुवाद चरितार्थ है । इसलिए कुगागमविशिष्ट के निर्देश के आधार पर 'कुक्' की निवृत्ति परिभाषा स्वीकार करने पर रोकी नहीं जा सकती थी । इसलिए 'छ' ग्रहण सार्थक हुआ ।

जिन विधि सूत्रों में विधेय के साथ समुच्चयार्थक 'चकार' का योग है, जैसे 'कुक् जनस्य परस्य च" ४।२।१३४ ग० ४ वहाँ समुच्चयार्थक 'च' शब्द के बल से दोनों विधियों की एककालिकता और एकदेशीयता सूचित होती है, अर्थात् 'च' यह सूचित करता है कि 'जन' शब्द से 'छ' प्रत्यय और 'कुक्' हो । इस अर्थ में दोनों प्रत्ययों का काल और स्थान, एक सूचित होता है, इस तरह समानकालिक और समानस्थानिक दो विधेय साथ साथ जब आते हैं; तो उन्हें एक साथ जाना भी चाहिए । इस औचित्य (न्याय) के आधार पर यह सिद्ध हो ही जाता है कि दो सन्नियोगशिष्टों में एक के अपाय से दूसरे का भी अपाय हो जाय ।

'टेः' ६।४।१७५ इस सूत्र में कैयट ने कहा कि "प्रातिपदिकाद्धात्वर्थे बहुल-मिष्ठवच्च" ३।१।२५ वा० १ इस सूत्र में 'णि' के परे रहते किया गया पुंवद्भाव का विधान इस परिभाषा के अनित्यत्व का ज्ञापक है । अन्यथा यदि यह परिभाषा (नित्य) होती और सर्वत्र प्रवृत्त होती तो "एनीवाचरति" एतयति यहाँ 'एनी'

सिद्धापि ॥ इदं "विल्वकादिभ्यः"—६।४।१५३ इति सूत्रे भाष्ये उक्तम् । तच्च-भाष्यं अत्रैव ५८३ पृष्ठे उद्‌ध्रियते'। टेः' ६।४।१५५ इति सूत्रे भाष्यम्— "णाविष्ठ-वत् प्रातिपदिकस्य"। "णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः किं प्रयोजनम् ? पुंवद्भाव-रभाव-टिलोप-यणादिपरार्थम् (वा० २) पुंवद्भावार्थम् । एनीमाचष्टे —एतयति ॥ इति । अत्र "एतयति" इति प्रतीकमादाय कैयटः—"तसिलादित्वा-दिष्ठे पुंवद्भावो विहित इति णावपि भवति । टिलोपेनैव सन्नियोगशिष्टत्वान्नकार-निवृत्तौ सिद्धायां पुंवद्वचनं सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन श्यैनेय इत्यादि सिद्धं भवति" इत्याह । अस्य तात्पर्यं यत् एनीमाचष्टे 'एतयति' इत्यादौ एनी+अम् इत्यस्मात् "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति णिचि धातुत्वे सुपो लुकि इष्ठवद्भावेन इष्ठनि यथा पुंवद्भावस्तथेहापि पुंवद्भावे टिलोपे च एत् इ इत्यस्माल्लटि तिपि शपि गुणे अयादेशे एतयति इति सिद्ध्यति । अत्र

---

शब्द से णिच् करने पर इष्ठवद् होने से टिलोप होता, टिलोप के कारण निवर्त्तमान ई (ङीप्) के साथ सन्नियोगशिष्ट (वर्णादनुदात्तात्तोपधातो नः" ४।१।३० से विहित नकार की भी निवृत्ति हो जाती और 'त' आ जाता । इस तरह बिना पुंवद्भाव के ही 'एतयति' बन जाता पुंवद्भाव का विधान व्यर्थ ही था । पुंवद्भाव के विधान से यह सूचित होता है कि यह परिभाषा अनित्य है । अनित्य होने पर इस परिभाषा के बल से ङीप् के अपाय होने पर भी उसके सन्नियोग शिष्ट नकार का अपाय नहीं होगा, अतः 'एनयति' न बन जाय इसके लिए पुंवद्भाव सार्थक हुआ । 'एनी शब्द से णिच् पुंवद्भाव एत इ को धातुसंज्ञा, लट् तिप्, शप्, गुण अयादि करने पर 'एतयति' बना । इस तरह कैयट ने इस परिभाषा के अनित्यत्व में णि के परे रहते किये गये इष्ठवद्भाव में समाविष्ट पुंवद्भाव को प्रमाण माना; परन्तु वह ठीक नहीं है—'दरदोऽपत्यं स्त्री, इडबिडोऽपत्यं स्त्री, अर्थात् दरद और इडबिड की बेटी, दरद् और इडबिट् कहलाती हैं; क्योंकि यहाँ 'दरत्' शब्द से पुत्री अर्थ में 'द्व्यञ् मगध'—४।१।१७० से अण् प्रत्यय हुआ है । और 'इडविड' शब्द से भी स्त्री अपत्य (पुत्री) अर्थ में "जनपदशब्दात्'—४।१।१६८ से अञ् प्रत्यय हुआ है, उनका "अतश्च" ४।१।१७८ से स्त्रीलिङ्ग में लुक् हो गया है । इसलिए दरत् और इडबिड बना है । 'ताम् आचष्टे'—उसको बुलाता है या कहता है—इस अर्थ में "तत्करोति तदाचष्टे" "प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च" से णिच् करके जब पुंवद्भाव करते हैं, तो स्त्रीलिंग प्रयुक्त लुक् की निवृत्ति हो जाती है, इसलिए आदि अच् की वृद्धि होने पर ऐडविडयति और दारदयति बनता है । यदि पुंवद् के बिना इसे बनाना चाहें तो इडबिडयति और दरदयति" बनेगा । इस तरह जब पुंवद्भाव चरितार्थ है तो उसके द्वारा परिभाषा की अनित्यता सिद्ध करना कहाँ तक बुद्धिमानी है ।

ऐनेयः श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः ॥८७॥

पुंवद्भावविधानं व्यर्थं, विनापि तं एनीघटकस्य स्त्रीप्रत्ययस्य टिलोपेनापाये तत्-संनियोगशिष्टस्य "वर्णादनुदात्तात्तोपधातो नः" इति विहितस्य नकारस्यापि निवृत्तौ एतयतीत्यस्य सिद्धेः। तच्च पुंवद्भावविधानं "सन्नियोगशिष्ट" परिभाषाया अनित्य-त्वज्ञापनार्थमिति। एतेन कैयटः "णाविष्ठवत्" इत्यनेन पुंवत्त्वविधानेन परिभाषेय-मनित्येति यन्मन्यते स्म तन्न इडबिडोऽपत्यं स्त्रीत्यर्थे जनपदशब्दात् क्षत्रियादञ् ४।१।१६८ इत्यञि 'अतश्च' ४।१।१७७ इति तस्य स्त्रियां लुकि इडबिड् इति हलन्तात् प्रातिपदिकादिति णिचि पुंवद्भावेन स्त्रियां जातस्य लुको निवृत्तौ अञः प्रत्यागमनेन

---

तो क्या आप इस परिभाषा को अनित्य नहीं मानते हैं यदि हाँ, तो आपके अनुसार "ऐनेयः" कैसे बनता है। जो परिभाषा को अनित्य मानते हैं, उनके अनुसार तो एन्याः अपत्यं पुमान् एनी (चितकबरी) का बेटा इस अर्थ में 'एनी' शब्द से (एनी शब्द एत शब्द से वर्णादनु० इस सूत्र से स्त्रीप्रत्यय ङीप् और तकार को नकारादेश करने पर बनता है।) स्त्रीभ्यो ढक् ४।१।१२० से ढक् प्रत्यय और ढ को एय् करने पर एनी एय इस स्थिति में "यस्येति च" ६।४।१४८ से भसंज्ञक ईकार का लोप करने पर भी इस परिभाषा के अनित्य होने के कारण 'न' कार की निवृत्ति नहीं होने से "ऐनेयः" बनता है। परन्तु परिभाषा को नित्य मानने वालों के मतानुसार तो "ई" की लोप द्वारा निवृत्ति होने पर तत्सन्नियोगशिष्ट 'नकार' की भी निवृत्ति हो जायगी, फिर तो ऐतेयः बनेगा, ऐनेयः नहीं। ऐनेयः' परिभाषा के नित्यवादियों के मत में कैसे बनता है, वह सुनिए ऐनी+एयः ऐसी स्थिति में 'ई' लोप का स्थानिवद्भाव हो जाता है। इसलिए स्थानिवद्भाव के बल से 'ई' मौजूद ही रहता है। "अन्यतरापाय" ही नहीं है। इसलिए परिभाषा की प्रवृत्ति या प्राप्ति ही नहीं है। स्थानिवद्भाव" करने के लिए "अचः परस्मिन् पूर्व विधौ" १।१।५७ में विधि शब्द में तन्त्र, आवृत्ति या एकशेष मानते हैं। एक, विधि शब्द 'विधीयत इति विधिः' कर्मसाधन है, दूसरा विधि शब्द विधानं विधिः, भाव साधन है। उसका अर्थ है भाव अर्थात् सत्ता। इसलिए सूत्र का यह भी अर्थ होता है कि स्थानिभूत अच् से पूर्वत्वेन दृष्ट की सत्ता में यथास्थिति बनाये रखने में स्थानि-वद्भाव होता है। इसलिए यहाँ 'न' की यथास्थिति कायम रखने के लिए स्थानिवद्-भाव हो गया। "श्यैनेयः" में श्येनी शब्द से ढ्क हुआ है। और कार्य "ऐनेयः" की तरह समझना चाहिए। यह और जगह स्थानिवत् सूत्र के शेखर में अधिक विस्तार से बताया गया है।

॥ इति शिवम् ८७ ॥

—:०:—

आद्यचो वृद्धौ ऐडबिडयतीति प्रयोगसिद्धचर्थं पुंवद्भावविधानस्यावश्यकत्वेन परिभाषाया अनित्यत्वज्ञापनासंभवात् । टिलोपेन तु न निर्वाहः पूर्वोक्तरूपासिद्धेः । एवं दरदोऽपत्यं दारदः "द्वचञ्मगधकलिङ्गसूरमसादण्" ४।१।१७० इति अण् तस्य स्त्रियाम् 'अतश्च' ४।१।१७७ इति लुकि दरद्, तामाचष्टे इत्यर्थे पुंवद्भावे सति लुको निवृत्तौ आदिवृद्धौ दारदयतीति सिद्धचति । टिलोपे तु दरदयतीत्येव स्यात् । अतः पुंवद्भावश्चरितार्थः, न स व्यर्थः, येन परिभाषामनित्यां साधयेत् । नचैवम् एनी इत्यस्मात् श्येनी इत्यस्माच्च 'स्त्रीभ्यो ढक्' ४।१।१२० इति ढकि 'किति च' ७।२।११८ इत्याद्याचो वृद्धौ 'यस्येति च' ६।४।१४८ ईति लोपे प्रातिपदिकत्वे स्वादिकार्थे ऐनेयः' श्यैनेय इति यत् सिद्धचति तन्न सिद्धचेत्; अनित्यत्वाभावेनास्याः परिभाषायाः प्रवृत्या ईकारस्य (ङीपः) अपाये तत्सन्नियोगशिष्टस्य नकारादेशस्यापि निवृत्तेः 'वर्णादनुदात्तात्तोपधातो नः ४।१।३९ इति ङीब्नकारादेशयोश्च सहैव विधानादिति वाच्यम् 'अचः परस्मिन् पूर्वविधौ १।१।५७ इत्यत्र विधिशब्दो भावसाधनोऽपि, विधानं विधिरिति । तथा च पूर्वस्य विधाने (भावे) कर्तव्ये (सत्तायां कर्तव्यायामपि) स्थानिवत्त्वादत्र नकारस्य सत्तायां कर्तव्यायां स्थानिवत्त्वेन ईकारानयनादन्यतरस्यापायाभावादुक्तपरिभाषायाः अप्रवृत्तेः । किञ्च कर्मसाधनस्यैव विधिशब्दस्य स्वीकारेऽपि नादेशस्यानया परिभाषया निवृत्तिरूपे विधौ कर्तव्ये स्थानिवत्प्रवृत्तिरक्षतैव । तत्र पक्षेऽपि स्थानिवत्त्वेन नकारश्रवणं शक्यते समर्थयितुम् । इत्थं नास्त्यनित्यत्वे ज्ञापकं पुंवत्त्वविधानं, न वा फलमस्त्यनित्यत्वस्येति कैयटोक्तिरयुक्तैवेति नागेशः ।।

"स्थानिवद्भावप्रत्ययलक्षणासिद्धत्वैर्हि स्थानिकार्यमादेशे सत्यपि क्रियते; न तु स्थानी सन्निधाप्यते, येन तस्यापायो न स्यात् । एवञ्च 'श्यैनेय' इत्यत्र नकारश्रवणार्थमुक्तपरिभाषाया अनित्यत्वमेव शरणीकरणीयम् । यद्यपि अचः परस्मिन् पूर्वविधौ १।१।५७ इति स्थानिवत्त्वमशास्त्रीयेऽपि प्रवर्तते इति सिद्धान्तोऽस्ति । अतएव घटयतीत्यादावशास्त्रीयोऽपि उपधावृद्धचभावः स्थानिवद्भावाद्भवति । तथाचाशास्त्रीयनकारनिवृत्तरूपविधावपि स्थानिवद्भावप्रवृत्तिः, स्थानिवद्भावो नाम स्थानिबुद्धिः, न तु स्थानिसन्निधापनम् तथाच स्थानिनोबुद्धचा नास्ति 'श्यैनेय ऐनेयः इत्यादौ अन्यतरस्यापाय इति स्वत एव परिभाषाया अप्रवृत्तिः नानित्यत्वाश्रयणस्य वर्तते काचिवदावश्यकता, तथापि श्रोत्रमित्यत्र युवादिगणे "श्रोत्रियस्य घलोपश्च (गणसू० ५।१।३१) इति पाठेन घे निवृत्तेऽपि तत्सन्नियोगशिष्टः श्रोत्रभावो न निवर्तते । अत्र कारणं परिभाषाया अनित्यत्वमेवाङ्गीकार्यम् । अयं भावः—अयं श्रोत्रियशब्दः श्रोत्रियंश्छन्दोऽधीते" ५।२।८४ इत्यनेन 'छन्दः अधीते' इति विग्रहे छन्दश्शब्दाद् घप्रत्यये तत्सन्नियोगेन छन्दसः श्रोत्रादेशे 'यस्येति च' ६।४।१४८ इत्यकार लोपे कृते सिद्धचति तस्मात् श्रोत्रियशब्दात् श्रोत्रियस्य भावः कर्म वेत्यर्थे "हायनान्तयुवादिभ्योऽण् ५।१।१३० इत्यणि श्रोत्रियस्य घलोपश्च" इति घप्रत्ययस्य (अर्थात् इय इत्यस्य घस्थाने जातस्य) लोपे

वृद्धौ श्रौत्रम् इति सिद्धयति। अत्र घलोपो जातः (इयलोपो जातः) किन्तु तत्सन्नि-योगशिष्टः छन्दसः श्रोत्रादेशो न निवृत्तः इति। अतः परिभाषाया अनित्यत्वाश्रयणं कर्तव्यमेवेति भावः। न चात्र 'अचः परस्मिन्' १।१।५७ इति स्थानिवद्भावः संभवति; अनजादेशत्वात्। यदि च प्रत्ययलक्षणेन सन्निधानमाश्रित्यात्र श्रोत्रभावः समर्थ्यते तर्हि धर्मिग्राहकमानविरोधः, बैल्वकमित्यत्रापि छस्य लुकि प्रत्ययलक्षणेन तत्सन्निधानस्य वक्तुं शक्यत्वात्। न च "नलुमताङ्गस्य" १।१।६३ इति निषेधः, छसन्निधानस्यानङ्गकार्यत्वेन तस्याप्रवृत्तेः। तस्मात् श्रोत्रमित्यत्र श्रोत्रभावस्या-निवृत्तये उक्तपरिभाषाया अनित्यत्वमेषितव्यम्। इदमपि 'बिल्वकादिभ्यः'—६।४। १५३ इतिसूत्रे कैयटेनानित्यफलमुक्तम्। तस्मात्सुष्ठूक्तं कैयटेन—इयमनित्येति। नव्योक्तं तद्दूषणमेवायुक्तमिति परिभाषाभास्करकारः (परिभाषासंग्रहे पृ० ४४२)।

प्रथममत्र बिल्वकादिभ्यः इति सूत्रस्थं भाष्यमुद्ध्रियते—"बिल्वकादिभ्यश्छ-स्य लुक्" ६।४।१४३ छग्रहणं शक्यमकर्तुम्। इह कस्मान्न भवति—"बिल्वकेभ्यः"? भस्येति वर्तते ॥ एवमपि बिल्वकस्य विकारः अवयवो वा—बैल्वकः, अत्र प्राप्नोति। 'तद्धिते' 'तद्धितस्य' इति वर्तते ॥ एवमपि बिल्वकीयायां भवो बैल्वकः, बैल्वकस्य किञ्चिद् बैल्वकीयम्, अत्र प्राप्नोति।

"न स बिल्वकात्" (वा० १) बिल्वकादिभ्यो यो विहित इत्युच्यते, नचासौ बिल्वकशब्दाद् विहितः। किं तर्हि? बिल्वकीयशब्दात् ॥ एवं तर्हि सिद्धे यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यः—भवत्येषा परिभाषा सन्नियोगशिष्टानामन्यतराभावे उभयोरप्यभाव इति। तस्माच्छग्रहणं कर्तव्यम्, छस्यैव लुग् यथा स्यात्, कुको मा भूदिति ॥ भाष्यम्।

अत्र कैयटः एवं तर्हीति प्रतीकमुपादायाह—छग्रहणं छमात्रस्य लुग् यथा स्यात् कुगागमो मा निवृतदित्येवमर्थं क्रियते। यदि चैषा परिभाषा न स्या-त्तदा कुको नैव निवृत्तिः प्राप्नोतीति किं तदभावार्थेन छग्रहणेन। क्वचित्त्वेषा परिभाषा नाश्रीयते यथा श्यैनेय इत्यादौ। 'यस्य इति लोपेन निवृत्तेऽपीकारे तत्स-न्नियुक्तो नकारो न निवर्तते। तथाच स्त्रियाः पुंवत्" इत्यत्रोक्तम् 'एतभार्यः' इत्यत्र पुंवद्भावेन स्त्रीप्रत्ययस्य निवृत्तिः क्रियते, अर्थस्य त्वनिवृत्तत्वान्नकारस्य श्रवणं प्रसज्येत—इति। तथा च "श्रोत्रियस्य घलोपश्च" इति घे निवृत्तेऽपि श्रोत्रभावो न निवर्तत इति। तत्रानित्या परिभाषेति प्रतिविधेयम् ॥

यदि च "श्रोत्रियस्य यलोपश्च" इतिपाठं स्वीक्रियते यथा किल सिद्धान्त-कौमुद्यादावुपलभ्यते "घलोप" इति पाठे श्रोत्रिय इत्यत्र घस्यादर्शनात् घस्थानिके इये लक्षणा चात्र नाश्रयणीया भवति। 'यलोप' इत्यत्र येति संघातग्रहणम् व्याख्यानात् वर्णग्रहणे तु इकारस्य यणादेशः स्यात्; न तु 'यस्येति च' ६।४।१४८ इति लोपः। अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाभावात् एतच्च हरदत्तग्रन्थे स्पष्टम्

ननु चुरा शीलमस्याः सा चौरीत्यादौ 'शीलम् छत्रादिभ्यो णः' इति णे ङीप् न प्राप्नोतीत्यत आह—

**ताच्छीलिके णेऽण्कृतानि भवन्ति ॥८८॥**

---

मूलपुस्तकेषु 'यलोप' इति मुख्यपाठ एव प्रायेण दृश्यते न तु घलोप इति पाठः। (सि० कौ० तत्त्वबोधि० ३।४।६) तथाच श्रोत्रियशब्दादणि 'श्रोत्रिय+अ' इत्यत्र यलोपे इकारस्य यस्येति चेति लोपे तस्य लोपस्याजादेशत्वात् 'अचः परस्मिन्' १।१।५७ इति स्थानिवत्त्वेन पूर्वदृष्टस्य श्रोत्रेत्यस्य सत्तायां कर्तव्यायां स्थानिवद्भावेन घप्रत्ययस्य बुद्धचा सन्नियोगशिष्टस्यापायाभावः। तथाच परिभाषाया अनित्यत्वे फलाभावः। 'घलोप' इति पाठे तु श्रौत्रमिति परिभाषाया अनित्यत्वफलं भवत्येवेति। स्वीकृतं चोद्योते "बिल्वकादिभ्य" इतिसूत्रे नागेशेनापि" 'श्रोत्रियस्य इत्यादि त्वनित्यफलमेवेति वाक्यं लिखता 'श्यैनेय' इति फलम्—"अचः परस्मिन्" इति स्थानिवत्त्वेन सिद्धमित्यन्यथा सिद्धं वदतापीति

इति शिवम् ॥८७॥

——:०:——

**ताच्छीलिके णे—८८**

ननु चुरा शीलमस्याः सा चौरीत्यादौ चुरा शब्दात् 'शीलम्' ४।४।६१ इत्यनुवर्तमाने छत्रादिभ्यो णः ४।४।६२ इति णप्रत्यये अणन्तलक्षणः टिड्ढाणञ्—४।१।१५ इति ङीप् न प्राप्नोति एवं तपः शीलमस्या इति तापसीत्यादावपि तपः शब्दात् 'छत्रादिभ्यो ण' इति णे टिड्ढेति ङीब् न स्यादित्यतः परिभाषामाह—**ताच्छीलिके णेऽण्कृतानि भवन्ति** तेन अण्कार्याणि तच्छीलार्थे विहितणेऽपि भवन्तीत्यनया बोधनान् ङीप् सिद्धयतीति भावः। तेन गुरोर्दोषाणामावरणं छत्रं तच्छीलमस्य इतिच्छात्रः। छत्रं शीलमस्या इति विग्रहे तु छात्रीति साधु तत्रापि छत्रादिभ्यो णः ४।४।६२ इति णप्रत्ययेऽनया ङीपः प्रवृत्तेः। अत्र भैरवमिश्रः—ननु लाघवाय छत्रादिभ्योऽणित्येव कुतो न सूत्रितमिति चेन्न **ज्ञापकसिद्धं न सर्वत्र** (प० सं० १२६) इत्येतद्विषयत्वसूचनात्। तेन च्छात्रेत्यपि सिद्धयतीति प्राह॥

---

**ताच्छीलके—८८**

"**चुरा शीलमस्याः**" सा चौरी इस विग्रह में '**शीलम्—छत्रादिभ्यो णः**' ४।४।६१/६२ इससे ण प्रत्यय आदि अच् को वृद्धि, यस्येति लोप करने पर "टिड्ढाणञ्" से ङीप् पुनः यस्येतिलोप होकर '**चौरी**' यह प्रयोग बनता है। यहाँ "टिड्ढाणञ्" ४।१।१५ से ङीप् नहीं होना चाहिए, क्योंकि वह सूत्र अणन्त से ङीप् करता है, यहाँ तो 'ण' प्रत्यय हुआ है। अतः 'ङीप्' करने के लिए परिभाषा मानते हैं—"**ताच्छीलिके णेऽण्कृतानि भवन्ति**"। अण् प्रत्यय को निमित्तमानकर किये गये

'अन्' इत्यणि विहितप्रकृतिभावबाधनार्थं 'कार्मस्ताच्छील्ये' इति निपातनमस्या ज्ञापकम् ॥

ताच्छीलिकणान्ता'दणोद्व्यचः' इति फिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः ।

ताच्छलिक इत्युक्ते 'स्तदस्यां प्रहरणम्' इति णे दाण्डेत्येव । 'कार्म' इति सूत्रे भाष्ये स्पष्टा ॥८८॥

---

'कार्मस्ताच्छील्ये' ४।४।१७२ इति सूत्रेण कार्म इति निपातनमस्या ज्ञापकम् । अन्यथा कर्मशील इति विग्रहे कर्मन् शब्दात् छत्रादित्वात् 'छत्रादिभ्यो णः' ४।४।६२ इति ण' प्रत्यये 'अन्' ६।४।१६७ इति प्रकृतिभावस्य अणि परे विहितत्वादत्र णपरत्वादेवाप्राप्त्या 'नस्तद्धिते' ६।४।१४४ इति टिलोपेनानोऽपहारे आद्यचो वृद्धौ कार्म इति सिद्धे निपातनं व्यर्थं स्यात् । परिभाषायां ज्ञापितायां तु णप्रत्ययपरेऽपि अण-

---

कार्य तच्छीलार्थक ण प्रत्यय करने पर भी होते हैं । 'कर्म्मस्ताच्छील्ये' ४।४।१७२ इस सूत्र के द्वारा "कार्म्मः" निपातन इस परिभाषा का ज्ञापक है । कर्मन् शब्द से तच्छील अर्थ में 'ण' प्रत्यय होने पर आदि अच् को वृद्धि हुई कार्मन्+अ ऐसी स्थिति में "नस्तद्धिते" ६।४।१४४ से प्राप्त टिलोप को बाधकर "अन्" ६।४।२६७ से प्रकृतिभाव प्राप्त हुआ, उसको बाधकर 'कार्म्मस्ताच्छील्ये' से टिलोप होता है और रूप की सिद्धि होती है ।

यदि अण् निमित्तक कार्य 'ण' प्रत्यय के परे रहते न होता तो यहाँ 'अन्' से अण् प्रत्यय के परे रहते विहित प्रकृतिभाव की प्राप्ति ही न होती फिर 'नस्तद्धिते' से टिलोप करके "कार्मः" बन ही जाता इस तरह कार्म्मस्ताच्छल्ये" यह निपातन सूत्र व्यर्थ हो जायगा । व्यर्थ होकर यह सूत्र परिभाषा का ज्ञापन करता है । परिभाषा ज्ञापित होने पर भी "अण्" के परे विहित प्रकृतिभाव 'ण' प्रत्यय के परे रहते भी हो जायगा । अतः 'नस्तद्धिते' से टिलोप नहीं हो सकेगा । अतः निपातनमूलक टिलोप करने के लिए सूत्र आवश्यक हुआ । 'तच्छील' अर्थ में किया गया ण प्रत्यय जिनके अन्त में हों उनसे "अणोद्व्यचः" ४।१।१५६ से फिञ् प्रत्यय की सिद्धि भी इस परिभाषा का प्रयोजन है इसलिए 'छात्रायणिः' बनता है यह नव्य वैयाकरणों (दीक्षित आदि) का मत है । "अणिसति यत् कार्यं तत् णेऽपि" अण् करने पर जो कार्य होते हैं, वे 'ण' प्रत्यय करने पर भी हों" ऐसा ज्ञापन इसलिए नहीं माना गया कि 'दाण्डा' 'मौष्टा' में ङीप् न हो जाय । "दण्डः प्रहरणमस्याम्" मुष्टिः प्रहरणमस्याम्" इस विग्रह में 'दण्ड' शब्द से और और मुष्टि शब्द से 'तदस्यां प्रहरणम्' ४।२।५७ से "ण" प्रत्यय करने पर ङीप् नहीं होता है; क्योंकि अण् कृत कार्य केवल तच्छीलार्थक 'ण' में ही होता है; यहाँ तो 'प्रहरण' अर्थ में 'ण' हैं ।

'कार्मस्ताच्छील्ये' ६।४।१७२ सूत्र के भाष्य में यह स्पष्ट है । वहाँ कहा गया

प्रत्ययपरकस्य 'अन्' इति प्रकृतिभावस्य प्राप्त्या 'कार्म' इत्यत्र टिलोपविधानाय निपातनसूत्रं स्वांशे चरितार्थम् ॥ न केवलं चौरीत्यादावणन्तलक्षणङीप् सिद्धिरस्याः प्रयोजनम् किन्तु णान्ताच्छात्रीत्यादेः छात्र्या अपत्य मित्यर्थे इञं बाधित्वा "अणो द्व्यचः" ४।१।१५६ इति फिञपि जायते। तेन "छात्रायणिः" इति सिद्ध्यति इति नव्याः (दीक्षितादयः) ॥

परिभाषाशरीरे "ताच्छीलिके" इति निवेशस्य फलमाह दाण्डा इति। "दण्डः प्रहरणमस्याम्" इति विग्रहे तदस्यां प्रहरणमिति क्रीडायां णः ४।२।५७ इति णप्रत्यये दाण्डा क्रीडा इत्येव जायते न तु दाण्डीति, तस्य णस्य तच्छीलार्थे विहितत्वाभावात् ॥

"कार्मस्ताच्छील्ये" ६।४।१७२ इति सूत्रेऽसौ स्पष्टा ॥ तथाहि—कार्मस्ताच्छील्ये ६।४।१७२।

"किमर्थमिदमुच्यते, न 'नस्तद्धिते' (६।४।१४४) इत्येव सिद्धम् ? न सिद्धयति 'अन्' अणीति प्रकृतिभावः प्रसज्येत ॥ अणीत्युच्यते, णश्चायम्। एवं तर्हि सिद्धे सति यन्निपातनं करोति, तज्ज्ञापयत्याचार्यः—ताच्छीलिके ऽण्कृतानि भवन्ति इति। किमेतस्य ज्ञापने प्रयोजनम् ? चौरी तापसी इति अणन्तादितीकारः सिद्धो भवन्ति ॥

अत्र कैयटः—ताच्छीलिक इति। एवञ्च 'छत्रादिभ्योऽण् इति लाघवाय कर्तव्यम्, णवचने प्रयोजनाभावात्' 'प्रज्ञा श्रद्धा'—इति 'ज्वलितिकसन्तेभ्यः'—इति "तदस्यां प्रहरणम्" इति णवचने ङीब्भावः प्रयोजनम् (तच्छीलिके इत्यस्य)। अत्र उद्योतकारः—(अणन्तादितीकारः सिद्धो भवतीत्येव न प्रयोजनम् किन्तु 'अणो द्व्यचः" इति फिञपि फलान्तरं बोध्यम्। अतएवोपक्रमभाष्ये "अण्कृतानि भवन्ति" इति बहुवचनप्रयोग इत्याहुः। एवञ्चेत्यादिनोक्तं कैयटमतं खण्डयन् स कथयति—ज्ञापके हि ज्ञापकसिद्धस्यासार्वत्रिकत्वात् "छात्रा" इति सिध्यतीति चिन्त्यमिदमित्यन्ये ॥

॥ इति शिवम् ॥ ८८

---

हैं कि 'नस्तद्धिते' से सिद्ध था ही, यह निपातन क्यों किया गया ? यदि यह कहें कि 'अन्' से प्रकृति भाव हो जाता; इसलिए 'नस्तद्धिते' से टिलोप नहीं हो सकता था। इसलिए निपातन करना अवश्यक था तो आपको यह जानना चाहिए कि 'अन्' से प्रकृति भाव तो 'अण्' के परे रहते होता है यहाँ तो 'ण' प्रत्यय है। अच्छा, यदि ऐसा है तो यह निपातन यह सूचित करता है कि 'ताच्छीलिक 'ण' में भी अण् का कार्य होता है। इसलिए 'चौरी' 'तपसी' इत्यादि में अणन्तकार्य (ङीप्) हुआ।

इति शिवम् ॥८८॥

——:०:——

**ननु कंसपरिमृड्भ्यामित्यादौ 'मृजेर्वृद्धि' र्दुर्वारेत्यत आह—**

**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥८९॥**

**औणहत्ये तत्वनिपातनमस्या ज्ञापकम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य-**

---

**धातोरुच्यमानं कार्यं तत्प्रत्यये भवति : ॥ ८९ ॥**

ननु कंसपरिमृड्भ्याम् इत्यादौ विभक्तिमाश्रित्य मृजेरिको वृद्धिः स्यात् प्रत्यये परे इत्यर्थकेन 'मृजेर्वृद्धिः' ७.२.११४ इति वृद्धिः स्यात्, न च परिपूर्वकात् मृज्धातोर्जातस्य क्विपः प्रत्ययलक्षणेन 'क्ङिति च' १.१.५ इति निषेधः इति वाच्यम् किन्निमित्ताया ङिन्निमित्ताया एव वृद्धेस्तेन निषेधात् । नचात्र क्विपं निमित्तं कृत्वा वृद्धिः प्राप्नोति किन्तु भ्याम्विभक्तिं निमित्तं कृत्वेति तस्य निषेधस्याप्रवृत्तेः इति चेन्न "**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति**" इति परिभाषास्वीकारात् । धातुमुद्देश्यं कृत्वा विहितं कार्यम् तस्मात्धातोर्विहिते प्रत्यये एव भवति । 'मृजेर्वृद्धिः ७.२.११४ इति वृद्धिमृज्धातुमुद्देश्यीकृत्योच्यते । अतः सा मृज्धातोर्यः प्रत्ययो जातस्तस्मिन् परे एव भवतीति परिभाषयाऽनया बोधनादत्र यस्मिन् 'भ्याम्' प्रत्यये परे वृद्धिरिष्यते न स मृजेर्जातः किन्तु कंस—परिमृज् इत्यस्माज्जात इति न तत्परे वृद्धिः; 'मार्ष्टि' इत्यादौ धातोर्विहिते तिप्प्रत्यये च जायते वृद्धिरिति ।

"दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि" ६.४.१७४ इति सूत्रेण भ्रौणहत्ये तत्वनिपातनमस्याः परिभाषायाः ज्ञापकम् । भ्रूणघ्नो भावो भ्रौणहत्यमित्यत्र भ्रूणहन् शब्दात्

---

**धातोरुच्यमानम्—८९**

"कंसपरिमृड्भ्याम्" इत्यादि प्रयोगों में "मृजेर्वृद्धिः" ७.२.११४ से वृद्धि की दुर्वारता को देखकर कहते हैं :— "**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति**" अर्थात् जो कार्य धातु से कहा गया है, वह धातु से विहित प्रत्यय के परे रहते ही होता है । इसलिए "मृजेर्वृद्धिः" ७.२.११४ मृज् धातु को जो वृद्धि करता है वह वृद्धि मृज् धातुसे विहित प्रत्यय के परे रहते ही होगी । यहाँ 'भ्याम्' प्रत्यय मृज् धातु से नहीं हुआ है । वह तो कंसमृज् से हुआ है । इसलिए वृद्धि नहीं हुई । बीच् में जो 'क्विप्' प्रत्यय है, वह यद्यपि मृज् धातु से विहित है; परन्तु उसको निमित्त मानकर वृद्धि नहीं हुई क्योंकि "क्ङिति च" १.१.५ ने निषेधकर दिया "भ्रौणहत्य" शब्दमें तत्त्व-निपातन इस परिभाषा का ज्ञापक है । यदि यह परिभाषा न रहे तो 'भ्रूणहन्' शब्द से ष्यञ् प्रत्यय हुआ ही है, इस को निमित्त मानकर "हनस्तोऽचिण्णलोः" ७.३.३२ इससे नकार के स्थान में तकार हो ही जाता, दाण्डिनायन— ६.४.१७४ सूत्र में तकार निपातन करने की क्या आवश्यकता थी ? इस निपातन ने ही व्यर्थ होकर यह परिभाषा ज्ञापित की है । परिभाषा ज्ञापित होने पर तो निपातन सार्थक हो गया; क्योंकि ष्यञ् हन् धातु से विहित प्रत्यय नहीं है । वह तो

**विज्ञानमिति पाठस्तु प्रसृड्भिरित्यादौ अनुदात्तस्य 'चर्दुपधस्य' इत्यमापादनेन भाष्ये दूषितः ।**

---

ष्यञि तकारान्तादेशोऽनेन निपात्यते । तत आद्यचो वृद्धौ भ्रौणहत्यमिति जायते । तत्र ष्यञि हनस्तोऽचिण्णलोः" ७.३.३२ इत्यनेनैव हन्तेस्तत्वे रूपसिद्धे तकारनिपातनं "धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति ज्ञापयति । तेन वृत्रघ्नो भावः वार्त्रघ्नमित्यत्रापि न तेन तत्वम् । नच "दाण्डिनायन"—इति न तत्र तत्वं निपात्यते; किन्तु "हो हन्तेः—७.३.५४ इति प्राप्तकुत्वाभाव एव निपात्यते, इत्थं निपातनं सार्थकमिति न तज्ज्ञापकमिति वाच्यम् "तत्वं निपात्यते" इति भाष्यविरोधात्, ज्ञापकताप्रदर्शनपरकभाष्यविरोधाच्च ॥

धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति वार्तिककारसम्मतः पाठस्तु न निर्दुष्टः प्रसृड्भिरित्यादौ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६.१.५९ इत्यमापादनेन भाष्यकृता दूषितत्वात् । तद्विधौ धातोः स्वरूपेणानुपादानात्परिभाषाया अप्राप्त्या अम् प्रसङ्गः । "धातोरुच्यमानं कार्यं तत्प्रत्यये भवतीति परिभाषाकलेबरे स्वीकृते तु न दोषः अनुदात्तत्वविशिष्टऋदुपधत्वस्योपादानेन धातुत्वव्याप्यधर्मोपादानपूर्वकविधानसत्वात् परिभाषाप्रवृत्तौ बाधाभावान्न दोषः ॥

---

भ्रूणहन् से विहित है । "हनस्तोऽचिण्णलोः" से नकार को तकार नहीं हो सकता था, इसलिए अप्राप्त तकार विधान के लिए निपातन आवश्यक हुआ । "हो हन्तेः" ७.३.५४ से प्राप्त कुत्व के अभाव के लिए निपातन को आवश्यक नहीं बताया जा सकता । भाष्यकार ने "तत्त्वं निपात्यते" कहकर जिस तत्त्व निपातन की चर्चा की है, वह तत्त्व-निपातन व्यर्थ होकर परिभाषा ज्ञापित करे, यह बात भाष्यसंमत है । भाष्यकार ने तत्त्व निपातन को ज्ञापक बताया है । इसलिए कुत्व के अभाव के लिए तत्त्वनिपातन को चरितार्थ बताना भाष्य के विपरीत होगा । उसे कौन ठीक मानेगा ? **"धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्"** अर्थात् धातु के स्वरूप का ग्रहण रहने पर जो कार्य विहित हो वह धातु विहित प्रत्यय के परे रहते हो" ऐसे पाठ को भाष्य में सदोष बताया गया; क्योंकि वहाँ भाष्यकार ने कहा है कि यदि 'स्वरूपग्रहणे' इस प्रकार निवेश करेंगे तो प्रसृग्भ्याम्' इत्यादि में 'अम्' प्राप्त हो जायगा । इसलिए धातोः कार्यमुच्यमानम्" ऐसा कहना चाहिए । अर्थात् यदि पूर्वोक्त पाठ मानें तो "अनुदात्तस्य चर्दुपधस्य ६.१.५९" इन शब्दों में धातुका स्वरूपग्रहण न होने के कारण परिभाषा की प्रवृत्ति नहीं होगी और 'भिस्' के धातु विहित प्रत्यय न होने पर भी अम् की प्राप्ति हो जायगी । यदि "धातोरुच्यमानम्" ऐसा पाठ मानते हैं तो 'अनुदात्तस्य च' ६.१.५९ सूत्र से विहित 'अम्' कार्य भी धातुविहित कार्य ही है । अतः परिभाषा की प्रवृत्ति हो जाती है और 'अम्'

**यत्कार्यं प्रत्ययनिमित्तकं तत्रेयं व्यवस्थापिका । तेन पदान्तत्वनिबन्धनं 'नशेर्वा' इति कुत्वं प्रनग्भ्यामित्यादौ भवत्येव ॥**

**इयङादिविधौ तु नैषा, 'न भूसुधियोरि'ति निषेधे नानित्यत्वात् । 'मृजेर्वृद्धिः' इत्यत्र भाष्ये स्पष्टा ॥८९॥**

---

यत् कार्यं प्रत्ययनिमित्तकं तत्रैवेयं प्रवर्तते तत्प्रत्यय इति शब्दस्वारस्यात् । तेन मृजेर्वृद्धिरिति वृद्धिकार्यस्याध्याहृतप्रत्ययनिमित्तककार्यत्वात्तत्रासौ व्यवस्थां करोति यत् 'मार्ष्टि' इत्यत्र तत्प्रत्ययत्वाद् तत्परकवृद्धि र्जायताम्, ',कंसपरिमृड्भ्याम्' इत्यादौ भ्यामो मृजेरविहितत्वात्तत्परे नेति । तेन पदान्तत्वनिबन्धनं 'नशेर्वा' ८.२.६३ इति कुत्वं प्रनग्भ्या मित्यादौ भवत्येव (प्रणग्भ्यामित्यपि क्वचित् पाठः) तस्य प्रत्ययनिमित्तककार्याभावेनास्या अप्रवृत्तेः ॥

नन्वस्याः परिभाषायाः स्वीकारे 'सुधिया' इत्यादावियङ्, 'भुवा' इत्यादावुवङ्, 'प्रध्या' इत्यादौ यणादेशश्च न स्युः 'औ' प्रत्ययस्य धातुविहितत्वाभावेन "अचिश्नु—६.४.७७ "एरनेकाचः" ६.४.८२ इत्यादीनामप्रवृत्तेरिति चेन्न "भुवौ" "सुधियौ" इत्यादौ स्वत एव "एरनेकाच" इति "ओः सुपि" ६.४.८३ इति यणादेशाप्राप्त्या व्यर्थेन यण्निषेधकेन "न भूसुधियोः" ६.४.८५ इति सूत्रेण परिभाषाया अनित्यत्वज्ञापनादियङादिविधावस्या अप्रवृत्तेः ॥

मृजेर्वृद्धिः ७.२.११४ इति सूत्रे भाष्येऽसौ दृश्यते तथाहि—"मृजेर्वृद्धिविधौ क्विप्रतिषेधः" (वा० १) मृजेर्वृद्धिविधौ क्व्यन्तस्य प्रतिषेधो वक्तव्यः । कंसपरि-

---

की आपत्ति नहीं होती; क्योंकि 'भ्याम्' धातुविहित प्रत्यय नहीं है । 'तत्प्रत्यय' शब्द से ध्वनित होता है कि जो कार्य प्रत्यय को निमित्त मानकर विहित है, वहीं यह परिभाषा व्यवस्था करती है । इसीलिए "प्रनग्भ्याम्" में पदान्तत्व को देखकर विहित "नशेर्वा" ८.२.६३ सूत्र से कुत्व हुआ है । क्योंकि कुत्व कार्य पदान्तत्व—मूलक है, प्रत्ययनिमित्तक नहीं । इयङ् उवङ् आदि विधियों में यह परिभाषा इसलिए नहीं लग पाती कि "न भूसुधियोः" ६.४.८५ इस निषेध के कारण यह परिभाषा अनित्य मान ली गयी है । तात्पर्य यह है कि प्रध्यौ में 'एरनेकाचो' ६.४.८२ से यण् और सुधियौ में 'अचिश्नु—६,४.७७ से इयङ् नहीं होना चाहिए क्योंकि 'औ' धातु निरूपित प्रत्यय नहीं है, परन्तु परिभाषा के अनित्य होने से यण् और इयङ् हो जायेंगे । अनित्यता का ज्ञापक सूत्र "न भूसुधियोः" है; क्योंकि यदि यह परिभाषा नित्य रहे तो इसकी प्रवृत्ति के कारण ही वहाँ 'यण्' का अभाव सिद्ध था, पुनः यण् निषेध के लिए सूत्र बनाने की क्या आवश्यकता थी । "मृजेर्वृद्धिः" इस सूत्र के भाष्य में यह स्पष्ट है । भाष्य दुर्गा व्याख्या में उद्धृत है । वहाँ परिभाषा के ज्ञापक, प्रयोजन और परिभाषा के निर्दिष्ट स्वरूप का जैसा वर्णन हुआ है, उसका सार मूल में आगया है । इति ८९.

ननु सर्वक उच्चकैरित्वादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह—

मृड्भ्यां कंसपरिमृड्भिः ।। "धातोःस्वरूपग्रहणे वा तत्प्रत्ययविज्ञानात् सिद्धम्(वा० २) अथवा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् सिद्धम् । धातुप्रत्यये कार्यं भवतीत्येषा परिभाषा कर्तव्या ।। कान्येतस्या : परिभाषायाः प्रयोजनानि ?

"**प्रयोजनं सृजिदृशिमस्जिनशिहन्तिगिर्यर्थम्** (वा० ३) सृजि—रज्जुसृड्भ्याम् रज्जुसृड्भिः । सृजि । दृशि—देवदृग्भ्याम्, देवदृग्भिः (६.१ ५८) । दृशि । मस्जि—उदकमग्भ्याम्, उदकमग्भिः (७.१.६०) । मस्जि । नशि—प्रनड्भ्याम्, प्रनड्भिः (७.१.६०) । नशि । हन्ति—वार्त्रघ्नः औणघ्नः (६.३.३२) । हन्ति । गिरि—देवगिरौ देवगिरः ।। (८.२.२१)

यदि स्वरूपग्रहण इत्युच्यते—प्रसृग्भ्याम्, प्रसृग्भिः, 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' ६.१.५९ इत्यम् प्राप्नोति । एवं तर्हीयं परिभाषा कर्तव्या—धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति । सा तर्ह्येषा परिभाषा कर्तव्या । न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं औणहत्ये तत्त्वं शास्ति ।।

अत्र **कैयटः**—कंसपरिमृड्भ्यामित्यत्र विभक्तिमाश्रित्य वृद्धिः (मृजेर्वृद्धिः ७.२.११४ इत्यनेन) प्राप्नोति । क्ङिति चेति प्रतिषेधः क्ङिन्निमित्ताया एव वृद्धेरित्यत्र न प्रवर्तते ।। **रज्जुसृड्भ्यामिति ।** (अत्र) भ्याम् प्रत्ययो झलादिरकिद्भवतीत्यमागमप्रसङ्गः । **प्रणड्भ्यामिति** नशेर्वेति कुत्वमित्यत्र न भवतीति केचिदाहुः, तदयुक्तम् पदत्वनिबन्धनत्वादस्य प्रत्ययानपेक्षणात् । मस्जिनशोर्झलीति मुमागमस्तु प्रत्ययापेक्षत्वादधातुप्रत्यये न भवति । **वार्त्रघ्न** इति हनस्तोऽचिण्णलोरिति तत्वं न भवति । कुमति चेति णत्वं कुव्यवाये हादेशेषु प्रतिषेध इति न भवति । **देवगिराविति** अचिविभाषेति लत्वं न भवति । **अम्प्राप्नोति** इति । तद्विधौ धातोः स्वरूपेणानुपादानात् ।। इति शिवम् । ८९ ।

## तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ६०

ननु सर्वशब्दात् "अव्ययसर्वनाम्नाम्—" ५.३.६१ इति टेः प्रागकचि सर्वक इति जायते; एवम् उच्चैस् शब्दादकचि 'उच्चकैस्' इति जायते सर्वादिस्वरादिगणेऽपठितत्वात् सर्वादीनि सर्वनामानि १.१.२७ स्वरादिनिपातमव्ययम् १.१.३७ इत्यनयोरप्राप्त्या 'सर्वनाम्नः स्मै' ७.१.१४ इति स्मै आदेशः 'उच्चकैः' इत्यत्र "अव्ययादाप्-

---

**तन्मध्यपतितः—९०**

"सर्वकः उच्चकैः" इत्यादि प्रयोगों में न सर्वनाम संज्ञा होगी और न अव्यय संज्ञा, क्योंकि 'सर्वक' शब्द का सर्वादिगण में पाठ नहीं है । सर्वादिगण में तो 'सर्व' शब्द का पाठ है, यहाँ तो अकच् विशिष्ट 'सर्वक' शब्द है । इसी प्रकार "स्वरादि निपातमव्ययम्" १.१.३७ के स्वरादि गण में 'उच्चैः' शब्द है, अकच् विशिष्ट 'उच्चकैः' शब्द नहीं, इस प्रकार के दोषों को हटाने के लिए परिभाषा मानते हैं:—**'तन्मध्य-**

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥६०॥**

'नेदमदसोरकोरि'ति सूत्रेऽकोरिति निषेधोस्या ज्ञापकः । तदेकदेशभूतं तद्ग्रह-

सुपः २.४.८२ इति विभक्तेर्लुक् न भवेतामिति चेन्न "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति परिभाषास्वीकारात् । सर्वशब्दमध्येऽकच्पतितः, तस्य टेः प्राग्देशिकत्वेन विधानात्, सोऽकजपि सर्वग्रहणेन गृह्यते एवम् उच्चकैरित्यत्रापि । एवञ्च सर्वग्रहणेन सर्वकेत्यस्य उच्चैरित्यनेन उच्चकैरित्यस्य ग्रहणात् सर्वनामाव्ययसंज्ञे सिद्धे ॥

अत्र "नेदमदसोरकोः" ७.१.११ इति सूत्रस्थः'अको'रिति प्रतिषेधो ज्ञापकः । स हि "इमकैः" 'अमुकै'रित्यत्र भिसः ऐस्प्रतिषेधवारणाय क्रियते । साकच्-कस्य शब्दान्तरत्वे इदम् अदस् शब्दग्रहणे तयोरग्रहणे स्वत एव सिद्धे व्यर्थः सन् स प्रतिषेधोऽस्या ज्ञापकः ॥ यद्यपि देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते, गङ्गा-प्रविष्टा यमुनाऽपि गङ्गाग्रहणेन गृह्यते इत्थं लोकन्यायसिद्धेयं तथापि सर्वनामाव्ययादे-रुपसर्गादिवदक्तपरिमाणत्वेन परिच्छिन्नपरिमाणत्वेन न्यूनेऽधिके वा प्रयत्नविशेषं विना सर्वनामादि बुद्धिर्न कर्तुं शक्यते । अतः कश्चन शास्त्रव्यापारोऽपेक्ष्यते ।अतःशास्त्रेऽस्मिन् तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणरूपोर्थो ज्ञापकसाध्य एवेति "येन विधिः—१.१.७२ इति सूत्रे भाष्ये प्रोक्तं "नेदमदसोरकोः" इत्यकोर्ग्रहणस्य ज्ञापकत्वमपि दर्शितम् । यद्यपि तत्र भाष्ये "तदेकदेशभूतं तद्ग्रहणेन गृह्यते" इति पाठो दृश्यते तथापि तात्पर्यं तुल्यमेव ॥

पतितस्तद्ग्रहणेन गृह्यते' किसी शब्दविशेष के बीच में जो आगया है, वह उस शब्दविशेष के ग्रहण से गृहीत होता है । 'सर्वक' में 'टि' के पहले—'व' के अकार के पहले अकच् हुआ है । इसलिए 'सर्व' शब्द का जहाँ ग्रहण है; वहाँ सर्वक भी लिया जायगा । इसलिए उसे सर्वनामसंज्ञा होगी और सर्वनाम प्रयुक्त कार्य—शी, स्मै, स्मात् आदि आदेश तथा सुडागमादिकार्य जैसे सर्व शब्द से होता था, वैसे सर्वक से भी होगा और 'सर्वके' 'सर्वकस्मै' इत्यादि बनेंगे । इसी तरह 'उच्चकैः' में भी 'उच्चैः' की तरह अव्ययसंज्ञा और अव्ययप्रयुक्त सुप् का लुक् होगा ।

इस परिभाषा के अलग से मानने की क्या आवश्यकता है ? यह तो स्वतः सिद्ध है—जैसे गङ्गा में प्रविष्ट नदी का पानी गङ्गा प्रवाह में मिलने के बाद गङ्गा जल ही माना जाता है; देवदत्ता का उदरस्थ गर्भ देवदत्ता के ग्रहण से गृहीत होता है । इसी तरह 'सर्व' के बीच में आया हुआ अकच् भी सर्वग्रहण से गृहीत हो ही जायगा, यह परिभाषा व्यर्थ है, ऐसा प्रश्न नहीं करना चाहिए; क्योंकि सर्वनाम-त्वादि धर्म, उपसर्गत्वादि की तरह अक्त परिमाण (परिमाण परिच्छिन्न=नपा तुला स्केल या बाट की तरह) हैः—जैसे एक किलो कहने से सवा किलो या ९६ ग्राम नहीं लिया जाता । एक मीटर कपड़े से सवा मीटर का बोध नहीं होता इसी तरह सर्वादि गणमें पठित 'सर्व' शब्दसे 'सर्व' ही लिया जायगा उससे अधिक "सर्वक" या उससे

णेन गृह्यत इति 'येन विधिरि'ति सूत्रे भाष्ये पाठः ॥६०॥

---

"येन विधिस्तदन्तस्य" इति सूत्रस्थंभाष्यमित्थमस्ति "**अकच्स्वरनुम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानं कर्तव्यम्**" (वा० ६) अकज्वतः सर्वके, स्वके । अव्ययविधौ—उच्चकैः, नीचकैः ॥ अम्वतः—भिनत्ति, छिनत्ति ॥ किं पुनः कारणं न सिद्ध्यति इह—तस्य वा ग्रहणं भवति, तदन्तस्य वा । न चेदं तत्,नापि तदन्तम् ॥ (इत्थं सर्वक इत्यादौ शीभावः,उच्चकैरित्यादौ लुग्न स्यात् । भिनत्तीत्यादौ धातोरन्त उदात्तोभवतीत्यन्तोदात्तत्वं न स्यात्—इति कैयटः) "सिद्धं तदन्तान्तवचनात् (वा० ७) सिद्धमेतत् ॥ कथम् ? तदन्तान्तवचनात् "तदन्तान्तस्येति सिद्धम् । किमिदं तदन्तान्तस्येति ? तस्यान्तस्तदन्तः' तदन्तोऽन्तो यस्य तदिदं तदन्तान्तं, तदन्तान्तस्येति ॥

स तर्हि तथा निर्देशः कर्तव्यः ॥ न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः तद्यथा "उष्ट्रमुखमिव मुखमस्य—उष्ट्रमुखः, खरमुखः । एवमिहापि तदन्तः अन्तो यस्य—तदन्तः, तदन्तस्येति ॥ "तदेकदेशविज्ञानाद्वा सिद्धम्" (वा० ८) तदेकदेशविज्ञानाद्वा सिद्धमेतत् । तदेकदेशभूतस्तद्ग्रणेन गृह्यते ॥ तद्यथा— गङ्गा, यमुना, देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । यथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते ॥

विषम उपन्यासः । इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति—य एते संख्यावाचकाः परिमाणशब्दाश्च। पञ्च सप्तेति एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति नैवाधिके भवन्ति, न न्यूने ॥ केचिद् यावदेव तद्भवति तावदेवाहुः—य एते जातिशब्दा गुणशब्दाश्च । तैलं घृतम् इति खार्यामपि

---

कम सर्व् नहीं । इसी तरह विना विशेषयत्न के 'सर्व' में सर्वक बुद्धि नहीं उपज सकती । अतः इस शास्त्र में पूर्वोक्त अर्थ ज्ञापक साध्य ही है, लोकन्याय सिद्ध नहीं । पूर्वोक्त गङ्गादि उदाहरणों के आधार पर सिद्ध तन्मध्यपतित का इस शास्त्र में तद्ग्रहणेन ग्रहण तब होगा; जब कि कोई प्रमाण हो । इसलिए इस परिभाषा को ज्ञापन से सिद्ध करते हैं और लोकसिद्ध अर्थ को परिभाषा का जामा पहनाते हैं ।

"नेदमदसोरकोः" ७.१.११ इस सूत्र में किया गया "अकोः" यह निषेध इस परिभाषा का ज्ञापक है । "अकोः" इसलिए कहते हैं कि 'इमकैः' 'असुकैः' इन प्रयोगों में 'ऐस्' का निषेध न हो । 'तन्मध्यपतित का यदि तद्ग्रहण से ग्रहण नहीं हो तो "नेदमदसोः" सूत्र की इमक+भिस् असुक+भिस् में प्राप्ति ही नहीं है; क्योंकि 'इमक" और "असुक" इन्हें 'इदम्' और 'अदस्' नहीं माना जा सकता । परिभाषा मानने पर तो इस परिभाषा के बलसे 'इदम्' और 'अदस्' से 'इमक' और 'असुक' का ग्रहण हो जाने पर प्राप्त निषेध की निवृत्ति के लिए "अकोः" यह पर्युदास आवश्यक है । 'येन विधिस्तदन्तरस' १.१.७२ इस सूत्र के भाष्य में

ननु 'गतिस्थाघुपाभूभ्य' इति सिचो लुगपासीदित्यादौ पातेरपि स्यादत आह—

**लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥९१॥**

---

भवन्ति द्रोणेऽपि ॥ शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेऽपि द्रव्ये ॥ इमाश्चापि संज्ञा अक्तपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः ? एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—

"तदेकदेशभूतं तद्ग्रहणेन गृह्यते" (वा० ६) इति यदयं "नेदमदसोरकोः" इति सककारयोरिदमदसोः प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम् ? इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यः—तदेकदेशभूतं तद्ग्रहणेन गृह्यत इति । ततः सककारयोः प्रतिषेधं शास्ति ॥ इदं स्थानिवत्सूत्रेण गतार्थम् "सर्वे सर्वपदादेशाः इति (श्लोकवार्ति १.१.२०) न्यायात् ईदृशादेशस्यापि तत्र ग्रहणे 'अकोः' इति प्रतिषेध एव ज्ञापकः । अनुमानिकस्थान्यादेशभावस्य तत्र ग्रहणमिति स्थानिवत् सूत्रे भाष्येऽप्युक्तमेव । प्रपञ्चार्थत्वेन" येन विधिः— इति सूत्रस्थं भाष्यं गृह्यताम् इति शिवम् ॥ ९०

**लुग्विकरणालुग्विकरणयोः— ॥९१॥**

ननु पा पाने इत्यस्माद् भौवादिकाद्धातोर्लुङि तिपि च्लौ तस्य सिजादेशे "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" २.४.७७ इति सिचो लुकि इतश्चेतीकारलोपे अपादित्यत्र यथा सिचो लुग् भवति तथा 'पा' रक्षणे इत्यस्मादादादिकाल्लुङि तिपि च्लौ तस्य सिचि 'अस्तिसिचोऽपृक्ते' ७.३.९६ इतीटि अपासीदित्यात्रापि स्यात् उभयत्र'पा' रूपत्वाविशेषात् इति चेन्न :**'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य**

---

भाष्यकार ने कहा कि 'नेदमदसोरकोः" ७.१.११ सूत्र का 'अकोः' यह ज्ञापन करता है कि तदेकदेशभूतं तद्ग्रहणेन गृह्यते" शब्दविशेष का जो एक देश बन गया है, उसका (एकदेशविशिष्ट का) उस शब्द-विशेष से ग्रहण किया जाता है । यद्यपि भाष्योक्त और नागेशोक्त परिभाषाओं के कलेवर में शाब्दिक भेद हैं तथापि दोनों का तात्पर्य एक ही है येन विधि'— १.१.७२ सूत्र का अविकल भाष्य दुर्गा व्याख्या के अन्त में उद्धृत हैं; वहाँ पूर्वोक्त तत्त्थ्यों की सूक्ष्म चर्चा भी है । इति शिवम् ९०

**लुग्विकरणालुग्विकरणयोः—९१**

"गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" २.४.७७ इस सूत्र से सिच् का लुग् विधान किया गया है; वह भ्वादिगणी ,पा' से जैसे होता है; वैसे अदादिगणी 'पा' से भी हो जायगा, फिर तो पा रक्षणे से बने रूप "अपासीत्" में भी लुग् हो जायगा, इस दोष के निवारण के लिए परिभाषा मानते हैं—**लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य**" जो धातु लुग्विकरण और अलुग्विकरण दोनों हैं; उनका जहां

**अस्याश्च ज्ञापकः'स्वरतिसूति' इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्-निर्देश इति कैयटः—तन्न। साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात् ॥**

---

(ग्रहणम्) इति परिभाषास्वीकारेण यत्र विकरणः शप् न लुप्यते तस्य'पा पाने' इत्य-स्यैव ग्रहणं भवति यत्र तु शब्विकरणो लुप्यते तस्य अदादिस्थस्य 'पा रक्षणे' इत्यस्य ग्रहणं न भवति 'गातिस्थेति' सूत्रस्थेन पाग्रहणेनेत्यदोषात्।

अत्र "स्वरतिसूतिसूयतिधूञूदितो वा" ७.२.४४ इति सूत्रे भाष्ये अथ किमर्थं सूतिसूयत्योः पृथग्ग्रहणं क्रियते। सुवतेर्मा भूत् ॥ अत्रत्यं किमर्थमिति प्रतीकमुपादाय कैयटः प्राह सूग्रहणमेव क्रियताम् किमर्थं सूतिसूयत्योः पृथगग्रहणं क्रियते इति प्रश्ना-शयं वर्णयित्वा तथा सति अननुबन्धकग्रहणे न सानुबन्धकस्येति सुवतेरेव ग्रहणं स्यात् इत्युत्तराशयं प्रकटीचकार सूङ्ग्रहणेऽपि क्रियमाणे लुग्विकरणालुग्विकरणयोरलुग्-विकरणस्यैव ग्रहणमिति सूयतेरेव ग्रहणं स्यात्। अस्याः परिभाषायाश्च 'सूङ्ग्रहणे कर्तव्ये सूतिसूयतीति भेदेनोपादानमेव ज्ञापकमिति।

"स्वरतिसूधूञूदितो वा" इति न्यासेनैव सिद्धे किमर्थं पृथग् ग्रहणमिति न वाच्यम् निरनुबन्धकग्रहणे न सानुबन्धकस्य (प० सं० ८२) इति परिभाषया 'षू प्रेरणे' इति तौदादिकस्यैव ग्रहणं स्यान्नत्वेतयोरादादिकदैवादिकयोः (षूङ् प्राणि-गर्भविमोचने (अदादिः) षूङ् प्राणिप्रसवे (दिवादिः) इत्यनयोः) नचैवं षूङ् इत्येव पठ्यतामिति वाच्यम् "लुग्विकरणालुग्विकरणयोरिति परिभाषया अलुग्विकर-णस्य सूयतेः अर्थात् दैवादिकस्यैव ग्रहणप्रसङ्गात्। इष्यते च अदादिस्थस्यापि सूते-ग्रहणम्। अतः सूतिसूयत्योः पृथगग्रहणं क्रियते। इत्थं सूतिसूयत्योः पृथगग्रहण-मेवास्याः परिभाषायाः ज्ञापकमिति कैयटस्याभिप्राय इति तन्नेति नागेशः लुग्विकर-णपरिभाषामेतां विनापि स्वरतिधूञोः (स्वृ शब्दोपतापयोः"भ्वादिः 'धूञ्कम्पने'

---

पाठ है, वहां अलुग्विकरण का ही ग्रहण हो। भ्वादि दिवादि—आदि और अदादि गणों में पठित धातु का जहाँ निर्देश हो, वहाँ जब यह संशय उपस्थित हो कि दोनों में से किस गण के धातु का ग्रहण किया जाय तो यह मानना चाहिए कि वहाँ भ्वादि-दिवादि आदि का ही ग्रहण है; अदादि का नहीं।

कैयट ने कहा कि इस परिभाषा का ज्ञापक "स्वरतिसूति" ७.२.४४ सूत्र में सूति और सूयति का अलग-अलग निर्देश है, अन्यथा यदि यह परिभाषा न रहे तो 'सूङ्' कहने से ही दोनों का ग्रहण हो जाता पृथक्-पृथक् निर्देश करने की क्या आव-श्यकता थी? परन्तु कैयट का यह कथन ठीक नहीं है, परिभाषा के बिना भी 'स्व-रतिधूञ्' दोनों के साहचर्य से अलुग् विकरण का ही ग्रहण प्राप्त था,वह न हो इस-लिए पृथक् निर्देश किया गया है। अतः पृथक् निर्देश परिभाषा का ज्ञापक नहीं हो सकता।

ध्वनिता चेयं परिभाषा यस्य विभाषा इत्यत्र भाष्ये। तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो 'विभाषा गमहनविदविशाम्' इति सूत्रे शविकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम्। तत्र चो हेतौ। यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छविकरणस्य ग्रहणं न तु हनिसाहचर्यादस्यापि एतत्परिभाषाविरोधादिति तदाशयः॥

---

स्वादिः क्र्यादिश्चेत्यनयोः) साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात्॥

"यस्य विभाषा" ७.२.१५ इत्यत्र भाष्ये इयं ध्वनिता। तथाहि यस्य विभाषा' ७.२.१५ "यस्य विभाषाऽविदे" (वा० १) "यस्य विभाषाऽविदेरिति वक्तव्यम्। इह मा भूत्—विदितः, विदितवानिति। तर्त्हि वक्तव्यम्? न वक्तव्यम्। यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः, शविकरणस्य विभाषा, लुग् विकरणश्चायम्"॥ इति भाष्यम्।

अयं भावः—विदितः विदितवान् इत्यादौ "यस्य विभाषा" यस्य क्वचिद् विभाषया इड् विहितस्तस्य निष्ठायामिड्न स्यादिति निषेधस्तु न भवति "विभाषागमहन्विदविशाम्" ७.२.६८ इति सूत्रेण यस्य विद्धातोः—अर्थात् यादृशस्य विद्धातोः" विभाषया इड्विहितस्तस्यैव (तादृशस्यैव) "यस्य विभाषा" इतीड् निषेधः तत्र च विशिसाहचर्यात् शविकरणस्य विन्दतेः (विद्लृ लाभे इति तुदादेः) ग्रहणम् वेत्तिस्तु लुग्विकरणः (विद् ज्ञाने अदादिः) अस्य न ग्रहणम्। भाष्ये चकारो हेतौ प्रयुक्तः तेनेदं तात्पर्यम् प्रतीयते यत्--यतोऽयं 'वित्तिर्लुग्विकरणः अतो विशिसाहचर्यात् शविकरणस्य ग्रहणं न तु हन्तेः साहचर्याद् वेत्तेरप्येतत्परिभाषाविरोधात्"।

---

यस्य 'विभाषा' ७.२.१५ सूत्र के भाष्य में यह परिभाषा ध्वनित हुई है। वहाँ प्रश्न किया गया है कि "विदितः" में इट् का निषेध क्यों नहीं हुआ? इस प्रश्न का उत्तर देते हुए कहा गया कि जिस उपाधिवाले अर्थात् जिस गणवाले धातु से विभाषया इड् विहित है; उसी उपाधिवाले (उसी विशेषता वाले) अर्थात् उसीगण के धातु से निषेध होगा, "विभाषा गमहन्विदविशाम्" ७.२.६८ में 'विद' धातु 'श' विकरण (तुदादिगणी) लिया गया है, इसलिए तुदादिगणी विद् का ही "यस्य विभाषा" निषेधक होगा, 'विदित' में तो विद् लुग्विकरण है अर्थात् अदादिगणी है। इसलिए इट् का निषेध नहीं हुआ। 'विद' धातु लुग्विकरण है और अलुग् विककरण भी है। इसलिए हन्साहचर्य से लुग् विकरण भी लिया जा सकता था परन्तु इस परिभाषा के साथ विरोध न हो; इसलिए 'विश्' धातु के साहचर्य से अलुग् विकरण (श विकरण) ही लिया जाएगा, लुग् विकरण नहीं। इससे यह परिभाषा ध्वनित हो जाती है।

**अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम्। कण्ठतस्तु भाष्य एषा क्वापि न पठिता ॥**

**'गतिस्था' इति सूत्रे पिबतेर्ग्रहणं कर्त्तव्यमिति वार्त्तिककृता सर्वत्रैव पाग्रहणे लुग्विकरणस्य ग्रहणमिति भाष्यकृता चोक्तम्। 'स्वरतिसूति' इति सूत्रे कैयटेन च स्पष्टमुक्ता ॥९१॥**

---

हन्साहचर्यं यन्न गृहीतं तत्र कारणमियं परिभाषैव। इत्थं सति सम्भवेऽलुग्विकरण-स्यैव ग्रहणं युक्तमिति ध्वनितमिति भावः। तेन च परिभाषा ध्वनितेति भावः ॥

किञ्च "विभाषा गमहनविदविशाम्" ७.२.६८ इत्यत्र हन्साहचर्याग्रहणे विशिसाहचर्यग्रहणे च परसाहचर्यस्य बलीयस्त्वमपि कारणम् इति न वाच्यम् पूर्वो-पस्थितिकत्वेन हन्साहचर्यस्यान्तरङ्गत्वात्। तथापि तत् साहचर्यं यन्न गृहीतं तत्र कारणमलुग्विकरणस्य बलवत्तरत्वमिति ध्वन्यत इति। **अतएवेति**=निरुक्तभाष्य-विमर्शेनालुग्विकरणस्यैव ग्रहणलाभादित्यर्थः ॥

भाष्ये कण्ठतस्तु क्वापीयं न पठिता ॥ गातिस्था"—२.४.७७ इति सूत्रे पिबतेर्ग्रहणं कर्तव्यम् इति वार्तिककृता प्रोक्तम्। भाष्यकृता च सर्वत्रैव पाग्रहणेऽलुग्-विकरणस्य ग्रहणमिति प्रोक्तम्। इत्थं हि तत्रत्यं भाष्यम्—"गापोर्ग्रहणे इण्पिब-त्योर्ग्रहणम्" (वा० १) गापोर्ग्रहणे इण्पिबत्योर्ग्रहणं कर्तव्यम्। इणो यो गाशब्दः पिबते र्यः पा शब्द इति वक्तव्यम्। इह मा भूत्—अगासीन्नटः, उपासीद्धनम् इति ॥ तत्तर्हि वक्तव्यम्? न वक्तव्यम्। इण्ग्रहणे तावत्वार्तम्—निर्देशादेव व्यक्तं 'लुग्-विकरणस्य ग्रहणम् इति ॥ पा ग्रहणे चापि वार्त्तम्—उक्तमेतत्—'सर्वत्रैव पाग्रहणे "अलुग्विकरणस्य ग्रहणम्" इति गातिस्था—२.४.७७ ॥ इति भाष्यम् ॥

---

उक्त भाष्य के परिशीलन से यह सिद्ध होता है कि परिभाषा में "अलुग् विकरणस्यैव" कहना चाहिए। 'सूति' और 'सूयति' का पृथक् निर्देश तो लुग्-विकरणस्यैव" ऐसा ज्ञापन करके भी चरितार्थ हो सकता है, इसलिए उसके द्वारा "अलुग्विकरणस्यैव" यह ज्ञापन नही कराया जा सकता।

भाष्य में यह परिभाषा स्पष्ट शब्दों में कहीं भी नहीं कही गयी है। "गाति-स्था" २,४.७७ सूत्र में "पिबतेः" याने भ्वादि में पठित पा धातु का ग्रहण करना चाहिए यह वार्तिककार ने कहा। इस पर भाष्यकार ने कहा कि इस प्रकार कहने की कोई आवश्यकता नहीं है; क्योंकि 'पा' ग्रहण में सर्वत्र अलुग्विकरण (भ्वादि-गणी पा का) का ही ग्रहण होता है। 'स्वरतिसूति' सूत्र में कैयट ने अलवत्ता स्पष्ट-शब्दों में यह परिभाषा कही है। कैयट की वाक्यावली 'दुर्गा' व्याख्या के पृष्ठ (५९४) पर उद्धृत है। उसका सारांश ऊपर हिन्दी भाष्य पृ० (५९४) पर दिया गया है। इति शिवम्। ९१।

ननु प्रजिघाययिषतीत्यादौ 'हेरचङि' इति विधीयमानं कुत्वं न स्यादत आह—

'स्वरति सूति'—७,२.४४ इति सूत्रे कैयटेन च स्पष्टमुक्तेयम् । स कैयटग्रन्थः ५६४ पृष्ठे समुद्धृतः दुर्गायां तत एव द्रष्टव्य इति ।

यत्तु साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते लुग्विकरणस्य ग्रहणार्थं सूतिसूयत्योः पृथग्ग्रहणमुपपन्नमिति नेदं तज्ज्ञापकमिति नागेशेनोक्तं तन्न "द्विस्त्रिश्चतुरिति कृत्वोर्थे" ८.३.४३ इति सूत्रे कृत्वोर्थग्रहणाज्ज्ञापकादनित्यायाः साहचर्यपरिभाषाया (प० ११२) इष्टवशादिहानाश्रयणेन ज्ञापकत्वसिद्धेरिति परिभाषाभास्करः (परिभाषासंग्रह----पृ० ४४४) इति शिवम् । ६१ ।

## प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ६२

प्रजिघाययिषतीति । प्र पूर्वकात् हि गतौ वृद्धौ च (स्वादिः) इत्यस्माद्धातोर्णिचि वृद्धौ आयादेशे प्रहायि इत्यस्य धातुत्वे प्रहाययितुमिच्छतीत्यर्थे 'सन्प्रत्यये' इटि "सन्यङोः" ६.१.६ इति प्रथमस्यैकाचो 'हाय्' इत्यस्य द्वित्वेऽभ्याससंज्ञायां हलादिशेषे ह्रस्वे कुहोश्चुः ७.४.६२ इति अभ्यासहकारस्य झत्वे "अभ्यासे चर्च" ८.४.५४ इति जत्वे 'सन्यतः' ७.४.७६ इतीत्वे 'अभ्यासात् परस्य हिनोतेर्हस्य कुत्वंस्यान्न'तु चङि 'इत्यर्थकेन'हेरचङि' ७.३.५५ इति कुत्वं प्रजिघाय् इ इस इत्यवस्थायां सस्यषत्वे धातुत्वे लटि तिपि शपि गुणेऽयादेशे 'अतो गुणे' ६.१.६७ इति पररूपे प्रजिघाययिषतीति सिद्ध्यति । अत्र हेरचङीति विधीयमानं कुत्वं न सम्भवति, नचाभ्यासात्परस्य हिनोतेः हस्य सत्वाच्चङ्परत्वस्य चासत्त्वात कुत्वं प्राप्नोत्येवेति वाच्यम् कुत्वविधायक-

### प्रकृतिग्रहणे············ग्रहणम् ॥६२॥

प्रपूर्वक "हि गतौ वृद्धौ च" (स्वादि) धातु से णिच् प्रत्यय, अनुबन्धलोप, वृद्धि, आय् आदेश, प्र हायि बना, उसको धातुसंज्ञा, सन् प्रत्यय, इट् का आगम, 'सन्यङोः' ६.४.६ से' 'प्रथम एकाच्' 'हाय्' शब्द को द्वित्व हुआ, अभ्याससंज्ञा, हलादिशेष ह्रस्व, 'कुहोश्चुः' ७.४.६२ से अभ्यास के हकार को झकार आदेश हुआ, 'अभ्यासे चर्च' ८.४.५४ से झकार को जकार हुआ, 'सन्यतः' ७.४.७६ से इत्व हुआ, 'प्रजिहाय् इ इस' इस अवस्था में "हेरचङि" ७.३.५६ से हकार को कुत्व होने पर प्रजिघायइ इस' बना, फिर धातुसंज्ञा, लट् तिप्, शप्, णिच् के इकार को गुण, अयादेश, षत्व, अतोगुणे ६ १.६७ से पररूप करने पर 'प्रजिघाययिषति' प्रयोग बनता है ।

यहाँ 'हेरचङि' से कुत्व नहीं होगा; क्योंकि वह अभ्यास से पर 'हि' धातु के 'ह' को कुत्व करता है, यहाँ 'हि' धातु नहीं है, किन्तु णिप्रत्यय विशिष्ट 'हायि' को बाद में धातुसंज्ञा हुई है । 'सन्' प्रत्यय की प्रकृति 'हायि' धातु है, 'हि' नहीं ।

**प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥९२॥**

**अचङीति प्रतिषेध एवास्या ज्ञापकः। इयं च कुत्वविषयैव। 'हेरचङी'ति सूत्रे भाष्ये स्पष्टेयम् ॥ ९२॥**

---

स्यास्याङ्गाधिकारस्थत्वादभ्यासात् परस्य हिनोतेरङ्गावयवस्य हस्य कुत्वमित्यर्थे यत्प्रत्ययनिरूपिता हिनोतेरङ्गसंज्ञा तत्प्रत्यये परे एव कुत्वमित्यस्य प्रत्यासत्त्या लाभेनात्र यन्निरूपितं हिनोतेरङ्गत्वं तन्निरूपितमेव द्वित्वं यत्रास्ति तत्रैव कुत्वमित्यर्थस्य सम्भवेन 'प्रजिघाययिषति' इत्यत्राङ्गसंज्ञा णिच्प्रत्ययनिमित्ता द्वित्वं च सन्प्रत्ययनिमित्तकमिति कुत्वाप्राप्तेः। प्रत्यासत्तिस्वीकारादेव जिहायकीयिषतीत्यत्र हस्य कुत्वाभावःसिद्ध्यति। हिनोतेः ण्वुलि हायकेति, ततः इच्छार्थे क्यचि हायकीयेति ततः सनि हाय् इत्यस्य द्वित्वादिना जिहायकीयिषतीति सिद्ध्यति। अत्राङ्गसंज्ञा ण्वुल्प्रत्ययनिमित्ता न तन्निमित्तकं द्वित्वम् इति कुत्वाभाव इति चेन्न **प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति** परिभाषास्वीकारेणादोषात्। हिग्रहणेन हायित्यस्य ग्रहणात् तस्य च सन्निमित्तकाऽङ्गसंज्ञाद्वित्वयोरुभयोः सत्वान्न दोषः॥

हेरचङीत्यत्र "अचङीति" प्रतिषेधोऽस्याः ज्ञापकः। तद्धि अजीहयदित्यत्र ण्यन्ताद्हिनोतेश्चङि निष्पन्नरूपे कुत्ववारणाय क्रियते। यदीयं परिभाषा न स्यात् तदा ण्यन्तस्य धात्वन्तरत्वात् केवलस्य च णिज्व्यवहितस्याभ्यासनिमित्तकप्रत्ययपरत्वाभावात्कुत्वप्राप्तिरेव नास्तीति अचङीतिनिषेधो व्यर्थः स्यात्। व्यर्थः सन् परिभाषां ज्ञापयति। तेन जिघाययिषतीति सिद्धम्। ज्ञापकस्य विशेषापेक्षत्वं स्वीकृत्य यदि ण्यधिकस्यापि कुत्वमिति ज्ञाप्यते तदेयं कुत्वविषया। अतएव आदयतीत्यत्र अद् भक्षणे इत्यस्माण्णिचि निष्पन्ने 'अदिप्रभृतिभ्यः शपः २.४.७२ इति शपो लुग् न भवति॥

---

इसीलिए परिभाषा मानी गयी—'**प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्**'। अर्थात् प्रकृति के ग्रहण में णिप्रत्यय विशिष्ट का भी ग्रहण होगा। इसीलिए 'हेरचङि' में जिस, हि, प्रकृति का ग्रहण है, उसके ग्रहण से ण्यधिक (हायि) का भी ग्रहण हुआ और कुत्व की सिद्धि हुई।

'हेरचङि' में किया गया 'अचङि' प्रतिषेध इस परिभाषा का ज्ञापक है। 'अजीहयत्' में चङ् के परे रहते हकार को कहीं कुत्व न हो जाय; इसलिए सूत्र में 'अचङि' यह प्रतिषेध किया गया। भला' यदि यह परिभाषा न हो तो ण्यन्त'हायि' धातु में वह कुत्व क्यों प्राप्त होगा जो कि 'हि' को विहित है। इस तरह 'अजीहयत्' में स्वयं ही कुत्व की अप्राप्ति थी, तब कुत्व को रोकने के लिए जो 'अचङि' यह प्रतिषेध किया गया वह परिभाषा का ज्ञापन करता है।

परिभाषा मानने पर 'अचङि' प्रतिषेध सार्थक हो गया; क्योंकि इस परिभाषा के बल से 'हि' के ग्रहण से 'हायि' का ग्रहण हो जायगा। इस तरह 'हि' के 'ह' को विहित कुत्व कहीं 'हायि' के 'ह' को न हो जाय इसलिए 'अचङि' प्रति-

ननु युष्मभ्यमित्यादौ भ्यमितिच्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोप एत्वं स्यादत आह—

अङ्गवृत्ते पुनर्वृत्तावविधिः ॥९३॥

---

हेरचङि ७.३.५६ इति भाष्ये स्पष्टेयमिति। तथाहि हेरचङि ७.३.५६ अचङीति किमर्थम्? प्राजीहयद्दूतम्। "हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्" (वा० १) 'हेश्चङि प्रतिषेधोऽनर्थकः। किं कारणम्? अङ्गान्यत्वात्। ण्यन्तमेतदङ्गमन्यद्भवति। लोपे कृते नाङ्गान्यत्त्वम्। स्थानिवद्भावादङ्गान्यत्वमेव।"ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वविज्ञानार्थम्" (वा २ एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र ण्यधिकस्य कुत्वं भवतीति। किमेतस्य ज्ञापने प्रयोजनम्? प्रजिघाययिषतीत्यत्र कुत्वं सिद्धं भवति॥ इति॥

अत्र कैयटः—**कुत्वविधानार्थमित्यनेन** भाष्येणास्य कुत्वमात्रविषयता, नान्यविषयतेति ध्वन्यते। "सन्लिटोर्जेः" ५.३.५७ इति कुत्वमपि प्रजिगाययिषतीत्यत्रास्यैव फलमित्याहेति शिवम् ९२।

**अङ्गवृत्ते पुनर्वृत्तावविधिः। ९३।**

ननु युष्मद् शब्दात् भ्यसि 'भ्यसो भ्यम्' ७.१.३० इत्यत्र 'भ्यम्' इतिच्छेदे भ्यसो भ्यमि कृते 'शेषे लोपः' ७.२.९० इत्यन्त्यस्य दकारस्य लोपे युष्म+भ्यम् इत्यत्र बहुवचने झल्येत् ७.३.१०३ इत्येत्वं स्यादित्यतः परिभाषामवतारयति—अङ्गवृत्ते इति अङ्गे=अङ्गाधिकारे **वृत्तं**=निष्पन्नं यत्कार्यम् तस्मिन् सति पुनरन्य-

---

षेध आवश्यक हो गया।

यह परिभाषा 'हेरचङि' ७.३.५६ सूत्र के भाष्य में स्पष्ट है। वहाँ 'अचङि' को ज्ञापक मानते हुए यह कहा गया कि—ज्ञापकं त्वत्यत्र ण्यधिकस्य कुत्वविधानार्थम्। 'प्रजिघाययिषति' में कुत्वसिद्धि को प्रयोजन बताया गया। कैयट ने भाष्य के शब्द "कुत्वविधानार्थम्" के आधार पर यह बताया कि इस परिभाषा का विषय केवल 'कुत्व' है। 'प्रजिगाययिषति' में 'सन्लिटोर्जेः' ७.३.५७ से जो कुत्व हुआ; वह भी इसी परिभाषा का प्रसाद है। इति शिवम्। ९२।

**अङ्गाव् पुन र्वृत्तावविधि ॥९३॥**

'युष्मभ्यम्' इत्यादि प्रयागों में "भ्यसोभ्यम्" ७.१.३० में 'भ्यम्' छेद मानने से 'भ्यस्' को जब 'भ्यम्' किया और "शेषे लोपः" ७.२.९० में "शेषे" का अर्थ आत्व यत्व निमित्तेतर विभक्ति के परे' ऐसा जब किया गया तब युष्मद्+भ्यम् ऐसी स्थिति में अन्त्य (दकार) का लोप करने पर 'बहुवचने झल्येत्' ७.३.१०३ से एत्व प्राप्त होता है, इस दोष की निवृत्ति के लिए परिभाषा मानते हैं—**"अङ्गवृत्ते पुनर्वृ तावविधिः" यहाँ अङ्ग** का अर्थ है अङ्गाधिकारे। वृत्तम् का सम्पन्नम्, वृत्तौ का

अङ्गेऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः ।।

एषा च 'ज्यादादीयस' इत्याद्विधानेन ज्ञापिता । अन्यथेकारलोपेना 'कृत्सार्व' इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अतएव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा ।।

---

स्याङ्गकार्यस्य वृत्तौ प्रवृत्तौ अविधिः=अविधानं भवतीति परिभाषाया अक्षरानुगुणार्थः अङ्गकार्ये कृते पुनर्नाङ्गं कार्यमिति तात्पर्यम् ।।

ज्ञापितेति । अयमनयोः प्रशस्यः इति विग्रहे ईयसुन्प्रत्यये "ज्य च" ५.३.६१ इति प्रशस्यस्य ज्यादेशे ज्य ईय इति स्थिते "ज्यादादीयसः" ६.४.१६० इति सूत्रेण ईयस ईकारस्य 'आदेः परस्य' १.१.५४ इत्यादेशे सवर्णदीर्घे ज्यायस् इत्यस्य कृत्तद्धित—१.२.४६ इति प्रातिपदिकत्वे स्वादिकार्ये ज्यायानिति सिद्ध्यति । अत्र आद्विधानं व्यर्थम् लोपविधानेऽपीकारलोपे 'अकृत्सार्व:'—७.४.२५ इति दीर्घेण ज्यायानिति सिद्धेः । व्यर्थं तदाद्विधानं ज्ञापयति अङ्गवृत्ते पुनर्वृत्तावविधिरिति । ज्ञापितायां तु एकस्याङ्गाधिकारे वृत्तस्य लोपरूपस्य कार्यस्य करणानन्तरमन्यत्

---

प्रवृत्तौ और अविधिः का अविधानम् । अङ्गाधिकार में कथित एक कार्य के हो जाने पर अन्य अङ्गाधिकारी कार्य नहीं होता है । "युष्मभ्यम्" में "शेषे लोपः" ७.२.९० से लोप रूप अङ्गाधिकारी कार्य करने पर पुनः एत्व रूप अङ्गाधिकारी कार्य नहीं हुआ । "ज्यादादीयसः" ६.४.१६० इस सूत्र के द्वारा किया गया आत्व का विधान इस परिभाषा का ज्ञापक है । अन्यथा 'अयमनयोरतिशयेन प्रशस्यः' यह इन दोनों में ज्यादा प्रशंसनीय हैं इस अर्थ को बताने के लिए जब प्रशस्य शब्द से 'इयसुन्' प्रत्यय करते हैं प्रशस्य को 'ज्य च' ५.३.६१ से ज्य आदेश हो जाता है, तब "ज्यात् ईयसः" से यदि ईयस के ईकार का लोप कर दिया जाता और "अकृत्सार्वधातुकयोदीर्घः" ७,४.२५ से ज्य को दीर्घ कर लेते तो 'ज्यायान्' बन जाता, आत्व विधान इस परिभाषा का ज्ञापन करता है । परिभाषा मानने पर तो एक अङ्गकार्य—'ई' लोप---'करने पर द्वितीय अङ्ग कार्य-दीर्घ-नहीं हो सकता था। इसलिए "ज्यादादीयसः" ६.४.१६० से ज्य+ईसस् ऐसी स्थिति में ईयस् के ई के स्थान में 'आत्व' करना सार्थक हुआ . ज्ञापकपरक भाष्य के प्रामाण्य से यह कहा जा सकता हैं कि यह परिभाषा विभिन्नस्थानों में प्राप्त होने वाले अङ्गकार्यो में भी लगता है । अर्थात् "ज्यायान्" में लोप करते तो उसका स्थानी 'ई' होता और दीर्घ का स्थानी 'ज्य' घटक अ है; तथापि इस परिभाषा की प्रवृत्ति वहां दिखायी गयी है । इससे सिद्ध होता है कि जहाँ एक अङ्गाधिकारी कार्य का स्थानी कोई अन्य होगा और द्वितीय अङ्गाधिकारी कार्य का स्थानी कोई अन्य होगा, वहां भी यह परिभाषा लगेगी ।

**इयं चानित्या द्वयोः इति निर्देशात् । अनित्यत्वबललभ्यार्थमादायैव 'भ्यसो भ्यम्' इति सूत्रे भाष्ये निष्ठितस्येति पठितम् ।**

---

कार्यम् "अकृत्सार्वधा"—इति दीर्घरूपं न स्यादिति आद्ग्रहणं ज्यायानित्यत्रात्त्वाया-वश्यकमितिस्वांशे चरितार्थम् ॥

**अत एव**=ज्ञापकताप्रतिपादनपरकभाष्यस्वारस्यात् । आद्विधानस्य ज्ञापकता भाष्ये प्रतिपादिता । अतो ज्ञायते यत्राङ्गकार्यद्वयस्यस्थानिनौ भिन्नौ तत्रापीयं प्रवर्तते । तेन भिन्नस्थानिकाङ्गकार्यविषयाप्येषेति । ज्यात् परस्येयस ईकारस्यात्त्वम् इत्यर्थकस्य "ज्यादादीयसः" ६.४.१६० इत्यस्यात्त्वरूपाङ्गकार्यस्य स्थानी ईकारः, "अजन्ताङ्ग-स्य दीर्घःस्याद् यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः" इत्यर्थकस्य 'अकृत्सार्वधातु-कयोर्दीर्घः ७.४.२५ इत्यस्य दीर्घरूपाङ्गकार्यस्य च स्थानी ज्यघटकाकार इत्युभयोः स्थानिभेदस्य स्पष्टत्वात् ॥ ज्ञापकतापरं ज्यादादीयसः ६.४.१६० इति सूत्रस्थं भाष्य-मत्रैवाग्रे उद्ध्रियते ।

इयमनित्या "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्" ५.३.९२ इत्यत्र द्वयो-रिति निर्देशात् । "द्वयोः" इत्यस्य सिद्धिः त्यदादीनामः ७.२.१०२ इत्यत्त्वरूपाङ्ग-कार्ये कृते "ओसि च" ७.३.१०४ इत्यपरेण एत्वरूपेणाङ्गकार्येणैव जायते इति स निर्देशोऽस्या अनित्यत्वस्य ज्ञापकः । अनित्यत्वबललभ्यार्थमादायैव 'भ्यसो भ्यम्' ७.१.३० इति सूत्रे निष्ठितस्येति पठितम् । तस्य परिनिष्ठितस्येत्यर्थः । तेन यदङ्गकार्य-प्रवृत्तिमन्तरेणैव प्रयोगस्य परिनिष्ठितत्वं (साधुत्वं) तदेवाङ्गकार्यमङ्गकार्ये कृते न प्रवर्तते इति बोधितम् । 'युष्मभ्यम्' इत्यस्य परिनिष्ठितत्वमेत्वकार्यं विनैव जायते । अत एत्वरूपमङ्गकार्यमत्र भ्यमादेशरूपाङ्गकार्ये कृते न प्रवर्तत इति । द्वयोरित्यस्य परिनिष्ठितत्वमेत्वं विना नैव भवति । अतस्तत्रैत्वं प्रवर्तत एव । अत्र प्रवृत्यप्रवृत्योः

---

'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' ५.३.९२ इस सूत्र में आए हुए "द्वयोः" इस निर्देश को देखकर मालूम होता है कि यह परिभाषा अनित्य है । अन्यथा (यदि अनित्य न होती तो) एक अङ्ग कार्य (त्यदाद्यत्व) करने के बाद दूसरा अङ्ग-कार्य (एत्व) कैसे हो पाता ? जो अनित्य होता है; उसकी प्रवृत्ति वहाँ नहीं होती जहाँ उसकी प्रवृत्ति से अनिष्ट रूप बनने का डर रहता है । अनित्यत्व के बल से लभ्य पूर्वोक्तार्थ को लेकर ही भ्यसो भ्यम् ७.१.३० सूत्र के भाष्य में "निष्ठितस्य" इस शब्द का प्रयोग किया गया । अर्थात् "अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य" इस परिभाषा के शरीर में निष्टितस्य शब्द का प्रयोग किया गया । 'निष्ठितस्य' का अर्थ 'परिनिष्ठितस्य' है । इस तरह सिद्ध हुआ कि जिस अङ्ग कार्य की प्रवृत्ति के बिना हीं परिनिष्ठित प्रयोग बन जाता है, वही अङ्गकार्य एक अङ्गकार्य करने पर प्रवृत्त नहीं होता ।

केचित्त्वनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते। अत एव 'ज्ञाजनोर्जा' ज्यादादीयस' इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः। स न वक्तव्य इत्येव प्रयोजनमुक्तं न तु लक्ष्यसिद्धरूपम्। तदुक्तं भ्यसो भ्यमि' त्यत्राभ्यमितिच्छेदः। शेषे लोपश्चान्त्यलोप एव। 'अतो गुणे' इति पररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम्। एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं 'भ्यसो भ्यमि'ति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥९३॥

---

कारणमनित्यत्वमेव परिभाषायाः। 'भ्यसो भ्यम्' ७.१.३० इति सूत्रस्थं भाष्यमित्थ-मस्ति—

(भाष्यम्) किमयं भ्यम्शब्दः, आहोस्विदभ्यम्शब्दः? कुतः सन्देहः? समानो निर्देशः। किञ्चातः। यदि तावद्'भ्यम्'—शब्दः शेषे लोपश्चान्त्यस्यैत्वं प्राप्नोति। अथाभ्यम्शब्दः शेषे लोपश्च टिलोप उदात्तनिवृत्तिस्वरः प्राप्नोति ॥ यथेच्छसि तथास्तु। अस्तु तावद्भ्यम्शब्दः शेषेलोपश्चान्त्यस्य। ननु चोक्तमेत्त्वं प्राप्नोतीति। नैष दोषः। 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्ये'ति न भविष्यति ॥ अथवा पुनरस्त्वभ्यम्शब्दः(शेषे) लोपश्च टिलोपः। ननु चोक्तमुदात्तनिवृत्तिस्वरः प्राप्नोति नैष दोषः। उक्तमेतदादौ सिद्धम् इति ॥

केचित्तु अनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते। अतएव "ज्ञाजनयोर्जा" ७.३.७९, "ज्यादादीयसः" ६.४.१६० इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः स न वक्तव्य इत्येव प्रयोजनमुक्तं न तु लक्ष्यसिद्धिरूपम्।

---

किसी ने इस परिभाषा को निष्फल मानते हुए कहा कि इस परिभाषा से किसी लक्ष्य की सिद्धि नहीं होती है। इसीलिए 'ज्ञाजनोर्जा '७.३.७९ ज्यादादीयसः ६.४.१६० इन दोनों सूत्रों में इस परिभाषा का ज्ञापन कराकर भाष्यकार ने पूछा कि इस परिभाषा का क्या प्रयोजन है? तो केवल "पिबति" में 'पुगन्तलघूपधस्य च' ७.३.८६ से प्राप्त गुण का प्रतिषेध ही फल बताया। यह कहा कि "पिबति" इत्यादि में "पुगन्तघूपधस्य च" से जिस गुण की प्राप्ति होती है, उसे रोकने के लिए "पिबतेर्गुणप्रतिषेधः" इस प्रकार से जो वार्तिक बनाना पड़ता है, वह वार्तिक इस परिभाषा के मानने पर नहीं बनाना पड़ता है। उस प्रयोजन का भी "पिबादेश" को अदन्त मानकर खण्डन कर दिया गया। कहा गया कि 'पिब' आदेश अदन्त है। अतः उपधा में लघु इकार न होने से गुण नहीं होगा। इस तरह इस परिभाषा के तथाकथित एक प्रयोजन का भी खण्डन कर दिया। अन्य किसी लक्ष्य की सिद्धि का प्रयोजन के रूप में उल्लेख नहीं किया। अन्ततो गत्वा परिभाषा की अनावश्यकता स्पष्ट रूप में,तब कही गयी;जबकि"भ्यसो भ्यम्"७.१.३० में"अभ्यम्"यह छेद माना। इस पक्ष में भी "शेषे लोपः" में "शेषे" में सप्तमी, सम्बन्ध की अविवक्षा में, किन्तु षष्ठ्यर्थ में मानने की आवश्यकता नहीं है। "शेषे लोपः" ७.२.९० से अन्त्यलोप

(इत्थमस्याः फलाभावो दर्शितः। केवलं पिबतेर्गुणप्रतिषेधाय यद् वार्तिकं "पिबतेर्गुणप्रतिषेधरूपमेकं कृतं तन्न कृतं भवतीत्येव वार्तिकाकरणजन्यलाघवमात्रप्रयोजनं सिद्धं भवतीति अनयैव पिबादेशरूपाङ्गकार्ये कृते पुनः लघूपधगुणरूपाङ्गकार्यस्य निषेधेन गुणापत्तिवारणसंभवात्। तथा च वर्तत एवैकं प्रयोजनमिति न वाच्यम् पिबादेशोऽदन्तस्तेन पिब+अ इतिस्थिते लघूपधत्वाभावेन गुणाप्राप्तेः। अत्रहि उपधायां बकारः, न हि इकार इति। एवञ्च तदपि प्रयोजनमन्यथासिद्धमिति परिभाषायां प्रयोजनाभावः) यच्च युष्मभ्यमितिप्रयोजनं दर्शितम् तदपि न भ्यसो भ्यमित्यत्राभ्यमितिच्छेदं कृत्वा भ्यसोऽभ्यमित्यादेशं विधाय युष्मद्+अभ्यम् इतिस्थिते शेषे लोपः ७.२.९० इत्यनेनान्त्यस्य दकारस्यैव लोपे झल्परत्वाभावेनैत्वाप्राप्त्या 'अतो गुणे' ६.१.९७ इति पररूपे कृते युष्मभ्यमिति सिद्धेः। युष्मभ्यमित्यस्य परिभाषां विनैव सिद्धिरित्यन्यत्र ज्ञाजनोर्जा ७.३.७९ सूत्रस्योद्योते निरूपितम्। न चैवं 'ज्यादादीयसः' ६.४.१६०, इति 'ज्ञाजनोर्जा' ७.३.७९ इति सूत्रद्वयस्थं ज्ञापनपरं भाष्यं विरुद्धं स्यादिति वाच्यम् तत्भाष्यस्यैकदेश्युक्तत्वेन क्षतेरभावात् इत्याहुः। केचिदित्यादिना प्रदर्शितं मतं कस्येति जिज्ञासायां नागेशभिन्नस्येति बहवः। कोऽपि लेखकः 'केचित्' 'अन्ये' इत्यादिना स्वभिन्नानेव प्रस्तौति नत्वात्मानम् इति पायगुण्डेमतम्।

केचिदित्यादिना प्रदर्शितं मतं भाष्यतत्त्वविदामस्तीति। **केचित्**=भाष्यतत्त्वविदः तेनेदं मतं स्वस्यैवेति।

ज्ञापकतापरं भाष्यं यथा—"ज्यादादीयस. ६.४.१६० किमर्थं ज्यात्परस्येयस आत्वमुच्यते, न लोपः प्रकृतः, सोऽनुवर्तते। का रूपसिद्धिः। ज्यायान्। अकृद्यकार इति दीर्घत्वं भविष्यति॥ एवं तर्हि सिद्धे सति यज्ज्यात्परस्येयस आत्व शास्ति, तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाऽङ्गवृत्ते पुनवृत्तावविधिरिति। किमेतस्य ज्ञापने प्रयोजनम्। पिबेर्गुण प्रतिषेधश्चोदितः स न वक्तव्यो भगति॥ अत्र कैयटः—पाघ्रादि-

---

(दलोप) करने पर "अतोगुणे" ६.३.९७ से पररूप करने पर "युष्मभ्यम्" यह रूप बन जाएगा। अर्थात् 'अभ्यम्' छेद मानने पर भी "शेषे लोपः" से टिलोप करने के लिए सूत्र में प्रोक्त 'शेषे' का 'शेषस्य' 'मपर्यन्ताच्छेषस्य=अर्थात् अद्भाग का लोप हो, इस कष्ट कल्पना की आवश्यकता नहीं है जिससे कि उस कष्ट—कल्पना से बचना इस परिभाषा का फल माना जा सके। इस तरह "ज्ञाजनयोः""ज्यादादीयसः" इन दोनों सूत्रों में इस परिभाषा के ज्ञापन की चर्चा करनेवाले भाष्य ग्रन्थ, और "भ्यसो भ्यम्" इस सूत्र के परिभाषा प्रतिपादक भाष्यग्रन्थ को सिद्धान्ती न मानकर एकदेशी की उक्ति माननी चाहिए। यह मत नागेश का अपना हैं। क्योंकि उद्योत में बिना "केचित्"शब्द का उल्लेख किये ऐसा ही विचार प्रगट किया गया है' इसीलिए अनेक टीकाकारों ने 'केचित्' का अर्थ "भाष्यतत्वविदः" किया है। केवल पायगुण्डे महोदय ने 'केचित्' का अर्थ 'अन्ये' किया है। इति शिवम्॥ ९३॥

## संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९४ ॥

सूत्रेण यदा पिबोदेशो हलन्तः क्रियते तदा गुणप्रसङ्गः । यदा त्वदन्तस्तदागुणप्राप्त्य-भावः ॥

ज्ञाजनोर्जा ७.३.७९ इति सूत्रस्थं भाष्यं यथा—"दीर्घोच्चारणं किमर्थम् न ज्ञाजनोर्ज इत्येवोच्येत ? का रूपसिद्धिः ? जानाति, जायते । अतो दीर्घो यञि (७.३.१०१) इति दीर्घत्वं भविष्यति । एवं तर्हि सिद्धे यद्दीर्घोच्चारणं करोति तज्-ज्ञापयत्याचार्यो भवत्येषा परिभाषा "अङ्गवृत्ते पुनर्वृत्तावविधिरिति । किमेतस्य ज्ञापने प्रयोजनम् ? पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ॥

'केचित्तु' इत्यादिना नागेशो यत्तत्त्वं प्रकटयामास, तद्ज्ञाजनोरिति सूत्रस्यो-द्योते निर्दिष्टवान् तत्रान्यमतत्वेन तस्योल्लेखो न दृश्यते । अतो ज्ञायते इदं तस्य स्व-मतमेव । तथाहि—"अत्रत्यमेतज्ज्ञापनपरं ज्यादादीयस इतिसूत्रस्थं च भाष्यमेक-देश्युक्तिः । अदन्तत्वेनैव गुणप्रतिषेधवार्तिकप्रत्याख्यानसंभवेनास्य यत्नस्य गुरुत्वात् । भ्यसोभ्यम् इति सूत्रस्थं च भाष्यमत्रत्यतदेकदेशिमतेनैवेति बोध्यम् । फलान्तरं तु नास्या उपलभ्यते । नन्वनेन दीर्घेऽजानां भो इत्यादावनन्त्यस्य प्लुतो न स्यात् । 'अत आत्' इत्येव सिद्धे तत्रत्यदीर्घग्रहणस्य प्लुतव्यावर्तकताया हरदत्तादिभिरुक्तत्वात् । अतएव पचामि भो इत्यादौ न प्लुतः । नचानन्त्यस्य पदस्य टेरिति तदर्थात् पचामी-त्यादौ तत्प्राप्त्यभावेन किमर्थं दीर्घग्रहणेन तन्निराकरणमिति वाच्यम्, दीर्घग्रहणसाम-र्थ्येनान्त्यविषय एव टेरित्यस्य सम्बन्धादिति चेन्न ज्ञापकपरभाष्यप्रामाण्येन तत्रत्य-दीर्घग्रहणस्य स्पष्टार्थतया तदर्थकत्वाभावकल्पनात् ।

ननु ज्ञाजनयोरित्यस्य ज्ञापकत्वासंभवः, 'ज' विधाने जानातीत्यत्र दीर्घघटित-रूपासम्भवात्, न चातोदीर्घ इति दीर्घेण सिद्ध्यतीति वाच्यमू तत्र 'तिङि' इत्यनुवृत्तेः इति चेन्न तत्र "तुरुस्तु"—७.३.९५ इति सूत्रात् सार्वधातुकग्रहणमनुवर्तते; न तिङीति । अत एव आने मुक् पूर्वान्तः कृतो न परादिः दीर्घप्रसङ्गादिति कैयटोक्तेः । एवं ज्ञापकत्वसंभवेऽपि फलाभावादेकदेश्युक्तिरिति शिवम् । ९३ ।

### संज्ञापूर्वकविधेः—९४

**संज्ञापूर्वकविधेरनित्यत्वम्** (प. सं. ९४) इत्यत आरभ्य "नञ् घटितमनित्यम् (प० सं० ९८) इति परिभाषां यावन्निर्दिष्टानां पञ्चानां परिभाषाणां भाष्यानुक्त-त्वात्स्वासम्मतत्वं ध्वनयन्नाह "यत्तु" इति ।

---

### संज्ञापूर्वकविधेः—९४

यहाँ नागेश पहले पाँच भाष्यानुक्त परिभाषाओं का उल्लेख करते हैं और भाष्यानुक्त होने के कारण उनकी अमान्यता प्रगट करते हैं, उनमें पहली परिभाषा है—(१) "**संज्ञापूर्वकविधेरनित्यत्वम्**" संज्ञापूर्वक विधि अनित्य होती है । अर्थात्

**इयं च विधेयकोटौ संज्ञापूर्वकत्व एव । तेन स्वायम्भुवमित्यादि सिद्धम् ॥६४॥**
**तथा नि लोडित्येव सिद्ध आनिग्रहणात्—**

**आगमशास्त्रमनित्यम् ॥ ९५ ॥**

**तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ॥६५॥**

---

'ओर्गुणः' ६.४.१४६ इत्यत्र ओरोदित्येव वाच्यम्, गुणग्रहणं कृत्वा तन्मुखेन विधानेऽप्यान्तरतम्यादुकारस्य स्थाने ओकारस्यैव विधानेन प्रक्रियालाघवात् द्रविड-प्राणायामसदृक्षगौरवपरिहाराय च तस्यैवौचित्यात् । तथा अकृत्वा गुणग्रहणं यत्कृतम् तदेव व्यर्थं सज्ज्ञापयति—**संज्ञापूर्वकविधेरनित्यत्वमिति** । इयं च विधेयकोटौ संज्ञा-पूर्वक एव प्रवर्तते अर्थात् यत्र संज्ञाशब्दः विधेयकोटौ प्रविष्टस्तत्रैवायं प्रवर्तते अतएव यथाकथञ्चित् संज्ञापूर्वकत्वे नास्याः प्रवृत्तिः ॥

अस्याः फलम्='स्वायंभुवम्' इत्यत्र ओर्गुण इति गुणाभावः । तस्यानया संज्ञापूर्वकत्वेनानित्यबोधनादिति । स्वयंभुव अपत्यमित्यर्थेऽण्प्रत्ययः ।

व्याडिपुरुषोत्तमदेवसीरदेवैरेषा परिभाषा स्वीकृता तत्रास्याः स्वरूपं—संज्ञा-पूर्वकविधिरनित्य इति (व्याडिपरि०भा०वृत्ति—५३, पुरु० परि-वृत्ति **८३, सीरदे०** प० पृ० ७१)

नागेशेन भाष्यानुक्तत्वादियं न स्वीक्रियते अतएवोक्तम्—इत्यादि भाष्यानुक्तं बोध्यम् । स्वायम्भुवमिति प्रयोगस्तु लोकेऽसाधुरेव ।

अतएव सि० कौमुद्यां दृश्यते—उप्रत्ययनिमित्तको लघूपधगुणः संज्ञापूर्वको-विधिरनित्य इति न भवतीत्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति, क्षेणोति । (तनादिप्रकरणे तनादिभ्यस्तथासोः २.४.७६ पृ० ४७६ सि०कौमु०)

॥ इति शिवम् ६४ ॥

**आगमशास्त्रम् ६५**

एवम् "**आगमशास्त्रमनित्यमिति** (६५) परिभाषा व्याडिपुरुषोत्तमदेवसीरदेवैः

---

वह विधि, जिसकी प्रवृत्ति में संज्ञा की अपेक्षा है, अनित्य होती है । इस परिभाषा का ज्ञापक "ओर्गुणः" ६.४.१४६ में गुण ग्रहण है । "ओरोत्" 'उकार को ओकार आदेश हो तद्धित के परे रहते' ऐसा मानने पर भी "लाघवम्" इत्यादि प्रयोग बनही जाता था, गुण ग्रहण से यह परिभाषा ज्ञापित होती है । इसलिए 'स्वयम्भुवम्' यह प्रयोग बना । 'स्वयम्भू' शब्दसे अण् प्रत्यय होने पर 'ओर्गुणः' से गुण नहीं हुआ; क्योंकि यह विधि, संज्ञापूर्वक होने से अनित्य है । यदि 'ओरोत्' करते तो यह विधि संज्ञापूर्वक नहीं होने से अनित्य नहीं होती । फिर तो गुण होकर "स्वायम्भवम्" बन जाता । यह परिभाषा वहीं लगती है, जहाँ विधेयकोटि में संज्ञा का उल्लेख हो । (व्याडि (५३) पुरुषोत्तमदेव (८३)और सीरदेव (७१) ने इसे स्वीकार किया है । नागेश 'स्वायंभुवम्' को लोक में असाधु मानते हैं ।) इति—६५

**आगमशास्त्रम्—६५**

"नि लोट्" करने से ही "अन्तर्भवाणि" में णत्व हो जाता था 'आनि

स्वीकृता (व्याडि प० सूचनम् ७६, पुरु० लघु प० वृ० ८४ सीर० वृहत् प० वृ० ९८)

व्याडिराह—"यदयं थोऽन्थः (७.१. ८७) इत्याह तदेवास्या ज्ञापकम्। अन्यथा "थो नुड्" इति नुडागमेनैव सिद्धे 'न्थ' विधानं व्यर्थं स्यात् ततश्चेयमस्ति परिभाषा" आगमशास्त्रमनित्यमिति। पचान' इत्यपि भवति। 'पचमान' इति प्राप्ते 'आनेमुक्' (७.२.८२) इति न भवति। आगमस्यानित्यत्वात्।

पुरुषोत्तमदेवस्तु—"अनित्यमागमशासनम्" इत्याह। आगमविधायकं शासनं शास्त्रमनित्यम्। तेन "अपि शाकं पचानस्य" इति 'आने मुग्' (७.२.८२) इति मुग् न भवति। 'सागरं तर्तुमिच्छति" इति च इट् न भवति। ज्ञापितश्चायमर्थः "स्तोः श्चुनाश्चुः" (८.४.४०) इत्यत्र नुममकृत्वा स्तोरिति निर्देशेन। अन्यथा हि तत्र स् च तुश्चेति समाहारद्वन्द्वे ङसि नुमि स्तुन इति निर्देशः स्यात्।

सीरदेवस्तु "अनित्यमागमशासनम्" इत्याह, फलमपि "शाकं पचानस्येत्यत्र मुगभावः सागरं तर्तुमिच्छतीत्येव च प्राह। केवलं ज्ञापकविषये तस्य पुरुषोत्तमदेवात् स्वपूर्ववर्तिनो मतभेदो दृश्यते स हि आनि लोट् (८.४.१६) इत्यत्रागमसहितस्य नेर्ग्रहणस्य ज्ञापकं स्वीकरोति, घोर्लोपो लेटि वा (७.३.७०) इत्यत्रत्यं 'वा' ग्रहणमपि ज्ञापकं भवितुमर्हतीति च तन्मतम्।

अत्र नागेशोऽपि सीरदेवमतमेवोद्धरति। अतः स कथयति "निलोट्" इत्येव सिद्धे "आनि लोट्" ८.४.१६ इत्यत्र आनि ग्रहणात् आगमशास्त्रमनित्यम् (९५) (इति ज्ञाप्यते तेन सागरं 'तर्तुकामस्येत्यादि सिद्धम् इति। अयं भावः 'प्रभवाणि' इत्यादौ निलोडित्येव वक्तव्ये आड्विशिष्टस्य "यदागमा" (परि०सं० १२) इत्यनेनैव सिद्धेः आड्ग्रहणं व्यर्थं सदागमशास्त्रमनित्यमिति ज्ञापयति। नचैवमुपसर्गस्य 'ने' ग्रहणं स्यादिति तद्व्यावृत्यर्थमाड्विशिष्टस्य ग्रहणमिति वाच्यम् "नेर्गद" इति सूत्रे पुनर्ग्रहणात्। तेन तर्तुकाम इत्यत्र इडागमो न, अनया तस्यानित्यत्वबोधनात् अत्र नागेशः—भाष्यानुक्तत्वादेषा न स्वीकार्या। तर्तुकामस्येत्यादेरसाधुत्वमेव। भाष्यानुक्तज्ञापितार्थो न साधुत्वनियामको मानाभावात्। किञ्च ज्ञापितेऽप्यानीत्यस्य न स्वांशे चारितार्थ्यम्, आगमशून्यप्रयोगस्याप्रसिद्धेः। आग्रहणं लोड्ग्रहणवदिति स्वीकरोति।

इति शिवम् ॥ ९५ ॥

---

लोट्' ८.४.१८ में 'आनि' ग्रहण से यह जानते हैं कि "**आगमशास्त्रमनित्यम्**" आगम शास्त्र अनित्य होता है। इसलिए 'सागरं तर्तुकामस्य" इत्यादि में "तर्तुम्" में इट का आगम नहीं हुआ। यह **दूसरी परिभाषा है**। इसे भी व्याडि (७६) पुरुषों० (८४) सीरदेव (९८) ने स्वीकार किया है। परन्तु नागेश ने अस्वीकार।

तथा तनादिपाठादेव सिद्धे 'तनादिकृञ्भ्यः' इति सूत्रे कृञ्ग्रहणात्—

**गणकार्यमनित्यम् ॥ ९६ ॥**

तेन न विश्वसेदविश्वस्त इत्यादि सिद्धम् ॥९६॥

तथा चक्षिङो ङित्करणात्—

---

**गणकार्यमनित्यम् ९६**

एवं "गणकार्यमनित्यम्" इति परिभाषाऽपि पुरुषोत्तमदेवसीरदेवाभ्यां (पुरु० लघु परि० वृत्ति० १०९ सीरदे० वृहत् परि० वृत्ति० ११८) स्वीकृता नागेशेन भाष्यानुक्ततया न स्वीक्रियते ।

तथाहि—पुरुषोत्तमदेवः—गणकार्यमनित्यम् (लघु परिवृत्ति प० सं० १०९) अयमर्थः—'क्षमूष् सहने' इत्यस्य भिदादित्वादेवाङि सिद्धे(षिद्भिदादिभ्योऽङ् इत्यनेन) षित्करणेन ज्ञापितः । तेनादादित्वाच्छब् लुकोऽभावात् "न विश्वसेत् पूर्वविरोधितस्य" मण्डपे शयामि तत्परम्" इत्यादि सिद्ध्यति । शयामीति परस्मैपदं तु अनुदात्तङित आत्मनेपदम् (१.३.१२) इति अनुदात्तेल्लक्षणमात्मनेपदं व्यभिचरति अस्यार्थस्य सूचितत्वात् (अनुदात्तेतश्चक्षिङो ङित्करणेन सूचितत्वात्) इत्याह ।

सीरदेवस्तु—गणकार्यमनित्यम् (वृहत् परिभाषा वृत्ति० ११८) तेन श्वसः शीङश्च "अदिप्रभृतिभ्यः शपः" (२.४.७२) इति—शब्लुकोऽभावात् "न विश्वसेत् पूर्वविरोधितस्य" मण्डपे शयामि किमतः परमित्यादि सिद्ध्यतीति । एषापि भाष्यानुक्ततया नागेशेनास्वीकृता लोके "विश्वसेत्" "शयामी" त्यादीनां चासाधुत्वमेवेति तन्मतम् ।

इति शिवम् ॥ ९६

---

**गणकार्यम्—९६**

तीसरी परिभाषा है "**गणकार्यमनित्यम्**" गण का उल्लेख करके जिन कार्यों का विधान किया गया हैं, वे अनित्य होते हैं । अन्यथा तनादि में पाठ होने से ही काम चलता "तनादिकृञ्भ्य उः" ३.१.७९ में कृञ् का ग्रहण क्यों किया जाता ? परन्तु पाणिनि को डर था कि गणप्रयुक्त कार्य अनित्य होता है । इसलिए तनादि मान कर 'उ' प्रत्यय का विधान अनित्य हो सकता है । इसलिए कृञ्ग्रहण करते हैं कि कृञ् धातु से 'उ' प्रत्यय अवश्य हो । इस परिभाषा के मानने का फल यह हुआ कि 'न विश्वसेदविश्वस्तम्" में 'विश्वसेत्" बना यहाँ उक्त परिभाषा के बलसे "अदि प्रभृतिभ्यः शपः" २.४.७२ से शप् का लुक् नहीं हुआ । यह परिभाषा पुरुषोत्तम देव (१०९) और सीरदेव (११८) से स्वीकृत है परन्तु नागेश से अस्वीकृत ।

## अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम् ॥ ९७ ॥

**तेन स्फायन्निर्मोक इत्यादि सिद्धम् ॥९७॥**

**तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात्—**

## नञ्घटितमनित्यम् ॥ ९८ ॥

**तेन नेयङुवङ् इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्धमिति-तन्न। भाष्येऽदर्शनात्। भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावात्। भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारयणादवदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात्।**

---

**अनुदात्तत्वलक्षणम् ९७**

एवम् अनुदात्तेतश्चक्षिङो ङित्करणेन" अनुदातेत्प्रयुक्तस्यात्मनेपदस्यानित्यत्वज्ञापनं पुरुषोत्तमदेवेन स्वीकृतम् (पु० दे० परि० लघु वृत्ति परि० सं० १०९) उद्धरणं गणकार्यमनित्यमित्यत्र दर्शितम) सीरदेवेनापि गणकार्यमनित्यमिति परिभाषां निरूपयता "चक्षिङोऽनुबन्धद्वयमात्मनेपदमनित्यत्वे ज्ञापक" मित्युक्तम्। परिभाषारूपेण ताभ्यामपि न स्वीकृतेयं तथापि ज्ञापकरूपेण स्वीकृतैव। नागेशस्तु "अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति न स्वीकरोति; स्फायीवृद्धावित्यनुदात्तेतः 'स्फाय्' धातोर्लटः परस्मैपदलक्षणः शत्रादेश इति फलन्तु न स्वीकरोति; तस्य भाष्यानुक्ततयाऽसाधुत्वात्।

इति शिवम् ॥ ९७ ॥

**नञ्घटितमनित्यम् ९८**

अनुदात्तं पदमेकवर्जम् ६.१.१५८ इत्यत्र वर्जमिति परित्यज्य विनार्थक-नञा एकशब्दस्य समासेऽनुदात्तंपदमनेकमिति न्यासे कृतेपि 'यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते, तमेकमचं वर्जयित्वा (विना) शेषं तत्पदमनुदात्ताच्कं स्यादित्य-

---

**अनुदात्तत्वलक्षणम्—९७**

चक्षिङ् धातु अनुदात्तेत् था ही। अनुदात्तेत् होने से ही आत्मनेपद हो जाता, आत्मनेपद के लिए जो ङित् किया गया। इससे जानते हैं कि "**अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्**" अनुदात्तेत् मानकर जो आत्मनेपद होता है, वह अनित्य होता है। इसीलिए "स्फायन्निर्मोकसन्धिः" में अनुदात्तेत्—स्फायी साधु से शतृ-प्रत्यय हुआ जो परस्मैपदी धातुओं से हुआ करता है। यदि यह नियम न रहता तो स्फायी धातुसे शतृ प्रत्यय न होता। (पुरुषोत्तमदेव और सीरदेव ने इसे ज्ञापक रूप में स्वीकार किया है। पु० प० वृ० १०९ सी० प० ११८) नागेश को यह परिभाषा अमान्य है)

**नञ्घटितमनित्यम्—९८**

"अनुदात्तं पदमेकवर्जम्" ६.१.१५८ की जगह "अनुदात्तं पदमनेकम्" करते और अनेकम् "न एकम्" ऐसा नञ् समास मानते और नञ् का अर्थ 'बिना' करते,

र्थेन "गोपायतं नः" इत्यादौ 'सनाद्यन्ता धातवः' ३.१.३२ इति धातुत्वे 'धातोः' ६.१.१६२ इति यकाराकारस्योदात्तत्वे कृते तं विना (तं वर्जयित्वा) शिष्टस्यानुदात्तत्वे सिद्धे वर्जग्रहणाज्ज्ञापकान्नञ्घटितमनित्यमिति परिभाषोद्भवतीति।

परिभाषेयं व्याडिपुरुषोत्तमसीरदेवकृतपरिभाषासूचनादिग्रन्थेषु नोपलभ्यते यद्यपि; तथापि कालापपरिभाषासूत्रेषूपलभ्यते—द्रष्टव्या परिभाषासंग्रहग्रन्थे ७८ तमे पृष्ठे कालापपरिभाषासूत्रसंग्रहे ३७ संख्यकपरिभाषा) किन्तु तत्र परिभाषा स्वरूपमित्थमस्ति—नञा निर्दिष्टमनित्यमिति। नागेशादनन्तरकालवर्तिना श्रीमच्छेषाद्रिसुधीन्द्रेण रचिते परिभाषाभास्करेऽपीयं परिभाषा व्याख्याता स्वीकृता च (परि सं० ८५ परिभाषा संग्रह ४४६)।

नञ्घटितस्यानित्यत्वस्वीकारादेव "नेयङुवङ्"—१.४-४ इत्यस्यानित्यत्वं सिद्धम्। तेन "हापितः क्वासि हे सुभ्रु बह्वेवं विललाप सः" इति भट्टिप्रयोगे 'हे सुभ्रु' इत्यत्र उवङ्स्थानिनः स्त्रीशब्दभिन्नस्य नित्यस्त्रीलिङ्गस्यापि सुभ्रू शब्दस्य "यूस्त्र्याख्यौ नदी" १.४.३ इति नदीसंज्ञा सिद्धा, नदीत्वाच्च अम्बार्थनद्योर्ह्रस्वः ७.३.१०७ इति ह्रस्वे 'हे सुभ्रु' इति ह्रस्वोकारघटितं रूपं सिद्धम्। अनया परिभाषया नञ्घटितस्य 'नेयङुवङ्' इत्यस्यानित्यत्वसम्पादनात्। तत्र 'अस्त्री" ति नञ्घटितं पदमस्त्येव। कालिदासोऽप्याह विमानना सुभ्रु कुतः पितुर्गृहे (कुमारसंभव ५४३) इति

इत्थं स्वीकृताऽसौ परिभाषा नागेशेन नाङ्गीकृता अतएव प्रोक्तं तेन "तन्न" इति। अनङ्गीकारे कारणमाह—भाष्येऽदर्शनात्। अयं "संज्ञापूर्वकेति' आगमशास्त्रमनित्यम् इति, "गणकार्यमनित्यम्" "अनुदात्तत्वेति" "नञ्घटितमनित्यम्" इत्यासां सर्वासामपि परिभाषाणामस्वीकारे हेतुः। भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे प्रमाणाभावात्। भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात्।

---

वर्जग्रहण जो किया गया है उससे जानते हैं कि नञ्घटित अनित्य होता है 'नञ्घटितमनित्यम्'। "नेयङुवङ्स्थानावस्त्री" १.४.४ यह सूत्र "अस्त्री" में नञ्घटित है। इसलिए अनित्य है। अतः हे सुभ्रु में नदीसंज्ञा का निषेध नहीं हुआ, नदीसंज्ञा होनेसे "अम्बार्थनद्योः" ७.३.१०७ से ह्रस्वता हुई और हापितः क्वासि हे सुभ्रु इत्यादि प्रयोग बने। यह परिभाषा कालापपरिभाषा सूत्रों में पठित है। (कालाप परिभाषा सू० ३७ परिभाषा संग्रह पृ० ७८)

नागेश का कथन है कि ये पाँच परिभाषाएँ जो मानते हैं, उनके मत से मैं सहमत नहीं हूँ; क्योंकि ये परिभाषाएँ भाष्य में नहीं देखी गयी हैं। भाष्य में अनुक्त किन्तु पूर्वरीति से ज्ञापित अर्थों के साधुता-नियामकत्व में कोई प्रमाण नहीं है। अर्थात् ऐसे ज्ञापित अर्थ जिनकी चर्चा भाष्य में नहीं है, प्रयोगों के साधुत्व के नियामक नहीं हो सकते; क्योंकि सर्वाधिक प्रामाणिक ग्रन्थ भाष्य में उनके विषय में कोई संकेत नहीं है। भाष्य में जिनके प्रयोजनों पर विचार नहीं किया गया है, सूत्र के उन भागों, अक्षरों या शब्दों से मनगढन्त अर्थ के ज्ञापन तथा प्रयोजन की

किञ्च ज्ञापितेऽप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः आङ्ग्रहणं लोड्ग्रहणवदिति बोध्यम्। अत एव 'घोर्लोपो लेटि वा' इति सूत्रे वेति प्रत्याख्यातम्। लोपेऽप्याट्पक्ष आटः श्रवणं भविष्यति दधादिति, अटि दधदिति। आगमशास्त्रस्यानित्यत्वे त्वाट्यसति दधादित्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन

---

इदानीम् आगमशास्त्रमनित्यमित्यधिकृत्य वदति किञ्चेत्यादि। "आनि लोट्" ८.४.१६ इत्यत्रोक्तस्य आनीत्यस्य परिभाषायां ज्ञापितायामपि स्वांशे चारितार्थ्याभाव एव दृश्यते आडागमशून्यप्रयोगस्य तादृशस्याप्रसिद्धेःयत्र किल परिभाषायां स्वीकृतायामानीत्यस्याभावे दोषः स्यात्। नचैवमाङ्ग्रहणस्य किम्फलमिति वाच्यम् तस्य तत्रत्यलोड्ग्रहणवत् फलाभावात् स्पष्टार्थमात्रफलत्वस्योभयत्र सत्वात् लोड्ग्रहणं यथा तव मते व्यर्थं तथा आगमशून्यप्रयोगाभावादाङ्ग्रहणमपि मम मतेन यदि व्यर्थमस्ति, तर्हि अस्तु, का क्षतिः। अतएव=परिभाषाया "आगमशास्त्रमनित्यम्" इत्यस्या अभावादेव "घोर्लोपो लेटि वा" ७.३.७० इति सूत्रे 'वा' इति प्रत्याख्यातम्। एतेन "सीरदेवोक्तं तस्य ज्ञापकत्वं खण्डितम्। ज्ञापकतास्वीकर्तु रयमभिप्रायो यत् "यदि" आगमशास्त्रमनित्यं न स्यात्तदा धाधातो र्लेटि तिपि श्लौ द्वित्वेऽभ्यासत्वादिकार्ये दधाति इत्यत्र 'घोर्लोपो लेटि' इत्यत्र 'वा' ग्रहणाभावे नित्यलोपविधानेऽपि 'लेटोऽडाटौ' ३.४.९४ इत्यटि 'इतश्च लोपः परस्मैपदेषु ३.४.९७ इतीकारलोपे "दधद्रत्नानि दाशुषे" इति,लोपे कृते आटि दधादिति च सिद्धे वा ग्रहणं व्यर्थं स्यात्। अतो 'वा' ग्रहणं व्यर्थं सत् परिभाषां ज्ञापयति। परिभाषायां स्वीकृतायान्तु आगमस्य अट आटश्चानित्यत्वात् नित्यलोपविधाने आटोऽभावे दधादिति न स्यात् अटोऽभावे च दधदित्यपि न स्यादतो 'वा' ग्रहणं चरितार्थं स्वांशे इति।

---

कल्पना करने के बजाय यह मानना अधिक अच्छा या उचित है कि उन सूत्रांशों का दृष्ट प्रयोजन नहीं है; किन्तु उनके पारायण (पाठ) आदि से अदृष्ट प्रयोजन (पुण्य लाभ) आदि होता है।

एक बात और है कि "**आगमशास्त्रमनित्यम्**" इसे मानने पर भी उसके ज्ञापक 'आनि लोट्' ८.४.१६ में 'आनि' ग्रहण सार्थक नहीं हो सका। "आडुत्तमस्य पिच्च" ३.४.९२ से आट् का आगम नहीं हुआ हो, ऐसा कोई प्रसिद्ध प्रयोग नहीं है। आडागम रहित प्रयोग के अभाव में व्यावर्त्य के अभाव के कारण जैसे मेरे मत में आङ् ग्रहण व्यर्थ है; उसी तरह आपके मत में लोट् ग्रहण व्यर्थ है। इसलिए उनका अदृष्ट प्रयोजन ही मानना पड़ेगा। परिभाषा के अभाव के कारण ही 'घोर्लोपो लेटि वा' ७.३.७० इस सूत्र में पठित 'वा' का भाष्यकार ने प्रत्याख्यान कर दिया। यह सूत्र (दा और धा) घुसंज्ञक धातु के आ का लोप करता है; लेट् लकार के परे रहते विकल्प से। इसलिए धा धातु से लेट् लकार में तिप् श्लु श्लु के

तत्प्रत्याख्यानासङ्गतिः स्पष्टैव। एतेन यत्कैयटे केचिदित्यादिनास्यैव वाग्रहणस्य तदनित्यत्वज्ञापकतोक्ता। सापि चिन्त्या। प्रत्याख्यानपरभाष्यविरोधात्॥

---

नागेशस्तु परिभाषाया यतोऽभावः, अतो भाष्ये तत्रत्यं 'वा' ग्रहणं प्रत्याख्यातम्। यदीयं परिभाषा स्यात् तदागमशास्त्रस्यानित्यत्वात् आटोऽसत्वे दधादित्यस्य (अटोऽसत्वे दधदित्यस्य च) असिद्ध्या 'वा' ग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासंगतिः स्यात्॥

कैयटेन "वा" ग्रहणस्यागमशास्त्रमनित्यम् इत्यस्यानित्यत्वज्ञापनार्थत्वं मतान्तरपरतया, यद्व्यवस्थापितं तदपि खण्डयति एतेन यत् कैयटे इत्यादिना।

तथाहि "घोर्लोपो लेटि वा" ७.३.७० इति सूत्रे भाष्यम्:—'वे'ति शक्यमकर्तुम्। कस्मान्न भवति तदग्निरग्नये ददात्। अस्त्वत्र लोपः। आटः श्रवणं भविष्यति। तेनोभयं भविष्यति। दधद्रत्नानि दाशुषे। दधात्।।

अत्र कैयटः—भाष्यकारेण 'वे'ति प्रत्याख्यातम्। केचित्त्वनित्यमागमशासनमित्यस्य ज्ञापकं वा-ग्रहणं वर्णयन्ति अनित्यत्वात्तस्याट्यसति ददादिति न स्यादिति

---

परे द्वित्वादि करके 'लेटोऽडाटौ' ३.४.९४ से आट् तथा "ति" के इकार का 'इतश्च' ३.४.७७ से लोप होने पर दधात् बना। यहाँ 'घोर्लोपो लेटि वा' से आ का लोप हो गया तो 'दधात्' और 'लेटोऽडाटौ' से अट् होने पर 'दधत्' बना। विकल्प पक्षमें "दधात्" बना। भाष्यकार ने कहा कि यदि लोप नित्य हो तौ भी लोप के पश्चात् 'लेटोऽडाटौ से अट् करने से 'दधत्' बनेगा ही। इसलिए 'वा' ग्रहण का प्रत्याख्यान कर दिया। यदि "आगमशास्त्रम् अनित्यम्" यह परिभाषा होती तब तो "लेटोऽडाटौ" ३.४.९४ से विहित अट् और आट् का आगम अनित्य होगा। ऐसी स्थिति में नित्य लोप करने पर 'दत्त्' या (झरोझरि से लोप हो तो) दत् बनेगा; 'वा' ग्रहण रहने पर दधात् और दत् बनेगा इस तरह फल भेद होने से भाष्यकार का प्रत्याख्यान असंगत हो जायगा। फलैक्य में ही प्रत्याख्यान होता है, फलभेद में नहीं। एक जलपात्र से दूसरे जलपात्र को गतार्थ बताया जा सकता है किन्तु एक वस्त्र से एक जलपात्र का प्रत्याख्यान नहीं किया जा सकता, क्योंकि दोनों के फल भिन्न भिन्न हैं। इस तरह यदि यह परिभाषा मानते हैं तो 'वा' के अभाव में आगम होने के कारण 'आट्' के नहीं होने पर 'दधात्' नहीं बनेगा। इसलिए 'वा' ग्रहण की अत्यन्त आवश्यकता है। भाष्यकार ने जो प्रत्याख्यान किया है, वह असंगत हो जायगा। इस तरह भाष्यकार का 'वा' ग्रहण का किया गया प्रत्याख्यान इस परिभाषा का अभाव सिद्ध करता है।

इस तरह कैयट ने "केचित्" इत्यादि ग्रन्थ के द्वारा पूर्वोक्त 'वा' ग्रहण को परिभाषा की अनित्यता का जो ज्ञापक माना वह भी सोचनीय ही है, क्योंकि भाष्यकार ने उसे निष्फल समझकर प्रत्याख्यान कर दिया है।

**तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च ॥ चक्षिङो ङकारस्यान्तेदित्त्वाभावसंपादनेन चारितार्थ्याच्च ॥६८॥**

---

तत्सिद्धये वा-ग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयति ॥

अयं कैयटग्रन्थोऽयुक्तः वाग्रहणप्रत्याख्यानपरकभाष्यविरोधात् । यदि हि तदनित्यत्वाय स्यात्, भाष्ये तथा वदेत् न च तत् प्रत्याचक्षीत ।

सम्प्रति गणकार्यमनित्यमित्यस्य ज्ञापकतां दूषयति तनादिसूत्रे इत्यादिना । तनादित्वादेव सिद्धे तनादिकृञ्भ्य उः ३.१.७९ इति सूत्रे कृञ्ग्रहणस्य गणकार्यस्यानित्यत्वज्ञापकत्वं यदुक्तम् तदपि न भाष्ये कृञ्ग्रहणस्य प्रत्याख्यानात् ।

तथाहिः—किमर्थं करोतेः पृथग्ग्रहणं क्रियते, न 'तनादिभ्य' इत्येवोच्येत ? अन्यानि तनोत्यादिकार्याणि मा भूवन्निति । कानि? अनुनासिकलोपादीनि ॥ दैवरवताः किंशुकाः । अनुनासिकाभावादेवानुनासिकलोपो न भविष्यति । इदं तर्हि तनादिकार्यं माभूत् "तनादिभ्यस्तथासोः" इति ॥ ननु च भवत्येवात्र "ह्रस्वादङ्गात्" इति । तेनैव यथा स्यात्, अनेन मा भूदिति ॥ कः पुनरत्रविशेषः—तेन वा सति? अनेन वा ? तेन सति सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावः सिद्धो भवति । अनेन पुनः सति चिण्वद्भावो न स्यात् । अनेनापि सति सिद्धश्चिण्वद्भावः । कथम् ? विभाषा लुक् । यदा न लुक्, तदा सिज्लोपः । तत्र सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावो वा भविष्यति **तनादित्वात्कृञः सिद्धम्, सिज्लोपे च न दुष्यति । चिण्वद्भावे न दोषः स्यात्, सोऽपि प्रोक्तो विभाषया** ॥ "एवञ्च सूत्रे कृञ्ग्रहणं प्रत्याख्यातम् । एतेन कृञ्ग्रहणं गणकार्यानित्यत्वज्ञापनार्थम् । तेन च न विश्वसेदित्यादिसिद्धिरित्यपास्तम् ॥ न विश्वसेदित्याद्यसाध्वेव" इति **उद्योते** ॥

"अनुदात्तेत्त्वलक्षणमिति परिभाषाया अभावं साधयितुमुपक्रमते—**चक्षिङो ङकारस्यान्त** इति अयं भावः चक्षिङ्धातोरनुदात्तेतोऽपि ङित्त्वकरणमनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम् । अन्यथा अनुदात्तेत्त्वादेवात्मने पदे सिद्धे ङित्करणं व्यर्थं स्यात् इति यदुक्तं तन्न संभवति परिभाषायां ज्ञापकत्वासंभवात् । चक्षिङो ङकारस्तु धातोरन्त इदित्वाभावसम्पादनद्वारेण "इदितो नुम्धातोः" इति नुमापत्तिनिराकरणाय चरितार्थ इति न तस्य परिभाषाज्ञापकत्वम् ॥

इति शिवम् ॥ ९८ ॥

---

"तनादिकृञ्भ्य उः" ३.१.७९ सूत्र में 'कृञ्' का भी प्रत्याख्यान कर दिया है वहाँ कहा गया है "तनादित्वात् कृञः सिद्धम्" इत्यादि ।

इस लिये "**गणकार्यमनित्यम्**" यह नहीं माना जा सकता । चक्षिङ् के ङकार को जो "अनुदात्तेल्लक्षणमात्मनेपदमनित्यम्" इस परिभाषा का ज्ञापक माना गया है, वह भी असंगत ही है, क्योंकि "ङकारानुबन्ध" 'चक्षिङ्' धातु को 'इदित्' होने से बचाता है । यदि 'चक्षि' करते तो अन्तिम इकार की इत्संज्ञा होने से धातु इदित् बन जाता और वैसा होने पर 'इदितो नुम्धातोः' ७.१.५८ से नुम् हो जाता । इस

एवमेव—

आतिदेशिकमनित्यम् ॥ ९९ ॥
सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०० ॥

इत्यादि भाष्यानुक्तं बोध्यम्। स्वायम्भुवमित्यादि लोकेऽसाध्वेवेत्यत्यत्र विस्तरः॥१००॥

---

आतिदेशिकमनित्यम् ९९

"आतिदेशिक मनित्यम्" ९९ इति परिभाषाऽपि व्याडिपरिभाषापाठे (सं० ९५) उपलभ्यमाना नागेशेन नाङ्गीक्रियते। परिभास्वीकर्तु रयमभिप्रायो यत्—"लोटो लङ्वत्" ३.४.८५ इत्यतिदेशः परिभाषामेतां ज्ञापयति। अन्यथा ङ्लोडिति विधानेनैव लोटस्तामाद्यादेशसलोपरूपे ङित्कार्ये सिद्धे लङ्वदित्यतिदेशविधानं व्यर्थं स्यात्। व्यर्थं सदतिदेशविधानं परिभाषां ज्ञापयति। तेन 'यान्तु' 'वान्तु' इत्यादौ "लङः शाकटायनस्य" ३.४.१११ इति जुस् न, 'जुह्वतु' 'विदन्तु' इत्यादौ "सिजभ्यस्तविदिभ्यश्च" ३.४.१०९ इति जुस् नेति। तन्नेति नागेशः "विदो लटो वा" ३.४.८३ इत्यतो 'वा' ग्रहणमनुवृत्य व्यवस्थितविभाषाश्रयणान्न जुस्। यदि च प्रोच्यते :—

देवत्रातो गलो ग्राह इति योगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥ इति

व्यवस्थितविभाषापरिगणनविरोध इति तदा "लङः शाकटायनस्य" ३.४.१११ इति सूत्रे नित्यं ङितः ३.४.९९ इति सूत्रात् ङित इत्यनुवृत्यैवेष्टसिद्धे लङ्ग्रहणमतिरिच्यते, लुङि सिचा, लृङि स्यप्रत्ययेन च व्यवधानात् लिङि तु

---

तरह 'ङ्' अनुवन्ध का प्रयोजनान्तर होने से उसे परिभाषा का ज्ञापक नहीं माना जा सकता। यद्यपि "चक्ष" करने पर नुमापत्ति का प्रश्न नहीं उठाया जा सकता; तथापि भाष्य में अकारानुबन्ध की चर्चा नहीं की गयी है। अतः वैसा प्रश्न उठाना भाष्य के प्रतिकूल होने से त्याज्य ही है।

(यहाँ "दुर्गा" व्याख्या में पूर्वोक्त परिभाषाओं के स्वीकर्ताओं का मत और नागेश के द्वारा कथित भाष्यादिग्रंन्थ विस्तार से उद्धृत किया गया है) इति शिवम् ९८।

आतिदेशिक मनित्वम् ॥९९॥
सर्वविधिभ्यो लोपविधिरिड्बिधिश्च बलवान् ॥ १०० ॥

इसी तरह "आतिदेशिकमनित्यम् (व्याडि परि० पाठ-९५) सर्वविधिभ्यो लोपविधिरिड्विधिश्व बलवान् (व्या० ५६, ५७ पुरु० ९१, सी० १११,) ये दोनों परिभाषाएँ भाष्य में अनुक्त हैं। जो अतिदेश से प्राप्त है वह अनित्य होता है। "लोटो लङ्वत्" ३.४.८५ यह अतिदेश 'आतिदेशिकमनित्यम्' का ज्ञापक माना गया है। अन्यथा "ङ्लोट्" इस तरह कहने पर भी लोट् में ङित् कार्य का सम्पादन

"झेर्जुस्" ३.४.१०८ इति जुसो विहितत्वाच्च ङित इत्यस्य लङ्येव पर्यवसानात् ततो लङ्ग्रहणं विभज्यते, तस्य च नियमार्थकत्वेन "लङेव यो लङ्" तस्यैव झेर्जुस्, न तु लङ्वद्भावेन यो लङ् तस्येति नियमेन लङ्वद्भावपक्षे जुस्वारणासंभवेऽपि "ङ्लोट" इति विधाने वारणासम्भवात् "ङ्लोड्" विधानेनासिद्धेः अतिदेशस्यावश्यकत्वेन ज्ञापनासंभवात् ।

अतिदेशपक्षे 'सिजभ्यस्त'—३.४.१०६ इति सूत्रे सिच्साहचर्यादभ्यस्तादप्यनादिष्टङित्ववतो लकारस्य स्थाने जायमानस्य झेर्जुस् इत्यर्थस्वीकारेण सर्वत्र दोषाभावसिद्धे र्नास्याःकिमपि फलमित्यस्वीकार एव ज्यायानिति ।

इति शिवम् ॥ ६६ ॥

## सर्वविधिभ्यो लोपविधिः १००

एवमेव "सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्" इति परिभाषाऽपि भाष्यानुक्तत्वान्नागेशेन न स्वीकृता ।

अयं भावः "सर्वविधिभ्यो लोपविधिर्बलवान्" इति परिभाषा व्याडि—पुरुषोत्तमदेव—सीरदेवादिभिः स्वीकृता )व्याडि प० सूचन प० सं० ५७, पुरु० दे० लघुपरिवृत्ति ६१, सीर दे०प० वृहद्वृत्ति १११)

तत्र व्याडिः—"सर्वविधिभ्यो लोपविधिर्बलवान्" । ५७ ॥ इह शास्त्रे सर्वविधिभ्यो लोपविधिर्बलवान् भवति । कथं ज्ञायते। यदयं 'प्रत्ययलोपे प्रत्ययलक्षणम्" (१.१.६२) इत्याह । कथं कृत्वा ज्ञापकम् । एतत्सूत्रं नारब्धव्यम् । कथं प्रत्ययाश्रयाणि कार्याणि भविष्यन्ति । सर्वाणि कृत्वा पश्चात्प्रत्ययलोपं करिष्यामि· । पश्यत्वाचार्यः । लोप एव तावद्भवति । तस्मिन् कृते तदाश्रयाणि न प्राप्नुवन्ति । तस्मात्प्रत्ययलोपे

---

किया जा सकता था "लोटो लङ्वत्" यह सूत्र व्यर्थ हो जाता । परिभाषा मानने पर तो "लोटो लङ्वत्" सूत्र से अतिदेश सूत्र होने के कारण कहीं लोट् में ङित् कार्य का विधान अनित्य भी होगा । इसलिए "जुह्वतु" में अजुहवुः की तरह "सिजभ्यस्तविदिभ्यश्च ३.४.१०६ से जुस् नहीं हुआ, यह कोई कहते हैं ।

परिभाषा नहीं मानने वाले तो इस परिभाषा को निष्फल मानकर इसे स्वीकार नहीं करते । उनका कहना है कि "जुह्वतु" में 'झि' को 'जुस्' तो इसलिए नहीं होता है कि वहाँ 'सिच्' के साहचर्य से अभ्यस्त से पर भी उसी झि को जुस् होगा जो 'झि' मूलतः ङित् लकार के स्थान में आया होगा । "जुह्वतु" का झि तो 'लोट्' के स्थान में हुआ है, इसलिए लोट् को ङिद्वद्भाव होने पर भी वह मूलतः ङिल्लकार के स्थान में जायमान नहीं माना जायगा । इसलिए इस परिभाषा के बिना भी काम चल जायगा । यह परिभाषा निष्फल है । इसे मानने की कोई आवश्यकता नहीं है ।

प्रत्ययलक्षणम्'(१.१.६२) इति । किमेतस्य ज्ञापने प्रयोजनम् । ते सन्तीत्यत्रायादेशात् पूर्वमस्तेरलोप इति । तस्मिन् कृतेऽनजादित्वादयादेशो न भवति ।

पुरुषोत्तमदेवोऽप्याह स्वलघुपरिभाषा वृत्तौ (प० सं० ६१) 'सर्वविधिभ्यो लोपविधिर्बलवान् )प० सं० ८६)अनया परिभाषया तानि सन्तीति अस्ते यंणादेशात्-पूर्वं लोपः सिद्धो भवति । ज्ञापकं चास्याः सत्त्वे 'प्रत्ययलोपे प्रत्ययलक्षणम्' (१.१.६२ इति सूत्रम् । यदि हीयं नाभविष्यत् तदा प्रागेव प्रत्ययकार्यं कृत्वा पश्चात्प्रत्ययलोपादिष्टसिद्धौ सूत्रमिदमनर्थकमभविष्यत् । भाष्ये त्वियं परिभाषा नोपगता, प्रयोजनाभावात् । यथोक्तोदाहरणस्य प्रकारान्तरेण साधितत्वाद् वार्णादाङ्गं बलीय इति ।

सीरदेवस्तु स्वकीयबृहत्परिभाषावृत्तौ (प० सं० १११) प्राह तेन कानि सन्तीत्यत्र यणादेशात्पूर्वं श्नसोरल्लोपः सिद्ध्यति । ज्ञापकं चास्याः प्रत्ययलोपे प्रत्ययलक्षणम् (१.१.६२) इति सूत्रम् । यदीदं न स्यात्तदा लोपात्प्रागेव प्रत्ययकार्यं कृत्वा पश्चात्प्रत्ययलोपादिष्टसिद्धौ सूत्रमिदमनर्थकं स्यादिति । भाष्ये त्वियं नोपगता प्रयोजनाभावादिति ।

व्याडिना परिभाषाज्ञापनादिविषये यदुक्तं तदेव प्रायः पुरुषोत्तमसीरदेवाभ्यामप्युक्तं किन्तु व्याडिना परिभाषायाःप्रयोजनाभावो न दर्शितः ।

"सर्वविधिभ्य इड्विधिर्बलवान्" इत्यपि परिभाषा व्याडिपुरुषोत्तमसीरदेवस्वीकृता नागेशेन नाङ्गीक्रियते तथाच व्याडिः—"सर्वविधिभ्य इडविधिर्बलवान्" (व्याडि परिभाषासूचन प० सं० ५६) (परिभाषा संग्रह पृ० २६) सर्वेभ्यो विधिभ्य इड्विधि र्बलवान् भवति । कथं ज्ञायते । यदयं "सनिग्रहगुहोश्च" (७.२.१२) इति चकारेण श्र्युकोऽनुकर्षणं करोति । कथं कृत्वा ज्ञापकम् । अत्र हि चकारोऽनर्थकः । कस्माल्लूञः सनि इण् न । तत्र तावदत्रेण् न भवति "इकोझल् (१.२.६) इति कित्त्वं

---

सभी विधियों से लोप विधि और इट् विधि बलवान् होती है । लोप विधि के बलवान् होने में प्राचीन वैयाकरणों ने "नाग्लोपि०" ७.४.२ सूत्र में प्रत्याहार ग्रहण को ज्ञापक माना है । क्योंकि यदि लोप बलवान् न हो तो सर्वप्रथम वृद्धि होगी और कहीं भी लोप करने के लिए आकार से अतिरिक्त अक् मिलेगा ही नहीं, फिर 'नाग्लोपि' सूत्र में प्रत्याहार ग्रहण व्यर्थ हो जायगा, वही ज्ञापन करता है कि "सर्वविधिभ्यो लोपोविधिर्बलवान्" लोप की प्रबलता स्वीकार करने पर पटुमाख्यत् अपपटत् यहाँ पहले 'पटु' के उकार का लोप हुआ फिर 'अग्लोपी' होने से सन्वद्भाव इत्व और दीर्घादि नहीं हुए । यह प्राचीन वैयाकरणों का मत है ।

नागेश का कथन यह है कि भाष्य में पूर्वोक्त प्रत्याहार ग्रहण के कारण लोप को केवल वृद्धि विधि से ही अधिक बलवान् बताया गया है ।

तावत् प्रतीक्षते। तत्र कित्त्वे कृते "श्र्युकः किति" ७.२.११ इतीट् प्रतिषेधो भविष्यति। नार्थश्चकारेण। पश्यति त्वाचार्यः कित्त्वादपि पूर्वमिडागमः। इटि कृते इको झल् (१.२.९) इति कित्वं नास्ति। झलिति वचनात्। तस्माच्चकार इट्प्रतिषेधार्थ इगन्तानाम्। किमेतस्या ज्ञापने प्रयोजनम् "श्वयित्वा" इत्यत्र संप्रसारणात् पूर्वमिट् सिद्धो भवति। इटि कृते "न क्त्वा सेट्' (१.२.१८) इति कित्वप्रतिषेधः। असति कित्वे संप्रसारणं न भवति॥

पुरुषोत्तमदेवस्य परिभाषालघुवृत्तौ "परिभाषास्वरूपमित्थमस्ति—सर्वविधिभ्य इड्विधिर्बलीयान् इति। (प० सं० ९०) सीरदेवपरिभाषावृहद्वृत्तौ (प० सं० ८२) "सर्वविधिभ्य इड्विधिर्बलवान्" ८२ इतिपरिभाषास्वरूपमुपलभ्यते। ज्ञापकफलादिवर्णनमुमयत्र व्याडिवद् वर्तते। केवलं शब्दमात्रभेदः '

इयमपि भाष्यानुक्तत्वात्फलाभावाच्च नागेशेन न स्वीकृता। न चैवं 'श्वयित्वा' इत्यत्र सम्प्रसारणात् पूर्वमिट् न स्यात् ततश्च 'न क्त्वा सेट्' १.२.१८ इति कित्वनिषेधाप्राप्त्या सम्प्रसारणं स्यादिति वाच्यम् "न क्त्वा सेट् इति सूत्रस्वारस्यादेव क्त्वाप्रत्यये इटः कित्वनिमित्तककार्यात् पूर्वमेव प्रवृत्तेरिति॥

यत्तु प्राचा "लोपविधिः सर्वविधिभ्यो बलवान्" इत्यत्र प्रमाणं "**नाग्लोपिशास्वृदिताम्** ७.४.२ इत्यत्र प्रत्याहारग्रहणम् अन्यथा पटुमाचष्टे इत्यादौ णिचि वृद्धौ पटौ इ इत्यवस्थायाम् लोपेऽपि सर्वत्र अकारातिरिक्तस्याको लोपाभावस्यैव सम्भवेन तद्व्यर्थं स्यात्। इत्युक्तं; तदपि न कृताकृतप्रसङ्गित्वमात्रेण लोपस्येह नित्यतया परवृद्ध्यपेक्षबलवत्त्वस्य "वृद्धेर्लोपो बलीयान्' 'इति भाष्येण प्रतिपादनेऽपि सर्वविधिभ्यो लोपस्य बलवत्त्वबोधकस्य प्रमाणस्याभावात् नाग्लोपीत्यत्र प्रत्याहारग्रहणं चरितार्थम्।

---

इसलिए सामान्यपेक्ष ज्ञापक मानकर सभी विधियों की अपेक्षा बलवान् मानना प्रामाणिक नहीं है।

सब विधियों की अपेक्षा इड्विधि अधिक बलवान् होती है। इसका ज्ञापन "आर्धधातुकऽस्येड् वलादेः" ७.२.३५ सूत्र में किये गये इड्ग्रहण को मानते हैं। "नेड्वशि कृति' ७.२.८ इस सूत्र से इट् की अनुवृत्ति हो ही जाती। पुनः आर्धधातुकऽस्येड्-बलादेः में किया गया इड्ग्रहण यह ज्ञापन करता है कि सब विधि से इड्विधि अधिक बलवान् होती है। परन्तु नागेश का कहना है कि आर्धधातुकस्येड् बलादेः' में इड्ग्रहण का भाष्यकार ने प्रत्याख्यान कर दिया है। इसलिए उसे ज्ञापक नहीं माना जा सकता

'**संज्ञापूर्वकविधेरनित्व**" का फल "स्वायम्भुवम्" में "ओर्गुण" से गुणाभाव बताया गया है। परन्तु लोक में उस प्रकार का प्रयोग असाधु ही है। यह नागेश मानते हैं।

इति शिवम् १००

यदपि ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह—
**प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०१ ॥**

---

यत्तु इड्विधेः सर्वविध्यपेक्षयाधिकबलवत्त्वे प्रमाणं नेड्वशि कृति ७.२,८ इत्यत्र इडित्यनुवर्तमाने आर्धधातुकस्येड्वलादेः ७.२.३५ इत्यत्र कृतं पुनरिड्ग्रहणमित्याहुस्तदपि न, भाष्यकारेण तस्य इड्ग्रहणस्य प्रत्याख्यानात् ॥

स्वायम्भुवमिप्यादि यत् फलम् संज्ञापूर्वविधेरनित्यत्वमित्यादेः परिभाषाया दर्शितं तदपि न तेषां लोके ऽसाधुत्वात् । आदिपदेन ततुकामः विश्वेसत्, स्फायन्नित्येषां संग्रहः ।

इति शिवम् ॥ १०० ॥

**प्रकृतिग्रहणे ॥१०१॥**

**यदपि "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्"** इति परिभाषाया अवतरणफलज्ञापकादिकमुक्तं, तदपि नेत्यनेनान्वयः यत्तदोर्नित्यसम्बन्धात् । इयं परिभाषा व्याडिचन्द्रगोमिपुरुषोत्तमदेवसीरदेवादिभिः स्वीकृता ।(परि०सूच ३०,चा०४ पु.ल.प.वृ. ७२ सीर वृ. परि. वृ. ६८) अयं भावः हन्धातोर्विहितस्य यङः यङोऽचि च २.४.७४ इति लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' ६.१.९ इति द्वित्वेऽभ्यासकार्ये जहन् इत्यवस्थायां 'नुगतोऽनुनासिकान्तस्य' ७.४.८५ इति नुकि अभ्यासाच्च ७.३.५५ इति ह्रस्य कुत्वे नुगित्यनुस्वारोपलक्षणम्, तस्य च "स च पदान्तवद्वाच्य इति पदान्तत्वे 'वा पदान्तस्य' ८.४.५९ इति परसवर्णे जङ्घन् इत्यस्य धातुत्वे तत आशीर्लिङि 'हनो वध लिङि' २.४ ४२ इति वधादेशे वध्यादिति जायते लुङि तु "लुङि च" २.४. ४३ इति वधादेशे 'अवधीत्' इति जायते, किन्त्वत्र वधादेशो न स्यात्; लिङो लुङश्च यङ्लुगन्ताद्विहिततया तस्य च 'जङ्घन्' इति यङ्लुगन्तसमुदायस्य हन्रूपत्वाभावात् पूर्वखण्डस्य चानर्थकत्वादुत्तरखण्डेन व्यवधानाच्च इति चेन्न "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् (प० सं० १०१) इति परिभाषास्वीकारेणादोषात् । तेन "हनो वध लिङि २.४.४२ इत्यादौ हन्प्रकृतिग्रहणे यङ्लुगन्तस्य जङ्घन् इत्यस्यापि ग्रहणाद् वधादेशः सिद्धः । अपिग्रहणादर्थापत्त्या मूलप्रकृतेर्हन्त्यादेस्तु ग्रहणं सुतरां सिद्ध्यति ॥

---

—प्रकृतिग्रहणे यङ्लुगन्तस्यापि—१०१

हन् धातु से यङ्लुक् में आशीर्लिङ् में ",वध्यात्" बनता है वहाँ द्वित्वादि करने पर जंहन्+यात् इस स्थिति में" हनो वध लिङि "२.४.४२ से वधादेश नहीं होगा, क्योंकि "जंहन्" को हन् धातु कौन मानेगा ? इसलिए परिभाषा मानी है "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्"—प्रकृति के ग्रहण में यङ्लुङन्त का भी ग्रहण हो । अर्थात् जहाँ मूल धातु का ग्रहण है वहाँ तन्मूलक-यङ्लङन्त का भी ग्रहण

**षाष्ठद्वित्वस्य द्विष्प्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम् । अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति, तदपि न । भाष्येऽदर्शनात् । किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्व॰**

---

परिभाषेयं न्यायसिद्धा, षाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनस्य औचित्यात् अर्थात् षष्ठाध्यायस्थसूत्रैः 'लिटि धातोः' ६.१.८ 'सन्यङोः' ६.१.९ इत्यादिभिर्द्वित्वविधायकै र्न किमपि नूतनं वर्णजातं सम्पाद्यते; किन्तु तत्र विद्यमानस्यैव द्विःप्रयोगः क्रियते अतः प्रयोगद्वयसमुदाये प्रकृतित्वमौचित्यादेव सिद्ध्यतीति सिद्धमस्या न्यायमूलत्वम् । अतएव=षाष्ठद्वित्वस्य द्विष्प्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपसमुदायस्य प्रकृतिरूपत्वस्वीकारादेव हुधातोर्लोटः स्थाने सिपि श्लौ द्वित्वेऽभ्यासादिकार्ये जुहु हि इत्यत्र 'हुझल्भ्यो हेर्धिः' ६.४.८७ इति समुदायस्य हुरूपत्वारोपाद् धिः सिद्ध्यति इति तदपि न युक्तम् (नागोजिभट्टमतेन) भाष्येऽस्याः परिभाषाया अदर्शनात् ॥ न्यायसिद्धत्वं निराकरोति—**किञ्चेति** । अयंभावः "द्विष्प्रयोगो द्विर्वचनं षाष्ठम्" इति सिद्धान्तेन द्वयोः प्रत्येकं तत्त्वबोधनेऽपि अर्थात् 'जङ्घन्' इति पूर्वोत्तरखण्डयोः जङ्+घन् इत्यनयोः प्रत्येकं हन्तिरूपत्वबोधनेऽपि समुदायस्य हन्तिरूपत्वबोधने मानाभावात् समुदायस्य वर्णचतुष्टयात्मकस्य वर्ण॰

---

होगा । अष्टाध्यायी के छठे अध्याय में पठित सूत्र के द्वारा विहित द्वित्व कोई नयापन नहीं लाता है ; किन्तु मूल धातु को दुहरा कर प्रयोग कर देता है , यह सिद्धान्त है । इसलिए यङ्लुन्त में जब सन्यङोः' ६.१.९ से धातु का दुबारा प्रयोग किया गया है ; तब दो प्रयोगवाले समुदाय "जंहन्" में हन् प्रकृतित्व का बोध होना स्वाभाविक ही है, अतः यह परिभाषा न्यायसिद्ध है । इस परिभाषा को व्याडि (प० सू० ६०) शाकटायन (प० ६४) चन्द्रगोमी (प० ४) कातन्त्र (२०) कलाप (१९) भोज (पुरुषोत्तमदेव (पु० ल० प० ७२) सीरदेव (६८) आदि आचार्यों ने स्वीकार किया है । पुरुषोत्तम देव और सीरदेव ने इस परिभाषा को मानने के बाद आने वाले दोषों के निराकरण के लिए "श्तिपा शपानुबन्धेन" यह परिभाषा भी कही है । इसलिए हु' धातु से लोट् लकार शप्, श्लु, श्लौ,से द्वित्व,अभ्यास संज्ञा, कुहोश्चुः होने पर हुझल्भ्यो हेर्धिः ६.४.८७ से समुदाय को 'हु' मानकर 'हि' को 'धि' हुआ, परन्तु नागेश कहते हैं कि यह मत ठीक नहीं है । क्योंकि यह परिभाषा भाष्य में नही देखी गयी है । परिभाषा को न्याय सिद्ध बताना भी ठीक नहीं है "षाष्ठ द्वित्व से द्विःप्रयोग होता है" इस सिद्धान्त से दोनो भागों के प्रत्येक भाग में प्रकृतित्व लाने पर भी समुदाय में प्रकृतित्व आजाय, इसमें कोई प्रमाण नहीं है । वैसे हन् हन्' इस समुदाय में चार वर्ण हैं, उसे वर्णद्वयात्मक हन् रूप मानने में अनुभव का भी विरोध आता है । यह परिभाषा नहीं मानी गयी है इसलिए "दयते-

**बोधने मानाभावः ॥ अत एव 'दयतेर्दिगि' इति सूत्रेऽस्तेः परत्वाद्द्वित्वे कृते परस्यास्तेर्भूभावे कृते पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये। अन्यथा त्वदुक्तरीत्यैकाज्द्विर्वचनन्यायेन समुदायस्यैवादेशापत्त्या तदसङ्गतिः स्पष्टैव। तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या ॥**

---

द्वयात्मकहन्रूपत्वस्वीकारे प्रत्यक्षविरोधाच्च नेयं परिभाषा न्यायसिद्धा ॥ **अतएव दयतेरिति**=समुदायस्य तत्त्वाभावादेव (द्वित्वविशिष्टसमुदायस्य मूलरूपत्वास्वीकारादेव) 'दयतेर्दिगि—' ७.४.६ इति सूत्रे अस्तेः परत्वाद् भ्वादेशं बाधित्वा लिटि द्वित्वे 'अस् अस् अ' इति स्थिते परस्यास्तेः 'अस्तेर्भूः' २.४.५२ इति भ्वादेशे कृतेऽपि पूर्वस्य असः (हलादिशेषेण सस्यापहारे त्वकारस्य) श्रवणं स्यादिति आशङ्क्य "अस्तेर्भूः" २.४.५२ इत्यत्रानुवृत्ते "आर्धधातुके" ६.४.४६ इत्यत्र विषयसप्तमीति दूषणं परिहृतम् अर्थात् विषयसप्तमीत्वादार्धधातुकविषये लिट्लकारागमनात् प्रागेव भूभावः तत्काले च न लिटि धातो"रित्यस्य प्राप्तिरिति।

अन्यथा समुदायस्य (द्वित्वविशिष्टसमुदायस्य—अस् अस् इत्यस्य) तत्वस्वीकारे (अस्तिरूपत्वस्वीकारे) एकाज्द्विर्वचनन्यायेन समुदायस्यैवादेशसिद्धौ तदसंगतिः स्पष्टैव। तस्मादुत्तरखण्डमादायैव (जहुधीत्यादौ) यथायोगं तत्तत्कार्यप्रवृत्तिः (धिअभृत्यादेश-

---

दिगि"७.४.६ इस सूत्र के भाष्य में भाष्यकार ने प्रश्न किया 'अस्' धातु से लिट्लकार लाने पर परत्वात् "अस्तेर्भू २.४.५२"को बाध कर द्वित्व हो जायगा। अस् अस्+अ" इस स्थिति में पर अस् को भू आदेश करने पर भी पूर्व भाग में अस् का श्रवण होने लगेगा? इस प्रश्न के समाधान के लिए "आर्धधातुके" ६.४.४६ में विषयसप्तमी मानकर "अस्तेर्भूः"का अर्थ किया कि आर्धधातुक के विषय में ही भू आदेश हो जाय, इस तरह प्रत्ययोत्पत्ति के पहले ही भू आदेश हो जायगा और तब द्वित्व होगा। इस तरह के प्रश्न और समाधान से यह सिद्ध होता है कि यह परिभाषा नहीं मानी गयी है। यदि मानी गयी होती, तो आप के अनुसार द्विःप्रयोगत्व सिद्धान्त से एकाच् द्विर्वचन न्याय से समुदाय को ही भू आदेश हो जाता फिर विषयसप्तमी मानने आदि का प्रयास व्यर्थ हो जाता। इस लिए उत्तरखण्ड को लेकर ही यथा संभव और यथाप्राप्त तत्तकार्यों की प्रवृत्ति माननी चाहिए

"एकाच् द्विर्वचन न्याय"का तात्पर्य है कि जैसे वृक्ष जब हवा में झूमता है,तो अवयवों के साथ झूमता है, केवल स्तम्भ ही नहीं हिलता। इस तरह धातु के प्रथम एकाच् को द्वित्व हो,जब ऐसा कहते हैं और एकाच् में बहुव्रीहिसमास करके एक अच्वाले व्यञ्जन को द्वित्व हो, जब यह इसका तात्पर्य मानते हैं तो "जागृ" में प्रथम एकाच् (व्यञ्जन) 'जा' भी हो सकता था परन्तु एक अच् के वाला जितना अधिक व्यञ्जन समुदाय लिया जा सकता है उतना लिया जाता है। इस लिए जाग् को द्वित्व होता है। "यथासंभव अधिक संग्रह" ही इस न्याय का तात्पर्य है।

'भूसुवोः' इत्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः। तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥१०१॥

---

कार्यप्रवृत्तिः) बोध्या ॥ एवञ्च परिभाषा न सिद्ध्यति पूर्वोक्तेन न्यायेनेति भावः।

नचैवं परिभाषाया अस्वीकारे (द्वित्वविशिष्टसमुदायस्य तत्त्वानङ्गीकारे वा) 'बोभूतु' इति यङ्लुगन्तरूपे "भूसुवोः" ७।३।८८ इति निषेधस्याप्राप्त्या गुणनिषेधाय "दाधर्तिदर्धर्तिबोभूतु" ७.४.६५ इत्यत्र "बोभूतु" इति निपातनस्यावश्यकतया तस्य नियमार्थत्वं न स्यात् तथाच अन्यत्र (भाषायां) यङ्लुगन्तस्य भूधातोर्गुणप्रतिषेधो न भवतीति ज्ञापनं न स्यात् तथा च बोभवीति इत्यत्र गुणो न स्यात्एतद्द्वारेण च भाषायामपि यङ्लुक् भवति तस्य छान्दसत्वमेव नास्तीति न सिद्ध्यतीति वाच्यम् 'भूसुवोः'—७.३.८८ इत्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य 'बोभूतु' इति नियम इत्यदोषात् "दाधर्तिदर्धर्तिबोभूतु' ७ ४.६५ इति सूत्रे भाष्यम्—बोभूत्विति किं निपात्यते? भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते। नैतदस्ति प्रयोजनम्। सिद्धमत्रागुणत्वम्—भूसुवोस्तिङि (७.३.८८) एवं तर्हि नियमार्थं भविष्यति "अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रेति—क्व मा भूत्? बोभवीतीति ॥

अत्र भाष्ये 'बोभूतु' इत्यत्र "भूसुवोस्तिङि" ७.३.८० इत्यस्य प्रवृत्तिर्या दर्शिता तत्र न "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्" इति परिभाषा प्रयोजिका

---

अब प्रश्न यह है कि यदि प्रकृतिग्रहण में 'यङ्लुक् का ग्रहण न हो तो "बोभूतु में "भूसुवोस्तिङि" ७.३-८८ से गुण निषेध प्राप्त नहीं होगा। अतः गुण निषेध के लिए दाधर्तिदर्धर्ति ०—७.४.६५ सूत्र में "बोभूतु तेतिक्ते" निपातन करना आवश्यक था। अतः उसे नियमार्थक मानकर छन्दस्येव यङ्लुकि गुणाभावःछन्द,में ही यङ्लुक् में गुणाभाव होगा, भूसुवोः-७.३.८८ सूत्र की प्रवृति होगी, भाषा में तो गुण होगा, ऐसा नियम नहीं निकाला जा सकता परन्तु यह शङ्का निराधार है 'भूसुवोः सूत्र का दरअसल में भूधात्वन्त और सुधात्वन्त अङ्ग को गुण न हो ऐसा अर्थ है। इसलिए परिभाषा के सहारे के बिना भी "बोभू" में भूधात्वन्त अङ्ग होने से गुण निषेध की प्राप्ति है ही, पुनः "बोभूतु" निपातन से यह नियम ज्ञापित होगा कि वेद में ही गुणाभाव होता है अतः भाषा में गुण सिद्ध होगा। इसलिए उस सूत्र की नियमार्थकता के साथ कोई विरोध नहीं होगा। अतः माधव ने इस परिभाषा के फल के रूप में जिस वधादेश का उल्लेख किया है और जिस 'वध्यात्' रूप की सिद्धि की बात कही है वह सब विचारणीय है, असंगत है,'यङ्लुक्' में वध्यात् नहीं बनता।

इतिशिवम् १०१

यदपि ननु 'वृद्धिर्यस्याचामादिः' इत्यत्रेक्परिभाषोपस्थितौ शालीयाद्यसिद्धिरत आह—

न वा द्वित्वविशिष्टस्य तत्त्वबोधनं मूलम्, किन्तु मूलमस्ति अङ्गस्येत्यस्य विशेष्यतया "येन विधिस्तदन्तस्य" १.१.७२ इति तदन्तोपस्थितिमूलकभ्वन्तस्याङ्गस्य तिङि गुणो नेत्यर्थः। तथा च न 'बोभूतु' इत्यत्र पूर्वोक्तनिषेधापादनपरकभाष्येण परिभाषेयं सिद्ध्यतीति भावः॥

न च परिभाषाया अभावे यङ्लुकि आशीर्लिङि हन्तेर्वध्यात् यङ्लुगन्तहन्-धातोर्लुङि 'अवधीत्' इति रूपं सिद्धान्तकौमुद्यादौ दर्शितं कथं सिद्ध्येदिति वाच्यम् माधवाद्युक्तस्य हन्तेर्यङ्लुकि वध्यादिति रूपस्य चिन्त्यत्वात् सिद्धान्तकौमुदी तु माधवानुरोधेनैव तथा लिलेखेति।

दयतेर्दिगि लिटि ७.४.६ इति सूत्रस्थं भाष्यं यथा=अथ द्विःप्रयोगो द्विर्वचनं परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति। नैष दोषः। आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु। तत्रार्धधातुकसामान्ये भूभावे कृते यो यतः प्राप्नोति स ततो भविष्यति।

अत्र कैयटः=**आर्धधातुकसामान्य** इति। द्विर्वचननिमित्तस्य लिटोऽनुपजात-त्वादसति विप्रतिषेधे पूर्वं भूभावः पश्चाल्लिटि द्विर्वचनमित्यदोषः॥

इति शिवम्॥१०१॥

**विधौ परिभाषोपतिष्ठते नानुवादे १०२**

इमामपि परिभाषां खण्डयितुमाहः—यदपि ननु—तन्नेति। सीरदेव (वृ० प० वृ० ८९) नीलकण्ठदीक्षित (प० सं० ८४) हरिभास्कर (प० ९२) प्रभृतिभिरियं वर्णिताऽस्ति परिभाषा। तत्र सीरदेवः—"विधौ परिभाषोपतिष्ठते नानुवादे" (प०

**विधौ परिभाषोपतिष्ठते—१०२**

सीरदेव ने (सीरदेव प०८९) विधौ परिभाषोपतिष्ठते नानुवादे" यह परिभाषा मानी है; नागेश ने इस परिभाषा को भाष्यानुक्त तथा निष्फल माना है। परिभाषा स्वीकार करने वाले का मत है कि 'इको गुणवृद्धी १.१.३ सूत्र वहाँ उपस्थित होता है, जहाँ गुण या वृद्धि पद होते हैं, इस तरह वृद्धिर्यस्याचामादिस्तद् वृद्धम् १.१.७३ में वृद्धि पद होने के कारण "इकः" की उपस्थिति होने से सूत्र का अर्थ होगा कि इकः स्थानिक वृद्धि जिस शब्द के अचों के आदि में हो उसे वृद्धसंज्ञा हो। इस तरह लैगवायन यहीं वृद्धसंज्ञा होगी, शालीयः में वृद्धसंज्ञा नहीं होगी और छ प्रत्यय नहीं होगा। "इसलिए परिभाषा माननी चाहिए विधौ परिभाषोतिष्ठते नानुवादे" विधि में परिभाषा उपस्थित होती है अनुवाद में नहीं। तात्पर्य यह है कि परिभाषा को उपस्थित करने वाले लिङ्ग की सूत्र के प्रधान भाग में स्थिति की अपेक्षा की जाती है।

## विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०२ ॥

अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठत इति तदर्थः। विध्यङ्ग-

---

सं० ८९) इति परिभाषा स्वीक्रियते। तेन क्ङिति च १.१.५ इत्यत्र क्ङितीत्यस्य गुणवृद्धिभ्यां सम्बन्धात् "तस्मिन्निति निर्दिष्टे"—१.१.६६ इति परिभाषा नोपतिष्ठते। तेन क्ङिन्निमित्ते प्रत्यये निषेधात् भिन्नमित्यत्रापि निषेधः सिद्ध्यति॥

प्रधानाप्रधानन्यायलभ्योऽयमर्थः। ज्ञापकं चात्र "'उदीचामातः स्थाने" ७.३.४६ इत्यत्र स्थानप्रतिपत्त्यर्थं स्थानग्रहणम्। (अन्यथा षष्ठी स्थानेयोगा १.१.४९ इत्यनेनैव स्थानार्थलाभसिद्धेःस्थाने' ग्रहणं व्यर्थं स्यात्)। अव्यापिका चेयं "संख्याव्ययादे र्ङीप्" ४.१.२६ इत्यत्रादिग्रहणात्। ( इहादिग्रहणं क्रियते पदान्तरव्यवधानेऽपि प्रवृत्यर्थम्। तेन 'द्विविधोघ्नी' पञ्चघटोघ्नीत्यादि सिद्ध्यति। यदीयं परिभाषा नित्या स्यात्तदाऽनया निषेधात् तस्मादित्युत्तरस्य १.१.६७ इत्यस्यानुपस्थित्या अव्यवहितत्वालाभात् "संख्याव्ययान्ङीप्" इति न्यासेन संख्याव्ययपरो य ऊधः शब्दस्तदन्ताद्बहुव्रीहे र्ङीब् इत्यर्थेनैव सिद्धे आदिग्रहणं व्यर्थमेव स्यात्। तदेव व्यर्थं सत् परिभाषाया अनित्यत्वं ज्ञापयतीत्यादि प्राह।

नीलकण्ठदीक्षितस्तु स्वपरिभाषावृत्तौ प्राह—विधौ परिभाषोपतिष्ठते नानुवादे (८५) अनूद्यमानविशेषणेषु नोपतिष्ठते किन्तु विधावेवेत्यर्थः। इयं च साक्षाद् विध्यङ्गभूतानां साक्षाद्विधेयेनासिद्धत्वादन्वयासंभवे तद्विशेषणव्यवस्थापकत्वेन

---

क्योंकि प्रधान और अप्रधान में प्रधान ही लिया जाता है ऐसा सिद्धान्त है। प्रधानता विधेय में ही रहती है, इस प्रकार स्वयं सिद्ध हो जाता है कि यदि सम्भव हो तो विधेय-बोधक ही लिङ्ग लिया जाय, उद्देश्य बोधक नहीं। इसलिए "इको गुणवृद्धी यह परिभाषा "मृजेर्वृद्धि"७.२.११४ में उपस्थित होगी, क्योंकि वहाँ वृद्धि विधेय है, "वृद्धिर्यस्याचामादिः" में वृद्धि उद्देश्य है, अनुवाद है, इसलिए वहाँ इको गुणवृद्धी यह परिभाषा उपस्थित नहीं होगी। इस तरह परिभाषा में "विधौ" का अर्थ प्रधाने करना चाहिए और अनुवादे का 'अप्रधाने'। अनूद्यमान (उद्देश्य) के विशेषणों में तन्नियामिका परिभाषा की उपस्थिति नहीं होती है। किन्तु विधि में ही होती है। हरेक परिभाषा को चाहिए कि वह विधि का उपकार करे। इसलिए जिन'तस्मिन्निति' 'तस्मादित्यु.' १.१.६६।६७ इत्यादि परिभाषाओं में विधेय के लिङ्ग नहीं होने के कारण विधेय के साथ सम्बन्ध होना असम्भव है। वहाँ भी विधेय के विशेषण में कुछ न कुछ व्यवस्था देने के कारण चरितार्थ परिभाषा अप्रधान (उद्देश्य) में व्यवस्था दें इसमें कोई प्रमाण नहीं है। यही तर्क इस परिभाषा में मूल है। "प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः" यह सिद्धान्त भी तर्क पर हीं आधारित है, और यहीं सिद्धान्त वस्तुतःयहाँ मूल है। इसलिए इस परिभाषा को तर्कमूला बताया गया है।

**भूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवेऽपि तदविशेषणे व्यवस्थकत्वेन-चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम् ।**

---

चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयमित्येके । "उदीचामातः स्थाने ७.३.४६ इति स्थानेग्रहणमस्या ज्ञापकमित्यन्ये ।

हरिभास्करोऽप्याह—विधौ—नानुवादे (९२) 'विधिरत्यन्तमप्राप्ते' इत्युक्तो विधिः । तत्र परिभाषोपतिष्ठते यथा "सार्वधातुकार्धधातुकयोः (७.३।८४) इत्यादौ इको गुणवृद्धी १.१.३ इति । अनूद्यमानविशेषणे तु न । यथा "वृद्धिर्यस्याचामादि-स्तद्वृद्धम्" (१.१.७३) इत्यत्र । तेन शालीयादिसिद्धिः । ज्ञापकमत्र "उदीचामातः स्थाने यकपूर्वायाः" (७.३.४६) इत्यत्र स्थानेग्रहणम् । अन्यथा षष्ठी स्थानेयोगा (१।१.४९) इत्यनेनातः स्थान एवेत्त्वं भविष्यतीति किं तेन । गुरुचरणास्तु स्थाने ग्रहणं मास्तु । प्रकृतपरिभाषाया निष्प्रयोजनत्वात् । प्रत्युत "अचोरहाभ्यां द्वे" (८.४.४६) इत्यत्र "तस्मादित्युत्तरस्येत्यस्याप्रवृत्तेरधिह्लि अनुभव इत्यत्र यणि द्वित्वं स्यादिति महदेवानिष्टम् । शालीयादिसिद्धिस्तु संज्ञापरिभाषयोर्विधिशेषत्वेन परस्पर-सम्बन्धाभावादुपपादनीया प्रधानगामित्वन्यायाच्चेत्याहुः ।

अत्र परिभाषेन्दुशेखरग्रन्थे प्रथमं परिभाषास्वीकर्तॄणां मतं नागेशेनोपस्था-पितं पश्चाच्च तत्खण्डितम् ।

परिभाषां विना शालीयाद्यसिद्धिः, "वृद्धिर्यस्य"—१.१.७३ इति वृद्धसंज्ञा-सूत्रे वृद्धिपदसत्वात् "यत्र गुणवृद्धिपदे स्तस्तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते इत्य-र्थेन 'इको गुणवृद्धी' १.१.३ इत्यस्योपस्थित्या इकः स्थाने वृद्धिर्यस्याचामादिस्तद्-वृद्धसंज्ञकं स्यादित्यर्थेन 'औपगवीय' इत्यत्रैव वृद्धसंज्ञा तन्मूलकः 'वृद्धाच्छः' ४.२.११४ इतिच्छः स्यात् 'शालीय' इत्यादौ शालाशब्दे इकः स्थाने वृद्धेरजातत्वात्तत्र वृद्धसंज्ञा-तन्मूलकश्छप्रत्ययश्च न स्यात् । अतः विधौ……नानुवादे इति परिभाषा स्वी-कर्तव्या ॥

अनुवादे=अनूद्यमानविशेषणे, तन्नियामकपरिभाषा नोपतिष्ठते किन्तु विधा-वेव प्रवर्तते । अर्थात् यल्लिङ्गं दृष्ट्वा परिभाषा प्रवर्तते; तल्लिङ्गं यदि विधेयकोटि-स्थं यथा मिदेर्गुणः ७.३.८२ 'मृजेर्वृद्धिः' ७.२.११४ इत्यादौ । अत्र गुणवृद्धिपदं विधेयकोटिप्रविष्टं दृष्ट्वा 'इको गुणवृद्धी' १.१.३ इति परिभाषा तत्रोपतिष्ठते; "वृद्धिर्यस्याचाम् — १.१.७३ इति वृद्धिपदन्तु अनुवादकोटिप्रविष्टमृवृद्धिमनूद्य (उद्देश्यीकृत्य) वृद्धसंज्ञाविधानात् । अतः तत्र सा परिभाषा नोपतिष्ठत इति ॥ विधेयकोटिप्रविष्टस्य लिङ्गस्य प्राधान्यात् "प्रधानाप्रधानयोः प्रधानस्यैव ग्रहणम्" इति न्यायेन तथाविधस्यैव लिङ्गस्य सति सम्भवे ग्रहणौचित्यम् अनूद्यमानकोटिप्रवि-ष्टस्य तु तस्याप्राधान्यादग्रहणमिति लोकस्वभावसिद्धतर्कमूलेयं परिभाषा इति । यच्च लिङ्गं कदापि विधेयकोटिप्रविष्टं न संभवति तदगत्या उद्देश्यकोटिप्रविष्टमपि

किञ्चो 'दीचामातः स्थाने' इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्। अन्यथा 'षष्ठी स्थाने' इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति-तन्न। उदात्तस्वरितयोर्यणः इत्यादौ 'ष्यङः संप्रसारणम्' इति सूत्रभाष्योक्तरीत्या 'अल्लोपोऽन'

---

यदि प्रधानं तर्हि गृह्यते नत्वप्रधानम् प्रधानाप्रधानन्यायादेव। अतएव तस्मिन्निति १,१.६६ परिभाषा 'इको यणचि' ६.१.७७ इत्यादौ स्वलिङ्गमुद्देश्यकोटिप्रविष्टमपि अचीति सप्तम्यन्तं दृष्ट्वा प्रवर्तते। तत्र यणो विधेयत्वेनाचीत्यस्योद्देश्यगतत्वेऽपि साक्षाद् यणा विधेयान्वितत्वादुद्देश्यदलप्राधान्यसत्त्वात्। एवमिक इत्यत्रापि 'षष्ठी स्थाने' १.१.४९ इत्युपतिष्ठते। अनयोर्लिङ्गस्य सर्वदोद्देश्यकोटिप्रविष्टत्वस्यैव संभवात्। नानयोर्लिङ्गं कदापि विधेयदलप्रविष्टं भवितुमर्हति। तत्रापि यद् विशेषणं विधेये साक्षात् विशेषणं तत् तद्विशेषणापेक्षया प्रधानं, यद्विधेये परम्परायान्वेति तत्रैव साक्षाद्विशेषणे लिङ्गे परिभाषा प्रवर्तते न तु परम्पराविशेषणीभूते, उक्तन्यायात्। 'इको यणचि' ६.१.७७ इत्यत्र विधेयस्य यणः साक्षाद् विशेषणे तस्मिन्निति परिभाषा प्रवर्तते न तु "उदीचामातः स्थाने७.३.४६ इति सूत्रे आत इत्यादौ। आत इति आकारस्य विशेषणम् आकारश्च विधेये इत्वे इति परम्पराविशेषणे परिभाषेयं न प्रवर्तते। तेन तत्र 'स्थाने' ग्रहणं चरितार्थम्। एतदपि 'स्थाने' ग्रहणंमस्याः परिभाषायाः ज्ञापकम्॥ स्थानेग्रहणमस्या लिङ्गम् इति। यदीयं परिभाषा नाभविष्यतर्हि 'षष्ठी स्थानेयोगा' १.१.४९ इति परिभाषयैव 'स्थाने' इत्यस्योपस्थित्या "स्थाने" "इत्यर्थलाभे सिद्धे तस्य वैयर्थ्यं स्पष्टमेवेति तद्व्यर्थं सत्परिभाषां ज्ञापयति। इति-

---

"उदीचामातः स्थाने"७.३.४६ सूत्र में स्थाने ग्रहण इस परिभाषा में प्रमाण है। अन्यथा "षष्ठी स्थानेयोगा" १.१.४९ इस परिभाषा की उपस्थिति से "आतः' में स्थानषष्ठी मान ली जाती, तो 'स्थाने' ग्रहण व्यर्थ हो जाता यह कथन भी ठीक नही है "उदात्तस्वरितयोर्यणः "४.२.४ इत्यादि में उद्देश्य अंश "उदात्तस्वरितयोः" में षष्ठी स्थानेयोगा" १.१.४९ की प्रवृति भाष्य में करायी गयी है, "ष्यङः सम्प्रसारणम्" ६.१.१३ सूत्र के भाष्य के अनुसार "अल्लोपोऽनः" ६.४.१३४ यहां अनूद्यमान (उद्देश्य) असर्वनामस्थाने में तस्मिन्निति १.१.६६ परिभाषा की प्रवृत्ति जो दिखाई गयी है, वह सब इस परिभाषा की सत्ता के विरुद्ध है, भाष्य में यह परिभाषा कहीं नहीं कही गयी है। जिस 'स्थाने' ग्रहण को ज्ञापक बताया गया है वह ज्ञापक भी नहीं हो सकता है। क्योंकि "षष्ठी स्थानेयोगा" सूत्र तो निर्दिश्यमान परिभाषा के ज्ञापन के लिए है, इसलिए "स्थानार्थ" की उपस्थिति किसी भी परिभाषा की शक्ति से साध्य नहीं है, अतः "उदीचामातः सूत्र में 'स्थाने' ग्रहण की अत्यन्त आवश्यकता है। अतः उसे ज्ञापक मानना असम्भव है। भाष्यकार ने' षष्ठी स्थाने' सूत्र में साफ-साफ कहा है कि स्थान-सम्बन्ध परिभाषालभ्य नहीं है। अतः स्थानार्थ प्रगट करने के लिए 'स्थाने' ग्रहण चरितार्थ है, इसलिए उसे इस परिभाषा

**इत्यादौ चैतस्या व्यभिचरितत्वात्, भाष्यानुक्तत्वाच्च । स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य 'षष्ठी स्थाने' इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासम्भवाच्च । तत्र स्थानेग्रहणं तु स्पष्टार्थमेव ।**

---

परिभाषास्वीकर्तॄणां मतं संक्षेपेणोपस्थाप्य तत्खण्डयति—तन्नेत्यादिना । इयं परिभाषा नास्त्येव । यदीयं भवेत् तर्हि उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८.२.४ इति सूत्रे''उदात्तस्वरितयोः'' इत्यत्र अनुवादे (परम्परया विधेयविशेषणे) षष्ठीस्थानेयोगा' १.१.४९ इति न प्रवर्तेत तथाच उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः न स्यात् । अत्र हि उदात्तस्वरितस्थानिकयण्परकानुदात्तस्येत्यंशोऽनुवाददलम् (उद्देश्यदलम्) । तत्र प्रधानस्यानुदात्तस्य यद् विशेषणं यण्, तस्य च विशेषणम् उदात्तस्वरितयोरिति तत्रानुवादनीयदलातिशयाप्रधानांशेऽपि 'षष्ठी स्थाने' इति परिभाषासंचारदर्शनात् ज्ञायते इयं परिभाषा नास्तीति ।

किञ्च ''ष्यङः सम्प्रसारणम्'' ६.१.१३ इति सूत्रे भाष्ये अल्लोपोऽनः ६.४.१३४ इति सूत्रेऽनुवादे (विधेयस्य लोपस्य परम्परासम्बन्धेन विशेषणे अङ्गभसंज्ञाक्षिप्ते यजाद्यसर्वनामस्थाने) तस्मिन्निति परिभाषाप्रवृत्तिदर्शनादियं नास्तीति ज्ञायते । यदीयं स्यात् कथंकारं भाष्यकारस्तत्र परिभाषां प्रवर्तयेत् ।

''ष्यङः—६.१.१३ इतिसूत्रस्थं भाष्यं यथा—''अन्कारान्तस्याल्लोपे (वा०) अन्कारान्तस्याल्लोपे प्रयोजनम्—तक्ष्णा, तक्ष्ण इति । त इत्यत्रापि प्राप्नोति । **अनन्त्यविकारेऽन्त्यसदेशस्य** कार्यं भवतीति न दोषो भवति ॥ एतदपि नास्ति प्रयोजनम् । अनाकारं विशेषयिष्यामः '**अनो योऽकार इति** ॥ एवमप्यनसा अनस इत्यत्रापि प्राप्नोति । अन्कारेणाङ्गं विशेषयिष्यामो ऽनाकारम् । अन्कारान्तस्याङ्गस्यानो योऽकार इति ॥ एवमप्यनस्तक्ष्णा अनस्तक्ष्ण इत्यत्रापि प्राप्नोति । एवं तर्हि कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । भस्येति तत्रोपस्थितं भवति यचिभमिति । तत्र यजादिपरतयान्कारं विशेषयिष्यामः, अनाकारम्—यजादिपरस्यानो योऽकार इति ॥

''भाष्ये'' 'विधौ परिभाषोपतिष्ठते'' इति परिभाषा क्वापि नोक्ता । अतोऽपि तस्या अभावो ज्ञायते ॥

स्थाने ग्रहणस्य ''उदीचामातः स्थाने''—७.३.४६ इति सूत्रस्थस्य परिभाषाज्ञापकत्वं यदुक्तं तदपि न ''षष्ठी स्थानेयोगा' इति सूत्रं तु निर्दिश्यमानस्यादेशाः भवन्तीति परिभाषासिद्धिकारकमिति षष्ठी स्थाने १.१.४९ इति सूत्रे भाष्ये स्पष्टमुक्ततया स्थानार्थलाभस्य 'षष्ठी स्थानेयोगा' इति परिभाषासाध्यत्वाभावेन ज्ञापितेऽपि तस्य चारितार्थ्यासंभवात् ।

उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वम् । तच्च प्रथमाया

---

उपपदविभक्तेः कारकविभक्तिर्बलीयसी १०३

ननु नमस्करोतिदेवान् इत्यत्र 'नमःस्वस्तिस्वाहा'—२.३.१६ इतिसूत्रेण नमः शब्दयोगे देवानित्यत्र देवेभ्यो नम इत्यत्रेव चतुर्थी स्यादिति चेन्न "**उपपदविभक्तेः कारकविभक्तिर्बलीयसी** इति परिभाषास्वीकारात् । नच नमःपदार्थे यदि देवपदार्थस्यान्वयो विवक्ष्यते तदा चतुर्थी प्राप्नोति, कृधात्वर्थफलेऽन्वयो विवक्ष्यते चेद्द्वितीया प्राप्नोतीति व्यवस्था सत्वान्नात्रैकदा विभक्तिद्वयं प्राप्नोति, तथा च उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलवत्त्वस्य बोधनं नमस्करोति देवा'नित्यत्र न संभवतीति वाच्यम् निपातानां द्योतकत्वेन नमः पदस्यैव कृधात्वर्थनमस्कारद्योतकतया देवशब्दस्यैकदैव नमस्कारधात्वर्थघटकनमःपदेन सम्पूर्णनमस्काररूपक्रियया चान्वयसत्त्वेन विभक्तिद्वयप्राप्तिसम्भवात् । यदि च यत्र नमः पदस्यैव नमस्कारार्थप्रतिपादकत्वं तत्रैव चतुर्थीत्युच्यते; अथात्र चतुर्थ्याः प्राप्त्यभावान्न दोष इत्युच्यते तदा 'नमस्यति देवानित्यत्र परिभाषां विना दोषो बोध्यः अतएवारुचेरवतरणे प्राह—नमस्यति देवानिति । अत्र नमःपदस्यैव नमस्कारार्थवाचकत्वात् धातुत्त्वाच्चोभयोर्विभक्त्योः सहप्राप्तिरस्तीति भावः । न च नमः पदार्थे क्रियाकर्मभावसम्बन्धेनान्वये विवक्षिते द्वितीया, तदितरसम्बन्धेनान्वये विवक्षिते च चतुर्थीति द्वयोरेकविषयत्वाभावात् कथं तदापत्तिरिति वाच्यम् "नमः स्वस्ति"—२.३.१६ इति सूत्रस्योद्देश्यदले सम्बन्धविशेषस्यानुपादानेनोभयोः प्राप्तौ सत्यां परत्वाच्चतुर्थ्यापत्तेः सभावनयाऽवतरणस्य सुस्थत्वात् ॥

या विभक्तिः कञ्चित्पदविशेषमाश्रित्योत्पद्यते सोपपदविभक्तिः, यथा नम आदिपदविशेषमाश्रित्योत्पद्यमाना नमःस्वस्तीति चतुर्थीविभक्तिः "अन्याराद्दितरर्ते" —२.३.२९ इत्यादिसूत्रेणोत्पद्यमाना पञ्चमीविभक्तिश्च । या च विभक्तिः

---

उपपदविभक्तेः ॥ १०३ ॥

'नमस्करोति देवान्' और 'नमस्यति देवान्' में "नमः स्वस्ति" २.३.१६ सूत्र से चतुर्थी न हो जाय इसलिए परिभाषा मानी गयी है "**उपपदविभक्तेःकारकविभिक्तिर्बलीयसी** । उपपदविभक्ति से कारकविभिक्ति अधिक बलवान् होती है । जो विभक्ति, पद विशेष (नमः, स्वस्ति, बिना आदि) का आश्रय लेकर उत्पन्न होती है, उसे उपपदविभक्ति कहते हैं और क्रिया के आश्रयण से उत्पन्न होने वाली विभक्ति कारक विभक्ति कहलाती है, जैसे—"कर्तुरीसिततमं कर्म" १.४.४९ से कर्मसंज्ञा मूलक द्वितीया । "नमस्करोति देवान्" में उपपदविभक्ति-"नमः" पद के योग में प्राप्त होने वाली चतुर्थी विभक्ति से बलवती होने के कारण 'कर्तुरीप्सिततमं कर्म' से कर्मसंज्ञा मूलक द्वितीया विभिक्ति हुई । जिस विभक्ति का अर्थ क्रियाजनक हो, उसे कारकविभक्ति कहते हैं । प्रथमाविभक्ति का अर्थ भी क्रियाजनक

**अप्यस्तीति सापि कारकविभक्तिरिति 'सहयुक्ते' इत्यादिसूत्रेषु भाष्ये ध्वनितम् ।**

**इयं च वाचनिक्येव । अत एव 'यस्य च भावेन' इति सप्तम्यपेक्षयाधिकरण-**

---

क्रियामाश्रित्योत्पद्यते, सा कारकविभक्तिः यथा "कर्तुरीप्सित तमं कर्म १.४.४९ इति कर्मसंज्ञाद्वारिका द्वितीया विभक्तिः ।। अथवा क्रियाजनकत्वमात्रार्थक-विभक्तित्वं कारकविभक्तित्वम् । प्रथमाया अपि क्रियाजनकत्वात् पुत्रेण सहागतः पितेत्यादौ तृतीयां बाधित्वाऽनया पितृशब्दात् प्रथमांविभक्ति साधयित्वा "सहयुक्तेऽ-प्रधाने २.३.१९ इति सूत्रेऽप्रधानग्रहणं भाष्ये प्रत्याख्यातम् । तेन च भाष्येण प्रथमायाः कारकविभक्तित्वं ध्वनितम् । अतः क्रियाजनकार्थविभक्तित्वं कारकविभक्तित्वं स्वीकार्यम् ।

"सहयुक्तेऽप्रधाने २.३.१९ इति सूत्रस्थं भाष्यमित्थमस्ति—"**सहयुक्तेऽप्रधान-वचनमनर्थकमुपपदविभक्तेः कारकविभक्तिबलीयस्त्वादन्यत्रापि**" (वा० १) सहयुक्तेऽ-प्रधानवचनमर्थकम् । किं कारणम् । उपपदविभक्तेः कारकविभक्तिबलीयस्त्वात् । अन्यत्राप्युपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा भविष्यति । क्वान्यत्र । गाः स्वामी व्रजतीति ।।

अत्र **कैयटः सहयुक्त** इति अप्रधानवचनं प्रधाननिवृत्यर्थं क्रियते । प्रधानस्य चान्तरङ्गत्वात् कारकविभक्तिर्भविष्यतीति नार्थस्तन्निवृत्यर्थेनाप्रधानवचनेनेत्यर्थः । शिष्येण सहोपाध्यायस्य गौरित्यत्रापि गवा सम्बन्धोऽन्तरङ्ग इत्युपाध्यायात्षष्ठ्येव भविष्यति न तृतीया ।। **गाःस्वामी व्रजतीति** । अत्रापि व्रजिक्रियायां गवां कर्मत्वा-त्तन्निबन्धना द्वितीया स्वामीश्वरेति प्राप्ते उपपदविभक्ती षष्ठीसप्तम्यौ बाधित्वा प्रवर्तते इति ।

एतेन भाष्येण प्रथमाया अपि कारकविभक्तित्वं स्पष्टमेवोक्तम् ।।

इयं **च वाचनिक्येव** भाष्ये वचनरूपेण पठितत्वात् । दृश्यते च 'सहयुक्तेऽ-प्रधाने' २.३.१९ इत्यत्र भाष्ये (उपर्युद्धृते) वार्तिकरूपेणास्याः पाठः "नमोवरिव-श्चित्रङः क्यच्" ३.१.१९ इत्यत्र चास्य भाष्यवचने सत्ता । तथाहि भाष्यम्:—

---

है । अतः वह भी कारकविभक्ति है, यह बात 'सहयुक्तेऽप्रधाने' इत्यादि सूत्रों के भाष्य में ध्वनित हुई है । "अभिहिते कारके प्रथमा" इस वार्तिक से भी प्रथमा, कारकविभक्ति सिद्ध होती है । 'सहयुक्ते' २.३.१९ सूत्र के भाष्य में कहा गया कि यदि वहाँ 'अप्रधाने' ग्रहण नहीं किया जायगा तो "पुत्रेण सहागतः पिता" यहाँ पितृ-शब्द से भी तृतीया हो जायगी, बाद में इस प्रश्न का समाधान इस रूप में किया गया "उपपदविभक्तेः" इस न्याय से प्रथमा के द्वारा तृतीया का बाध हो जायगा । इससे सिद्ध है कि प्रथमा भी कारक विभक्ति है ।

सप्तम्या बलवत्त्वमनेन न्यायेन 'तत्र च दीयते' इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम् । एतेन क्रियान्वयित्वं कारकत्वमित्यपास्तम् 'यस्य च भावेने'ति सप्तम्या अपि क्रियान्वयित्वात् ।।

---

"नमसः क्यचि द्वितीयानुपपत्तिः (वा० १) नमसः क्यचि द्वितीया नोपपद्यते । नमस्यति देवान् । किं कारणम् । नमःशब्देन योगे चतुर्थी विधीयते सा प्राप्नोति । "प्रकृत्यन्तरत्वात्सिद्धम्" (वा० २) नमःशब्देन योगे चतुर्थी विधीयते नमस्यति-शब्दश्चायम् । ननु च नमस्यतिशब्दे नमःशब्दोऽस्ति तेन योगे प्राप्नोति । नैष दोषः, अर्थवतो नमःशब्दस्य ग्रहणम्, न च नमस्यतिशब्दे नमःशब्दोऽर्थवान् ।। अथवोपपद-विभक्तेः कारकविभक्तिर्बलीयसीति द्वितीयाविभक्तिर्भविष्यति ।।

उभयत्र भाष्येऽस्याः वचनरूपेणैव पाठ उपलभ्यते । अत इयं वाचनिक्येव, ज्ञापकोपन्यासाभावान्न ज्ञापकसिद्धा न्यायाप्रदर्शनाच्च न न्यायसिद्धेति नागेशस्य भावः ।

अतएव=अस्याः परिभाषाया वाचनिकीत्वादेव ,यस्य च भावेन भावलक्षणम् २.३.३७ इतिसूत्रविहितसप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्ता अनया परिभाषया "तत्र च दीयते" ५.१.९६ इति सूत्रे भाष्ये ध्वनिता कैयटेन च स्पष्टमुक्ता ।

एतेन गम्यते "यत्क्रियान्वयित्वं कारकत्वमिति कारकलक्षणं साधु नास्ति यतो हि प्रथमार्थस्य प्रत्ययार्थेन सहान्वयः स्वीक्रियते अतस्तस्य क्रियान्वयित्वाभावात्पूर्वोक्त-

---

यह परिभाषा वाचनिकी ही है । वचन के रूप में ही सिद्ध है । वाचनिकी होने के कारण ही 'तत्र च दीयत' सूत्र के भाष्य में इस परिभाषा के बल से "यस्य च भावेन" २.३.७९ इस सूत्र से होने वाली सप्तमी से अधिकरण सप्तमी को अधिक बलवान् बताया गया । इस तरह यह 'तत्र च दीयते' ५ १.९६ सूत्र के भाष्य में ध्वनित होती है "तत्र च दीयते कार्यम्" इस सूत्र में पूछा गया है कि 'दीयते' ग्रहण और कार्यग्रहण क्यों किया जाता है; क्योंकि जो मास में दिया जाता है और जो कार्य मास में किया जाता है, वह सब भवार्थ के बीच ही आ जाता है । इस तरह 'तत्र भवः' इसी से सिद्ध हो जायगा । इस प्रकार से प्रश्न उठाकर कहा गया कि "तत्र भवः" में औपश्लेषिक आधार में सप्तमी है । 'तत्र च दीयते' में यस्य च भावेन से सप्तमी है । जहाँ "यस्य च भावेन" से सप्तमी है वहाँ प्रत्यय के लिए "दीयते" का ग्रहण है । इस कैयट के इस ग्रंथ से साफ जाहिर है कि "उपपदविभक्तेः" इस न्याय से औपश्लेषिकाधिकार में सप्तमी हुई है । यह भाष्य इस परिभाषा के वाचनिकी होने पर ही संगत होता है । क्योंकि दोनों क्रियानिमितक सप्तमी हैं । इसलिए प्राधान्यादि दोनों में बराबर है ।

कारकलक्षणासंघटनात् प्रथमायाः कारकत्वानापत्त्या "सहयुक्तेऽप्रधाने" २.३. १९ इति सूत्रे प्रथमायाः कारकविभक्तित्वं स्वीकृत्य तस्याः सहार्थकपदयोगनिमित्तको-पपदविभक्त्यपेक्षया बलवत्त्वप्रतिपादनपरकभाष्यविरोधः स्यात्। अथ च "यस्य च भावेन" २.३.३७ इति विहित-सप्तम्या अपि क्रियान्वयित्वेन तस्या अपि त्वदुक्त-रीत्या कारकविभक्तित्वात्तस्या अधिकरणसप्तम्या बाधकथनमपि विरुद्धं स्यात्। अतः क्रियान्वयित्वं कारकत्वमिति न स्वीकार्यम् क्रियाजनकार्थमात्रार्थविभक्तित्व-मित्येव कारकलक्षणमङ्गीकार्यम् ॥

**ध्वनितम्** इति "तत्र च दीयते कार्यं भववत्" ५.१.९६ इति सूत्रे भाष्ये "कार्यग्रहणमनर्थकं तत्र भवेन कृतत्वात्" इति वार्तिकेन कार्यग्रहणमनर्थकम्, यद्धि मासे कार्यं तत् तत्रभवं भवतीति निगद्य "किमिदंभवान् कार्यग्रहणमेव प्रत्याचष्टे; न पुनर्दीयतेग्रहणमपि, यथैव हि यन्मासे कार्यं तन्मासे भवंभवति, एवं यदपि मासे दीयते तदपि मासे भव भवति तत्र "तत्र भवः" ४.३.५३ इत्येव सिद्धमितिरीत्या कार्यग्रहणस्य दीयते ग्रहणस्य चानर्थक्यमाशङ्क्य न सिद्ध्यति, न तन्मासे दीयते, किन्तर्हि ? मासे गते, एवं तर्हि औपश्लेषिकाधिकरणं विज्ञास्यते इति भाष्ये प्रोक्तम् अत्र कैयटः **मासे गते** इति प्रतीकमुपादाय प्राह--मासे दीयते इति नैषाधिकरणसप्तमी; किन्तर्हि "यस्य च भावेन' इति। तत्र भव इत्यत्र चाधिकरणसप्तमी आश्रिता "उप-पदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायात्। इह तु अतिदेशसामर्थ्याद्भाव-लक्षणसप्तमीपरिग्रह इति।

इत्थं भाष्येणेदं ध्वनितं यत् तत्र भव इत्यनेन न सिद्ध्यति तत्रौपश्लेषिकाधि-करणसप्तमीत्वात् तत्र च दीयते इत्यत्र च सामर्थ्यात् यस्य च भावेनेति सप्तमी। यस्य च भावेनेति यत्र सप्तमी तत्र प्रत्ययार्थं दीयते ग्रहणम् इति कैयटेन च उपपदविभक्ते-रितिन्यायेन यस्य चेति सप्तमीं बाधित्वा औपश्लेषिकाधिकरणे सप्तमीति स्पष्टमेवोक्तम्। अयं चाधिकरणसप्तम्या भावलक्षणसप्तम्याः(सत्सप्तम्याः) बाधः अस्याः परिभाषाया वाचनिकीत्वे एव संगच्छते उभयोः क्रियानिमित्तकत्वेन तुल्यप्राधान्यात्। "पुत्रेण सहागतः पिता" इत्यत्र क्रियानिमित्तकत्वात्प्रथमाविभक्तेः प्राधान्यं सहार्थयोगनिमित्त-कत्वात्तृतीयाविभक्तेरप्राधान्यमिति प्रथमाया बलीयस्त्वं यथा स्थापयितुं शक्यते न्यायं तर्कं वाश्रित्य तथा नेह, इति नेयं न्यायमूलेति भावः। अथ उभयोःसप्तम्योः समान-कालोपस्थितेरधिकरणसप्तमी पूर्वोपस्थितिकत्वादन्तरङ्गा सत्सप्तमी च विलम्बो-पस्थिता बहिरङ्गेत्यपि उभयोर्बलाबलसाधकस्तर्कः न्यायो वा नेह योजयितुं शक्यते उभयोःक्रियानिमित्तिकत्वेन उपस्थितिरिति कालसाम्यात्। इत्थमियं न न्यायमूला किन्तु वाचनिकयेवेति।

अतएव ये तु प्रधानीभूतक्रियासम्बन्धनिमित्तकत्वेन कारकविभक्तीनां बल-

ये तु प्रधानीभूतक्रियासम्बन्धनिमित्तककार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति तेषामुभयोरपि क्रियासम्बन्धनिमित्तकत्वेन तदसङ्गतिः स्पष्टव। 'नमो वरिवस्' इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्ये उपन्यासासङ्गतिश्च ॥ एतेन क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गोपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता बहिरङ्गेत्यपास्तम्, नमस्य-

---

कैयट ने यहाँ स्पष्ट रूप में इसका उल्लेख भी किया है। इस तरह "क्रियान्वयी" को कारक मानने वालों का मत भी खण्डित हो गया। यदि क्रियान्वयित्व कारक का लक्षण होता तो प्रथमा कारक नहीं कहलाती, क्योंकि प्रथमार्थ का अन्वय प्रत्ययार्थ के साथ है; क्रिया के साथ नहीं। यह सभी जानते हैं 'देवदत्तः पचति' इत्यादि में प्रथमार्थ का अन्वय भी तिङ् प्रत्ययार्थ के साथ है। यदि "क्रियान्वयित्वं कारकत्वम्" माना जाय तो 'यस्य च भावेन" २.३.७६ से होने वाली सप्तमी भी क्रियान्वयी होने के कारण कारक विभक्ति में ही गिनी जाय फिर "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" से "यस्य च भावेन की सप्तमी को दुर्बल बनाना असंगत ही हो। जिनके मत में कारकविभिक्ति की बलवत्ता प्रधानीभूतक्रियासम्बन्धनिमित्तक कार्य होने के कारण होती है, उनका वह तर्क भी यहाँ काम नहीं दे सकता; क्योंकि यहाँ "यस्य च भावेन" से की जाने वाली सप्तमी तथा औषश्लेषिक सप्तमी दोनों क्रियासम्बन्ध निमित्तक हैं। अतः दोनों समान हैं। उनमें एक को प्रधानीभूतक्रियासम्बन्ध निमित्तक कार्य सिद्ध करके बलवान् नहीं बताया जा सकता। अतः इस परिभाषा को तर्कमूला मानने की कोई गुञ्जाइश नहीं है। इसलिए इसको 'वाचनिकी मानना अनिवार्य है। वाचनिकी बिना माने 'यस्य च भावेन' २.३.७६ सूत्र का भाष्य असंगत हो जायगा। साथ-साथ "नमो वरिवस्" ३.१.१६ सूत्र में भाष्यकार ने "नमस्यति देवान्" में चतुर्थी के निवारण के लिए इस परिभाषा की जो प्रवृत्ति दिखायी है, वह भी असंगत हो जायगी। इस तरह जो (कैयट) कारकविभक्ति को अन्तरङ्ग और उपपद विभिक्त को बहिरंग मानकर इस परिभाषा के मूल में अन्तरङ्ग और बहिरङ्गत्व को हेतु मानते थे; उनका मत भी खण्डित हो गया, क्योंकि पूर्वोक्त उदाहरणों में (नमस्यति देवान् इत्यादि में) दोनों विभक्तियाँ कारक विभक्ति ही हैं। उन का कथन था कि क्रियाकारक सम्बन्ध प्रथमोपस्थित होने के कारण अन्तरङ्ग है, तन्निमित्तक विभिक्ति भी अन्तरङ्ग है, उपपदपदार्थ के साथ तो यथाकथंचित् क्रियाकारक भाव सम्बन्ध होता है, तन्निमित्तक विभक्ति की पश्चात् उपस्थिति होती है। इसलिए वह बहिरङ्ग है परन्तु यह मत इसलिए गलत है कि 'नमस्यति देवान्' इत्यादि में जहाँ 'नमस्यति' नामधातु से बना है वहाँ नमः पदार्थ के साथ भी क्रियाकारक भाव से ही

**तीत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात्। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव ॥**

---

वत्त्वं स्वाभाविकं (प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्यय इति न्यायसिद्धं वा) वदन्ति तेषां कथनं न युक्तम् उभयोरपि सप्तम्योः क्रियासम्बन्धनिमित्तकत्वेन अधिकरणसप्तम्याः सत्सप्तम्यपेक्षया बलवत्त्वप्रतिपादनपरकभाष्यकैयटविरोधात्। "नमोवरिवस्" ३.१.१९ इति सूत्रे भाष्ये (उपर्युद्धृते) 'नमस्यति' देवान्' इत्यादौ चतुर्थीवारणाय अस्या उपन्यासस्यासंगत्यापत्तेश्च द्वितीयाचतुर्थ्योरुभयोरपि 'नमस्यति' पदप्रतिपाद्यप्रधानीभूतक्रियासम्बन्धनिमित्तककार्यत्वात्। अतो नेयं न्यायमूला ॥

**एतेन क्रियाकारकेत्यादिना** कैयटमतमुपस्थाप्य खण्डयति "अन्तरान्तरेण युक्ते" २ ३.४ इति सूत्रेभाष्ये "अन्तरा त्वां मां च कमण्डलुः" इत्यत्र कमण्डलुशब्दाद् द्वितीयापत्तिवारणाय भाष्यकृता "अन्तरान्तरेण युक्तानामप्रधानवचनम्" कर्तव्यमित्याशङ्क्य यदा प्रोक्तम् न कर्त्तव्यं तद्वचनम् "**उपपदविभक्तेः कारकविभक्तिबलीयसी**" इति कमण्डलुशब्दात् प्रथमा भविष्यति ॥ तदा तत्र कैयटेनोक्तम् अस्तीति क्रियानुषङ्गात्कमण्डलोः कर्तृत्वम्। तच्च तिङाऽभिहितमिति प्रथमा कारकविभक्तिः। सा च अन्तरङ्गा क्रियाकारकसम्बन्धस्यान्तरङ्गत्वात्। उपपदार्थेन तु क्रियाद्वारकः सम्बन्ध इति तन्निमित्ता बहिरङ्गाविभक्तिरिति ॥

इत्थं कैयटः "क्रियाकारकसम्बन्धस्य पूर्वोपस्थितत्वादन्तरङ्गत्वम् तन्निमित्ता (क्रियाकारकभावसम्बन्धनिमित्ता) विभक्तिरन्तरङ्गा इति हेतोः कारकविभक्तिर्बलीयसी, उपपदार्थेन यत्किञ्चित् क्रियाकारकभावमूलकः सम्बन्धः, इतितत्सम्बन्धनिमित्ताया विभक्तेर्बहिरङ्गत्वमिति न्यायस्यास्य अन्तरङ्गबहिरङ्गभावमूलकबलाबलप्रतिपादकत्वाल्लोकन्यायसिद्धेयमिति विवक्षति तन्न नमस्यति देवान् इत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात् तयोस्तयुक्त्या उभयोरन्तरङ्गत्वात्। नच तत्र नमस्यतीत्यस्य नमः करोतीत्यर्थतया क्यचा क्रियार्थः प्रतीयते न नमसेति वाच्यम् "मुण्डमिश्र" ३.२.२१ इतिविहितणिच्प्रकृत्या मुण्डादिशब्देन यथा मुण्डयतौ क्रियात्वं प्रतीयते तथा नमसाऽपि नमस्यतौ क्रियात्वस्य प्रतीतेः सर्वसम्मतत्वात्—'सहयुक्तेऽप्रधाने' २.३.१९ इत्यत्र भाष्ये(अत्रैव परिभाषा विचारे तद्भाष्यमुद्धृतम् ६२९ पृ०) 'अप्रधाने' ग्रहणप्रत्याख्यानाय परिभाषेयमुपन्यस्ता। तदुपन्यसनं वचनरूपेणैव न तु प्रधाना-

---

अन्वय होता है। "मुण्डयति" में जैसे मुण्ड में क्रियात्व है; उसी तरह "नमस्यति" में नमः पदार्थ में क्रियात्व है। "सहयुक्ते" सूत्र में प्रधान (पुत्रेण सहागतः पिता में पितृ आदि) शब्द से प्रथमासिद्धि के लिए यह परिभाषा भाष्य में उपन्यस्त (प्रयुक्त) हुई है।

'सहयुक्ते' इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्ये उपन्यस्तेत्यन्यत्र विस्तरः ॥१०३॥

---

प्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायबललभ्यार्थमादायेति सिद्धेयं सर्वतोभावेन वाचनिकीति नागेशः ।

वस्तुतस्तु कारकविभक्तीनां बलवत्ता प्रधाननिमित्तकत्वादेव। प्रधानाप्रधान-न्यायमूलकबलाबलप्रदर्शिकेयं परिभाषापि न्यायमूलैव । "नमस्यति" इत्यत्र यः अप-कृष्टत्वप्रकारकबोधानुकूलव्यापारार्थः प्रतीयते तत्रापकृष्टत्वप्रकारकबोधान्वयस्य सत्वाद् वशब्दाच्चतुर्थी प्राप्नोति चतुर्थ्यास्तादृशबोधान्वयमात्रस्यापेक्षणात् । अपकृष्टत्व-प्रकारकबोधानुकूलो यःव्यापारो नमस्यतीत्यस्य बोधे प्रधानः तज्जन्यफलाश्रयत्वात्कर्म-संज्ञामूलकद्वितीयाया बलवत्ताऽनया बोध्यते । न चैवं कर्मणि प्रत्यये नमस्क्रियन्ते देवा इत्यत्र देवशब्दाच्चतुर्थ्यापत्तिः, नागेशमतेन कर्तृप्रत्ययस्थले व्यापारस्य कर्मप्रत्यय-स्थले च फलस्य प्राधान्यस्वीकारेण कर्मत्वस्य प्रधानीभूतक्रियासम्बन्धनिमित्तकत्वा-भावाद् इति वाच्यम् शाब्दबोधे फलस्य प्राधान्येऽपि तस्य फलस्य व्यापारजन्यतया वस्तुतो व्यापारस्यैव प्राधान्येन प्रधानक्रियानिमित्तकत्वानपायात् कर्मत्वनिमित्तक-प्रथमाया अपि चतुर्थ्यपेक्षया बलवत्त्वाक्षतेः ।

---

'सहयुक्तेऽप्रधाने' २.३.१९ में किये गये 'अप्रधाने' ग्रहण के प्रत्याख्यान के लिए भाष्यकार ने इसका जो उल्लेख किया है वह वचन रूप में ही है। 'प्रधाना-प्रधान' न्याय या 'अन्तरङ्गं बलीयः' इस न्याय को आधार बनाकर कारक-विभक्ति को बलवान् साबित करने की इच्छा वहाँ जरा भी नहीं दिखाई पड़ती है। इस तरह नागेश ने इसे शुद्ध 'वाचनिकी' परिभाषा माना है।

दुर्गाव्याख्या के अन्त में इसे 'प्रधानाप्रधान' न्यायमूलक सिद्ध करके 'न्याय-मूला' कहा गया है। 'नमस्यति' का अर्थ 'नमस्करोति' है। नमस्करणानुकूल-व्यापार-रूप अर्थ में नमःपदार्थ विशेषण है, क्रियापदार्थ प्रधान है, विशेष्य है। इसलिए "नमः" रूप अप्रधान पदार्थ के कारण प्राप्त चतुर्थी की अपेक्षा प्रधानक्रिया पदार्थ के कर्म होने के कारण प्राप्त द्वितीया विभिक्ति का प्रबल होना उचित ही है। इसे न्याय मूलक मानने के कारण ही "पुत्रेण सहागतस्य पितुरिदं वस्त्रम्" में षष्ठी विभक्ति के द्वारा तृतीया का बाध हुआ और 'पितुः' में षष्ठी हुई। अत्यन्त अप्रधान सहार्थ के योग के कारण प्राप्त तृतीया की अपेक्षा वाक्य में प्रधान 'धनार्थ के सम्बन्ध होने से प्राप्त षष्ठी प्रबल मानी गयी। वाचनिकी मानने पर तो काम नहीं चल सकता था क्योंकि षष्ठी यहाँ 'कारक विभक्त नहीं है। इसलिए वाचनिकी परिभाषा षष्ठी को बलवती सिद्ध नहीं कर सकती। इति शिवम् १०३

नन्वदमुयङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह—

**अनन्त्यविकारेऽन्त्यसदेशस्य ।। १०४ ।।**

---

न्यायमूलकत्वस्वीकारादेव पुत्रेण सहागतस्य पितुरिदं वस्त्रमित्यत्र षष्ठ्या तृतीयाया बाधसिद्धिः वाक्ये नितरामप्रधानीभूतसहार्थसम्बन्धनिमित्तकतृतीयापेक्षया प्रधानीभूतधनसम्बन्धनिमित्तकषष्ठ्या बलवत्तरत्वस्य युक्तिसिद्धत्वात् । वाचनिकीत्व-स्वीकारे तु षष्ठयाः कारकविभक्तित्वाभावेन परिभाषाया अप्रवृत्या तृतीयाया बाधो न स्यात् । "तत्र दीयते कार्यमिति सूत्रस्थभाष्यविरोधस्तु न, "यदि सर्वत्र सत्-सप्तम्येव स्यात्, तर्हि औपश्लेषिकसप्तमीलिङ्गा तस्मिन्निति परिभाषा व्यर्था स्यात्, तस्मादिदं ज्ञापयतीयं तस्मिन्निति परिभाषा यत्—असति बाधकेऽस्मिन् शास्त्रेऽधि-करणसप्तम्येव ।" तत्र भव इत्यत्राधिकरणसप्तमी । 'तत्र दीयते' इत्यत्र सामर्थ्यात् सत्सप्तमी । अतएव भाष्ये औपश्लेषिकाधिकरणं विज्ञास्यते" इत्येवोक्तम् । न तु एषा परिभाषोपन्यस्ता । कैयटे तस्या उपन्यासस्तु तस्मिन्निति ज्ञापनमूलक इति ।

इति शिवम् ।। १०३

**अनन्त्यविकारेऽन्त्यसदेशस्य । १०४ ।**

अमुमञ्चतीति विग्रहे अदस् अम् अञ्च् इत्यस्मात् "ऋत्विग्दधृक् स्रग् दिगु-ष्णिगञ्चुयुजिक्रुञ्चां च" ३.२.५९ इति क्विन् प्रत्ययेऽनुबन्धलोपे वकारस्य 'वेरपृ-क्तस्य' ६.१.६७ इति लोपे कृदन्तत्वात् प्रातिपदिकत्वे सुपो लुकि अदस् अञ्च् इति स्थिते "विष्वद्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" ६.३.९२ इति अदस् शब्दस्य टेः असः अद्र्यादेशे अदद्रि अञ्च् इति स्थिते यणि अदद्र्य् अञ्च् इति स्थिते "अदसोऽसेर्दादु दो मः" ८.२.८० इति अदसो दात् परस्य रेफस्य उत्वे दस्य च मकारे अदमुय् अञ्च् इत्यस्मात् सौ "अनिदिताम्" ६.४.२४ इति नलोपे ',उगिदचाम्" ७.१.७० इति नुमि हल्ङ्यादिलोपे संयोगान्तलोपे "क्विन्प्रत्ययस्य कुः" ८.२.६२ इति नकारस्य-

---

**अनन्त्यविकारे ऽन्त्यसदेशस्य १०४**

"अमुम् अञ्चति" इस विग्रह में अदस् पूर्वक अञ्च् धातु से क्विन् प्रत्यय विष्वग्देवयोश्च ६.३.९२ सूत्र से टि को अद्रि आदेश करने पर अदद्रि अञ्च् ऐसी स्थिति में "अदसोऽ सेदद्दिदोमः" ८'२.८० सूत्र से आगे के द को म, और रेफ को उत्व करने पर अदमुयङ् बनता है। यहां पूर्वदकार को मकार और अकार को उत्व न हो जाय इस लिए परिभाषा मानते हैं "अनन्त्यविकारेऽन्त्यसदेशस्य" अन्त्यसदेश और अनन्त्यसदेश दोनों को यदि एक प्रयोग में एक साथ आदेश प्राप्त हो तो अन्त्य सदेश को ही होता है ।इस परिभाषा से अन्त्य सदेश 'द' और र को मत्व और उत्व हुआ, पूर्व दकारको अनन्त्यसदेश को नहीं । न अन्त्यस्य विकारो येन असौ अनन्त्य-

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः ।

---

कुत्वेन ङकारे अदमुयङ् इति जायते। नन्वत्र अदसोसेरित्यनेन पूर्वदकारात् परस्य अकारस्योत्वे तस्य च दस्य मत्वे अमुमुयङ् इति स्यादिति चेन्न "अनन्त्यविकारेऽन्त्यसदेशस्य" इति परिभाषास्वीकारात् ।। अन्त्यस्य विकारोऽन्त्यविकारः नान्त्यविकारो येन तस्मिन् शास्त्रेऽन्त्यसदेशस्येत्युपतिष्ठते इति व्युत्पत्तिलभ्यार्थः। तत्र फलितार्थमाह अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्कार्यप्राप्तावन्त्यसदेशस्यैव कार्यं भवतीति ।

---

विकारः तस्मिन् शास्त्रे 'अनन्त्यसदेशस्य" इत्यस्य उपस्थितिः। जिस शास्त्र से अन्त्य को कार्य की प्राप्ति न हो उस शास्त्र में "अन्त्यसदेशस्य" की उपस्थिति हो जाती है "अदद्र्यङ्" इस स्थिति में अन्त्य यकार है उसको दकारसे पर नही होने के कारण कार्य की अप्राप्ति है। इस लिए अन्त्य के समान देश में स्थित 'र' को ही उत्व होगा।

बात यह है कि "अदसोऽसेः"—८.२-४० सूत्र में 'अदसः' में अवयव षष्ठी नहीं मानी गयी है किन्तु आचार्यों के व्याख्यान विशेष को आधार मानकर स्थान षष्ठी ही मानी गयी है। इसलिए अलोऽन्त्यस्य' १.१.५२ इस परिभाषा की उपस्थिति हो जायगी और अर्थ होगा कि दकार से पर में विद्यमान अदस् शब्द के अन्त्यावयव को उत्व हो और दकार को मकार हो अप्रत्ययान्त अञ्च् के परे रहते,सान्त को नहीं हो। इस अर्थ में 'अमू बालकौ आसाते' इत्यादि स्थलों में 'अदौ' बनने पर 'औ' अदस् शब्द का अन्तिम अवयव भी है और दकार से पर भी है, वहां ऊत्व और मत्व होगा किन्तु अदद्र्य्+अञ्च् में जो यकार अदस् शब्द का अन्तिम अवयव है वह दकार से पर नहीं है, जो रेफ दकार से पर है वह अदस् शब्द का अन्तिम अवयव नहीं है। इसलिए अदद्र्य् + अञ्च् में सूत्र की प्राप्ति में अव्यवस्था हैं। उस अव्यवस्था का नाजायज फायदा उठाने वालों का विचार है कि जब अन्त्य को उत्व करना यहां असंभव है। इसलिए अन्त्य भिन्न को उत्व करने की बात हमें लाचार होकर स्वीकार करना ही पड़ेगा। अतः अदद्र्य्+अञ्च् में रेफ और पूर्व दकार के अकार में अन्त्यभिन्नता समान होते हुए भी पूर्वोपस्थित होने तथा स्वर होने के कारण पूर्व दकार के अकार को ही उत्व और उसी दकार को मत्व होना चाहिए और 'अमुद्र्यङ्' ऐसा प्रयोग बनना चाहिए यह प्रश्न का आशय था। उसके समाधान में जब यह परिभाषा मानी गयी तब तो परिभाषा के द्वारा अन्तिम वर्ण यकार को दकार से पर में नहीं होने पर अन्त्यसदेश 'रेफ' को ही उत्व करने की व्यवस्था दी गयी है। इस तरह अव्यवस्था का नाजायज फायदा उठाकर पूर्व दकार और अकार को मत्व और उत्व नहीं हुआ।

अन्त्यसदेश(जैसे रेफ)और अनन्त्यसदेश(जैसे पूर्व दकार के अकार)को यदि एक प्रयोग में एक साथ कार्य प्राप्त हो तो अन्त्यसदेश को ही कार्य हो यही परिभाषा का अर्थ

अन्यथा धात्वादेर्नत्वसत्वे नेता सोतेत्यादावेव स्यातां न तु नमति सिञ्चतीत्यादौ ॥
अनन्त्यविकार इति च लिङ्गम् । अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः ।

---

अदद्र्य् अञ्च् इति स्थिते अन्त्यसदेशस्य द्रघटकरेफस्य दकारस्य अनन्त्यसदेशस्य पूर्व-दकारस्याकारस्य चोत्त्वमत्वकार्यस्य युगपत्प्राप्तौ सत्यामन्त्यसदेशस्य द्रघटकरेफस्या-कारस्य च मत्वमुत्त्वं च जायेते । अन्यथा=पूर्वोक्तार्थस्वीकाराभावे इत्यर्थः । अतएव पूर्वोक्तार्थस्वीकारादेव "णो नः" ६-१.६५ इत्यत्र "धात्वादेः षः सः" ६-१.६४ इत्यत्र चास्या अनुपस्थानात् 'नमति' 'सिञ्चतीत्यादौ नत्वसत्वे भवतः । अन्यथा नान्त्यस्य-विकारो येन तस्मिन् अन्त्यसदेशस्येत्युपतिष्ठते (अर्थादन्त्यविकाराकारकशास्त्रे अन्त्य-सदेशस्येत्युपतिष्ठते) इत्यर्थस्वीकारे 'णो नः' 'धात्वादेरिति सूत्रद्वयस्यापि अन्त्य-विकाराकारकत्वादस्या उपस्थित्या 'नेता' 'सोता' इत्यादावेव ताभ्यां नत्वसत्वे स्याताम् न तु नमति सिञ्चतीत्यादौ । तेन तादृशः फलितार्थः सिद्धः । अन्त्यसदेशानन्त्य-सदेशयोरेकप्रयोगे युगपत्कार्यप्राप्तावन्त्यसदेशस्यैव कार्यं भवतीत्यर्थस्वीकारे तु न दोषः 'सिञ्चति' नमतीत्यादौ, नेता सोता, इत्यादौ च अन्त्यसदेशानन्त्यसदेशयोरेवाभावेन परिभाषाया अप्रवृत्तेः

अनन्त्यविकार इति च परिभाषाप्रवृत्तौ लिङ्गम् । अन्त्येन समानो देशो यस्य

---

मानना चाहिए । फलितार्थ यह हुआ कि अन्त्य को विकार की (आदेश की) अप्राप्ति होने से यदि अनेक अन्त्य भिन्न को आदेश की प्राप्ति हो रही हो तो अन्त्य सदेश को "अन्त्येन समानो देशो यस्य तस्य अर्थात् अन्तिम अक्षर से अव्यवहित अक्षर को हो । यदि ऐसा अर्थ नहीं मानकर यह अर्थ माने कि अन्त्य को कार्य की अप्राप्ति होने पर अन्त्य समीप को ही हो तो 'धात्वादेः षः सः' ६.१.६४ और 'णो नः' ६.१.६५ सूत्रों के द्वारा होने वाले षत्व और नत्व 'सोता' और नेता में ही होगें 'सिञ्चति' और नमति में नही । क्योंकि 'णी' और षू धातु में धातु के अन्त्य ई और ऊ के सदेश (अव्यवहित समीप) में वर्तमान ण और ष को ही इस परिभाषा के अनुसार नत्व और सत्व करके सूत्र चरितार्थ हो जायगा । 'षिच्' और णम् में अन्त्य सदेश ष और ण के नहीं होने के कारण सूत्र नहीं लगेगा पूर्वोक्त अर्थ करने पर तो यह परिभाषा वहीं लगेगी जहां अन्त्य को विकार की अप्राप्ति होने पर अनेक अन्त्यभिन्न को एक साथ एक प्रयोग में कार्य की प्राप्ति होगी । वैसी अनेक अनत्य को एक साथ प्राप्ति न नेता में है और और न नमति आदि में । इसलिए परिभाषा को प्रवृत्ति ही नहीं हुई। इसलिए दोष नही हुआ।

इस परिभाषा की प्रवृत्ति में लिङ्ग है अनन्त्य विकार । इसलिए अनन्त्य विकार को देखकर यह प्रवृत्त होती है । अन्त्यसदेश में बहुव्रीहि समास है । इसलिए वह वर्ण

तत्त्वँ चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम्। अत एव विद्ध इत्याद्यर्थं 'न संप्रसारणे' इति चरितार्थम्। 'अल्लोपोऽन' इत्यादेरनस्तक्ष्णेत्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलम्, यजादिस्वादिपरान्नन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षतयौचित्यादङ्गावयवाजादिस्वादिपरस्यान इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयाऽस्या उचितत्वात्।।

---

सोऽन्त्यसदेशः। अन्त्यसदेशत्वञ्चान्त्यवर्णतद्वर्णयोर्विजातीयवर्णव्यवधानशून्यत्वम् अतएव विद्ध इत्यादौ वकारस्य सम्प्रसारणाभावाय "न संप्रसारणे सम्प्रसाणम्" ६.१.३७ इति निषेधश्चरितार्थः। विद्धमित्यत्र व्यध्+त इत्यवस्थायामकारेण व्यवधानाद् यकारस्यान्त्यसदेशत्वाभावेन परिभाषयानया वकारस्य सम्प्रसारणवारणासम्भवेन "न सम्प्रसारणे सम्प्रसारणम्" ६.१.३७ इति निषेधस्यावश्यकत्वात्। अदमुयङ् इत्यत्र तु अदद्र् य् अञ्च् इति स्थिते रफेण व्यवधानेऽपि विजातीयेन (स्वरेण) व्यवधानाभावाद्दकारस्यान्त्यसदेशत्वात्परिभाषेयँ प्रवर्तते।।

अनस्तक्ष्णा इत्यादौ "अल्लोपोऽनः" ६.४.१३४ इत्यनेन आद्यनोऽकारस्य लोपो यन्न भवति तदस्या एव परिभाषायाः फलम्। अन्नन्तं यदङ्गं ,भम् तदवयवो योऽन्-पदीयनिर्दिश्यमानस्तस्याकारस्य लोप इति अल्लोपोऽन इत्यस्यार्थः। निर्दिश्यमानः स भवति यस्य षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिर्भवति। अनस्तक्ष्णा इत्यत्र भसंज्ञकमन्नन्तमङ्गम् अनस्तक्षन् इति तदवयवोऽन्पदीयनिर्दिश्यमानः अन्द्वयम् द्वयोरपि षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिसत्वादुभयोरकारयोर्लोपः प्राप्नोति; अनया च पूर्वस्यानोऽकारस्य लोपाभावः सम्पाद्यते।

---

अन्त्यसदेश होगा जिसका कि देश अन्त्य के समान होगा,अव्यवहित समीप होगा। अन्त्यसदेशत्वेन अभिमतवर्णों में अन्य वर्णों के अव्यवधान से अन्त्यसदेशत्व आता है। व्यध धातु से क्त प्रत्यय करने पर बनने वाले रूप विद्धम् में वकार को सम्प्रसारण निषेध करने के लिए न संप्रसारणे सम्प्रसारणम् ६.१.३७ सूत्र चरितार्थ हो गया। व्यध् धातु में व्य और ध् के बीच अकार के व्यवधान आजाने से अन्त्यसदेश नहीं आया। इसलिए इस परिभाषा की प्रवृत्ति नहीं होने से वकार को प्राप्त सम्प्रसारण का निवारण इस परिभाषा से नहीं हो सकता। अतः सम्प्रसारण निषेधार्थ 'न सम्प्रसारणे सम्प्रसारणम्' सूत्र चरितार्थ हो गया। अनस्तक्ष्णा में "अल्लोपोऽनः" ६.४.१३४ आदि से प्राप्त अकार के लोप का निवारण भी इसी परिभाषा का फल है। "अल्लोपोऽनः" का यादि अजादि प्रत्ययावधि स्वादिपरक अन्नन्त अङ्ग के अकार का लोप हो यही अर्थ करना उचित है; क्योंकि प्रत्यय की आकांक्षा अङ्गांश में ही उठती है,उसकी शान्ति के लिए प्रत्यय को अङ्ग का ही विशेषण मानना उचित है। अङ्गावयव अजादि स्वादि परक भसंज्ञक अन् के अकार का लोप हो, इसप्रकार से सूत्र का अर्थ करके अनेक जगह कष्ट कल्पना

न चैषा 'ष्यङः सम्प्रसारणम्' इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम् । वार्त्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषेषु प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात् । मिमार्जिषतीत्यर्थं च । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद्-

नचाङ्गावयवयजादिस्वादिपरस्यानोऽतो लोप इत्यर्थस्वीकारेणाद्यनोऽकारस्य लोपाप्राप्त्या नानस्तक्ष्णेत्यादौ पूर्वानोकारस्य लोपवारणमस्याः फलमिति वाच्यम् प्रत्ययस्याङ्गांशे उत्थिताकांक्षत्वेन यजादिस्वादिपरस्यान्नन्ताङ्गस्याकारस्य लोप इत्यर्थस्य (अन्नन्तं यदङ्गम् भम् यजादिस्वादिपरकम् तदवयवो योऽनुपदीयनिर्दिश्यमानस्तस्याकारस्य लोप इत्यर्थस्य) एवौचित्यात् । भस्य ६.४.१२७ इत्यनेनाक्षिप्तो यजादिस्वादीतिप्रत्ययविशेषः अङ्गं चेति द्वयमनो विशेषणम्, अनं त्वकारस्यविशेषणं मत्वाऽङ्गावयवयजादिपरस्यानोऽतो लोप इत्यर्थेऽनेककष्टकल्पना कर्तव्या भवति । अतः तादृशोऽर्थः परिहरणीय, एव । अनस्तक्ष्णा इत्यादौ तादृशकष्टकल्पनातो दोषवारणापेक्षया परिभाषास्वीकारपूर्वकतद्दोषवारणमेव ज्यायः ।

नच यदीयं परिभाषाऽऽवश्यकी तदा ष्यङः सम्प्रसारणम् ६.१.१३ इति सूत्रे भाष्ये कथं प्रत्याख्यातेति वाच्यम् नैषा तत्र प्रत्याख्याता, यस्तेन भाष्येणास्याः प्रत्याख्यानं मन्यते स भ्रान्तः तत्र ह्यनेककष्टकल्पनाभिः वार्तिकोक्तफलानामन्यथासिद्धिं दर्शयित्वापि "यान्येतस्याः परिभाषायाः प्रयोजनानि, तदर्थमेषा कर्तव्या प्रति-

करने की अपेक्षा परिभाषा स्वीकार करने में ही लाघव है । ष्यङः सम्प्रसारणम् इस सूत्र के भाष्य में भाष्यकार ने इस परिभाषा का प्रत्याख्यान कर दिया है, यह नहीं मानना चाहिए; क्योंकि उस सूत्र में परिभाषा के कुछ फलों को ही अन्यथा सिद्ध बताया गया है । बहुत से प्रयोग ऐसे हैं जो परिभाषा के बिना सिद्ध नहीं हो सकते । उनके लिए परिभाषा की आवश्यकता भाष्य में मानी ही गयी है । इसलिए वार्तिक के द्वारा उक्त फलों की अन्यथासिद्धि अनेक कष्टकल्पनाओं के द्वारा दिखाकर भी भाष्यकार ने कहा कि इस परिभाषा के जितने प्रयोजन हैं उनके लिए यह परिभाषा माननी ही चाहिए, जहां इस परिभाषा की प्रवृत्ति से दोष आते हैं, वहाँ सूत्र में अनुदात्त निर्देश करना चाहिए और इस परिभाषा की प्रवृत्ति में उदात्तत्व को लिङ्ग मानना चाहिए । भाष्यकार ने अपने ग्रन्थ का उपसंहार इस रूप में करके परिभाषा स्वीकृति को ही महत्व दिया । मृज धातु के सन्नन्त रूप 'मिमार्जिषति' में अभ्यास को ',मृजे वृद्धिः" ७.३.११४ से प्राप्त वृद्धि के निवारण के लिए भी परिभाषा मानना आवश्यक है । यहाँ वृद्धि से पहले अन्तरङ्गत्वात् द्वित्व और परत्वात् अभ्यास कार्य होने पर प्राप्त "मृजेर्वृद्धिः" से वृद्धि के वारण केलिए यह परिभाषा आवश्यक

**द्वित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी । न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिर्लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः ॥**

---

विधेयञ्च दोषेषु, तच्च प्रतिविधानमुदात्तनिर्देशरूपमङ्गीकृत्येत्यन्ततो गत्वा परिभाषा स्वीकृतैव अर्थात् परिभाषाशरीरे "उदात्तनिर्देशे" इति पदं निवेश्य "अनन्त्यविकारेऽन्त्यसदेशस्योदात्तनिर्देशे" इति परिभाषास्वरूपं स्वीकृत्य उदात्तत्वं परिभाषालिङ्गमित्यभ्युपगम्य यत्र परिभाषाया अप्रवृत्तिरिष्यते तत्रानुदात्तनिर्देशरूपप्रतिविधेयकरणेनादोष इति भाष्याशयः । एतेनास्याः परिभाषायाः कर्तव्यतैव सिद्ध्यति न तु प्रत्याख्यानमिति ।

मिमार्जिषतीत्यादौ मृज्धातोः सनि "स्वरतिसूति"—७.२.४४ इतीटि मृज्-इस् इतिस्थिते 'मृजेर्वृद्धिः' ७.२.११४ इति प्राप्तां वृद्धिमन्तरङ्गत्वाद् बाधित्वा 'सन्यङोः' ६.१.९ इति द्वित्वे परत्वादभ्यासत्वमूलके 'उरत्' ७.४.६६ इत्यत्वे रपरत्वे हलादिशेषे ममृज् इस इति स्थिते उत्तरखण्डे मृजेर्वृद्धिरिति वृद्धौ 'सन्यतः' ७.४.७९ इतीत्वे षत्वे मिमार्जिष इत्यस्य धातुत्वे तिपि मिमार्जिषतीति सिद्धम् । अत्र मि मृज् इस् इत्यवस्थायामभ्यासेकारस्य 'मृजेर्वृद्धिः' ७.२.११४ इति वृद्धिवारणायैषा परिभाषावश्यकी । अनया हि अनन्त्यसदेशस्याभ्यासेकारस्य वृद्धिकार्यं वार्यते, अन्त्यसदेशस्य मृजेः ऋकारस्य च विधीयते इति भावः । नच वृद्धौ सत्यामपि तस्य "मै" घटकैकारस्य पुनर्ह्रस्वे कृते न दोष इति वाच्यम् लक्ष्ये लक्षणं सकृदेव प्रवर्तते (प० सं० १२१) इति परिभाषया पुनर्ह्रस्वाप्रवृत्तेः ।

वस्तुतस्तु मिमार्जिषतीत्यत्राभ्यासस्य वृद्धिवारणं नैतस्याः परिभाषायाः फलम् तत्र तु "धातोः कार्यमुच्यमानं तत्प्रत्यये भवति" (प० सं० ८९) इत्यनया परिभाषया मृज्धातुविहितप्रत्ययाव्यवहित—पूर्वस्य मृजेरिको वृद्धिरित्यर्थकस्य "मृजेर्वृद्धिः ७.२.११४ इत्यस्याप्राप्तिः अभ्यास-सन्प्रत्यययोर्मध्ये उत्तरखण्डस्य व्यवधानात् । नचाभ्या-

---

है । यद्यपि वृद्धि करने पर, पुनः अभ्यास को ह्रस्व कर देने से मिमार्जिषति" प्रयोग बनना सम्भव दिखता है तथापि "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" एक लक्ष्य में (एक स्थानमें) एक लक्षण एक बार ही प्रवृत्त होता है इस सिद्धान्त के कारण पुनः ह्रस्व नहीं होगा । वस्तुतः मिमार्जिषति" में 'मि' को वृद्धि रोकने के लिए इस परिभाषा की कोई आवश्यकता नहीं है; क्योंकि "धातोरुच्यमानं कार्यं तत्प्रत्यये भवति" अर्थात् धातु से जो कार्य कहे गये हैं; वे धातु से विहित प्रत्यय के अव्यवहित पूर्व में स्थित धातु को ही होते हैं "मिमार्जिषति" में समुदाय में मृज्त्व नहीं होने से, अभ्यास में मृज्त्व रहने पर भी, उसको प्रत्यय से अव्यहित पूर्व में विद्यमान नहीं होने के कारण वृद्धि की प्राप्ति ही नहीं है ।

यत्तु 'न सम्प्रसारणे' इति सूत्रभाष्ये नैतस्याः प्रयोजनानीत्युक्तं-तस्या-यमर्थः। एतत्सूत्रप्रयोजनान्येतस्याः परिभाषायाः प्रयोजनानि न भवन्ति व्यधादावन्त्य-समानदेशयणोऽभावादिति।

नैतान्येतस्याः प्रयोजनानीति पाठोऽपि क्वचिद् दृश्यते। वाचनिक्येवैषा स्पष्टा च 'ष्यङ्' इति सूत्रेऽदसोऽसेः इति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्ये इत्यन्यत्र विस्तरः ॥१०४॥

---

सस्य मृजत्वमपि नास्तीति वाच्यम् समुदायस्य मृजत्वादभ्यासस्य मृजत्वस्वीकारात्। एवञ्चाभ्यासस्य मृजत्वेऽपि प्रत्ययाव्यवहितपूर्वत्वाभावादेव तत्र 'मृजेर्वृद्धि'--रित्य-स्याप्राप्तेः।

न च यदीयं परिभाषा स्वीक्रियते तर्हि ":न सम्प्रसारणे सम्प्रसारम्" ६.१.३७ इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानि सन्तीति भाष्यासंगतिरिति वाच्यम् "न संम्प्रसारणे सम्प्रसारणम्" ६.१.३७ इति सूत्रस्य प्रयोजनानि विद्ध इत्यादीनि एतस्याः परिभाषायाः प्रयोजनानि न सन्ति (न भवितुमर्हन्ति) व्यधादौ अन्त्यसमान-देशयणोऽभावादिति भाष्यतात्पर्यात्। अतएव क्वचित् पुस्तके "नैतान्येतस्याः प्रयोज-नानीति पाठोऽपि दृश्यते। अत्र एतानीत्यस्य एतत्सूत्र उक्तानि प्रयोजनानीत्यर्थस्य स्पष्टतया प्रतीति र्भवति॥

एषा परिभाषा वाचनिक्येव, न न्यायसिद्धा न वा ज्ञापकसिद्धा। स्पष्टा चेयं "ष्यङः सम्प्रसारणम् ६.१.१३ इतिसूत्रे 'अदसोऽसेः' ८-२-२० इति सूत्रे च। "केचिदन्त्यसदेशस्येत्यनेन (ग्रन्थेन) इत्यन्यत्र= (भाष्यादौ) विस्तर इति।

---

'न सम्प्रसारणे" सूत्र के भाष्य में जो यह कहा गया क इस परिभाषा के प्रयोजन नहीं हैं। उसका यह तात्पर्य है कि 'न सम्प्रसारणे' सूत्र के प्रयोजन (विद्ध इत्यादि) इस परिभाषा के प्रयोजन नहीं हो सकते "व्यध" इत्यादि धातुओं में अकार के व्यवधान होने के कारण यण् (य) को अन्त्यसदेश (अन्त्यसमानदेश) नहीं कहा जा सकता। इसलिए इस परिभाषा की वहाँ प्राप्ति नहीं है। कहीं स्पष्ट रूप से ऐसा भी पाठ दिखाई पड़ता हैं कि "नैतान्येतस्याः प्रयोजनानीति" अर्थात् ये प्रयोजन इस परिभाषा के नहीं हैं।

यह परिभाषा वाचनिकी है। "ष्यङ्" ६.११३ सूत्र और 'अदसोऽसेः' ८.२.२० सूत्र के भाष्य में "केचिदन्त्यसदेशस्य" इन शब्दों के उल्लेख के द्वारा यह स्पष्ट हुई है। इसका अन्यत्र विस्तार से वर्णन किया गया है।

तथाहि "ष्यङः"—६.१.१३ इति सूत्रस्थाविकलो भाष्यग्रन्थो यथा ष्यङन्ते यावन्तो यणस्तेषां सर्वेषां सम्प्रसारणं प्राप्नोति। वाराहीपुत्रः. तार्णकर्णीपुत्रः। तत्राप्रत्ययस्थस्य प्रतिषेधो वक्तव्यः।

यथागृहीतस्यादेशवचनादप्रत्ययस्थे सिद्धम् १.४ निर्दिश्यमानस्यादेशा भवन्तीत्येवमप्रत्ययस्थस्य न भविष्यति ॥ "अनन्त्यविकारेऽन्त्यसदेशस्य वा' ५ अथवाऽनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीत्येष। परिभाषा कर्तव्या। कः पुनरत्र विशेषः ? एषा वा परिभाषा क्रियेताप्रत्ययस्थस्य वा प्रतिषेध उच्येत। अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि। कानि ? "प्रयोजनं न सम्प्रसारणे संप्रसारणम्" ६ "न सम्प्रसारणे संप्रसारम्" ६.१.३४ इत्येतन्न वक्तव्यं भवति। कथं व्यधेविद्ध इति। अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ॥ नैतदस्ति प्रयोजनम्। क्रियते न्यास एव। 'सान्तमहतो दीर्घत्वे' ७. सान्तमहतो दीर्घत्वे प्रयोजनम्। पयांसि, यशांसि। प-य इत्यस्यापि प्राप्नोति। अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ॥ एतदपि नास्ति प्रयोजनम्। नोपधायाः (६.४.७) इति तत्र वर्तते। एवमनांसि मनांसीत्यत्रापि प्राप्नोति सान्तसंयोगेन नोपधां विशेषयिष्यामः। सान्तसंयोगस्य नोपधाया इति। एवमपि हंसशिरांसि अत्रापि प्राप्नोति। नैष दोषः। हम्मतेः हंसः। कः पुनराह हम्मतेः हंस इति। किं तर्हि ? हन्ते हंसो हन्त्यध्वानम् इति। एवं तर्हि सर्वनामस्थान इति वर्तते। सर्वनामस्थानपरतया सान्तसंयोगं विशेषयिष्यामः सान्तसंयोगेन नोपधाम्। सर्वनामपरस्य सान्तसंयोगस्य नोपधाया इति।

अनुकारान्तस्याल्लोपे ८ अनुकारान्तस्याल्लोपे प्रयोजनम्। तक्ष्णा तक्ष्णे—इति 'त' इत्यत्रापि प्राप्नोति। अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ॥ एतदपि नास्ति प्रयोजनम्। अनाकारं विशेषयिष्यामः—अनो योऽकार इति ॥ एवमप्यनसा अनसे इत्यत्रापि प्राप्नोति। अनुकारेणाङ्गम् विशेषयिष्यामः, अना अकारम्—अनुकारान्तस्याङ्गस्यानो योऽकार इति ॥ एवमनस्तक्ष्णा, अनस्तक्ष्णे—इत्यत्रापि प्राप्नोति। एवं तर्हि कार्यकालं संज्ञापरिभाषम्, यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। भस्येति तत्रोपस्थितमिदं भवति "यचि भम् (१.४.१८) इति तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः अनाकारम्—यजादिपरस्यानो योऽकार इति ॥ "मृजेर्वृद्धिविधौ" ९. मृजेर्वृद्धिविधौ प्रयोजनम्। न्यमार्ट्। अटोऽपि वृद्धिः प्राप्नोति। अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति दोषो भवति ॥ एतदपि नास्ति प्रयोजनम् यथापरिभाषितमिको गुणवृद्धी, इतीक एव वृद्धिर्भविष्यति। एवमपि मिमार्जिषतीत्यत्र प्राप्नोति। अस्तु। अभ्यासनिर्ह्रासेन ह्रस्वो भविष्यति ॥ "वसोः सम्प्रसारणे च" (१०) वसोः संप्रसारणे च प्रयोजनम्। विदुषः पश्य। विदि वकारस्यापि प्राप्नोति।

अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। "न संप्रसारणे संप्रसारणम्" इति प्रतिषेधो भविष्यति। इद्कारेण व्यवहितत्वान्न प्राप्नोति। एवं तर्हि निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति॥ "युवादीनाञ्च" (११) युवादीनाञ्च संप्रसारणे प्रयोजनम्। यूनः यूना, यूने। यकारस्यापि प्राप्नोति। अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। "न संप्रसारणे सम्प्रसारणम्" इति न भविष्यति। उकारेण व्यवहितत्वान्न प्राप्नोति। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद् भवतीति स्थानिवद्भावाद् व्यवधानमेव। एवं तर्हि समानाङ्गग्रहणं तत्र चोदयिष्यति॥ "वोरुपधाग्रहणञ्च" (१२) वोरुपधाग्रहणं न कर्तव्यं भवति। इह कस्मान्न भवति अबिभर्भवान्। अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। क्रियते न्यास एव॥ "आदित्यदादिविधिसंयोगादिलोपकुत्वढत्वभष्भावषत्वणत्वेष्वतिप्रसङ्गः" (१३) आदिविधावतिप्रसङ्गो भवति। धात्वादेः षः सः (६.१.६४) णो नः (६.१.६५) इहैव स्यात् सोता, नेता इह न स्यात् सिञ्चति नमति इति॥ आदि॥त्यदादिविधिः। इहैव स्यात्-तद्-सः। त्यद् स्य इत्यत्र न स्यात्॥ त्यदादिविधि॥ संयोगादिलो :। इहैव स्यात्। मङ्क्ता, मङ्क्तव्यमित्यत्र न स्यात्॥ संयोगादिलोप॥ कुत्वम्। इहैव स्यात्। पक्ता। पक्तव्यमित्यत्र न स्यात्॥ कुत्व॥ ढत्वम्—इहैव स्यात्। लेढा। लेढव्यमित्यत्र न स्यात्। ढत्व॥ भष्भावः॥ इहैव स्यात्—अभुत्सि, अभुत्साता-मित्यत्र न स्यात्॥ भष्भाव॥ षत्वम्॥ इहैव स्यात्—द्रष्टा, द्रष्टव्यमित्यत्र न स्यात्। षत्व॥ णत्वम्॥ इहैव स्यात्। माषवापेण, माषवापाणाम् इत्यत्र न स्यात्। णत्व॥

एते दोषाः समा भूयांसो वा तस्मान्नार्थोऽनया परिभाषा॥ नहि दोषाः सन्तीति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम्। नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्तीति यवा नोप्यन्ते। दोषाः खल्वपि साकल्येन परिगणिताः प्रयोजनानामुदाहरणमात्रम्। कुत एतत्। नहि दोषाणां लक्षणमस्ति। तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं दोषेषु॥ इदं प्रतिविधीयते। "उदात्तनिर्देशात्सिद्धम्" यत्रैषा परिभाषेष्यते तत्रोदात्तनिर्देशः कर्तव्यः। ततो वक्तव्यम् अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवत्युदात्तनिर्देश इति। स तर्ह्युदात्तनिर्देशः कर्तव्यः। न कर्तव्यः। यत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च युगपत् समवेतौ तत्रैषा परिभाषा भवति दोषेषु चान्यत्रान्त्यसदेशोऽन्यत्रानन्त्यसदेशः प्रयोजनेषु पुनस्तत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च। यथाजातीयकानि खल्वाचार्येण प्रयोजनानि पठितानि यान्युभयवन्ति। इदमेकं यथा दोषास्तथा वोरुपधाग्रहणमिति। तच्चापि क्रियते न्यासएव॥

**अत्र कैयटः—उदात्तनिर्देशादिति। यथा स्वरितेनाधिकार एवमुदात्तेनैषा परिभाषेत्यर्थः॥**

अत्र भैरव मिश्रः—यथा यथासंख्येतिसूत्रे स्वरितेनेत्यस्य सम्बन्धाद्यत्र यथा संख्यमभिप्रेतं तत्र स्वरितत्वं प्रतिज्ञातमिति कल्पना तथेहाप्यनन्त्यविकारेऽन्त्यसदेशस्योदात्तनिर्देश इति पठनीयमिति। अनन्त्यविकारबोधकशब्दश्च तत्र तत्रोदात्तगुणकः पठनीय इति भावः।

"अदसोऽसेः"—इति सूत्रस्थं भाष्यमित्थमस्तिः—

अदसोऽसेर्दादु दोमः (८.२.८०) अदसोऽनोस्रे: वा० (१) अदसोऽनोस्रेरिति-वक्तव्यम्। किमिदमनोऽस्रेरिति? अनोकारस्य, असकारस्य, अरेफस्येति। अनोकारस्य—अदोऽत्र। असकारस्य—अदस्यति। अरेफस्य—अदः। तर्त्तर्हि वक्तव्यम्? न वक्तव्यम् क्रियते न्यास एव। अविभक्तिको निर्देशः—अदस ओ इति। ओकारात् परः प्रतिषेधः भूतपूर्वः ततः सकारः ततो रेफ इति।

अथवा नैवं विज्ञायते—"अदसोऽसकारस्ये"ति। कथं तर्हि? अकारोऽस्य सकारस्य सोऽयमसिः, असेरिति। यद्येवममुमुयङ्ङति न सिद्ध्यति, अदद्र्यङ्ङति प्राप्नोति। अदमुयङ्ङिति भवितव्यम्—अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति।

अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥

---

विजयाकार ने इस परिभाषा को भाष्यासम्मत बताया है। तभी तो भाष्यकार ने साफ कहा है कि इस परिभाषा के प्रयोजन नहीं है। उनका कहना हैं कि नागेश की पूर्वोक्त व्याख्या में भाष्यकार की इच्छा का, जो कि उनके वाक्य के अक्षरों से प्रगट होती है, हनन हुआ है। यदि भाष्यकार यह कहना चाहते कि इस—"न संप्रसारणे" ६.१.३७—सूत्र के प्रयोजन, इस परिभाषा के प्रयोजन नहीं हैं, तो वे "नैतानि एतस्या परिभाषायाः प्रयोजनानि' इस प्रकार की शब्दावली का प्रयोग करते। सामान्य रूप से प्रयुक्त "नैतस्याः परिभाषायाः प्रयोजनानि" का तात्पर्य तो यही निकलता है कि इस परिभाषा के मानने से कोई उपलब्धि नहीं होती। 'अनस्तक्ष्णा' में पूर्व अकार का लोप तो इसलिए नहीं होगा कि वह निर्दिश्यमान नहीं है। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थिति उस 'अन्' की होगी जो 'राजन्' आदि में है 'अनस्तक्ष्णा का—अनस् का—अन् वैसा नहीं है। अथवा अजादि असर्वनामस्थान से अव्यवहित पूर्व में वह अन् नहीं है। इसलिए वहाँ लोप प्राप्त नहीं है।

"अदमुयङ्" यह प्रयोग भी गलत है अनभिधान होने के कारण। इसलिए भाष्यकार ने अदसोऽसेः ८.२.८० सूत्र में "अदमुयङ्" इतिं भवितव्यम् में "भवितव्यम्" कहा है 'भवति नहीं कहा है।

अत्र कैयटः—ये न सिः असिरिति सकारान्तप्रतिषेधमाश्रयन्ति नान्त्यसदेश-परिभाषां तेऽमुमुयङ्ङितीच्छन्ति यथा चलीक्लृप्यत इति रेफद्वयस्य लत्वम्। अन्त्य-सदेशपरिभाषाश्रये त्वदमुयङ्ङ्इति ।। ये तु त्यदाद्यत्वविषय एवमुत्वमिच्छन्ति तेऽदद्र्य-ङ्ङिति मन्यन्ते । असेर्हीति अःसेर्यस्य सोऽसिस्तस्येत्यर्थः (अर्थात् त्यदाद्यत्वविषय एव मुत्वम् इतिभावः)

परिभाषेयं प्रयोजनाभावान्न स्वीकार्या ।। "न सम्प्रसारणे—इति सूत्रे नैतस्याः परिभाषायाः प्रयोजनानि सन्ति" इत्यत्र एतत्सूत्रसाध्यप्रयोजनानि न सन्तीति संकोचस्तु न युक्तः भाष्येऽप्रत्याख्यातप्रयोजनस्यानुपन्यासात् मिमार्जिषतीत्यत्राभ्यासस्य वृद्धौ कृतायामपि व्यक्तिपक्षे व्यक्तिभेदाद् यद्व्यक्त्याश्रयेण प्रथमप्रवृत्तिर्द्वितीयप्रवृत्तौ तदितरव्यक्त्याश्रयाल्लक्ष्याभावेन प्रतिलक्ष्यं लक्षणोपप्लवसिद्धान्तेन लक्षणस्यापि भिन्नत्वात्पुनर्ह्रस्वप्रवृत्तौ बाधकाभावः । "अदमुयङ्" इत्यस्य सिद्धिस्तु "अदसोद्रेः पृथङ्मुत्वम्" (श्लो० वा० ८.२.८०) इतिवचनेनैव कार्या । इति परे ।

यदि च पुरुषोत्तमदेवसीरदेवादेरिव अनेककष्टकल्पनाः कृत्वानस्तक्ष्णा इत्यादि प्रयोजनानामन्यथासिद्धीकरणापेक्षया परिभाषास्वीकृतौ लाघवमनुभूयते तदा परिभाषा स्वीक्रियताम् ।

इति शिवम् ।। १०४ ।।

---

परन्तु मुझे ऐसा लगता है कि भाष्यकार इस परिभाषा को स्वीकार करने के पक्ष में है। इसलिए 'ष्यङ्:—६.१.१३ सूत्र के भाष्य में (भाष्य का अविकल रूप दुर्गा व्याख्या के पृ० (६४२।६४३) पर उद्धृत है) कहा गया है कि माना कि परि-भाषा मानने पर दोष आते हैं परन्तु मृग चर जायेंगे इस डर के होते हुए जौ की खेती करने वाले जौ बोते हैं और मृग से रक्षा करने का उपाय करते हैं, इसी तरह प्रयोजनों को देखते हुए परिभाषा करनी ही चाहिए और आनेवाले दोष के निवारण के लिए उपाय करना चाहिए। "उपाय" भी बताया कि जहाँ परिभाषा की प्रवृत्ति अभीष्ट होगी वहाँ 'उदात्त' निर्देश कर देंगे। परिभाषा की प्रवृत्ति में उदात्त को लिङ्ग (चिह्न) मानेंगे। इससे सिद्ध होता हैं कि यहाँ नागेश का ग्रन्थ भाष्यानुकूल है।

भट्टोजिदीक्षित ने इस परिभाषा का स्वरूप "अन्त्यबाधेऽन्त्यसदेशस्य" यह दिया है। व्याडि० (प० ५२) पुरुषोत्तमदेव (१०७) और सीरदेव (११२) ने भी परिभाषा का यही स्वरूप किया है। उन्होंने यही कहा है कि अनेक कष्टकल्पनाओं के द्वारा परिभाषा के फलों की अन्यथा सिद्धि दिखाने की अपेक्षा परिभाषा स्वीकार करने में ही लाघव है।

नन्वव्यक्तानुकरणस्यात इति पररूपं पटत् इति पटितीत्यादा 'अलोऽन्त्यस्ये' त्यन्त्यस्य प्राप्नोतीत्यत आह—

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ भृञामित् इत्याद्यन्त्यस्यैवाभ्यासोऽनर्थकोऽर्था-

---

नानर्थकेऽलो—विकारे ॥१०५॥

पटत्+इतीत्यत्र 'अव्यक्तानुकरणस्यात इतौ' ६.१.९८ इति पररूपम् 'अलोन्त्यस्य' १.१.५२ इत्यन्त्यस्य प्राप्नोत्यत आह—

"नानर्थकेऽलोन्त्य विधिरनभ्यासविकारे

अनर्थकेऽनभ्यासविकारे ऽलोन्त्यस्येति न प्रवर्तते इति परिभाषार्थः। पटद् इत्यत्रातोऽनर्थकत्वात्तत्स्थानिकविकारस्य चानभ्यासविकारत्वादलोन्त्यस्येत्यस्याप्रवृत्या सम्पूर्णस्यातः पररूपं सिद्ध्यतीति दोषाभावः।

अनभ्यासविकारे इति निवेशफलमाह—अनभ्यासेत्युक्ते बिभर्तीत्यादौ। "डुभृञ् धारणपोषणयोः" इत्यस्मात् जौहोत्यादिकाद् धातोर्लटि तिपि शपो "जुहो-

---

शाकटायन (प० सं० ५६) कातन्त्र (प० ६३) जैनेन्द्र (प० २८) की परिभाषावृत्तियों तथा भोज परिभाषा सूत्र (१.२.३२) में इस परिभाषा का स्वरूप "अन्त्याभावेऽन्त्यसदेशस्य" मिलता है।

विजयाटीका में 'उदात्तनिर्देशात्' प्रतीक को लेकर लिखा गया है कि "यत्र परिभाषाया अप्रवृत्तिरिष्टा तत्रोदात्तः पठनीयः। अनुदात्तत्वं च परिभाषालिङ्गं कर्तव्यमिति भावः" अर्थात् परिभाषा की प्रवृत्ति को रोकने के लिए उदात्त निर्देश कर देंगे अर्थात् जहाँ परिभाषा की अप्रवृत्ति इष्ट होगी वहाँ उदात्तनिर्देश कर देंगे और इस परिभाषा की प्रवृत्ति में 'अनुदात्तत्व' को लिङ्ग मानेंगे" किन्तु यह पाठ ष्यङः सम्प्रसारणम् ६.१.१३ सूत्र के भाष्य के वाक्य—"यत्रैषा परिभाषेष्यते तत्रोदात्तनिर्देशः कर्तव्यः" जहाँ इस परिभाषा की प्रवृत्ति अभीष्ट होगी; वहाँ उदात्तनिर्देश कर लेंगे" से विपरीत होने के कारण विजया का पूर्वोक्त लेख गलत-सा प्रतीत होता है। इति शिवम् १०४

नानर्थके···विकारे १०५

पटत्+इति पटिति में 'अव्यक्तानुकरणस्यादितौ ६.१.९८ से टि को पररूप होता है; वह "अलोऽन्त्यस्य" १.१.५२ से अन्त्य को होगा, फिर गुण होकर पटेति अनिष्ट रूप बनेगा। इसलिए परिभाषा मानते हैं—"नानर्थकेलोन्त्यविधिरनभ्यासविकारे" अनर्थक अनभ्यास विकार में अलोऽन्त्यस्य की प्रवृत्ति नहीं होती है। परिभाषा में अनभ्यास विकारे कहा गया है। इसलिए अभ्यास विकार में यह परिभाषा नहीं लगती और 'अलोऽन्त्यस्य' की प्रवृत्ति हो जाती है। अतः 'बिभर्ति' में अभ्यास

वृत्त्यभावात्; किं तूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम्। एषा 'ऽलोऽन्त्या' त्सूत्रे भाष्ये स्पष्टा फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यम् ॥१०५॥

---

त्यादिभ्यः श्लुः'' २-४-७५ इति श्लौ 'श्लौ' ६-१-१० इति द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' ७.४.६६ इत्यत्वे रपरे 'हलादिःशेषः' ७.४.६० इति आदिहल्शेषेऽन्यहल्लोपे 'अभ्यासे चर्च' ७,४.५४ इति जश्त्वे ब भृ ति इत्यवस्थायाम् 'भृञामित्' ७.४.७६ इति अभ्यास—'ब'—घटकान्त्याकारस्येत्वे उत्तरखण्डे ''सार्वधातुकार्धधातुकयोः'' ७.३.८४ इति गुणे 'बिभर्ति' इति जायते। अत्रालोऽन्त्यस्य इत्यस्य प्रवृत्तिर्भवत्येव, अस्यां परिभाषायाम् ''अनभ्यासविकारस्य'' इत्युक्तेः। अतएव सम्पूर्णस्य 'ब' इत्यस्य स्थाने इत्वं न भवति किन्तु बघटकान्त्याकारस्यैवेति भावः। न चाभ्यासस्यानर्थकत्वं कथमिति वाच्यम् अर्थावृत्तेरभावात्। अर्थावृत्तिस्वीकारेणैवाभ्यासस्यार्थवत्वं स्वीकर्तुं शक्यते, सैव न सम्भवति तथा सति (अर्थावृत्तिस्वीकारे) अभ्यासादुत्तरखण्डाच्चार्थद्वयबोधापत्तेः। ननु माभूदर्थावृत्तिः किन्तु द्वित्वस्थले योऽर्थस्तिष्ठति स उत्तरखण्डे एव तिष्ठति, न पूर्वखण्डे इत्यत्र किं विनिगमकमिति वाच्यम् ''अस्तेर्द्वित्वे परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोति' इति ''दयतेर्दिगि लिटि'' ७-४-९ इति सूत्रस्थभाष्यस्यैव विनिगकत्वात्।(भाष्यमिदं १०१ परिभाषानिरूपणावसरे ६२९ तमे पृष्ठ उद्धृतम्) उत्तरखण्डस्यानर्थकत्वे परस्य भूभावानापत्त्या तदसंगत्यापत्तेः। अतः द्वित्वस्थले उत्तरखण्डोऽर्थवान् पूर्वखण्डः (अभ्यासः) अनर्थक इति सिद्ध्यति ॥ इत्यन्यत्र=उद्योतादौ (६४८) पृष्ठे उद्धृते। एषाऽलोन्त्यात् पूर्व उपधा १-१-६५ इति सूत्रे भाष्ये स्पष्टा फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चः—

---

'भृ' को इत्व करते समय अन्त्य को इत्व हुआ। जहाँ द्वित्व होता है; वहाँ प्रत्येक खण्ड में अर्थ नहीं रहता। यदि ऐसा होता तो अर्थ की द्विरुक्ति हो जाती। ऐसा अनुभव नहीं होता, 'जुहोति' में दो 'हवन' अर्थ नहीं प्रतीत होते हैं। अतः मानना पड़ेगा कि द्वित्व स्थल में अर्थ उत्तरखण्ड में रहता है। उत्तर खण्ड में ही अर्थ रहता है। इसलिए अस् धातु को द्वित्व करने पर 'पर' को भू आदेश होने से पूर्व अस् का श्रवण हो जायगा ऐसा दोष 'दयते दिगि—७.४.९ सूत्र के भाष्य में दिया गया। यदि उत्तरखण्ड सार्थक न होता; तो उसे 'भू' आदेश कैसे प्राप्त बताया जाता ? अतः अभ्यास का अनर्थक होना स्वाभाविक है। इसलिए अनर्थक होते हुए भी अभ्यास विकार होने के कारण परिभाषा की प्रवृत्ति नहीं हुई। यह परिभाषा 'अलोऽन्त्यात् सूत्र १.१.६५ के भाष्य में स्पष्ट है। उसी सूत्र के भाष्य में परिभाषा

तथाहि — भाष्यम्—"उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः इति ।। नैष दोषः ।। अन्त्यविज्ञानात् सिद्धम् ।। सिद्धमेतत् ।। कथम् ? अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति ।। अन्त्यविज्ञानात् सिद्धमिति चेत् तन्न किं कारणम् ? "नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे" । "अनर्थकेऽलोऽन्त्यविधिर्नेत्येषा परिभाषा कर्तव्या ।। किमविशेषेण ? नेत्याह—अनभ्यासविकारे—अभ्यासविकाराम् वर्जयित्वा । भृञामित्, अर्तिपिपर्त्योश्च इति ।। (अत्र प्रदीपः—अभ्यासोऽनर्थकः । शब्दस्य ह्यावृत्तिर्नार्थस्य ।। (अत्र उद्योतः—शब्दस्य ह्यावृत्तिर्नार्थस्येति कथनम्—एकाज्धातुविषयम् अनेकाक्षु प्रथमस्यैकाचो द्वित्वेनार्थवत्त्वशङ्कैव नैति बोध्यम् । एवं चोत्तरखण्ड एवार्थवान् इतिभावः)

कान्येतस्याः परिभाषायाः प्रयोजनानि ? प्रयोजनमव्यक्तानुकरणस्यात इतौ । अन्त्यस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्न भवति—इति न दोषो भवति ।। नैतदस्ति प्रयोजनम्—("वाम्रेडितस्येत्येव वक्तव्ये) यदयं—"नाम्रेडितस्यान्त्यस्य तु वा" इत्याह तज्ज्ञापयत्याचार्यः—नान्त्यस्य पररूपं भवतीति ।। ध्वसोरेद्धावभ्यासलोपश्च (प्रयोज० वा०)ध्वसोरेद्धावभ्यासलोपश्चेत्यन्त्यस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ।। एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात्सर्वस्य

---

के प्रयोजनों की और प्रकार से सिद्धि दिखाकर परिभाषा का प्रत्याख्यान भी कर दिया गया है। भाष्य इसी परिभाषा की 'दुर्गा' व्याख्या में उद्धृत है । यह वहीं देखा जा सकता है । परिभाषा का प्रत्याख्यान इस प्रकार से किया गया । "पटिति में" परिभाषा नहीं मानने पर भी दोषोद्धार बताते हुए कहा गया कि "आम्रेडितस्य वा" इस न्यास से ही 'अलोऽन्त्य' परिभाषा के बल से अन्त्य को विकल्प सिद्ध हो जाता फिर भी "नाम्रेडितस्यान्त्यस्य तु वा" ६.१.९९ सूत्र जो किया गया है, वह व्यर्थ होकर यह ज्ञापन करेगा कि "अव्यक्तानुकरणस्य" इस सूत्र में 'अलोऽन्त्यविधि' न लगे । इस तरह "पटिति" में कोई दोष नहीं होगा । "आभ्याम्" में भी दोष नहीं होगा क्योंकि "हलि लोपः" ७.२.११४ में 'अनाप्यकः' ७.२.११२ से अन् की अनुवृत्ति करके, 'अन्' को षष्ठी विभक्ति में आवश्यकतानुसार बदलकर 'इदम्' शब्द सम्बन्धी अन् के अन्त्यनकारक लोप करने तथा 'सुपि च' से दीर्घ करने पर "आभ्याम्" की सिद्धि सरलता से हो जायगी । 'देहि' इत्यादि में अभ्यास के अन्त्य का लोप नहीं होगा; क्योंकि 'ध्वसोरेत्' सूत्र में 'लोपश्' आदेश मानकर 'अनेकाल्शित्' सूत्र से सम्पूर्ण अभ्यास का लोप हो जायगा ।

इस परिभाषा में ज्ञापक "नाम्रेडितस्यान्त्यस्य तु वा" ६.१.९९ यह सूत्र ही है । "अनभ्यास विकारे" इस अंश में "अर्तिपिपर्त्योश्च" ७.४.७७ यह निर्देश ही ज्ञापक है । इति शिवम् १०५

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ 'पुमान् स्त्रिये' त्येकशेषापत्तिः। स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह—

---

भविष्यति ।। अथवा—शिल्लोपः करिष्यते । स 'शित्सर्वस्य' इति सर्वादेशो भविष्यति ।। स तर्हि शकारः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव द्विशकारको निर्देशः ध्वसोरेद्धावभ्यासलोपश्च इति ।। "आपि लोपोऽनचि" (प्रयो० वा०) तिष्ठति सूत्रम् (न प्रत्याख्ययाते) (तत्तु) अन्यथा व्याख्यायते ।। आपि हलि लोप इत्यन्तस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ।। एतदपि नास्ति प्रयोजनम् । अतएव लोपं वक्ष्यामि ।। तदनोग्रहणं कर्त्तव्यम् ।। प्रकृतमनुवर्तते । क्व प्रकृतम् ? अनाप्यक इति ।। तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः । 'हलि' इत्येषा सप्तमी 'अन्' इति प्रथमायां षष्ठीं प्रकल्पयिष्यति—"तस्मिन्नितिनिर्दिष्टे पूर्वस्य" इति ।। "अत्र लोपोऽभ्यासस्य" (प्रयो० वा०) अन्त्यस्य प्राप्नोति । "नानर्थकेऽलोऽन्त्यविधिः" इति न दोषो भवति ।।एतदपि नास्ति प्रयोजनम् 'अत्र' ग्रहणसामर्थ्यात् सर्वस्य भविष्यति । अस्त्यन्यदत्रग्रहणस्य प्रयोजनम् ।। किम् ? सन्नधिकारोऽपेक्ष्यते । इह मा भूत्—दधौ, ददौ ।। अन्तरेणाप्यत्रग्रहणं सन्नधिकारमपेक्षिष्यामहे ।। संस्तर्हि सकारादिरपेक्ष्यते—सनि सकारादाविति इह मा भूत्—जिज्ञापयिषतीति ।। अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे ।। प्रकृतयस्तर्ह्यपेक्ष्यन्ते—एतासां प्रकृतीनां लोपो यथा स्यात् । इह मा भूत् यियक्षति, पिपक्षति ।। अन्तरेणाप्यत्रग्रहणमेताः प्रकृतीरपेक्षिष्यामहे ।। विषयस्तर्ह्यपेक्ष्यते—"मुचोऽकर्मकस्य गुणो वा" इति । इह मा भूत्—मुमुक्षति गामिति ।। अन्तरेणाप्यत्र ग्रहणमेतं विषयमपेक्षिष्यामहे ।। कथम् ? अकर्मकस्येत्युच्यते, तेन यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति । तस्मान्नार्थोऽनया परिभाषया नानर्थकेऽलोऽन्त्यविधिरिति ।।

एवं "राधो हिंसायाम्" ६.४.१२३ इति सूत्रस्य भाष्येऽप्येषा परिभाषा निष्प्रयोजनत्वान्न स्वीकृता । तथाहि='राधादिषु स्थाननिर्देशः" (उपसंख्यानवार्तिकम्) राधादिषु स्थाननिर्देशः कर्तव्यः । न कर्तव्यः । 'एकहल्मध्य' इति वर्तते । यद्येवं "त्रेसतुः" 'त्रेसुः' रशब्दस्यैत्त्वं प्राप्नोति । अस्तु । अलोऽन्त्यस्य विधयो भवन्तीति अकारस्य भविष्यति । अनर्थकेऽलोऽन्त्यविधिर्नेत्येवं न प्राप्नोति । नैतस्याः सन्ति परिभाषायाः प्रयोजनानि ।।

इति शिवम् ।। १०५ ।।

---

प्रधानाप्रधानयोः—कार्यसम्प्रत्ययः १०६

'हंसी च हंसश्च' इस विग्रह में 'पुमान् स्त्रिया" १.२.६७ से जैसे एकशेष होकर 'हंसौ' बनता है वैसे ही "ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च" यहाँ पर भी "पुमान् स्त्रिया" से एकशेष होना चाहिए; क्योंकि यहाँ भी दोनों शब्दों में जो

**प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ॥ १०६ ॥**

तत्र प्रधानास्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः। स्पष्टा चेयं 'पुमान् स्त्रिया' 'नपुंसकमनपुंसकेन' इत्यनयोर्भाष्ये। अन्त०

---

**प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः १०६**

यद्यपि पुमान् स्त्रिया १.२.६७ इति सूत्रस्य स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेदित्यर्थः। तथाच ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ तेन सूत्रेणैकशेषः प्राप्नोति, उभयत्र (ब्राह्मणवत्सा ब्राह्मणीवत्सः इत्यनयोः) स्त्रीत्व-पुंस्त्वातिरिक्तकृतविशेषाभावेन तल्लक्षणमात्रकृत विशेषस्य सत्वात् तथापि "प्रधाना-**प्रधानयोः प्रधाने कार्यसंप्रत्यय**" इति परिभाषास्वीकारेण पुमान् स्त्रिया इत्यादेः प्रधानस्त्रीत्वपुंस्त्वमात्रकृतविरूपरूपविशेष एव प्रवृत्तेरदोषः, ब्राह्मणीवत्सा, ब्राह्मणवत्सः इत्यादौ तु अप्रधानब्राह्मणशब्दगतं यदप्रधानं स्त्रीत्वादिकं तत्कृतस्यापि वैरूप्यरूप-विशेषस्य सत्त्वान्नैकशेषापत्तिरिति। तदुक्तम्—"**तेन प्रधानेति**। यद्यपि लिङ्गं सर्वत्र प्रकारतयैव भासते इति सर्वत्र स्त्रीत्वादेरप्रधानतैव तथापि अप्रधानशब्दगतस्य तस्या-ग्रहणमनया साध्यत इत्यदोषः॥

स्पष्टा चेयं पुमान् स्त्रिया १.२.६७ "नपुंसकमनपुंसकेन—" १.२.६९ इत्यनयोर्भाष्ये इति नागेशः॥ तत्र मया "पुमान् स्त्रिया" १.२.६७ इनि सूत्रस्थं भाष्यं सम्यग् वीक्ष्यापि परिभाषेयं न तत्र विलोकिता। प्रामाण्याय तत्रत्यं भाष्यम-विकलमुद्ध्रियते भवतामपि विलोकनाय। तथाहि—पुमानुस्त्रिया १.२.६७ इह कस्मान्न भवति हंसश्च वरटा च, कच्छपश्च दुलिश्च, ऋश्यश्च रोहिच्चेति? तल्लक्षणश्चेदेव विशेष इत्युच्यते। न चात्र तल्लक्षण एव विशेषः॥ तल्लक्षणएव विशेषो यत् सामानायामाकृतौ शब्दभेदः॥ पुमानुस्त्रिया १.२.७६॥

---

कुछ विलक्षणता है; वह स्त्रीत्व और पुंस्त्व से अतिरिक्त धर्मकृत नहीं है। इस दोष के निवारण के लिए परिभाषा मानते हैं; "**प्रधानाप्रधानयोः प्रधाने कार्य-सम्प्रत्ययः**" प्रधान और अप्रधान दोनों में से प्रधान में कार्य होता है, अप्रधान में नहीं। इस परिभाषा के बल से "पुमान् स्त्रिया" से प्रधानस्त्रीत्व और प्रधान पुंस्त्वमात्र कृत जहाँ विरूपता रहेगी; वहीं उससे एकशेष होगा। 'ब्राह्मणीवत्सः' और 'ब्राह्मणवत्सा' में ब्राह्मणीशब्द में जो अप्रधानस्त्रीत्वादि है; उसके कारण भी विरूपता आयी हुई है, इसीलिए एकशेष नहीं हुआ। वत्सा और वत्सः में जो प्रधानस्त्रीत्व और पुंस्त्व है; उनसे अतिरिक्त अप्रधान 'ब्राह्मणी' और 'ब्राह्मण' में अप्रधान स्त्रीत्व और पुंस्त्व कृत विशेषता के होने के कारण दोष नहीं हुआ। यद्यपि 'लिङ्ग' की प्रतीति सर्वत्र अप्रधानतया ही होती है तथापि इस परिभाषा से

**रङ्गोपजीव्यादपि प्रधानं प्रबलमिति 'हेतुमति च' इत्यत्र भाष्यकैयटयोः ॥१०६॥**

---

इह नास्ति परिभाषायाः 'प्रधानाप्रधानयोः'—इत्यस्या यथाकथञ्चिदपि निर्देशः किमुत स्पष्टत इति तथा च स्पष्टेति कथनमसंगतमिव प्रतिभाति। किञ्च तदग्रिमसूत्रे भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १.२.६८ इत्यत्र दृश्यते भाष्यग्रन्थः "पुमान्-स्त्रिया इह कस्मान्न भवति—ब्राह्मणवत्सा ब्राह्मणीवत्सश्चेति ?" ब्राह्मणवत्सा-ब्राह्मणीवत्सयोर्लिङ्गस्याविभक्तिपरस्य विशेषवाचकत्वादनेकशेषः (समाधानवार्तिकम्-२) अत्र कैयटः १ एकविभक्तावित्यनुवर्तते—पुमान् स्त्रिया १.२.६७ इत्यत्र सरूपाणा-मेकशेष एकविभक्तौ १.२.६४ इत्यस्मात्सूत्रात्। तेन एकशेषनिमित्ते विभक्तौ परतो यत्र स्त्रीपुंसकृतोविशेषस्तत्रैकशेषः। इह तु (ब्राह्मणवत्साब्राह्मणीवत्सशब्दे) तस्यां-चान्तर्वर्तिन्यां च विभक्तावित्येकशेषाभावः॥ इत्थं स्वीकारे कारिका च कारकश्चेत्यत्र लिङ्गबोधकस्य टाबादेः विभक्तिपरत्वेऽपि इत्वस्यापि विशेषस्य (वैरूप्यस्य) वाचकत्वा-त्तस्य च विभक्त्यव्यवहितपूर्वत्वाभावादेकशेषो न स्यात्। तत्र शब्दो या स्त्री तल्लक्षणश्चेदेव विशेष इति स्वीकारे कारकश्च कारिका चेत्यत्रैकशेषे सिद्धेऽपि गोमांश्च गोमती च गोमन्तौ इति न सिध्येत्। अर्थो या स्त्री तल्लक्षणश्चेदेव विशेष इति स्वीकारे गोमन्ताविति सिद्धावपि कारकश्च कारिका च कारकौ इति न सिद्ध्यति। उभयथापि पटुश्च पट्वी च पटू इति न सिद्ध्यति। एवतर्हि नैवंविज्ञायते शब्दो या स्त्री तल्लक्षणश्चेदेव विशेष इति नाप्यर्थो या स्त्री तल्लक्षणश्चेदेव विशेष इति॥ कथं तर्हि ? शब्दार्थौ या स्त्री सद्भावेन च तल्लक्षणो विशेष आश्रीयते॥ तत्र पुनराक्षिपति एव च कृत्वा इहापि प्राप्तिः, ब्राह्मणवत्सा च ब्राह्मणवत्सश्च। एव तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति। किम् ? तदित्यनुवर्तते। तदित्यनेन प्रकृतौ स्त्री-पुंसौ प्रतिनिर्दिश्येते। कौ च प्रकृतौ ? प्रधाने। प्रधानं या शब्दस्त्री, प्रधानं या अर्थस्त्रीति॥

---

अप्रधान शब्द गत लिङ्ग का अग्रहण हो ऐसा तात्पर्य लेना चाहिए। ब्राह्मणभार्याः पश्य, कुलपुत्रः इत्यादि में अप्रधानब्राह्मण और कुल शब्द के अनुसार पुंस्त्व और नपुंसकत्व के आधार पर 'तस्माच्छसो नः पुंसि' ६.१.१०३ से शस् को नत्व और 'अतोऽम्' ७.१.२४ से सु को अम् नहीं हुआ। यह परिभाषा 'पुमान् स्त्रिया' १.२ ६७ और नपुंसकमन···१.२.६९ में स्पष्ट है यह नागेश ने ऐसा लिखा है; परन्तु भाष्य में यह परिभाषा 'भ्रातृपुत्रौ—१.२.६८ के भाष्य में चर्चित हुई देखी गयी है। वहाँ 'पुमान् स्त्रिया' सूत्र का हवाला देकर ही विचार किया गया है। इस लिए नागेश ने वैसा लिख दिया होगा। 'नपुंसकमनपुंसके' सूत्र के भाष्य में तो इसका स्पष्ट

अत्र दृश्येते परिभाषाया नागेशोक्तमवतरणं प्रधानन्यायनिर्देशश्च । अतः 'पुमान् स्त्रिया' इत्यस्य तात्पर्यं "पुमान् स्त्रिया इत्यधिकृत्य यत्रेदंसर्वं विचारितं तद्भाष्यं ग्राह्यम् भ्रातृपुत्राविति सूत्रस्थम् ।

नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १.२.६९ इति सूत्रे प्रधानन्यायोल्लेखो स्पष्टमुपलभ्यते । तथाहि अयं योगः शक्योऽवक्तुम् । कथं शुक्लश्च कम्बलः शुक्लं च वस्त्र तदिदं शुक्लं ते इमे शुक्ले । शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लं तानीमानि शुक्लानि ॥ प्रधाने कार्यसंप्रत्ययाच्छेषः (समाधान वार्ति०) XXXX—अनिर्ज्ञातेऽर्थे गुणसंदेहे च नपुंसकलिङ्गं प्रयुज्यते XXXX—प्रधाने कार्यसम्प्रत्ययान्नपुंसकस्य शेषो भविष्यति ॥

यद्यपि नागोजिभट्टेनास्य लोकन्यायसिद्धत्वं नोक्तम् तथापि "नपुंसकमन—" १.२.६९ इति सूत्रस्य प्रदीपे कैयटेन यथा लोके बहुषु गच्छत्सु राजा गच्छतीति प्रधानं राजा व्यपदिश्यते; राज्ञश्च प्राधान्यं तदधीनप्रवृत्तिनिवृत्तित्वादन्येषामित्यादिना ग्रन्थेन" तथोक्तमेव । अस्य न्यायसिद्धत्वञ्च पतञ्जलिनाऽपि 'प्रत्ययः ३.१.१ इति सूत्रस्य महाभाष्ये स्पष्टमुक्तं नागेशेनैतन्नोक्तमिति चित्रम् । तथाहि 'प्रत्ययः' ३.१.१ प्रत्ययाधिकारेप्रकृत्युपपदोपाधीनामप्रतिषेधः ॥ प्रत्ययः (३.१.१) इत्यधिकारे पाठेऽपि प्रकृत्युपपदोपाधीनां प्रत्ययसंज्ञातिप्रसंगाभावस्य कारणमेकम्—निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापीत्युक्त्वा द्वितीयं कारणं प्रोच्यते--"प्रधाने कार्यसम्प्रत्ययाद्वा सिद्धम्" (समाधान वा० २) अथवा प्रधाने कार्यसंप्रत्ययो भवति । किंच प्रधानम् प्रत्ययः । तद्यथा बहुषु यात्सु कश्चित् कंचित् पृच्छति—को यातीति । स आह—राजेति । राजेत्युक्ते प्रधाने कार्यसंप्रत्ययाद्यः पृच्छति यश्च कथयति, उभयोः सम्प्रत्ययो भवति ॥ अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति हेतुमति च ३.१.२६ इत्यत्र भाष्यकैयटयोः । शत्रवः स्वर्गमगच्छन्, तान् हरिः प्रैरयदित्यत्यर्थके शत्रूनगमयत् स्वर्गम् इत्यादौ प्रयो-

---

उल्लेख है ही । अन्तरङ्ग उपजीव्य से भी प्रधान बलवान् होता है यह बात "हेतुमति च" ३.१ २६ के भाष्य और कैयट में आती है । इसीलिए "शत्रूनगमयत् स्वर्गम्" इत्यादि में "शत्रवः स्वर्गं गच्छन्ति, तान् हरिः प्रैरयत्" अर्थात् शत्रु स्वर्ग जाते हैं और हरि उन्हें स्वर्ग भेजते हैं, इस अर्थ की विवक्षा में प्रयोज्य कर्म और प्रेरित कर्ता शत्रु में अन्तरङ्गत्व और उपजीव्यत्व के रहने पर भी कर्तृसंज्ञा को बाधकर प्रधानक्रिया निमित्तक होने के कारण कर्मत्व की सिद्धि "कर्तुरीप्सिततमं कर्म" से दिखाकर 'गतिबुद्धि' सूत्र को नियमार्थक बतानेवाला 'हेतुमति च' ३.१.२६ सूत्र का महाभाष्य संगत हुआ । वहाँ कैयट ने लिखा कि ण्यर्थ (प्रेरण) की प्रधानता होने के कारण ईप्सिततम प्रयोज्य को कर्म संज्ञा हुई ।

इति शिवम् । १०६

**ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यादत आह—**

---

ज्यकर्तारः शत्रवः, प्रयोजककर्ता च हरिः तत्र प्रयोज्यक्रियानिरूपितकर्तृत्वेऽन्तरङ्गत्वोपजीव्यत्वयोस्सत्वेऽपि कर्तृसंज्ञां बाधित्वा प्रधानक्रिया—(ण्यन्तक्रिया)—निमित्तत्वेन प्राधान्यात् कर्मत्वस्य "कर्तुरीप्सिततमं कर्म" इत्यनेनैव सिद्धौ "गतिबुद्धिप्रत्यवसानार्थ—" १.४.५२ इति सूत्रस्य नियमार्थत्वं हेतुमति च ३.१.२६ इति सूत्रस्य भाष्यकैयटयोरुक्तं संगतम्। अणौ यः कर्ता तस्य णौ कर्मत्वं चेद् गत्यर्थादीनामेवेति नियमाकारस्तेन पाचयत्योदनं देवदत्तो यज्ञदत्तेन इत्यत्र प्रयोज्यकर्तुर्यज्ञदत्तस्य न कर्मत्वम्।

तथाहि—भाष्यम् (३.१.२६) अस्तु तर्हि प्रत्ययार्थविशेषणम्। यदि प्रत्ययार्थविशेषणम्—पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति। भवति हि तस्य तस्मिन्नीप्सा ॥ XXX नैष दोषः। यत्तावदुच्यते पाचयति...... कर्मसंज्ञा प्राप्नोतीति गतिबुद्धि......इत्येतन्नियमार्थं भविष्यति—एतेषामेवाण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति नान्येषामिति ॥

अत्र कैयटः—ण्यर्थस्य प्राधान्यात् तेनेप्सिततमस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा। न च स्वव्यापारापेक्षया स्वातन्त्र्यात् परत्वात् कर्तृसंज्ञा प्राप्नोतीति वक्तुंयुक्तम् प्रयोज्यव्यापारस्याप्राधान्यात् प्रधानाप्रधानव्यापारसंनिधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वात्। नियमेन तु प्रधानप्रयुक्तकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात् कर्तृत्वं भवत्येव इत्यादि।

इति शिवम् १०६

ननु स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा। याता मातेति संप्तैते स्वस्रादय उदाहृताः इति।

स्वस्रादिगणे मातृशब्दस्य पाठो वर्तते। तेन यथा जननी वाचकान्मातृशब्दात् प्राप्तस्य ऋन्नेभ्यो ङीप् ४.१.५ इति ङीपो निषेधः 'न षट्स्वस्रादिभ्यः' ४.१.१०

---

**अवयवप्रसिद्धेः— बलीयसी १०७**

स्वस्रादिगण में मातृशब्द का पाठ होने से "न षट्स्वस्रादिभ्यः' से ङीप् का निषेध जैसे जननीवाचक मातृ शब्द से होता हैं; वैसे परिच्छेतृवाचक मातृ शब्द से (अर्थात् जो मातृ शब्द मा धातु से तृच् प्रप्यय करके बना है और जिसका अर्थ नापनेवाला है, उससे भी) हो जायगा। इस दोष के निवारण के लिए कहते

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥**

**तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य । योगजबोधे**

इति क्रियते तथा परिच्छेत्तृवाचकमातृशब्दादपि कथं नेति चेन्न "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" ति परिभाषास्वीकारात् । "स्वं रूपम्" १.१.६८ इतिसूत्रेणार्थविशिष्टस्य शब्दस्य ग्रहणमिह शास्त्रे बोध्यते तत्र योगाज्जातस्यार्थस्य विलम्बेनोपस्थितिर्भवति तस्य योगानुसंधानोत्तरमुपस्थितेः, रूढिजस्य तु शीघ्रेणोपस्थितिः तथा प्रसिद्धेः । अतोऽवयवप्रसिद्धेर्यौगिकार्थशब्दापेक्षया समुदायार्थकशब्दस्य बलवत्त्वं यदनया बोध्यते तत्फलितार्थपरकमेव । इत्थमनया शुद्धरूढस्य जननीवाचकस्यैव ग्रहण न परिच्छेतृवाचकस्य । योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव एतत्परिभाषाबीजम् । **योगजबोधे** इति । योगजबोधः अवयवशक्तिज्ञानाधीनो भवति । रूढिजबोधस्तु अवयवशक्तिज्ञानमनपेक्ष्यैव जायते । अतः अवयवशक्तिज्ञानाधीनोपस्थितिजन्यशाब्दबोधेऽवयवशक्तिज्ञानानधीनसमुदायशक्तिज्ञानजन्योपस्थितिः प्रतिबन्धिकेति भावः । प्रतिबध्यप्रतिबन्धकभावस्तु वस्तुस्थित्यैव कल्प्यते । लोके च यत्रान्यतरतात्पर्यनिश्चायकं नास्ति तत्र समुदायशक्त्यैव बोधो भवतीति वस्तुस्थितिः । तथावस्तुस्थित्याऽसमुदायशक्तिजन्योपस्थितिः प्रतिबध्यत इति । एषा वस्तुस्थितीरथकाराधिकरणन्यायेनापि निर्णीयते; तत्रापि

---

हैं कि "**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी**" । योगार्थ की अपेक्षा रूढार्थ बलवान् होता है। यौगिक और रूढ दोनों प्रकार के शब्द अगर मिलते हों तो रूढार्थक शब्द लिये जायेंगे। अवयवप्रसिद्धि का अर्थ यौगिक शब्द है; क्योंकि यौगिक शब्द अवयवार्थों के कारण प्रसिद्ध होते हैं—प्रयोग-योग्य होते हैं। समुदायप्रसिद्धि का अर्थ रूढशब्द है, क्योंकि रूढ शब्द में अवयवार्थ नहीं होता, अतः रूढ शब्द की प्रयोग योग्यता समुदाय पर आधारित होती है। इस परिभाषा के बलसे ङीप्-निषेधक पूर्वोक्त सूत्र में शुद्ध रूढ जननीवाचक मातृशब्द का ही ग्रहण हुआ, परिच्छेतृ-वाचक मातृ शब्द का नहीं।

बात यह है कि 'स्वं रूपम्'—१.१.६८ सूत्र ने इस शास्त्र में अर्थ विशिष्ट शब्द के ग्रहण करने की आज्ञा दे दी है। प्रकृति और प्रत्यय के योग से अर्थ की उपस्थिति में देर लगना स्वाभाविक ही है; क्योंकि ऐसे अर्थ की उपस्थिति के लिए प्रकृति और प्रत्यय के अर्थ का मुंहताज बनना पड़ता है। इसके विपरीत रूढ अर्थ की उपस्थिति झटिति हो जाती है। रूढ-अर्थ-विशिष्ट शब्द (जननीवाची मातृ-शब्द) को लेकर जब 'न षट्स्वस्रादिभ्यः' ४.१.१० यह सूत्र चरितार्थ हो गया; तो परिच्छेतृ-अर्थ-विशिष्ट मातृ शब्द में क्यों लगेगा ?

**तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम्। रथकाराधिकरणन्यायसिद्धोऽयमर्थः।**

---

समुदायशक्तिज्ञानाधीनबोधस्यैवोपादाननिर्णयात्। रथकाराधिकरणन्यायो यथा—**वर्षासु रथकारोऽग्नीनादधीतेति**। अत्र हि 'रथकार' पदेन कस्य ग्रहणम्? रथंकरोतीति रथकारः। रथकारकत्वाद्ब्राह्मणोऽपि कश्चित् रथकारः योगशक्त्योच्यते। अन्यः सङ्करजातीयः रूढ्या रथकार उच्यते तथाचोक्तम्—

माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोः क्रमात्।
शूद्रायां करणो वैश्याद् विन्नास्वेष विधिः स्मृतः॥
माहिष्येण करण्यान्तु रथकारः प्रजायते। इति (याज्ञव०३।११९)

अत्र प्रदर्शितदिशा क्षत्रियात् शूद्रायामुत्पन्ना कन्या करणीत्युच्यते। वैश्य—कन्यायां क्षत्रियादुत्पन्नः पुत्रः माहिष्यः। तेन महिष्येण परिणीता सा करणी यं पुत्रमुत्यादयति स रथकार इत्युच्यते रूढ्या।

अनयोः कतरो रथकारपदवाच्योऽत्र गृहीतः वर्षासु रथकारोऽग्नीनादधीतेति सन्देहे योगाद्रूढिर्बलीयसीति न्यायाद्रूढेर्माहिष्यकरणीतनयस्य ग्रहणमिति प्रदर्शितम्॥

---

योगजन्यबोध में (अवयवार्थ की उपस्थिति में) योग (अवयवार्थ) के अनुसंधान से अस्पृष्ट, शुद्ध-रूढि (समुदाय शक्ति) से होने वाली उपस्थिति प्रतिबन्धक बनती है। रूढ-शक्ति से जब एक अर्थ की उपस्थिति हो गयी और उस अर्थ को लेकर सूत्र सफल हो गया; तब विलम्ब से उपस्थित होने वाले योगार्थ तक वह क्यों जायगा। यह एक वस्तुस्थिति है, स्वाभाविक बात है। इसे ही यहाँ प्रतिबन्धक कहा गया है। वही वस्तुस्थिति इस परिभाषा में बीज है। लोक में भी रूढ़ और यौगिक अर्थों में से किस अर्थ का ग्रहण करें, इस प्रकार की संदिग्ध स्थिति में यदि किसी अर्थ विशेष में तात्पर्य को ग्रहण कराने वाला कोई आधार (प्रकरणादि) नहीं रहता है तो समुदायशक्ति (रूढि) से उपस्थापित अर्थ ही लिया जाता है। रूढ अर्थ की बलवत्ता का या पूर्वोक्त वस्तुस्थिति का प्रतिपादन, जिसके कारण "रूढिर्योगाद्-बलीयसी" की सिद्धि होती है, मीमांसकों ने 'रथकाराधिकरण' न्याय के द्वारा किया है।

"वर्षासु रथकारोऽग्नीनादधीत" वर्षाऋतुओं में रथकार को अग्नियों का आधान करना चाहिए'। यहां 'रथकार' पद से किसका ग्रहण हो? "रथकार" नाम से प्रसिद्ध जाति का—भले ही वह रथ बनाने का काम नहीं करती हो, या रथ बनाने वाले व्यक्तियों का। यदि रथं करोतीति रथकारः यह योगिक अर्थ लेते हैं तो कोई ब्राह्मण भी यदि रथ बनाता है, तो उसे उस वाक्य के द्वारा 'अग्नि' के आधान

**कश्चित्तु 'दीधीवेवीटाम्' इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं नतु दीङ्धीङ् वेञ्वीनामिति—तन्न । तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥१०७॥**

---

श्रुतिसामर्थ्याच्छूद्रसङ्करजातेरपि वर्षास्वग्न्याधानाधिकारदानसिद्धान्तरूप न्याय दयमर्थः सिद्ध्यत्येव, यदवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति ।

परोक्तं परिभाषाफलं निरस्यति—कश्चित् इत्यादिना दीधीङ् दीप्तिदेवनयोः वेवीङ् वेतिना तुल्ये (जुहोत्यादिपठितौ) इमौ धातू अनया परिभाषयैव "दीधीवेवी-टाम्" १.१.६ इत्यत्र गृह्येते न तु दीङ् क्षणे (दिवादिः) धीङ् आधारे (दिवादिः) वेञ् तन्तुसन्ताने (भ्वादिः) वी-गति व्याप्तिप्रजननकान्त्यसनखादनेषु (अदादिः) इत्ये-तेषां धातूनामिह ग्रहणम्, अवयव प्रसिद्धिभ्य एभ्यः समुदायप्रसिद्ध्योस्तयोः प्रब-लत्वस्यानया बोधनादिति कश्चित् तन्न दी-वे-धी-वीटामिति न्यासमकृत्वा 'दीधीवेवी-टाम्' इति न्यासकरणेनैव तेषाम् व्यावृत्तिसिद्धेः ।

---

का हक मिल जाता है । यदि रूढ़ अर्थ लेते हैं तो खाती या बढ़ई जाति का—रथ का अकर्ता भी व्यक्ति इस वाक्य का विषय बनता है । याज्ञव०ने कहा है कि क्षत्रिय यदि शूद्रा से विवाह करता है और उस विवाह में कन्या सन्तान होती है तो 'करणी कहलाती है । वैश्यपुत्री और क्षत्रिय के परिणय से उत्पन्न पुत्र 'माहिष्य' कहलाता है । माहिष्य से परिणीता 'करणी' के पुत्र को 'रथकार कहते है । इस तरह रथकार शब्द करणी माहिष्य के पुत्र अर्थ में रूढ़ है ।

इस अधिकरण में "रूढ़िर्योगाद् बलीयसी" का आश्रय लेकर और झटिति उपस्थित होने के कारण 'रथकार' पद से रूढ़ अर्थ (बढ़ई या खाती वालाअर्थ) लिया गया और श्रुति का कथन होने के कारण शूद्र को भी वर्षा ऋतु में अग्नि के आधान का हक दिया गया । इस अधिकरण ने यह भी सिद्ध कर दिया कि समुदाय शक्ति से जिस अर्थ की उपस्थिति होती है, वह अर्थ अवयव शक्ति से उपस्थित होने वाले अर्थ की अपेक्षा बलवान् होता है ।

इस परिभाषा का प्रयोजन बताते हुए पुरुषोत्तमदेव ने अपनी लघु परिभाषा वृत्ति (प० सं० १०१) में लिखा कि इस परिभाषा के कारण ही 'दीधीवेवीटाम्' १.१.६ सूत्र में दीङ्क्षये, 'धीङ्' आधारे, वेञ् तन्तु सन्ताने वी गत्यादौ का ग्रहण नहीं हुआ किन्तु 'दीधीङ् दीप्तिदेवनयोः और वेवीङ् वेतिना तुल्ये (अदादि) का ही ग्रहण हुआ ; क्योंकि इस परिभाषा ने बताया कि अवयवों से जिन दी, धी, वे और वी की उपस्थिति होती है उस उपस्थिति की अपेक्षा जिन दीधी और वेवी की समुदाय से उपस्थिति होती है, बलवती है । परन्तु यह मत न्यासकार और सीरदेव को मान्य नहीं है । हरिभास्कर अग्नि होत्री ने अपने परिभाषा--भास्कर (परिभाषा संग्रह पृ० ३६७

**ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद्गोऽक्ष इत्याद्यपि स्यादत आह—**

**व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ १०८ ॥**

---

ननु स्वसृननान्दृदुहित्रादिशब्दसाहचर्यान्मातृशब्दस्य कटुम्बसम्बन्धप्रत्यायकस्यैव ग्रहणात् परिच्छेत्तृवाचकस्याग्रहणे सिद्धे न तत् परिभाषायाः फलमिति चेन्न तत्र गणे तिसृचतसृशब्दयोरतथावाचकस्यापि पाठात्तथा साहचर्यग्रहणासंभवात् ॥

इति शिवम् ॥१०७॥

**व्यवस्थितविभाषयापिकार्याणि क्रियन्ते ।१०८।**

गावः किरणाः, अक्षि शब्दश्च रन्ध्रवाची । गवामक्षीव इति विग्रहे षष्ठी-समासः गो+अक्षि इतिस्थिते अक्ष्णोऽदर्शनात् ५.४.७६ इति समासान्तोऽच् प्रत्ययः

---

परि० सं० १०६) में लिखा है **न्यासकारस्त्वाह—यदि तन्त्र दीङादिग्रहणमभिमतम-भविष्यत् तदा निःसंदिग्धं 'वीवेधीदीटाम् इति न्यासमकरिष्यत्''** । नचैवं कृतमतो न तेषां ग्रहणमिति निष्प्रयोजनेयमिति । अर्थात् न्यासकार ने कहा कि यदि पाणिनि को दीङ् आदि पूर्वोक्त चार धातुओं का ग्रहण यहाँ अभीष्ट होता तो वे 'वीवेधीदीटाम्' ऐसा असंदिग्ध न्यास करते । वैसा उन्होंने नहीं किया है । इसलिए उनका ग्रहण नहीं होगा ।

सीरदेव ने भी अपनी बृहत्परिभाषा (प० सं० १०४) वृत्ति में न्यासकार के मत का उल्लेख करते हुए लिखा है —न्यासकारस्तत्रोक्तवान्—यदि दीङादीनां ग्रहणमभिमतं स्यात्तदाऽसन्देहार्थं वीवेधीदीटाम्''इति विन्यासं कुर्यात्''

इस तरह नागेश ने 'कश्चित्तु' शब्द से पुरुषोत्तमदेव का और 'अन्ये' पद से सीरदेव और हरिभाष्कर अग्निहोत्री का स्मरण कराया है ।

यदि स्वस्रादि गण में तिसृ और चतसृ शब्दों का पाठ न होता तो पारिवारिक सम्बन्ध के वाचक स्वसृ आदि शब्दों के साहचर्य से मातृ शब्द भी जननीवाचक ही लिया जा मकता था और साहचर्यपरिभाषा (प०सँ०११२) के बल से परिच्छेतृवाचक मातृ शब्द के ग्रहण को रोका जा सकता था परन्तु वैसा सम्भव नहीं है । इसलिए इस परिभाषा की आवश्यकता है ही ।

इति शिवम १०७

**व्यवस्थितविभाषयाऽपि—क्रियन्ते१०८**

वातायन (खिड़की) अर्थ में 'गवाक्ष' शब्द प्रयुक्त होता है, परन्तु 'गवाक्ष' में जिस अवङ् स्फोटायनस्य । ६.१.१२३ से अवङ् होता है,वह विकल्प है । इस लिए ''गोऽक्षः'' यह भी बनेगा परन्तु 'गोऽक्ष;' से 'वातायन' अर्थ की प्रतीति नहीं होगी । इस लिए **''व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते''** 'व्यवस्थित विभाषा से भी

**लक्ष्यानुसाराद्व्यवस्था बोध्या। 'शाच्छोः' इति सूत्रे 'लटः शत्रि' त्यादिसूत्रेषु च भाष्ये स्पष्टा ॥१०८॥**

---

'यस्येति' ६.४.१४८ इति लोपः गो+अक्ष इत्यवस्थायाम् अवङ्स्फोटायनस्य ६.१.१२३ इत्यवङ्, गवाक्ष इति जायते। वातायने रूढोऽयम्। पुंस्त्वं लोकात्। **अत्र अवङ्** स्फोटायनस्येत्यस्य वैकल्पिकत्वादवङो विकल्पे सर्वत्र विभाषा गोः **६.१.१२२** इति प्रकृतिभावे गो अक्ष इति तस्य विकल्पे "एङःपदान्तादति" ६.१.१०९ इति पूर्वरूपे गोऽक्ष इत्यादिरापद्येत। ततश्च वातायनार्थस्याप्रतीत्या विकल्पस्वभावासिद्धिः वैकल्पिकरूपैः समानार्थप्रत्यायकतायाः स्वभावसिद्धत्वादिति चेत्, श्रूयताम्।

"**व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते**" इति परिभाषास्वीकारेणादोषात्।

विभाषा नाम नवेति विभाषा १.१.४४ इति सूत्रकृता संज्ञा, निषेधविकल्पयोः सा विधीयते। तत्र विभाषा चतुर्धा १. **प्राप्तविभाषा** २. **अप्राप्तविभाषा** ३. **उभयत्रविभाषा** (प्राप्ताप्राप्तविभाषा) ४. व्यवस्थितविभाषा चेति। तत्र **प्रथमा**-यथा 'विभाषा ङिश्योः ६.४.१३६ इति। 'अल्लोपोऽनः' ६.४.१३५ इति प्राप्तस्यानो-

---

कार्य किये जाते है' **यह परिभाषा मानते हैं**। विभाषा चार प्रकार की होती है [1]प्राप्त बिभाषा [2] अप्राप्त विभाषा[3] प्राप्ताप्राप्तविभाषा और[4] व्यवस्थितविभाषा। प्राप्त विभाषा—जैसे "सर्वादीनि सर्वनामानानि १.१.२७ से पूर्वादि शब्दों में सर्वत्र प्राप्त सर्वनाम संज्ञा को जस् में विकल्प करने वाला सूत्र "पूर्वपरावर" १.१.३४ प्राप्त विभाषा है। जरा शब्द को सर्वथा अप्राप्त जरस् आदेश को विकल्प से विधान करने वाला शास्त्र "जराया जरसन्यतरस्याम् ७.२.१०१ अप्राप्त विभाषा है। नेम शब्द को नित्य (सर्वादीनि से प्राप्त तथा प्रथमादि शब्दों को किसी सूत्र के द्वारा नहीं प्राप्त सर्वनाम संज्ञा विधान करने के कारण "प्रथमचरमतयाल्प" १.१.३३ सूत्र प्राप्ताप्राप्त विभाषा का उदाहरण है। जो विभाषा इष्ट लक्ष्य की सिद्धि को ध्यान में रखकर 'व्यवस्थित होती है उसे व्यवस्थित विभाषा कहते हैं जैसे अवङ् स्फोटायनस्य ६.१.१२३ यह सूत्र व्यवस्था के अनुसार कहीं नित्य प्रवृत्त होता है। जैसे-गवाक्षः में और कहीं विकल्प से प्रवृत्त होता है जैसे गवाग्रम्गोऽग्रम् में। 'व्यवस्था'लक्ष्य के अनुसार होती है। इसलिए किसी प्रकार का दोष नहीं होता है।

शाच्छोरन्यतरस्याम्' ७.४.४१ और लटः शतृ ३.२.१२४ इत्यादि सूत्रों के भाष्य में यह स्पष्ट है। 'शाच्छोरन्यतरस्याम्' ७.४.४१ सूत्र के भाष्य में यह प्रश्न उठागा गया कि शा धातु से इत्व विकल्प से विहित है। इसलिए 'संशितव्रतः के स्थान

ऽल्लोपस्यानेन विकल्पनात्। **अप्राप्तविभाषा** यथा शश्छोऽटि ८.४.६३। केनाप्यप्राप्तस्य छत्वस्य विकल्पनात् उभयत्र विभाषा यथा 'विभाषा श्वेः' ६.१.३० श्वयतेः संप्रसारणं वा स्यात् लिटि यङि चेत्यर्थे लिडंशेऽनुसादौ "वचिस्वपियजादीनां किति" ६.१.१५ इति नित्यं प्राप्तस्य णलादावप्राप्तस्य च सम्प्रसारणस्य विकल्पनात्,यङंशे त्वप्राप्तविभाषैव। व्यवस्थिता चासौ विभाषा व्यवस्थितविभाषा या विभाषा "क्व नित्यं' 'क्व च विकल्पेनेति व्यवस्थया युक्ता भवति **सा व्यवस्थितविभाषा** भवति। "इह शास्त्रे व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते। तेन अवङादिकार्यं लक्ष्यानुरोधात् व्यवस्थीयते—क्व नित्यं क्व च विकल्पेन—इति निश्चित्य विधीयते। अतः गवाक्ष इत्यत्र नित्यमेवावङ् जायते अतो न प्रकृतिभावः। नापि पूर्वरूपमापद्यते। सा चेयं व्यवस्था लक्ष्यानुराधात् बोध्या। अतो नातिप्रसङ्गः। परिगणिता चेयम् उदाहृतेऽर्थे :—

देवत्रातो गलो ग्राहः इति योगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥ इति।

शाच्छोरन्यतस्याम् ७.४.४१ इति सूत्रे **भाष्ये** स्पष्टेति। तथाच भाष्यम्="श्यतेरित्वं व्रते नित्यम्" (उपसंख्यान वार्ति० १) श्यतेरित्वं व्रते नित्यमिति वक्तव्यम्। संशितव्रतः॥ तर्त्हि वक्तव्यम्। न वक्तव्यम्।

---

में 'संशातव्रतः' जैसा अनिष्ट प्रयोग न हो जाय। इसलिए 'श्यतेरित्वं व्रते नित्यम्' इसवार्तिक का निर्माण करना चाहिए ; जिससे कि व्रत अर्थ में नित्य इत्व हो और 'संशितव्रतः' ही बने। इसपर भाष्यकार ने कहा कि इस सूत्र में व्यवस्थित विभाषा मानेंगे और नित्य इत्व की व्यवस्था कर लेंगे। वहाँ उन्होंने कहाँ-कहाँ व्यवस्थित विभाषा मानी जाती है, इसकी जानकारी देने के लिए एक श्लोक पढ़ा—

देवत्रातो गलो ग्राहः इतियोगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥

कैयट के अनुसार इस श्लोक का अर्थ है कि **'देवत्रातः'** यहाँ व्यवस्थित विभाषा मानने के कारण 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' ४.२.५६ सूत्र से व्यक्तिवाचक संज्ञा में निष्ठा को नकार नहीं होता है। यहाँ 'देव' ग्रहण इसप्रकार के अन्य संज्ञाओं का भी उपलक्षक (बोधक) है. इसलिए 'भवत्रातः' में भी संज्ञा होने से नत्व नहीं हुआ। जो क्रिया शब्द है वहाँ त्राणं और त्रातः आदि, वहाँ नत्व विकल्प से होगा ही। **गलः** में व्यवस्थित विभाषा मानकर 'अचि विभाषा' ८.२.२१ से गलः में गला(कण्ठ) अर्थ में नित्यलत्व हुआ। इसलिए कण्ठ अर्थ में'गलः' यही होगा विष अर्थ में लत्व का सर्वथा अभाव ही होगा और 'गरः' ही बनेगा। क्रिया शब्द में 'गलः'और 'गरः'दोनों होगा।

देवत्रातो गलो ग्राहः इतियोगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

कैयटेन श्लोकवार्तिकमिदमित्थं व्याख्यातम्—

**देवत्रात** इति । "नुदविदोन्द—" ८.२.५६ इति निष्ठानत्वं संज्ञायां न भवति । देवग्रहणंसज्ञाविशेषोपलक्षणार्थम् । तेन **भवत्रात** इत्यादावपि संज्ञात्वान्नत्वाभावः । यदा तु क्रियाशब्दस्त्राणं त्रात इति तदा नत्वविकल्पः ॥ **गलः** इति । अचि विभाषा ८.२.२१ इति लत्वं प्राण्यङ्गे नित्यं भवति । तेन कण्ठे गल इत्येव, विषे तु गर इति लत्वाभावः । क्रियाशब्दे तूभयं भवति—गरो गल इति ॥ **ग्राह** इति । विभाषा ग्रहः । ३.१.१४३ इति णप्रत्ययो जलचरे नित्यं भवति, ज्योतिषि पचाद्यच्-ग्रह इति ॥ **इतियोग** इति । 'लक्षणहेत्वोः क्रियायाः ३.२.१२६ इति शतृशानज्विधि-र्हन्तीति पलायते, वर्षतीति धावतीत्यादिप्रयोगे न भवति ॥ **मिथ** इति । एकस्मिन् विषये न विकल्पन्ते किन्तु विषयभेदेन । एतच्चाकृतिपक्ष उपपद्यते । तत्र हि सर्वं लक्ष्यमेकध्यम् (एकरूपत्वम्) आपाद्योभयमुपदिश्यते ततश्चोभयं भवतीत्येतावतैव लक्षणस्यैव व्यापारः । असंकीर्णत्वं तु प्रयोगवशात्प्रतीयते ॥ **गवाक्ष** इति । "अवङ् स्फोटायनस्य" ६.१.१२३ इति नित्यमवङ् भवति । प्राण्यङ्गे तु गोरक्षि, गोक्षीति भवत्यन्यत्र तु विकल्पेन ॥ एतच्चोदाहरणं न तु व्यवस्थितविभाषाणां परिगणनम्,अन्यासामपि संभवात् । अतएव 'अजेर्व्यघञपोः' २.४.५६ इति सूत्रे व्यवस्थितविभाषा-

---

ग्राहः में 'विभाषा ग्रहः' ३.१.१४३ से जलचर (मगरमच्छ) अर्थ में नित्य ण प्रत्यय हुआ और तारा अर्थ में 'ण' प्रत्यय नहीं हुआ किन्तु पचाद्यच् हुआ और 'ग्रहः' बना । इसका भी कारण 'विभाषा ग्रहः' में व्यवस्थित विभाषा ही है । सद्-विधि—शतृ और शानच् प्रत्यय हन्तीति पलायते वर्षतीति धावति इत्यादि में इति-शब्द के योग में नहीं होते हैं । 'मिथः'शब्द के द्वारा यह प्रगट किया गया है कि एक विषय में विकल्प नहीं होता है किन्तु विषय भेद होने पर विकल्प होता है । जैसे कि 'कण्ठ' अर्थ में लत्व विकल्प से नहीं हुआ किन्तु क्रिया शब्द में गिलति-गिरति में, उद्गाल-उद्गार में लत्व विकल्प से हुआ ही । गवाक्षः में अवङ् और संशितव्रत में शा को इत्व विकल्प से नहीं हुआ ।

इस श्लोक में सारी व्यवस्थित विभाषाएं नहीं आ पायी हैं । इसलिए यह नहीं मानना चाहिए कि इतने स्थलों में ही व्यवस्थित विभाषा मानी गयी है किन्तु इन्हें उदाहरण ही मानना चाहिए । इसलिए भाष्यकार ने "परिक्रयणे सम्प्रदानम्" १.४.४४ और अजेर्व्यघञपोः २.४.५६ में व्यवस्थित विभाषा मानी ।

इति शिवम् १०८

## विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥

श्रयणं भाष्ये दर्शितम्—व्यवस्थितविभाषा वा इत्यादिना ॥ अतएव च 'इन्द्रे च' ६.१.१२४ इति सूत्रं त्यक्तुं शक्यम्, गवाक्ष इत्याद्यर्थस्वीकृतव्यवस्थितविभाषयैव गवेन्द्र इत्यादौ नित्यावङ्सिद्धिरिति संगच्छते। 'एवमेव "पापेऽभिनिवेशः" इत्यत्र 'अभिनिविशश्च' १.४.४७ इत्यनेन कर्मसंज्ञावारणार्थम् "परिक्रयणे सम्प्रदानमन्यतरस्याम्" १.४.४४ इत्यतोऽन्यतरस्याम् ग्रहणानुवर्तनम् तस्य च व्यवस्थितविभाषाश्रयणं संगच्छते । इति ।

"लटः शतृ—" ३.२.१२४ इत्यादि सूत्रेषु चेयं स्पष्टा । तथाहि भाष्यम्:— ':शतृशानचौ यदि लटो वा" यदि शतृशानचौ लटो वा भवतः । व्यवस्थितविभाषा च । तेनेह च भविष्यतः—कौर्वतः, पाचतः, कुर्वद्भक्तिः·········—पचमानकल्पः पचन् पठन्निति च शतृशानचौ । इह च न भविष्यतः पचतितराम्······पचतिकल्पं, जल्पतिकल्पम् पचति पठतीति च लटः शतृशानचौ इत्यादि ।

मूले आदिपदादजेर्व्यघञपोः २.४.५६ इत्यादि सूत्रस्थं भाष्यं ग्राह्यम् तथाहि 'घञपोः प्रतिषेधे क्यप उपसंख्यानाम्···कर्तव्यम्. इहापि यथा स्यात् समजनं समज्या इति "न कर्तव्यम्—अपीति नेदं प्रत्ययग्रहणं किन्तु प्रत्याहारग्रहणम्—(अपोऽकाराव् प्रभृत्याक्यपः पकारात्) यदि प्रत्याहारग्रहणं संवीतिर्न सिद्धयति । एवं तर्हि नार्थ उपसंख्याने नापि घञपोः प्रतिषेधेन । इदमस्ति—'चक्षिङः ख्याञ्' 'वा लिटि' ततो वक्ष्यामि—अजेर्वी—अजेर्वीभावो भवति वा । व्यवस्थितविभाषा "वा" इति । तेनेह च भविष्यति—प्रवेता प्रवेतुम् प्रवीतो रथः संवीतिः, इह च न भविष्यति समाजः समजः, उदाजः उदजः, समजनम्, उदजनम्, समज्येति । तत्रायमप्यर्थः—इदमपि सिद्धं भवति प्राजितेति ॥ किंच भो इष्यत एतद्रूपम् ? बाढमिष्यते । एवंहि कश्चिद्वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति ॥ सूत आह—अहमायुष्मन्नस्य रथस्य प्राजितेति ॥ वैयाकरण आह—अपशब्द इति ॥ सूत आह—प्राप्तिज्ञो देवानांप्रियः, नत्विष्टिज्ञः, इष्यत एतद्रूपमिति । वैयाकरण आह—अहो नु खल्वेतेन दुरुतेन बाध्यामह इति ॥ सूत आह—न खलु वेञः सूतः सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम् ॥

भाष्यमिदं प्राप्तिज्ञं निन्दति इष्टिज्ञं च वैयाकरणं स्तौति । एतेन स्थितस्य गतिश्चिन्तनीयेत्येव व्याकरणरहस्यं सूचितं भवतीति ॥

इति शिवम् ॥१०८॥

---

**विधिनियम—विधिरेव ज्यायान्—१०९**

विधि और नियम दोनों अगर सम्भव हों तो विधि ही श्रेष्ठ है । विधिरत्यन्त-

**विधिनियमसंभवे विधिरेव ज्यायान् ।१०९।**

तत्र प्रत्यक्षादिप्रमाणान्तरेणाप्राप्तस्य प्रापको विधिः अर्थात् यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः तदुक्तं कुमारिलमिश्रेण तन्त्रवार्तिके (पृ० ५९) ॥

**विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।**

तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

तत्र—**विधिर्यथा** स्वर्गकामोऽश्वमेधेन यजेत । अत्राश्वमेधयागस्य स्वर्गरूपफलसाधनत्वं न प्रमाणान्तरेण प्रत्यक्षादिनाप्राप्तमित्यन्तमप्राप्तस्यानेनैव वचनेन विधानाद् विधित्वमपूर्वविधित्वम्वास्य वचनस्य । यथा वा व्याकरणे केनापि सूत्रेणाप्राप्तस्य गुणस्य विधायकत्वान् "मिदेर्गुणः" इत्यादिसूत्रं विधिसूत्रम् ॥ स विधिर्यः पक्षे प्राप्तमर्थं नियमयति **नियमविधिरित्युच्यते** यथा व्रीहीन् अवहन्ति । यदीदं वचनं न स्यात्; तदापि तण्डुलनिष्पादनाय व्रीहीणां निस्तुषीकरणरूपं कार्यं नखविदलनादिना अवघातेन च प्राप्तं, उभयो र्युगपदसंभवतया नखविदलनप्राप्तिकालेऽवहननस्य प्राप्त्यभावात्तस्य पाक्षिकी प्राप्तिः पाक्षिकप्राप्तौ सत्यां यदयं पुन विधीयते, तेन मुसलाद्यवहननेनैव निस्तुषीकरणं पुण्यजनकमिति नियमयति । इत्थं नखविदलनं सर्वतोभावेन निवर्तते । अवहननेनैव निस्तुषीकरणे अपूर्वोत्पत्तिस्वीकारान्नियमविधिः ।

---

मप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ।

यह कारिका जैमिनि स्मृति में आयी है । किसी प्रमाण से अप्राप्त के प्रापक (विधायक) को विधि कहते हैं । जैसे सोमेन यजेत' स्वर्गकामो यजेत' इत्यादि में स्वर्गसाधक यज्ञ का जो कि प्रत्यक्षादि प्रमाण से सिद्ध नहीं है, अप्राप्त है, विधान किया गया है । इसलिए यह वाक्य विधि है । पक्षतः प्राप्त का विधान नियम कहलाता है । जैसे "व्रीहीन् अवहन्ति" यज्ञ में चावल (अक्षत या तण्डुल) निकालने के लिए व्रीहियों का अवहनन ही करना चाहिए । यह यहाँ नियम है, क्योंकि अवघात तण्डुल निष्पादक है यह सारी दुनियाँ जानती है कि व्रीहि से चावल निकालने के लिए उन्हें कूटना स्वतः सिद्ध था तथापि जो अवघात का विधान किया गया । इसका तात्पर्य यह है कि कहीं नाखूनों के द्वारा व्रीहियों से चावल न निकाल लें । अतः यह वाक्य नियम करता है कि यज्ञ में तण्डुलार्थी को बार-बार अवघात करके ही तण्डुल की निष्पत्ति करनी चाहिए इसतरह पक्षतः सिद्ध अवघात का इसके द्वारा विधान किया है। अतः यह वाक्य नियम हैं । 'पञ्च-पञ्च नखा भक्ष्याः' में परिसंख्या है, एक साथ प्राप्त अनेक में अन्य की निवृत्ति के साथ एक की विधि परिसंख्या विधि है । क्षुधामूलक इच्छा (राग) से भोजन की प्रवृत्ति जैसे पाँच नखवालों की ओर होगी वैसे ही कुत्ते

तदुक्तं नियमः पाक्षिके सतीति। व्याकरणे नियमविधि र्यथा ''कृत्तद्धितसमासाश्च'' १.२.४६ इत्यनेन समासस्य प्रातिपदिकसंज्ञाविधिर्नियमविधिः अर्थवत् सूत्रेण समासस्य वाक्यस्य च प्रातिपदिकसंज्ञायाः प्राप्तिसत्वेन पाक्षिकप्राप्तिसत्वात् यत्र काले वाक्यस्य संज्ञा प्राप्नोति तत्र काले समासस्य न प्राप्नोतीति पाक्षिकत्वं विधेः। तेन यत्र संघाते पूर्वोभागः पदं तस्य चेद् भवति तर्हि समासस्यैव नियमनाद् वाक्यस्य संज्ञा न भवति।। **परिसंख्या** इति। उभयस्य युगपत् प्राप्तौ अन्यनिवृत्तिफलको विधिः परिसंख्याविधिः। यथा रोगिणं प्रति कथितं वैद्यस्य वाक्यं गोधूमस्य रोटिका मुद्गस्य च सूपो भक्षणीयौ त्वयेति। अनेन वाक्येन न भक्षणं विधीयते, तस्य क्षुन्निवर्त्तकस्य प्रकृत्यैव प्राप्तत्वात्। तत्र गोधूममुद्गयोस्तदितरतण्डुलचणकाद्यन्नानां भक्षणस्य च युगपत्प्राप्तौ गोधूमरोटिकया मुद्गसूपेनैव च क्षुन्निवृत्तिः कार्या इत्यनेन वाक्येन परिसंख्यायते। तेनान्यान्नभक्षणात् स रोगी निवर्तते इति परिसंख्याविधिरयम्। यथा भक्षणं क्षुन्निवृत्यर्थकं तत्र (गोधूममुद्गयोः) अन्यत्र (तण्डुलादौ) च युगपत् प्राप्तं तथावहननं तण्डुलनिष्पादनार्थकं न तत्र (व्रीहिषु) अन्यत्र (शालिषु) च प्राप्तम्। अथवा यथावहननं पाक्षिकं प्राप्तं तथा न भक्षणं पाक्षिकं प्राप्तम् क्षुन्निवृत्तेरुपायान्तरा-

---

आदि के मांसों की ओर भी होगी। लोक से इन सब में अभक्ष्यत्व का विधान होने पर भी पाँच-पाँच नाखून वालों के भक्षण का इस 'पञ्च-पञ्च नखाः भक्ष्याः'' वाक्य विधान किया जाता है। इस तरह यह वाक्य अपने आप में कथित पञ्च-पञ्च नख वालों में तथा उनसे भिन्न(अन्यत्र)कुक्कुरादि में क्षुधा से प्राप्तभक्षण का पञ्च-पञ्च नखवालों में विधायक होने के कारण परिसंख्या वाक्य है। जैसे भक्षण क्षुधा की निवृत्ति के लिए है। इसलिए वह तत्र(पञ्च-पञ्च नखवालों)तथा अन्यत्र (कुक्कुरादि में) प्राप्त है वैसे अवधात जो तण्डुलनिष्पत्ति के लिए है तत्र (व्रीहियों) और तदन्यत्र (जलादि में) प्राप्त नहीं है। अथवा अवधात की जैसे पाक्षिक प्राप्ति है; वैसे भक्षण की पाक्षिक प्राप्ति नहीं है; क्योंकि तण्डुल निष्पत्ति के लिए जैसे अवधात और नख विधूनन (निखोड़ना) आदि उपाय है, उस तरह क्षुधा निवृत्ति के लिए भक्षण से अन्य कोई उपाय नहीं है। इस तरह नियम और परिसंख्या में भेद माना गया है। परिसंख्या उक्ति की वह विधा है जिससे विधेय की व्यापक विषयता सीमित हो जाती है। ''पञ्च-पञ्च नखा भक्ष्याः'' से सर्वत्र प्राप्त भक्ष्यत्व 'पञ्च-पञ्च नख' में सीमित हो जाता है। या लोकनिन्दा से सर्वत्र प्राप्त अभक्ष्यत्व पञ्च-पञ्च नखेतर में सीमित हो जाता है। परिसंख्या यह नहीं कहती कि 'पञ्चपञ्चनख' को खाना ही चाहिए; परन्तु यदि बिना जानवर खाये न रहा जाय तो पञ्चपञ्चनख को खाकर अपनी दुष्ट क्षुधा को शान्त कर सकते हैं।

भावादित्यनयोर्भेदः। व्याकरणे "नलोपः सुप्स्वर"—८.२.२ इति विधिः परिसंख्याविधिः। 'पूर्वत्रासिद्धम्' इति सूत्रेण नलोपासिद्धत्वस्य तत्र(सुत्रादिविधौ राजभ्याम् इत्यादौ) अन्यत्र (सुबविध्यन्यविध्यादौ राजाश्व इत्यादौ) च प्राप्तौ "नलोपः सुप्स्वर"—८.२.२ इति परिसंख्यायते—सुबादिविधिष्वेव नलोपोऽसिद्धो भवति नान्यत्र राजाश्व इत्यादौ वर्णविधौ। तेनान्यत्र नलोपादिसिद्ध्यभावाद्दीर्घादिः सिद्ध्यति। यद्यपि परिसंख्यायां नियमे च स्वार्थहानिः, प्राप्तबाधः, परार्थकल्पना चेति दोषत्रयनुतथापि लक्ष्यानुरोधादनन्यगत्या स्वीक्रियते इति वृद्धाः (परमलघुमञ्जूषायां निपातार्थविचारोपसंहारः)। ननु "कृत्तद्धितसमासाश्च' १.२.४६ इत्यत्र समासग्रहणस्य कार्ये "नलोपः सुप्स्वर"—८-२-२ इत्यस्य च कार्ये न कोऽपि तात्त्विकभेदः परिलक्ष्यते इत्यनयोरैक्यमेव स्वीक्रियताम् इति चेत् सत्यम् पञ्चपञ्चनखा भक्ष्या इति परिसंख्योदाहरणस्य नियमोदाहरणरूपेण भाष्ये दर्शितत्वादन्यनिवृत्तिरूपफलेनैवयाच्च नियमपदेन व्याकरणें परिसंख्यापि गृह्यत एव। तथाच पस्पशाह्निके शब्दानुशासनस्यावश्यकर्तव्यतां व्यवस्थाप्य "किं शब्दोपदेशः कर्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेशः इति ? अन्यतरोपदेशेन कृतं स्यात्। तद्यथाभक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते। पञ्च-पञ्चनखा भक्ष्या इत्युक्ते गम्यते एतत्—अतोऽन्येऽ भक्ष्या इति भाष्योक्तौ नियमत्वेन कृतो निर्देशः संगच्छते। अतएव च समासस्य विधीयमानप्रातिपदिकसंज्ञायाः यद्यपि परिसंख्यात्वमेव सिद्ध्यति तत्र (समासे) अन्यत्र (वाक्ये) चार्थवत्सूत्रेण प्राप्तत्वात्। अनेन च सा प्रातिपदिकसंज्ञा पूर्वभागपदघटितसंघातस्वरूपाद् वाक्याद् अपोह्य समासे परिसंख्यायते तथापि समासग्रहणस्य नियमार्थत्वं भाष्यकारेण प्रोक्तम्। अनेन ज्ञायते परिसंख्यानियमयोरभेदोऽत्र शास्त्रेऽस्तीति। नियमपदेन च परिसंख्यैव गृह्यत इति।

---

यह सब मीमासा दर्शन के अनुसार बताया गया है। इस व्याकरण शास्त्र में तु नियम पद से परिसंख्या ही ली जाती है। इसलिए कृत्तद्धितसमासाश्च १.२.४६ में समास ग्रहण को नियमार्थक माना जाता है। क्योंकि समास को जिस प्रातिपादिक संज्ञा का विधान किया जाता है। वह समास में और समास से भिन्न वृक्ष आदि में और वाक्य में प्राप्त है। इसलिए मीमांसक की दृष्टि से परिसंख्या ही है परन्तु उसे नियमार्थक माना गया है, यह भी सत्य है। अतः सिद्ध है कि नियम और परिसंख्या में वैयाकरण कोई अन्तर नहीं मानते हैं। अर्थवत् सूत्र से प्राप्त ही संज्ञा, समासातिरिक्त पूर्व भाग पद घटित समुदाय में, उस संज्ञा—प्रातिपादिक संज्ञा की व्यावृत्ति के लिए अनूदित हुई है। अन्य निवृत्ति अश्रुत हैं परन्तु प्राप्त का अनुवचन स्पष्ट है।

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामार्थ्यात्परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् ।

'यस्य हल' इत्यत्र भाष्ये स्पष्टेयम् ॥१०९॥

---

विधिनियमयोरुभयोः सम्भवे विधिरेव (विधिस्वीकार एव) ज्यायानिति परिभाषार्थः। अत्र बीजमाह—**नियमे** इति। नियमे हि अश्रुताया अन्यनिवृत्तेः सामर्थ्याद् परिकल्पनम् यथा "नलोपः सुप्स्वर"—इत्यत्र सूत्रेऽश्रुतायाः सवर्णदीर्घनिवृत्तेः सामर्थ्यात् परिकल्पनं कर्तव्यं भवति। तेन तत्र राजाश्व इत्यत्र नलोपासिद्धताया निवृत्ति र्जायते। **उक्तानुवाददोषश्च** सुबादिविधावेवासिद्धिरिति सूत्रोक्तस्यानुवादश्च करणीयो भवतीति नियमे गौरवम्। अतः लाघनाद् विधिरेव ज्यायानिति। तदुक्तम्।

नियमः परिसंख्यास्मिन् शास्त्रे त्रिदोषिका मता।
श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् ॥
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका। इति।

'यस्य हलः' ६.४.४९ इत्यत्र भाष्ये स्पष्टेयम् तद्यथा—किमिदं यलोपे वर्णग्रहणम् आहोस्वित् संघातग्रहणम्? (यद्यागन्तुनाऽकारेण निर्देशस्ततो वर्णग्रहणमात्रम्, अन्यथा तु संघातग्रहणमिति पक्षद्वयसम्भवः इति कैयटः) कश्चात्र विशेषः? "यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः (वा० १) यलोपे वर्णग्रहणं चेद्धात्वन्यस्य प्रतिषेधो वक्तव्यः। शुच्यिता। मव्यिता॥ अस्तु तर्हि संघातग्रहणम्। यदि संघातग्रहणम्, अन्त्यस्य लोपः प्राप्नोति। सिद्धोऽन्त्यस्य पूर्वेणैव। तत्रारम्भसामर्थ्यात् सर्वस्य भविष्यति। एवमपि तेनातिप्रसक्तमिति कृत्वा नियमो विज्ञायेत' 'यस्य हल एव नान्यतः। क्व मा भूत्। लोलूयिता। पोपूयिता। कैमर्थ्यक्यान्नियमो भवति। विधेयं नास्तीति कृत्वा। इह चास्ति विधेयम्। किम्। अन्त्यस्य लोपः प्राप्तःसः सर्वस्य विधेयः। तत्रापूर्वोविधिरस्तु नियमोऽस्तिवत्यपूर्व एव विधि र्भविष्यति न नियमः॥

---

नियम मानने में पूर्वनिर्दिष्ट, अश्रुत, अन्य निवृत्ति की कल्पना सामर्थ्यात् करनी पड़ती है, उक्त के अनुवाद में दोष भी आता है। इसलिए लाघवात् विधि मानना ही श्रेष्ठ है।

समास में पूर्वसूत्र से ही प्रातिपादिक संज्ञा सिद्ध है इसलिए पुनरुक्ति दोष को बचाने के लिए समासपद की समासातिरिक्त पूर्वभागपद घटित समुदाय में विपरीत लक्षणा मानें और "भवति" पद की "न भवति" अर्थ में लक्षणा माने और अर्थ करें समासातिरिक्त पूर्वभागपदघटितसमुदाय में प्रातिपादिक संज्ञा न हो, तो लक्षणा ही गौरव होगी। इसलिए मानते हैं कि विधि सम्भव हो तो नियम नहीं मानना चाहिए।

नन्वा 'शंसायां भूतवच्च' इत्यनेन लुङ्लिटोरप्यतिदेशः स्यादत आह—

अत्र कैयटः "अपूर्व एव विधिरिति प्रतीकमुपादाय प्रोक्तवान्—'नियमे हि श्रुतार्थत्यागेनाश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्च प्राप्नोति इति। इत्थमत्र नागेशेन कैयटस्याविकलं वाक्यमेवोक्तं परि० शेखरे।

एवमेव 'इजादेः सनुमः' ८-४-३२ इत्यत्र भाष्येऽस्या उल्लेख उपलभ्यते क्वचित्परिभाषेन्दुशेखरस्य मूले "इजादेः सनुमः" इत्यत्र च भाष्ये स्पष्टेत्यपि पाठो दृश्यते। तथाहि "इजादेः सनुमः ८-४-३२ (भाष्यम्) किमर्थमिदमुच्यते न 'कृत्यचः ८-४-२९ इत्येव सिद्धम्। नियमार्थोऽयमारम्भः। इजादेरेव सनुमकान्नान्यस्मात् सनुमकादिति। क्व मा भूत्? प्रमङ्कनम्, परिमङ्कनम्। **सनुमो णत्वेऽवधारणाप्रसिद्धि-विधेयभावात्** (वा० १)। सनुमो णत्वेऽवधारस्याप्राप्तिः। किं कारणम्? 'विधेय-भावात्'। कैमर्थ्यान्नियमो भवति? विधेयं नास्तीति कृत्वा। इह चास्ति विधेयम्। किम्? ण्यन्ताद् विभाषा प्राप्ता तत्र नित्यं णत्वं विधेयम्। तत्रापूर्वोविधिरस्तु नियमोऽस्त्विवति, अपूर्वो विधिर्भविष्यति न नियमः।

अत्र कैयटः 'सनुमो णत्व' इति प्रतीकमुदापाय नियमे यद्गौरवं भवति तदाह—'नियमे प्राप्तबाधः, सिद्धस्य पुनरुपादानादनुवाददोषश्च। विधौ तु न प्राप्त-बाधो नाप्यनुवाद दोष इति विधिनियमसम्भवे, विधिरेव ज्यायानिति भाव इति।

एवञ्च इजादेः सनुमः ८-४-३२ इति सूत्रे भाष्ये कैयटे चेयं विशेषतोदृश्यते स्पष्टेति।

इति शिवम् ॥१०९॥

---

'यस्य हलः' ६.४.४९ सूत्र के भाष्य में यह स्पष्ट हैं। वहाँ पहले यह प्रश्न उठाया गया कि क्या इस सूत्र में अतो लोपः के "अतः" के साथ सम्बन्ध मानकर हल् से पर में विद्यमान 'य' के अत का लोप हो इस तरह से सूत्र को नियामक मानना चाहिए या "अतः" की अनुवृत्ति न करके और सूत्रारम्भसामर्थ्यात् 'अलोऽन्त्यस्य' की भी परवाह न—करके सम्पूर्ण 'य' के लोप का इसे विधायक माने? इस पर कहा गया कि यह अपूर्व विधि होगी; नियम नहीं। इससे सिद्ध है कि भाष्यकार को यह अभीष्ट था कि जहां तक हो सके सूत्र को विधि ही मानना चाहिए नियम नहीं। 'इजादेः सनुमः' ८.४.३२ सूत्र के भाष्य में भी इसका उल्लेख हुआ है।
इति शिवम् १०९

सामान्यातिदेशे•••नतिदेशः ११०

"आशंसायां भूतवच्च" इस सूत्र से भविष्यत् काल में भूतवद्भाव होता है। अर्थात् भूतसादृश्य का विधान होता है। इसलिए लुङ् लकार होकर जैसे देवश्चेदवर्षीत्

**सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥**

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्न्नातिदेशः ।

इयमानित्या 'न ल्यपी' ति लिङ्गात् तेन 'स्थानिवत्' सूत्रेण विशेषातिदेशोऽपि ।

---

**सामान्यातिदेशे विशेशानतिदेशः ११०**

ननु आशंसायां भूतवच्च ३.३.१३२ इति सूत्रेण भविष्यति काले भूतवद् अतिदिश्यते प्रत्ययादिकम् तेन देवश्चेदवर्षीत् धान्यमवाप्स्म इत्यत्र यथा लुङ् भवति, भविष्यति काले देवश्चेद्वर्षिष्यति धान्यं वप्स्याम इत्यर्थे तथा लङ्लिटोरप्यतिदेशः कुतो नेति चेन्न **सामान्यातिदेशे विशेषानतिदेश** इति परिभाषास्वीकारेण सामान्यभूतसादृश्यस्यातिदेशेन तत्र विहितस्य लुङ एव विधानं संभवति नतु अनद्यतनभूतपरोक्षभूतयोर्विहितस्य लङो लिटश्च, तयोर्विशेषधर्मत्वात् । भूतत्वं सामान्यधर्मः अनद्यतनभूतत्वं परोक्षभूतत्वं च विशेषधर्म इति स्पष्टमेव । अर्थात् भूतवदित्यस्य भूतसादृश्यमर्थः । सामान्यस्योपस्थितिकाले नियमेन विशेषोपस्थितिर्न जायते, विशेषस्योपस्थापकसामग्र्यभावात् । अत एव सामान्यातिदेशे नियमेन विशेषोपस्थित्यभावोऽस्याः परिभाषायाः बीजम् । ब्राह्मणः पूज्य इत्यादौ सामान्यस्यैवोपस्थितिर्भवति, यदा तदा ब्राह्मणवत् पूज्योऽसौ क्षत्रिय इत्यतिदेशस्थलेऽपि तस्मिन् क्षत्रिये ब्राह्मणसामान्यसदृशपूज्यताऽभिप्रेता न तु ब्राह्मणविशेषमाठरकौण्डिन्यादिसदृशपूज्यतेति भावः ।

'हशश्वतोर्लङ् च' ३.२.११६ इति लङ्विधानमस्या ज्ञापकम् । इयमनित्या

---

धान्यमवाप्स्म" प्रयोग होता है, उसी तरह लङ्लकार और लिट्होकर देवश्चेदवर्षत् धान्यमवप्स्मम देवश्चेद् ववर्ष धान्य मुवापिम इत्यादि अनिष्ट प्रयोग होने लगेगा, इस तरह के दोष के निवारण के लिए परिभाषा मानते हैं। "**सामान्यातिदेशे विशेषानतिदेशः**" सामान्य के अतिदेश में विशेष का अतिदेश नहीं होता है। सामान्य धर्म की उपस्थिति के समय विशेषधर्म की उपस्थापक सामग्री हमेशा नहीं रहती, यह अनुभव ही इस परिभाषा में बीज है। ठीक भी है यदि कोई किसी मोटे के लिए कहे कि यह हाथी की तरह है तो उसमें स्थूलत्व रूप सामान्य धर्म का ही अतिदेश होता है, हाथी के दन्त, सूढ़ आदि विशेष धर्मों का अतिदेश नहीं होता है। अयं क्षत्रियः ब्राह्मह्मणवत्' ऐसा कहने पर तथाकथित क्षत्रिय में ब्राह्मणत्व रूप सामान्य-धर्म का अतिदेश होता है; माठरत्व या कौण्डिन्यत्वरूप विशेष धर्म का नहीं। इसी तरह भूतत्व का अतिदेश होने पर भी अनद्यतनभूतत्व और परोक्षभूतत्व का अतिदेश नहीं हुआ। इसलिए लङ् और लिट् लकार के आने जैसा दोष नहीं हुआ। "न ल्यपि"

स्पष्टं चैतत् सर्वं 'स्थानिवत् सूत्रे भाष्ये ॥११०॥

'न ल्यपि' ६.४.६९ इति लिङ्गात् । ल्यपि परे घुमास्थादेरीत्त्वं नेति तदर्थः । यदि सामान्यातिदेशे विशेषस्यातिदेशो न स्यात् तदा प्रदाय इत्यादौ 'स्थानिवदादेशोऽनल्विधौ' १.१.५६ इत्यनेन क्त्वास्थानिके ल्यपि क्त्वागतस्य सामान्यधर्मस्य प्रत्ययत्वादिधर्मस्यातिदेशे सत्यपि तद्गतविशेषधर्मस्य कित्त्वस्यातिदेशाभावेन कित्परत्वाभावादेव "घुमास्थागापाजहातिसां हलि" ६.४.६६ इतीत्त्वाप्राप्त्या न ल्यपीति सूत्र व्यर्थं स्यात् तदस्या अनित्यत्वं ज्ञापयति । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि भवति । तत्र अनल्विधाविति यत्नादपि विशेषातिदेशो जायते । ज्ञापकस्य फलमग्रहीदित्यत्र ग्रहोऽलिटि दीर्घस्य स्थानिवत्त्वातिदेशादिड्रूपत्वेन इट ईटि ८.२.२८ इति सिचो लोपसिद्धिः ॥

स्पष्टं चैतत्सर्वं स्थानिवत् १.१.५६ सूत्रे भाष्ये । "सामान्यातिदेशे हि विशेषानतिदेशः" । सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा—ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यम् इति सामान्यं यद्ब्राह्मणकार्यं तत् क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा, न तदतिदिश्यते । एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदतिदिश्यते, यद्विशिष्टं वलादेरिति न तदतिदिश्यते ॥ यद्येवम् 'अग्रहीत् 'इट ईटि' ८.२.२८ इति सिचो लोपो न प्राप्नोति । 'अनल्विधाविति पुनरुच्यमाने इहापि प्रतिषेधो भविष्यति प्रदीव्य, प्रसीव्य विशिष्टं ह्येषोऽलमाश्रयते वलं नाम। इह च प्रतिषेधो न भविष्यति—अग्रहीदिति, विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम ।

एतेन भाष्येण तत्रानल्विधाविति यत्नाद्विशेषातिदेशो भवतीति बोधितमेवेति ।

इति शिवम् ११०

६.४.६९ इस सूत्र के निर्माण से प्रतीत होता है कि यह परिभाषा अनित्य है। अन्यथा "प्रदाय" में कित् हल् के परे रहते विहित "घुमास्था" ६.४.६६ से ईत्व की प्राप्ति थी ही नहीं; उसका 'न ल्यपि' से निषेध करना व्यर्थ हो जाता । बात यह है कि "प्रदाय" में स्थानिवद्भाव से ल्यप् में क्त्वा में स्थित कित्व को लाकर ईत्व की प्राप्ति होती हैं और 'न ल्यपि' से उसका निषेध करते हैं । यदि सामान्यातिदेशे विशेषानतिदेशः" यह परिभाषा नित्य हो; तब तो कित्त्व धर्म क्त्वा का विशेष धर्म है, उसका अतिदेश नहीं हो सकेगा, कित्त्व नहीं आने से ईत्व की प्राप्ति ही नहीं होगी, फिर उसका निषेध कैसा ? इसीलिए स्थानिवत् सूत्र से विशेषातिदेश भी होता है। "अनल्विधौ" इस विशेष यत्न के कारण भी 'स्थानिवत्' सूत्र से विशेषातिदेश सिद्ध होता है। पूर्वोक्त सारा विवेचन स्थानिवत् सूत्र के भाष्य में स्पष्ट रूप से आया है । इति शिवम् ११०

ननु 'तित्स्वरितमि'ति स्वरितत्वं किरतीत्यादावपि स्यादत आह—

**प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥**

इयं चा'ङ्गस्य' इति सूत्रे भाष्ये पठिता । वर्णग्रहणे च न प्रवर्तते इति तत्रैव

---

**प्रत्ययाप्रत्यययोः......ग्रहणम् १११**

ननु कॄ विक्षेपे इत्यस्मात्तौदादिकाद्धातोर्लटि शपं बाधित्वा 'तुदादिभ्यः शः ३.१.७७ इति शप्रत्यये 'ॠत इद्धातोः' ७.१.१०० इति ॠकारस्येत्वे रपरत्वे किरतीति जायते । अत्र इतस्तकारस्य 'हलन्त्यम्' । १.३.३ इतीत्संज्ञा 'तस्य लोपः' १.३.९ इति लोपेनापहारात्तित्त्वस्य सत्वात् तित् स्वरितम्' ६.१.१८५ इति स्वरितत्वापत्तिः स्यादतः परिभाषामवतारयति—"**प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम्**" प्रत्ययाप्रत्यययोरुभयोर्ग्रहणसम्भवे प्रत्ययस्यैव ग्रहणं कार्यम् नाप्रत्ययस्येति परिभाषार्थः । तित्त्वं च 'किमोऽत्' ५.३.१२ इति सूत्रविहितेऽति प्रत्यये प्राप्यते, "अच्च घेः" ७.३.११९ इतिसूत्रेण विहिते घेरति अप्रत्यये चावाप्यते, "ॠत इत्" ७.१.१०० इत्यत्र चाप्रत्ययेऽपि तित्त्वं दृश्यते । अतः प्रत्ययस्यैव तित्त्वस्य स्वरितत्वाय ग्रहणं न 'ॠत इद्धातो'रिति विहितस्याप्रत्ययस्य तित्त्वस्य ग्रहणमिति न दोषः ।

इयं च "अङ्गस्य" ६.४।१ इति सूत्रे भाष्ये पठिता । तत्रैव कैयटे 'वर्णग्रहणे च न प्रवर्तते' इति स्पष्टम् । 'वर्णग्रहणेऽस्या अप्रवृत्त्यैव शुक्लीभवतीत्यत्र शुक्लघटकस्याप्यकारस्य "अस्य च्वौ" ७.४.३२ इतीत्वसिद्धिः । अन्यथा अघटः घटो भवतीति घटीभवति इत्यत्र घटते इति घट इति पचाद्यचा निष्पन्ने घटशब्दघटकस्य प्रत्ययस्याकारस्यैवेत्वं स्यादिति शुक्लीभवतीत्यत्र शुक्लशब्दघटकस्याप्रत्ययस्याकारस्य न स्यादिति ।

---

**प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् १११**

"किरति" कॄ विक्षेपे धातु से लट्, तिप् 'तुदादिभ्यः शः' ३.१.७७ से श करने पर 'ॠत इद्धातोः' ७.१.१०० से ॠ को इत् होने पर 'किरति' बनता है, यहाँ इत् में तकार की इत्संज्ञा हुई है । इसलिए "तित् स्वरितम्" ६.१.१८५ से स्वरित होना चाहिए किन्तु वह इसलिए नहीं होता है कि "**प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम्**" प्रत्यय और अप्रत्यय दोनों अगर मिलते हों तो प्रत्यय ही लिया है । यत् ण्यत् आदि प्रत्यय तित् है । "ॠत इद्धातोः" से ॠदन्त धातु के ॠ के स्थान में आदेश 'इत्' तित् और अप्रत्यय है । "तित् स्वरितम्" सूत्र में तित् कहने से प्रत्यय 'तित्' लिया जायगा, अप्रत्यय 'तित्' नहीं । इसलिए दोष नहीं हुआ । यह परिभाषा 'अङ्गस्य' ६.४.१ सूत्र के भाष्य में पठित है । वहाँ अङ्गाधिकार का प्रयोजन बताते हुए भाष्यकार ने कहा कि अङ्गाधिकार करने का ही फल है कि "पामनाम्" में पाम

कैयटे स्पष्टम्। अत एव 'सनाशंसभिक्ष उः' 'बले' इत्यत्र सन्बलयोः प्रत्यययोर्ग्रहणम् ॥

---

'अङ्गस्य' ६.४.१ इति सूत्रस्थं भाष्यं यथा—कानि पुनरङ्गाधिकारस्य प्रयोजनानि "सम्प्रसारणदीर्घत्वे (प्र० वा० १)।

हल उत्तरस्य सम्प्रसारणस्य दीर्घत्वं भवति—हूतः, जीनः, संवीतः, शूनः। अङ्गस्येति किम् निरुतम्, दुरुतम्। "नामसनोर्दीर्घत्वे" प्रयोजनम्। नामि दीर्घो भवति—अग्नीनाम्, इन्दूनाम्। अङ्गस्येति किम्? क्रिमिणां पश्य, पामनां पश्य (क्रिमयोऽस्यां सन्तीति पामादित्वान्नप्रत्ययः लोमादिपामादिपिच्छादिभ्यः शनेलचः ५.२.१०० इत्यनेन, ततष्टाप्, द्वितीयैकवचनम्।) सनि दीर्घो भवति—चिचीषति; तुष्टूषति। अङ्गस्येति किमर्थम्? दधि सनोति, मधु सनोति॥ "लिङ्येत्वे" (प्र० वा० ३) ग्लेयात्, अङ्गस्येति किम्—निर्यायात्॥ अतो भिस एत्वे (४) प्रयोजनम्—वृक्षैः प्लक्षैः। अङ्गस्येति किमर्थम्। ब्राह्मणभिस्सा, ओदनभिस्सटा·············· (इत्यादि) नैतानि सन्ति प्रयोजनानि। कथम्? "अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् (वा० ७) अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यामेवैतानि प्रयोजनानि सिद्धानि। 'क्वचिद-

---

शब्द से "लोमादि—५.२.१०० सूत्र से 'न' प्रत्यय, टाप्, और द्वितीया के एकवचन अम् लाने पर 'नाम्' के परे रहते 'नामि' से दीर्घ नहीं हुआ। अन्यथा 'अग्नीनाम्' की तरह दीर्घ हो जाता। 'चिचीषति' में जैसे 'अज्झन—' से दीर्घ होता है; वैसे दधि सनोति में नहीं हुआ। बाद में 'अर्थवद् ग्रहण' परिभाषा (परि० ७) और प्रत्ययाप्रत्ययायोः परिभाषा (प० १११) का आश्रयण करके उक्त प्रयोजनों को अन्यथा सिद्ध बताया गया। वर्णग्रहण में यह परिभाषा नहीं प्रवृत्त होती है। यह भी 'अङ्गस्य' सूत्र में भाष्य की कैयटकृत व्याख्या प्रदीप में स्पष्ट है। वहाँ कैयट ने कहा कि 'अङ्गस्य' इस अधिकार के अभाव में भाष्यकार ने यह कहा है कि 'श्रियौ' की तरह 'श्र्यर्थम्' में भी इयङ् हो जायगा। 'इसलिए श्र्यर्थम्' इस अधिकार का वास्तविक प्रयोजन है। इसे 'अर्थवत्' और प्रत्ययाप्रत्यय परिभाषा से गतार्थ नहीं किया जा सकता; क्योंकि ये दोनों परिभाषाएं वर्णग्रहण में नहीं लगतीं। वर्णग्रहण में नहीं प्रवृत्त होने के कारण ही शुक्लीभवति में विद्यमान अप्रत्यय 'अकार को' भी "अस्य च्वौ" ७.४.३२ से ईत्व हुआ। परिभाषा की सत्ता होने के कारण ही "सनाशंसभिक्ष उः" ३.२.१६८ और 'बले' ६.३.११७ इन दोनों सूत्रों में 'सन्' और 'बल' प्रत्यय ही लिये गये। षणु दाने (तनादि) षण संभक्तौ (भ्वादि) धातुओं का ग्रहण नहीं हुआ। बल संचरणे (भ्वादि) भी नहीं लिया गया। इसलिए 'भूमिबलो रथः, में दीर्घ नहीं हुआ।

परे तु 'तित्स्वरितम्' इति सूत्रे एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम् । 'अङ्गस्य' इति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशि-नोक्ता । अत एव तितिप्रत्ययग्रहणं कर्तव्यमिति वार्तिककृतोक्तम् । उक्तसूत्रयोर्व्या-ख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः ॥१११॥

---

र्थवद्ग्रहणे नानर्थकस्येत्येवं भविष्यति क्वचित्प्रत्ययाप्रत्यययोर्ग्रहणे प्रत्ययस्य ग्रहणं भवतीति ॥

अत्र कैयटः—("श्रियौ भ्रुवौ" इत्यत्रेव अङ्गस्येत्यस्याभावे श्र्यर्थम् भ्र्वर्थम् इत्यादौ ययोरियङोरापत्तिर्दर्शिता तयोः) इयङुवङोस्तु नायं परिहारः वर्णग्रहणेषु परिभाषाद्वयस्य (अर्थवद्ग्रहण' प्रत्ययग्रहणेति परिभाषाद्वयस्य) अनुपस्थानात् । यथा 'इको यणचि' (६.१.७७) इति दध्याशयतीत्यादावप्रत्ययेऽप्यनर्थकेऽप्यचि यणादेशो भवति एवं श्र्यर्थमित्यादावियङुवङ्प्रसङ्ग····· इति ॥

अतएव=परिभाषायाः स्वीकारादेव सनाशंसभिक्ष उः ३.२.१६८ वले ६.३. ११८ इत्यत्र सन्वलौ प्रत्ययावेव गृहीतौ । तेन षणु दाने (तनादिः) षण संभक्तौ (भ्वादिः) इति धात्वोर्नेह ग्रहणम् । अतएव च गर्गादिषु विजिगीषुशब्दपाठः संगच्छते 'वले च' इति दीर्घः कृषीवल इत्यत्र रजः कृष्यासुतिपरिषदो वलच् ५.२.११२ इति विहित वलच्प्रत्यये भवति न तु वल संवरणे संचरणे च (भ्वादिः) इत्यतोऽच्प्रत्ययेन निष्पन्ने वलशब्दे परे—भूमिवलो रथः (भूमिसंचारी रथः) इत्यादौ ।

स्वमतमाह—परे तु इत्यादिना । "तित् स्वरितम् ६.१.१८५ इति सूत्रे एषा

---

नागेश का विचार है कि "तित्स्वरितम्" ६.१.१८५ इस सूत्र के भाष्य में इस परिभाषा का कहीं भी आश्रय नहीं लिया गया है । यह कैयट ने कहा है । "अङ्गस्य" ६.४.१ सूत्र में उसके प्रत्याख्यान के लिए यह परिभाषा भाष्य में एकदेशी के द्वारा कही गयी है । इसलिए "तित्स्वरितम्" सूत्र में वार्तिककार ने "तिति प्रत्यय-ग्रहणं कर्तव्यम्" यह वार्तिक बनाया । अर्थात् 'तित्' प्रत्यय लेना चाहिए । रही "सनाशंस" और वले च सूत्र की बात, वहाँ दोनों सूत्रों में व्याख्यान विशेष के कारण प्रत्ययों का ही ग्रहण होगा । "व्याख्यानतो विशेषप्रतिपत्ति र्नहि सन्देहाद-लक्षणम्" (परि० १) यह सिद्धान्त वैयाकरणों का है ही । इसलिए यह परिभाषा नहीं माननी चाहिए ।

वस्तुतस्तु यह परिभाषा मानना आवश्यक है अन्यथा 'वनो र च' ४ १.७ 'वसोः सम्प्रसारणम्' ६.४.१३१ इत्यादि में 'वन' और 'वसु' धातुओं का ग्रहण हो जायगा "तिति प्रत्ययग्रहणं कर्त्तव्यम्" यह वार्तिक भी परिभाषा से लभ्य अर्थ का ही अनुवादक है उसे नूतनार्थ समर्थक नहीं मानना चाहिए । इति शिवम् १११

ननु 'विपराभ्यां जेः' इत्यात्मनेपदं परा सेना जयतीत्यर्थके परा जयति सेनेत्यत्र प्राप्नोतीत्यत आह—

---

परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रिता इति कैयटेनोक्तम् (तितुस्वरितमिति सूत्रस्थभाष्यं तु एकविंशपरिभाषा विचारकाले दुर्गाव्याख्यायामुद्धृतम् १४१ तमे पृष्ठे) तत्रत्यः कैयटो यथा ''प्रत्ययाप्रत्यययोः प्रत्यये कार्यसम्प्रत्यय इति परिभाषा भाष्य-वार्तिककाराभ्यां न क्वचिदाश्रिता ।।) अतः कैयटेनास्वीकृतेयं न स्वीकर्तव्या । 'अङ्ग-स्य' ६.४.१ इति सूत्रे तत्प्रत्याख्यानायैषा भाष्ये एकदेशिनोक्ता । अतो न तत्प्रा-माण्यम् । अतएव परिभाषाया असत्वादेव ''तिति प्रत्ययग्रहणं कर्तव्यम्'' इति वार्तिक-कृतोक्तम् । अन्यथानयैव तितः प्रत्ययस्यैव ग्रहणे सिद्धे तद्व्यर्थं स्यात् । 'सनाशंस-भिक्ष 'उः' ३.२.१६८ इत्यत्र 'वले च' ६.३.११८ इतिसूत्रयोस्तु लक्ष्यानुसारिव्याख्या-नात् प्रत्यययोरेव ग्रहणमिति न दोषः । अतः परिभाषेयं न स्वीकार्या इति नागेश-मतम् ।

इयं परिभाषा स्वीकर्तव्यैव, तेन 'वनो र च' ४.१.७ 'वसोः संप्रसारणम्' ६.४.१३१ इत्यादौ 'वन शब्दे' 'वन संभक्तौ' (भ्वादिः) वसु स्तम्भे (दिवादिः) इति वनवसुधात्वोरग्रहणम् । तिति प्रत्ययग्रहणं कर्तव्यमिति वार्तिकन्तु परिभाषार्था-नुवादकपरतया नेयम् । अतएव 'अङ्गस्य' ६-४-१ सूत्रस्थं भाष्यं संगच्छते । इति केचित् ।

वस्तुतस्तु इयं प्रयोजनाभवान्न स्वीकार्या । सनाशंस'—३-२-१६८ इति शास्त्रस्य भूयो विषयत्वलाभाय गर्गादिषु पठिते विजिगीषुशब्दे उ प्रत्ययदर्शनाच्च सनः प्रत्ययस्यैव ग्रहणलाभात् । 'वले' ६.३-११८ इत्यत्र ''लक्षणप्रतिपदोक्त''—(प० सं० ११४) परिभाषया प्रतिपदोक्तस्य वलच् प्रत्ययस्यैव ग्रहणसिद्धेः पचाद्यन्त-स्य वलशब्दस्य 'भूमिवलो रथ' इत्यादौ लाक्षणिकत्वादग्रहणम् । अतएव तितुस्वरितम् ६-१-१८५ इति सूत्रे पदमञ्जर्यां हरदत्तेनोक्तम्—

**तस्यास्तु परिभाषाया भाष्यवार्तिकयोरिह ।**
**अदर्शनादयं यत्नो महानस्माभिरादृतः ॥ इति**

कैयटेनापि—''इयं परिभाषा क्वापि नाश्रितेत्युक्तमेव । यद्यपि अङ्गस्य ६-४-१ इति सूत्रप्रत्याख्यानाय भाष्यकृतेयं कण्ठत उक्ता तथापि प्रयोजनाभावान्न स्वीकार्येति तदाशयं तद्व्याख्यातारः प्राहुः ।

इति शिवम् ।।१११।।

---

**सहचरितासहचरितयोः……ग्रहणम् ११२**

''विपराभ्यां जेः'' १.३.१६ सूत्र से 'वि' और 'परा' पूर्वक 'जि' धातु से

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥११२॥

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम् ॥

सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते। रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम्। सदृशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च ॥

---

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।११२।

ननु विपराभ्यां जेः १-३-१९ इत्यात्मनेपदं परा सेना जयतीत्यर्थके परा जयति सेनेत्यत्र कथं नेति चेन्न 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति परिभाषास्वीकारात्।

सदृशासदृशयोः सदृशस्यैव ग्रहणमिति परिभाषार्थः। सदृशयोरेव सहचरणं प्रसिद्धम्, अतः सहचरितशब्देनात्र सदृशार्थः सादृश्यवानित्यर्थो वा गृह्यते। रामलक्ष्मणावित्यत्रापि रामशब्देन यन्न परशुरामादेः प्रतीतिः लक्ष्मणशब्देन च यन्न दुर्योधनापत्यस्य बोधस्तत्र नियामककारणं परस्परसाहचर्यम् (सादृश्यम्) एव। सदृशयोरेव सहविवक्षा, तयोरेव सहप्रयोग इत्युत्सर्गः स्वभावसिद्धो नियमः। तेनेयं परिभाषा लोकन्यायसिद्धेति ॥

---

आत्मनेपद होता है; उसी तरह परा (परवर्तिनी उत्कृष्टा वा) सेना जयति, इस अर्थ में प्रयुक्त 'परा जयति सेना' में भी आत्मनेपद न होने लगे इसलिए परिभाषा मानी गयी हैं "सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्" सदृश और असदृश में सदृश का ही ग्रहण होता है। इसलिए 'उपसर्ग' 'वि' शब्द के साहचर्य से उपसर्ग 'परा' शब्द का ही ग्रहण होगा। यह उसी सूत्र के भाष्य में स्पष्ट है। सहचार सदृशों में ही देखा गया है। इसलिए सहचरित शब्द से 'सादृश्य' लिया जाता है। "रामलक्ष्मणौ" में भी सादृश्य ही नियामक है। तात्पर्य यह है कि यद्यपि 'राम' शब्द से बलराम, परशुराम और अयोध्या के राजा राम की उपस्थिति होती है, इसी तरह लक्ष्मण शब्द से सुमित्रापुत्र, शत्रुघ्न के जेष्ठ भाई लक्ष्मण तथा दुर्योधन के पुत्र लक्ष्मण दोनों की उपस्थिति होती है परन्तु दशरथापत्य लक्ष्मण के साहचर्य (सादृश्य) से राम, दशरथ पुत्र ही लिया जाता है, परशुराम या बलराम नहीं लिया जाता है; उसी प्रकार दशरथापत्य राम के साहचर्य से लक्ष्मण भी दशरथ पुत्र ही लिया जाता है। इसी तरह यहां जिस साहचर्य को अर्थ-नियामक माना गया है, वह सादृश्य के अतिरिक्त और कुछ नहीं है। सदृशों में ही सहविवक्षा होती है, और सहविवक्षितों का ही सहप्रयोग होता है, यह उत्सर्ग (स्वाभाविक नियम) है।

**ध्वनितं चेदं 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रे भाष्ये ॥ तत्र हि 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने चायं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कोऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थाद्यथाऽस्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इत्युक्तम् तेन हि सदृशानामेव प्रयोगे सहायभावो**

---

''सदृशासदृशयोर्मध्ये **सदृशस्यैव ग्रहणं भवतीति तत्थ्यं 'कर्मप्रवचनीययुते द्वितीया** २-३-८ इति सूत्रे भाष्ये ध्वनितम् । तत्र हि ''वृक्षं परि विद्योतते विद्युत्'' इत्यादौ लक्षणेत्थंभूताख्यानादिद्योतक 'परि' शब्दयोगे पञ्चमीमशङ्क्य प्रोक्तम्— ''यद्यप्ययं परि दृष्टापचारो (दृष्टव्यभिचारः अनियतार्थक इति यावत्) वर्जने चावर्जने च (अस्य प्रयोगोपलब्धेः) (किन्तु) अयं खल्वपशब्दोऽदृष्टापचारवर्जनार्थ एव कर्मप्रवचनीयस्तस्य कोऽन्यः सहायो भवितुमर्हति अन्यो वर्जनार्थात्, यथास्य गोः सहायेनार्थ इति (प्रोक्ते) गौरेवानीयते नाश्वो न गर्दभ इति । एतेन भाष्येण सदृशानामेव प्रयोगे सहायभावो बोधित इति सिद्धमस्य लोकसिद्धत्वम् ॥

हरिणाप्युक्तम्—

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**

---

यह बात ''कर्म प्रवचनीययुक्ते द्वितीया' २.३.८ सूत्र के भाष्य में स्पष्ट है। निर्दिष्ट सूत्र में ''पञ्चम्यपाङ्परिभिः'' २.३.१० इस सूत्र से लक्षण, इत्थंभूताख्यानादि द्योतक परि के योग में वृक्षं परि विद्योतते विद्युत् में पञ्चमी की आशङ्का करके यह कहा गया कि यद्यपि यह 'परि' वर्जन और अवर्जन दोनों अर्थों में कर्मप्रवचनीय बनकर आया है। इसलिए यह दृष्टापचार है। अर्थात् इसका वर्जनार्थ में व्यभिचार देखा गया है, इसके बारे में यह नहीं कहते कि यह केवल वर्जनार्थ में ही प्रयुक्त होता है किन्तु यह 'अप' शब्द अदृष्टापचार है यह केवल वर्जनार्थ में ही कर्मप्रवचनीय के रूप में प्रयुक्त होता है, वर्जनार्थ को छोड़कर अन्यत्र कहीं भी इसे कर्म प्रवचनीय के रूप में प्रयुक्त होते नहीं देखा गया है। इसलिए (पञ्चमी के लिए ग्रहण करते समय) वर्जनार्थक परि शब्द को छोड़कर और कौन सहायक हो सकता है, कौन समान माना जा सकता है अर्थात् वर्जनार्थक ''अप'' शब्द के साहचर्य (साहाय्य या सादृश्य) से 'परि' भी वर्जनार्थक ही लिया जायगा। जैसे यदि कोई कहे कि इस बैल को सहायता की आवश्यकता है (गाड़ी खींचने में) तो दूसरा बैल ही लाकर देते हैं न घोड़ा लाकर देते हैं और न गदहा। इस भाष्य के सन्दर्भ से सदृशों के ही प्रयोग में सहायभाव रहता है यह दिखाया गया है।

बोधितः। द्विस्त्रिश्चतुः' इति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषाऽनित्या। तेन 'दीधीवेवीटामि'त्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः ॥११२॥

---

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इत्यत्र साहचर्यस्याभिधानियामकत्वमिति।

इत्थं विशब्दस्योपसर्गस्य साहचर्यात् पराशब्दस्याप्युपसर्गस्यैव ग्रहणात् परा (उत्कृष्टा) जयति सेना इत्यत्र नात्मनेपदातिप्रसंगः। न च विशब्दः पक्षिवाचकोऽपि दृष्टः तथा च उड्डयने पक्षिणमतिक्रम्य वर्तमानं विमानं जयतीत्यर्थके अतिवि जयति विमानम् इत्यादावुपसर्गेतरस्यापि विशब्दस्योपलम्भाद् दृष्टापचारस्य तस्य साहचर्येण पराशब्द उपसर्ग एवेति ग्रहीतुं न शक्यत इति दोष एवेति वाच्यम् यथा रामलक्ष्मणौ इत्यादौ परस्परसाहचर्येण रामलक्ष्मणौ दाशरथी एव गृह्येते तथेहापि परस्परसाहचर्येण उपसर्गाविव तौ गृह्येते इत्यदोषात्। तथाचोक्तं कैयटेन 'विपराभ्यां जेः १.३.१९ इति सूत्रप्रदीये "परस्परसाहचर्यादुपसर्गग्रहणं व्याख्येयम्" इति।

"विपराभ्यां जेः" इति सूत्रस्थं भाष्यं यथा—'विपराभ्यां जेः" १-३-१९ उपसर्गग्रहणं किमर्थम्। इह मा भूत् परा जयति सेनेति। तर्हि वक्तव्यम्। न वक्त-

---

"द्विस्त्रिश्चतुरिति कृत्वोऽर्थे" ८.३.४३ में कृत्वोऽर्थ ग्रहण इसलिए करते हैं, कि जहाँ दो बार करता है, तीन बार करता है, या चार बार करता है इस प्रकार संख्या, क्रिया की अभ्यावृत्ति गणना में प्रयुक्त हुई है; वहाँ विकल्प से षत्व होकर द्विष्करोति त्रिष्करोति चतुष्करोति बने, किन्तु जहाँ चतुष्कपालः इत्यादि प्रयोगों में संख्या की क्रियाभ्यावृत्ति गणना नहीं है—किन्तु चतुर्भिः कपालैः संस्कृतः" इस अर्थ में कपाल की संख्या बताने के लिए संख्यावाचक शब्द प्रयुक्त हुआ है। इसलिए 'इदुदुप—८.३.४१ सूत्र से नित्यषत्व हो। यदि यह परिभाषा नित्य हो, तो सूत्र में द्विस् त्रिस् शब्दके साहचर्य से चतुः शब्द भी सुजन्त ही लिया जायगा "चतुष्कपालः" में सुजन्त नहीं होने के कारण 'कृत्वोर्थ' ग्रहण के अभाव में भी षत्व होगा ही नहीं, कृत्वोर्थ ग्रहण व्यर्थ होकर परिभाषा की अनित्यता का ज्ञापन करता है। परिभाषा के अनित्य होने का फल यह हुआ कि "दीधीवेवीटाम्" १.१.६ में दीधी और वेवी धातुओं का साहचर्य होते हुए भी 'इट्' पद से 'इट् किट् कटी गतौ' में पठित इट् धातु नहीं लिया गया, किन्तु इडागम ही लिया गया। इस पर अन्यत्र (उद्योत में) विस्तार से विचार किया गया है। इति शिवम् ११२

नन्व'स्थि' इत्याद्यनङ् प्रियसक्थ्ना ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह—

व्यम् । यद्यप्ययं पराशब्दो दृष्टापचार उपसर्गश्चानुपसर्गश्च, अयं खलु विशब्दोऽदृष्टापचार उपसर्ग एव । तस्यास्य कोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदृत उपसर्गात् । तद्यथास्य गोर्द्वितीयेनार्थ इति गौरेवोपादीयते नाश्वो न गर्दभ इति ।।

अत्र कैयटः—अस्य गोरिति प्रतीकमुपादायाह—द्वितीयशब्दो लोके प्रयुज्यमानो यदपेक्षं द्वितीयत्वं तत्तुल्यजातीय एव सम्प्रत्ययं करोति । एवमिहापि विशब्दसाहचर्यात् पराशब्दोऽप्युपसर्गो गृह्यते।। पक्षिवाचिनो विशब्दस्य सम्भवे तु द्वयोरपि दृष्टापचारत्वात्परस्परसाहचर्यादुपसर्गग्रहणं व्याख्येयम् । विशब्दसाहचर्यात् पराशब्दोऽटाबन्तः प्रसिद्धो गृह्यते, तत्साहचर्याच्च विरुपसर्ग एवेति भावं कैयटस्य नागेशः प्राह्योद्योते ।

एषा परिभाषाऽनित्या, "द्विस्त्रिश्चतुरिति कृत्वोऽर्थे" ८.३.४३ इति सूत्रे "कृत्वोऽर्थ इत्युक्तेः । अन्यथा तत्र कृत्वोर्थग्रहणाभावेऽपि अनया द्विस्त्रिसित्यनयोः साहचर्यात् सुजन्तस्यैव चतुः शब्दस्य ग्रहणेन चतुर्षु कपालेषु संस्कृत इत्यर्थे "तद्धितार्थोत्तरपदसमाहारे च' २-१-५१ इति समासे 'संस्कृतं भक्षाः' ४-२-१६ इति जातस्याणो "द्विगोर्लुगनपत्ये" ४-१-८८ इति लुकि "इदुदुपधस्य चाप्रत्ययस्य ८-३-४१ इति नित्यप्राप्तं षत्वं बाधित्वा द्विस्त्रिरिति वैकल्पिकषत्वाप्रात्या तद्व्यर्थं स्यात् । तेन (अस्या अनित्यत्वस्वीकारेण) दीधीवेवीटामितिसूत्रे दीधी—वेवीति धातुसाहचर्येप्यागमस्येटो ग्रहणम् । तेन भविता इत्यादौ इडागमस्य गुणनिषेधः सिद्धः । अन्यथा इट किट कटी गतौ(भ्वादिः)इत्यत्र पठितस्य इट् धातोरेव ग्रहणं स्यात् । अन्यत्रेति= उद्योतादौ ।

इति शिवम् ।।११२।।

## श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् ११३

ननु प्रियसक्थ्ना ब्राह्मणेनेत्यत्र "अस्थिदधिसक्थि—" ७.१.७५ इति सूत्रेणानङ् न स्यादङ्गस्य नपुंसकत्वाभावादिति चेन्न "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्" इति परिभाषास्वीकारात् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात् (जैमिनि पूर्वमीमांसा सूत्र ३।४।१४) इति सिद्धान्तानुसारेणऔचित्याच्च श्रुत्यपेक्षया लिङ्गादीनां दुर्बलत्वबोधनेन सूत्रेऽस्थ्यादीनां श्रुतत्वेन

---

**श्रुतानुमितयोः——बलीयान् ११३**

प्रियं सक्थि यस्य ब्राह्मणस्य, जिस ब्राह्मण को सक्थि प्रिय हो उसे प्रियसक्थि कहते हैं । इस तरह "प्रियसक्थ्ना ब्राह्मणेन" में "अस्थिदधि" ७।१।७५ से अनङ् नहीं होना चाहिए; क्योंकि 'प्रियसक्थि' यह अङ्ग यहाँ नपुंसक में विद्यमान नहीं है, वह तो पुल्लिङ्ग में वर्तमान है । इसलिए परिभाषा मानते हैं कि **श्रुतानु-**

श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् ॥११३॥

श्रुतेनैव सम्बन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः । प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः । एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणं नाङ्गस्य । शिशीलुङ्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम् । अत एव

---

प्रथममुपस्थितया नपुंसकपदार्थस्य तेनैवास्थ्यादिनान्वयः नत्वनुमितेन लिङ्गप्रकरणादिना । इत्थं सक्थिशब्दस्य नपुंसके विद्यमानतयाऽङ्गस्य प्रियसक्थीत्यस्य नपुंसकेऽविद्यमानत्वेऽपि अनङ् सिद्ध्यति । श्रुतेनैव सम्बन्धो नानुमितेन प्रकरणादिप्राप्तेनेति परिभाषातात्पर्यम् । शिशीलुग्नुम्विधिषु गृह्यमाणस्य (श्रुतस्य) अभावात् (अनुच्चारणात्) नपुंसकमिति प्रकरणप्राप्ताङ्गस्यैव विशेषणं स्वीकृतम्; श्रुते सति तेनैव सम्बन्धः नत्वनुमितेनेति परिभाषार्थपर्यवसानात् । तेनातिहृरि कुलम् इत्यत्र स्वमोर्नपुंसकात् ७.१.२३ इति लुक्, अतिहरिणी कुले इत्यत्र औङः श्यादेशः अतिहरीणि कुलानीत्यत्र शिभावः नुम् च सिद्ध्यन्ति । अतएव । (परिभाषायाः सत्वादेव) "वा नपुंसकस्य" ७.१.७९ इति सूत्रस्थाने "वा शौ" इति सूत्रं न कृतम् "वा नपुंसकस्य" ७.१.७९ इति सूत्रे कृते तु नाभ्यस्ताच्छतुः ७.१.७८ इत्यतोऽनुवर्तमानेन शतृपदेन श्रुतत्वान्नपुंसकस्य पूर्वं सम्बन्धः, पश्चादश्रुतेनाङ्गेन सह तस्य शत्रभिन्ननपुंसकस्य सम्बन्धः । अतः शत्रन्ताभिन्नस्य नपुंसकस्य नुम् इत्यर्थे शत्रन्तस्य नपुंसकत्वेऽपि बहवो ददतः (मनुष्याः) येषु कुलेषु तानि बहुददति कुलानीत्यत्र नुम् न भवति, शत्रन्तस्य ददत इत्यस्य पुंल्लिङ्गतया नपुंसकेऽविद्यमानत्वात् । बहूनि ददन्ति

---

मितयोः श्रुतसम्बन्धो बलीयान्" श्रुत और अनुमित दोनों में श्रुत के साथ सम्बन्ध बलवान् माना जाता है । "अस्थिदधि" सूत्र में प्रकरणवशात् आने के कारण 'अङ्गस्य' ६।४।१ यह अनुमित है "अस्थिदधि" इत्यादि साक्षादुच्चारित होने के कारण श्रुत है, जब यह प्रश्न उठा कि 'नपुंसके' का दोनों में से किसके साथ सम्बन्ध (अन्वय) करना चाहिए, तो श्रुत की शीघ्र उपस्थिति होने के कारण "नपुंसके" का अस्थिदधि आदि के साथ ही अन्वय किया गया । इसलिए 'अङ्ग' को नपुंसक में विद्यमान होने की आवश्यकता नहीं है, किन्तु 'श्रुत' को नपुंसक में विद्यमान होना ही पर्याप्त है । इसलिए प्रियसक्थ्ना ब्राह्मणेन में 'अनङ्' हो गया; क्योंकि 'सक्थि' नपुंसक में विद्यमान है । श्रुत के साथ ही सम्बन्ध होगा, प्रकरण आदि से प्राप्त अनुमित के साथ नहीं । क्योंकि प्रकरण आदि से श्रुत बलवान् होता है । इसलिए जैमिनि ने कहा है "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान समाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" । इस अनुभवसिद्ध न्याय के बल से सूत्र में लिङ्ग 'अस्थि' आदि का ही विशेषण हुआ; अङ्ग का नहीं । जहाँ कि श्रुत रहेगा; वहीं और उसी के साथ सम्बन्ध का विधान यह परिभाषा करती है । इसीलिए शी, शि, लुक् और नुम्

**'वा नपुंसकस्य' इति सूत्रे वा शाविति न कृतम् । तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद्बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र मा भूद्-बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम् ।**

**स्पष्टं चेदं 'स्वमोर्नपुंसकात्' इत्यत्र भाष्ये ।**

---

कुलानि येषु ग्रामेषु बहुददन्तो ग्रामाः इत्यत्राङ्गस्य पुंस्त्वेऽपि शत्रन्तस्य 'ददन्ति' इत्यस्य नपुंसके विद्यमानत्वेन नुम् भवत्येव ।।

एवञ्च न्यायसिद्धायामप्यस्यां सूत्रप्रामाण्यं दर्शितम् ।।

स्पष्टं चेदं 'स्वमोर्नपुंसकात्' ७.१.२३ इत्यत्र भाष्ये । तथाहि—इदं विचार्यते । शिशील्गुनुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं वा स्यादर्थग्रहणं वेति । कश्चात्र विशेषः । शिशीलुग्लुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः (वा०२) शिशीलुग्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधो वक्तव्यः ।

बहुत्रपुः, बहुत्रपू बहुत्रपव इति । अस्तु तर्ह्यर्थग्रहणम् ।। यद्यर्थग्रहणम् प्रियसक्ना ब्राह्मणेनेत्यत्रानङ् न प्राप्नोति । अस्तु तर्हि शब्दग्रहणमेव । ननु चोक्तं शिशीलुङ्- नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदाथ प्रतिषेध इति ।

"सिद्धं तु प्रकृतार्थविशेषणत्वात्' (वा० ३) सिद्धमेतत् 'कथम्' प्रकृतस्यार्थो विशेष्यते । किं च प्रकृतम् । अङ्गम् अङ्गस्य शिशीलुग्नुमो भवन्ति नपुंसके वर्तमानस्य । कथं प्रियसक्थ्ना ब्राह्मणेन । "अस्थ्यादिषु शब्दग्रहणम्" (वा० ४) अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम् । युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेनार्थग्रहणेन

---

विधियों में जैसे 'नपुंसकाच्च' ७।१।१९ 'जश्शसोः शिः ७।१।२० 'स्वमोर्नपुंसकात्' ७।१।२३ और 'इकोऽचि विभक्तौ' ७।१।७२ आदि विधियों में कोई श्रुत याने गृह्यमाण नहीं है अर्थात् किसी शब्द-विशेष का उल्लेख नहीं है । अतः 'नपुंसके, यह प्रकरण से आगत अङ्ग का ही विशेषण बना । परिभाषा मानी गयी है इसीसे "वा नपुंसकस्य" ७।१।७९ सूत्र के स्थान में 'वा शौ' नहीं किया गया । 'वा नपुंसकस्य' इस सूत्र में इस परिभाषा के बल से "नपुंसकस्य" यह श्रुत (गृह्यमाण) शत्रन्त का विशेषण माना गया । इसलिए नपुंसक में 'शत्रन्त' शब्द के विद्यमान रहने पर और अङ्ग के नपुंसक लिङ्ग से भिन्न लिङ्ग में विद्यमान होने पर भी नुम् हुआ । इसलिए 'बहवो ददतो येषु कुलेषु--तानि बहुददति कुलानि, यहाँ अङ्ग के नपुंसक होने पर भी नुन् नहीं हुआ; क्योंकि शत्रन्त 'ददतः' नपुंसक लिङ्ग में विद्यमान नहीं था । किन्तु 'बहूनि ददन्ति येषु समाजेषु ते बहुददन्तः' यहाँ 'ददत्' शब्द नपुंसक में विद्यमान है, इसलिए अङ्ग के पुल्लिङ्ग में विद्यमान होने पर भी नुम् हुआ । परिभाषा यदि न होती, तब तो "वा नपुंसकस्य" इस न्यास में "नपुंसकस्य" यह अंश प्रधान्यात् अङ्ग का ही विशेषण होता; फिर तो "वा शौ" (शि के परे रहते शत्रन्तअङ्ग को

**केचित्तु 'अचो रहाभ्यां द्वे' इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः—तन्न। तक्रकौण्डिन्यन्यायेन (माठरकौण्डिन्यायेन) सिद्धेरित्यन्यत्र विस्तरः ॥११३॥**

---

भवितव्यम् नहि नपुंसकं नाम शब्दोऽस्ति। किं तह्यु च्यतेऽस्थ्यादिषु शब्दग्रहणमिति। अत्राप्यर्थग्रहणमेव अत्र तावान् संदेहः। क्व प्रकृतस्यार्थो विशेष्यते क्व गृह्यमाणस्येति। शिशीलुग्नुम्विधिषु प्रकृतस्यार्थो विशेष्यतेऽस्थ्यादिषु गृह्यमाणस्य।

केचित्तु (सीरदेवास्तु) "परिभाषाया अस्या उदाहरणम् "अचोरहाभ्याम् द्वे" ८.४.४७ इति सूत्रमाहुः। अनेन हि अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वित्वं विधीयते। तत्र रहाभ्यामित्यनेन रेफस्य द्वित्वनिमित्तत्वं श्रुतम्, यर्प्रत्याहारे च रेफस्यापि पाठात् तस्य च कार्यित्वमनुमितम्। परिभाषया चानया श्रुतेन रेफस्य निमित्तत्वेन तस्य कार्यित्वं बाध्यते इति तदाशयः तेन अर्कः अर्क्कः इत्यत्र 'रेफपरस्य कस्य द्वित्वं भवति

---

विकल्प से नुम् हो) इस न्यास से उस न्यास में कोई फल भेद नहीं रह जाता। इस तरह 'वा नपुंसकस्य इस न्यास को इस परिभाषा में ज्ञापक माना जा सकता है। स्वमोर्नपुंसकात्' ७।१।२३ सूत्र के भाष्य में इस परिभाषा का स्पष्ट विश्लेषण हुआ है। वहाँ भी 'प्रियसक्थ्ना ब्राह्मणेन की सिद्धि के लिए अस्थादि शब्द का अन्वय "नपुंसक" के साथ किया गया अर्थात् अस्थ्यादि शब्द के नपुंसक में विद्यमान रहने पर अनङ् आदि हो ऐसा माना गया और कहा गया कि "अस्थ्यादिषु शब्दग्रहणम्"। भाष्य दुर्गा व्याख्या में उद्धृत है। किसी का (सीरदेव) का मत है कि "अन्चोरहाभ्यां द्वे" ८।४।४७ इस सूत्र में रेफ, द्वित्व के निमित्त के रूप में श्रुत है, यर् प्रत्याहार में रेफ का समावेश भी है। इसलिए उस सूत्र से रेफ को द्वित्व का अनुमित कार्यित्व भी प्राप्त है, इस परिभाषा के बल से रेफ के श्रुत निमित्तत्व से उस के अनुमित कार्यित्व का बाध हो जाता है। इसलिए रेफ को उक्त सूत्र से द्वित्व नहीं होता है। इस प्रकार से जो इस परिभाषा का उदाहरण प्रस्तुत किया गया वह ठीक नहीं है, रेफ की कार्यिता का बाध उसके निमित्तत्व से उसी प्रकार हो जाता है; जिस प्रकार कि "सर्वे ब्राह्मणा भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविषताम्" यहाँ पर माठर और कौण्डिन्य भोजन परोसने में निमित्त बताये गये हैं, इसलिए ब्राह्मण होने के नाते पूर्व वाक्य से प्राप्त उनका भोजन-कार्यित्व अपहृत हो जाता है, वे उस ब्राह्मणभोजन में भोक्ता के रूप में भाग नही लेते हैं; किन्तु भोजन परोस कर अन्य ब्राह्मणों को खिलाते हैं; उसी प्रकार रेफ अन्य यर् के द्वित्व का निमित्त बनेगा, स्वयं वह द्वित्व कार्य में लिप्त नहीं होगा। इस तरह माठर कौण्डिन्य न्याय से ही सिद्ध है। अतः यह इस परिभाषा का का उदाहरण नहीं है।

**ननु 'तत्पुरुषे तुल्यार्थ' इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा 'गातिस्थाघुपाभूभ्यः' इति लुक् पै शोषणे इत्यतः कृतात्वात्परस्यापि स्यादत आह—**

रेफस्य तु नेति तन्न तक्रकौण्डिन्यन्यायेनैव बाधसिद्धेस्तत्रास्या अनुपयोगात् । नच 'येन-नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' (प० सं० ५८) इति परिभाषा-व्याख्याने तक्रकौण्डिन्यायोऽनवकाशविषयो विधेयविषयश्चेति स्वयमेवोक्तम् तथाचात्र निमित्तत्वस्या विधेयत्वेन तत्प्रवृत्तिरयुक्तेति वाच्यम् तक्रकौण्डिन्यन्यायस्थले यो न्यायः या युक्तिरनवकाशरूपा प्रयुज्यते तया सिद्धेरिति तात्पर्येण मूले तक्रकौण्डिन्यन्यायेन सिद्धेरिति ग्रन्थस्य निर्देश इति कल्पनेनादोषात् । यत्र यत्र रेफस्य निमित्तत्वं तत्र सर्वत्र वाक्यान्तरेण तस्य कार्यित्वमपि प्रसज्यते इत्थं निमित्तत्वमनवकाशमिति तेन न्यायेन अर्थात् तन्न्यायरीत्या तस्य कार्यित्वबाधसिद्धिरिति तदाशयात् ।

अन्ये तु तक्रकौण्डिन्यायोऽत्रमाठरपरिवेषणन्यायस्य लक्षणया बोधकमित्याहुः सर्वे ब्राह्मणा भोज्यन्ताम् माठरकौण्डिन्यौ परिवेविषातामित्यत्र परिवेषकत्वाद् भोजक-तया भोजननिमित्तत्वेन माठरकौण्डिन्ययोर्यथा भोजनकार्यित्वबाधस्तथेहापीति वदन्ति । इति शिवम् ११४

**लक्षणप्रतिदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥११४**

"तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ७.२.२ इति सूत्रम् । तस्य तुल्यार्थं, तृतीयान्तं, सप्तम्यन्तम्, उपमानवाचकम् अव्ययम्, कृत्यप्रत्ययान्तं

---

यहाँ तक्रकौण्डिन्य न्याय लिखा हुआ है; पर मेरे विचार में यह माठर-कौण्डिन्य न्याय के अधिक नजदीक है । तक्रकौण्डिन्य न्याय में ("सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम्" "कौण्डिन्याय तक्रम्" में) एक विधेयसे दूसरे विधेय का बाध होता है। यहाँ तो निमित्त से कार्यित्व का बाध दिखाना है । अतः मुझे "माठरकौण्डिन्य" न्याय का उल्लेख अधिक उपयुक्त प्रतीत होता है। कुछ टीकाकारों ने मूल में लिखित 'तक्रकौण्डिन्य' का लाक्षणिक अर्थ 'माठरकौण्डिन्य' न्याय माना है। कुछ ने कहा है कि कि 'तक्रकौण्डिन्य न्यायेन सिद्धेः' का अर्थ है कि तक्रकौण्डिन्य न्याय में जो न्याय—युक्ति अनवकाशरूप युक्ति-ली गयी है; उसी से यहाँ भी सिद्ध हो जायगा। अन्ततो गत्वा मूल का तात्पर्य 'माठरकौण्डिन्याय' में ही दिखाई पड़ता है।

॥ इति शिवम् ११३ ॥

——:०:——

**लक्षणप्रतिपदोक्तयोः—ग्रहणम् ११४**

"तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयकृत्याः" ६।२।२ इसका अर्थ है कि तुल्यार्थक, तृतीयान्त, सप्तम्यन्त, उपमानवाचक, अव्यय, कृत्यप्रत्ययान्त

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥११४॥**

**लक्षणं लाक्षणिकमुपचारात् ।**

---

द्वितीयान्तं च पूर्वपदं तत्पुरुषे प्रकृत्येत्यर्थः । तुल्यश्वेतः । किरिणा काणः किरिकाण इत्यादीन्युदाहरणानि । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' २.४ ७७ गा-स्था-घु संज्ञक (दाधा) पा भूधातुभ्यः परस्य सिचो लुक् स्यात् परस्मैपदेषु इति सूत्रार्थः, अगात्, अस्थात् अदाद् अगात्, इत्यादीन्युदाहरणानि ।

ननु किरिणा काणः इत्यत्र यथा "तत्पुरुषे तुल्यार्थ—' ६.२.२ इति सूत्रेण प्रत्ययस्वरेणान्तोदात्तस्य पूर्वपदस्य प्रकृतिस्वरो भवति तथा "परमेण कारकेण' इति विग्रहे 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" २.१.६१ इति परिनिष्ठतविभक्त्या विशेषणसमासेऽपि तत्पुरुषस्य सत्त्वेन पूर्वपदे तृतीयान्तत्वस्य च **विद्यमानत्वेन** प्रकृतिस्वरः स्यात्, एवमेव यथा भ्वादिपठितस्य पा पाने इत्यस्य लुङि निष्पन्न-रूपे 'अपात्' इत्यत्र 'गातिस्थाघुपा'—इति सिचोलुग् भवति तथा भ्वादौ पठितात् 'पै शोषणे' इत्यस्मादपि लुङि अपासीदित्यत्रापि प्राप्नोति । अतः परिभाषां स्वीकरोति—लक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यैव ग्रहणम् इति । लक्षणं सूत्रम् तच्चेह तात्पर्यानुपपत्त्या लक्षणया लक्षणनिष्पन्नार्थबोधकम्—तदाह—**लक्षणं लाक्षणिकमुपचारात्** इति । तेन लक्षणनिष्पन्न-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण-

---

और द्वितीयान्त ये सातों अगर तत्पुरुष समास में पूर्वपद में हों तो प्रकृतिस्वर होता है । इससे जैसे किरिणा काणः किरिकाणः में प्रकृतिस्वर होता हैं, वैसे ही "परमेण कारकेण" इस विग्रह में परिनिष्ठितविभक्ति के साथ विशेषण समास करने पर भी कर्मधारय होने के कारण तत्पुरुषत्व है ही, पूर्वपद में तृतीयान्त पद भी है; इसलिए प्रकृतिस्वर होना चाहिए दूसरी बात यह है कि "गातिस्थाघुपा २।४।७७ सूत्र से सिच् का लुक् जैसे "पा पाने" से निष्पन्न रूप 'अपात्' में होता है वैसे पै शोषणे से लुङ् में बने हुए रूप 'अपासीत्' में भी होना चाहिए । इन दोषों के निवारणार्थ परिभाषा मानते हैं—

**"लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्"**

यहाँ लक्षण का अर्थ लाक्षणिक है । लक्षण से बने हुए को लाक्षणिक कहा गया है । किसी सूत्र के प्रवृत्त होने से जो रूप बनता है, उसे लाक्षणिक कहते है, 'पदं पदं प्रतिपदम् प्रतिपदेन उक्तम् प्रतिपदोक्तम्' जो उसी रूप में उक्त हो; जिस रूप में कि सूत्र में कहा गया है; उसे प्रतिपदोक्त कहते हैं । लाक्षणिक और प्रतिपदोक्त में प्रतिपदोक्त का ही ग्रहण होता है । "तत्पुरुषे तुल्यार्थ" में वही तृतीयान्तपूर्वपदक तत्पुरुष लिया जायगा जो "तृतीया तत्कृतार्थेन" २।१।३० से विहित है। यहाँ 'परमेण कारकेण' में कर्मधारय समास है, जो प्रतिपदोक्त तृतीयान्ततत्पुरुष नहीं

तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । पै इत्यस्य पा इति रूपं लक्षणानुसन्धानपूर्वकं बिलम्बोपस्थितिकं पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इद-मेव ह्येतत्परिभाषाबीजम् ।

---

मित्यनया बोधिते 'पैशोषणे' इत्यत्र 'आदेच उपदेशेऽशिति ६.१४५ इत्यनेनात्वे-कृते निष्पन्नस्य 'पा' इत्यस्य लाक्षणिकत्वान्न ग्रहणं 'गातिस्थेतिसूत्रे किन्तु प्रति-पदोक्तस्य 'पा पाने' इत्यस्यैव । ननु परमेण कारकेणेत्यत्र कथं परिभाषाप्रवृत्तिः, "तृतीया तत्कृतार्थेन गुणवचनेन" २०।३० इति तृतीयासमासस्य तृतीयापदोच्चारण-पूर्वकविहितत्वेन प्रतिपदोक्तत्वेऽपि कर्मधारयसमासस्य च तृतीयेत्युच्चारणपूर्वकविधाना-भावेनाप्रतिपदोक्तत्वेऽपि लाक्षणिकत्वाभावादिति चेन्न, प्रतिपदोक्तभिन्नमिह लाक्ष-णिकं गृह्यत इत्यदोषात् । इत्थं तृतीयेति पदोक्तिपुरःसरविहितस्य "तृतीया तत्कृतार्थेन गुणवचनेन" इति प्रतिपदोक्तस्य समासस्यैव "तत्पुरुषे तुल्यार्थतृतीया'—६.२.२ इत्यत्र तृतीयापदेन ग्रहणात् कर्मधारयसमासस्य च "सन्महत्परमोत्तमोत्कृष्टाः" २.१.६१ इति विहितस्य तृतीयापदोक्तिपूर्वकाविधानेन लाक्षणिकत्वादग्रहणमित्यदोषः ।

---

है । है तो वह कर्मधारय, परमं च कारकम् परमकारकम्, तेन परमकारकेण ऐसा भी हो सकता है; परन्तु यहाँ परिनिष्ठित विभक्ति के साथ समास करने से पूर्वपद में तृतीया भी आ गयी है, यह बात दूसरी है। इसीतरह "गातिस्था" सूत्र में प्रतिपदोक्त "पा" जो "पा" रूप में ही धातु-पाठ में उक्त है; लिया जायगा, "पै शोषणे से जो पा बनता है, वह तो "आदेच उपदेशेऽशिति" ६।१।४५ से आत्व करने के बाद बनता है; इसलिए वह लाक्षणिक है। लाक्षणिक का ग्रहण नहीं होने के कारण "पै शोषणे" से बने रूप "अपासीत्" में लुक् नहीं होगा । तत्तद्विभक्ति-विशेष—द्वितीया तृतीया—आदि—का नाम लेकर विहित समासादि को प्रतिपदोक्त कहा जा सकता है, (तत्पुरुषे तुल्यार्थ आदि में) उन्हीं का ग्रहण होगा, क्योंकि तृतीया तत्पुरुष आदि कहने से उन्हीं की शीघ्र उपस्थिति होती है। इसलिए बुद्धि में प्रथमोपस्थिति के ग्रहण से जब सूत्र चरितार्थ हो गया, तो विलम्बोपस्थिति को क्यों प्रश्रय देगा। "पै" इसका जो 'पा' रूप बनता है, वह लक्षणों (सूत्रों) के अनुसंधान (प्रवृत्ति) के बाद बनता है, इसलिए उस की उपस्थिति विलम्ब से होती है भ्वादि के 'पा' पाने की उपस्थिति जल्दी होती है। यही शीघ्रोपस्थिति और विलम्बोपस्थिति इस परिभाषा में बीज है। असली मोती और नकली मोती दोनों में असली मोती का ग्रहण होना स्वाभाविक ही है ।

इयञ्च वर्णग्रहणेऽपि 'ओत्' सूत्रे भाष्ये संचारितत्वात् ।

---

तदुक्तं तत्तद्विभक्तीत्यादिना । तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तं, पदं पदं प्रतिपदं तेनोक्तत्वात् । अत्र लक्षणं च प्रतिपदं चेति द्वन्द्वंकृत्वा उक्तेतिशब्देन तृतीयासमासः द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं सम्बन्धः, लक्षणशब्देनात्र-सामान्यलक्षणं ग्राह्यम् प्रतिपदोक्तभिन्नम् प्रतिपदोक्तपदसमभिव्याहारात् । तेन सर्वं सुस्थं न कोऽपि दोष इति कश्चित् । प्रतिपदोक्तस्य ग्रहणे बीजम्, तस्य शीघ्रोपस्थितिः लाक्षणिकस्य तु विलम्बोपस्थितिरेव लाक्षणिकस्याग्रहणे हेतुः । 'गतिस्थाघुपा'' २.४. ७७ इति सूत्रे 'पा' पदेन कस्य ग्रहणमिति जिज्ञासायां प्रथमं ''पा पाने'' इति—भौवादिकः पारूपेणोक्तो धातुरेवोपस्थितो भवति, अतस्तस्य ग्रहणेन चरितार्थं 'पा' ग्रहणं विलम्बेनोपस्थितं ''पै शोषणे इत्यस्यात्वानन्तरं जातं रूपं न ग्राहयतीति लोकयुक्ति-सिद्धेयं परिभाषेति । तदाह—इत्येतत्परिभाषाबीजमित्यन्तेन ॥

अत्रेदं बोध्यम्—'प्रतिपदोक्तम्' इति ''लक्षणेनाभिप्रति—२.१.१४ इति समासः । किमपि कार्यं यत्पदं गृहीत्वोच्यते; तत्पदं तत्पदोच्चारणविहितस्थले भवति । यथा 'विभाषादिक्समासे बहुव्रीहौ' १.१.२८ इति बहुव्रीहौ दिक्शब्दसंशब्दनेन विधीयमानः सर्वनामसंज्ञाविकल्पः 'दिङ्नामान्यन्तराले' २.२.२६ इति दिक्पदसंशब्दितबहुव्रीहा-वेव भवति । तस्य दिक्पदवत्त्वेन झटित्युपस्थितिकत्वात् । तेन 'अनेकमन्यपदार्थे' २.२.२४ इत्यनेन बहुव्रीहौ दक्षिणपूर्वाया इत्यत्र (योत्तरा सैव पूर्वा यस्या उन्मुग्धायाः तस्या इत्यर्थे सिद्धे) सर्वनामसंज्ञा विकल्पो न । लक्षणशब्देन लक्ष्यते यथाकथंचिज्-ज्ञाप्यते इति मन्दोपस्थितिकमुच्यते । तेन लक्षणशब्दे न लक्षणा, न वा प्रतिपदोक्त-भिन्नं सर्वमिह लाक्षणिकमित्यर्थस्वीकारे लक्षणशब्दार्थाननुगुणत्वाशङ्का काप्युदयते । झटित्युपस्थितिकार्थेनैव शास्त्रस्य नैराकाङ्क्ष्ये मन्दोपस्थितिकस्याग्रहणमितिलौकिक लाघवगौरवन्यायमूलेयम् ।

इयं च वर्णग्रहणेऽपि प्रवर्तते, 'ओत्' १.१.१५ सूत्रे भाष्ये संचारितत्वात् । तथाहि—'ओतश्च्वि प्रतिषेधः । ओदन्तस्य निपातस्य च्व्यन्तस्य प्रतिषेधो वक्तव्यः । अनदोदोऽभवददोऽभवत् । तिरोऽभवत् । न वक्तव्यम् । लक्षणप्रतिपदोक्तयोः प्रतिपदो-क्तस्येत्येवं भविष्यति ॥इति॥

---

'अनदः अदः अभवत्' इस विग्रह में 'कृभ्वस्तियोगे'—५।४।५० अभूततद्भाव इति वक्तव्यम् (वा०) से च्विप्रत्यय' उसका सर्वापहार लोप होने पर च्विप्रत्ययान्त होने से 'अदस्' को 'अधिरीश्वरे' १।४।९७ इस अधिकार में पठित ऊर्यादिच्विडाचश्च' १।४।६१ से निपातसंज्ञा हो जाने के कारण, 'अदोऽभवत्' में रुत्व, उत्व, गुण होने पर 'ओत्' १।१।१५ से ओदन्तनिपात मानकर प्राप्त प्रगृह्यसंज्ञा के निवारण के लिए भाष्यकार ने इस परिभाषा से काम लिया है; अतः मानना चाहिए कि वर्ण-

यत्तु वर्णग्रहणे नैषा आदेच इत्यत्रोपदेशग्रहणादिति तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ॥

---

यत्तु 'आदेच उपदेशेऽशिति' ६.१.४५ इत्वत्रोपदेशग्रहणाल्लिङ्गाद् वर्णग्रहणे नैषा, तद्धि उपदेशग्रहणं चेता स्तोता इत्यादावात्त्वव्यावृत्तये कृतम्। यदीयं परिभाषा वर्ण-ग्रहणे प्रवर्तेत तदा 'चे' 'स्तो' इत्यादेर्लाक्षणिकत्वादनयैव तस्याग्रहणे सिद्धे उप-देशग्रहणं व्यर्थमेव स्यात्। तदेव ज्ञापयति वर्णग्रहणे परिभाषेयं न प्रवर्तते। 'वर्ण-ग्रहणेऽस्याः प्रवृत्त्यभावे ज्ञापिते तु 'चेता' इत्यादावात्त्वाभावायोपदेशग्रहणं स्वांशे चरितार्थम्। अन्यत्र फलं तु अशुक्ला (शाटी) शुक्ला भवतीति शुक्लीभवति इत्यत्र टाव्दीर्घादेशाभ्यां सिद्धस्य शुक्लाघटकस्याकारकस्यापि 'अस्य च्वौ' ७.४.३२ इतीत्वं सिद्ध्यति, वर्णग्रहणे प्रवृत्तौ तु तन्न सिद्ध्यतीति प्राहुस्तन्न "आदेच

---

ग्रहण में भी यह परिभाषा प्रवृत्त होती है। यह 'ओत्' सूत्र का भाष्य दुर्गा व्याख्या में उद्धृत है।

वर्ण ग्रहण में यह परिभाषा प्रवृत्त नहीं होती है, आदेश उपदेशेऽशिति में उपदेश ग्रहण इसका प्रमाण है। उपदेशग्रहण इसलिए करते हैं कि 'चि' धातु से लुट् लकार में चेता, स्तु धातु से लुट् लकार में स्तोता, यहाँ आत्व न हो। यदि यह परिभाषा वर्णग्रहण में प्रवृत्त होती; तो लाक्षणिक होने के कारण ही यहाँ इस परिभाषा के बल से आत्व नहीं होता, ऐसी स्थिति में उपदेश ग्रहण व्यर्थ हो जाता। उपदेश ग्रहण न व्यर्थ हो, इससे कह कल्पना करते हैं कि वर्ण ग्रहण में यह परिभाषा प्रवृत्त नहीं होती हैं। इस मत को 'आदेचः' सूत्र के शब्देन्दुशेखर में बताया गया है कि 'आदेश' सूत्र में उपदेशग्रहण "उदीचां माङः" इत्यादि सूत्र में निर्दिष्ट "माङ" में (अनुबन्धङ्कार सहित" 'मैङ्' में उपदेश एवानुबन्धलोपस्ततो धातुसंज्ञा के अनुसार) धातुत्व के अभाव में भी आत्व विधान के लिए किया गया है। पूर्वोक्त निर्देश में आत्व की सिद्धि के लिए यदि उक्त सूत्र में धातोः" का सम्बन्ध नहीं रहने दें तो "गोभ्याम्" में प्रतिपदोक्त ओकार को आत्व की प्राप्ति होगी, उसके निवारण के लिए वहाँ 'धातु' ग्रहण आवश्यक है। इसतरह पूर्वोक्त 'माङः' में आत्व के लिए उपदेश ग्रहण चरितार्थ है। अतः वह, वर्णग्रहण में इस परिभाषा की अप्रवृत्ति में ज्ञापक नहीं हो सकता। साथ साथ वर्णग्रहण में परिभाषा की प्रवृत्ति दिखाने वाला 'ओत्' सूत्र का भाष्य ग्रन्थ (दु० व्याख्या में पृ० ६८३ पर उद्धृत) भी पूर्व मत के विपरीत जाता है। अतः वर्णग्रहण में इसकी प्रवृत्ति माननी भी चाहिए। 'माङः' में अनुबन्ध 'ङ्', एजन्त का बाधक कैसे नहीं बनता, यह "नानु बन्धकृत-मनेजन्तत्वम्" से पूछिए। उसकी आत्मकथा इस पुस्तक की पृष्ठसंज्ञा ५२ पर बनायी गयी है।

**अनित्या चेयं भुवश्च महाव्याहृतेरिति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥११४॥**

उपदेशे' इति सूत्रस्य शब्देन्दुशेखरे दूषितत्वात् । "न धातुलोप आर्धधातुके १.१,४ इति सूत्रे धातुग्रहणं किम्—लूञ् लविता, लवितुम्; पूञ् पविता, पवितुम् इति भाष्यव्याख्यावसरे "अनुबन्धो न धात्वैकदेशः, यस्मादुपदेश एवेत्संज्ञा । प्रयोगे तु 'लू' शब्द एव धातुसंज्ञः; केवलमसौ ञितुकार्यं लभते । लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव युक्ता धातुसंज्ञेति' प्रदीपानुसारेण 'उदीचां माङो व्यतीहारे' ३,४.१९ इति सूत्रनिर्दिष्टस्य सानुबन्धस्य माङ इत्यस्य धातुत्वाभावेऽप्यात्वविधानाय "आदेच—" इति सूत्रे धातोरित्यस्यासम्बन्धस्यावश्यस्वीकर्तव्यतया 'गोभ्याम्' इत्यत्र प्रतिपदोक्तस्य ओकारस्यात्वाभावाय उपदेशग्रहणस्यावश्यकत्वेन वैयर्थ्यासंभवात् । तेन उपदेशग्रहणेन पूर्वोक्तपरिभाषाया अनित्यत्वज्ञापनासंभवात् । गोभ्यामित्यादौ सूत्रे धातुसम्बन्धाभावे प्रसक्तस्यात्वस्य वारणं न 'लक्षणप्रतिपत्तिपदोक्तपरिभाषया संभवति, गोशब्दस्य प्रतिपदोक्तत्वात् । उपदेशग्रहणेन तु वारणं संभवति "उद्देशश्च प्रतिपदिकानां नोपदेश इति "आदेच उपदेशेऽशिति ७.१.४५ इति सूत्रे "धात्वधिकारात् प्रातिपदिकस्याप्राप्तिः" इति वार्तिकव्याख्यावसरे भाष्योक्तेः ।

'ओत्' १.१.१५ इति सूत्रेऽस्याः वर्णग्रहणे संचारणपरकभाष्यविरोधादपि वर्णग्रहणेऽप्रवृत्तिकल्पनमयुक्तं प्रतिभाति ॥

इयमनित्या, 'भुवश्च महाव्याहृतेः' ८.२.७१ इत्यत्र महाव्याहृतिग्रहणात् ।

यद्यपि 'धापयति' यहाँ प्रतिपदोक्त आकारान्त 'धा' धातु में चरितार्थ पुक्, धेट् धातु से आत्व करने पर धापयति' में लाक्षणिक होने के कारण प्रवृत्त नहीं होगा, यह प्रश्न उठता है तथापि "भुवश्च महाव्याहृतेः" ८।२।७१ यहाँ किये गये 'महाव्याहृति' ग्रहण के कारण यह परिभाषा अनित्य मानी गयी है । अतः वहाँ इसकी प्रवृत्ति नहीं होगी । "महाव्याहृतेः" इसलिए कहते हैं कि 'भू' शब्द के जस् में बने रूप में प्लुत न हो । यदि यह परिभाषा अनित्य न हो तब तो जसन्त रूप में लाक्षणिक होने के कारण ही प्लुत की अप्राप्ति हो जाती, महाव्याहृतिग्रहण व्यर्थ हो जाता । व्यर्थ होकर वह इस परिभाषा की अनित्यता का ज्ञापन करता है । 'यावत् पुरानिपातयोर्लट्' का 'निपात' ग्रहण भी इस परिभाषा की अनित्यता बताता है । यदि यह परिभाषा नित्य हो, तो यावद्दास्यते, तावद्भोक्ष्यते जितना दिया जायगा उतना खाया जायगा, पुर (गाँव) होकर जायगा, इस अर्थ में 'पुरा यास्यति' में लाक्षणिक होने के कारण ही सूत्र की प्रवृत्ति रुक जाती, तदर्थ किया गया निपात ग्रहण व्यर्थ ही था ।

॥ इति शिवम् ११४ ॥

——:०:——

नन्वेवं 'देङो दोधातोश्च' कृतात्त्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्वे प्रणिमातेत्यादौ 'नेर्गदनद' इति णत्वं न स्यात्तथा गै इत्यस्यात्वे 'घुमास्था' इतीत्वं न स्यादत आह—

---

महाव्याहृतेर्भुवस् इत्यस्यच्छन्दसि विषय रुर्वा रेफो वेति सूत्रार्थः। तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः। तत्रेह तु मध्यमाया ग्रहणं व्याख्यानात्। तेन भुव इति भुवरितीति सिद्धयति। रुत्वे रुसम्बन्धिरेफत्वाद्यकारादेशतल्लोपौ भुव इति रत्वे तु खर्परत्वस्यावसानस्थस्य चाभावाद् विसर्गाप्राप्त्या रेफ एव।

तद्धि महाव्याहृतिग्रहणं, "भुवो विश्वेषु भुवनेषु" इत्यत्रातिप्रसङ्गनिवृत्तये क्रियते, अत्र भुव इति भवतेस्तिङन्तं रूपम् "छन्दसि लुङ्लङ्लिटः" ३.४.६ इति वर्तमाने लङ्, सिप्, शपि गुणाभावश्छान्दसः, "बहुलं छन्दस्यमाङ्योगेऽपि ६.४.७५ इत्यडभावः॥ परिभाषाया नित्यत्वे त्वत्र लाक्षणिकत्वात् विलम्बोपस्थितिकत्वादेव —ग्रहणे सिद्धे महाव्याहृतिग्रहणमस्या अनित्यत्वज्ञापनार्थम्। तेन "क्रीड्जीनां णौ" ६.१.४८ इत्यात्वनिष्पन्नाकारस्यापि "अर्तिह्री—' ७.३.३६ इति पुक् सिद्धयति। अतएव धापयति इति ण्यन्तधाधातुनिष्पन्ने चरितार्थोऽपि पुक् धेट् पाने इत्यस्य ण्यन्तरूपे 'आदेच उपदेशे ६.१.४५ इति कृतात्वेऽपि प्रवर्तत इति।

"तत्पुरुषे तुल्यार्थ—६,२.२ इति सूत्रे भाष्येऽसौ स्पष्टत उक्ता। तथाहि—तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः" (वा०) तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधो वक्तव्यः। परमं कारकं परमकारकम्। परमेण कारकेण परमे कारके परमकारके इति। सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्। सिद्धमेतत्। कथम्। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यो द्वितीयासप्तमीतृतीयासमासस्तस्य ग्रहणं, लक्षणोक्तश्चायम्।

अत्र कैयटः लक्षणोक्त इति विभक्तिविशेषमनुपादाय सामान्यलक्षणेनायं समासो विहित इत्यर्थः। अन्यत्र=शेखरादौ=विस्तरः—इति शिवम् ११४

**गा-मा-दा-ग्रहणेष्वविशेषः ११५**

ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणस्वीकारे देङ् रक्षणे (भ्वादिः) दो अवखण्डने (दिवादिः) इत्यनयोः 'आदेच उपदेशेऽशिति' ६.१.४५ इत्यनेन कृता-

---

**गामादाग्रहणेष्वविशेषः—११५**

लक्षणप्रतिपदोक्त परिभाषा स्वीकार करने पर देङ् और दो धातु को आत्व करने पर घुसंज्ञा नहीं होगी, मेङ् धातु को आत्व करके बनाये गये रूप प्रणिमाता में "नेर्गद नदपतपदघुमा" ८।४।१७ से 'न' कार को 'ण' कार नहीं होगा, और "गै" धातु को आत्व करने पर बनाये गये रूपों में 'घुमास्था' ६।४।६६ से ईत्व नहीं होगा, ईत्व न होने पर "गीतम्" यह रूप नहीं बनेगा, क्योंकि ये सब

**गामादाग्रहणेष्वविशेषः ॥११५॥**

**अत्र ज्ञापकं दैपः पित्त्वम्। तद्घ्वदाबिति सामान्यग्रहणार्थम्। अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन चैकदेशानुमतिद्वारा संपूर्णपरिभाषा ज्ञाप्यते।**

---

त्वयोर्घुसंज्ञा न स्यात्, तथा च प्रणिदातेत्यत्र 'नेर्गदनद'—८.४।१७ इति णत्वम् देयात्, अदात् इत्यादौ च 'एर्लिङि' ६.४.६७ इत्येत्वं 'घुमास्था'—६.४.६६ इति सिचो लुक् न स्यात्, घुत्वाभावात्, एवं मेङ आत्वे लाक्षणिकत्वात्' 'प्रणिमाता' इत्यत्र "नेर्गद'—८.४.१७ इति णत्वम्, 'गै शब्दे' (भ्वादिः) इत्यस्य चात्त्वे 'घुमास्था—६.४.६६ इतीत्वं 'गीता' इत्यादौ न स्यादिति चेन्न **गामादाग्रहणेष्वविशेष** इति परिभाषास्वीकारात् ॥

अत्र ज्ञापकं भ्वादौ शोधनार्थे पठितस्य दैपः पित्त्वं तत्र हि पित्त्वम् 'दाधा घ्वदाप् १.१.२० इति सूत्रोक्तादाबिति प्रतिषेधार्थं क्रियते। दैपि पकारग्रहणाद्दाप्सामान्यस्य प्रतिषेधः सिद्ध्यति। तेन दाधाघ्वदाबित्यस्यार्थो दारूपा धारूपाश्च धातवो घुसंज्ञका भवन्ति दाप्दैपौ विनेति। दैपि पित्त्वं घुसंज्ञाप्रतिषेधार्थमेव क्रियते नत्वनुदात्तार्थम् "अनुदात्तौ सुप्पितौ" ३.१.४ इत्यनेन प्रत्ययस्यैव पितोऽनुदात्तत्वविधानात्। तत्र दैपो दाप्रूपताऽऽपादनम् "आदेच उपदेशे—" इत्यात्वेनैव संभवतीति तस्य लाक्षणिकत्वाद् घुसंज्ञाविधावग्रहणेन स्वतः घुसंज्ञातत्प्रयुक्तकार्याभावे सिद्धे पित्त्वकरणमनर्थकं सज्ज्ञापयति **गामादाग्रहणेष्वविशेष** इति। यत्र गामादानां ग्रहणं विद्यते तेषु शास्त्रेषु लाक्षणिक-

---

लाक्षणिक हैं। इसलिए परिभाषा मानते हैं "गा-मा-दाग्रहणेष्वविशेषः" गा, मा और दा के ग्रहण वाले सूत्रों में, इनके ग्रहण के समय लाक्षणिक और प्रतिपदोक्त का पूर्वनिदिष्ट वैशिष्ट्य नहीं देखा जाता है, निरनुबन्ध और सानुबन्ध की विशेषता तथा लुग्विकरण और अलुक् विकरण की विशेषता भी नहीं देखी जाती है। 'दैप् शोधने' में किया गया 'पित्त्व' इस परिभाषा का ज्ञापक है। 'दैप्' शोधने में इत्संज्ञक पकार इसलिए निर्दिष्ट हुआ है कि "दाधा घ्वदाप्" १।१।२० में निर्दिष्ट 'दाप्' पद से उसका भी ग्रहण हो, और दाप्, दैप् को घुसंज्ञा न हो। यदि 'दा' पद से प्रतिपदोक्त 'दा' का ही ग्रहण हो, "निरनुबन्धक" परिभाषा से यदि निरनुबन्ध का ही ग्रहण हो तो, आत्व करने पर दारूपता को प्राप्त लाक्षणिक 'दैप्' को और सानुबन्धक दैप् को कभी घुसंज्ञा प्राप्त ही नहीं होती, अदाप्घटक 'दाप्' पद से 'दैप्' का ग्रहण होना संभव ही नहीं था, तदर्थ किया गया पकारानुबन्ध व्यर्थ होकर एकदेशानुमति द्वारा स्थालीपुलाकन्याय से सम्पूर्ण परिभाषा का ज्ञापन करता है। यही सब बताते हुए लिखते हैं कि वह पित्त्व 'अदाप्' में सामान्य ग्रहण के लिए है। यदि यह परिभाषा न होती तो, 'दैप्' से बने 'दा' का लाक्षणिक

इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका 'दाधा घ्वदाप्' इति सूत्रे भाष्ये स्पष्टा ।

---

प्रतिपदोक्तत्वादिकृतो विशेषो नास्ति इति परिभाषार्थः । तेन 'दाधाघ्वदाप्' १.१.२० इत्यत्र दाग्रहणसत्त्वाल्लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति विशेषाग्रहणाल्लाक्षणिकस्यापि दैब्निष्पन्नदापः प्रतिषेधाय दैपः पित्वं स्वांशे चरितार्थम् । न चानेन दामात्रांशे ज्ञापकत्वं लभ्यते गामाग्रहणेष्वपि किं ज्ञापकमिति वाच्यम् एकदेशानुमतिद्वारा सम्पूर्णपरिभाषाया दैपः पित्वस्यैव ज्ञापकत्वात् । एकदेशेऽनुमितिः प्रमाणमस्ति चेदन्यस्मिन् भागेऽपि प्रमाणं भविष्यत्येवेति संभावनया स्थालीपुलाकन्यायेन (एकस्तण्डुलो यदि सिद्धः=विक्लिन्नोऽङ्गुल्यादिना ज्ञातस्तर्हि । सर्वेऽपि पाकपात्रस्थाः सिद्धा इति न्यायो निगद्यते स्थालीपुलाकन्यायस्तेन) सम्पूर्णा परिभाषा ज्ञाप्यत इति भावः । इयञ्च लक्षणप्रतिपदोक्त-निरनुबन्धक-लुग्विकरणपरिभाषाणां (पं० सं० ११४, ८२, ६१) बाधिका । तेनैतत्परिभाषात्रयकृतो विशेषः गामादाग्रहणेषु सूत्रेषु न भवतीति निष्कर्षः । लक्षणप्रतिपदोक्तपरिभाषानन्तरमस्या उल्लेखेनास्यास्तदपवादत्वमेवेति तदनित्यत्वादेव सिद्धे इयं विफलेति भ्रमद्वयनिरासायाह—इयं परिभाषात्रयबाधिकेति । अत्रोल्लेखस्तु-ज्ञापकानुरोधात् अशोकवाटिकान्यायात् सर्वनिषेध्यान्ते स्थानदानौचित्याच्चेति बोध्यम् । कथं सर्वासां बाधिकेति चेद् बाध्यसामान्यचिन्तयेति गृहाण । यदि निरनुबन्धकग्रहणपरिभाषां न बाधेत तदापि दाधा घ्वदाप् इत्यत्र निरनुबन्धकदाग्रहणेन सानुबन्धकयोर्दाप्दैपोः स्वतः ग्रहणाभावे सिद्धेऽदाप् ग्रहणं दैपः पकारग्रहणं च व्यर्थं स्यादिति ।

---

होने के कारण ही विधि सूत्र में 'दा' पद से अग्रहण सिद्ध हो ही जाता दाप्-सामान्य—सकल दाप् अर्थात् दैप् के ग्रहण के लिए किये गये इत्संज्ञक पकार से क्या लाभ ? अथवा यों कहिए कि 'दैप्' में पकार इसलिए लगाया गया है कि 'अदाप्' के दाप् में वह भी समाविष्ट किया जाय । परन्तु जब लाक्षणिक और प्रतिपदोक्त में लाक्षणिक का हरहालत में ग्रहण नहीं किया जायगा तब प के रहते हुए भी नानुबन्धकृतमनेजन्तत्वम्' के कारण आत्त्व करने पर बने हुए 'दैप्' के लाक्षणिक रूप, दाप् का अदाप् के दाप् ग्रहण से ग्रहण हो नहीं सकता;—फिर दैप् में पकार व्यर्थ ही होता । वह पित्त्व एकदेशानुमत्या एक अंश में (दा में) यदि प्रमाण मिला है तो और अंशों में भी प्रमाण होंगे ही, इस अनुमान से, एक चावल को हाथ से दबा कर सीझा हुआ देख कर सभी चावल सीझ गये होंगे; इस लौकिकप्रक्रिया पर आधारित स्थालीपुलाक न्याय से, सम्पूर्णपरिभाषा को ज्ञापित करता है । यह परिभाषा, लक्षण प्रतिपदोक्तपरिभाषा, निरनुबन्धक परिभाषा और लुग् विकरण परिभाषा को बाधती है ।

'गातिस्था' इति सूत्रे इणादेशगाग्रहणमेष्यत इति न दोष इत्यन्यत्र विस्तरः ॥११५॥

परिभाषात्रयबाधिकेयं दाधा घ्वदाप् १.१.२० इति सूत्रे भाष्ये स्पष्टा । तथाहि—"दोष एवैतस्याः परिभाषाया लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति गामादाग्रहणेष्व विशेष इति ॥

परिभाषात्रयबधिकेति मतमत्रत्ये कैयटे विशेषतः स्पष्टम् । तथाहि कैयटः गामादाग्रहणेष्वविशेष इति प्रतीकमुपादाय प्राह—अस्य चार्थस्य दैपः पित्त्वम् 'अदाप् इति प्रतिषेधे सामान्यग्रहणार्थं लिङ्गम् । अन्यथास्य लाक्षणिकत्वादत्र ग्रहणं न भविष्यतीति किं प्रतिषेधार्थेन णित्वेन ? सामान्यापेक्षया च' निरनुबन्धकग्रहणे' 'लक्षणप्रतिपदोक्तयोः—' इति च परिभाषाद्वयानुपस्थानमिह ज्ञापयतीति धेटोऽपि सिद्ध्यति । 'दोदद्घोः" (७.४.४६) इत्यत्र वा "दः" इत्येतत् धेण्निवृत्त्यर्थं सत् धेटो घुसंज्ञां ज्ञापयति । न हि दधाति निवृत्यर्थं 'द' इत्येतत् अस्य 'दधातेर्हिः' इति ह्यादेश-विधानाद्ददद्भावाप्रसंगात् ॥

ननु परिभाषया गामादाग्रहणेष्वविशेष इत्युक्तम् तेन एष्वविशेषत्वेऽपि धेट् धातोरात्वे 'घा' इत्यस्य लाक्षणिकत्वाद् धा ग्रहणेनाग्रहणाद् घुसंज्ञाया अप्राप्ता अधात् इत्यत्र "गातिस्था—" २.४.७७ इति सिचो लुग् न स्यात् इति चेन्न गामादां ग्रहणं यत्रेति 'बहुव्रीहिसमासेन दाघटितसूत्रेऽविशेष इत्यर्थलाभेन 'दाधा-घ्वदाप्' १.१.२० इति दाघटितसूत्रेऽविशेषत्वबोधनेन धाग्रहणेऽपि लक्षणप्रतिपदोक्ता-दिपरिभाषाया अप्राप्तिबोधनात् । न चैवं गाघटिततया "गातिस्था—" इति सूत्रेऽविशेषत्वबोधनात् पाधातुविशेषेऽप्यविशेषत्वप्राप्त्या पा ग्रहणेन पै शोषणे (भ्वादिः) इत्यस्य कृतात्वस्यापि ग्रहणापत्या 'अपासीत्' इत्यत्रापि सिचो लुक् स्या-दिति वाच्यम् दाग्रहणं यस्मिन् इति दाग्रहणमित्यत्र प्रथमं बहुव्रीहिं कृत्वा गा च मा च दाग्रहणञ्चेति द्वन्द्वसमासे कृते गाशब्दे माशब्दे दाघटितसूत्रे चाविशेष इति विशेषार्थकरणेनादोषात् ।

नचैतत्परिभाषास्वीकारे "गातिस्था—(२.४.७७) इत्यत्र गाग्रहणेऽविशेषत्वा-पत्या जौहोत्यादिकस्य 'गा स्तुतौ' इत्यस्य भौवादिकस्य 'गैशब्दे' इत्यस्य च ग्रहणा-पत्या अगासीत् इत्यत्र सिचो लुक् स्यादिति वाच्यम् तत्र व्याख्यानादिणादेशस्य

दाधा घ्वदाप् सूत्र के भाष्य के यह स्पष्ट है । "गातिस्था १।१।२० सूत्र में इण् धातु के स्थान में आदिष्ट 'गा' का ही ग्रहण, व्याख्यान विशेष के आधार पर किया जाता है । इसलिए वहाँ 'गै' धातु से आत्व करने पर निष्पन्न 'गा' का इस परिभाषा से ग्रहण का दोष नहीं हुआ ।

॥ इति शिवम् ११५ ॥

——:०:——

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह—
**प्रत्येकं वाक्यपरिसमाप्तिः ॥११६॥**
देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥११६॥

---

गातेरेव ग्रहणेनादोषात् । तथा च "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २.४.७७ इति सूत्रे भाष्यम् 'गापोर्ग्रहण इण्पिबत्योर्ग्रहणम् (वा० I) गापोर्ग्रहण इण्पिबत्योर्ग्रहणं कर्तव्यम् । इणो यो गाशब्दः पिबतेर्यः पाशब्दः इति वक्तव्यम्' इह मा भूत् । अगासीन्नटः । अपासीद्धनम् इति ॥ तर्त्तर्हि वक्तव्यम् । न वक्तव्यम् । इणो ग्रहणे तावद्वार्तम् निर्देशादेव व्यक्तं लुग्विकरणस्य ग्रहणमिति । पाग्रहणेऽपि वार्तम् । उक्तमेतत् सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणमिति ।

अन्यत्र=उद्योतादौ विस्तरः । अर्थात् तत्र विस्तरेण विचारितम् यत्—लक्ष्यानुरोधादनया परिभाषयाऽर्थवत्परिभाषा (प० सं० १५) न बाध्यते । अतएव दाशृ शब्दे इत्यस्मिन् धातौ दाशब्दस्य घुसंज्ञायां दाग्रहणेन न ग्रहणम् । साहचर्य-परिभाषाया (प०सं०) अपि न बाधः । तेन 'ह्वावामश्च' ३.२.२ इत्यत्र साहचर्यान्माङ्मेङोरेव ग्रहणं, नतु मा माने इत्यस्येति ॥ शिवम् ११५

**प्रत्येकं वाक्यपरिसमाप्तिः ११६**

वृद्धिरादैच् १.१.१ अदेङ् गुणः १.१.२ इत्यादौ आदेचमुद्दिश्य विधीयमाना वृद्धिसंज्ञा समुदायस्यादेचः स्यात्, अदेङमुद्दिश्य विहिता गुणसंज्ञा च अदेङ् इति समुदायस्य स्यात् । तथा च अक्षैषीत् नेतेत्यादिलक्ष्यासिद्धिरिति चेन्न **प्रत्येकं वाक्यपरिसमाप्ति**रिति परिभाषास्वीकारात् । **देवदत्तादय** इति । यथा देवदत्त-यज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र प्रत्येकं भुजिः परिसमाप्यते तथा वृद्धिरादैजित्यादावपि आति ऐचि प्रत्येकं वृद्धिसंज्ञा परिसमाप्ता भविष्यतीति ।

---

**प्रत्येकं वाक्यपरिसमाप्ति—११६**

"वृद्धिरादैच्" १।१।१ सूत्र से वृद्धि संज्ञा "आदैच्" इत्यादि समुदाय को न हो इसलिए परिभाषा मानते हैं "प्रत्येकं **वाक्यपरिसमाप्तिः**"। प्रत्येक में वाक्य की परिसमाप्ति होती है। देवदत्त, यज्ञदत्त और विष्णु मित्र में प्रत्येक में परिसमाप्त होकर 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम् यह वाक्य यह बताता है कि देवदत्त को भोजन कराया जाय, यज्ञदत्त को भोजन कराया जाय और विष्णुमित्र को भी भोजन कराया जाय, इसी तरह वृद्धिरादैच्" इस वाक्य की परिसमाप्ति भी प्रत्येक के साथ होगी और अर्थ होगा कि आत् को वृद्धि संज्ञा हो और एच् को भी वृद्धि संज्ञा हो।

॥ इति शिवम् ११६ ॥

——:०:——

नन्वेवं संयोगसंज्ञासमाससंज्ञाभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह—

**क्वचित्समुदायेपि ॥११७**

गर्गाः शतं दण्डचन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् । लक्ष्यानुरोधेन च व्यवस्था ॥११७॥

---

**क्वचित्समुदायेऽपि ११७**

ननु प्रत्येकं वाक्यपरिसमाप्तिरिति स्वीकारे 'हलोऽनन्तरा संयोगः' १.१.७ इति संयोगसंज्ञा, 'प्राक्कडारात् समासः' २.१.३ इति समाससंज्ञा, उभे अभ्यस्तम्' ७.१.५ इत्यभ्यस्तसंज्ञा च प्रत्येकं स्युरिति चेन्न **क्वचित्समुदायेऽपीति** परिभाषा-स्वीकारात् । गर्गाः शतं दण्ड्यन्ताम् अर्थिनश्च राजानो हिरण्येन भवन्ति" इत्यादौ यथा समुदायो दण्ड्यते तथा संयोगादिसंज्ञाऽपि समुदायस्य क्रियते । इयमुभय— विधव्यवस्था लक्ष्यानुरोधेन संभवति । अतो नातिप्रसंगः ।

परिभाषाद्वयं वृद्धिरादैच् १.१.१ इति सूत्रे भाष्ये स्पष्टम् । "प्रत्येकं गुणवृद्धिसंज्ञे भवत इति वक्तव्यम् । किं प्रयोजनम् । समुदाये मा भूता-मिति । '।अन्यत्र सहवचनात् समुदाये संज्ञाप्रसङ्गः" (वा० ११) अन्यत्र सह-वचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः । यत्रेच्छति सहभूतानां कार्यं, करोति तत्र सहग्रहणं तद्यथा 'सह सुपा' २.१.४, उभे अभ्यस्तं सह ६.१.५ इति । "प्रत्येकं वाक्यपरिसमाप्तेः" (वा० १२) प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते ।

---

**क्वचित्समुदायेऽपि—११७**

यदि प्रत्येक में वाक्य की परिसमाप्ति मानें तो संयोगसंज्ञा, प्रत्येक व्यञ्जन को होने लगेगी, समाससंज्ञा भी प्रत्येक पद को होगी और अभ्यस्तसंज्ञा भी प्रत्येक को ही जायगी ऐसी स्थिति में 'निर्यातः' में संयोगादि धातु मानकर 'संयोगादेरातो-धातो यण्वतः" ८।२।४३ से निष्ठा को नत्वादि दोष हो जायगा । इसलिए परिभाषा मानते हैं कि "क्वचित्समुदायेऽपि" कहीं समुदाय में भी वाक्यार्थ (क्रिया) की परिसमाप्ति होती है । जैसे गर्गाः शतं दण्ड्यन्ताम् 'गर्गों से सौ रुपये दण्ड वसूल करो' ऐसा कहने पर द्रव्य के इच्छुक होते हुए भी राजा समुदाय से ही सौ रुपया दण्ड वसूल करता हैं, प्रत्येक गर्ग से सौ-सौ रुपये नहीं । अथवा राजा ने सौ रुपया दण्ड किया है, वह सौ रुपया चाहता है, वह उसे गर्ग समुदाय से मिल जाता है, वह कृतकृत्य है, वह किससे कितना लेना चाहिए, इस हिसाब-किताब के झमेले में नहीं पड़ता ? इसी तरह संयोगादि संज्ञा, समुदाय को होगी । लक्ष्य के अनुरोध से द्विविध व्यवस्था हो जायगी । कहाँ वाक्यार्थ की समाप्ति प्रत्येक में हो और कहाँ समुदाय में, इसकी व्याख्या लक्ष्य देखकर करने से कोई दोष नहीं आता है ।

ननु 'यू स्त्र्याख्यौ' इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यादत आह—

**अभेदका गुणाः ।।११८।।**

**असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः ।**

---

तद्यथा । देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति । न चोच्यते प्रत्येकमिति । प्रत्येकं च भुजिः परिसमाप्यते । ननु चायमप्यस्ति दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति । तद्यथा गर्गाः शतं दण्ड्यन्तामिति । अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यदि तत्र सहग्रहणं क्रियते इहापि प्रत्येकमिति वक्तव्यम् अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवतीहापि नार्थः प्रत्येकमिति वचनेन ।।

इति शिवम् ११७

**अभेदका गुणाः ११८**

ननु यू स्त्र्याख्यौ नदी १.४.३ इति सूत्रे व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्योदात्तानुदात्तस्वरितान्यतमोच्चारणे तदितरस्वरयुक्तस्य नदीसंज्ञा न स्यादतः परिभाषामवतारयति—**अभेदका गुणा** इति । असति यत्ने (उदात्तानुदात्तस्वरितान्यतमशब्दोच्चारणरूपादियत्नाभावे) स्वरूपेण (उदात्तादिगुणसम्पृक्तस्वरेण) उच्चारितो गुणो भेदको न, न विवक्षितः (इतरगुणविशिष्टस्य व्यावर्तकत्वेन नाङ्गीकृतः) इत्यर्थः ।।

---

**अभेदका गुणाः ११८**

व्यक्तिपक्ष में प्रत्येक वर्ण-व्यक्ति की स्वतंत्र सत्ता मानी गयी है । इस लिए 'इको यणचि' ६।१।७७ इत्यादि सूत्र में ह्रस्व इकार के ग्रहण में दीर्घ ईकारादि के संग्रह के लिए "अणुदित् सवर्णस्य" १।१।६९ सूत्र से सवर्णग्राहकता होती है; उकारादि से अट्ठारह प्रकार के उकारादि के ग्रहण के लिए प्रत्याहारवाच्यवाच्य में निरूढा लक्षणा मानते हैं, परन्तु प्रश्न यह है कि "यूस्त्र्याख्यौ नदी" १।४।३ में दीर्घ निर्देश होने के कारण उसे 'अणुदित् सवर्णस्य' सूत्र में निर्दिष्ट अण् पद में समाविष्ट नहीं किया जा सकता; क्योंकि 'अणुदित्सवर्णस्य' से अपने आप में सवर्णग्राहकता नहीं की जा सकती। इस तरह 'यू स्त्र्याख्यौ नदी' में 'यू' में दीर्घ निर्देश के कारण अणुदित् सूत्र पठित अण् पद से उसका ग्रहण नहीं होने से वहाँ सवर्ण ग्राहकता की प्राप्ति नहीं होगी। इस तरह यदि "यू" में उदात्तोच्चारण मानें तो अनुदात्त और स्वरित ईकारादि की, यदि अनुदात्तोच्चारण मानें तो तद्भिन्न स्वर वालों की, और यदि

अत्र चा 'स्थिदधि' इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्धे उदात्तग्रहणं ज्ञापकम् ।

स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्यादिशब्दोच्चारणे विवक्षैव ।

---

अस्यां च "अस्थिदधिसक्थि—" ७.१.७५ इति सूत्रेऽनङ उदात्तस्यैवोच्चारणेनैव सिद्धे उदात्तग्रहणं ज्ञापकम् । अन्यथानङमुदात्तं कृत्वा तस्य विधानेनैव सिद्ध उदात्तेति शब्दोच्चारणरूपयत्नकरणं व्यर्थं स्यात् । ज्ञापितायान्तु स्वरूपेणोच्चारितस्य तस्येतरव्यावर्तकत्वाभावेन विना यत्नं व्यावर्तकत्वं न सिद्ध्येत्, अतः उदात्तग्रहणं स्वांशे चरितार्थम् । परिभाषार्थे "स्वरूपेणोच्चारित"—इत्युक्तत्वात् यत्र यत्र अनुदात्तादेरञ् ४.२.४४ इत्यादौ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ६.१.१६१ इत्यादौ उदात्तादनुदात्तस्य स्वरितः ८.४.६६ इत्यादौ अनुदात्तादिशब्दविशेष उच्चारितस्तत्र विवक्षा भवत्येवेति ज्ञायते । न चैवम् "उञः ऊँ १.१.१८ इत्यत्र स्वरूपेणैवोच्चारितत्वाद् विवक्षा न स्यादिति वाच्यम् 'उञः ऊँ' इत्यत्र निरनुनासिके एवोच्चारयितव्ये यत्नाधिक्येन सानुनासिकोच्चारणसामर्थ्याद् विवक्षाबोधनात् "पथिमथ्यृभुक्षामात् ७.१.८५" इत्यत्र नकाररूपस्यान्यनुरूपतया सानुनासिक एवोच्चारयितव्ये निरनुनासिकस्यात उच्चारणान्निरनुनासिकाकारविधानेच्छा प्रकटीभवत्याचार्यस्य । अतो न 'पन्था' इत्यादौ सानुनासिक आकारः । एतत्सर्वमभिप्रेत्यैव परिभाषार्थे "असति यत्ने" इति निवेशः ॥

---

स्वरित मानें तो तद्भिन्न स्वर वालों की नदी संज्ञा नहीं होगी । इसलिए परिभाषा मानते हैं "**अभेदका गुणाः**" विना विशेषयत्न के केवल स्वरूप से उच्चारित गुण को भेदक, याने विवक्षित नहीं माना गया है । इस तरह "यू" में किसी स्वर विशेष का निर्देश उदात्तादि स्वरों के उल्लेख के द्वारा नहीं किया गया है। इसलिए उसमें किसी भी स्वर का निर्देश हो, सभी स्वर वाले ई और ऊ का ग्रहण होगा और नदी संज्ञा होगी । "अस्थिदधि" ७।१।७५ सूत्र में उदात्तग्रहण इस परिभाषा का ज्ञापक है । यदि यह परिभाषा न होती तो "अनङ्" में उदात्तस्वर लगाकर बोलने से ही सोदात्त अनङ् का विधान होता ही था, सूत्र में 'उदात्त' ग्रहण करने की क्या आवश्यकता रह जाती ।

स्वरूपेण उच्चारित गुण ही अविवक्षित माने गये हैं इसलिए 'अनुदात्तादेरञ्' ४।२।४४ वर्णादनुदात्तात्" ४।१।३९ 'उदात्तादनुदात्तस्य स्वरितः' ८।४।६६ इत्यादि सूत्रों में यत्न पूर्वक (अनुदात्तादि शब्द से) उच्चारित होने के कारण अनुदात्तादि गुण की विवक्षा की गयी । यत्न के दो रूप सूत्रों में दिखाई पड़ते हैं—१—उदात्तादि शब्दों का उच्चारण २—अनुनासिकादि का उच्चारण । इसलिए 'उञः

'उञः ऊँ' इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या। 'पथिमथ्यृभुक्षामि'त्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा। एतदर्थमेवासति यत्न इत्युक्तम्। न चैवमस्थ्यादीनां नब्विषयस्य इत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्। परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात्।

---

न च "इसन्तवर्जितस्य नब्विषयस्य (नित्यनपुंसकस्य) आदिरुदात्त इत्यर्थकेन "नब्विषयस्यानिसन्तस्य (फिट्सूत्र २।३) इत्यनेनास्थ्यादीनामाद्युदात्ते कृते "अनुदात्तं पदमेकवर्जम् ६.१.१५८ इति शिष्टस्यानुदात्तत्वे ङित्वादन्त्यस्थाने जायमानस्यानङः स्थान्यनुरूपेऽनुदात्ते एवोच्चारयितव्ये उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम् "परमास्थिशब्दादौ" 'समासस्य' ६.१.२२३

---

ऊँ १।१।१७/१८ में भी गुण भेदक माना गया। "उञः ऊँ" यहाँ अनुनासिक रहित का ही उच्चारण करना था, अधिक यत्न करके "ऊँ" में अनुनासिक के उच्चारण करने के कारण गुण की विवक्षा होती है। 'पथिमथ्यृभुक्षामात्' ७।१।८५ यहाँ पथिन्, मथिन् और ऋभुक्षिन् में आत् आदेश का स्थानी अनुनासिक है, इसलिए "अनुनासिक आत्" का ही उच्चारण करना चाहिए था। विशेष यत्न पूर्वक "निरनुनासिक आत्" का जो उच्चारण किया गया, इसलिए 'निरनासिकत्व' की विवक्षा हुई और नकार के स्थान में भी निरनुनासिक 'आ' ही आदेश हुआ। इन्हीं सब फलों को देखकर परिभाषा की व्याख्या में "असति यत्ने" "बिना विशेष यत्न" कहा गया है। यद्यपि 'अस्थि' आदि शब्दों में 'नब्विषयस्यानिसन्तस्य' (फिट् सू० २६) से आद्युदात्त हो जाता है, आदि के उदात्त होने पर अन्त्य "अनुदात्तं पदमेकवर्जम्" ६।१।१५८ से अनुदात्त हो जायगा, इस तरह अनङ् का स्थानी 'इ' अनुदात्त रहेगा। इसे दृष्टि में रखकर 'अनङ्' को उसके स्थानी के अनुरूप अनुदात्त गुण विशिष्ट ही उच्चारण करना उचित था; फिर जो उदात्त का उच्चारण किया गया, वह विवक्षार्थ ही है। इस तरह उदात्त ग्रहण को ज्ञापक नहीं मानना चाहिए, यह प्रश्न उठता है; तथापि ऐसी बात तब कही जा सकती थी, यदि "अनङ्" का स्थानी "अस्थि" आदि शब्द का इकार सर्वत्र अनुदात्त ही मिलता, परन्तु बात कुछ दूसरी भी है "परमास्थि" शब्द में परमशब्द को अस्थि शब्द के साथ कर्मधारय-तत्पुरुष करने पर "समासस्य" ६।१।२२३ से अन्तोदात्त होने पर 'अनङ्' का स्थानी, उदात्त 'इ' कार भी मिल सकता है, इसलिए उदात्तोच्चारण को विवक्षार्थक नहीं माना जा सकता और उदात्तग्रहण की ज्ञापकता का खण्डन नहीं

चतसर्याद्युदात्तनिपातनं करिष्यते, वधादेश आद्युदात्तनिपातनं करिष्यते, पदादयोऽन्तोदात्ता निपात्यन्ते, सहस्य स उदात्तो निपात्यत इत्यादिभाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन । त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः ॥

---

इत्यन्तोदात्तत्वेन उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावेन ज्ञापकत्वसंभवात् ॥

त्रिचतुरोः स्त्रियां तिसृचतसृ ७.२.९९ इति सूत्रे "चतसर्याद्युदात्तनिपातनं करिष्यते" (म० भा० वा० २) इति, 'स्थानिवदादेशोऽनल्विधौ' १.१.५६ इति सूत्रे वधादेश आद्युदात्तनिपातनं करिष्यते इति· पादस्य पादाज्यातिगोपहतेषु ६.३.५२ इति सूत्रे पदादयोऽन्तोदात्ता निपात्यन्ते' (म० भा० वा०१) इति सहस्य सः संज्ञायाम् ६.३.७८ इति सूत्रे सहस्य स आद्युदात्तो निपात्यत इत्यादिभाष्यासंगतिस्तु परिभाषायामेतस्यां स्वीकृतायां नोद्भाव्या, स्वरूपेणोच्चारितानां तेषामभेदकत्वात्

---

किया जा सकता । ज्ञापन को सुसंगत बिठाने के लिए यह मानना आवश्यक है कि पाणिनि ने अपनी अष्टाध्यायी यथानियम तीनों स्वरों में पढ़ी है । अन्यथा यदि एक श्रुति से पढ़ी होती तो कहीं उदात्तादि का उच्चारण उनका यत्नाधिक्य में गिना जाता, और यत्नाधिक्य पूर्वक किया गया उदात्तादि का उच्चारण उसकी विवक्षा के लिए ही माना जाता, इसतरह परिभाषा ज्ञापित होने पर भी उदात्त ग्रहण चरितार्थ नहीं होता किसी न्याय के ज्ञापित होने के बाद भी यदि ज्ञापक स्वांश में चरितार्थ नहीं होता है तो उसकी ज्ञापकता पर आँच आती है ।

इस तरह 'चतसर्याद्युदात्तनिपातनं करिष्यते' वधादेश में आद्युदात् निपातन करेंगे 'पदादि में अन्तोदात्तत्व का निपातन करेंगे "पदादयोऽन्तोदात्ताः निपात्यन्ते' सहस्य स उदात्तो निपात्यते 'सह के स्थान में आदिष्ट स को उदात्त निपातन करेंगे इत्यादि भाष्य असंगत दिखते हैं क्योंकि तीनों स्वरों में पढ़ना जब स्वाभाविक हैं, तब उक्त निपातनों को अधिक प्रयत्न नहीं कहा जा सकता, और प्रयत्नाधिक्य न मानने पर उन्हें विवक्षित नहीं माना जा सकता, ऐसा प्रश्न उठता है परन्तु "चतसर्य्याद्युदात्तनिपातनं करिष्यते······सहस्य स आद्युदात्तो निपात्यते" इत्यादि भाष्य के आधार पर यह कहा जा सकता है कि एक श्रुति में अष्टाध्यायी पाठ स्वीकार करने पर कहीं सयत्न उदात्तादि का उच्चारण करना विवक्षा के लिए हो सकता है । "तीनों स्वरों में अष्टाध्यायी पढ़ी गयी है" इस पक्ष में (मत में) उदात्तग्रहण को ज्ञापक बताने वाले भाष्य-ग्रन्थ की संगति बैठती ही है । यह कैयटादि का मत है।

**परे तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं, तद्रूपाद्यत्नात्तत्र तत्रोदात्तादिविवक्षा। तिसृचतस्त्रित्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्तउच्चारणीय आद्युदात्तो-**

---

(इतराव्यावर्तकत्वात् इति तु न वाच्यम् एकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थम्, यत्नकृतत्वात्, इति तदाशयात्।

नन्वेवं ज्ञापकपरभाष्यासंगतिस्तत्राप्युक्तरीत्या तदुच्चारणस्य विवक्षार्थत्वसंभवादित्यत आह—**त्रैस्वर्येणेति।** त्रैस्वर्येण पाठ इति पक्षे स्वरूपेण पठितस्य तस्य वैयर्थ्येन ज्ञापकत्वसंभव इति भाष्यसंगतिरिति भावः। एकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थम्, त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति रहस्यम्' वृद्धिरादैच् १.१.१ इति सूत्रस्य भाष्यस्य प्रदीपे कैयटेन स्पष्टीकृतम्। तथाहि—प्रथमं भाष्यं ततश्च प्रदीप उद्ध्रियेते।

उदात्तानुदात्तस्वरितानां सवर्णानां ग्रहणार्थमिति तपरकरणं क्रियते। अन्यथा य उदात्ते कर्तव्येऽनुदात्तं करोति, खण्डिकोपाध्यायस्तस्मै चपेटां ददाति—अन्यत्त्वं करोषीत्युदाहरणेन स्वरस्य भेदकत्वप्रतीतेस्तेषां ग्रहणं न स्यादित्युक्त्वा "भोः अभेदका अपि गुणा दृश्यन्ते—तद्यथा देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति। बालो युवा वृद्धः, वत्सो, दम्यो बलीवर्द इति प्रोक्ते पुनराह—"उभयमिदं गुणेषूक्तम्—भेदका अभेदका इति। किम्पुनरत्र न्याय्यम्। 'अभेदका गुणा' इत्येव न्याय्यम्। कुत एतत्। यदयमस्थिदधिसक्थ्यक्ष्णामनङुदात्तः इत्युदात्तग्रहणं करोति। यदि भेदका गुणा स्युरुदात्तमेवोच्चारयेत्। यदि तर्ह्यभेदका गुणा अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्स्वरितादेः स्वरितान्ताच्च प्राप्नोति। नैष दोषः। आश्रीयमाणो गुणो भेदको भवति। तद्यथा—शुक्लमालभेत। कृष्णमालभेत। तत्र यः शुक्ल आलब्धव्ये कृष्णमालभते न हि तेन यथोक्तं कृतं भवति॥

अत्र 'असति यत्ने' स्वरूपेणोच्चारितस्य गुणस्याभेदकत्वमुक्तम्॥

अत्र कैयटः— **उदात्तमेवेति।** तस्माद्गुणरहितस्योच्चारणाभावान्नान्तरीयकत्वादुच्चार्यमाणोऽपि गुणः प्रयत्नमन्तरेण न विवक्षित इत्यर्थः। यद्येवं कथमन्यत्रोक्तमुदात्तनिपातनं करिष्यते इति यावता तत्राप्यविवक्षा प्राप्नोति। नैष दोषः। तत्रापि स्थानेऽन्तरतमवचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्ये उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं विज्ञायते। एवमनुनासिकस्य प्रयत्नाधिक्येनोच्चारणं तद्विवक्षार्थमेव। 'उञः ऊँ' इति यथा। अन्ये त्वाहुः—एकश्रुत्या सूत्राणि पठ्यन्त इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति॥

अत्र 'त्रैस्वर्येण पाठे' इति पक्षे तु ज्ञापकमिति कैयटाशयो ध्वन्यत एव।

स्वमतमाह परेत्वित्यादिना=निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृश-

च्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम् । संपूर्णा-ष्टाध्याय्याचार्य्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्पदस्यैकश्रुत्यापि पाठो यथा 'दाण्डिनायनादि' सूत्र ऐक्ष्वाकेति । यद्यप्यध्येतार एकश्रुत्यङ्गानि पठन्ति

---

प्रयोगकरणम् यथा जीवद्भर्तृकायां पतिमतीतिप्राप्ते पतिवत्नीति निपात्यते 'अन्तर्वत् पतिवतो र्नुक्' ४.१.३२ इत्यनेन । इत्थं निपातनमपि यत्न एव । एवञ्चान्यादृशस्वर-प्रयोगे प्राप्तेऽन्यादृशस्वरप्रयोगकरणमेव तत्र तत्र तत्तत्स्वरनिपातनं करिष्यत इत्यादि वचनस्य तात्पर्यम् तथा च तत्र तत्र तत्तद्रूपाद्यत्नादुदात्तादिविवक्षा निर्बाधैव, परिभाष-यानया असति यत्ने स्वरूपेणोच्चारितगुणस्यैवाभेदकत्वप्रतिपादनात् ।

तिसृचतस्रित्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते उच्चारयितव्ये आद्युदात्तोच्चारण-रूपाद्यत्नाद् विवक्षा बोध्या । अन्यत्रापि स्थान्यनुरूपे स्वरे उच्चारणीये तद्भिन्न-स्वरोच्चारणाद् विवक्षा ज्ञेया ॥

---

नागेश ने यहाँ "परे तु" शब्द से अपने मत का उल्लेख किया है । उनका मत है कि सूत्र के अनुसार अन्य रूप में प्राप्त प्रयोग को (शिष्ट प्रयोग के आधार पर) कुछ और रूप देना निपातन कहलाता है । अर्थात् निपातन से वह कार्य सिद्ध किया जाता है जो अन्यथा सिद्ध नहीं हो सकता । इस तरह निपातन भी विशेष-यत्न की कोटि में गिना जाता है। इस तरह 'आद्युदात्त निपातनं करिष्यते" रूप विशेष यत्न के द्वारा निर्दिष्ट स्थलों में उदात्तादि की विवक्षा मानी जा सकती है । 'त्रिचतुरोः' ७।२.९९ सूत्र में "तिसृचतसृ" में द्वन्द्व समास के कारण "समास-स्य" सूत्र के अनुसार अन्तोदात्त उच्चारण करने के स्थान में 'आद्युदात्त' का उच्चारण अन्यत्र यह सिद्ध करेगा कि स्थानी के अनुरूप स्वर का उच्चारण न करके विशेष रूप में तद्भिन्न स्वरों का उच्चारण विवक्षार्थ है । सम्पूर्ण अष्टाध्यायी को पाणिनि ने एक श्रुति में पढ़ा है, इसमें कोई प्रमाण नही है। कहीं (जहाँ प्रमाण है वहाँ) पद एक श्रुति से भी पढ़े गये हैं जैसे "दाण्डिनायन" ६।१।१७४ सूत्र में ऐक्ष्वाक में । जनपदवाची 'इक्ष्वाकु' शब्द से 'जनपद शब्दात्' ४।१।१६८ अञ् प्रत्यय मान कर 'अञन्त' होने से 'ञ्नित्यादिर्नित्यम्' ६।१।१९७ से 'ऐक्ष्वाकु+अ आद्युदात्त बनता है । 'कोपधाच्च' ४।३।१३७ से अण् प्रत्यय करने पर अणन्त 'एक्ष्वाकु'+अ अन्तोदात्त रहता है । इस तरह स्वरभेद होने से एक उक्ति से (एक उच्चारण से) दोनों के उकार के लोप के लिए निपातन करना संभव नहीं था । इसलिए दोनों के संग्रह के लिए भाष्यकार ने एकश्रुति का आश्रयण करके निपातन किया है। यहाँ एक श्रुति से पढ़ने के अतिरिक्त कोई और चारा नहीं था।

ब्राह्मणवत्तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः।

विधेयाण्विषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम्। अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः। अत एव 'तद्वानासामि'ति सूत्र-निर्देशः। अन्यथा 'प्रत्यये भाषायामि'ति नित्यमनुनासिकः स्यात्। जातिपक्षे तु

---

"सम्पूर्णाष्टाध्याय्याचार्येणैकश्रुत्या पठिता" इति कैयटेन "अन्येत्वाहुरित्या-दिना यदुक्तम् (अयं कैयटः ६६६—तमे पृष्ठे उद्धृतः) तत्र न किमपि प्रमाणमस्ति। क्वचित् पदस्यैकश्रुत्यापि पाठः यथा दाण्डिनायनादि (६.१.१७४) सूत्रे ऐक्ष्वाकेति। "जनपदशब्दात् क्षत्रियात्"—४.१.१६८ इत्यञन्तस्याद्युदात्तस्य, 'कोपधाच्च ४.३. १३७ इत्यणन्तस्यान्तोदात्तस्य चैक्ष्वाकशब्दस्य स्वरभेदादेकोक्त्या तयोरुकारलोपार्थं निपातनासंभवादुभयसंग्रहार्थमेकश्रुत्या निपातनमाश्रितं भाष्यकारैरुपायान्तरंविनेति भावः। (तथापि सम्पूर्णाष्टाध्यायी एकश्रुत्यैव पठितेत्यत्र विनिगमनाभाव इति तदाशयः)। यथा ब्राह्मणमध्येतार एकश्रुत्यैव पठन्ति तथैवाङ्गान्यपि तथापि व्या-करणेऽस्मिन् सुप्रत्ययादौ अनुनासिकत्वस्य यथा व्याख्यानतो ज्ञानं भवति यथा वा एध वृद्धावित्यादिषु धातुषु अकारस्यानुदात्तत्वादिज्ञानं व्याख्यानतो जायते तथा उदात्तादिनिपातनज्ञानमपि भवतीति प्राहुः परे॥

---

यद्यपि अध्येता एक श्रुति से ही अङ्गों को पढ़ते हैं; जैसे कि ब्राह्मण ग्रन्थों के पाठ के समय एकस्वर ही प्रयुक्त होता है; तथापि व्याख्यान विशेष के आधार पर जैसे "सु और जस्" के सु में अनुनासिक श्रुति न होने पर भी प्रतिज्ञा द्वारा अनुनासिक मान लेते हैं; वैसे ही उदात्तादि निपातन का ज्ञान व्याख्यान विशेष के आधार पर हो जाता है। (यह नागेश का अपना मत है)

जहाँ अण् विधीयमान है, वहाँ "अणुदित् सवर्णस्य चाप्रत्ययः" १।१।६९ सूत्र में प्रोक्त "अप्रत्यय" इस निषेध के कारण "गुणाः अभेदकाः" इस परिभाषा के रहते हुए भी 'सवर्ण ग्रहण' नहीं होगा। अर्थात्" त्यदादीनामः" ७।२।१०२ से "अ" विधान करते समय 'इदम्' के मकार के स्थान में भी अनुनासिक अकार नहीं होगा; क्योंकि सवर्णग्राहकता विधीयमान में नहीं होती है। इसीलिए "घटवत् भूतलम्" में मतुप् के म के स्थान में 'मादुपधायाश्च' सूत्र से 'म' को अनुनासिक वकार नहीं हुआ। यही कारण है कि पाणिनि का "तद्वान्" यह निर्देश "तद्वाना-सामुपधानो" ४।४।१२५ इस सूत्र में संगत हुआ।
अन्यथा यदि मतुप् के मकार के स्थान में अनुनासिक वकार हो जाता; तो उस अनुनासिक वकार प्रत्यय के परे रहते 'प्रत्यये भाषायां नित्यम्" से नित्य अनुनासिक हो जाता। जातिपक्ष में इस परिभाषा का कुछ भी उपयोग नहीं है; क्योंकि उस

**नास्योपयोग इति बोध्यम्। यू इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ॥११८॥**

**ननु सर्वनामानीत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह—**

---

विधेयाण्विषये नास्याः प्रवृत्तिः, 'अणुदित् सवर्णस्य चाप्रत्ययः १.१.६९ इति निषेधात्। एवञ्च गुणाभेदकत्वप्राप्तं सवर्णग्रहणमपि विधेये तथैव न भवति यथा जातिपक्षप्राप्तमिति सर्वत्राप्रत्यय इत्यस्य प्रवृत्तेः। अतएव घटोऽस्यास्तीति घटवत् कुलमित्यादौ "मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८.२.९ इति मतोर्मस्य नानुनासिकोवकारः। अतएव 'तद्वानासाम्' ४.४.१२५ इति सूत्रस्थः 'तद्वान्' इति निर्देशः संगच्छते। अन्यथा 'प्रत्यये भाषायां नित्यम्' इति नित्यमनुनासिकः स्यात्। ननु जाति पक्षे यू स्त्राख्यौ नदी १.४.३ इत्यत्र ह्रस्वस्यापि ग्रहणं स्यात्, दीर्घकारे या जातिरित्वजातिः तस्यास्तत्रापि सत्त्वादिति चेन्न तत्पक्षे फलाभावेनास्या उपयोगाभावात् तत्र दीर्घनिर्देशसामर्थ्याद्दीर्घमात्रवृत्ते जतिरेव विवक्षितत्वेनादोषादिति। अन्यत्र="अइउण् (प्रत्याहार सूत्र I) इति सूत्रस्थ भाष्यप्रदीपोद्योतादौ=विस्तरः।

॥ इतिशिवम्। ११८

---

पक्ष में जाति के सकल घटकों का बोध स्वतः हो जायगा; वहाँ गुण भेदक बनता ही नहीं है। 'गौः' कहने से सारी काली, पीली, मोटी, पतली, छोटी, बड़ी गायें ली ही जाती हैं। गुण वहाँ भेदक कहाँ बनते हैं। "यू स्त्र्याख्यौ" १।४।३ में "यू" के ई और 'ऊ' से दीर्घ ई जाति और दीर्घ 'ऊ' जाति का ग्रहण हो जायगा। "यू" इत्यादि में दीर्घ ग्रहण होने के कारण—दीर्घ मात्र वृत्ति जाति के निर्देश के कारण—ह्रस्व का ग्रहण नहीं होगा। इसलिए कोई क्षति (दोष) नहीं होगी। इस पर अन्यत्र (अइउण् सूत्र के प्रदीपोद्योत में) विस्तार से विचार किया गया है।

॥ इति शिवम् ११८ ॥

——:०:——

**बाधकान्येव निपातनानि—११९**

"सर्वनाम" शब्द में 'पूर्वपदात संज्ञायामगः' ८।४।३ सूत्र से णत्व क्यों नहीं होता? यद्यपि "सर्वादीनि सर्वनामानि" १।१।२१ सूत्र में पाणिनि ने णत्वाभाव निपातन किया है; तथापि वह णत्वाभाव सूत्र तक या छन्दोवत् सूत्राणि भवन्ति

## बाधकान्येव निपातनानि ॥११९॥

**तत्तत्कार्ये नाप्राप्ते निपातनारम्भात् । पुराणप्रोक्तेषु इति निपातितपुराण-**

---

**बाधकान्येव निपातनानि ११९**

ननु "सर्वादीनि सर्वनामापि" १.१.२७ इत्यत्र पूर्वपदात् संज्ञायामगः ८.४.३. इति प्राप्तस्य णत्वस्य सर्वनामानीत्यत्र सर्वनामेति निपातनादभावेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादिति चेन्न '**बाधकान्येव निपातनानि**' इति परिभाषा-स्वीकारात् । तत्तत्कार्ये नाप्राप्ते निपातनारम्भात् निपातनस्यापवादतुल्यत्वमिति सर्वादीनि सर्वनामानि १.१.२७ इति सूत्रभाष्ये "निपातनमप्येवं जातीयकमेव नाप्राप्ते णत्वे निपातनमारभ्यते, तद्बाधकं भविष्यतीति ग्रन्थेन प्रतिपादनात् । न चैवं 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" ४.३.१०५ इत्यत्र निपातितेन पुराणशब्देन पुरातनशब्दस्य बाधात् पुरातनशब्दप्रयोगो न स्यादसाधुत्वादिति वाच्यम् पृषोदरा-दित्वात् प्राप्तोऽपि बाधो न भवतीति कैयटोक्तेः । तथा च "बाधकान्येव हि निपात-

---

इस नियम के अनुसार वेद तक ही सीमित रहना चाहिए । ऐसी स्थिति में लोक में णत्व सहित प्रयोग साधु माना जाना चाहिए ? इसलिए परिभाषा मानी गयी कि **"बाधकान्येव निपातनानि"** अर्थात् निपातन बाधक ही होते हैं । अर्थात् सर्वनाम शब्द में णत्वाभाव करके पाणिनि ने यह संकेत किया है कि सर्वनामशब्द में णत्व नहीं हो । इसलिए उस नियम के द्वारा "पूर्वपदात् संज्ञायामगः" यह सूत्र बाधित हो गया । अतः णत्व नहीं हुआ ।

यद्यपि 'सर्वादीनि सर्वनामानि' 'सर्वनाम्नः स्मै' ७।१।१४ इत्यादि सूत्रों में णत्वाभाव देखकर यह भी कल्पना की जा सकती थी कि तत्तत्सूत्रों में प्रयुक्त सर्वनाम शब्द में णत्व नहीं हो, तथापि अनेक सूत्रों में उस तरह की कल्पना बार बार करने में गौरव होता, इसलिए लाघव लाने के लिए "सर्वनाम शब्द" में णत्व नहीं होता है, यही कल्पना की गयी ।

निपातन को बाधक इसलिए माना गया कि निपातनों का आरम्भ तत्तत्कार्यों की आवश्यक प्राप्ति होने पर और उन उन कार्यों के होने पर सिद्ध न होने वाले शिष्टप्रयुक्त रूपों को बनाने के लिए किया गया है । इस लिए 'येन नाप्राप्ते यो विधिरारभ्यते, स तस्य बाधको भवति (परिभाषा सं० ५८) इस न्याय से निपातन की तत्तत्कार्य बाधकता सिद्ध होती है ।

"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" ४।३।१०५ सूत्र में यद्यपि 'पुराण' शब्द का निपातन किया गया है, इसलिए 'पुरा' शब्द से सायंचिरं—४।३।२३ से ट्युट्युल् प्रत्यय और तुडागम का बाध हो जाने से 'पुरातन' शब्द नहीं बनना चाहिए । तथापि 'पुरातन' में पूर्वोक्त प्रक्रिया का बाध 'पुराण' शब्द के निपातन के कारण

**शब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम्। पुराणेति पृषोदरादिः, पुरातनेति चेत्यन्ये।**

**इयं सर्वादिसूत्रे भाष्ये स्पष्टा। अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम् ॥११९॥**

---

नानि भवन्तीति सिद्धान्तिसमाधानभाष्यव्याख्यावसरे सततम्, संततम्, सहितम्, संहितम् इत्याद्युभयविधरूपसिद्ध्यर्थं भाष्योक्तं "कर्तव्योऽत्र यत्न" इति प्रतीकमुपादाय कैयटेनोक्तम्

> 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि।
> समो वा हिततयोर्मांसस्य पच्युङ्घञोः ॥

इत्ययं श्लोकोन्यार्थम् (अवश्यकर्तव्यम्, कर्तुकामः इत्याद्यर्थम्) अवश्यं पठितव्यः। तेनैव 'सन्ततम्' 'सततम्' इति च सिध्यति, न तु निपातनेत्यर्थः। सांतत्यम्' इति चानभिधानात् ष्यञन्तस्य प्रयोगाभावः। **पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तः पृषोदरादित्वान्न भवति** इति।

पुराणेति पृषोदरादिः, पुरातनेति चेत्यन्ये। एवं च तेनैवोभयोरपि साधुत्वम् **न** तु निपातनेनेति भाव इत्युद्योते नागेशः॥

इयं सर्वादि सूत्रे भाष्ये स्पष्टा। तथाहि—इह सर्वनामानीति पूर्वपदात् संज्ञायामगः (८.४.३) इति णत्वं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। "सर्वनामसंज्ञायां

---

इसलिए नहीं हुआ कि "पुरातन" शब्द पृषोदरादित्वात् बनाया गया। अर्थात् यह सायं चिरं—से न बनकर पृषोदरादित्वात् द्वितीयनिपातन से बना है।

किसी का मत है कि पृषोदरादित्वात् "पुराण" और 'पुरातन' दोनों शब्द बनते हैं। इस मत में "पुराण" शब्द निपातन नहीं है। इसलिए 'पुरातन' शब्द के बाध का प्रश्न ही नहीं उठता।

यह परिभाषा "सर्वादीनि" सूत्र के भाष्य में आयी है। वहाँ यथाप्राप्त णत्व को णत्वाभाव का निपातन बाध ही लेगा, हमेशा के लिए बाध लेगा। इस 'सर्वनाम' शब्द में णत्व नहीं होगा, यह कहा गया है। भाष्य दुर्गा व्याख्या में उद्धृत है। पुरुषोत्तमदेव और सीरदेव ने पुराण और 'पुरातन' दोनों शब्दों को देखकर कहा—"अबाधकान्यपि निपातनानि"। "सर्वादि" सूत्र के भाष्य में निपातन को बाधक ही बताया गया है। इसलिए उसके विपरीत उसे अबाधक मानना भाष्यविरुद्ध है। इसलिए नागेश ने इसे परिभाषा के रूप में स्वीकार नहीं किया। सीरदेव ने भी 'अन्येत्वाहुः' कहकर इसके परिभाषात्व का खण्डन दिखाया है।

निपातनाण्णत्वं न भविष्यति । किमेतन्निपातनं नाम । अथ कः प्रतिषेधो नाम ? अविशेषेण किञ्चिदुक्त्वा विशेषेण नेत्युच्यते । तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते —इदं न भवतीति । निपातनमप्येवं जातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते । तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते—इदं न भवतीति । ननु च निपातनाच्चाणत्वं स्याद्यथा प्राप्तं च णत्वम्·········बाधकान्येव हि निपातनानि भवन्ति ।।इति।।

(क) पुरुषोत्तमदेवेन, सीरदेवेन, नीलकण्ठदीक्षितेन हरिभास्करेण च परिभाषा व्याख्याता "अबाधकान्यपि निपातनानि इति (पुरुषो० लघु० परिभाषा वृत्तिः प० सं० ६६, सी०बृह० परि० वृत्ति० प० सं ७६, नील क० दी० परि० वृ० प. सं० ११०, हरि भा० अग्निहोत्रिकृतपरिभाषाभास्कर परि० सं० ७८)

तत्र पुरुषोत्तमदेवेन स्वीयलघुपरिवृत्तौ परिभाषामिमां ज्ञापकफलादिप्रदर्शनेन व्याख्यायापि एतस्याः स्वीकारे स्ववैमत्यमेव ध्वनितम्

तथाहि—अबाधकान्यपि निपातनानि (पुरु० दे० लघु परि० वृत्ति-प० सं० ६६) नेयं परिभाषा, नापि भाष्यवचनम् । बाधकान्येव निपातनानि इति भाष्ये व्यवस्थापनात् । जयादित्येन त्वियं लक्ष्यस्थित्यनुरोधाद्दर्शिता—अबाधकान्यपि निपातनानीति । तेन 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' ४।१।१०५ इति निपातनस्याबाधकत्वात् 'सायंचिरं प्राह्णेप्रगेऽव्ययेभ्यः"—४.३.२३ इत्रि पुराशब्दात् टचुटचुलोस्तुडागमो भवति। तेन 'दधतः पुरातनमुनेर्मुनिताम्' (किरात० ६।१६) इति भारवेः पुरातनीर्नदी (शिशु० १२।१६०) इति माघकाव्यस्य प्रयोग उपपन्नो भवति । ज्ञापकं चात्र वृत्तिकारदर्शनग्रहाविष्टा दर्शयन्ति त्रयाणामित्यस्य सिद्धये त्रेस्त्रयः (७।१।५३) इति सूत्रम् ।

---

"रघुनाथ" शब्द में णत्वाभाव देखकर यह कल्पना करें कि णत्व करने पर जहाँ संज्ञा बनती हो या संज्ञात्व की प्रतीति होती है, वहीं णत्व होता है—जैसे "शूर्पणखा" में । इस तरह पूर्वोक्त कल्पना से तो 'सर्वनाम' में णत्वाभाव ही सिद्ध होता है; क्योंकि वहाँ णत्व करने पर संज्ञा की प्रतीति नहीं होती है, प्रत्युत णत्वाभाव से ही संज्ञात्व का बोध होता है; ऐसी कल्पना दृष्टान्त और द्राष्टान्त में साधर्म्य के अभाव से नहीं की जा सकती । "सर्वनाम" आधुनिक संज्ञा है अर्थात् आचार्य कृत संज्ञा है। आचार्य को चाहिए कि वह ऐसी संज्ञा का प्रयोग करे, जो शास्त्रानुकूल हो, इस तरह णत्वघटित प्रयोग की संभावना होते हुए भी उसकी अवहेलना करके णत्व रहित प्रयोग करके आचार्य ने अपना तात्पर्य यही बताया है कि णत्वघटित सर्वनाम शब्द का प्रयोग असाधु है, रघुनाथादिसंज्ञा तो अनादि है। इसलिए वहाँ दोष नहीं आता है ।

॥ इति शिवम् ११६ ॥

यदि बाधकान्येव निपातनानि भवन्ति तदा त्रीणामिति प्राप्ते तद्बाधकरूपेण 'निजां त्रयाणां गुणः श्लौ (७.४.७५) इत्यत्र त्रयाणामिति निपातनेनैव सिद्धिः स्यात्। यदा त्वबाधकान्यपि निपातनानि भवन्ति तदा त्रीणामिति प्रसक्तस्याप्रयोगाय 'त्रेस्त्रयः (७।१।५३) इति सूत्रमर्थवद् भवति ।।प० ९९।। (परिभाषा संग्रहे पृ० १५३)

(ख) सीरदेवेन प्रायः ज्ञापकादिविषये पुरुषोत्तमदेवदर्शितविचार एव प्रकटीकृतः। केवलं परिभाषाशरीरे "भवन्ति" इति पदमितिरिच्यते । तत्र चान्यद् यदतिरिच्यते तदधो लिख्यते:—"अन्येत्वाहुः—नेयं परिभाषा, नापि भाष्यकारवचनम्। 'बाधकान्येव निपातनानि" इति "सर्वादीनि—" (१।१।२७) इत्यादि सूत्रे व्याख्यातम्। अतएव तत्रैव सूत्रे भागवृत्तिः "पुरातनमुनेर्मुनिताम्" इति पुरातनीर्नदीरिति च प्रमादपाठावेतौ गतानुगतिकतया कवयः प्रयुञ्जते, न तेषां लक्षणे चक्षुरिति। ७६ (परि० संग्रहे पृ० २३९)

(ग) नीलकण्ठदीक्षितस्तु प्राह—'अबाधकान्यपि निपातनानि' ११० 'तयोरेव कृत्य—' (३।४।७०) इति सूत्रे एवकारेण तक्रकौण्डिन्यन्यायस्य अनित्यत्वज्ञापनात् तन्मूलिकेयम्। एतच्च वृत्त्यादिषु स्पष्टम् (परि० संग्रहे पृ० ३१३)

(घ) हरिभास्कराग्निहोत्रिकृतपरिभाषा भास्करे तु परिभाषाज्ञापनफलादिविषये पूर्वोक्तमतमेव लिखितं यच्च तत्र किमपि नूतनं मतं निर्दिष्टं तदित्थमस्ति— "उक्तं च कातन्त्रविस्तरेऽपि—पुराणः शेषे वा पुराणः पुरातन इति। केचित्तु पुरा अतनमस्यास्तीति पुरातनः। पुरातनीत्यत्र तु अत्यतेऽनया इत्यतनी पुरा अत्यते इति पुरातनी अथवा पुरा अत्यतेऽनेन इति पुरातन इति व्याचक्षते। अन्ये तु "विभाषा पूर्वाह्णापराह्णाभ्याम् ४।३.२४ इत्यत्र विभाषेति योगं विभज्य योगविभागस्येष्टसिद्धयर्थतया पुराशब्दाद्युप्रत्ययस्य तुटो विकल्पेन विधानात् पुरातनीति साधयन्ति। पृषोदरादित्वात् (६।३१०९) पुरातनः इति कैयटोऽपि तस्य साधुत्वं मन्यते। एवञ्च पूर्वोक्तं पदं ('पुरातनमुनेः, 'पुरातनी र्नदीः' इति पदद्वयम्) प्रामादिकंमिति वदन् भागवृत्तिकारस्तदनुगामिनः सीरदेवादयश्चोपेक्ष्याः। ये त्वाहुः—अबाधकानीत्यादि, नेयं परिभाषा नापि भाष्यकारवचनमिति ते एवं प्रष्टव्याः 'किमिदं परिभाषात्वमिति परिभाषापदव्यवहार्यत्वं हि सर्वत्राप्यविशिष्टम्। तथाच भाष्यकारानुक्तत्वेऽपि न क्षतिरिति यत्किञ्चिदेतत् ।। (परिभाषा संग्रहे पृ० ३५६)

---

अत्र नागेशः—अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम्, बाधकान्येव हि निपातनानि भवन्ति" इति "सर्वादीनि—" १।१।२७ सूत्रस्थभाष्यवचने एवकारेण 'हि' शब्देन च निर्धारणवाचकेन पक्षान्तरस्यास्वीकारात् ।। इति शिवम् ११९

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वत्वाप्रवृत्तौ हलादिः शेषे 'सवर्णदीर्घे' ह्रस्वापत्तिरत आह—

पर्जन्यवल्लक्षणप्रवृत्तिः ॥१२०॥

एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते,

लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते ॥१२१॥

इति न्यायेन न पुनर्ह्रस्वः।

---

पर्जन्यवल्लक्षणप्रवृत्तिः १२०

लक्ष्ये लक्षणं सकृदेव प्रवर्तते १२१

ननु उख धातोर्लिटि तसि तस्यातुसादेशे द्वित्वेऽभ्यासत्वे हलादिशेषे उ उख् अतुस् इति स्थितेऽभ्यासोकारस्य स्वत एव ह्रस्वत्वात्फलाभावेन 'ह्रस्वः' ७,४।५९

---

पर्जन्यवल्लक्षणप्रवृत्तिः १२०

लक्ष्ये लक्षणम्—प्रवर्तते १२१

"ऊखतुः" में उख् धातु से लिट् के प्रथम पुरुष के द्विवचन में तस् के स्थान पर अतुस् करने पर द्वित्व अभ्याससंज्ञा होने से उ+उख् अतुस् इस स्थिति में अभ्यास स्वयं ह्रस्व है, ह्रस्व को ह्रस्व करने में कोई लाभ नहीं, अतः 'ह्रस्वः' ७।४।५९ से ह्रस्व नहीं किया गया, जब दीर्घ हुआ और ऊख् अतुस् बना; तब 'ह्रस्वः' से ह्रस्व होना चाहिए, इस दोष के निवारण के लिए परिभाषा मानते हैं "पर्जन्यवल्लक्षणप्रवृत्तिः" और लक्ष्ये लक्षणं सकृदेव प्रवर्तते मेघ की तरह सूत्र की प्रवृत्ति हुआ करती है। अर्थात् जैसे बादल जहाँ पहले से ही पानी है; ऐसे तालाबों में या जहाँ बाढ़ आयी है, उन प्रदेशों में भी बरसता है, पानी की आवश्यकता वाले प्रदेशों में भी बरसता है, वैसे सूत्र की जहाँ प्राप्ति है; वहाँ वह प्रवृत्त होता है, भले ही वहाँ उसकी प्रवृत्ति उस समय अनावश्यक ही क्यों न हो। इस तरह उ+उख् अतुस् ऐसी स्थिति में "ह्रस्वः" से ह्रस्व 'उकार' को ही ह्रस्व उकार हो जायगा, तब दीर्घ होने पर 'ह्रस्वः' की प्रवृत्ति नहीं होगी; क्योंकि एक लक्ष्य में एक लक्षण एक ही बार लगता है। 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' यहाँ तो "ह्रस्वः" सूत्र एक बार प्रवृत्त हो चुका है, अब वह दुबारा प्रवृत्त नहीं होगा। इस तरह ह्रस्व में भी ह्रस्वत्व का विधान एक बार कर दिया गया, इसलिए "लक्ष्ये लक्षणम्" इस न्याय से पुनः ह्रस्व नहीं हुआ। "इको झल्" १।२।९ सूत्र के भाष्य में यह कहा गया है। पर्जन्य (बादल) की तरह शास्त्र 'कृतकारि' होता है अर्थात् जो काम पहले से ही कृत (किया हुआ) है, उसे भी करता है :—जैसे बादल जिस स्थान पर पानी पहले से ही मौजूद है, वहाँ भी बरसता है; वैसे जहाँ ह्रस्वादि पले से मौजूद हैं वहाँ भी शास्त्र ह्रस्वादि करता है। 'इकोऽसवर्णे'—६।१।१२७ सूत्र के महाभाष्य में भी शास्त्र को पर्जन्य की तरह बताया गया है।

तदुक्तमि 'को झल्' इति सूत्रे भाष्ये। कृतकारि खल्वपि शास्त्रं पर्ज्जन्यव-द्विति। सिद्धेऽपि ह्रस्वादिकारीत्यर्थः।

न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम्। समो वा

---

इति ह्रस्वाप्राप्त्या सवर्णदीर्घे ऊख् अतुस् इति स्थिते ह्रस्वापत्तिरिति चेन्न पर्जन्य-वल्लक्षणप्रवृत्तिरिति परिभाषास्वीकारात्। यथा पर्जन्यस्य (मेघस्य) प्रवृत्तिः असंभवत्स्वकार्यकृतविशेषे पूर्वतोजलपरिपूर्णे जलाशयेऽपि भवति तथा लक्षणस्य प्रवृत्तिः पूर्वतस्तल्लक्षणक्रियमाणं ह्रस्वादिकं यत्र विद्यमानं तत्रापि (असंभवत्स्वकार्य-कृतविशेषेऽपि) भवति। दृश्यते मेघो जलेऽपि वर्षति स्थलेऽपि च। यत्र जलं पूर्वतो विद्यमानमस्ति तत्र तात्कालिकजलवर्षणोपयोगशून्येऽपि पर्जन्यो यथा वर्षति तथा तात्कालिकलाभाभावस्थलेऽपि लक्षणं प्रवर्तत इति परिभाषार्थः। एवञ्च सवर्णदीर्घात् पूर्वमाङ्गत्वाद् "वार्णादाङ्गं बलीयः" (प० सं० ५६) इति परिभाषया ह्रस्वस्यापि-परिभाषयानया ह्रस्वे ततो दीर्घे लक्ष्ये लक्षणं सकृदेव प्रवर्तते" (प० सं० १२१) इति न्यायेन पुनर्ह्रस्वाप्रवृत्या न दोषः।

पर्जन्यसदृशलक्षणप्रवृत्तिस्वभावोऽयम् 'इको झल् १।२।९ इति सूत्रे भाष्ये प्रोक्तम्—अकृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद्यथा—पर्जन्यो यावदूनं पूर्णञ्च सर्वमभिवर्षति ॥इति॥

एतादृश एव विचारः समानयैव भङ्ग्या "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२७ इति सूत्रस्य भाष्येऽपि निर्दिष्टः—तत्रापि प्रथमं ह्रस्वस्य ह्रस्वविधानाय शास्त्रं तथैव न प्रवर्तते यथा न भुक्तवान् पुन र्भुङ्क्ते इत्याद्युक्त्वा, शास्त्रमग्निवद-कृतकारि भवति (यथा अग्नि र्यददग्धं तद्दहति) इति निर्दिश्योक्तम् "कृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद्यथा पजन्यो यावदूनं पूर्णं च सर्वमभिवर्षति ॥

कृतकारीत्यस्य=सिद्धेऽपि ह्रस्वादिकारीत्यर्थः।

न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र मानाभाव इति वाच्यम्। एतद-भावे लक्षणस्य पुनः प्रवृत्तौ समो वा लोपमेके' (१।१।२७ सू० महा० भा० वा० I) इति भाष्योक्तवार्तिककृतमकारलोपेन एकस्य सकारस्य, अनचि च ८.४.४७ इति द्वित्वेन

---

"एक लक्ष्य में एक लक्षण की प्रवृत्ति एक बार ही हो" इस न्याय में प्रमाण के अभाव होने का सन्देह नहीं करना चाहिए, "समःसुटि" ८।३।५ यह सूत्र करना ही उक्त न्याय के होने में प्रमाण है। यदि उक्त न्याय न हो तो "समो वा लोप-मेके" इस से सम् के मकार का लोप करने पर संस्कर्ता में एक सकार का, उस सकार को 'अनचि च ८।४।४७ से द्वित्व कर देने पर दो सकार का और फिर सकार के द्वित्व से तीन सकार का रूप बन ही जाता, तीन सकार और दो सकार

**लोपमेक इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ 'समः सुटि' इति सूत्रस्यैव मानत्वात् । 'संप्रसारणाच्च' 'सिचि वृद्धिः' इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ।**

---

द्विसकारस्य पुनर्द्वित्वप्रवृत्त्या त्रिसकारस्य सिद्धौ त्रिसकारकरूपसिद्ध्यर्थमारब्धस्य समः सुटि ८.३.५ इति सूत्रस्यैव मानत्वात् । 'संप्रसारणाच्च' ६।१।१०८ 'सिचिवृद्धिः—' ७।२।१ इत्यादौ लक्ष्ये लक्षणस्य सकृत् प्रवृत्तेः स्पष्टमुक्तत्वाच्च ।

विलोक्यताम्—सम्प्रसारणाच्च ६।१।१०८ इति सूत्रस्थं सम्बद्धं भाष्यमधोनिर्दिष्टम्—कार्यकृतत्वाद्वा । सकृत्कृतं पूर्वत्वमिति कृत्वा पुनर्न भविष्यति तद्यथा वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनप्रवृत्तिः र्न भवति ॥

यद्यपि "सिचि वृद्धिः परस्मैपदेषु" ७२.१ इति भाष्ये "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति परिभाषोल्लेखो न दृश्यते तथापि "सिचि वृद्धावोकारस्य प्रतिषेधः (वा०I) सिचि वृद्धावोकारस्य प्रतिषेधो वक्तव्यः । उदवोढाम्, उदवोढम्, उदवोढेति । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । ओकाराद् वृद्धिर्विप्रतिषेधेन । ओत्त्वं क्रियतां वृद्धिरिति, वृद्धिर्भविष्यति विप्रतिषेधेन । (एवञ्च प्रथमं वृद्धौ ततः ओत्त्वे लक्ष्ये लक्षणन्यायेन पुनः वृद्धिर्न भविष्यति । अतः सिचि वृद्धावोकारस्य प्रतिषेधो वक्तव्य इति वचनं न कर्तव्यमिति भाष्यकारतात्पर्येण लक्ष्ये लक्षणं **सकृदेव प्रवर्तत** इति न्यायो ध्वन्यत एव उक्तं च प्रदीपे भाष्यं व्याचक्षाणेन कैयटेन—प्रवृत्तत्वाच्च लक्षणस्य पुनर्वृद्धेः प्रवृत्ति र्न भवति" इति । तथाच भाष्ये **स्पष्टमुक्तत्वादित्यस्य** सम्बन्धः 'सम्प्रसारणाच्च (६।१।१०८ इति सूत्रे एव योजनीयः "सिचिवृद्धिः" ७।२।१ इत्यत्र 'कैयटे' इत्यध्याहारेण वा ग्रन्थो योजयितुं शक्यते ॥

---

वाले रूप बनाने के लिए किये गये उक्त सूत्र की आवश्यकता शेष नहीं रह जाती हैं । तात्पर्य यह है कि "समः सुटि" यह सूत्र सम् के मकार को सुट् के परे रहते रुत्व करता है । रुत्व के पूर्व अनुनासिक या अनुस्वार करके रेफ को विसर्ग और विसर्ग को 'संपुंकानां सो वक्तव्यः' से सत्व करके संस्स्कर्ता में दो सकार का रूप बनता है । सकार को द्वित्व करने पर तीन सकार का रूप होता है । "समो वा लोपमेके" इससे मकार का लोप करें तो संस्कर्ता या संस्कर्ता में एक सकार की सत्ता रहती है । इस तरह अभीष्ट यह है कि अनुस्वार पक्ष में संस्कर्ता संस्स्कर्ता, संस्स्स्कर्ता में और अनुनासिक पक्ष में सँस्कर्ता, सँस्स्कर्ता, या सँस्स्स्कर्ता में तीन सकार वाले रूप बनें । यदि एक लक्ष्य में एक लक्षण कई बार प्रवृत्त हो तो लोप

अत्र विकारकृतो लक्ष्यभेदो नेति "सिचि वृद्धिरि"ति भाष्यात्प्रतीयत इत्यन्यत्र विस्तरः ॥१२०॥१२१॥

---

ननु लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न्यायस्य प्रामाणिकत्वेऽपि प्रकृते उदवोढामित्यादौ प्रथमं वघटकाकारस्य वृद्धिर्जाता इदानीं तु वोघटकौकारस्येति विकारकृतलक्ष्यभेदादप्रवृत्तौ दोषस्तदवस्थ एवेति चेत्तदाह—अत्र विकारकृतलक्ष्यभेदो नाश्रीयते इति 'सिचि वृद्धिः—" ७।२।१ इति सूत्रस्थभाष्यात् प्रतीयते। तत्र हि 'उदवोढाम्' इत्यादौ ओत्वात्परत्वाद् 'वदव्रज'—७।२।३ इति वृद्धौ "सहिवहोद-वर्णस्य" ६।३।११२" इति वर्णपदसामर्थ्येनौत्वेनेष्टं संसाधितम्। अन्यथा पुनर्वृद्ध्या-पत्त्या भाष्यासंगतिः स्पष्टैव। तत्र ओत्वे कृते वृद्धिर्न प्रवर्तते, सकृत्प्रवृत्तत्वात्। यदि हि विकारभेदाल्लक्ष्यभेदः स्यात् तदा पूर्वं वघटकारस्य वृद्धिर्जाता पश्चाच्च ओकारस्य सा प्राप्तेति विकारकृतलक्ष्यभेदात् परिभाषाया अप्रवृत्त्या पुनर्वृद्ध्यापत्ति दुर्वारैव।

**विकारकृत** इत्यत्र **विकारागमकृत** इति पाठोऽपि दृश्यते। तेन सर्वेषामित्यत्र

---

करके एक सकार, सुट् के सकार को द्वित्व करके दो सकार और पुनर्द्वित्व करके तीन सकार के रूप बन ही जाते थे तब "समः सुटि" सूत्र बनाना व्यर्थ ही हो जाता। परिभाषा मानने पर सूत्र सार्थक है क्योंकि एक बार सकार को द्वित्व करके दो सकार का रूप बनाया जा सकता है, उसे फिर द्वित्व नहीं किया जा सकता। अतः तीन सकार की रूपसिद्धि 'समः सुटि' के बिना नहीं हो सकती।

"सम्प्रसारणाच्च" ६।१।१०८ और "सिचि वृद्धिः" ७।२।१ सूत्र के भाष्य में 'लक्ष्ये लक्षणं' का स्पष्ट रूप से उल्लेख भी मिलता है। "सिचि वृद्धिः" सूत्र के भाष्य से यह प्रतीत होता है कि यहाँ विकार कृत अथवा विकार के कारण लक्ष्य भेद नहीं लिया गया है। इसलिए "उदवोढाम्" जो वह प्रापणे धातु के लुङ् प्रथम पुरुष के द्विवचन का रूप है (उत्पूर्वक वह् धातु से लुङ्, तस् उसके स्थान में ताम् आदेश, अडागम, उद् अ वह+ताम् ऐसी स्थिति में च्लि को सिच् अनुबन्धलोप, "सिचि वृद्धिः परस्मैपदेषु" से वृद्धि, उदवाह् स् ताम् इस स्थिति में 'झलो झलि ८।२।२६ से सकार का लोप, 'होढः' ८।२।३१ से हकार को ढकार, "झषस्तथोर्धोऽधः" ८।४।२० से ताम् के तकार को धकार, ष्टुत्व, "ढो ढे लोपः" ८।३।१३ से ढलोप 'सहिवहोरोदवर्णस्य" ६।३।११२ से ओत्व, उदवोढाम् बना) में पुनः 'सिचि वृद्धिः' से 'औ' वृद्धि नहीं हुई; क्योंकि "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इस न्याय से पुनः वृद्धि का निषेध हो गया। यद्यपि पहले जिस अकार को वृद्धि हुई थी; उसकी जगह अब ओ है; परन्तु वह 'ओ' उसी का विकार है। इसलिए उसे भिन्न लक्ष्य नहीं माना गया, वही लक्ष्य होने से उसी में पुनः उसी लक्षण की प्रवृत्ति का निषेध हो गया। प्रथम बार वृद्धि का लक्ष्य (निशाना) लक्ष्य का 'अ' था और दूसरी प्रवृत्ति

ननु स्यन्दूधातोः स्यन्त्स्यतीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तकत्वान्न वृद्भ्यश्चतुर्भ्य इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह—

सुटि कृते न पुनः सुट् । भूयादित्यादौ तु स्थानभेदात् पुनः पुनः 'स्कोः संयोगाद्यो-रन्ते च" ८.२,२९ इति सलोपः, एकस्य लोपस्य स्थानी यासः सकारः अपरस्य च सुटः सकार इति स्थानभेदः स्पष्ट इति । अन्यत्र = उद्योतादौ विस्तरः ।।

"तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तते" इति निर्दुष्टं परिभाषास्वरूपम् । अत-एव सञ्च् छम्भुः इत्यादौ नकारस्य तकारस्य च श्चुत्वे सिद्धचतः । तल्लक्ष्यत्वञ्च स्वीयप्राथमिकप्रवृत्तौ उद्देश्यतावच्छेदकावच्छेदेनाश्रीयमाणो यावान् शब्दसमुदायः तद्विशिष्टाघटितत्वे सति स्वीयप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयाघटितत्वम् । वैशिष्ट्यञ्च स्वाघटकत्व-स्वघटकमात्रोद्देश्यकविकारागमातिरिक्तत्वोभयसम्बन्धेन इति शिवम् १२१

**निषेधाश्च बलीयासः १२२**

स्यन्दू प्रस्रवणे (भ्वादिः) इत्यस्मात् लृटि "वृद्भ्यः स्यसनोः १।३।९२ इति परस्मैपदे तिपि स्यविकरणे स्यन्द् स्य ति इत्यवस्थायां "न वृद्भ्यश्चतुर्भ्यः" ७।२।५९ इत्यनेन 'स्वरतिसूति—७।२।४४ इतिप्राप्तस्य वैकल्पिकस्येटो निषेधे दकारस्य चर्त्वे स्यन्त्स्यति इति सिद्धयति । अत्रात्मनेपदनिमित्तत्वाभावनिमित्तत्वात् 'न वृद्भ्यश्चतुर्भ्यं इति निषेधस्य बहिरङ्गत्वेन अन्तरङ्गत्वात् "स्वरतिसूति—"इत्यूदिल्लक्षणस्येड्विकल्प-स्यापत्तिः असिद्धं बहिरङ्गमन्तरङ्गे इति निषेधमसिद्धीकृत्य इटः प्राप्तेरिति चेदत

में लक्ष्य 'ओ' है । इसलिए लक्ष्य भेद प्रतीत होता है किन्तु लक्ष्य में विकार जन्य भेद नहीं माना गया । 'सर्वेषाम्' में सर्व+आम् इसस्थिति में सुट् करने पर सर्वसाम् बना, पहले आम् को सुट् हुआ था, अब पुनः साम् को 'यदागम' न्याय से आम् मानकर सुट् नहीं हुआ, क्योंकि "साम्" आम् का ही आगमजन्यविकृत रूप है, विकार कृत लक्ष्यभेद नहीं माना जाता है। इस तरह यह सिद्ध हुआ एक शास्त्र अपने एक लक्ष्य में एक ही बार प्रवृत्त होता है ।

इस पर अन्यत्र ('उद्योत और शब्देन्दुशेखर में) विस्तार से कहा गया है।

।। इति शिवम् १२०-२१ ।।

**निषेधाश्च बलीयांसः—१२२**

स्यन्दू प्रसवण धातु से लृट् लकार के प्रथम पुरुष के एक वचन के रूप "स्यन्त्स्यति" में "वृद्भ्यः स्यसनोः" १।३।९२ से परस्मैपदकरने के बाद आत्मने-पद निमित्तत्वाभाव को देखकर" न वृद्भ्यः चतुर्भ्यः" ७।२।५९ इस निषेध की प्राप्ति होती है। इसलिए वह निषेध बहिर्भूत निमित्तक होने के कारण बहिरङ्ग हुआ

**निषेधाश्च बलीयांसः ॥१२२॥**

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ।

चतुर्भ्य इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मीमांसकरीत्या

---

आह—"**निषेधाश्च बलीयांसः**" इति परिभाषा स्वीक्रियत इति ॥

अन्तरङ्गादुपजीव्यादपि बलीयांसः इत्यर्थः । अपिः परादिसमुच्चायकः अत्र हि अन्तरङ्ग ऊदिल्लक्षण इट् उपजीवयिता) निषेधस्य, विधिं विना निषेधासंभवात् । विधिरेवोपजीवयिता निषेधस्य, ततोऽपि निषेधो बलीयान् न वृद्‌भ्यश्चतुर्भ्यः ७.२-५९ इति । "न च सिद्धान्तकौमुद्यां "न वृद्भ्यश्च तुर्भ्यः ७।२।५९ इत्यत्र सूत्रे "वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदि ल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्निवृद्भ्य इति निषेध इत्युक्तं तद्विरुध्यते, तव रीत्या परिभाषयैवानया ऊदिल्लक्षणस्यान्तरङ्गस्य ',न वृद्भ्यः" इति न्यासकरणेऽपि बाधसम्भवेन "चतुर्भ्य" इत्यस्य वैयर्थ्यापत्तेरिति वाच्यम् 'चतुर्भ्य' इत्यस्य स्पष्टार्थकत्वस्वीकारात् तदुक्तम्:—**चतुर्भ्य इति** तु स्पष्टार्थमेवेति । अतएव=उपजीव्यादपि बलीयस्त्वस्वीकारादेव=तत्प्रत्याख्यानं भाष्योक्तं संगच्छते । अर्थादनया निषेधस्य बलीयस्त्वसिद्धेश्चतुभ्य इति न कर्तव्यमिति । अतएव निषेधस्य बलीयस्त्वादेव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः अर्थात् नाज्झलौ १।१। १० इत्यत्र सवर्णसंज्ञाया विकल्पो न । अन्यथा स्वसाफल्याय निषेघस्य विधेरपेक्षायां

---

उससे अन्तरंग है "स्वरति सूति" ७।२।४४ यह सूत्र । इसलिए अन्तरङ्गत्वात् ऊदित् मानकर विकल्प से इट् हो जायगा । उसके निवारण के लिए परिभाषा मानने हैं—

**"निषेधाश्च बलीयांसः"**

अन्तरङ्ग उपजीव्य की अपेक्षा भी निषेध बलवान् होता है । यद्यपि भट्टोजिदीक्षित ने सिद्धान्तकौमुदी में लिखा है कि ऊदित् लक्षण, अन्तरङ्ग विकल्प इट् का बाध, "चतुर्भ्यः" यह कहने के कारण, सामर्थ्यात् होता है तथापि पूर्वोक्त परिभाषा के द्वारा ही निषेध की बलवत्ता माननी चाहिए; क्योंकि वहाँ चतुर्ग्रहण स्पष्टार्थ माना गया है । इसीलिए भाष्यकार ने उसका प्रत्याख्यान कर दिया है । यदि 'चतुर्ग्रहण' का फल जैसा कि दीक्षित ने कहा है, मानें तो भाष्योक्त प्रत्याख्यान संगत नहीं होगा ।

इसलिए सवर्ण संज्ञादि कार्य सवर्ण संज्ञादि के निषेध विषय में विकल्प से नहीं हुआ । यदि निषेध को बलवान् नहीं माना जाता, तो मीमांसक के अनुसार विधि, निषेध का उपजीव्य है । इसलिए विधि प्रबल है, उसका सर्वथा बाध होना अनुचित है, इसलिए निषेध विषय में विकल्प से विधि दुर्वार हो जाती ।

विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां

---

सत्यां विधेरुपजीव्यत्वम् उपजीव्यापेक्षया निषेधस्य बलवत्त्वाभावेन लोकसिद्धेन सर्वथा विधिबाधकत्वाभावेऽपि स्वसार्थक्याय पाक्षिकं विधिबाधकत्वं स्वीकार्यम् इति निषेधविषये वैकल्पिकत्वापत्तिरिति नाज्झलाविति निषेधविषये सवर्णसंज्ञापत्तिरिति। **मीमांसकरीत्येति** । मीमांसकैरतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति" "उदिते जुहोति अनुदिते जुहोति" इत्यादौ षोडशिग्रहणस्य उदये होमस्य च वैकल्पिकत्वं सिद्धान्तितम्, विधेर्निषेधोपजीव्यत्वेन प्राबल्यात् तस्य सर्वथाबाधानुपपत्त्या विधेर्दुवारत्वात् । **मञ्जूषायां नञ्** पादे विस्तरः । व्याकरणे तु निषेधस्य उपजीव्यादपि प्राबल्यस्वीकारेण बाधकत्वमेव। वस्तुतस्तु षोडशिग्रहणनिषेधस्य विधिसमानविषयत्वेन सर्वथा विधेर्बाधकत्वे स्वीकृते विधिः व्यर्थः स्यादिति विकल्पो युक्त एव । एवमुदिते अनुदिते च होमस्य विधानात्तत्र वैकल्पिकत्वं युक्तमेव । व्याकरणे च निषेधेन विधेः स्वविषये बाधेऽपि क्वाप्यन्यत्र चारितार्थ्यसंभवान्नास्ति विकल्पावकाशः-

---

तात्पर्य यह है कि मीमांसा में जहाँ यह लिखा हुआ है कि "उदित रहने पर होम करना चाहिए, सूर्य के उदित नहीं रहने पर होम करना चाहिए, यहाँ होमविधि को पूर्वोक्त सिद्धान्त के आधार पर विकल्प माना गया है, इसलिए जब "तुल्यास्य" १।१।९ सूत्र 'अ' और 'ह' को सवर्णसंज्ञा का विधान करेगा और 'नाज्झलौ' १।१।१० उसका निषेध करेगा तो बीच की कोटि निकाल कर विधि को विकल्प माना जायगा और इस तरह दधि+हरति में विकल्प से यणादिक कार्य होने लगेगा। व्याकरण में तो उक्त परिभाषा के बल से निषेधशास्त्र विधि का पूर्णतः बाधक ही माना जाता है। बात यह कि व्याकरण में अपने विषय में विधिशास्त्र का निषेध शास्त्र के द्वारा बाध होने पर भी विधिशास्त्र निषेध के विषय से भिन्न विषय में चरितार्थ रहता है। इसलिए विकल्प की गुंजाइश नहीं है। नागेश ने इस विषय पर अपनी पुस्तक मञ्जूषा के नञ् प्रकरण में विस्तृत विचार किया है। यह स्मरण दिलाते हुए लिखा है—मञ्जूषायां विस्तरः। मीमांसा के पूर्वोक्त स्थलों में उदित और अनुदित दोनों अवस्थाओं में होम का विधान किया गया है। इसलिए दो पक्ष होने ही चाहिए। 'अतिरात्रे षोडशिनं गृह्णाति' नातिरात्रे षोडशिनं गृह्णाति यहाँ तो षोडशिग्रहण के निषेध का वही विषय है—सिर्फ वही विषय है, जो षोडशिग्रहण के निषेध का है, अतः यदि षोडशिग्रहण के निषेध को मान लिया जाय; तो विधि व्यर्थ हो जायगी। अतः विकल्प मानना आवश्यक है। व्याकरण में 'तुल्यास्य' सूत्र "दैत्यारि" में सवर्णसंज्ञा और तन्मूलक दीर्घविधान के द्वारा चरितार्थ है। अतः 'दधि+हरति' में निषेध के द्वारा उसका बाध होने से भी विधि की असफलता नहीं होती। अतः यहाँ निषेध द्वारा नित्य बाध होता है। इसलिए 'द्वन्द्वे

**विस्तरः । अत एव 'द्वन्द्वे च' 'विभाषा जसि' इति चरितार्थम् ।
विध्युन्मूलनाय प्रवृत्तिरस्याः बीजम् ।**

---

यथा "पदान्तस्य" ८।४।३७ इति पदान्ते रामान् इत्यत्र नस्य णत्वनिषेधेऽपि णत्वविधायकं शास्त्रम् "अट्कुप्वाङ्" ८।४।२ इत्यादिकम् रामेणेत्यादौ चरितार्थं वर्तते। अतो वैकल्पिकत्वकल्पनस्य नास्त्यवसरः । 'नाज्झलौ' १।१।१० इत्यनेन "दधि हरति" इत्यादौ अकारहकारयोः सावर्ण्यनिषेधेऽपि 'तुल्यास्यप्रयत्नं सवर्णम्' १।१.९ इति सवर्णविधायको विधिः कार्य+आरम्भ इत्यादौ सावर्ण्यविधानाय चरितार्थोऽस्त्येवेति कुतः पक्षद्वयकल्पना ? अतोऽत्र शास्त्रे निषेधेन स्वविषये प्रवर्तमानस्यान्यत्र च चरितार्थस्य विधेरुपजीव्यत्वेऽपि बाध एव क्रियते इति रहस्यम् ॥

**अतएव** निषेधविषये विधेः सर्वथा बाधस्वीकारादेव 'द्वन्द्वे च' १.१.३१ इत्यनेन 'द्वन्द्वे सर्वनामसंज्ञायाः पूर्णतो बाधे जाते 'विभाषा जसि' १।१।३२ इति सर्वनामसंज्ञाया विकल्पेन विधानं चरितार्थम् । अन्यथा यदि मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात् तस्य निषेधेन सर्वथा बाधानुपपत्त्या विकल्पः स्वीक्रियेत तदा द्वन्द्वे च १.१, ३१ इति निषेधविषये सर्वनामसंज्ञायाः स्वत एव वैकल्पिकत्वे सिद्धे विभाषा जसि १.१।३२ इति विकल्पेन सर्वनामत्वविधानं व्यर्थं स्यात् ॥

विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् इति । यदि हि निषेधस्य बलीयस्त्वं न स्यात्तर्हि तेन विध्युन्मूलनं न स्यात् यतश्च तस्य विध्युन्मूलनमेव फलम् अतस्तस्य बलीयस्त्वमिति । एवञ्चेयं परिभाषा लोकसिद्धन्यायमूलिकेत्युक्तं भवति । विध्युन्मूलनाय प्राप्तस्य विधेर्निवर्तनायेत्यर्थः । एतेन येननाप्राप्तन्यायेन विधिशास्त्रस्य निषेधशास्त्रेण बाध इति दर्शितम् । लोकेऽपि यस्योन्मूलनाय यस्य प्रसक्तिर्भवति, ततस्तस्य बलवत्त्वं स्वीक्रियत एव यथा कृष्णस्य कंसादिति (भैरवी)

---

च' १।१।३१ विभाषा जसि" १।१।३२ यह चरितार्थ हो गया। इस परिभाषा ने निषेध के विषय में विधि को पूर्णतः रोकने की जब आज्ञा दी तब 'द्वन्द्वे च' १।१।३१ ने द्वन्द्व में 'सर्वादीनि' से विहित सर्वनाम संज्ञा को पूर्णतः रोक दिया । इसलिए जस् में 'विभाषा जसि' १।१।३२ से विकल्प से सर्वनाम संज्ञा का विधान आवश्यक हुआ । अन्यथा 'वर्णाश्रमेतरे' वर्णाश्रमेतराः में "सर्वादीनि सर्वनामानि" से सर्वनामसंज्ञा का विधान और "द्वन्द्वे च" से सर्वनाम संज्ञा का निषेध करने के कारण मीमांसक के मतानुसार विकल्प हो ही जाता, फिर "विभाषा जसि" से द्वन्द्व में विकल्प से सर्वनाम संज्ञा का विधान करना व्यर्थ हो जाता। विधि के उन्मूलन के लिए प्रवृत्ति इस परिभाषा में बीज है । निषेध का स्वभाव है विधि का विनाश । यह तभी संभव है, जब कि निषेध बलवान हो । लोक में भी हम देखते है कि जिसके उन्मूलन के लिए जो प्रवृत्त होता है; वह (उन्मूलयिता) उससे (उन्मूलनीय से) बलवान् होता है । जैसे श्रीकृष्ण

**न लुमता' 'कर्मणिङ्'इत्यनयोर्भाष्ये स्पष्टैषा ॥१२२॥**
**नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह—**

---

"न लुमताङ्गस्य" १।१।६३, कर्मणिङ् ३।१।३० इत्यनयो र्भाष्ये स्पष्टैषा।

तथाहि न लुमताङ्गस्य १।१।६३ इति भाष्यम्—"प्रतिषेधाश्च बलीयांसो भवन्ति इति। अत्र कैयटः=बलीयांसो भवन्ति, विध्युन्मूलनरूपत्वादित्याह स्म। कर्मणिङ् ३।१।३० इति भाष्यं यथा—"एवमपि उभयोः (णित्करणङित्करणयोः) सावकाशयोः प्रतिषेधस्य बलीयस्त्वात् प्रतिषेधः प्राप्नोति इति (अत्र कैयटः कथयति प्रतिषेधस्य विध्यपवादत्वाद् बाधकत्वाद् बलीयस्त्वमिति॥

इत्थमुभयत्र भाष्ययोरस्या स्पष्टत उल्लेखः प्राप्यत इति ।।शिवम् १२२

**अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे १२३**

प्रत्ययः ३।१।१ इति सूत्रे भाष्ये पतञ्जलिः—प्रत्यय इति महती संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः, कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत प्रत्याययतीति प्रत्ययः॥ यदि प्रत्याययतीति प्रत्ययः, अविकादीनां प्रत्ययसंज्ञा न प्राप्नोति, न हि ते किञ्चित्-प्रत्याययन्ति॥ एवं तर्हि प्रत्याय्यत इति प्रत्यय इति (यस्यार्थः प्रकृत्या प्रत्याय्यते स प्रत्याय्यमानार्थत्वात् प्रत्याय्यमानः स्वार्थिकः प्रत्ययसंज्ञको भवति एवमपि सन्नादीनां न प्राप्नोति। नहीच्छादावर्थे विधीयमानाः सनादयः प्रकृत्या प्रत्याय्यमानार्थाः। यो गुपादिसन् स प्रकृत्या प्रत्याय्यमानार्थः इतीच्छा सनेवात्राभिप्रेतः॥) एवं तर्हि उभय-साधनोऽयम् कर्तृसाधनः कर्मसाधनश्च॥ प्रत्याययतीति प्रत्ययः तेन इच्छार्थकसनादि-संग्रहः, तृजादयस्तु कर्त्रर्थं प्रत्याययन्त्येव, प्रत्याय्यते इति प्रत्यय इतिव्युत्पत्त्या च स्वार्थिकप्रत्ययसंग्रहः। उभयत्रापि निपातनाण्णिचोऽचि लुक् इति॥

उद्धृतेऽस्मिन् भाष्ये प्रतिपादित एवार्थोऽत्र नागेशेन प्रतिपाद्यते—**नन्वत्यन्त-स्वार्थिकानामित्यादिना।**

---

कंस से बलवान थे। 'न लुमता' १।१।६३ और "कर्मणिङ्" ३।१।३० सूत्र के भाष्य में यह बात स्पष्ट है। 'न लुमता' १।१।६३ सूत्र के भाष्य में 'प्रतिषेधाश्च बलीयांसः' कहा गया है। कर्मणिङ् ३।१।३० में प्रतिषेध को प्रबल बताया गया है।

॥ इति शिवम् १२२ ॥

**अनिर्दिष्टाः प्रत्ययाः स्वार्थे—१२३**

"प्रत्यय" प्रत्येति इति प्रत्ययः, इस व्युत्पत्ति के अनुसार किसी न किसी अर्थ का प्रत्यायक ही प्रत्यय कोटि में गिना जा सकता है। इस तरह "दाता" में कर्तृ अर्थ के ज्ञापक होने के कारण तृच् को प्रत्यय कहा जा सकता है किन्तु अत्यन्त स्वार्थिक जो प्रत्यय हैं; वे तो कुछ नूतन अर्थ नहीं बताते हैं, इसलिए उन्हें प्रत्यय कैसे

**अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥१२३॥**

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः। स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः।

महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम्।

'सुपि स्थ' इत्यादि सूत्रेषु भाष्ये स्पष्टैषा ॥१२३॥

---

कर्तृसाधनस्य प्रत्ययशब्दस्य स्वीकारे प्रत्याययतीति व्युत्पत्त्या यः किञ्चिदर्थं प्रत्याययति स एव प्रत्ययः स्यात् तथा चाविक इत्यत्र कस्यात्यन्तस्वार्थिकस्य प्रत्ययसंज्ञा न स्यात् इति चेन्न **अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे** इति परिभाषास्वीकारात् अर्थात् येषामर्था न निर्दिष्टा सूत्रादिना, ते स्वार्थे (स्वीयप्रकृत्यर्थे) भवन्ति यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इति कर्मसाधनस्यापि प्रत्ययशब्दस्य स्वीकारादत्यन्तस्वार्थिकस्यापि प्रत्ययत्वम्। प्रत्यय इति महासंज्ञाबलाद् यदाऽर्थस्याकांक्षा जायते यदस्य कोऽर्थ इति तदा अविक इत्यादौ स्वीयप्रकृत्यर्थेतरस्यार्थस्यानुपस्थितया ज्ञायते इमे प्रत्ययाः स्वार्थे (स्वीयप्रकृत्यर्थे) भवन्तीति अन्यानुपस्थितिरेवास्याः बीजम्। प्रत्ययः इति महासंज्ञाबलात्सर्वेषां प्रत्ययाधिकारपठितविधेयानामवश्यं केनचिदर्थेन भाव्यम्। कादिस्थले प्रकृत्यर्थादतिरिक्तस्य कस्याप्यर्थस्यानुपस्थित्या स्वीयप्रकृत्यर्थ एव तेषामर्थ इति यत्कल्प्यते तदेवात्र बीजम् ॥

---

कहें, इस प्रश्न के उत्तर में कहते हैं—

"अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे"

जिन प्रत्ययों के अर्थ का निर्देश (सूत्रों में) नहीं किया गया है, उन्हें स्वार्थ (प्रकृत्यर्थ) में विहित मानना चाहिए। अर्थात् जिसके अर्थ को प्रकृति बताती है, वह भी प्रत्यय है, इस बात को मानने के कारण **अनिर्दिष्टार्थ** को भी प्रत्यय मानना चाहिए। इसलिए कोई दोष नहीं हुआ। इस तरह प्रत्यय अपना या प्रकृति के अर्थ का प्रत्यायक होता हैं। "स्वार्थ" शब्द में "स्व" शब्द आत्मीय वाची है। इस तरह स्वार्थे का अर्थ है—प्रत्यय की आत्मीय—प्रकृति का अर्थ। "प्रत्यय" यह एक महासंज्ञा है महासंज्ञा का कुछ न कुछ यौगिक अर्थ होना ही चाहिए प्रत्येति निर्गच्छति अर्थः यस्माद्" या अर्थः प्रत्याय्यते यस्य इस व्युत्पत्ति से सिद्ध प्रत्यय इस अधिकार में पठित सारे विधेय तृच् क्त आदि का कुछ न कुछ अर्थ होना ही चाहिए। यावक आदि में 'कन्' आदि प्रत्यय जहाँ होते हैं, वहाँ प्रकृति के अर्थ से भिन्न किसी अर्थ की उपस्थिति नहीं होती है, इसलिए यह मानना जरूरी है कि वहाँ प्रत्यय का अर्थ वही है जो प्रकृति का है। "सुपि स्थः" ३।२।४ 'अकर्त्तरि च' ३।३।१९ "तुमर्थे से—३।४।९ इत्यादि सूत्रों के भाष्य में यह स्पष्ट हुई है।

॥ इति शिवम् १२३ ॥

## योगविभागादिष्टसिद्धिः ॥१२४॥

एषा सुपि स्थः ३।२।४ इत्यादिसूत्रेषु भाष्ये स्पष्टा। अत्रादि पदेन "अकर्तरि च कारके संज्ञायम्" ३।३।१९ इत्यस्य "तुमर्थे सेसेनसे असेन्—" ३।४।९ इत्यादेश्च ग्रहणं बोध्यम्।

(क) सुपि स्थः ३।२।४ इति सूत्रस्थं भाष्यं यथा—"नचान्यस्मिन्नर्थे आदिश्यते। "अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्तीति। तद्यथा 'गुप्तिज्किद्भ्यः सन्'' "यावादिभ्यः कन्" इति ॥

(ख) अकर्तरि च कारके"—३।३।१९ इति सूत्रभाष्येऽपि दृश्यते—"कारकग्रहणं क्रियते (किं कारणम् ?) अनादेशे स्वार्थविज्ञानात्। अनादेशे स्वार्थविज्ञानात्। अनादेशे अनिर्दिष्टार्थाः प्रत्यायाः स्वार्थे भवन्तीति—तद्यथा "गुप्तिज्किद्भ्यः सन्" एवमिमेऽपि प्रत्ययाः स्वार्थे मा भूवन् कारके यथा स्युरित्येवमर्थमिदमुच्यते ॥

(ग) तुमर्थे इत्युच्यते कस्तुमर्थो नाम ? कर्ता। यद्येवं नार्थस्तुमर्थग्रहणेन। येनैव खल्वपि हेतुना कर्तरि तुमुन् भवति तेनैव हेतुना सयादयोऽपि भविष्यन्ति ॥ एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्यः 'अस्त्यन्यः कर्तुस्तुमुनोऽर्थः इति ॥

कः पुनरसौ ? भावः ॥ कुतो नु खल्वेतत्। भावे तुमुन् भविष्यति। न पुनः कर्मादिषु कारकेषु स्यादिति ॥ ज्ञापकात्तावदयं कर्तुरपकृष्यते। न चान्यस्मिन्नर्थे आदिश्यते अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे भविष्यति तद्यथा "गुप्तिज्किदभ्यः सत्" यावादिभ्यः कन्" सोऽसौ स्वार्थे भवन् भावे भविष्यति—इत्यादि इति ॥ शिवम् ॥ १२३॥

### योगविभागादिष्टसिद्धिः १२४

पूर्वस्यां परिभाषायां "सुपि स्थः ३।२।४ इति सूत्रचर्चामूलकस्मरणादाह—**योगविभागादिष्टसिद्धिः**" तेन एकादश इत्यत्र "आन्महतः समानाधिकरणजातीययोः' ६।३।४६ इत्यत्र आदिति योगविभागादिष्टस्यात्त्वस्य सिद्धिः। "सह सुपा" २.१.४ इत्यत्र सहेति योगविभागात् 'पर्यभूषत्' 'अनुव्यचलत्' इत्यादौ छन्दसि समासः। "अव्ययं विभक्ति—२।१।६ इत्यत्राव्ययमिति योगविभागादपदिशमित्यत्र समासः सिद्धयति क्लीबाव्ययंत्वपदिशं दिशोर्मध्य" इत्यमरश्च संगच्छते। **इष्टसिद्धिरित्युक्त्या योगविभागं**

---

### योगविभागादिष्टसिद्धिः—१२४

योग विभाग से इष्ट-सिद्धि करनी चाहिए। जैसे 'एकादश' में पूर्वपद को आत्त्व करने वाला कोई सूत्र नहीं है। इसलिए इस इष्ट प्रयोग की सिद्धि के लिए "आन्महतः" ६।३।४६ सूत्र में "आत्" को अलग योग मानते हैं। उसका अर्थ होता

**इष्टसिद्धिरेव न त्वनिष्टापादनं कार्यमित्यर्थः। तत्तत्समानविधेयकद्वितीय-योगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥१२४॥**

**पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥१२५॥**

**तत्रतत्रान्यतरस्यां 'विभाषा वे'ति सूत्रनिर्देशज्ञापितमिदम् ॥१२५॥**

---

कृत्वा स्थितस्य गतिरेव चिन्तनीया, इष्टस्य साधनायैव प्रयत्नो विधेयः नत्वनिष्टस्य सिद्धय इति सूचितं भवति। कथमेतत् सिद्धयतीति चेत् तदाह—**तत्तत्समानविधिक-द्वितीययोगेनेति** अर्थात् आदिति योगविभागादेव 'महादेव' इत्यादावपि आत्वे सिद्धे -महतः समानाधिकरणजातीययोः' इति द्वितीययोगेन आदितियोगस्यानित्यत्वं ज्ञाप्यते तेन इष्टस्थले प्रवृत्तिरनिष्टस्थलेऽप्रवृत्तिरिति सिद्धम्—योगविभागादिष्टसिद्धिरित्यत्र बीजमिति।

पूर्वयोगस्य यत् कार्यं तदेवोत्तरयोगेन सम्पाद्यते पूर्वयोगस्य विषयो व्यापको भवति, उत्तरयोगस्य च व्याप्य इति सर्वत्र योगविभागस्थले उत्तरयोगो व्यर्थः सन् पूर्वयोगस्य नियामकः। अतएव पूर्वयोग इष्टस्थले एव प्रवर्तते नानिष्टस्थल इति सिद्धं योगविभागादिष्टसिद्धिरिति नानिष्टे तस्यातिप्रसङ्गः। इति शिवम् १२४

**पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते १२५**

ननु अर्धं नपुंसकम् २।२।२ इत्यत्र लाघवाद् 'अर्धं क्लीबम्' इत्येव वक्तव्यम्, स्वमोर्नपुंसकात् ७।१।२३ इत्यत्र 'स्वमोः क्लीबात्' एवं 'नक्षत्रे च लुपि' २।३।४५

---

है समास में पूर्वपद को आत्व हो। ऐसा अर्थ करने पर "महापुरुषः" आदि में भी आत्व हो ही जाता; उत्तरयोग, पूर्वयोग की कहीं शिष्ट प्रयुक्त शब्दों की सिद्धि के लिए ही प्रवृत्ति होती है, ऐसा ज्ञापन करता है। इसलिए अनिष्ट प्रयोग में योग विभाग की प्रवृत्ति नहीं होती। परिभाषा में "इष्टसिद्धिः" का प्रयोग किया गया है। इसलिए यह सिद्ध होता है कि योगविभाग के द्वारा इष्टसिद्धि ही करनी चाहिए, अनिष्ट प्रयोग बनाने की चेष्टा नहीं करनी चाहिए। अनिष्ट प्रयोग नहीं बनने का कारण यह है योग विभाग से विभक्त द्वितीय योग भी उन्हीं का विधायक है; जिनकी विधि प्रथम योग के द्वारा हो चुकी है। अतः द्वितीय योग व्यर्थ होकर प्रथम योग की अनित्यता का ज्ञापन करता है। द्वितीय योग पूर्व योग के लिए अंकुश या लगाम की तरह नियामक है। अनित्य शास्त्र की प्रवृत्ति इष्टस्थलमें ही होती हैं; यह वैयाकरणों का सर्वसम्मत सिद्धान्त है।

॥ इति शिवम् १२४ ॥

**पर्यायशब्दानां लाघव—नाद्रियते १२५**

पाणिनीय व्याकरण में "नाम" की जगह "प्रातिपादिकम्" का 'वा' इस

## ज्ञापकसिद्धं न सर्वत्र ॥१२६॥

इत्यत्र च 'भे च लुपि' इति वाच्यम् यथास्थित न्यासे च गौरवमित्यत आह—

**पर्यायशब्दानां लाघवगौरवचार्चा नाद्रियते १२५**

तेन क्लीबनपुंसकादीनां भनक्षत्रादीनां च च लाघवगौरवचर्चा न मूल्यवतीति भावः। लोकेऽपि कश्चिद् "आगच्छ" इति वदति तत्स्थाने कश्चित् 'एहि' इति। तत्र न प्रथमोऽवहेल्यो भवति द्वितीयश्च न समादृत इति। तेन ज्ञायते पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियत इति। लाघवं समादरणीयं गौरवञ्चोपक्षणीयमिति नास्ति चर्चार्हो विषयः।

अत्र ज्ञापकम् "अन्यतरस्याम्" 'विभाषा' इत्यादि घटितम् 'ह्क्रोरन्यतरस्याम्' १।४।५३ 'विभाषोपसर्गे' २।३।५९ इत्यादिकं सूत्रम्। तत्र सर्वत्र 'ह्क्रोर्वा' वोपसर्गे इत्येवंरीत्या लाघवाद् वेति वक्तव्येऽन्यतरस्याम् विभाषेति कथनं व्यर्थं सत् **पर्यायशब्दानामिति** परिभाषां ज्ञापयति।

इति शिवम् १२५

**ज्ञापकसिद्धं न सर्वत्र १२६**

अत्र पुरुषोत्तमदेवः—इदमप्युचितमेव ज्ञापकं हि नाम न वाचकं किन्तर्हि इङ्गितेन सूचकं क्वचिदेव इष्टसिद्धावाश्रीयते न सर्वत्रेति युज्यते ज्ञापकसिद्धं न

---

लघुकलेबर वाले शब्द के अर्थ में 'विभाषा' 'अन्यतरस्याम्' आदि का प्रयोग किया गया है। इसमें गौरव होता है; इसके सम्बन्ध में कहते हैं कि **पर्याय शब्दानाम्**··· अर्थात् पर्यायवाची शब्दों में लाघव और गौरव की चर्चा आदर नहीं पाती है, इस को यहाँ महत्व नहीं दिया गया है। यह परिभाषा "अन्यतरस्याम्" 'विभाषा' और 'वा' घटित सूत्रों के द्वारा ज्ञापित है। अन्यथा इन सभी सूत्रों में 'वा' का ही निर्देश किया जाता। वैसा नहीं किया गया है। इससे साफ जाहिर है कि पर्यायवाची शब्दों के लाघव और गौरव की बात को पाणिनि नहीं मानते थे।

॥ इति शिवम् १२५ ॥

**ज्ञापक सिद्धं न सर्वत्र १२६**

ज्ञापक सिद्ध नियम सब जगह लागू नहीं होता। यदि ज्ञापक सिद्ध नियम को सर्वत्र लागू करने की इच्छा पाणिनि की होती तो; वे वैसे नियम को स्पष्ट ही क्यों नहीं पढ़ते (बनाते)। इन नियमों का अनुमान के द्वारा बताना ही इन की असार्वत्रिकता (अनित्यता) सूचित करता है। इसलिए ज्ञापकसिद्ध परिभाषा के द्वारा अनिष्ट प्रयोग बनने की संभावना नहीं रहती। "ङ्याप् प्रातिपदिकात्" ४।१।१ इत्यादि सूत्रों में यह ध्वनित होती है। 'ङ्याप्' ४।१।१ सूत्र

**स्पष्टमेव पठितव्येऽनुमानाद्बोधनमसार्वत्रिकत्वार्थमित्यन्ये । तेन ज्ञापकसिद्धपरिभाषयाऽनिष्टं नापादनीयमिति तात्पर्यम् भाष्येऽपि ध्वनितमेतत् 'ङ्याप्' सूत्रादौ ।**

---

सार्वत्रिकम् इति । तेन ज्ञापकसाधितमात्मनेपदानित्यत्वादि न सर्वत्र प्रयोज्यम्; किन्तु विशिष्टप्रयोगदर्शनात् क्वचिदेव ।। (पुरुषोत्तमदेवलघुपरिभाषावृत्तिः प० सं० ११८) सीरदेवेनापि परिभाषेयं प्रायः पुरुषोत्तमदेवोक्तशब्देनैव व्याख्याता (सीरदेव वृहत्परिभाषावृत्तिः प० सं० १२६)

एकान्या परिभाषा "अगत्या हि खलु परिभाषा श्रीयते, अगत्या तु (नु) परिभाषाश्रीयते इत्येवंस्वरूपा पुरुषोत्तमसीरदेवाभ्यां स्वीकृता । तत्र पुरुषोत्तमदेवः—अगत्या नु परिभाषा श्रीयते । इदमपि यौक्तमेवोच्यते । **परिभाषा हि न पाणिनीयानि** वचनानि' किन्तर्हि नानाचार्याणाम् । तत्र पाणिनीये शब्दानुशासने यत्रैव क्वचिदिष्टविषये मुख्यलक्षणेनासिद्धिः तत्रैवैता गत्यन्तरमपश्यद्भिराश्रीयन्ते । न तु यत्रैषां समाश्रयणे दोष एव प्रत्युपपद्यते तत्रैताः समाश्रीयन्ते । एतेन परिभाषासञ्जनेन नानिष्टमित्युक्तं भवति । तेन राज्ञः क च (४।२।१४०) राजकीयमित्यत्र 'एकदेशविकृतमनन्यवद् भवति (पु० दे० प० सं० १४) इति परिभाषया अल्लोपोऽनः ६।४।१३४ इति न प्रवर्तते । (पुरु० दे० लघु० प० वृ० प० सं० ११६) इत्याह ।।

अत्र सीरदेवः—"अगत्या हि खलु परिभाषाश्चाश्रीयन्ते" इदमपि वचनं युक्तमेव । परिभाषा हि नाम न साक्षात्पाणिनीयवचनानि किर्तहि नानाचार्याणाम्' तत्र पाणिनीये शब्दानुशासने यत्रैव क्वचिदिष्टविषये मुख्यलक्षणेन न सिद्धिः तत्रैवैता गत्यन्तरमपश्यद्भिराश्रीयन्ते यत्र त्वेतत्समाश्रयणे दोष एव प्रसज्यते तत्र नाश्रीयन्त एव । एतेन परिभाषाश्रयणेन नानिष्टासञ्जनं कर्तव्यमित्युक्तं भवति ।। (सीरदेव वृहत् परि० वृत्ति प० सं० १२३) इत्याह ।

तत्र नागेशः—"ज्ञापकसिद्धं न सर्वत्र" इति प्रथमामेव व्याख्यातवान् न द्वितीयाम्, द्वितीयायाः प्रयोजनस्यापि प्रथमयैव सिद्धिसंभवात् ।

ज्ञापकसिद्धस्यासार्वत्रिकत्वे (हेतुः)। युक्तिः का सेत्याह **स्पष्टमेव पठितव्ये** इत्यादि यदि ज्ञापकसिद्धं सार्वत्रिकं स्यात् तदा तत् स्पष्टं साक्षात् शब्देनैव पठितव्यं स्यात् तथा अपठित्वा इङ्गितेन तत्तदनुमानसूचकचिह्नेन बोधनमेव तस्यानित्यत्वं सूचयन्तीत्यर्थः। इत्थं यत्र ज्ञापकसिद्धपरिभाषायाः प्रवृत्तावनिष्टसंभावना तत्रानित्यत्वात्परिभाषाया अप्रवृत्तिः। इत्थं ज्ञापकसिद्धपरिभाषयानिष्टं नापादनीयम् इति । अत्र ज्ञापकसिद्धपरिभाषयेति कथनेन "अगत्या हि परिभाषाश्रीयते" इतिपरिभाषाया अत्रैव गतार्थता सूच्यते ।।

इयं "ङ्याप्प्रातिपदिकात्' ४।१।१ इत्यादिषु सूत्रेषु ध्वनितेति । यत्र यत्र

ज्ञापकेति न्यायस्याप्युपलक्षणम् । न्यायज्ञापकसिद्धानामपि केषां चित्कथनमन्येषामनित्यत्वबोधनायेति भावः । यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं ज्ञापकसिद्धं च तत्रानल्विधावि'ति ॥१२६॥

ननु द्रोग्धा-द्रोग्धा, द्रोढा-द्रोढेत्यादौ घत्वादीनामसिद्धत्वात्पूर्वं द्वित्व एकत्र

---

कामपि परिभाषां व्याख्याय दोषेषु प्रतिविधेयत्वमुक्तं तेषु तेषु सर्वेषु सूत्रेषु भाष्येऽसौ ध्वनितेति तात्पर्यम् ।

"ङ्याप्—४।१।१ इति सूत्रे प्रातिपदिकग्रहणपरिभाषां सप्रयोजनां व्याख्याय ततोऽतिप्रसङ्गान् दर्शयित्वा "प्रतिविधेयं च दोषेषु" इत्युक्त्या ध्वनितमिति भावः । एवं ङ्मेजन्तः १।१।३९ इति सूत्रे भाष्येऽपि सन्निपातपरिभाषां सप्रयोजनां व्याख्यायातिव्याप्तिस्थलेषु प्रतिविधेयत्वोक्त्येयं ध्वनितेति बोध्यम् । "ध्वनिते'त्यनेन भाष्यानुमोदितत्वसूचनात् भाष्ये क्वाप्यदृष्टाया अप्यस्या भाष्यासम्मतत्वं निराकृतम् ॥

ज्ञापकेति न्यायस्याप्युपलक्षणम् बोधकम् । उपलक्षणं नाम स्वबोधकत्वे सति स्वसमानेतरबोधकत्वम् इति । तेन ज्ञापकसिद्धेत्यस्य ज्ञापकन्यायसिद्धेत्यप्यर्थः ।

ननु ज्ञापकन्यायसिद्धा परिभाषा न सार्वत्रिकीति कथं नोच्यते इति चेत् कारणं श्रूयताम् विशेष्यरहितस्य ज्ञापकसिद्धमित्यस्य कथनात् परिभाषाभिन्नानां केषां-

---

में तथा अन्य सूत्रों में "प्रातिपदिकग्रहणे—इत्यादि तथा उन-उन सूत्रों से सम्बद्ध, अन्य, तथाकथित परिभाषाओं की व्याख्या करने तथा फल बताने के बाद परिभाषा मानने पर जो दोष आते हैं उनके निवारण के लिए "प्रतिविधेयञ्च दोषेषु" कह कर परिभाषा को अनित्य बताकर अनिष्ट प्रयोगों के निवारण के उपाय दिखाना यही सिद्ध करता है कि ज्ञापक सिद्ध बातें इष्ट प्रयोग बनाने के लिए ही है । यहाँ 'ज्ञापक' शब्द न्याय का भी उपलक्षक (बोधक) है। कुछ ऐसी बातें पाणिनि ने अतिदेशादि रूप में भी कही है, जो न्याय या ज्ञापक के द्वारा सिद्ध है । उनका—उन बातों का—परिभाषा के रूप में कथन नहीं है; फिर भी अतिदेशादिरूप में कथित भी वे बातें सार्वत्रिक नहीं हैं । इसलिए "ज्ञापकसिद्धम्" की जगह "ज्ञापकसिद्धा (परिभाषा) न सर्वत्र" ऐसा नहीं कहा गया । बिना विशेष्य के और सामान्य में नपुंसक करके प्रयुक्त होने के कारण यह वचन ज्ञापक सिद्ध अतिदेशादि की भी सार्वत्रिकता का निषेध करता है । जैसे "तत्स्थानापन्नः तद्धर्मं लभते" जिसके स्थान में जो हुआ है; उसमें (आदेश में) उसका (स्थानीका) धर्म आ जाता है । जैसे निमंत्रित गुरु के स्थान में आया हुआ गुरु-पुत्र भी गुरु की तरह सत्कार प्राप्त करता है । इस तरह आदेश में स्थानी का धर्म इस न्याय से ही सिद्ध था, फिर भी पाणिनि ने "स्थानिवदादेशः" कहा है । इसलिए 'स्थानिवदादेशः' यह न्यायसिद्ध है । 'आदेशः स्थानिवत्' यह अर्थ ज्ञापकसिद्ध भी है क्योंकि 'युष्मदस्मदोरनादेशे' ७।२।८६ का

चिदन्येषामतिदेशादिवचनानामप्यनित्यत्वं सिद्धयति। यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं (१।१।५७) ति कितीत्येव सिद्धे 'अदोजग्धिर्ल्यप्ति किति' २।४।३६ इति ल्यब्ग्रहणज्ञापकसिद्धम् 'अनल्विधौ' इति वचनं चानित्यं भवति।

तेन 'नायक' इत्यादावायादेशाभावसम्पादनाय न स्थानिवत्, 'अभवाव' इत्यत्र वसि लङो ङित्वमानीय 'नित्यं ङितः' ३।४।९९ इति सकारलोपसम्पादनकालेऽनल्विधाविति निषेधो न प्रवर्तते, तयोरनित्यत्वादिति शिवम् १२६

---

अनादेशे ग्रहण ज्ञापन करता है कि आदेश को स्थानिवत् माना जाय। 'अनादेशे' ग्रहण इसलिए करते हैं कि अनादेश हलादि विभक्ति के परे रहते आत्व हो। इसलिए 'युवाभ्याम्' में आत्व होता है, किन्तु 'युष्मभ्यम्' में आत्व नहीं होता; क्योंकि 'भ्यम्' भ्यस् के स्थान में आदेश हुआ है, वह अनादेश विभक्ति नहीं है। यदि इस शास्त्र में आदेश स्थानिवत् नहीं होता तो 'भ्यम्' तो विभक्ति ही नहीं है, उसके परे रहते आत्व की प्राप्ति ही नहीं थी; वहाँ आत्व के निवारण के लिए 'अनादेशे' का ग्रहण करना व्यर्थ ही होता। वही ज्ञापन करता है कि 'आदेश स्थानिवत्' होता है। इस तरह 'स्थानिवदादेशः' यह भाग ज्ञापकसिद्ध भी है। यह "ज्ञापकसिद्धं न सर्वत्र" उसकी भी अनित्यता बताता है। इसलिए 'नायकः' में (नै+अकः) ऐसी अवस्था में स्थानिवद्भाव से 'अक' को ण्वुल्वत् नहीं माना गया। इसलिए आय् आदेश हुआ।

'अनल् विधौ' यह अंश भी ज्ञापक सिद्ध है। 'अदो जग्धि':—२।४।३६ का ल्यप् ग्रहण इसका ज्ञापक है। यदि अल् विधि में स्थानिवद् भाव होता तो (प्रजग्ध्य' में ल्यप् को स्थानिवद् भाव करने से उसमें स्थानी (क्त्वा) का तादिकित्त्व आ जाता और तादि कित् मानकर हीं 'जग्ध' आदेश हो जाता है। सूत्र में 'ति' किति से अलग ल्यप् ग्रहण करने की क्या आवश्यकता थी? इससे यह सिद्ध है कि अल् विधि में स्थानिवद् भाव नहीं होता है।

'ज्ञापक सिद्धं न सर्वत्र "अनल् विधौ" की भी अनित्यता बताता है। इसलिए 'अभवाव' में 'वस्' में लङ् के ङित्व को लाकर 'नित्यं ङितः' ३।४।९९ से सकारलोप करते समय "अनल्विधौ" की प्रवृत्ति नहीं हुई; क्योंकि इस परिभाषा ने उसे अनित्य सिद्ध कर दिया।

यह वचन परिभाषा के अतिरिक्त अतिदेशादिवचनों को को भी यथास्थान अनित्य कर दे इसी उद्देश्य से परिभाषा के शरीर में 'सामान्ये नपुंसकम्' का प्रयोग किया गया है और किसी विशेष्य का (परिभाषा आदि का) प्रयोग नहीं किया गया है। उसे स्वच्छन्द छोड़ दिया गया है। 'ज्ञापकसिद्धा (परिभाषा) न सर्वत्र यदि लिखते तो वह सीमित हो जाती।

घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह—

पूर्वत्रासिद्धीयमद्वित्वे ॥१२७॥

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः। पूर्वत्रासिद्धमित्यधिकारभवं शास्त्रमस्या लिङ्गम्।

---

पूर्वत्रासिद्धीयमद्वित्वे १२७

"द्रोग्धा-द्रोग्धा" "द्रोढाद्रोढा" इति रूपे 'सर्वस्य द्वे" ८।१।१ इति द्वित्वेन सिद्धे स्तः। नन्वत्र द्वित्वदृष्टचा "वा द्रुहमुह—" ८।२।३३ इति घत्वस्य 'होढः' ८।२।३१ इति ढत्वस्य चासिद्धत्वाद् द्रोह् ता इत्यवस्थायां द्वित्वे द्रोह् ता द्रोह् ता इति स्थिते एकस्मिन् युग्मकेऽप्येकत्र भागे घत्वम् अपरत्र च ढत्वम् स्यात्, तथाच 'द्रोग्धा-द्रोढा' 'द्रोढा-द्रोग्धा' इत्यनिष्टापत्तिरिति चेन्न **'पूर्वत्रासिद्धीयमद्वित्वे'** इति परिभाषा-

---

पुरुषोत्तमदेव और सीरदेव ने परिभाषाओं को पाणिनीय का साक्षात् वचन नहीं माना है दूसरों के वचनों को ज्ञापक और न्याय सिद्ध होने पर भी पाणिनीय-तन्त्र में (अगत्या) कोई चारा नहीं रहने पर इष्ट सिद्धि के लिए ही अपनाया जाय यह उचित ही है। इस औचित्य को ही यहाँ बीज माना गया है।

॥ इति शिवम् ॥ १२६

पूर्वात्रासिद्धीयमद्वित्वे—१२७

द्रुह् धातु से तृच् प्रत्यय करने पर गुण आदि हो जाने पर द्रोह् + तृ इस स्थिति में "वा द्रुह" ८।२।३३ सूत्र से प्राप्त घत्व की सर्वस्य द्वे' ८।१।१ से द्वित्व कर्तव्य में "पूर्वत्रासिद्धम्" ८।२।१ से असिद्धता हो जाने पर पहले द्वित्व होगा; इस तरह द्रोह् ता द्रोह् ता में एक भाग में घत्व और विकल्प के कारण दूसरे भाग में (पक्ष में) ढत्व होगा और द्रोग्धाद्रोढा यह अनिष्ट युग्मक बन जायगा, इस आपत्ति के निवारण के लिए कहते हैं—

"पूर्वत्रासिद्धीयमद्वित्वे"। द्वित्व भिन्न कार्य कर्तव्य में ही सपादसप्ताध्यायी के प्रति त्रिपादी में पूर्व के प्रति पर की असिद्धता होती है 'दोह् + ता' इस स्थिति में पूर्वत्रासिद्धम् की प्रवृत्ति नहीं होने से पहले घत्व होगा फिर द्वित्व और द्रोग्धा-द्रोग्धा बन जायगा 'घत्व' के विकल्प पक्ष में द्वित्व से पहले ढत्व होने से द्रोढा-द्रोढा" बन जायगा और अनिष्ट रूप (आधे में घत्व और आधे में ढत्व होने से आसाधु रूप) नहीं बनेगा।

"अद्वित्वे" यह पूर्वत्र का विशेषण है। इस तरह द्वित्व भिन्न पूर्व के प्रति पर असिद्ध हो यह परिभाषार्थ सिद्ध होता है।

**यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः।**

---

स्वीकारात् । "पूर्वत्रासिद्धम् ८।२।१ इत्यधिकारे भवं शास्त्रं (नलोपादिकम्) पूर्वत्रासिद्धीयम्, गहादिभ्यश्छः ४।१३८ इति छः । सप्तम्यर्थे प्रथमा। तेन पूर्वत्रासिद्धीयम् अर्थात् त्रिपादीस्थे शास्त्रे अद्वित्वे इत्युपतिष्ठते, यत्पूर्वत्रासिद्धीयं शास्त्रं तत्राद्वित्वे इत्युपतिष्ठत इत्यर्थः । इत्थं "वा द्रुहमुह—इति त्रिपादीस्थे शास्त्रे पूर्वत्र कर्तव्ये त्वमसिद्धमिति बोधनाय उपस्थितस्य 'पूर्वत्रासिद्धम्' इत्यसिद्धबोधकस्य शास्त्रस्य यत् पूर्वत्र पदं तत्राभेदसम्बन्धेन अद्वित्वे (अद्विर्वचने) इत्यस्यान्वयेन "द्वित्वभिन्ने पूर्वत्र कर्तव्ये त्वम् (वा द्रह मुह—" इति शास्त्रम्) असिद्धमिति बोधनात् "वा द्रुहमुह—" इति धत्वम् "पूर्वत्र अर्थात् सर्वस्य द्वे" ८।१।१ इति द्वित्वशास्त्रे कर्तव्येऽसिद्धं न स्यात् । तेन प्रथमं घत्वं द्रोग्धा इति जातम् ततः द्वित्वे "द्रोग्धा-द्रोग्धा" तस्य विकल्पपक्षे 'होढ' इति ढत्वमपि द्वित्वे कर्तव्ये नासिद्धम् तेन "द्रोढाद्रोढा" इति सिद्ध्यति घत्वघटितं युग्मकं ढत्वघटितञ्चेति न मिथः सांकर्यदोषः ।

सप्तम्यर्थे प्रथमेति स्वीकारो व्यर्थः, पूर्वत्रासिद्धम् ८।२।१ इत्यधिकारे भवं नलोपादि पूर्वत्रासिद्धीयम् । गहादित्वाच्छः, तदद्वित्वे (अद्विर्वचने) अर्थाद्द्वित्वादन्यत्र (द्विर्वचनादन्यत्र) असिद्धं भवतीत्यर्थः इति कश्चित् ।

अथवा पूर्वत्र सपादसप्ताध्याय्यामसिद्धं नलोपादि, तत्र भवमसिद्धत्वं पूर्वत्रासिद्धीयम् तत् द्विर्वचने कर्तव्ये न भवतीति हरदत्तः ।

यत्तु सीरदेवः द्विर्वचने कर्तव्ये पूर्वत्रासिद्धम् (८।२।१) इति न प्रवर्तत परिभाषार्थमाह तन्न तथा सति द्वित्वस्यासिद्धत्वानापत्त्या "द्युभ्याम्" इत्यादौ दिव्भ्याम् इति स्थिते 'दिव उत्' ६।१।३१ इत्युत्त्वात्परत्वाद् द्वित्वे दिव्भ्याम् दिव्भ्याम् इति युग्मके अन्त्यस्यैवोत्त्वे पूर्वत्र भागे वकारस्य श्रवणापत्तेः ।

नागेशस्तु द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमिति फलितार्थमाह । पूर्वत्रासिद्धमित्यधिकारभवं शास्त्रं (पूर्वत्रासिद्धीयम्) अस्या लिङ्गम् । अनया पूर्वत्रासिद्ध-

---

पूर्वत्रासिद्धम्' ८।२।१ इस अधिकार में पठित शास्त्र इस परिभाषा के प्रवृत्त होने में लिङ्ग (चिह्न) है । इसलिए यह परिभाषा वहाँ प्रवृत्त होगी जहाँ "पूर्वत्रासिद्धम्" इस अधिकार में पठितशास्त्र द्वित्व से भिन्न होगा । शर्त यह है कि जहाँ सिद्धता और असिद्धता करने पर फल में अन्तर आयेगा, वही यह प्रवृत्त होगी । इसीलिए "कृष्णर्द्धिः" में जश्त्व से पहले ध् को द्वित्व करें या बाद में द् को द्वित्व करें; फल में (उच्चारण में) कोई अन्तर नहीं होता, इस लिए इसकी प्रवृत्ति नहीं हुई ।

'सर्वस्य द्वे' इति सूत्रे भाष्ये स्पष्टेयम् ॥१२७॥

---

मित्यधिकारस्थं शास्त्रं दृष्ट्वा तत्र गत्वा कथयिष्यते यत् द्वित्वभिन्ने पूर्वत्र कर्तव्ये त्वमसिद्धमिति ।

यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयं प्रवर्तते । तेन कृष्णर्द्धिरित्यत्र नेयम् प्रवर्तते । तत्र जश्त्वस्य द्वित्वदृष्ट्याऽनयापरिभाषयाऽसिद्धत्वाभावे परत्वाज्जश्त्वे ततो द्वित्वे एकधकारकं दकारद्वयघटितं रूपं जायते, जश्त्वस्यासिद्धत्वे तु पूर्वं द्वित्वे ततो धस्य जश्त्वे एकदकारघटितद्विधकारकं रूपं जायते यद्यपि; तथापि तयोरूपयोरुच्चारणे विशेषाभावेन नास्याः प्रवृत्तिः । अतः सिद्धान्तकौमुद्यामुक्तम्=सति द्वित्वे लोपे चासति त्रिधम्, असति लोपे द्वित्वे चासति द्वित्वलोपयो र्वा सतो द्विधम् इत्यादि कथनं नानुपपन्नम् ॥

इयं च वर्णद्वित्वेऽपि प्रवर्तत एव । अतएव वाक्क् इत्यादौ ककारद्वयोदाहरणपरकम् भाष्यं संगच्छते । अन्यथा वर्णद्वित्वेऽस्या अप्रवृत्तौ चर्त्वस्यासिद्धत्वाद् गस्यैव द्वित्वे परस्य गकारस्य 'वावसाने' ८।४।५६ इति चर्त्वेऽपि पूर्वस्य गकारस्य श्रवणापत्त्या तद्भाष्यासंगतेः 'खरि च' ८।४।५३ इति चर्त्वेन तत्र ककार इति तु न वाच्यम् तद्दृष्ट्यावसानचर्त्वस्यासिद्धत्वेन खर्परत्वाभावात् ।

"सर्वस्य द्वे" ८।१।१ इति सूत्रे कात्यायनवचनमेतत् परिभाषा रूपेण पठ्यते इति पुरुषोत्तम देवः (परिभाषा सं ११०)

इदं च (पूर्वत्रासिद्धीयमद्विर्वचने (प० सं० ९९) सर्वस्य द्वे ८।१।१ इति

---

यह परिभाषा वर्णद्वित्व में नहीं प्रवृत्त होती है, ऐसा मानना गलत होगा, भाष्यकार ने 'वाक्क्' में दो ककारवाला रूप लिखा है, वह इसी परिभाषा के बल पर लिखा है । अन्यथा 'अवसाने' चर्त्व की असिद्धता करके 'ग्' को द्वित्व होता और गकार को अवसान चर्त्व करने पर भी पूर्वगकार का श्रवण हो ही जाता । पूर्व गकार को 'खरि च' ८।४।५५ से चर्त्व करके ककार नहीं किया जा सकता; क्योंकि 'खरि च' ८।४।५५ की दृष्टि में बेचारा "वावसाने' ८।४।५६ असिद्ध है । इसलिए वह 'खरि च' के लिए अवसान 'क', 'क' नहीं किन्तु 'ग' है; इसलिए बहाँ, खर् परत्व कहाँ ?

'सर्वस्य द्वे' ८।१।१ सूत्र के भाष्य में कात्यायन का वचन परिभाषा के रूप में पढ़ा गया है, यह पुरुषोत्तमदेव ने कहा है ।

'सर्वस्य द्वे' सूत्र का भाष्य जहाँ इस परिभाषा की स्पष्ट चर्चा है, दुर्गव्याख्या में उद्धृत है ।

॥ इति शिवम् १२७ ॥

ननु गोष्वश्वेषु च स्वामीत्यादिवद् गोष्वश्वानां च स्वामीत्यपि स्यात् 'स्वामीश्वर' इति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह—

---

सूत्रे कात्यायनवाक्यं परिभाषारूपेण पठ्यते । तत्रैव सूत्रे मत्वर्थीयाच्प्रत्ययान्तः सर्वशब्दः ज्ञापकः इत्यन्ये । अत्रात् अर्शआद्यच्प्रत्ययं कृत्वा सर्वस्य द्वे" इत्यत्र सर्वशब्दः सिद्धः । तेन सर्वस्येत्यस्य सर्वकार्यविशिष्टस्येत्यर्थः । तद्धि यादृशकार्यविशिष्टस्य द्वित्वं न प्राप्नोति, तादृशकार्यविशिष्टस्य द्वित्वार्थं क्रियते । पूर्वत्रासिद्धीयकार्यविशिष्टस्य द्वित्वं न प्राप्नोति पूर्वत्रासिद्धम् ८।२।१ इत्यसिद्धत्वात्, तद्वारणार्थं क्रियमाणं सर्वग्रहणं ज्ञापकमिति तेषामभिप्रायः ।।

न मुने ८।२।३ इत्यत्र नेति योगविभागेन संग्राह्येयमित्यपरे ।

"सुषुपुयतुः" इत्यत्र किति लिटि परत्वात्संप्रसारणे "सुविनिर् ८।३।८८ षत्वे च कृते द्वित्वम् । द्वित्वे कर्तव्ये षत्वस्यासिद्धत्वाभावः, अस्याः परिभाषाया एव फलम् ।।

इयं चानित्या "उभौ साभ्यासस्य ८।४।२१ इति लिङ्गात् । अन्यथा "अनितेः' ८।४।१९ इत्यनेन णत्वं कृत्वा द्वित्वे प्राणिणत् प्राणिणिषतोत्यादि सिद्धे सूत्रं व्यर्थमेव स्यात् । अनित्यत्वे स्वीकृते तु अस्या अप्रवृत्त्या पूर्वत्रासिद्धमित्यनेन णत्वस्यासिद्ध्या द्वित्वे प्र+आनिनि अत् इत्यत्र साभ्यासस्य णत्वार्थं सूत्रं सफलम् इति । अनित्यत्वफलम् उर्णुनाव इत्यादौ णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वं' "नन्द्रासंयोगादयः ६।१।३ इति निषेधात् ।

सर्वस्य द्वे ८।१।१ इति सूत्रे भाष्ये स्पष्टेयम् तथाहि—"यदि तर्हि स्थाने द्विर्वचनं—राजा-राजा वाग्वाक्—पदस्येति नलोपादीनि न सिद्ध्यन्ति । इदमिह संप्रधार्यम्-द्विर्वचनं क्रियताम् नलोपादीनीति । किमत्र कर्तव्यम् । परत्वान्नलोपादीनि । पूर्वत्रासिद्धे नलोपादीनि सिद्ध्यसिद्ध्योश्च नास्ति संप्रधारणा एवं तर्हि पूर्वत्रासिद्धीयमद्विर्वचन इति वक्ष्यामि । तच्चावश्यं वक्तव्यम् । किं प्रयोजनम् ? विभाषिताः प्रयोजयन्ति—द्रोग्धा—द्रोग्धा, द्रोढा—द्रोढेति ।

इति शिवम् १२७

## एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ।।१२८।।

"स्वामीश्वराधिपति"—२. ३. ३९ इत्यनेन स्वामीश्वरादिभिः सप्तभिः शब्दैर्योगे षष्ठीसप्तम्यौ विधीयेते । तेन गवां स्वामी देवदत्तः गोषु वा स्वामीति प्रयोगः जायते । यदि च "द्वयोर्वस्तुनोः स्वामीति विवक्ष्यते तदा गवामश्वानां च स्वामी, गोष्वश्वेषु वा स्वामीति प्रयोगो जायते । किन्तु यदानेन षष्ठीसप्तम्योरुभयोर्विधानमस्ति तदा सहप्रयुक्ते एकत्र षष्ठी, अपरत्र च सप्तमी कथं न ? गोष्वश्वेषु

## एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२८ ॥

स्वामीति यथा प्राप्नोति गवामश्वेषु च स्वामीत्यपीत्यत आह—**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति** इति ।

चरितः प्रयोगः (सहप्रयोगः) एकस्या आकृतेर्भविष्यति, द्वितीयस्यास्तृतीयस्याश्च आकृतेः प्रयोगो न भविष्यति । यादृशाकृतिकः शब्दः यदर्थबोधनाय पूर्वमुपक्रान्तस्तदाकृतिभिन्नाकृतिकः शब्दस्तदर्थबोधनाय प्रयुक्तो न भविष्यति इति परिभाषार्थः । अथवा यतोऽत इति शेषो मन्तव्यः । इत्थं यतः अत इत्यनयोरध्याहारेण- "यतः एकस्या आकृतेः स्वरूपस्य प्रयोगश्चरितः प्रक्रान्तः अतो द्वितीयस्यास्तृतीयाश्च नेत्यर्थः । चकारो हेतौ प्रयुक्त एव तादृशाध्याहारसाधक इति । आकृतिरिह श्रूयमाणशब्दानुपूर्वी, प्रयुज्यमानशब्दानुपूर्वी वा न गृह्यते किन्तु श्रावणप्रत्यक्षविषयतावच्छेदको धर्मो गृह्यते । स चात्र गवां स्वामीत्यत्र षष्ठी, तस्याः प्रकरणप्रक्रान्तत्वात्, अतोऽश्वेषु इति सप्तमी न भविष्यति ।

व्याख्यानाच्चार्थवद्विषयिकेयम् ॥

---

**एकस्या आकृतेश्चरितः × × × न भविष्यति १२८ ।**

जैसे 'गोषु अश्वेषु च स्वामी' यह प्रयोग होता है, उसी तरह गोष्वश्वानां च स्वामी यह प्रयोग भी होगा; क्योंकि "स्वामीश्वराधिपति" २. ३. ३९ इस सूत्र से षष्ठी और सप्तमी दोनों का विधान किया गया है । इसलिए "गो" शब्द से सप्तमी और अश्व शब्द से षष्ठी हो जायगी । इस दोष के निवारण के लिए परिभाषा मानते हैं "**एकस्या आकृतेश्चरितः प्रयोगः द्वितीयस्यास्तृतीयस्याश्च न भविष्यति**" । यहाँ आकृति का अर्थ सुनाई पड़ने वाला आकार है । चरितः प्रयोगः का तात्पर्य है सहप्रयोग । व्याख्यानविशेष के कारण यह भी सिद्ध है कि इस का विषय अर्थवान् है । इस तरह इसका तात्पर्य यह हुआ सि जिस अर्थ की प्रतीति कराने के लिए पहले किसी शब्द विशेष का प्रयोग किया गया है; उस अर्थ के बोध के लिए यदि शब्दान्तर के प्रयोग की आवश्यकता हो, तो जहाँ तक सम्भव हो, पूर्व प्रयुक्त शब्द से मिलते-जुलते ध्वनिवाले शब्द का ही प्रयोग करना चाहिए । इसलिए पहले यदि 'गोषु' कहा गया है; तो उसके साथ मेल बिठाने के लिए 'अश्वेषु' ही कहा जायगा । यदि 'गवाम्' कहा गया है तो 'अश्वानान्' का ही प्रयोग होना उचित है । अन्यथा भग्नप्रक्रमता दोष आ जायगा । यह परिभाषा अर्थवान् शब्दों में ही प्रवृत्त होती है । इसीलिए "सुध्युपास्यः" में अनर्थक वर्ण ध और य के विषय में प्रवृत्त नहीं हुई । अतः 'द्विधम्' 'एकयम्' इत्यादि कथन असंगत नहीं हुआ । अन्यथा धकार यदि द्वित्व धर्मवान् है तो यकार भी द्वित्वधर्मवान् ही प्रयुक्त हो, यही उचित था । इसी आशय

**यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः । 'कृञ् चानुप्र' इति सूत्रे भाष्ये स्पष्टेयम् ॥१२८॥**

---

परिभाषयानया स्वस्वामिभावसम्बन्धे गवां स्वामीति षष्ठ्या प्रतिपादयितुमुपक्रान्ते, अश्वस्वामित्वप्रतिपादनाय षष्ठ्येव भवति अश्वानाञ्चेति । अश्वेष्विति शब्दान्तरप्रयोगेऽर्थान्तरसंशयप्रसङ्गात् ।—तदुक्तं यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोऽयं न्यायः इति । प्रकृते च गोष्वश्वानाञ्च स्वामीत्युक्तेश्वानामपि स्वामी गोषु वर्तत इतिभिन्नार्थसंभावनास्तीति भवति परिभाषाप्राप्तिः ।

असंदिग्धार्थप्रतिपादकोपादाने संभवति संदिग्धार्थप्रयोगस्याकर्तव्यत्वादुपस्थितायाः षष्ठ्या एवान्यत्रापि प्रयोगनिर्वाहकत्वोपपत्तेः षष्ठ्येव ।

"उपस्थितिलाघवमत्र बीजम्" अन्यत्र-उद्योतादौ विस्तरः । कृञ्चानुप्रयुज्यते ३. १. ४० इति सूत्रे भाष्ये स्पष्टेयम् ।। तथाहि—'लिट् परार्थं वा' (वा० ६) लिट् परार्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । लिट् परस्यैवानुप्रयोगो यथा स्यादन्यपरस्य मा भूदिति ।।.........."एकस्या आकृतेश्चरितः प्रयोगोद्वितीयस्यास्तृतीयस्याश्च न भविष्यति" । तद्यथा-गोषु स्वामी अश्वेषु चेति । न हि भवति गोषु वाश्वानां (चाश्वानां) च स्वामीति ।।

अत्र कैयटः "वेदलोकप्रसिद्धोऽयं न्यायः । यथाहि-खादिरे बध्नाति, पालाशे बध्नाति, इत्यादौ विकल्पितेषु साधनेषु येनैव साधनेनोपक्रान्ता क्रिया तेनैव निर्वाह्यते । तत्र यदि कदाचित् खदिरस्य भ्रेषो भवति तदा तत्सदृशः बुबुरः सादृश्यात् खदिरबुद्ध्या प्रतिनिधीयते न तु पलाशः परिगृह्यते । साधनभेदेन क्रियान्यत्वादुपक्रान्तक्रियाऽनिर्वाहप्रसङ्गात् । लोकेऽपि यदा स्वस्वामिभावप्रतिपादनाय गवां स्वामीति षष्ठ्युपक्रम्येत, तदाश्वानां चेत्यत्रापि तत्प्रतिपादनाय सैव निर्वाह्यते । अन्यथाऽश्वेषु चेत्युक्तेऽधिकरणप्रतिपत्तिरपि स्यादश्वेषु च तिष्ठतीति । तस्माद्ययोऽर्थो यथा शब्दाकृत्या प्रतिपादयितुमुपक्रान्तस्तथैवासौ निर्वाह्यो नत्वन्यथाशब्दाकृत्येत्यर्थः । एवं हि प्रतिपत्तिलाघवं भवति ।। इत्याह

---

से मूल में कहा गया है कि जहाँ अन्य आकृति करने में भिन्नार्थक होने की सम्भावना हो, यह न्याय वहीं लगता है ।

यदि 'गोषु अश्वानां स्वामी' जैसा भिन्न विभक्तिक प्रयोग करें तो गोसमूह में अश्वों का स्वामी है, इस भिन्नार्थ की प्रतीति की सम्भावना है इसलिए यह न्याय लगता है ।

'कृञ्चानु'—३. १. ४० सूत्र के भाष्य में पतञ्जलि ने इस परिभाषा का हवाला देकर कहा है कि "गोषु स्वामी अश्वेषु च" की जगह "गोषु स्वामी चाश्वानाम्" यह प्रयोग नहीं होगा । भाष्य का अविकल रूप 'दुर्गा व्याख्या में देखें । १२८

ननु विव्याधेत्यादौ परत्वा 'हलादिः शेषे' वस्य संप्रसारणं स्यादत आह—

**सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२९ ॥**

**तदाश्रयं संप्रसारणाच्च इति पूर्वरूपम् ।**

---

अत्र **कैयटे** परिभाषेयं बीजप्रतिपादनादिना स्पष्टतः स्वीकृता इति ।

आमन्तस्य "ईहाम्" इत्यादेर्लिडन्तत्वेनानया परिभाषया ततोऽनुप्रयुज्यमाना अपि कृभ्वस्तयो लिट्परा एव भविष्यन्तीति व्यर्थमत्र लिड्ग्रहणमिति स्वीकृत्य लिट्परार्थञ्चेति वार्तिकप्रत्याख्यानपरकभाष्येणैषा स्पष्टतः स्वीकृतैवेति शिवम् ॥ १२८ ॥

**सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ॥१२९॥**

व्यध् धातोर्लिटि तिपि तस्य स्थाने णलि व्यध् अ इति स्थिते द्वित्वेऽभ्यासत्वे व्यध् व्यध् अ इतिस्थिते लिट्यभ्यासस्योभयेषाम् ६. १. १७ इति सम्प्रसारणे सम्प्रसारणाच्च ६. १. १०८ इति पूर्वरूपे विध् व्यध् अ इति स्थिते हलादिशेषे 'अत उपधाया वृद्धौ' विव्याधेति सिद्ध्यति । नन्वत्र व्यध् व्यध् इत्यवस्थायामभ्यासत्वे कृते 'हलादिः शेषः' ७. ४. ६० इति हलादिशेषे 'लिट्यभ्यासस्य' ६. १. १७ इति सम्प्रसारणे च प्राप्ते परत्वाद्धलादिशेषेण यस्य लोपे वस्य शेषे 'व व्यध् अ' इतिस्थिते 'लिट्यभ्यासस्य' इति सम्प्रसारणे पूर्वरूपे उव्याध इति स्यादत आह '**सम्प्रसारणं तदाश्रयं च कार्यं बलवत्**' इति । "सम्प्रसारणं तदाश्रयं (सम्प्रसारणाच्च ६. १. १०८ इतिपूर्वरूपम्) च कार्यं बलवत् भवतीति भावः ॥ तेन हलादिशेषं बाधित्वा प्रथमं सम्प्रसारणे तन्मूलकपूर्वरूपे च कृते विध् व्यध् अ इत्यवस्थायाम् हलादिशेषे कृते रूपं सिद्ध्यति ।

प्राचीनास्तु "लिट्यभ्यासस्योभयेषाम्" ६. १. १७ इत्यत्रोभयेषां ग्रहणमत्र ज्ञापकमिति प्राहुः । तद्धि वव्रश्चेत्यादौ हलादिशेषं बाधित्वा सम्प्रसारणं यथा स्यादित्येवमर्थं कृतम् । तेन कार्यान्तरं बाधित्वा सम्प्रसारणस्य प्रवर्तनादस्या अस्तित्वं गमयति । पुनश्चास्याः प्रत्याख्यानमुक्तम् । जहुवतुरित्यादौ पूर्वविप्रतिषेधेन सम्प्रसार-

---

**सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ॥१२९॥**

"विव्याध' यहाँ पर द्वित्व करने के बाद अभ्यास संज्ञा होने पर 'हलादिः शेषः' ७. ४. ६० से हलादिशेष और "लिट्यभ्यासस्योभयेषाम्" ६. ४. १७ से सम्प्रसारण की प्राप्ति हुई ऐसी स्थिति में परत्वात् 'हलादिशेष' होने पर य और ध का लोप हो जायगा फिर 'व' को सम्प्रसारण होगा तो विव्याध नहीं बनेगा । इस दोष के निवारण के लिए कहते हैं **सम्प्रसारणं तदाश्रयं च**...... । सम्प्रसारण और सम्प्रसारणाश्रित कार्य बलवान् होते हैं। यहाँ पर "तदाश्रय" का तात्पर्य है

**वस्तुतो 'लिट्यभ्यासस्य' इति सूत्रे उभयेषांग्रहणस्योभयेषां संप्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति 'लिट्यभ्यासस्ये'ति सूत्रे भाष्ये स्पष्टम्। फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा। णौ च 'संश्चङोः' इत्यादौ 'संश्चङो'-रित्यादिविषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः॥ १२९॥**

---

णस्य सम्प्रसारणाश्रयस्य च सिद्धिः। किन्तु व्याख्यानात् परिभाषाश्रयणमेव लघित्-त्याहुः **सीरदेवादयः** (सीरदेवपरिभाषा वृ० वृ० प० सं० ५९)

**न्यासकारस्तु** "सहिवहोरोदवर्णस्य" ६. ३. ११२ इति सूत्रस्थावर्णग्रहणमत्र ज्ञापकम्। तद्धि ऊढः ऊढवान् इत्यत्र सम्प्रसारणे पूर्वरूपत्वे चोकारस्यौत्त्वं मा भूदित्यर्थं कृतम्। अस्याः परिभाषाया अभावे सम्प्रसारणात् प्रागेव परत्वात् 'न मुने' ६.३.११२ इति योगविभागेन सिद्धेषु ऊढ इत्यादौ ढत्वधत्वष्टुत्वढलोपेषु ततः सम्प्रसारण-पूर्वरूपत्वाभ्यां परत्वादोत्त्वे कृते 'वोढ' वोढवान् इतिस्थिते सम्प्रसारणे पूर्वरूपत्वे ढ्लोपदीर्घे न किञ्चिदनिष्टं प्रसज्यत इत्येतदवर्णग्रहणंपरिभाषाज्ञापकमित्याह॥

इयं सविशेषा क्वचिदेव प्रवर्तते इति **पुरुषोत्तमदेवः** (परिभाषा १०३) तेन ब्रह्मजिनातीति ब्रह्मज्य इति "आतोऽनुपसर्गेकः" ३. २. ३ इति, अह्वः प्रह्व इत्यत्र 'आतश्चोपसर्गे' ३. १. १३६ इति क-प्रत्यये सम्प्रसारणं पूर्वरूपं च बाधित्वा आकार-लोपः। तस्यासिद्धत्वादियङुवङौ न भवतः। अन्यथा ब्रह्मजियः, आहुवः प्रहुव इति-स्यादित्याहुः।

---

"सम्प्रसारणाच्च" ६. १. १०८ से पूर्वरूप। वस्तुतः यदि विचारपूर्वक देखा जाय तो यह परिभाषा व्यर्थ है; क्योंकि भाष्यकार ने कहा है कि 'लिट्यभ्यासस्योभयेषाम्" ६. ४. १७ सूत्र में "उभयेषाम्" का ग्रहण इसलिए किया गया है कि दोनों (वच्यादि और ग्रह्यादि) को सम्प्रसारण ही हो। इससे सम्प्रसारण होने के कारण विव्याध इत्यादि प्रयोग बन ही जायेंगे यह परिभाषा व्यर्थ है। यह बात 'लिट्यभ्या-सस्य, इस सूत्र के भाष्य में स्पष्ट है। यदि यह कहा जाय कि वच्यादि और ग्रह्यादि में पठित धातुओं से आने वाले दोषों का निवारण 'उभयेषां' ग्रहण से हो जाने पर भी "जहुवतुः" में (ह्वेञ् धातु से निष्पन्न होने वाले रूप में) 'अभ्यस्तस्य च' ६.१.३३ से संप्रसारण और पूर्वरूप को बाधकर परत्वात् "आतो लोपः" ६.४.६४ सूत्र से आकार का लोप हो जायगा और श्वि धातु से लिट्लकार के प्रथम पुरुष द्विवचन के रूप "शुशुवतुः" में 'विभाषा श्वेः' ६. १. ३० से प्राप्त सम्प्रसारण को बाधकर इयङ् हो जायगा, इसलिए यह परिभाषा आवश्यक है तो यह युक्तिसंगत नहीं होगा; क्योंकि नित्य और अन्तरङ्ग होने के कारण पहले सम्प्रसारण और पूर्वरूप ही होंगे। इसलिए इस परिभाषा के जितने अन्य प्रयोजन दिखाये जा सकते हैं; उनकी सिद्धि हो ही

**नागेशस्तु** "लिटयभ्यासस्योभयेषाम् ६. १. १७ इति सूत्रे वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे कृतेन उभयेषामिति ग्रहणेन सामर्थ्यात् सम्प्रसारणमेव प्रथमं सर्वस्मात् कार्यात् कार्यमित्यर्थात् विव्याधेत्यादि प्रयोजनं सिद्धम् । अतः नैषा परिभाषा स्वीकार्येति वदति **वस्तुत इत्यादिना** । नेदं मम कपोलकल्पितं किन्तु लिट्यभ्यासस्येति सूत्रे भाष्येऽप्यस्या वैयर्थ्यं प्रतिपादितम् । ननु तेन वच्यादिग्रह्यादिविषयलक्ष्याणां विव्याध वव्रश्चेत्यादीनां सिद्धिसम्भवेऽपि ह्वेञ्धातोर्निष्पाद्यमाने जुहुवतुरित्यादौ 'अभ्यस्तस्य च' ६. १. ३३ इति प्राप्तसम्प्रसारणं पूर्वरूपं च बाधित्वा परत्वादालोपापत्त्या दोषापत्तिः, श्विधातुनिष्पन्ने शुशुवतुरित्यादौ 'विभाषा श्वेः ६. १. ३० इति बाधित्वा इयङापत्तिरिति चेन्न एषां फलानां सिद्धेरपि परिभाषां विनैव अत्रैव भाष्ये दर्शितत्वात् । तत्र हि प्रोक्तम् नित्यत्वादन्तरङ्गत्वाच्च तत्तत्कार्यं बाधित्वा सम्प्रसारणपूर्वरूपत्वयोरेव प्रवृत्या दोषाभाव इति परिभाषाया नोपयोग इति । तदाह मूले—**फलान्तराण्यथासिद्धिरपीत्यादि** ।

ननु श्विधातोर्णिचि णिजन्ताल्लुङि चङि द्वित्वे वृद्धेरायादेशस्य चान्तरङ्गत्वात् सम्प्रसारणात् पूर्वं प्रवृत्तौ अशूशवदित्यासिद्धिः स्यादिति चेन्न तत्र संश्चङो-रित्यत्र विषयसप्तमीस्वीकारेण चङ्परकणिविषये एव सम्प्रसारणमिति स्वीकारेण द्वित्वात् प्राक्संप्रसारणे पूर्वरूपत्वे ततो णिचि चङि द्वित्वे, वृद्धौ आवादेशे "णौचङि-७. ४. १ इति ह्रस्वे सन्वद्भावेऽभ्यासस्य 'दीर्घो लघोः' ७. ४. ९४ इति दीर्घे अशूशवदिति सिद्धेः । एवं सन्यपि शुशावयिषतीत्यत्र सन्परकणिज्विषये द्वित्वात् पूर्वं सम्प्रसारणे पूर्वरूपत्वे च जाते णिचि सनि शु इत्यस्य द्वित्वे उत्तरखण्डे वृद्धावावादेशे च रूपसिद्धिरिति । तदाह—**णौ च संश्चङोः ६. १. ३१ इत्यादौ संश्चङोरित्यादि विषयसप्तमीत्यादि** । आदिना "ह्वः सम्प्रसारणम्" ६. १. ३२ इत्यस्य संग्रहः । तेन

---

जायगी फलान्तराण्यथासिद्धि (अन्य फलों के और उपायों से सिद्ध होने के उपाय) भी वहीं भाष्य में दिखायी गयी है । "णौ च सँश्चङोः" ६. १. ३१ में "सँश्चङोः" यह विषय-सप्तमी है । इसलिए अन्तर्भूत निमित्तक होने के कारण पहले अन्तरङ्गत्वात् सम्प्रसारण हो जायगा और 'अशूशवत्' और शुशावयिषति ये रूप सिद्ध हो जायेंगे । स्वपिस्यमिव्येञां यङि ६. १. १९ में "यङि" में विषयसप्तमी मानने पर यङ् के विषय में ही सम्प्रसारण होने से 'वेवीयते' बन जायगा । विषयसप्तमी नहीं मानने की स्थिति में अन्तरङ्गत्वात् द्वित्व हो जाता और उत्तर खण्ड को सम्प्रसारण करने पर "वेवीयते" इसकी असिद्धि हो जाती । इसलिए इस परिभाषा के बिना भी काम चल सकता है । इस सम्बन्ध में अन्यत्र (उद्योत में) विस्तार पूर्वक विचार किया गया है । इति शिवम् १२६

अजूहवत् इति चङ्परकणौ, जुहावयिषतीति सन्परकणौ च विषयसप्तम्याश्रयणान्न दोषः । एवं "स्वपिस्यमिव्येञां यङि" ६. १. १९ इत्यादौ यङि विषयसप्तमीमाश्रित्य यङ उत्पत्तेः पूर्वमेव स्वप्धातोः तद्विषये ऽन्तरङ्गत्वात् सम्प्रसारणपूर्वरूपत्वे कृते, यङि सुप् इत्यस्य द्वित्वे सोषुप्यते इत्यादि सिद्ध्यतीति परिभाषाया नोपयोग इति । अन्यत्र उद्योतादौ विस्तरः । वस्तुतोऽभ्यासविकारेषु (परि० सं० ६७) इति बाध्यबाधक-भावाभावेनेष्टानुरोधेन कार्यप्रवृत्त्येष्टसिद्ध्या व्यधादौ न दोष इत्यपि बोद्धयम् ।

"लिट्यभ्यासस्योभयेषाम् ६. १. १७ इति सूत्रस्थं भाष्यं यथा—

इदं तर्ह्युभयेषांग्रहणस्य प्रयोजनम्-उभयेषामभ्यासस्य सम्प्रसारणमेव यथा स्याद् यदन्यत्प्राप्नोति तन्माभूदिति । किं चान्यत्प्राप्नोति ? हलादिः शेषः । अभ्या-सस्य संप्रसारणम् हलादिशेषाद् विप्रतिषेधेनेति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥

"अभ्याससम्प्रसारणं हलादिशेषाद्विप्रतिषेधेन" (वा० १) विव्याध, विव्य-धिथ । अभ्याससंप्रसारणं भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ॥

"न वा सम्प्रसारणाश्रयबलीयस्त्वादन्यत्रापि" (वा० २) न वा वक्तव्यः किं कारणं सम्प्रसारणाश्रयस्य बलीयस्त्वादन्यत्रापि सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम् । अन्यत्रापि नावश्यमिहैव वक्तव्यम् ॥ किं प्रयोजनम् ?

"प्रयोजनं रमाल्लोपेयङ्यणः" (वा० ३) रम्-भृष्टः भृष्टवान् । सम्प्रसारणं च प्राप्नोति रम्भावश्च । परत्वाद्रम्भावः स्यात् । सम्प्रसारणं बलीयो भवतीति वक्तव्यम्, सम्प्रसारणं यथा स्यात् । आल्लोपः—जुहुवतुः, जुहुवुः । सम्प्रसारणञ्च प्राप्नोत्याल्लोपश्च । परत्वादाल्लोपः स्यात् । सम्प्रसारणं बलीयो भवतीति वक्तव्यम्; सम्प्रसारणं यथा स्यात् ॥ सम्प्रसारणे कृते पूर्वत्वं च प्राप्नोत्याकारलोपश्च । परत्वा-दाल्लोपः स्यात् । सम्प्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम्, पूर्वत्वं यथा स्यात् । इयङ्-शुशुवतुः, शुशुवुः । सम्प्रसारणञ्च प्राप्नोति, इयङादेशश्च । परत्वादियङादेशः स्यात् । सम्प्रसारणं बलीयो भवतीति वक्तव्यम् सम्प्रसारणं यथा स्यात् ॥

यण्-सम्प्रसारणे कृते पूर्वत्वं च प्राप्नोति । यणादेशश्च । परत्वाद्यणादेशः स्यात् सम्प्रसारणाश्रयं च बलीयो भवतीति वक्तव्यं पूर्वत्वं यथा स्यात् ॥

नैतानि सन्ति प्रयोजनानि । यत्तावदुच्यते रम् इति । इदमिह सम्प्रधार्यम् रम्भावः क्रियतां सम्प्रसारणमिति परत्वाद्रम्भावः । नित्यं सम्प्रसारणम्, कृतेऽपि रम्भावे प्राप्नोत्यकृतेऽपि............ । आल्लोपेयङ्यणः इति । नित्यं सम्प्रसारणम्, अन्तरङ्गं पूर्वत्वम् । तदनन्यार्थं सम्प्रसारणं तदाश्रयं च बलीयो भवतीति वक्तव्यम्, पूर्वविप्रतिषेधो वा वक्तव्यः । उभयं न वक्तव्यम् उक्तमत्रोभयेषांग्रहणस्य प्रयोजनम्-उभयेषामभ्यासस्य सम्प्रसारणमेव यथा स्यात् यदन्यत् प्राप्नोति तन्माभूदिति ॥

**यत्तु क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १३० ॥**

**तेन 'निसमुपविभ्यो ह्वः' इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥१३०॥**

णौ च संश्चङोः इत्यादौ संश्चङोरित्यादिविषयसप्तमीति यन्मूले नागेशेनोक्तं तदपि भाष्ये ह्वः सम्प्रसारणम् ६. १. ३२ इति सूत्रसन्दर्भे वर्णितम् । तथाहि— "णौ च संश्चङ्विषयार्थः । णौ च संश्चङ्विषये ह्वः सम्प्रसारणं यथा स्यात्-जुहावयिषति अजूहवत् इत्यादि ।

तेन परिभाषाप्रयोजनानामन्यथासिद्ध्या नागेशोक्तः परिभाषाया अस्वीकारो भाष्यसम्मत इति शिवम् ॥१२९॥

**यत्तु क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥१३०॥**

परिभाषेयं सीरदेवेन स्वीकृता खण्डिता च नागेशात्पूर्ववर्तिभ्यां नीलकण्ठदीक्षितहरिभास्कराग्निहोत्रिमहोदयाभ्याम् । तत्कृतखण्डनमेव नागेशेनानूक्तम् तथाहि— सीरदेवः स्वबृहत्परिभाषावृत्तौ (प० सं० ४१) **क्वचिद्विकृतिरपि प्रकृतिं गृह्णाति ।** तेन निसमुपविभ्योह्वः १. ३. ३० इति ह्वाधातोरात्मनेपदमुच्यमानं प्रकृतिभूतादपि भवति । निह्वयते । संह्वयते । ज्ञापकञ्चात्र' न व्यो लिटि ६. १. ४६ इति विकृतस्य व्येञित्यस्य निर्देशेन व्येञः आत्वनिषेधविधानम् । अत्राहुः न व्यो लिटि ६. १. ४६ इत्यत्र 'निसमुपविभ्यो ह्वः' १. ३. ३० इत्यत्र चैकारान्ताया एव प्रकृतेरुपादानम् । विकृतिस्तु लक्षणगतेनात्वेन । तस्मात् दाधा घ्वदाप्' १. १. २ इत्यत्र दाधाग्रहणे प्रकृतिभूतयोरपि देङ्धेटोर्ग्रहणम् । प्रणिदयते, प्रणिधयतीति ॥ अत्र 'नेर्गदनद ८. ४. १७— इति णत्वम् ।

नीलकण्ठदीक्षितस्तु—

क्वचिद्विकृतिरपि प्रकृतिं गृह्णाति (प० सं० १३२)

इयं निर्मूला, भाष्याव्यवहृता च । "निसमुपविभ्यो ह्वः" १. ३. ३० इत्यादौ ह्वेञ एवानुकरणे लक्षणवशसम्पन्नमात्वम् । अशीतीति प्रसज्यप्रतिषेधः इति ।

**क्वचिद्विकृतिः·········॥१३०॥**

**औपदेशिकप्रायोगिक···········ग्रहणम् ॥१३१॥**

यह परिभाषा सीरदेव ने मानी है । नागेश के पूर्ववर्ती नीलकण्ठदीक्षित और हरिभास्कर ने भी इसका खण्डन किया है । इसका अर्थ है कहीं विकृति के ग्रहण में प्रकृति का ग्रहण होता है (क्वचिद् विकृतिः प्रकृतिं गृह्णाति" ऐसा जो माना गया है और उसके फल के रूप में यह कहा गया है कि "निसमुपविभ्यो ह्वः" १. ३. ३० यहाँ विकृत ह्वा के ग्रहण से प्रकृति 'ह्वेञ' का ग्रहण हुआ । इसलिए 'ह्वः' विकृत पद से (ह्वे को आत्व करने से बने हुआ रूप ह्वा' के रूप 'ह्वः' से) 'ह्व' प्रकृति का भी ग्रहण हुआ । इसलिए 'निह्वातासे' की तरह निह्वयते में भी आत्मनेपद हुआ और

हरिभास्करस्तु=सीरदेवोक्तं ज्ञापकफलादिकं खण्डयित्वोपसंहारे प्रोक्तवान् "तस्मादियं परिभाषा मन्दप्रयोजनैवेति कृतबुद्धयो विदांकुर्वन्तु इति" (परिभाषा-भास्कर प० सं० ४३) नागेशस्तु "यत्तु निसमुपविभ्योह्वः १. ३. ३० इत्यत्र कृतात्व-स्यैव ह्वेञोऽनुकरणेन तस्यैव बोध्यतयोपस्थिते निह्वातासे इत्यादावेव आत्मनेपदं स्यात् निह्वयते इत्यादौ तु न स्यादतः क्वचिद्विकृतिः प्रकृतिं गृह्णातीति परिभाषा स्वीकर्तव्येति सीरदेवेनोक्तं तन्न, परिभाषाया निर्मूलत्वात, भाष्याव्यवहृतत्वाच्च। "न च विकृतिः प्रकृतिं गृह्णातीति 'ग्रहिज्या' ६. १. १६ इति सूत्रस्थभाष्येण परि-भाषायास्तद्विरुद्धार्थप्रतिपादिकायास्तिरस्काराच्च। तत्रैव तद्भाष्यं व्याचक्षाणेन कैय-टेन" प्रकृत्या विकृतिर्गृह्यते स्थानिवद्भावान्नतु विकृत्या प्रकृतिः भिन्नरूपत्वादिति परिभाषाया निर्मूलात्वस्य स्पष्टमुक्तत्वात्। नचैवं निसमुपविभ्यो ह्वः १. ३. ३० इत्यादौ कृतात्वविकृतिग्रहणेन प्रकृतेरग्रहणात्तत्रात्मनेपदानुपपत्तिरिति वाच्यम् तत्र ह्वेञ एवानुकरणम् इति स्वीकारेण निह्वयते इत्यत्रात्मनेपदसिद्धेः। निह्वातासे इत्यादौ आत्वे कृते स्थानिवद्भावेन ह्वेरूपत्वसम्पादनादात्मनेपदं स्यादेव। यथा च कैयटेनोक्तं—**प्रकृत्या विकृतिर्गृह्यते** स्थानिवत्वादिति। एवञ्च निह्वयते निह्वातासे इत्यादिसिद्धे परिभाषा व्यर्था।

नच ह्वेञोऽनुकरणे सूत्रे 'ह्व' इति रूपासिद्धिः, अशितीति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैव 'आदेच उपदेशेऽशिति' ६. १. ४५ इत्यात्वविधानेन तस्य च तत्राभावादिति वाच्यम् एकारान्तस्यैव 'ह्वे' इत्यस्यानुकरणं कृत्वा सूत्रे एव छन्दो-वत्सूत्राणि भवन्तीति न्यायेन सौत्रस्य छान्दसस्य आत्वस्य बाहुलकाद्विधानेन 'ह्व' इति रूपनिष्पत्तौ बाधकाभावात्। एवञ्च तत्र कृतात्वस्यानुकरणं न स्वीकर्तव्यम् किन्तु एकारान्तस्यैव सौत्रं च तत्रात्वं कल्पनीयम् उदीचां माङ इत्यत्र यथा। अन्ये तु कृतात्वस्यैवानुकरणमिति दुराग्रहे तु 'निह्वाता" इत्यादि प्रयोगस्थानामेव 'ह्वा' 'व्या' इत्यादीनामनुकरणेन "ह्वः व्यः" इत्यादिरूपाणां 'निसमुपविभ्यो ह्वः' १. ३. ३० 'न व्यो लिटि ६. १. ४६ इत्यादावुपपत्तिः, इत्थमात्वविषये एवात्मनेपदम्, एवञ्चात्मनेपदं तत्रैव स्याद्यत्र आत्वं सम्भवति तेन निह्वाता इत्यादावेवात्मनेपदम् स्वतः सिद्ध्यति। निह्वयते इत्यादावात्मनेपदन्तु प्रकृतिग्रहणं कृत्वा साध्यम् यथा 'नेर्गद- ८. ४. १७ इत्यत्र मार्थं प्रकृतिग्रहणं कृत्वा प्रणिमयते इत्यादौ णत्वं साध्यते। प्रयोगास्थस्यानुकरणपक्षः 'दाधा घ्वदाप्' १. १. २० इति सूत्रे भाष्ये आत्मभूताना-मियं संज्ञा क्रियते, सा आत्वभूतानामेव स्यात्, अनात्वभूतानां न स्यादतः प्रकृतिग्रहणं कर्तव्यम्' इत्याशयकेन वाक्येन प्रतिपादितः। तत्रैव कैयटेन आत्वभूतानामिति प्रतीक-मुपादाय प्रोक्तम्-भूता इति भवतेः प्राप्त्यर्थकस्य "आधृषाद्वा' इति विभाषितणिचः कर्तरि कर्मणि वा रूपम्। तेन आत्वं भूता आत्वेन वा भूताः आकारान्ता इत्यर्थः। न लक्षणेन कृतात्वा इति विज्ञेयम्। अस्यायमभिप्रायः एजन्तानुकरणे प्रमाणाभावात्

यथा—
औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।। १३१ ।।

प्रक्रियागौरवाच्च प्रयोग एव ये आकारान्ता प्रयुज्यन्ते तदनुकरणानामयमेकशेष निर्देश इति ।।

नागेशेनेयं परिभाषा यत्तु इत्यादिनोपक्रम्य "इत्यन्ये" इत्यन्तेन ग्रन्थेन खण्डिता ।। इति शिवम् ।। १३० ।।

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।।१३१।।**

द्वितीया परिभाषा येह खण्डिता सास्ति—

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम्** इति । इयं परिभाषा व्याडिपुरुषोत्तमदेवसीरदेवनीलकण्ठदीक्षितहरिभास्करादिभिः परोक्तज्ञापकफलादि-प्रदर्शन पूर्वकं व्याख्याय ज्ञापकं निरस्य फलानि चान्यथा संसाध्य परिभाषेयं निष्फला निर्मूला चेति स्वीकृतम् स्वकीयपरिभाषाग्रन्थे (व्या० ५, पुरु० दे० ४, सीर ८१, नील. परि. वृ० १३५, हरिभास्क परि० भास्कर ८४)

तेषामयं सारः उपदेशे भवः, औपदेशिकः, प्रयोगे भवः प्रायोगिकः अध्यात्मा-दित्वाट्ठञ् । तयोर्मध्ये औपदेशिकस्यैव ग्रहणम् । तद्यथा तरप्तमपौ घः १. १. २२ इति प्रत्ययस्यैव तरपो घसंज्ञा ब्राह्मणितरेति । न तु तरतेरप्प्रत्यये कृते यः प्रयोगस्तस्य नदीतर इति । यदि तु स्याद्घसंज्ञा, 'घरूप-' ६. ४. ४३ इति ह्रस्वः प्रसज्येत ।

अत्र ज्ञापकं श्विग्रहणम् । यदि प्रायोगिकस्य ग्रहणमभविष्यत् तदा सम्प्र-सारणे कृते 'शूनः शूनवान्' इत्यत्रोगन्तत्वादेव 'श्र्युकः क्किति' ७. २. ११ इतीट्प्रति-षेधे सिद्धे तत्र श्विग्रहणं नाकरिष्यत् । व्यर्थं सत् श्विग्रहणं परिभाषां ज्ञापयति । ज्ञापिते परिभाषार्थे औपदेशिकोगन्तस्य ग्रहणेन शून इत्यत्रोपदेशे उगन्तत्वाभावेनोगन्त-लक्षणेट्प्रतिषेधाप्राप्त्या तदर्थं श्विग्रहणं सार्थकम् इति तन्न एतस्याः परिभाषायाः सत्वे तत्र तत्र 'उपदेशेऽजनुनासिक इत्' १. ३. २, स्यसिच्० ६. ४. ६२ इत्यादौ कृतमुपदेशग्रहणं व्यर्थम् स्यात् । श्र्युकः किति ७. २. ११ इत्यत्र "एकाच उपदेशे—" ७. २. १० इत्यत उपदेशग्रहणानुवृत्या उपदेश उगन्तादेव प्रतिषेधसम्भवात् 'शून' इत्यादौ तदभावादिण्निषेधाप्राप्त्या तदर्थं श्विग्रहणस्यावश्यकत्वेन ज्ञापकत्वासंभवः । नदीतर इति प्रयोजनमप्यन्यथासिद्धम् । 'तरप्तमपौ घः १. १. २२ इति तमपा साहचर्यात् लक्षणप्रतिपदोक्तपरिभाषया च प्रत्ययस्यैव तरपो ग्रहणात् ।

नीलकण्ठदीक्षितेन च स्पष्टमुक्तम्—इयं निर्मूला, तत्र तत्रोपदेशग्रहणं कुर्वतः सूत्रकृतोऽसंमता च । दादेर्धातो र्घः ८. २. ३२ इति सूत्रे 'अधोक्' इत्यादौ घत्वा-प्राप्तिसमाधानपरकभाष्यासंमता चेति ।

**तेन दादेर्धातोरित्यत्रौपदेशिकधातोरेव ग्रहणमिति तन्न, तयोर्निर्मूलत्वाद्भाष्याव्यवहृतत्वाच्च। न च विकृतिः प्रकृतिं गृह्णातीति 'ग्रहिज्या' इति सूत्रस्थभाष्येणाद्यायास्तिरस्कारोच्च। 'निसमुपविभ्यो ह्वः' इत्यादौ ह्वेञोऽनुकरणे सौत्रः प्रयोगः, आत्वविषय एवात्मनेपदं प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये।**

---

तदेतत् पूर्ववर्तिनां मतं नागेशेनेह परिभाषासन्दर्भे प्रदर्शितम् द्वितीयपरिभाषावादिनः कस्याप्याचार्यस्याज्ञातस्य मतेन परिभाषाफलमाह-तेन **दादेरिति**। परिभाषयाऽनया 'दादेर्धातो र्घः ८. २. ३२ इत्यत्रौपदेशिकस्य दादेर्ग्रहणात् अधोक् इत्यत्रागमे कृते सम्प्रत्यदादित्वेऽपि घत्वसिद्धिः दामलिहमात्मानमिच्छति दामलिह्यति ततः क्विप् 'दामलिट्' इत्यत्र दादित्वेऽपि औपदेशिकदादित्वाभावेन नातिव्याप्तिः॥

---

जो यह मानते हैं कि **औपदेशिक और प्रायोगिक में औपदेशिक का ही ग्रहण होता है**, इसलिए "दादेर्धातोर्घः" ८. २. ३२. यहाँ औपदेशिकदादि का ही ग्रहण होने से 'अधोक्' में घत्व हुआ और 'दामलिट्' में नहीं हुआ। ये दोनों मत या दोनों परिभाषाएँ निर्मूल होने तथा भाष्य में कहीं भी व्यवहृत नहीं होने के कारण अग्राह्य हैं। साथ साथ "ग्रहिज्या" ६. १. १६ सूत्र के भाष्य "न विकृतिः प्रकृतिं गृह्णाति" (विकृति प्रकृति का ग्रहण नहीं करा सकती) से पूर्वोक्त परिभाषा का तिरस्कार भी हुआ है। "निसमुपविभ्यो ह्वः १. ३. ३० इस सूत्र में "ह्वः" यह, ह्वेञ् के विकृत रूप 'ह्वा' से बना हुआ नहीं है, किन्तु यह ह्वेञ्" का ही अनुकरण है और सूत्र में छन्दोवत् प्रयोग होने के कारण आत्व हुआ है, जैसा कि "उदीचां माङः" में माङः में "माङः" यह निर्देश है। इस तरह "ह्वे" धातु को स्वतः आत्मनेपद हो जाने से "उपह्वयते" बन जायगा और आत्ववाले रूप में स्थानिवद्भाव से ह्वेञ्त्व लाकर आत्मनेपद हो जायगा और रूप की सिद्धि हो जायगी, यह परिभाषा व्यर्थ है।

किसी का मत है कि "आत्मनेपद वहीं हो जहाँ आत्त्व का विषय हो यह सूचित करने के लिए आत्व करके बने हुए रूप का सूत्र में अनुकरण किया गया है। यह बात घुसंज्ञा सूत्र के भाष्य में स्पष्ट रूप से कही गयी है। इस तरह उपह्वयते में आत्मनेपद नहीं होना ही उचित है। उसे परिभाषा का फल नहीं माना जा सकता"।

दूसरी परिभाषा (**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम्**" भी न सूत्रकार को स्वीकृत है और न वार्त्तिककार को। यदि उन्हें यह परिभाषा स्वीकृत होती तो "आदेच उपदेशेऽशिति" ६. १. ४५ "उपदेशेऽज्" १. ३. २ इत्यादि सूत्रों और "उपदेशनेऽजनुनासिक इत्" इत्यादि वार्तिकों में सूत्रकार और वार्तिककार उपदेश का ग्रहण क्यों करते। इस व्याकरण शास्त्र में सभी सानुबन्धकग्रहणों में रूप ही लिया

**अन्यापि तत्रतत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चासमता। इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, क उपदेशो नामेति घुसंज्ञासूत्रस्थभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासंमता च।**

---

तन्निरस्यति—अन्यापि तत्रेत्यादिना इत्यन्यत्र विस्तर इत्यन्तेन ग्रन्थेन। यदीयं परिभाषा स्यात्तदानयैव सर्वत्रोपदेशत्वे सिद्धे "उपदेशेऽज्—" १. ३. २. "स्यसिच्—" ६. ४. ४२ इत्यादौ सूत्रकारकृतानामुपदेशग्रहणानाम् वैयर्थ्यापत्तेः एवम् 'उपदेशिवद्भावो वाच्य' इत्यादिवार्तिकरचनाप्रयासं स्वीकुर्वतो वार्तिककारस्य प्रायसवैयर्थ्यं स्यात्। सूत्रकारवार्तिककारयोस्तत्तत्प्रयासेन ज्ञायते एषा परिभाषा नास्तीति।

"तरप्तमपौ घः" १. १. २२ इति सूत्रे "घसंज्ञायां नदीतरे प्रतिषेधः" इति वार्तिकं नद्यास्तरो नदीतर इत्यत्र घसंज्ञावारणाय कर्तव्य इत्युक्त्वा 'घसंज्ञायां नदीतरेऽप्रतिषेधः (अनर्थकः प्रतिषेधः) घसंज्ञा कस्मान्न भवति "तरप्ग्रहणं ह्यौपदेशिकम् इति वार्तिकेन औपदेशिकस्य तरपो ग्रहणम् न चैष (नदीतरे) उपदेशे तरप्शब्दः इति करणीयवार्तिकप्रत्याख्यानावसरे भाष्यकारेणोक्तम्-इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते-यत्रास्यैतद्रूपमिति। रूपनिग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोगः उपास्यते कोऽसौ? उपदेशो नाम" इति भाष्येण प्रायोगिकासंभवे औपदेशिकग्रहणम् इत्यर्थस्य लाभेनेयं परिभाषा भाष्यासंमता, परिभाषया औपदेशिकप्रायोगिकयोरुभयोः सत्वे औपदेशिकस्यैव ग्रहणमिति प्रतिपादनात्। इत्थं पकारानुबन्धसत्वे उपदेशे एव घसंज्ञा ब्राह्मणितरेत्यादौ स्थानिवद्भावेन सा। नदीतरेत्यादौ पानुबन्धाभावेन न दोष इतिभावः। "सर्वेषु सानुबन्धकग्रहणेष्वितिभाष्यं 'तरप्तमपौ घ' इति प्रकृत (प्रकरणागत) सूत्राभिप्रायकम् शब्दमात्रग्रहणेऽपि "स्वंरूपम्—"

---

जाता है। "जहां इसका यह रूप हो" वह लिया जाय। शब्द के रूप का ज्ञान लौकिक प्रयोग के बिना नहीं हो सकता, उस रूपनिग्राहक लौकिक प्रयोग में सानुबन्धकों का प्रयोग कहीं होता ही नहीं है, सर्वत्र अनुबन्धविनिर्मुक्त की ही उपस्थिति होती है, अतः सानुबन्धकों के ग्रहण में भी द्वितीय प्रयोगः—अनुबन्ध विनिर्मुक्त का ग्रहण स्वीकार करते हैं। यह उपदेश क्या चीज है अर्थात् उपदेश है 'डुदाञ्' दाने का; परन्तु उसका प्रयोग तो कहीं मिलेगा नहीं। इसलिए अनुबन्धविमुक्त 'दा' ही लिया जायगा जो कि द्वितीयप्रयोग है; प्रथम नहीं, उपदेश नहीं है। यह घुसंज्ञासूत्र में भाष्यकार ने कहा गया है। इससे ज्ञात होता है कि प्रायोगिक रूपों की असंभावना दशा में ही उसका ग्रहण हो इस तरह यह परिभाषा भाष्यकार को अमान्य थी, यह भी

भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण । 'दादेरि'ति सूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः ।।१३१।।

---

रूपाश्रयणात् । नन्वेवमस्याः परिभाषाया अस्वीकारे 'अधोक् दामलिट्' इत्यादौ कथमव्याप्त्यतिव्याप्त्योर्वारणमिति चेत् अत्र प्राञ्चः दादेर्धातो र्घः ८. २. ३२ इत्यत्र धातोरित्यावर्तते तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयति । तेन उपदेशे दादेर्धातो र्घः स्याज्झलि पदान्ते चेत्यर्थेनाधोगित्यत्र उपदेशे दादिधातुत्वसत्वाद् घत्वं जायेत, दामलिट् इत्यस्य सम्प्रति दादिधातुत्वेऽपि उपदेशे धातुत्वाभावेन दादिधातुत्वाभावाद्ढत्वं न जायेतेति ।

नव्या नागेशादयस्तु धातोरित्यस्यावृत्त्या लब्धस्य 'उपदेशे' इत्यस्यौचित्याद् धातुनैवान्वयलाभेन उपदेशे यो धातुः सम्प्रति दादिस्तस्य घत्वमित्यर्थस्यैव संभवाद् दामलिडित्यस्योपदेशे धातुत्वाभाववतो वारणसंभवेऽपि अधोगित्यत्राव्याप्तिवारणं न स्यात् । अतो यद्यावृत्यैवेष्टसिद्धिसम्पादनाग्रहस्तदा 'दादे' रित्यस्यैवावृत्यौपदेशिकदादित्वलाभः कार्यः, दादिना लब्धस्य 'उपदेशे' इत्यस्य दादिनान्वयसम्पादनस्यौचित्यात् । उपदेशे यो दादिधातुस्तस्य घत्वमित्यर्थेन अधोक् दामलिट् इत्युभयत्राव्याप्त्यतिव्याप्तिवारणसंभवात् ।

भाष्यकृता तु धुक् धुगित्यादौ दादेधातो र्घः ८. २. ३२ इति प्राप्तस्य घत्वस्य पूर्वत्रासिद्धम् ८. २. १ इत्यनेनासिद्धत्वेन प्राक् प्राप्तस्य होढः ८. २. ३१ इति ढत्वस्य सामान्यविहितस्य विशेषविहितेन घत्वेन बाधमङ्गीकृत्य ढत्वापत्ति समाधाय "अथवा—एवं वक्ष्यामि" 'हो ढोऽदादेः' इति ततो धातोर्घ इति 'दादे' रित्यनुवर्तते । नेति निवृत्तम् । तत्र ढत्वशास्त्रेऽदादेरित्युक्ते परिशेषाद्दादेरेव धातो र्धत्वे सिद्धे धातोरिति सूत्रे दादिपदानुवृत्तौ फलाभावेन तदनुवृत्तं दादिपदमौपदेशिकदादिलक्षकं, सामर्थ्यात् । अर्थाधिकारानुरोधेन पूर्वसूत्रे "अदादेः" इत्यत्रापि दादिपदमुपदेशवद्दादिपरमित्युपदेशे दादिभिन्नस्य दामलिह् घटकहकारस्य ढत्वसिद्धिः । "औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहण"मिति परिभाषा तु नैव प्रामाणिकीति घसंज्ञासूत्रे भाष्ये ध्वनितमित्याद्यन्यत्र लघुशब्देन्दुशेखरे विस्तर इति शिवम् ।। १३१ ।।

---

सिद्ध होता है । भाष्य से कथित 'सानुबन्धक' का तात्पर्य "प्रकृत" अर्थात् मूलरूप है । "दादे र्धातो र्घः" यहाँ दादि पद औपदेशिक दादित्व का (लक्षणा के द्वारा बोधक) उपलक्षक है । इस लिए परिभाषा के बिना भी वहाँ 'औपदेशिक' दादि ही लिया जायगा, यह अन्यत्र (शब्देन्दु शेखर) में 'दादेर्धातोर्घः' सूत्र में कहा गया है । इस तरह सीरदेव (पृ० ४१.) स्वीकृत पूर्वपरिभाषा की और व्याडि पुरु० देव-सीर आदि स्वीकृत द्वितीय की अस्वीकृति नागेश ने दिखायी ।। १३१ ।।

यदपि नन्वजर्घा वेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युस्तथा यङ्लुकि बेभिदितेत्यादावेकाच् इतीण्निषेधः स्यादत आह—

**श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥१३२॥**

'गृधु अभिकाङ्क्षायाम्' इत्यस्मात् 'धातोरेकाचो'—इति यङि तस्य यङोऽचि च २. ४. ७४ इति बाहुलकादच्प्रत्ययपरत्वं विनापि लुकि, ततः प्रत्ययलक्षणेन यङन्तत्वाद् 'सन्यङोः' ६. १. ९ इति द्वित्वेऽभ्यासत्वे 'उरत्' ७. ४. ६६ इत्यत्वे रपरे जत्वे रुग्रिकौ च लुकि ७. ४. ९१ इत्यभ्यासस्य रुगागमे जर्गृध् इत्यस्य धातुत्वे लङि सिपि अडागमे शपः चर्करीतं चेत्यत्यादौ पाठात् यङ्लुगन्तस्याप्यदादित्वेन लुकि उत्तरखण्डे लघूपधगुणे अजर्गर्धसि इति स्थिते सेरिकारलोपे "हल्ङ्याब्भ्यो—६. १. ६८ इति स्लोपे अजर्गर्ध् इत्यवस्थायां 'एकाचो बशोभष्' ८. २. ३७ इति भष्भावे 'झलां जशोऽन्ते ८. २. ३९ इति जश्त्वे दश्च ८. २. ७५ इति दस्य रुत्वेऽनुबन्धलोपे अजर्घर् र् इति स्थिते 'रोरि' ८. ३. १४ इति रेफलोपे 'ढ्लोपे पूर्वस्य—' ६. ३. १११ इति दीर्घे रेफस्य विसर्गे अजर्घाः इति सिद्ध्यति ।

एवं भिद्धातोर्यङि तस्य लुकि द्वित्वेऽभ्यासत्वे हलादिशेषे अभ्यासस्य जश्त्वे 'गुणो यङ्लुकोः ७. ४. ८२ इतिसूत्रेणाभ्यासस्येको गुणे बेभिद् इत्यस्य धातुत्वे लटि 'यङो वा' ७. ३. ९४ इतीटि बेभिदीति इति जायते ।

बेभिदिता इति यङ्लुगन्तस्य भिनत्तेरेव लुटि रूपम् तृचि वा ।

अत्र गृधु अभिकांक्षायाम् इति धातुर्दिवादौ पठ्यते । अतः तस्मान्निष्पन्नेऽजर्घा इत्यत्र 'दिवादिभ्यः श्यन् ३. १. ६९ इति श्यन् प्राप्नोति, भिद्धातुश्च रुधादौ पठ्यते ततश्च 'रुधादिभ्यः श्नम्' ३. १. ७८ इति श्नम् आपद्यते ।

बेभिद्+ता इत्यवस्थायाम् उपदेशेऽस्य धातोरेकाच्त्वाद् "एकाच उपदेशे"— ७. २. १० इतीण्निषेधः प्राप्नोति अतः कश्चित् स्मरणपरम्परासिद्धां परिभाषामवतारयति —

**श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥१३२॥**

किसी ने यङ्लुगन्त में गृध् धातु से बने रूप अजर्घा और भिद् धातु से बने रूप बेभिदीति में (रूप सिद्धि दुर्गा व्याख्या में दी गयी है) तत्तद्गण प्रयुक्त (दिवादिगण प्रयुक्त श्यन् और रुधादिगण-प्रयुक्त) श्नम् प्रत्यय के निवारणार्थं तथा यङ्लुक् में बेभिदिता में "एकाच उपदेशे" ७. २. १० सूत्र से प्राप्त इट् के निषेध को

शितपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १३२ ॥

अनुबन्धनिर्देशो द्विधा-स्वरूपेण ङित इत्यादिपदेन च । हन्ति याति वाति । 'सनीवन्त' इति सूत्रे भरेति, 'दीङो युडचि,' अनुदात्तङितः' 'दिवादिभ्यः श्यन्' 'एकाच उपदेशे', इत्युदाहरणानि ।

---

शितपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाच्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ।।

अस्याः स्मरणपरम्परासिद्धत्वं सिद्धान्तकौमुद्याम् भ्वादौ "एकाच उपदेश"— ७. २. १० इति सूत्रे—"एकाच इति किम्—यङ्लुग्व्यावृत्तिर्यथा स्यात्—स्मरन्ति हि" इति वाक्येन दीक्षितेन प्रतिपादितम् । प्रकृतिग्रहणेयङ्लुगन्तस्यापिग्रहणम् (पु० ७२ सी. ६८ हरि भा० ७०) परिभाषाव्याख्यावसरेऽस्याः परिभाषायाः स्मृति-रूपता प्रतिपादिता पुरुषोत्तमदेवसीरदेवहरिभास्करैः ।

(पुरुषोत्तमदेवस्य परिभाषा-पाठे (परि० ६४) 'पृथक्परिभाषा' इयमुपलभ्यते केवलम् किन्तु तेनापि लघुपरिभाषावृत्तौ नेयं पृथक्कृत्य व्याख्याता)

शितपा, शपा, अनुबन्धेन गणेनेति तृतीयान्तपदानां निर्दिष्टमित्यनेनान्वयः । तेन शितब्विशिष्टं शब्विशिष्टमनुबन्धविशिष्टं गणविशिष्टम् एकाजितिग्रहणेन विहित-मिति पञ्च कार्याणि यङ्लुकि न भवन्ति । अथवा शितबन्तादिशब्देनोद्दिश्य विहितं यत्कार्यं गणेन चोद्दिश्य विहितं यत्कार्यमेकाच्पदघटितसूत्रविहितञ्च यत् कार्यमेतानि पञ्च यङ्लुकि न प्रवर्तन्ते इति परिभाषार्थः ।

तत्र शितपा निर्दिष्टं यथा "नेर्गदनद—" ८. ४. १७ इति सूत्रे स्यतिहन्ति-यातिवातिद्रातीत्यादि । तेन प्रन्यजङ्घनीदित्यादौ "नेर्गद—" ८. ४. १७ इतिणत्वं न । शपा यथा 'भरेति' । तेन भरते र्यङ्लुगन्तात् सनि र्बभरिषतीत्यत्र 'सनीवन्तर्ध-भ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ७. २. ४९ इतीड्विकल्पो न, किन्तु नित्य-मेवेट् । एकाच इति निषेधाप्रवृत्तेः । अनुबन्धेन निर्देशो द्विधा-स्वरूपेणेत्संज्ञकत्वेन च । तत्र स्वरूपेण यथा "शीङः सार्वधातुके गुणः ७. ४. २१, 'दीङो युडचि—' ६. ४. ६३ इति । शेशीतः, देदितः तसि क्तप्रत्यये च क्रमेण गुणाभावः युडाभावश्च, तेन शेशेतः, देदीयित इति नापद्यते । इत्संज्ञकत्वेन यथा —'अनुदात्तङित—' १. ३. १२ इति तेन स्पर्धशीङादिभ्यः अनुदात्तङित इत्यात्मनेपदं न पास्पर्धीति, शेशयीति । गणेन यथा-बेभिदीति रुधादिभ्यः श्नम् ३. १. ७८ इति श्नम् न । अजर्घा इत्यत्र दिवादिभ्यः श्यन् । ३. १. ६८ इति श्यन् न । एकाज् ग्रहणं यथा वेभेदिता, चेच्छेदिता" इत्यादौ 'एकाच उपदेशे—" ७. २. १० इति इण्निषेधो न ।

रोकने के लिए, श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च

यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ् लुकि" यह परिभाषा मानी है। (१) श्तिपा निर्दिष्ट सूत्रों से होने वाले कार्य यङ्लुक् में नहीं होते हैं। अर्थात् ऐसे सूत्रों से जहाँ इक् श्तिपौ धातुनिर्देशे" इस वार्तिक से विहित श्तिप् प्रत्यय लगाकर बने हुए रूपों का प्रयोग हो, विहित कार्य यङ्लुक् में नहीं हुआ करते हैं। इसीलिए "भवतेरः" ७. ४. ७३ से होनेवाला कार्य (अभ्यास को अत्व) "बोभवीति" में नहीं होता। इसी तरह "नेर्गदनद" ८. ४. १७ सूत्र से होने वाला णत्व भी हन् धातु के यङ्-लुगन्त रूप प्रन्यजङ्घनीत् में नहीं होता है। क्योंकि वहाँ भी "हन्ति" में श्तिपा निर्देश है।

(२) शपा निर्दिष्ट सूत्रों की प्रवृत्ति भी यङ्लुक् में नहीं होती है। अर्थात् जिन सूत्रों में शप् करके बने हुए रूपों का निर्देश है, उनकी प्रवृत्ति भी यङ्लुक् में नहीं होती। जैसे "सनीवन्तर्ध" ७. २. ४९ में सूत्र में "भर" शब्द का उल्लेख है। 'भर' यह शपा निर्दिष्ट पद है, शप् करके बने हुए रूप का यहाँ प्रयोग किया गया है। इसलिए यङ्लुगन्त भृ धातु से सन् प्रत्यय करने पर बने हुए रूप बर्भरिषति में 'सनीवन्तर्ध' की प्रवृत्ति नहीं होती है। इसलिए यहाँ विकल्प से इट् नहीं होता; किन्तु 'आर्धधातुकस्येड् वलादेः' ७.२.३५ से नित्य ही इट् होता है। 'एकाच उपदेशे' ७. २. १० से आर्धधातुकस्येड्वलादेः' ७. २. ३५ का निषेध नहीं हुआ; क्योंकि वहाँ 'एकाच्' का ग्रहण है। 'एकाज् ग्रहण' वाले सूत्र की भी यङ्लुक् में प्रवृत्ति नहीं होती, यह बात इसी परिभाषा के पञ्चम कार्य के रूप में निर्दिष्ट है।

(३) अनुबन्ध निर्दिष्ट कार्य भी यङ्लुक् में नहीं होता। जिस सूत्र में अनुबन्ध का निर्देश होगा, उसकी प्रवृत्ति यङ्लुक् में नहीं होगी। अनुबन्ध का निर्देश दो प्रकार से किया गया है। (क) स्वरूपेण अनुबंध निर्देश (ख) ङित् इत्यादि पदेन अनुबन्ध निर्देश। याने इत्संज्ञक अनुबन्ध का निर्देश। "शीङः सार्वधातुके गुणः" ७. ४. २१ 'दीङो युडचि' ७. ४. ६३ यहाँ अनुबन्ध का स्वरूपेण निर्देश किया गया है। इसलिए इन सूत्रों की प्रवृत्ति शेशीतः (शीङ् धातु के यङ्लुगन्त में लट् के तस् के रूप) "देदितः" (यङ्लगन्त दीङ् धातु के क्त प्रत्यय के रूप) में नहीं हुई। इसलिए क्रमशः गुण और युडागम नहीं हुआ।

(ख) "अनुदात्तङित आत्मनेपदम्" १. ३. १२ यहाँ अनुबन्ध का इत्संज्ञकत्वेन निर्देश है अर्थात् यह सूत्र ङकार जहाँ इत्संज्ञक है, उस धातु से आत्मनेपद करता है। इसकी प्रवृत्ति भी यङ्लुक् में नहीं होती है। इसलिए पास्पर्धीति, शेशयीति इत्यादि में आत्मनेपद नहीं होता है।

(४) गणेन निर्दिष्ट कार्य भी यङ्लुक् में नहीं होता है। जैसे दिवादिभ्यः श्यन्' ३. १. ६९ इत्यादि सूत्रों में गण का निर्देश है। अतः इन की प्रवृत्ति (देदि-

द्वित्वं सनाद्यन्ता इति, भूवादय इति च धातुत्वं च भवत्येव, गुणो यङ्लुको-रित्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन भष्भावोऽप्यजर्घा इत्यादौ भवति । अत एव 'श्वीदितो' इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किंचिदिति पाठः ।

---

नन्वेवं यङ्लुकि, "सन्यङोः" ६. १. ९ इति द्वित्वं न स्यात् तत्रापि "एकाचो द्वे प्रथमस्य" 'अजादेर्द्वितीयस्य' ६. १. १२ इत्यनुवृत्तेः, एवं सनाद्यन्ता धातवः ३. १. ३२ भूवादयो धातवः' १.३.१ इति यङ्लुकि न स्यात्, गणेन निर्देशात् इति चेन्न 'गुणो यङ्लुकोः' ७. ४. ८२ इति सूत्रारम्भेण परिभाषाया अनित्यत्वज्ञापनात् । यदीयं परिभाषा नित्या स्यात् तदा 'सन्यङोः' इति द्वित्वविधायकशास्त्रस्यैकाच्पदघटित-तत्वेन यङ्लुकि तदप्रवृत्या द्वित्वाभावेन तन्मूलकस्याभ्यासस्यैव तत्राभावाद् गुणो यङ्लुकोः ७. ४. ७२ इति गुणविधानं यङ्लुकि व्यर्थं स्यात् । तेन अजर्घा इत्यादौ एकाज्ग्रहणसत्वेऽपि 'एकाचो वशो भष्' ८. २. ३७ इति भष्भावो भवति । अतएव 'श्वीदितः' ७. २. १४ इति सूत्रे कैयटे "यत्रैकाज्ग्रहणं किञ्चिदिति पाठः ।।

---

वीति) यङ्लुक् में नहीं होती है । और न "बेमिदीति" में रुधादिभ्यः श्नम्' ३. १. ७८ की प्रवृत्ति होती है ।

(५) जिस सूत्र में "एकाच्" शब्द का उल्लेख है या ग्रहण है, उसकी प्रवृत्ति भी यङ्लुक् में नहीं होती है । इसलिए 'बेभेदिता' 'चेच्छेदिता' में एकाच उपदेशे-ऽनुदात्तात् से इट् का निषेध नहीं हुआ । ये पूर्वोक्त पाँचों काम यङ्लुक् में नहीं होते हैं ।

यद्यपि 'सन्यङोः' ६.१. ९ इत्यादि द्वित्व विधायकसूत्रों में एकाच् की "एकाचो द्वे प्रथमस्य" से अनुवृत्ति आने के कारण यङ्लुक् में द्वित्व नहीं होना चाहिए, और गणनिर्दिष्ट होने के कारण 'सनाद्यन्ता धातवः' १. ३. ३२ से और भूवादयो धातवः' १. ३. १. से धातुसंज्ञा भी यङ्लुक् में नहीं होनी चाहिए; तथापि परिभाषा के द्वारा बोधित अर्थ को अनित्य मानने के कारण ये कार्य हो जायेंगे । 'गुणो यङ्लुकोः' ७. ४. ८२ यह सूत्र यङ्लुक् में अभ्यास को गुण करता है । यदि यङ्लुक् में द्वित्व न हो तो अभ्याससंज्ञा किसे होगी ? और यह सूत्र गुण किसे करेगा ? अतः सूत्रारम्भ-सामर्थ्यात् यह कल्पना करते हैं कि यह परिभाषा अनित्य है । अतः द्वित्व और धातु-संज्ञा आदि कार्य यङ्लुक् में भी होंगे । अनित्य होने का ही फल है कि 'अजर्घा' में भष्भाव भी होता है । अन्यथा "एकाचो वशो भष्" ८. २. ३७ में एकाच् का ग्रहण होने के कारण यह भष्भाव नहीं हो पाता । इसीलिए "श्वीदितः" ७. २. १४ इस सूत्र के कैयट में "यत्रैकाज्ग्रहणं किञ्चित्" ऐसा पाठ मिलता है ।

**एकाच उपदेशेऽनुदात्तादिति सूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते। अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति। तदपि न, भाष्यानु-**

---

उपदेशेऽनेकाचां धातूनामुदात्तत्वस्यैव सत्वेन "उपदेशेऽनुदात्तादिति न्यासेनैव सिद्धे 'एकाच उपदेशेऽनुदात्तात्' ७. २. १० इत्यत्र एकाज्ग्रहणेन एकदेशानुमत्या स्थालीपुलाकन्यायेनैषा ज्ञाप्यते। यद्यपि एकाज्ग्रहणेन यत्रैकाज्ग्रहणं तद् यङ्लुकि नेत्येव ज्ञापनं लभ्यते तथापि स्थाल्यां (पाकपात्रे) एकमोदनं विक्लिन्नं ज्ञात्वा यथा सर्वे ओदनाः पुलाकीभूता (विक्लिन्ना) इति अनुमीयते तथा इहापि एकाज्ग्रहणांशे प्रमाणमुपलभ्यान्येऽप्यंशाः प्रमाणिताः स्युरेवेत्यनुमीयते इति (एकदेशे) याऽनुमतिः अनुव्यवसायः तया इति भावः। स्थालीपुलाकन्यायेनेत्यर्थः इति परिभाषावादिनां मतम्। तत्खण्डयति नागेशः तदपि नेत्यादिना। तथाहि भाष्यानुक्तत्वात् भाष्येऽनुन्यासादियं न स्वीकार्या। भाष्यानुक्तत्वमस्या अस्वीकारे प्रथमो हेतुः। एकाच्ग्रहणस्य परिभाषाज्ञापकं न संभवति—'अवधीत्' इत्यत्रेण्निषेधाभावाय सूत्रे एकाज्ग्रहणस्यावश्यकत्वात्, तत्र "अतो हलादेः—७. २. ७ इति प्राप्ताया वृद्धेरभावायादन्तोपदेशत्वस्वीकारस्यावश्यत्वेन आदेशोपदेशेऽनेकाच्त्वेन इड्मामूदित्येकाज्ग्रहणस्यावश्यकत्वम्। न च वधादेशस्यानेकाच्त्वेऽपि स्थान्युपदेशेऽयमेकाच् एव, हन एकाचः स्थाने जातत्वात् एवञ्च कृतेऽप्येकाज्ग्रहणे स्थान्युपदेशमादायात्रेट् प्रतिषेधो दुर्वार एवेति वाच्यम् साक्षादुपदेशसंभवेनैतद्विषये स्थान्युपदेशाग्रहणात् अर्थात् यस्येट् प्रतिषेधः करणीयः

---

"एकाच उपदेशेऽनुदात्तात्" में किया गया एकाच् ग्रहण इस परिभाषा का ज्ञापक है। "उपदेश" पद का देहलीदीप न्याय से 'एकाचः' और अनुदात्तात् दोनों के साथ अन्वय करना आवश्यक है। इसलिए पिपक्षति और 'बिभित्सति' में द्वित्व करने पर अनेकाच् होने पर भी उपदेश में स्थित एकाच् को निमित्त मानकर इट् का निषेध हुआ। "कर्तुम्" "हर्तुम्" में तुमुन् प्रत्यय करने के बाद नित् स्वर से उदात्त होने पर भी उपदेश के अनुदात्तत्व को लेकर इट् का निषेध होता है। इस प्रकार 'उपदेशावस्था में जितने अनेकाच् हैं वे उदात्त ही हैं, इसलिए एकाच् ग्रहण के अभाव में भी कोई दोष नहीं आता है। अतः व्यर्थ होकर एकाच् का ग्रहण इस परिभाषा का ज्ञापन करना है। यद्यपि इससे एकाच् अंश में ही एकाच् ग्रहण की ज्ञापकता सिद्ध होती है तथापि एकदेशानुमत्या (स्थालीपुलाक न्यायेन) एकाच् ग्रहण सम्पूर्ण परिभाषा का ज्ञापन कर सकता है। एक देश में प्रमाण बने हुए अंश से अन्य अंशों के ज्ञापन की परम्परा इस शास्त्र में प्रचलित है। इसीलिए "उपपदमतिङ्" २.२.१९ में अतिङ् ग्रहण "गतिकारकोपपदानाम्" (परि० ७६) इस सम्पूर्ण परिभाषा का एकदेशानुमत्या ज्ञापक होता है। "अपरस्पराः क्रियासातत्ये ६.१.१४४ में कृत सातत्यग्रहण "लुम्पेदवश्यमः कृत्ये" इस पूर्वाचार्य के समस्त श्लोक का ज्ञापक होता है।

**क्तत्वादेकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च । न च वधिः स्थान्युपदेशे एकाजेवेति वाच्यम् । साक्षादुपदेशसंभवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ।**

---

तस्योपदेशो यद्यस्ति तदा तस्यैकाच्त्वमेव प्रत्यासत्त्या ग्राह्यमितिहेतोरिहादेशस्योपदेशे एवैकाच्त्वं द्रष्टव्यं तच्च वधेर्नास्तीति इट् प्रतिषेधाप्राप्तेः । न च स्थान्यादेशयोरभेदाध्यवसायोऽत्र शास्त्रेऽवश्यं स्वीकार्यः, अतएव वर्तमाने विहितस्य लटोऽर्थस्तिबादिनादेशेन बोधयितुं शक्यते; तथाच स्थान्युपदेशोऽप्यादेशोपदेश एवेतीट् प्रतिषेधो दुर्वार इति वाच्यम् उपदेशत्वावच्छेदेन य एकाच् अर्थात् सकले उपदेशे य एकाच् ततः परस्य वलादेरार्धधातुकस्येण् नेत्यर्थेनादोषात् । न च अचः इत्येकत्वविवक्षयैवैकाच्त्वलाभसंभवादेकविशेषणविशिष्टमेकाज्ग्रहणं परिभाषाज्ञापकमितिवाच्यम् सूत्रे संख्याया अतन्त्रत्वात् एकग्रहणाभावे एकोऽच् यस्मिन्निति बहुव्रीहिसमासासंभवाद एकग्रहणस्य चारितार्थ्यात् । न च अच इति पदमेव "अज्वत" इतिमतुबर्थस्य लक्षणया बोधकमस्त्विति वाच्यम् लक्षणायां मानाभावात् । नचोपदेशत्वावच्छेदेनैकाचो ग्रहणे

---

किसी के द्वारा (पुरुषोत्तमदेव सीरदेवादि ने यह परिभाषा प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्" इस परिभाषा की व्याख्या के समय अपनायी है) यह परिभाषा मानी गयी है, परन्तु यह परिभाषा नागेश को मान्य नहीं है । भाष्य में उक्त नहीं होने के कारण नागेश "श्तिपा शपानुबन्धेन" इस परिभाषा को स्वीकार नहीं करते । वे कहते हैं कि "अचः" में प्रयुक्त एकत्व की विवक्षा से एकत्वविशिष्ट अच् ही लिया जाता, एक ग्रहण सामर्थ्यात् उस एकाच् का ग्रहण नहीं होगा; जिसका कभी अनेकाच् रूप में उपदेश हो चुका हो इसलिए "अवधीत्" में हन् के उपदेश में एकाच् होने पर भी वधादेश के उपदेश काल में 'अनेकाच्' होने के कारण इट् का निषेध नहीं हुआ । इस तरह एकाच् ग्रहण "अवधीत्" में निषेध की व्यावृत्ति के लिए आवश्यक है । इसलिए जब वह व्यर्थ नहीं है; तब ज्ञापक कैसे हो सकता है । वधादेश को अदन्त मानना वृद्धि के अभाव के लिए आवश्यक है, और "हन्ति" तो अपने उपदेश के समय एकाच् ही है, इसलिए वध के हन्ति उपदेश को लेकर निषेध हो ही जायगा, ऐसी शंका नहीं करनी चाहिए, जिसको इट् का निषेध करना अपेक्षित है, उसके उपदेश में यदि एकाच्त्व हो तभी निषेध होगा; इस तरह प्रत्यासत्त्या या साक्षात् सम्बन्धेन कृत उपदेश में जब एकाच् मिलना सम्भव है तो स्थानी (हनादि) का उपदेश नहीं लिया जायगा । यद्यपि स्थानी और आदेश में अभेदाध्यवसाय माना गया है; तब तो जहाँ एकाच् स्थानी का उपदेश है वहाँ एकाच् आदेश का भी उपदेश माना जायगा, इस तरह अवधीत् में निषेध अटल दिखता है तथापि एकाज्ग्रहणसामर्थ्यात् उपदेशत्वावच्छेदेन अर्थात् सभी प्रकार के उच्चारणों में जो 'एकाच' हो

किंचोत्तरार्थमेकाज्ग्रहणम् । अत एव जागरितवानित्यादावुपदेश उगन्तत्वमादाय श्र्युकः कितीतीड्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायेत्याकरे स्पष्टम् ।

---

देहलीदीपन्यायेन अनुदात्तस्याप्युपदेशत्वावच्छेदेनैव ग्रहणस्यौचित्यात् वधादेशस्य चाद्युदात्तत्वनिपातनेनावधीदित्यत्र सर्वविधोपदेशे तस्यानुदात्तत्वाभावेन निषेधाप्रवृत्तावैकाज्ग्रहणस्य ज्ञापकत्वं सूपपादमितिवाच्यम् "श्र्युकः किति" ७. २. ११ इति सूत्रेऽनुवृत्तये एकाच उपदेशेऽनुदात्तात् ७. २. १० इत्यत्रैकाच इत्यस्यावश्यकत्वात् । अतएव तस्य श्रिय एकाच उगन्ताच्च परयोर्गित्कितोरिण् नेत्यर्थो लभ्यते । तेन जागृ धातोः क्तवतुप्रत्ययेन निष्पन्ने जागरितवान् इत्यत्रोगन्तत्वेऽपि एकाच्त्वाभावादिण्निषेधो न । न च तत्र "जाग्रोऽविचिण्णल्ङित्सु ७. ३. ८५" इति गुणे रपरे च कृते उगन्तत्वाभावादेव निषेधाप्रवृत्तिरितिवाच्यम् तॄ धातोः क्तप्रत्यये 'ॠत इद्धातोः' ७. १. १०० इतीत्वे रपरे दीर्घे तकारस्य "रदाभ्याम्—" ८. २. ४२ इति नत्वे णत्वे च कृते

---

उसी से इट् का निषेध होगा, इस प्रकार 'अवधीत्' में दोष नहीं होगा। दीक्षित ने जो यह लिखा है कि 'अचः' में एकत्व की विवक्षा से एकत्व अर्थ की उपस्थिति होने से 'एकाच्' अर्थ कर लिया जाता, पुनः एकग्रहण युक्त जो अज्ग्रहण या 'एकाज्ग्रहण' किया गया, वह ज्ञापक बन ही जायगा, ऐसा नहीं मानना चाहिए; सूत्र में लिङ्ग और वचन की विवक्षा नहीं होती है, एकग्रहण के बिना बहुव्रीहि समास नहीं किया जा सकता, अच् पद की बहुव्रीहि अर्थ वाले एकाच् में लक्षणा करें इसमें कोई प्रमाण नहीं है। अतः एक पद घटित "एकाच्" ग्रहण सार्थक है, वह ज्ञापक नहीं हो सकता। इसलिए परिभाषा में ज्ञापक का भी अभाव ही मानना चाहिए। यद्यपि पूर्वोल्लेख के अनुसार अवच्छेदकावच्छेदेन "एकाच्" में अन्वय माने तो उपदेशत्वावच्छेदेन अनुदात्तत्व भी लिया जायगा, अर्थात् सभी उपदेशों में जो अनुदात्त रहेगा उसी से इट् का निषेध हो जायगा, तब तो अवधीत् में वधादेश को निपातनात् उदात्तमानने पर निषेध की अप्रवृत्ति स्वतः ही हो जाती है, एकाज् ग्रहण व्यर्थ दिखता है, उसे ज्ञापक होने में कोई बाधा नहीं दिखाई पड़ता है तथापि "श्र्युकः किति" ७. २. ११ इस उत्तर सूत्र में अनुवृत्ति के लिए एकाच् ग्रहण की सार्थकता सिद्ध हो जाती है; उसकी निरर्थकता और ज्ञापकता निराधार ठहरती है। इसीलिए "जागरितवान्" में उपदेश में उगन्त होने के कारण "श्र्युकः किति" से निषेध नहीं होता; क्योंकि एकाच् की अनुवृत्ति के कारण वह सूत्र उपदेश में एकाच् उगन्त को ही निषेध करता है। "श्र्युकः किति" में उपदेश की अनुवृत्ति तो "स्तीर्णम्" में इत्व, रपर और दीर्घ होने के बाद भी औपदेशिक उगन्तत्व को लेकर इट् निषेध के लिए भी आवश्यक है। यह बात आकर में (भाष्यादि में) स्पष्ट है।

